# चतुर्वर्गचिन्तामणौ

# परिशेषखण्डे

## श्राद्धकल्पः ।

प्रथमोभागः ।

श्रीहेमाद्रिणा विरचितः ।



एसियाटिक्-सोसाइटिनामकसमाजानुमत्या साहाय्येन च

प्रचारितः ।

श्रीयज्ञेश्वरस्मृतिरत्नेन

श्रीकामाख्यानाथतर्करत्नेन च

परिशोधितः ।

कलिकाताराजधान्याम् ।

व्याप्टिष्टमिसन्यन्त्रे मुद्रितः ।

शकाब्दाः १८०६.



# विज्ञापनम् ।

सुधीसम्पन्न-श्रीहेमाद्रिनामक-महापण्डितेन विरचितोऽयं चतुर्व्वर्गचिन्तामणिनामा स्मृतिनिबन्धः व्रत-दान-तीर्थ-मोक्ष-परिशेष-खण्डैर्व्विभक्तीकृतस्य । तत्र व्रतखण्डं दानखण्डञ्च सोसाइटीसमाजाध्यक्षमहोदयानामनुमत्या पण्डिताग्रणीस्वर्गीय भरतचन्द्रशिरोमणिमहोदयानां परिशोधनप्रयत्नेन च मुद्रितमभूत् । तदनन्तरमुक्तमहोदयानां परलोकावाप्तौ परिशेषखण्डान्तर्गतश्राद्धखण्डमुक्तमा[illegible] महोदयानुमत्या आवयोः परिशोधनप्रयत्नेन च मुद्रितं । परिशोधने त्रीणि आदर्शपुस्तकानि आवयोः [illegible] । [illegible] द्वयं क-खचिह्नितं वाराणस्या लब्धं, एकं गचिह्नितं कलिकाता-संस्कृतविद्यामन्दिर-पुस्तकालयाल्लब्धं । पुस्तक[illegible] द्वयं परिशुद्धं, एकमपरिशुद्धं, यत्र पुस्तकत्रये संशयो जातः तत्र [illegible] शूलपाणि-मन्वादिस्मृतिनिबन्धानां साहाय्येन परिशोधितं । अनन्तरं परिशेषखण्डान्तर्गतकालखण्डस्य मुद्रणं भविष्यति । सम्भाव्यते एतन्मुद्रणं महात्मनामुपकाराय भविष्यति ।

अपिच विज्ञाप्यते हेमाद्रिस्तु वात्सगोत्रीय-दाक्षिणात्यब्राह्मण आसीत् । कामदेवो वासुदेवो वामनदेवस्य क्रमेणास्य पिता, पितामहः, प्रपितामहश्चासीत् । स हि देवगिरिस्थ-यादववंशज-महाराजाधिराजमहादेवनृपतेः सकलकरणाधिपतिपण्डित आसीत् । स हि पञ्चग्रहधरेन्दुमिते शकनृपतिसंवत्सरे समुदितवान् । हेमाद्रिस्तु तत्समकालिक एवेत्यलं ।

श्रीयज्ञेश्वरशर्म्मणः ।

श्रीकामाख्यानाथशर्म्मणः ।

ॐ नमः श्रीगणेशाय ।

# चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे

## प्रथमोऽध्यायः ।

### अथ श्राद्धविधिफलप्रशंसाप्रकरणम् ।

क्षीरोदार्णवसारसङ्ग्रहकलालीलासमालिङ्गितो-
भ्राम्यन्मन्दरकूटकोटिघटनानिर्म्मृष्टरत्नाङ्गदः ।
उन्मीलन्नवनीलनीरजदलश्रेणिप्रभामण्डल-
श्लाघालङ्घनजाङ्घिकच्छविरसौ पायादपायाद्धरिः ॥१॥

गणेशं वन्देऽहं मदजलगलन्निर्झरसरित्-
परामोदास्वादप्रसृतमनसां क्रीड़नवताम् ।
द्विरेफद्वन्द्वानां कलसरसझङ्कारसुरस-
स्वरप्रायैर्गेयैः श्रवणपुटपेयैः प्रमुदितम् ॥२॥

देवीं शारदकौमुदीमदहरस्फारप्रभामण्डली-
लेशक्लेशितदुस्तरान्तरतमस्तोमोद्भवापङ्कराम् ।
सीमन्तान्तनिवेशितोज्ज्वलकलासर्व्वाङ्गनिर्य्यत्सुधा-
धाराधोरणिपूरिताम्बरतलां वन्दामहे शारदाम् ॥३॥

यामासाद्य पदैश्चतुर्भिरभितो लब्धोदयामासते
कर्त्तुं संव्यवहारमाहुरिह ते सर्व्वेऽप्यमी नान्यथा ।
या वैदोपनिषन्मयीं तनुमनुप्राप्ता व्युदस्य भ्रमं
स्वैरानन्दपदं परं वितनुते तां नौमि देवीं गिरम् ॥४॥
तां वाचं समुपास्महे परिमिता यासौ चतुर्भिः पदैः
वेदैर्यत्परिपाकमेतदखिलं ब्रह्माण्डमाहुर्बुधाः ।
यस्याः प्राप्य परं प्रसादमधते सर्व्वोऽपि सर्व्वज्ञतां
हीनस्तेन तु पङ्कजासनभवो ब्रह्मापि जिह्मायते ॥५॥
यदग्रे चोदीयस्तरवदरमात्रेऽपि विधिना
विना वा केनापि क्वचिदपि च पिण्डे विनिहिते ।
महत्पापालेपात्त्रिदशपदमायान्ति पितरो
नमस्तस्मै कुर्म्मो सखमयगयास्थाय हरये(१) ॥६॥
प्रदत्तपिण्डान् स्वपुरः सपिण्डैः
प्रभूतपापान्नरकौकसोऽपि ।
समुद्धरन्तं कृपयादिदेवं
गदाधरं नौमि गयाशिरस्थम् ॥७॥
वसून् वसूपाहरणे समुद्यतान्
रुद्रान् विमुद्रान् हतयोगसम्पदः ।
नमामि सत्कर्म्मपथप्रवर्त्तका-
नादित्यनाम्नस्त्रिदशेशपूजितान् ॥८॥

---

(१) चिरवस्थितगुरुयागाय सद्दते इति ख० ।

यन्निस्त्रिंशविशीर्य्यमाण-सुभटत्रुट्यत्करोटीचटत्-
कारस्फारविरावभैरवरणक्षोणीचणक्रीड़िनः ।
नृत्यन्ति स्म गलद्गलास्त्रमिलितस्कन्धाः[१] कबन्धा मुहुः
योऽभूद्विक्रमनिर्जितोर्ज्जितरिपुः श्रीमल्लणो भूपतिः ॥९॥
यस्योद्यत्करवालकालभुजगी निष्पीतभूयोऽखिल-
प्रत्यर्थिक्षितिपालपुष्कलयशःक्षीरातितृप्ता सती ।
तन्द्रालुः परिहृत्य घोरसमरक्रीड़ारसे निर्भरं
बध्नाति स्म महावकाशविलसत्कोषप्रवेशे मतिम् ॥१०॥

एतस्मादभवत् प्रौढ़प्रतापानलदुर्जयः ।
तनूजो विजितारातिर्जैत्रपाल इतीरितः ॥११॥
तस्मादपि महादेवः पालिताशेषभूतलः ।
विजिताशेषदिक्चक्रो विक्रमैकरसोऽभवत् ॥१२॥
यत्प्रतापानलज्वालाहुलासु परिपातुकम् ।
अमित्रमण्डलं भेजे शलभावलिकल्पताम् ॥१३॥

यस्याशेष धनुर्व्विमुक्तविशिखव्रातव्रणास्रस्रव-
द्विश्वाड़स्रविनिर्म्मिताखिलसरित्पूरेषु भूरेणवः ।
मिश्रीभूय सकर्द्दमपङ्कविषमां सङ्ग्रामभूमिं व्यधुः
यस्यामोघपराक्रमस्य महिमा वर्ण्यः कथं भूपतेः ॥१४॥
यः श्रीमत्करपुष्करच्युतमहादानाम्बुधाराभरात्
संसिञ्चन् वरविप्रवर्य्यनिवहान् यान् धर्म्मकल्पद्रुमान् ।

---

(१) गलद्गलास्त्रकलितस्कन्धा इति ग० ।

चक्रे पल्लवितान् महीतलमिलच्छायाघने तद्वने
लोकः शोकमुदस्य निर्वृतिमयीं लेभे शुभां सुस्थितिम् ॥१५॥
यद्दण्डाग्रविनिर्गतोग्रकिरणप्राग्भारराहुग्रह-
ग्रस्ते वैरिकुलप्रतापतपने यः पुण्यकालोऽभवत् ।
तस्मिन्नायतवाहिनीषु धवलप्रोत्तालवज्रावली-
कल्लोलाकुलितासु वीरनिकरं स्वैरं न्यमज्जच्चिरम् ॥१६॥

भूपेन तेनाथ कृतोऽधिनाथः
स्फारश्रिया श्रीकरणे मनस्वी ।
हेमाद्रिनामास्य च वर्ण्यमानं
वंशं समाकर्णयत प्रकाशम् ॥१७॥

स्वाध्यायाध्ययनप्रवीणधरणीगीर्व्वाणचूडामणिः
वंशे वत्समुनेर्मनोहरगुणग्रामाभिरामाकृतिः ।
जज्ञे वामनसञ्ज्ञको वलिकथागाथासमुन्मीलित-
प्रत्यग्राप्रतिमप्रभावरुचिरां यः प्राप लक्ष्मीं पराम् ॥१८॥
स प्रासूत सुतं नवोज्ज्वलकलासम्भारगोष्ठीसदं
भूतस्फीतगलोद्गलनवरसप्रह्लादिवेदोदयम् ।
पुण्यावर्त्तनसर्गसज्जनमनःसन्तोषवर्षाम्बुदं
शश्वद्वेदरहस्यवस्तुरसिकं श्रीवासुदेवाह्वयम् ॥१९॥
आसीत्तस्मादभिनवसुधासोदरालापलोलः
शीलाचारप्रवरधिषणातोषिताशेषलोकः ।
सत्यां वाचं त्यजति न पुरा क्वापि यः सङ्कटेऽपि-
प्रज्ञाराशिः सुकृतरसिको नामतः कामदेवः ॥२०॥

येनाचार्य्यवरार्य्यसङ्गतिमता निर्व्वाह्य मौञ्जीव्रतं
कृत्वा दारपरिग्रहं विदधिरे कर्म्माणि गृह्याणि च ।
वेद्यावेद्यमहेन्द्रजालदलनं क्षेमङ्करं शाङ्करं
ज्योतिः किञ्चिदुपासितुं स जगृहे वर्य्यस्तुरीयाश्रमम् ॥२१॥
तस्माद्विस्मयनीयपुण्यचरितो हेमाद्रिनामाजनि
प्रत्यग्राप्रतिमप्रभावविकसद्विश्वोत्तरश्रीनिधिः ।
योऽसौ सर्व्वकलाविशारदशिरोरत्नाङ्कुरो भास्वरः
सर्व्वश्रीकरणेश्वरो नृपमहादेवस्य मान्योऽभवत् ॥२२॥
यस्याज्ञां स्वविशालमौलिवलभीसिंहासने सादरं
क्ष्मापालाः परिपाल्य निर्ज्जितनिजव्यापज्ज्वराः शेरते ।
किञ्चोल्लासितदीप्यमानमहसो वर्द्धिष्णुजिष्णुश्रियः
श्लाघां दिक्षु विदिक्षु चातिमहतीमासादयन्ति क्षणात् ॥२३॥
यः कीर्त्तिप्रसरावधीरितविधुप्रत्यग्ररोचिश्च यः
चक्रे विक्रमचातुरीमदजुषः शत्रूनपास्तश्रियः ।
यस्य प्रक्षशिरःकिरीटघटनानिर्म्मृष्टसेवावनं
धन्यन्त्वन्यदुरापरीतिरसिकाम्मृद्धिं निनायाचिरात् ॥२४॥
सोऽयं सेवाप्रसङ्गे विनयनयनसन्मण्डलाधीशमौलि-
प्रत्युप्तोद्दीप्तरत्नद्युमणिकरभरभ्राजमानाङ्घ्रिपद्मः ।
श्रीहेमाद्रिः कराग्रक्षरदमलजलप्रत्तवित्तप्रवाहैः
लोके कस्येह जिह्वां निजगुणगणनालोलमूलां न चक्रे ॥२५॥
आसिन्धोरातुषाराचलशिखरभुवः कीर्त्तिगङ्गाग्रभङ्गीः
स्वीकृत्योत्कृष्टनृत्यप्रचयपरिचिता यस्य लोके चरन्ती ।

शश्वद्वैमानिकानामकुरुत रयभृन्मन्दरावर्त्तनृत्यत्-
क्षीराकूपारवृद्धिं स जयति मतिमानेष हेमाद्रिसूरिः ॥२६॥

ज्ञातुं नीतिरहस्यमस्य गुरुतां यस्येहते शिष्यतां
नूनं सोऽपि बृहस्पतिः स च कविर्यस्तेन संस्पर्द्धते ।
सोऽयं चित्रचरित्रमान्यमहिमा मन्त्रीन्द्रचूड़ामणिः
हेमाद्रिर्न निनाय विस्मयरसं कं धीरधुर्य्यं नरम् ॥२७॥

येनाचारविचारचारुचरितश्लाघ्येन तीव्रव्रत-
व्रातप्रीणितनन्दनन्दनघनप्रेमप्रवृद्धश्रिया ।
दत्तैर्विप्रगणाङ्गनानि गणनातीतैर्द्धनैश्चक्रिरे
भूभृत्कोषनिवेशभङ्गिमचमत्कारोत्किराणि क्षणात् ॥२८॥

क्षौमं दिङ्नायिकानां सितरुचिरुचिरा हारयष्टिः क्षमायाः
सद्यः सम्फुल्लमल्लीकुसुमचयमयी द्योवधूकेशभूषा ।
ब्रह्माण्डोद्दण्डवेश्मोदरनिहितसुधालेपलक्ष्मीर्यदीया
कीर्त्तिर्हेमाद्रिमन्त्री स जयति जगतीभूषणं धर्म्मसेतुः ॥२९॥

येनाभोज्यनुवासरं रसलसल्लेह्यादिभेदास्पदैः
अन्नैर्भिन्नगुणक्रियाक्रमगतस्वादूपदंशान्वितैः ।
विप्राणां खलु साङ्गवेदविदुषां तिग्मं सहस्रत्रयं
हर्षोत्कर्षमनायि चातिबहुभिः स्वर्णैर्विकीर्णैर्मुहुः ॥३०॥

हरिहरमहाभक्तिव्यक्तप्रभूतविभूतिमान्
उपचितनिजप्रज्ञो यज्ञक्रियाक्रमसुन्दरः ।
गुणमणिगणश्रेणिश्रीमत्प्रकाशविकस्वरः
करणतिलकः श्रीहेमाद्रिः कथं स हि वर्ण्यते ॥३१॥

प्रणीतश्च चतुर्व्वर्गचिन्तामणिसमाह्वयम् ।
शास्त्रं तेन समस्तार्त्तनिःशेषार्त्तिनिवर्त्तकम् ॥ २ २॥

यो मन्थाचलमूलवेगविचलद्दुग्धाब्धिमुग्धोत्कलो-
निष्ठूतः स जगाम शक्रसदनं कश्चिन्मणिग्रामणीः ।
इत्यालोच्य विमथ्य शब्दजलधिं हेमाद्रिणा निर्म्मितो
दाता वर्गचतुष्टयस्य विमलश्चिन्तामणिर्नूतनः ॥२ ३॥

इहानुपूर्व्वेण विनिर्म्मितानि
पञ्च प्रपञ्चेन च खण्डकानि ।
व्रतेषु दानेषु च तीर्थसार्थे
मोक्षे च शेषेऽथ तथार्थजाते ॥ २ ४॥

आराधनं हव्यभुजान्तु पञ्चमे
खण्डे समस्तं प्रतिपाद्य कथ्यते ।
हेमाद्रिणा सम्प्रति कव्यभोजिनां
श्राद्धस्य कल्पेन महोज्ज्वलश्रिया ॥ २ ५॥

बहूनि शास्त्राणि विमृश्य रच्यते
श्राद्धस्य कल्पोऽयमतिप्रयत्नतः ।
इहोपनेयः सहसा न केनचित्
दोषो लघीयानपि बुद्धिशालिना ॥ २ ६॥

तत्र चाद्ये प्रकरणे स हेमाद्रिः शुभाशयः ।
फलप्रशंसासंयुक्तं वक्ति श्राद्धविधिं सुधीः ॥ २ ७॥

उपक्रमादौ लिङ्गप्रतिमाद्यधिष्ठाने शिवविष्णुगणेशादिदेवतानामाराधनम्। अनन्तरं गवाधिष्ठाने देवतारूपाणां नन्दादिकामधेनूनां हरि-

इरादीनाञ्चाराधनम्। अथेदानीं ब्राह्मणादिरूपाधिष्ठाने वसु-रुद्रा-दित्य-पितृमत्सोमाङ्गिरस-यम-कव्यवाहनाग्नि-सोमपाज्यपाग्निष्वात्ता-दीनां महामहिम्नां पितृरूपाणां देवतानामाराधनमुच्यते। आराधनञ्च, मनसः प्रीणनं, तस्य चोपायः श्राद्धलक्षणं कर्म्म। अतस्तदुच्यते।

तत्र तावद्विधिः स्वविधेयेऽर्थे पुरुषं प्रवर्त्तयन् स्वसाध्यपुरुषप्रवृत्त्यतिशयकारिणीं विधेयप्ररोचनामपेक्षमाणो विधेयरुच्युत्पादकानि प्रशंसावचनान्यपेक्षते फलवचनानि च। यथैवैते पुरुषा विधेये प्रवर्त्तन्ते तथैव तद्विषये ग्रन्थे श्रोतारः। अतस्तेषामपि तत्र विधिफलप्रशंसावाक्यानि प्रवर्त्तकानीति श्राद्धविषयाणि। तान्येव प्रथममभिलिख्यन्ते।तानि च परस्परान्वयादेकवाक्यतां गतानीत्येकमेवेदं प्रकरणम्।

आह सुमन्तुः ।

श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ।
तस्मात् सर्व्वप्रयत्नेन श्राद्धं कुर्य्याद्विचक्षणः ॥

ब्रह्मपुराणे ।

तस्माच्छ्राद्धं नरो भक्त्या शाकैरपि यथाविधि ।
कुर्व्वीत श्रद्धया तस्य कुले कश्चिन्न सीदति ॥

विष्णुपुराणे ।

पितृगीतास्तथैवात्र श्लोकास्तांश्च शृणुष्व मे(१) ।
श्रुत्वा तथैव भवता भाव्यं तत्रादृतात्मना(२) ॥
अपि धन्यः कुले जायादस्माकं(३) मतिमान् नरः ।

(१) पितृगीतास्तथेमाश्च श्लोकास्ताः शृणु पार्थिव इति ग० ।
(२) तत्र हृतात्मना इति ख० ।
(३) भूयादस्माकमिति ग० ।

अकुर्व्वन् वित्तशाठ्यं यः पिण्डान् नो निर्वपिष्यति[१] ॥
रत्नवस्त्रमहीयानसर्व्वभोगादिकं[२] वसु ।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥
अन्नेन वा यथा शक्त्या कालेऽस्मिन् भक्तिनम्रधीः ।
भोजयिष्यति विप्राग्र्यान् तन्मात्रविभवो नरः ॥

नागरखण्डे ।

लोकान्तरेषु ते तोयं लभन्ते नान्नमेव च ।
दत्तं न वंशजैर्येषां ते व्यथां यान्ति दारुणाम् ॥
क्षुत्पिपासासमुद्भूतांस्तस्मात् सन्तर्पयेत्पितॄन् ॥
नित्यं शक्त्या यथा राजंस्तोयैर्भोज्यैः पृथग्विधैः ।
तथान्नैर्वस्त्रनैवेद्यैः पुष्पगन्धानुलेपनैः ।
पितृमेधादिभिः पुण्यैः श्राद्धैरुच्चावचैरपि ॥
तर्पितास्ते प्रयच्छन्ति कामानिष्टान् हृदि स्थितान् ।
त्रिवर्गञ्च महाराज पितरः श्राद्धतर्पिताः ॥

कूर्मपुराणे ।

योऽनेन विधिना श्राद्धं कुर्य्याद्वै शान्तमानसः ।
व्यपेतकल्मषो नित्यं याति नावर्त्तते पुनः ॥

यमस्मृतौ ।

इममत्र विधिश्रेष्ठं कामार्थं कल्पितं द्विजैः ।
ये विप्रा ह्यनुवर्त्तन्ते तेषां लोकाः सनातनाः ॥

---

(१) पिण्डान् निर्व्वापयिष्यति इति ग० ।
(२) रत्नवस्त्रमहायानसर्व्वभोगादिकमिति ख० ।

आयुः पुत्रान् यशः स्वर्गं कीर्त्तिं पुष्टिं बलं श्रियम्।
पशून् सौख्यं धनं धान्यं प्राप्नुयात् पितृपूजनात्॥

ब्रह्मपुराणे।

एवं सम्यग्गृहस्थेन देवताः पितरस्तथा।
सम्पूज्या हव्यकव्याभ्यामन्नेनातिथिबान्धवाः॥
आचारमाचरेत्तच पितृमेधाश्रितं नरः।
आयुषा धनपुत्रैश्च वर्द्धते नैव संशयः॥

देवलस्मृतौ।

अरोगः प्रकृतिस्थश्च चिरायुः पुत्रपौत्रवान्।
अर्थवानर्थभोगी च श्राद्धकामो भवेदिह॥
परत्र च परां पुष्टिं लोकांश्च विपुलान् शुभान्।
श्राद्धकृत्समवाप्नोति यशश्च विपुलं नरः॥

ब्रह्मवैवर्त्तवायुपुराणयोः।

देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते।
देवताभ्यः पितॄणां हि पूर्व्वमाप्यायनं शुभम्॥

सर्व्वेषु दैवेषु कर्म्मसु कर्म्माङ्गश्राद्धस्य पूर्व्वमनुष्ठानात् देवेभ्यः पूर्व्वं पितॄणामाप्यायनमिति विष्णुधर्म्मोत्तरे वराहवचनम्।

अद्यप्रभृति लोकेषु प्रेतानुद्दिश्य वै पितॄन्।
ये तु श्राद्धं करिष्यन्ति तेषां पुष्टिर्भविष्यति॥
श्राद्धकाले तथान्नेन पिण्डनिर्व्वपणं तथा।
पितॄणां ये करिष्यन्ति तेषां पुष्टिर्भविष्यति॥
पिता पितामहश्चैव तथैव प्रपितामहः।

तेषां त्रयः पूजिताश्च भविष्यन्ति तथाग्नयः ॥
त्रयो लोकास्त्रयो वेदास्तथैव च युगत्रयम् ।
पूजिताश्च त्रयो देवा ब्रह्मविष्णुमहेश्वराः ।
पूजितस्तैर्भविष्यामि चतुरात्मा तथाप्यहम् ॥
पैतृपैतामहः पिण्डो वासुदेवः प्रकीर्त्तितः ।
पैतामहस्य निर्द्दिष्टस्तथा सङ्कर्षणः प्रभुः ॥
पितृपिण्डस्तु विज्ञेयः प्रद्युम्नश्चापराजितः ।
आत्मानिरुद्धो विज्ञेयः पिण्डनिर्व्वपणे बुधैः ॥
एवं सम्पूजितस्तेन चतुरात्मा ह्यहं स्थितः ।
भविष्यामि प्रदास्यामि तस्य कामान् तथेप्सितान् ॥
चत्वारः पूजिता वेदाश्चत्वारश्च तथाश्रमाः ।
पुरुषार्थाश्च चत्वारश्चतस्रश्च तथा दिशः ।
चत्वारश्च तथा वर्णाश्चत्वारश्च तथा युगाः ॥
पितृपितामहस्यायं पैतृपैतामहः प्रापितामह इत्यर्थः ।

यमस्मृतौ ।

ये यजन्ति पितॄन् देवान् ब्राह्मणांश्च हुताशनान् ।
सर्व्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥

ब्रह्मपुराणे ।

एवं विधानतः श्राद्धं कृत्वा स्वविभवोचितम् ।
आब्रह्मस्तम्बपर्य्यन्तं जगत् प्रीणाति मानवः ॥

विष्णुपुराणे ।

ब्रह्मेन्द्र-रुद्र-नासत्य-सूर्य्याग्नि-वसु-मारुतान् ।

विश्वेदेवान् ऋषिगणान्[१] वयांसि मनुजान् पशून् ॥
सरीसृपान् पितृगणान् यच्चान्यद्भूतसंज्ञकम्[२] ।
श्राद्धं श्रद्धान्वितः कुर्व्वन् तर्पयत्यखिलं हि तत्[३] ॥

येन केनचित् पुरुषेण स्वीयपितृपितामहोद्देशेन श्राद्धे क्रियमाणे ब्रह्मेन्द्रादीनामनुद्दिष्टानामप्यनेकेषामेकस्मिन्नेव प्रयोगे युगपत्प्रीतिरन्यत्कुलोत्पन्नानामपि सरीसृपादीनाञ्च तृप्तिः स्यादिति वचनार्थः। श्राद्धकर्तृकुलोत्पन्नानान्तु नानायोनिगतानामनुद्दिष्टानामप्यनेकेषामेकस्मिन्नेव प्रयोगे तत्तच्छ्राद्धक्रियावयवैस्तृप्तिः स्यादिति व्यक्तमुक्तम् मार्कण्डेय-स्कान्द-ब्रह्मपुराणेषु ।

अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति ये पिशाचत्वमागताः ॥
यत्तोयं[४] स्नानवस्त्रेभ्यो भूमौ पतति पुत्रक ।
तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥
यास्तु गन्धाम्बुकणिकाः पतन्ति धरणीतले ।
ताभिराप्यायनं तेषां ये च तिर्य्यक्कुले गताः ॥
ये चादन्ताः कुले बालाः क्रियायोग्या ह्यसंस्कृताः ।
विपन्नास्ते तु विकिरसम्मार्ज्जनजलाशिनः ॥
भुक्त्वा चाचमनं यच्च जलं यच्चाङ्घ्रिशौचजम् ।

---

(१) पितृगणानिति ग० ।
(२) यच्चान्यद्भूतसंज्ञितमिति ख० ।
(३) प्रीणयत्यखिलं जगदिति ग० ।
(४) यदम्बु इति ख० ।

ब्राह्मणानां तथैवान्ये तेन तृप्तिं प्रयान्ति वै ॥
पिशाचत्वमनुप्राप्ताः कृमिकीटत्वमेव ये ।
एवं यो यजमानस्य यश्च तेषां द्विजन्मनाम् ॥
कश्चिज्जलान्नविक्षेपो ह्यविरुच्छिष्टमेव वा ।
तेनान्नेन कुले तत्र तत्तद्योन्यन्तरं गताः ।
प्रयान्त्याप्यायनं वत्स सम्यक्श्राद्धक्रियावताम् ॥
अन्यायोपार्ज्जितैरर्थैर्यच्छ्राद्धं क्रियते नरैः ।
तृप्यन्ति तेन चाण्डालपुक्कसाद्यासु योनिषु ॥
एवमाप्यायनं वत्स बहूनामपि बान्धवैः ।
श्राद्धं कुर्व्वद्भिरन्नाम्बुशाकैरपि हि जायते ॥

नागरखण्डे ।

श्राद्धे तु क्रियमाणे वै न किञ्चिद्व्यर्थतां व्रजेत् ।
उच्छिष्टमपि राजेन्द्र तस्माच्छ्राद्धं समाचरेत् ॥
विप्रपादोदकं यच्च भूमौ पतति पार्थिव ।
तेन ये गोत्रजाः केचिदपुत्रा मरणं गताः ।
तावत् पुष्करपात्रैस्तु पिबन्ति पितरो जलम् ॥
श्राद्धे प्रक्रियमाणे तु यत्किञ्चित् पतति क्षितौ ।
पुष्पगन्धादिकं चान्नमपि तोयं नरेश्वर ॥
तेन तृप्तिं परां यान्ति ये कृमित्वमुपागताः ।
कीटत्वं वापि तिर्य्यक्त्वं व्यालत्वं वा नराधिप ॥
यदुच्छिष्टं क्षितौ याति पात्रप्रक्षालनोद्भवम् ।
तेन तृप्तिं परां यान्ति ये प्रेतत्वमुपागताः ॥

ये चापमृत्युना केचिन्मृत्युं प्राप्ताः स्ववंशजाः ।
विकिरेण प्रदत्तेन ते तृप्तिं यान्ति चाखिलाः ॥

तदेवं श्राद्धावयवैः केषामपि वंश्यानां तृप्तिरुक्ता । ब्राह्मणभोजनादिना प्रधानकर्म्मणा तु मुख्यानामुद्दिश्यमानानां पितृपितामहादीनां तृप्तिर्भवतीत्युक्तम् ।

स्कान्दे ।

पितॄनुद्दिश्य यत्कव्यं ब्राह्मणेभ्यश्च दीयते ।
सम्यक्श्रद्धापरैर्मर्त्त्यैस्तद्भवेत् तृप्तिदं महत् ॥
पितॄणां सर्व्वदेवेश इत्येषा वैदिकी श्रुतिः ।
पितुः पितामहस्यापि तत्पितुश्च ततः परम् ॥
समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः ।
सर्व्वेषां स्यात् परा तृप्तिर्यावदाभूतसंप्लवम् ॥

ननु पुण्योत्कर्षवतां स्वर्गलोकं गतानां मनुष्यपितृपितामहादीनाम् अमृताहाराणां(१) सतां कथं ब्राह्मणभोजनविनष्टेन मानुषेण चान्नेन तृप्तिः सम्भवति । पापीयसां वा तिर्य्यग्योनिगतानां तृणाद्याहाराणां सतां प्रेतादिरूपत्वं गतानां वा रुधिराद्याहाराणां सतामित्युक्तं पाद्म-मात्स्ययोः ।

यदि मर्त्त्यैर्द्विजैर्भुक्तं हूयते यदि वानले ।
शुभाशुभात्मकैः प्रेतैस्तद्दत्तं भुज्यते कथम् ॥

अस्याक्षेपस्य समाधानं तत्रैवोक्तम् ।

---

(१) अमृतान्धसामिति ग० ।

तत्राह देवलः ।

देवो यदि पिता जातः शुभकर्म्मानुयोगतः ।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गान्धर्व्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् ।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति ॥
पानं भवति यक्षत्वे राक्षसत्वे तथामिषम् ।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ।
मनुष्यत्वेऽन्नपानादि नानाभोगरसो भवेत् ॥ इति ॥

ननु यथा क्षीरस्य दधिरूपेण परिणामः, दध्नस्य तक्रादिरूपेण प्रत्यक्षतो दृश्यते, नैवं भोज्यमानस्य हूयमानस्य वा अमृतादिरूपेण तृणादिरूपेण वा परिणामो दृश्यते। न च परिणतस्यापि स्वातन्त्र्येण क्रियाशक्तिशून्यस्य देशान्तरगतप्राणिप्राप्तिः सम्भवति। नापि नाना-कर्म्मवशङ्गतानां प्रमीतप्राणिनां श्राद्धदेशोपसर्पणमुपपद्यते। नापि चास्य सुपर्ण-गन्धर्व्व-यक्ष-राक्षस-प्रेत-पिशाच-नर-किन्नर-पशु-पक्षि-कृमि-कीटादिकोटिजातिसहस्रतिरस्कृतस्वरूपैः श्राद्धकर्तृपूर्व्वजैः सह स्वयं विविच्य सम्बन्धः सम्भवतीत्याद्याक्षेपाः पुराणेषु सूचिताः ।

पाद्म-मात्स्ययोः ।

कथं कव्यानि दत्तानि हव्यानि च जनैरिह ।
गच्छन्ति पितृलोकं वा प्रापकः कोऽत्र गद्यते ॥

विष्णुपुराणे ।

तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः ।
दद्यात् श्राद्धं श्रद्धयान्नं न वहेयुः प्रवासिनः ॥

स्कान्दे ।

मृतानां यदि जन्तूनां श्राद्धमाप्यायनं ततः ।
निर्व्वाणस्य प्रदीपस्य तैलं सम्वर्द्धयेच्छिखाम् ॥

नागरखण्डे ।

किमर्थं क्रियते श्राद्धममावास्यादिषु द्विजैः ।
मृतास्तु पुरुषा विप्र स्वकर्म्मजनितां गतिम् ।
गच्छन्ति ते कथं तस्य सुतस्याश्रममाप्नुयुः ॥

परिहारा अपि पुराणेष्वेव सूचिताः ।

तत्र मात्स्य-पाद्मयोः ।

नामगोत्रं पितृणान्तु प्रापकं हव्यकव्ययोः ।
श्राद्धस्य मन्त्रास्तद्वच्च उपलभ्यानि भक्तितः ॥

पित्रादिनामादीनि उपलभ्यानि ज्ञातव्यानीत्यर्थः । नन्वचेतनत्वान्नामादीनां कथं हव्यकव्यप्रापकत्वमित्याशङ्क्योक्तम् ।

अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिता इति ॥

अग्निष्वात्तादयः पितृविशेषाणामाद्यधिष्ठातारः प्रापका इत्युक्तं भवति । ननु यदि नामगोत्रं प्रापकं तर्हि नामगोत्राज्ञाने श्राद्धं क्रियमाणमनर्थकं स्यात् । तथा च "यदि नाम न विन्द्यात् स्वधा पितृभ्यः पृथिवी षड्भ्य इति प्रथमं पिण्डं दद्यात्" इत्यापस्तम्बसूत्रविरोध इत्याशङ्क्य च ऊहपदस्यापि प्रापकत्वं दर्शितं तत्रैव ।

नाममन्त्रास्तदादेशा भवान्तरगतानपि ।
प्राणिनः प्रीणयन्त्येते तदाहारत्वमागतान् ॥

तदादेशा नामगोत्रमन्त्रादीनामादेशा ऊहादिप्रकारेण विपरिवर्त्तिताः शब्दा इत्यर्थः ।

अर्थान्तरञ्च । देवदत्तादिनामसु शून्यप्रकाशकेषु च मन्त्रेषु कथञ्चिदपि सम्बन्धमलभमानाना-मग्निष्वात्तादिप्रकाशकानां मन्त्राणाम् अतत्प्रकाशका नाममन्त्रास्तादेशास्तत्कार्य्यकारिण इत्यर्थः ।

ब्राह्मणैरभ्यनुज्ञातः स्वपितॄणाञ्च नामधृक् ।
तानेवार्च्चयते सम्यक् विधिमन्त्रवहिष्कृतान् ॥

इति वाराहपुराणस्मरणात् ।

भवान्तरगतानपीत्यनेकदेशकालयोन्यवस्थान्तरगतानपीत्यर्थः । तदाहारत्वमागतानित्यनेन प्रदत्तस्य हविषस्तत्तद्योनिसमुचितसुधाद्याहाररूपेण परिणामत्वं(१) मन्त्रादेरेवालौकिकस्य हेतोरुक्तम् । मन्त्रादिग्रहणं श्राद्धीयस्य सर्व्वस्यापि विधेरुपलक्षणार्थम् ।

अतएव वायुपुराणे ।

काले न्यायागतं पात्रे विधिना प्रतिपादितम् ।
अन्नं नयन्ति तत्रैते जन्तुर्यत्रावतिष्ठते ॥
यथा गोषु प्रणष्टासु वत्सो विन्दति मातरम् ।
तथान्नं नयते विप्रो जन्तुर्यत्रावतिष्ठते ॥
नामगोत्रञ्च मन्त्रश्च दत्तमन्नं नयन्ति ते ।
अपि योनिशतं प्राप्तान् तृप्तांस्तानुपतिष्ठति ॥

तदेवं श्राद्धदेशं प्रत्यनागतान् लोकान्तरस्थानेव पितॄन् प्रति मन्त्रादयो हविः प्रापयन्तीत्युक्तम् ।

---

(१) प्रीणयितृत्वमिति ग० ।

3

एवमेव वायुपुराणे निरवस्थान् प्रेतस्थानस्थितांश्च पितॄनभिधायोक्तम् ।

तेषां लोकान्तरस्थानां विविधैर्नामगोत्रकैः ।
भूम्यामसव्यं दर्भेषु दत्ताः पिण्डाः सुतैस्तु वै[१] ।
यान्ति तांस्तर्पयन्त्येव प्रेतस्थानस्थितान् पितॄन् ॥
अप्राप्ता यातनास्थानं भ्रष्टा ये भूवि पञ्चधा ।
नानारूपासु जाता ये तिर्य्यग्योन्यादिजातिषु ॥
यदाहारा भवन्त्येते तासु तास्विह योनिषु ।
तस्मिंस्तस्मिंस्तदाहारं श्राद्धान्नमुपतिष्ठति ॥

विष्णुधर्म्मोत्तरे दिव्यान् पितृगणानभिधायोक्तम् ।

एते श्राद्धस्य भोक्तारो विश्वेदेवैः सदा सह ।
एते श्राद्धं सदा भुक्त्वा पितॄन् सन्तर्पयन्त्युत ।
यत्र क्वचन धर्म्मज्ञा वर्त्तमाना हि योगतः ॥

एते सुपुष्टा विनियोजयन्ति
श्राद्धस्य दातारमदीनसत्त्वाः ।
तुष्टा तथैते विनियोजयन्ति
दातुः पितॄन् सर्व्वगणान् महीपते[२] ॥

याज्ञवल्क्यस्मृतौ ।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥

---

(१) त्रयस्तु वै इति ख० ।
(२) महीयते इति ग० ।

यथा ह्यन्तर्व्वत्नी सुहृदा दीयमानं दोहदादिद्रव्यमुपभुञ्जाना स्वयं तृप्यति, तेनैव च दोहदद्रव्येन स्वकीयोदरवर्त्तिनं गर्भं तर्पयति, दोहदप्रदानेनोपकारकर्त्तारं प्रत्युपकारैः परितोषयति, तथाग्निष्वात्तादयो वस्वादयश्च देवताविशेषत्वादचिन्त्यमहिमानः श्राद्धं भुक्त्वा स्वयं तृप्यन्ति स्वाधिष्ठितांश्च मनुष्यपितॄंस्तर्पयन्ति, श्राद्धकर्त्तारञ्च आयुष्यादिभिः फलैर्योजयन्तीत्याशयः । अत्र येषां पितॄणां देशकालव्यवहितातीन्द्रियार्थज्ञाने श्राद्धदेशं प्रत्यागमने च शक्तिर्नास्ति तेषां देशान्तरस्थानामेव मन्त्रादिप्रापितेन हविषा तृप्तिर्भवतीत्युक्तम् । अतीन्द्रियज्ञानयुक्तानामागमनशक्तियुक्तानां श्राद्धदेशञ्च प्रत्यागतानां वायवीयेन शरीरेण ब्राह्मणशरीराविष्टानां तृप्तिर्भवतीत्युक्तम् कूर्म्मपुराणे ।

तृप्यन्ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ।
अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवाः ॥
तैर्ब्राह्मणैः सहाश्नन्ति पितरो ह्यन्तरीक्षगाः ।
वायुभूतास्तु तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥

मत्स्यपुराणे ।

निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान् ।
वायुवच्चानुगच्छन्ति(१) तथासीनानुपासते ॥

तथा एकब्राह्मणपक्षे बौधायनः ।

उरस्थाः पितरस्तस्य वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डभक्षकाः ॥

---

(१) वायुभूता नु गच्छन्तीति ग० ।

अतएव ब्रह्मपुराणादिषु उक्तम् ।

आश्वयुज्यास्तु कृष्णायां त्रयोदश्यां मघासु च ।
प्रावृडन्ते यमः प्रेतान् पितॄंश्चाथ यमालयात् ।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम् ॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयं कृतम् ।
काङ्क्षन्तः पुत्रपौत्रेभ्यो पायसं मधुसंयुतम् ।
तस्मात् तांस्तत्र विधिना तर्पयेत् पायसेन तु ॥

यतस्तागमनशक्तियुक्ताः पितरः श्राद्धदेशं प्रत्यागच्छन्ति, अतएव पुष्करयात्रायां वियोगवाप्यां रामेण श्राद्धे क्रियमाणे सीता ब्राह्मण-शरीरे दशरथादीनपश्यत् ।

तथाच पद्मपुराणे ।

परिपक्वन्तु जानक्या सिद्धं रामे निवेदितम् ।
स्नात्वा वियोगवाप्यां स सुस्नानत्वमपालयत्[१] ॥
मघासु चलिते सूर्य्ये काले कुतपके तथा ।
आयाता ऋषयः सर्व्वे ये रामेण निमन्त्रिताः ॥
तानागतान् मुनीन् दृष्ट्वा वैदेही जनकात्मजा ।
अपासर्पत् ततो दूरे विप्राणां मध्यतः स्थिता[२] ।
गुल्मैराच्छाद्य चात्मानं निगूढ़ा सा तदा स्थिता ॥
अपक्रान्तां तदा सीतां ज्ञात्वा राघवनन्दनः ।
विमृश्य सुचिरं कालमियं किमिति सत्वरम् ।

---

(१) सुस्नानमन्वपालयदिति ग० ।
(२) विप्रमध्ये सुसंस्थिता इति ख० ।

अन्यत्र च गता साध्वी मन्ये चाहं त्रपान्विता ॥
किन्तावद्भोजये विप्रान् सीतामन्वेषयामि किम् ।
कारणं नैव जानामि श्राद्धकाले ह्युपस्थिते ।
रामेण भोजिता विप्रा इत्युक्ता च यथाविधि ॥
गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम् ।
किमर्थं सुभ्रु नष्टासि मुनीन् दृष्ट्वा समागतान् ।
तत्सर्व्वं मम तन्वङ्गि कारणं वद माचिरम् ॥
एवमुक्ता तदा भर्त्रा त्रपयाधोमुखी स्थिता ।
मुञ्चन्ती चास्रुसङ्घातं राघवं वाक्यमब्रवीत् ॥
शृणु त्वं नाथ यत् दृष्टमाश्चर्य्यमिह(१) यादृशम् ।
पिता तव मया दृष्टो ब्राह्मणाङ्गेषु राघव ॥
सर्व्वाभरणसंयुक्तौ द्वौ चान्यौ च तथाविधौ ।
दृष्ट्वा त्रपान्विता चाहमपक्रान्ता तवान्तिकात् ॥
वल्कलाजिनसंवीता कथं राज्ञः पुरःसरा ।
भवामि रिपुवीरघ्न सत्यमेतदुदाहृतम् ॥
स्वहस्तेन कथं राज्ञे वा नेयं भोजनं त्विदम् ।
दासानामपि यत् दासा नोपभुञ्जन्ति कर्हिचित् ।
तादृशन्तु कथं तस्मै त्वमा दातुं वदस्व मे ॥
याहं राज्ञा पुरा दृष्टा सर्व्वालङ्कारभूषिता ।
सा स्वेदमलदिग्धाङ्गी कथं पश्यामि भूमिपम् ॥ इति ॥

---

(१) यद्दृष्टमाश्चर्य्यमिहेति ख० ।

नागरखण्डे श्राद्धदेशं प्रति पितृणामागमनमुक्तम् ।

अमावास्यादिने प्राप्ते गृहद्वारं समाश्रिताः ।
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ॥
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चास्तं गते भानौ निराशा दुःखसंयुताः ।
निश्वस्य सुचिरं यान्ति गर्हयन्तः स्ववंशजम् ॥

आनर्त्त उवाच ।

मृतास्तु पुरुषा विप्र स्वकर्म्मजनितां गतिम् ।
गच्छन्ति ते कथं तस्य सुतस्याश्रममाप्नुयुः ॥

भर्तृयज्ञ उवाच ।

सत्यमेतन्महाभाग यत्त्वया व्याहृतं वचः ।
स्वकर्म्मार्हां गतिं यान्ति मृताः सर्व्वत्र मानवाः ॥
परं यथा समायान्ति वंशजस्याश्रमं(१) लिह ।
तथा तेऽहं प्रवक्ष्यामि सन्देहो न यथा भवेत् ॥
मृता यान्ति यथा राजन् ये च केचिन्महामते(२) ।
ते जायन्ते न मर्त्त्येऽत्र यावद्वंशस्य संस्थितिः ॥
परं शुभात्मका ये च ते तिष्ठन्ति सुरालये ।
पाप्मानश्च नरा ये च तेऽपि स्वर्गनिकेतने ।
अन्यदेहं समाश्रित्य भुञ्जते कर्म्मणः फलम् ॥
शुभं यद्वंशजैः श्राद्धं स्वयं विहितमात्मनः ।

(१) वंशजस्याश्रयमिति ख० ।
(२) यत्र केचिन्महीपते इति ग० ।

पितृलोकस्थितानाञ्च स्वर्गस्थानामपि क्षुधा ।
पिपासा च तथा राजन् तेषां सञ्जायतेऽधिका ॥
यावन्नरत्रयं राजन् पितरो मातरस्तथा[1] ।
उद्धृता ये गयाश्राद्धे ब्रह्मलोकेषु ते शुभम् ।
भुञ्जते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥
न चापि पतनं तस्मात् स्थानात् भवति भूमिप ।
वंशोच्छेदात् पुनः सर्व्वे निपतन्ति महीतले ॥
आगत्यास्मात् ततो मर्त्त्या निपत्य जगतीतले ।
पापाः पापं समायान्ति योनिश्रेष्ठं शुभान्विताः ॥

तदेवमुपपन्ना पितृणां श्राद्धदत्तेन हविषा तृप्तिः, दिव्यपितृणाञ्च फलदातृत्वमिति ।

तत्र केचिदाहुः । हविःप्रत्युद्देश्यत्वं देवतात्वम्, न तु हविर्भोक्तृत्वं फलदातृत्वं वा । ग्रावञ्चः स्वाहेत्यादिष्वचेतनस्यापि देवतात्वदर्शनात् । इन्द्रादीनामपि विग्रहादिमत्त्वेन देवत्वानभ्युपगमात् । यत्किञ्चिद्रूपाणाम् पित्रादीनामुद्देश्यत्वसम्भवात् देवतात्वोपपत्तेः । फलहेतुत्वन्तु कर्म्मण एव । तत् साधनभूतायां देवतायां स्तुत्यर्थमर्थवादरूपे वाक्ये उपचर्य्यते । तृप्तिवाक्यमपि चेतनत्वादिगुणं गमयत्प्राशस्त्यपरमेवेति । तन्न श्रुतिस्मृतीतिहासपुराणादिषु सर्व्वत्र पितृतृप्तिप्राधान्येनैव श्राद्धारम्भदर्शनात् फलदातृत्वस्यापि विधिमन्त्रयोरादिमध्यावसानेष्वनेकशोऽभिधानादभियुक्ततराणां शिष्टानां तादृग्धीदार्ढ्या-

(१) पितृतो मातृतस्तथेति ग० ।

लोकस्यायथाविचिकित्साप्रतीतेस्तृप्तिफलदातृत्वयोरलौकिककल्पनानुपपत्तेः। यथा ह्येतानि स्मृतिपुराणेषु पितृतृप्त्याद्यनेकफलप्रतिपादकानि श्राद्धविषयाणि वाक्यानि दर्शितानि, तथा तदकरणे प्रत्यवायप्रतिपादकान्यपि लिख्यन्ते ।

नागरखण्डे ।

तर्पयन्ति न ये पापाः स्वान् पितॄन् नित्यशो नृप।
पशवस्ते नरा ज्ञेया द्विपदाः शृङ्गवर्जिताः॥

अल्पप्रयासं महाफलं श्राद्धमकृत्वा प्रत्यवायरूपमनर्थमङ्गीकुर्व्वाणास्तमोगुणावृतज्ञाना हिताहितमप्रतिपद्यमानाः पशुसाम्यात् पशवः।

तथा । जलेनापि च न श्राद्धं शाकेनापि करोति यः।
अमायां पितरस्तस्य शापं दत्त्वा प्रयान्ति च॥

हारीतस्मृतौ ।

न तत्र वीरा जायन्ते नारोगा न शतायुषः ।
न च श्रेयोधिगच्छन्ति यत्र श्राद्धं विवर्जितम् ॥
अपि मूलैः फलैर्वापि तथाप्युदकतर्पणैः ।
अविद्यमाने कुर्व्वन्ति नैव श्राद्धं विवर्जयेत् ॥

कूर्म्मपुराणे ।

अमावास्याष्टकादिनित्यकालाननुक्रम्योक्तम् ।
तस्य पाकश्राद्धकाला नित्याः प्रोक्ता मनीषिभिः[१] ।
नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः ।
बान्धवानान्तु कर्त्तव्यं नारकी स्यादतोऽन्यथा ॥

(१) दिनेदिने इति ग० ।

ब्रह्मवैवर्त्तवायुपुराणयोः अष्टकासु श्राद्धं विधायोक्तम् ।

पितरः पर्व्वकालेषु[१] तिथिकालेषु देवताः ।
सर्व्वे पुरुषमायान्ति निपानस्येव धेनवः ॥
मास्म ते प्रतिगच्छेयुरष्टकाभिरपूजिताः ।
मोघास्तस्य भवन्त्याशाः परत्रेह च सर्व्वशः ॥
पूजकानां सदोत्कर्षो नास्तिकानामधोगतिः ।
देवांस्तु दायिनो यान्ति तिर्य्यग्गच्छन्त्यदायिनः ॥

वायुपुराणे पाठभेदः ।

मोघस्तस्य भवेल्लोको लब्धञ्चास्य विनश्यति ॥ इति ॥

विष्णुस्मृतिविष्णुधर्म्मोत्तरयोः अमावास्यादिकाननुक्रम्योक्तम् ।

एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यते ॥

ब्रह्मपुराणे ।

न सन्ति पितरश्चेति कृत्वा मनसि यो नरः ।
श्राद्धं न कुरुते मोहात्[२] तस्य रक्तं पिबन्ति ते ॥

इत्येवं श्राद्धप्रशंसाद्वारेण श्राद्धमाहात्म्यमुक्तम् । अथेदानीं श्राद्धदेवतारूपपितृप्रशंसाद्वारेण[३] श्राद्धमहिमोच्यते । ब्रह्मवैवर्त्ते ।

न हि योगगतिः सूक्ष्मा न पितॄणां परा गतिः ।

---

(१) सर्व्वकालेष्विति ग० ।
(२) तेषामिति ख० । काले इति ग० ।
(३) श्राद्धदेवता निरूपयन् पितृप्रशंसाद्वारेणेति ख० ।

तपसापि न दृश्यामौ[१] किं पुनर्मांसचक्षुषा ॥
चत्वारः पितरो मूर्त्ता मूर्त्तिहीनास्त्रयस्तथा ।
तेषां श्राद्धानि सत्कृत्य देवाः कुर्व्वन्ति यत्नतः ॥
भक्ताः प्राञ्जलयः सर्व्वे देवास्तद्गतमानसाः ।
विश्वे च वसवश्चैव पृश्निनः[२] शृङ्गिणस्तथा ।
कृष्णाः श्वेतास्त्वजाश्चैव विधिवत् पूजयन्त्युत ॥
प्रजाता वातरसना दिवाकृत्यास्तथैव च ।
मेघाश्च मरुतश्चैव ब्रह्माद्याश्च दिवौकसः ॥
अत्रिभृग्वङ्गिराद्याश्च ऋषयः सर्व्वे एव च ।
यक्षा नागाः सुपर्णाश्च किन्नरा राक्षसैः सह ।
पितॄंस्तेऽपूजयन् सर्व्वे नित्यमेव फलार्थिनः ॥
एवमेते महात्मानः श्राद्धैः सत्कृत्य पूजिताः ।
सर्व्वान् कामान् प्रयच्छन्ति शतशोऽथ सहस्रशः ।
हित्वा त्रैलोक्यसंसारं जरामृत्युभयं तथा ।
मोक्षं योगमथैश्वर्य्यं सूक्ष्मदेहमदेहताम् ।
कृत्स्नं वैराग्यमानन्त्यं प्रयच्छन्ति पितामहाः ॥
वरिष्ठः सर्व्वधर्म्माणां मोक्षधर्म्मः सनातनः ।
पितॄणां हि प्रसादेन प्राप्यते सुमहात्मना ॥
मुक्तावैदुर्य्यवासांसि वाजिनागायुधानि च ।
कोटिशश्चैव रत्नानि प्रयच्छन्ति पितामहाः ॥

---

(१) दृश्या सा इति ग० ।
(२) पृश्निजा इति ग० ।

हंसबर्हिणयुक्तानि मुक्तावैदूर्य्यवन्ति च ।
किङ्किणीजालनद्धानि सदा पुष्पफलानि च ॥
विमानानां सहस्राणि जुष्टान्यप्सरसाङ्गणैः ।
सर्व्वकामसमृद्धानि प्रयच्छन्ति पितामहाः ॥
प्रजां पुष्टिं स्मृतिं मेधां राज्यमारोग्यमेव च ।
प्रीता नित्यं प्रयच्छन्ति मानुषाणां पितामहाः ।
पितॄन् प्रीणाति यो भक्त्या पितरः प्रीणयन्ति तम् ॥

वायुपुराणे ।

आद्यो गणस्तु योगानां स नित्यं योगवर्द्धनः ।
द्वितीयो देवतानाञ्च तृतीयो देववैरिणाम् ॥
शेषास्तु वर्हिणां ज्ञेया इति सर्व्वे प्रकीर्त्तिताः ।
देवास्त्वेतान् यजन्ते वै सर्व्वेष्वेतेष्ववस्थितान् ॥
आश्रमास्तु यजन्ते तांश्चत्वारस्तु यथाक्रमम् ।
वर्णाश्चैव यजन्ते तान् चत्वारश्च यथाविधि ॥
यथा सङ्करजाताश्च म्लेच्छाश्चैव यजन्ति वै ।
तथा वै पितरः पूज्याः स्रष्टारो देशकालयोः ॥
पितृभक्त्या ततो नित्यं योगं प्राप्नोत्यनुत्तमम् ।
योगेन मोक्षं लभते हित्वा कर्म्म शुभाशुभम् ॥
यज्ञहेतोर्यदुद्धृत्य मोहयित्वा जगत्तदा ।
गुहायां निहितो योगः कश्यपेन महात्मना ॥
तच्च योगं समासेन पितृभक्तस्तु कृत्स्नशः ।

अयत्नात् प्राप्नुयाज्जन्तुः[१] सर्व्वमेव न संशयः ॥
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ।
क्षिप्रं प्राप्नोति तत्सर्व्वं पितृभक्तिपरो नरः[२] ॥
राजा तु लभते राज्यमधनश्चोत्तमं धनम् ।
क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः ।
यान् कामान्[३] मनसा वाञ्छेत् दद्युस्तान् पितरोऽस्य[४] वै ॥

मात्स्यपाद्मादिषु ।

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
राज्यञ्चापि प्रयच्छन्ति प्रीताः पितृगणा नृप ॥
रतिशक्तिः स्त्रियः कान्ता भोज्यं भोजनशक्तता[५] ।
दानशक्तिः सविभवा रूपमारोग्यसम्पदः ।
श्राद्धपुष्पमिदं[६] प्रोक्तं फलं ब्रह्मसमागमः ॥
श्रूयते हि पुरा मोक्षं प्राप्ताः कौशिकसूनवः ।
पञ्चभिर्जन्मसम्बन्धैः प्राप्ताः ब्रह्मपदं परम्[७] ॥
कौशिको नाम धर्मात्मा कुरुक्षेत्रे महान् ऋषिः ।
नामतः कर्मतस्तस्य सुतान् सप्त निबोधत ॥

---

(१) प्राप्यते जन्तुरिति ख० ।
(२) श्राद्धे दाता न संशय इति ख० ।
(३) यत्किञ्चिदिति ग० ।
(४) पितरोऽस्य इति ग० ।
(५) भोजनशक्तितेति ख० ।
(६) श्राद्धे पुण्यमिदमिति क०, ग० च ।
(७) ब्रह्म परं पदमिति ग० ।

खसृमः[१] क्रोधनो हिंस्रः पिशुनः कविरेव च।
वाग्दुष्टः पितृवर्त्ती च गर्गशिष्यास्तदाभवन्॥
पितर्य्युपरते तेषामभूद्दुर्भिक्षमुल्वणम्।
अनावृष्टिश्च महती सर्व्वलोकभयङ्करी॥
गर्गादेशाद्वने दोग्ध्रीं रक्षन्तस्ते तदा द्विजाः।
हनामः कपिलामेकां धेनुं क्षुत्पीड़िता भृशम्॥
इति चिन्तयतां तेषां लघु प्राह तदानुजः।
अथावश्यमियं बध्या श्राद्धरूपेण योज्यताम्।
श्राद्धे नियोज्यमानेयं पापात् त्रास्यति नो ध्रुवम्॥
एवं कुर्व्वित्यनुज्ञातः पितृवर्त्ती तदाग्रजैः।
चक्रे समाहितः श्राद्धमालभ्य कपिलां स ताम्॥
द्वौ दैवे भ्रातरौ कृत्वा पित्र्ये त्रींश्चापरान् क्रमात्।
तथैकमतिथिं कृत्वा श्राद्धदः स्वयमेव तु॥
चकार मन्त्रवच्छ्राद्धं स्मरन् पितृपरायणः।
तया गवा विशङ्कास्ते गुरवे वै न्यवेदयन्।
व्याघ्रेण निहता धेनुर्वत्सोऽयं प्रतिगृह्यताम्॥
एवं सा भक्षिता धेनुः सप्तभिस्तैस्तपोधनैः।
वैदिकं बलमाश्रित्य क्रूरे कर्म्मणि निर्भयैः।
ततः कालापकृष्टास्ते व्याधा दाशपुरेऽभवन्॥

अत्र दाशपुरं दशार्णदेशे विद्यत इति ज्ञायते। जाता व्याधा दशार्णेषु सप्त धर्म्मविचक्षणाः—इति हरिवंशदर्शनात्।

---

(१) ससृम इति ग०।

जातिस्मरत्वं प्राप्तास्ते पितृभावानुभाविताः।
यत्कृतं क्रूरकर्म्मापि श्राद्धरूपेण तैस्तदा॥
तेन ते भवने जाता व्याधानां क्रूरकर्म्मणाम्।
पितृणाञ्चैव माहात्म्यात् जाता जातिस्मराश्च ते॥
नामधेयानि चाप्येषामिमान्यासन् महात्मनाम्।
निर्वैरो निर्वृतिः शान्तो निर्मन्युः कृतिरेव च।
वैधसो मातृवर्त्ती च व्याधाः परमधार्म्मिकाः॥
मृता वैराग्ययोगेन आस्थायानशनं पुनः।
जातिस्मराः सप्त मृगा जाताः कालञ्जरे गिरौ॥
उन्मुखो नित्यवित्रस्तः स्तब्धकर्णो विलोचनः।
पण्डितो घस्मरो नादी नामतस्ते प्रकीर्त्तिताः॥
जह्नुः प्राणान् मरु साध्य लब्धाहारा जितेन्द्रियाः(१)।
तेषां मरु साधयतां पदस्थानानि तत्र वै॥
तथैवाद्यापि दृश्यन्ते गिरौ कालञ्जरे शुभे।
मरुप्रपतनेनाथ जाता वैराग्ययोगिनः॥
मानसे चक्रवाकास्ते सञ्जाताः सप्त योगिनः।
नामतः कर्म्मतः सर्व्वान् शृणु त्वं ऋषिसत्तम॥
सुमनः कुमुदः शुद्धः छिद्रदर्शी सुनेत्रकः।
स्वतन्त्रः शकुनश्चैव सप्तैते योगपारगाः॥
दृष्ट्वा विभ्राजनामानमुद्याने स्त्रीभिरन्वितम्।
क्रीड़न्तं विविधैर्भोगैर्महाबलपराक्रमम्॥

---

(१) तपस्विन इति ग०।

योगभ्रष्टास्ततस्तेषां बभूवुश्चाल्पचेतसः ।
राज्यकामोऽभवच्चैकस्तेषां मध्ये जलौकसाम् ।
पितृवर्त्ती च यो विप्रः श्राद्धकृत् पितृवत्सलः ॥
अपरौ मन्त्रिणौ दृष्ट्वा प्रभूतबलवाहनौ ।
मन्त्रित्वे चक्रतुश्चित्तं कण्डरीकसुबालकौ ॥
ब्रह्मदत्तोऽभिषिक्तस्तु काम्पिल्ये नगरोत्तमे ।
पञ्चालराजो विख्यातः सर्व्वशास्त्रविशारदः ।
योगवित्सर्व्वजन्तूनां रुतवेत्ताभवत्तदा ॥
तस्य राज्ञोऽभवत् भार्य्या देवलस्यात्मजा तदा ।
सन्नतिर्नामविख्याता कपिला याऽभवत्पुरा ॥
पितृकार्य्यनियुक्तत्वादभवत् ब्रह्मवादिनी ।
तया चकार सहितः स राज्यं राज्यनन्दनः ॥
ये च योगादविभ्रष्टाश्चत्वारस्ते महाद्विजाः ।
तस्मिन्नेव पुरे जातास्ते तु चक्राङ्कयास्तदा ।
वृद्धद्विजस्य दायादाः विप्रा जातिस्मराः पुरा ॥
धृतिमान् तत्त्वदर्शी च विद्याचन्द्रस्तपोत्सुकः ।
नामतः कर्मतश्चैव सुदरिद्रस्य ते सुताः ॥
तपसे बुद्धिरभवत्तदा तेषां द्विजन्मनाम् ।
यास्यामः परमां सिद्धिमित्यूचुस्ते द्विजोत्तमाः ॥
ततस्तद्वचनं श्रुत्वा सुदरिद्रो महातपाः ।
उवाच दीनया वाचा किमेतदिति पुत्रकाः ॥
अधर्म्म एष इति वः पिता तानभ्युवाच ह ।

वृद्धं पितरमुत्सृज्य दरिद्रं वनवासिनम्।
को नु धर्म्मो नु भवतामन्याय्या गतिरेव च ॥
ऊचुस्ते कल्पिता वृत्तिस्तव तावच्छृणुष्व नः।
वृत्तमेतत्पुरा राज्ञः स ते दास्यति पुष्कलम्।
धनं ग्रामसहस्राणि प्रभाते पठतस्तव ॥
कुरुक्षेत्रे तु ये विप्रा व्याधा दाशपुरे तु ये।
कालञ्जरे मृगा भूताश्चक्रवाकास्तु मानसे ॥
इत्युक्का पितरं जग्मुस्ते वनं तपसे पुनः।
वृद्धोऽपि राजभवनं जगामात्मसमृद्धये ॥
ततः प्रभाते नगरान्नृपः सेनासमावृतः।
निर्गच्छन् मन्त्रिसहितः सभार्य्यो वृद्धमागतं।
गदन्तं विप्रमायान्तं तं वृद्धं स ददर्श ह ॥

वृद्ध उवाच।

ये विप्रमुख्याः कुरुजाङ्गलेषु
जातास्तथा दाशपुरे मृगाश्च।
कालञ्जरे सप्त च चक्रवाकाः
ये मानसे ते वयमप्रसिद्धाः ॥

पुराणान्तरे तु कौशिकदायादानां शरद्वीपे क्वापि जलाशये चक्रवाकत्वमभिधाय पुनर्मानसे सरसि राजहंसत्वमुक्तम्। तथा च नन्दिखण्डादिषु तल्लिङ्गश्लोकाः।

ये ते गुरुवधाच्छापाद्गोवधेनातिपीड़िताः।
पितृभक्ता हितज्ञाना जाताः सर्व्वे शिवोदयाः ॥

सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥
एतदेव विदित्वैवं किमर्थञ्चावसीदथ ।
सम्प्रधार्य्य च तत्त्वेन राज्यं कृत्वातिचञ्चलम् ।
त्यक्त्वा मानुष्यकं जन्म कुरु त्वं वचनं हि नः ॥ इति ॥

हरिवंशादिषु तु सप्त व्याधा इत्यारभ्य हंसाः सरसि मानस इत्युक्त्वा तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथेति वाक्यशेष उक्तः ।

पाद्म-मात्स्ययोः ।

इत्याकर्ण्य नृपो वाक्यं स पपात शुचान्वितः[१] ।
जातिस्मरत्वमगमत्तौ च मन्त्रिवरावुभौ[२] ॥
हा वयं योगविभ्रष्टाः कामतः कर्मबन्धनात् ।
एवं विलप्य बहुशस्त्रयस्ते योगपारगाः ॥
विस्मिताः श्राद्धमाहात्म्यमभिनन्द्य पुनः पुनः ।
स तु तस्मै धनं दत्त्वा प्रभूतग्रामसंयुतम् ॥
विष्वक्सेनाभिधानन्तु राजा राज्येऽभ्यषेचयत् ।
मानसे मिलिताः सर्व्वे ततस्ते योगिनां वराः ॥
ब्रह्मदत्तादयस्तस्मिन् पितृभक्ता विमत्सराः ।
ततस्ते योगमास्थाय सर्व्व एव वनौकसः ॥

---

(१) न्टपस्ताभ्यां स पपातास्तु यानत इति ख० ।
(२) मन्त्रिवरात्मजाविति ग० ।

ब्रह्मरन्ध्रेण परमं पदमापुस्तपोबलात् ।
सन्नतिख्यातियोगेन पदमास्थाय चाव्ययम् ॥

हरिवंशे ।

एवमेतत् पुरावृत्तं मम प्रत्यक्षमच्युत ।
तद्धारयस्व गाङ्गेय श्रेयसा योक्ष्यसे ततः ॥
ये चान्ये धारयिष्यन्ति तेषां चरितमुत्तमम् ।
तिर्य्यग्योनिषु ते जातु(१) न भविष्यन्ति कर्हिचित् ॥
श्रुत्वा चेदमुपाख्यानं महार्थं महतां गतिम् ।
योगधर्म्मा हृदि सदा परिवर्त्तेत भारत ॥
स तेनैवानुबन्धेन कदाचिल्लभते शमम् ।
ततो योगगतिं याति सिद्धानामपि(२) दुर्लभाम् ॥ इति ॥

अस्य पुराकल्परूपार्थवादात्मकस्य सप्तव्याधोपाख्यानस्येदं तात्पर्य्यं, यद्गुरुस्वामिकामननुज्ञातामपि स्वबुभुक्षानिबन्धनं भक्षणोद्देशेनापि गुरुं वञ्चयित्वापि गामपि हत्वापि सपिण्डानामपि श्राद्धभोजनं विधाय छद्मनापि श्राद्धं कृतवतामन्यस्मिन् जन्मनि तिर्य्यग्जातीनामपि यदा पूर्व्वजन्मस्मृतिस्तादृग्विधज्ञानवैराग्यपूर्व्वको योगलाभो राज्यलाभः, सर्व्वसत्त्वरुतज्ञता मोक्षलाभ इत्येवं विधानि बभूवुः तदा किं वक्तव्यम् । न्यायार्जितधनसम्पादितशालियवाज्यादिनिष्पादितैरतिशयरचनामयैरन्नैर्वेदवेदार्थविदः पात्रीभूतान् निमन्त्रणादिविधिना सम्यक्

(१) जाता इति ख० ।
(२) सिद्धानां भुवि इति ग० ।

सम्पादितान् द्विजानुपवेश्य यथाविधि श्राद्धं कृतवतामायुरारोग्यादीनि निःश्रेयसपर्य्यन्तानि फलानि भवन्तीति । तथाह विष्णुधर्म्मोत्तरे ।

स्वर्गञ्च मोक्षञ्च यशः सुखानि
राज्यञ्च पुत्रानथ भूमिपाल ।
स्त्रियश्च मुख्या विविधाश्च कामाः
देवेश्वरः श्राद्धकृतो विधत्ते ॥ इति ॥

तथा अन्यान्यपि श्राद्धविशेषजन्यानि फलानि भवन्ति । तद्यथा आभ्युदयिकेऽभ्युदयः । कर्म्माङ्गे कर्म्मसागुण्यं । तीर्थयात्राङ्गे यात्रा । स्वतन्त्रेषु[१] प्रत्यवायानुत्पत्तिरूपात्तदुरितक्षयश्च । गयादितीर्थश्राद्धेषु पितॄणां विशिष्टलोकावाप्तिः । पितृतृप्तिस्तु सर्व्वेष्वपि श्राद्धेषु प्रयोजनमिति । श्राद्धविधिपाठस्यापि फलं हारीतेनोक्तम् ।

इमं श्राद्धविधिं पुण्यं कुर्य्याच्चापि पठेच्च यः ।
स सर्व्वकामसंयुक्तो ह्यमृतत्वञ्च विन्दति ॥

वृहस्पतिना तु श्राद्धविधिज्ञानोपदेशानुमतानामपि फलमुक्तम् ।

य एवं वेत्ति मतिमान् तस्य श्राद्धफलं भवेत् ।
उपदेष्टानुमन्ता च लोके तुल्यफलौ स्मृतौ ॥ इति ॥

इति श्रीमहाराजाधिराजश्रीमहादेवस्य सकलश्रीकरणाधिपति-
पण्डितश्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ
परिशेषखण्डे श्राद्धकल्पे श्राद्धविधिफल-
प्रशंसाप्रकरणं नाम प्रथमोऽध्यायः ।

---

(१) सात्त्विकेष्विति ख० ।

# अथ द्वितीयोऽध्यायः ।

## पितृनिरूपणप्रकरणम् ।

करोति हेमाद्रिरिमं हिमाद्रि-
शृङ्गावलिश्रीमदहारिकीर्त्तिः ।
निरूपणं भूरिगुणं पितॄणां
धीमत्सभानन्दकरं प्रबन्धम् ॥

उक्तमुक्ते प्रकरणे श्राद्धैराराधितानां पितॄणां फलदातृत्वम् । अथैतेषामुत्पत्त्यादिभिर्निरूपणं कर्त्तुं प्रकरणान्तरमारभ्यते । तत्र तावत् प्रकरणप्रतिपाद्योऽर्थः प्रश्नभङ्ग्या प्रस्तूयते ।

ब्रह्मवैवर्त्त-ब्रह्माण्डपुराणयोः ।

क एते पितरो नाम वर्त्तन्ते क्व च ते प्रभो ।
पुत्राश्च के स्मृतास्तेषां कथञ्च पितरः स्मृताः ॥
कथं वा ते समुत्पन्नाः कस्य पुत्राः किमात्मकाः ।
स्वर्गे वै पितरोऽन्ये तु देवानामपि देवताः ॥
स्वर्गे च के तु वर्त्तन्ते पितरो नरके तु के ।
किमर्थं ते न दृश्यन्ते तत्र किं कारणं स्मृतम् ॥
के च कैः पितरः पूज्याः कान् यजामो वयं पुनः ।
देवा ह्यपि पितॄन् स्वर्गे यजन्तीति हि नः श्रुतम् ॥

एतद्वेदितुमिच्छामो विस्तरेण बहुश्रुत ।
स्पष्टाभिधानमर्थन्तु तद्भवान् वक्तुमर्हति ॥

तदेतत्सर्व्वमुच्यते । तत्र तावदुत्पत्तिः । सा च द्विधा पुराणेषु दृश्यते । क्वचित् साक्षाद्ब्रह्मशरीरा: क्वचिद्व्यवधानेन । तत्र तावत् साक्षादभिधीयते ।

विष्णुपुराणे ।

सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ।
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे ।
उत्ससर्ज पितॄन् सृष्ट्वा ततस्तामपि स प्रभुः ॥

वाराहपुराणे ।

पूर्व्वं प्रजापतिर्ब्रह्मा सिसृक्षुर्व्विविधाः प्रजाः ।
एकाग्रमानसः सर्व्वांस्तन्मात्रान् मनसो वहिः ॥
कृत्वा परमकं ब्रह्म ध्यायन् स्वर्गमगाच्च वै ।
तस्यात्मनि तदा योगं गतस्य परमेष्ठिनः ॥
तन्मात्रा निर्य्ययुर्देहाद्धूमवर्णकृतत्विषः ।
पिवाम इति भाषन्तः खादाम इति चासकृत् ।
ऊर्द्धं जिगमिषन्तो वै वियत्संस्थास्तपस्विनः ॥
तान् दृष्ट्वा सहसोवाच ब्रह्मा विश्वपितामहः ।
भवन्तः पितरः सन्तु सर्व्वेषां गृहमेधिनाम् ॥

वायुपुराणे ।

ऋतमग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः ।
जज्ञिरे ऋतवस्तस्मादृतुभ्यश्चार्त्तवास्तथा ॥

आर्त्तवा ह्यनुमासाख्याः पितरो ह्यनुसूनवः।
ऋतुः पितामहा मासा आर्त्तवास्तस्य सूनवः।
प्रपितामहास्तु वै देवाः पञ्चाब्दाः ब्रह्मणः सुताः॥

आदित्यपुराणे।

अम्भांसि जज्ञिरे पूर्व्वं तमोभूते जगत्त्रये।
ब्रह्मणो विश्रुताः पुत्रास्ततः स्वायम्भुवेऽन्तरे॥
पितेव पूज्यमानास्तु जज्ञिरे पितरोऽस्य वै।
प्रजापतिः स्मृतो यस्तु स तु संवत्सरो मतः॥
संवत्सरः स्मृतो ह्यग्निर्ऋतमित्युच्यते बुधैः।
ऋतात्तु ऋतवो देवा जज्ञिरे ऋतवस्तु ते॥
मासास्तत्रार्त्तवा ज्ञेया ऋतोरेतेऽभवन् सुताः।
ततोऽभवंस्तु पितरो ऋतवश्च पितामहाः॥
स्वमेकात्तु प्रसूयन्ति प्रजा यस्मादशेषतः।
तस्मात् स्मृतः प्रजानां वै स्वमेकः प्रपितामहः॥

अत्र संवत्सरकालाभिमानिन्यो देवताः पितृशब्देनोच्यन्ते न कालमात्रं, फलदातृत्वस्य चेतनधर्म्मस्य तत्रासम्भवात्। संवत्सरादिशब्दास्तु संवत्सराद्यभिमानिनीषु देवतासु लाक्षणिका एतदप्यादित्यपुराणे एवोक्तम्।

संवत्सरः स्वमेकस्तु नामान्येतानि स्थानिनाम्।
स्थाने तु स्थानिनो ह्येते स्थानात्मानः प्रकीर्त्तिताः॥
स्थानाख्यान्तु दधानास्तु तदात्मानः सुराः स्मृताः।
मन्वन्तरे लिहान्ये ते स्थिताः कालाभिमानिनः।

कार्य्यकारणमुक्तास्ते ऐश्वर्य्याधिष्ण्यसंस्थिताः ॥

स्थानशब्देन चात्र काल एव । अतएव कालाभिमानिन इत्यभिधायोक्तम् ।

स्थानाभिमानिनो ह्येते तिष्ठन्तीह प्रसङ्गतः ॥ इति ॥

इत्येते पितरो देवाः पितरश्चार्त्तवाश्च ये ।

ऋतुत्वञ्च पितृत्वञ्च आर्त्तवत्वञ्च कीर्त्तितम् ॥

तत्र ते पञ्च भवन्ति ।

आदित्यपुराणे ।

ऋतवः पितरो ज्ञेया ऋतात्पश्चाभवन् सुताः[१] ।

मनुष्याणां पशूनाञ्च पक्षिणाञ्च सरीसृपाम् ।

स्थावराणाञ्च पञ्चानां पुष्पकालर्त्तवः[२] स्मृताः ॥

इत्यभिधानात् । कालिकापुराणे तु ऋतुसंज्ञाः पितरः षडुक्ताः षड्मध्वादयः ते ऋतवः पितरो देवा इति वैदिकी श्रुतिः । मधुमाधवौ वसन्तौ । शुचिशुक्रौ शुष्मिणौ । नभोनभस्यौ वार्षिकावृतुः । इषोर्जौ शरदृतुः । सहःसहस्यौ हेमन्तऋतुः । तपस्तपस्यौ शैशिर्य्यौ । ऋतवो ब्रह्मण आत्मजा तैः षड्भिः संवत्सरः स प्रजापतिः संवत्सरोऽग्निर्ऋतमुच्यते । ऋताच्च ऋतवो जज्ञिरे तेभ्यः स्थानुजङ्गमा ऋतुः कालस्तस्मात् सर्व्वमुत्पद्यते तस्मात् पितरश्चेति । इति ब्रह्मशरीरात् साक्षात् पितृणामुत्पत्तिरुक्ता ।

तस्माद्ब्रह्मा समुत्पन्नः सोऽपि सप्तासृजन्मुनीन् ।

---

(१) ऋतात् पश्चार्त्तवस्तुता इति ख० ।

(२) विसर्गलोपात् परं सन्धिरार्षः ।

मां यजध्वमनेनोक्तास्तदा ते परमेष्ठिना ॥
आत्मनात्मानमेवाग्रे ते यजन्त इति श्रुतिः ।
तेषाञ्च यजतां ब्रह्मा महावैकारिकात्मवान् ॥
अशपद्व्यभिचारो मे महानेष कृतो यतः ।
प्रभ्रष्टज्ञानिनः सर्व्वे भविष्यथ न संशयः ॥
एवं सप्तास्ततस्तेन ब्रह्मणात्मसमुद्भवाः ।
सद्यो वंशकरान् पुत्रानुत्पाद्य त्रिदिवं ययुः ॥
ते च वैमानिकाः सर्व्वे ब्रह्मणः सप्त मानसाः ।
तत्पिण्डदानमन्त्रोक्तं प्रपश्यन्तो व्यवस्थिताः ।
ये च ते पितरो ब्रह्मन्निबोध मम शंसतः ॥ इति ॥

अत्र त इति मरीच्यादयस्तत्पुत्राश्च ।

ते वर्त्तन्ते पुरा कल्पे देवानां सोमवर्द्धनाः ।
ये मरीच्यादयः सप्त स्वर्गे ते पितरः स्मृताः ॥

अत्र मरीच्यादिपुत्रेषु पितृशब्दप्रवृत्तौ कारणम् ब्रह्मवैवर्त्तब्रह्माण्डपुराणयोरुक्तं तथाहि ।

देवानसृजत ब्रह्मा मां यक्ष्यन्तीति वै प्रभुः ।
तमुत्सृज्य तदात्मानमयजन्त फलार्थिनः ॥
ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा भविष्यथ ।
मास्म किञ्चिदजानन्त ततो लोकेऽथ मुह्यत ॥
ते भूयः प्रणताः सर्व्वे प्रावोचन्त पितामहम् ।
अनुग्रहात् स लोकानां पुनस्तानब्रवीद्वचः ॥
प्रायश्चित्तञ्च कर्त्तव्यं व्यभिचारो हि वः कृतः ।

पुत्रान् स्वान् परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ ॥
प्रायश्चित्तार्थिनस्ते वै पृष्टवन्तः स्वकान् सुतान्।
तेभ्यस्ते नियतात्मानः पुत्राः शंसु(१)रनेकशः ॥
प्रायश्चित्तानि धर्मज्ञा वाङ्मनःकर्म्मजानि तु ।
ते पुत्रानब्रुवन् प्रीता लब्धसंज्ञा दिवौकसः ॥
यूयं वै पितरोऽस्माकं यैर्वयं प्रतिबोधिताः ।
धर्मं ज्ञानञ्च कामञ्च को वरो वः प्रदीयताम् ॥
पुनस्तानब्रवीद्ब्रह्मा यूयं वै सत्यवादिनः ।
तस्माद्यदुक्तं युष्माभिस्तत्तथा न तदन्यथा ॥
उक्ता वः पितरोऽस्माकमिति वै तनयाः स्म वः ।
पितरस्ते भविष्यन्ति तेभ्योऽयं दीयतां वरः ॥
यूयं शरीरकर्त्तारस्तेषां देवा भविष्यथ ।
ते तु ज्ञानप्रदातारः पितरो वै न संशयः ॥
तेनैव वचसा पूर्व्वं ब्रह्मणः परमेष्ठिनः ।
पुत्राः पितृत्वमापन्नाः पुत्रत्वं पितरः पुनः ।
अन्योन्यं पितरो ह्येते देवाश्च पितरश्च वै ॥

वायुपुराणे ।

इत्येते पितरो ह्येते देवाश्च पितरश्च वै ।
ऋतार्त्तवाः स्वमेकात्तु अन्योन्यं पितरः स्मृताः ॥

अत्र वाराहादिपुराणेषु मरीच्यादीनां ऋषीणां पुत्राः पितर इति दृश्यन्ते । ब्रह्मवैवर्त्तादिषु पुनः देवानां पुत्राः पितर इति ।

(१) शंसुरित्ययं प्रयोग आर्षः ।

तत्र ब्रह्मवैवर्त्तादिषु दिव्यन्तीति देवा इति व्युत्पत्त्या देवशब्देन मरीच्यादय एवोक्ता इति भवितुमर्हतीतिवाराहपुराणेन सह सादृश्यादेकत्वस्य प्रत्यभिज्ञानात् । तथा ब्रह्मवैवर्त्त एव लोकसृष्टिपूर्व्वकमेतेषां पितृशब्दप्रवृत्तौ कारणान्तरमुक्तम् ।

घोरान्तरीक्षं पृथिवी नक्षत्राणि दिशस्तथा ।
सूर्य्याचन्द्रमसौ चैव तथाहोरात्रमेव च ॥
न बभूव तथा तत्र तमोभूतमिदं जगत् ।
ब्रह्मैको दुश्चरं तत्र चचार परमं तपः ॥
सर्व्वेषां तपसां श्रेष्ठं यमाहुर्य्योगमुत्तमम् ।
योगमन्विच्छता सृष्टा ब्रह्मणा योगचक्षुषा ॥
लोकाः सन्तानका नाम यत्र तिष्ठन्ति भास्कराः[१] ।
वैराजा इति विख्याता देवानां दिवि देवताः ॥
तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।
उपरिष्टात् त्रयस्तेषां वर्त्तन्ते च त्रिमूर्त्तयः ॥
ततो देवास्ततो भूमिरेवं लोकपरम्परा ।
वर्त्तन्ते ये तु लोकेऽस्मिन् तेभ्यः पर्जन्यसम्भवाः ॥
वृष्टिर्भवति वै वृष्ट्या लोकानां सम्भवः स्मृतः ।
ऊचुस्ते वै पितॄंस्तस्माल्लोकानां लोकसत्तमाः ॥

अथ ब्रह्मशरीरात् पितॄणां व्यवधानेनैवोत्पत्तिः ।

कालिकापुराणे ।

अव्यक्तजन्मनः पुत्रा ये मरीच्यादयः स्मृताः ।

---

(१) ते सुरा इति ग० ।

तेषां पितृगणा मुख्या जातास्तेभ्यश्च देवताः ॥
देवेभ्यश्च जगत्सर्व्वं त्रैलोक्यं सचराचरम्।
विद्धि तत्त्वं परं वत्स ऋषीणां पितरः सुताः ॥

तत्र या ब्रह्मशरीरात् पितृणां साक्षादुत्पत्तिः पुराणेषु दृश्यते, सा मरीच्यादीनां पितृत्वमपेक्ष्य, या तु ब्रह्मशरीराव्यवधानेन सा मरीच्यादिपुत्राणां पितृत्वमपेक्ष्येति विवेक्तव्यम्। अतो न विरोधः। एवञ्च सति मरीच्यादीणां ये पुत्रास्ते पितरः, मरीच्यादयः पितामहाः, ब्रह्मा प्रपितामह इति गम्यते। यश्च ब्रह्मा स प्रजापतिशब्दवाच्यः संवत्सरः प्रपितामहः। मरीच्यादयश्च ऋतवः पितामहाः। मासाश्चार्त्तवाः पितर इति न कश्चित् विरोधः पुराणानाम्।

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः।
तेषामृषीणां सर्व्वेषां पुत्राः पितृगणाः स्मृताः ॥

इति मनुवाक्ये यन्मरीच्यादीनामपि ब्रह्मशरीराव्यवधानेन जन्मोक्तं तदपि कल्पभेदेन सृष्टिभेदादुपपन्नम्। अथैतेषां पितृणां नामरूपादिभेदाः।

तत्र विष्णुधर्म्मोत्तरे।

पितृणां हि गणाः सप्त नामतस्तु निबोध मे।
सुभास्वरा वर्हिषद अग्निष्वात्तास्तथैव च ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः।
मूर्त्तिहीनास्त्रयश्चैषां चत्वारश्च समूर्त्तयः ॥
सुभास्वरा वर्हिषद अग्निष्वात्तास्तथैव च।
त्रयो मूर्त्तिविहीनास्ते राजन् पितृगणाः स्मृताः ॥

क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः ।
मूर्त्तिमन्तः पितृगणाश्चत्वारः परिकीर्तिताः ॥
ब्रह्मवैवर्त्तब्रह्माण्डपुराणयोः ।
तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।
अमूर्त्तयस्त्रयस्तेषां चत्वारश्च समूर्त्तयः ॥
उपरिष्टाच्च ये तेषां वर्त्तन्ते ते अमूर्त्तयः ।
तेषामधस्ताद्वर्त्तन्ते चत्वारः सूक्ष्ममूर्त्तयः ॥

अतएव छन्दोगानामपि पितृकन्या सूक्ष्मान्पितॄनपश्यत् । तदप्युक्तं ब्रह्माण्डपुराणादिषु ।

सा तेन व्यभिचारेण मनसा कामरूपिणी ।
पितरं प्रार्थयित्वान्यं योगभ्रष्टा पपात ह ॥
त्रीण्यपश्यद्विमानानि पतन्ती सा दिवश्च्युता ।
त्रसरेणुप्रमाणानि तेष्वपश्यच्च तान् पितॄन् ।
सुसूक्ष्मानपरिव्यक्तानग्नीनग्निष्विवाहितान् ॥
निगमे ।
ये हतास्तत्र संग्रामे पितरस्ते त्रिधाभवन् ।
यद्धुतं पितृयज्ञेषु तेषां गच्छति तद्धविः ॥

तत्रेति वृत्रसंग्रामे ये हता देवास्ते पितरोऽभवन् । त्रिधेति प्ररुद्धमन्तशिशिरा इति । एतएव सोमवन्तो वर्हिषदोऽग्निष्वात्ताश्च ।

तथा च शतपथश्रुतिः ।

महाहविषा ह वै देवा वृत्रं जघ्नुः । तेनोऽएव व्यजयन्त येयमेषां विजितिस्तामथ यानेवैषां तस्मिन्त्संग्रामेऽघ्नंस्तान्पितृयज्ञेन समैरयन्त

पितरो वै तऽआसंस्तस्मात्पितृयज्ञो नाम ॥ तद्वसन्तो ग्रीष्मो वर्षाः। एते ते ये व्यजयन्त शरद्धेमन्तः शिशिरस्तऽउ ते यान्पुनः समैरयन्त ॥ तद्ये सोमेनेजानाः। ते पितरः सोमवन्तोऽथ ये दत्तेन पक्केन लोकं जयन्ति ते पितरो बर्हिषदोऽथ ये ततो नान्यतरच्चन यानग्निरेव दहन्त्स्वदयति ते पितरोऽग्निष्वात्ता एतऽउ ते ये पितरः ॥

ब्रह्मपुराणे।

अमूर्त्ता मूर्त्तिमन्तश्च पितरो द्विविधा स्मृताः ।
नान्दीमुखास्त्वमूर्त्तास्तु मूर्त्तिमन्तोऽथ पार्व्वणाः ।
एकोद्दिष्टाशिनः प्रेताः पितृणां निर्णयस्त्रिधा ॥

वाराहपुराणे पितृसृष्टिमुक्त्वोक्तम् ।

तान् दृष्ट्वा प्राह स ब्रह्मा तिर्य्यक्संस्थानधोमुखान् ।
भवन्तः पितरः सन्तु सर्व्वेषां गृहमेधिनाम् ।
ऊर्द्धवक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ॥

नन्दिपुराणे ।

निर्म्मिताः पितरो नाम पञ्च वै देवयोनयः ।
ब्रह्मणा तपसा वत्स अर्थज्ञाः शुद्धमूर्त्तयः ॥
अग्निष्वात्ता बर्हिषदः काव्याश्चापि सुकालिनः ।
यामाश्च योनयो ह्येते पञ्चोक्ताः पितृयाजिनाम् ॥

नागरखण्डे ।

अग्निष्वात्ता बर्हिषद आज्यपाः सोमपाः स्मृताः ।
रश्मिपा उपहूताश्च तथैवायन्तु नः परे ॥
तथा स्वादुषदश्चान्ये स्मृता नान्दीमुखा नृप ।

एते पितृगणाः ख्यातास्ते च देवसमुद्भवाः ॥
आदित्या वसवो रुद्रा नासत्यावश्विनावपि ।
सन्तर्पयन्ति ते चैतान् मुक्त्वा नान्दीमुखान् पितॄन् ॥

हारीतस्मृतौ ।

सोमो यमोऽङ्गिराश्चैव सोमपाः पितरस्तथा ।
वर्हिषदोऽग्निष्वात्ताश्च ऋतादः षड्विधो गणः ॥
चन्द्रमा ऋतवश्चैव मृतं योऽग्निर्दहत्यपि ।
सोमोपहूताः प्राक्सोमा अनीजानाश्च ब्राह्मणाः ॥

एवमुक्ता नामतो रूपतश्च देवपितॄणां भेदाः, सन्ति मनुष्यपितॄणामपि भेदाः, त इदानीमुच्यन्ते ।

वायुपुराणे ।

अतः पितॄन् प्रवक्ष्यामि मासश्राद्धभुजस्तु ये ।
देवानां पितरो देवाः पितरो लौकिकास्तथा ॥
देवाः सौम्याश्च यज्वानो ह्ययज्वानो ह्ययोनिजाः ।
देवास्ते पितरः सर्व्वे देवांस्तान् भावयन्त्युत ॥
मनुष्याः पितरश्चैव तेभ्योऽन्ये लौकिकाः स्मृताः ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
यज्वानो ये तु सोमेन सोमवन्तस्तु ये स्मृताः ।
ये यज्वानः स्मृतास्तेषां ते वै वर्हिषदः स्मृताः ॥
कर्म्मस्वेतेषु युक्ता ये भवन्त्यादेहसंप्लवात् ।
अग्निष्वात्ताः स्मृतास्तेषां होमिनोऽथाज्ययाजिनः ॥

तेषां ते धर्म्मसाधर्म्यात् स्मृता सा योज्यकैः द्विजैः ।
ये चाप्याश्रमधर्म्माणः प्रस्थानेषु व्यवस्थिताः ॥
अन्ते च नावसीदन्ति श्राद्धयुक्तेन कर्म्मणा ।
ब्रह्मचर्य्येण तपसा यज्ञेन प्रजया च वै ।
श्रद्धया प्रज्ञया चैव प्रदानेन च सप्तधा ॥
कर्म्मस्वेतेषु ये युक्ता भवन्त्यादेहपातनात् ।
देवैस्तैः पितृभिः सार्द्धं सूक्ष्मैर्वै सोमपाज्यपैः ।
स्वर्गता दिवि मोदन्ते पितॄन् ये समुपासते ॥
प्रजावतां प्रशंसैषा स्मृता श्राद्धक्रियावताम् ।
तेषां निर्व्वाणकपदं तत्कुलीनैश्च बान्धवैः ॥
मासश्राद्धभुजस्तृप्तिं लभन्ते सोमलौकिकाः ।
एते मनुष्यपितरो मासश्राद्धभुजस्तु ते ॥

उक्ताः सत्कर्म्मभिर्द्दैवपितृसाम्यं प्राप्ता मनुष्यपितरः । अथ दुष्कर्म्मभिरधोगतिं प्राप्ता मनुष्यपितरोऽभिधीयन्ते ।

तेभ्योऽपरे तु येऽप्यन्ये सङ्कीर्णाः कर्म्मयोनिषु ।
भ्रष्टाश्चाश्रमधर्म्मेभ्यः स्वधास्वाहाविवर्जिताः ॥
भिन्नदेहा दुरात्मानः प्रेतभूता यमक्षये ।
स्वकर्म्माण्येव शोचन्ति यातनास्थानमागताः ॥
दीर्घायुषोऽतिशुष्काश्च श्मश्रुलाश्च विवाससः ।
क्षुत्पिपासापरीताश्च विद्रवन्ति ततस्ततः ॥
सरित्सरस्तड़ागानि वापीश्चैवाभिलिप्सवः ।
परान्नानि च लिप्सन्ते काममानास्ततस्ततः ॥

स्थानेषु पच्यमानाश्च[१] यातनानिरयेषु वै ।
शाल्मलौ वैतरण्याश्च कुम्भीपाकेषु तेषु च ॥
करम्भवालुकायाश्च असिपत्रवनेषु च ।
शिलासम्पेषणे चैव पात्यमानाः स्वकर्मभिः ।
तत्र स्थानानि तेषां वै दुःखितानामनेकशः ॥

उक्ता नरकस्था मनुष्यपितरः अथ भूमिस्थाः ।

अप्राप्ता यातनास्थानं भ्रष्टा ये भुवि पञ्चधा ।
पश्चात्तु ये स्थावरान्ते भूतानां केषु कर्मसु ॥
नानारूपासु जाता ये तिर्य्यग्योन्यादिजातिषु ।
वाह्लीकास्तेऽथपास्तैव दिवाकीर्त्त्यांश्च ते स्मृताः ।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ॥

नागरखण्डेऽपि ।

अथ ये पितरो मर्त्त्या निवसन्ति त्रिपिष्टपे ।
द्विविधास्ते प्रदृश्यन्ते सुखिनोऽसुखिनः परे ॥
येभ्यः श्राद्धानि यच्छन्ति मर्त्त्यलोके स्ववंशजाः ।
ते सर्व्वे तत्र संहृष्टा देववन्मुदिताः स्थिताः ॥
येषां प्रयच्छते नैव किञ्चित्कश्चित् स्ववंशजः ।
क्षुत्पिपासाकुलास्ते च दृश्यन्ते ते च दुःखिताः ॥

मनुस्मृतौ ।

य एते तु गणा मुख्याः पितॄणां परिकीर्त्तिताः ।
तेषामपीह विज्ञेयं पुत्रपौत्रमनन्तकम् ॥

---

(१) याचमानाश्चेति ग० ।

वाराहपुराणे ।

एष ते पैतृकः सर्ग उद्देशेन महामुने ।
कथितो नान्त एवास्य वर्षकोट्या हि दृश्यते ॥

याज्ञवल्क्यस्मृतौ ।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवता इति ॥

अथ गुह्याः पितर उच्यन्ते नन्दिपुराणे। अग्निष्वात्तादीन् पितृभेदानभिधाय महेश्वरेणोक्तम् ।

अथामराश्च पितरो गुह्याः शृणु नरोत्तम ।
विष्णुः पितास्य जगतो दिव्यो यज्ञः स एव च ।
ब्रह्मा पितामहो ज्ञेयो ह्यहश्च प्रपितामह इति ॥

एते ब्रह्मविष्णुमहेश्वरा अपि पितरः विश्वसृष्टिहेतुत्वात् । पितृपितामहाद्यधिष्ठानभूताग्निष्वात्ताद्यधिष्ठातृत्वेन श्राद्धे पितरो देवतारूपास्तद्रूपेणानुसन्धीयमानाः श्राद्धस्य कामपूर्व्वामैहिकामुष्मिकफलोत्पादिकां शक्तिं जनयन्तीति सर्व्वेषु श्राद्धकल्पेषु गोपितत्वेन श्राद्धोपदेशोपनिषन्निरूप्या, अग्निष्वात्तादिवत् पितृत्वेनाप्रसिद्धाश्चेति गुह्याः अपूर्व्वां शक्तिं जनयन्तीत्येतदेव दर्शितम् ।

उद्दिश्य विष्णुर्यैरिष्टः पितरस्तैस्तु तर्पिताः ।
ब्रह्मा समिष्टः प्रीणाति पुंसः सर्व्वान् पितामहान् ॥
प्रपितामहानुद्दिश्य लिष्टोऽहं यैर्महात्मभिः ।
न यान्ति नरके घोरे तेषां वै प्रपितामहाः ॥
लोकानि दिव्यानि मनोरमाणि

प्रयान्ति सर्व्वे प्रसभं गणेश ।
पिता च तेषान्तु पितामहश्च
तथा च तेषां प्रपितामहश्च ॥
ये वैष्णवज्ञानविदोऽर्च्चयन्ति
विष्णुं समभ्यर्च्च्य तु सर्व्वभावैः ।
भजन्ति तेषां पितरस्तु तुष्टिम् ।
निकृष्टजातीश्च परित्यजन्ति ॥

वाराहपुराणे पितॄन् प्रति वराहवचनम् ।

यमोऽधिदेवो भवतां सौम्यः स्वाध्यात्म ईरितः ।
अधियज्ञस्ततस्त्वग्निर्भवतां कल्पना त्वियम् ॥
अग्निर्वायुश्च सूर्य्यश्च स्थानञ्च भवतामिति ।
ब्रह्मा विष्णुश्च रुद्रश्च भवतामधिपूरुषाः ॥
आदित्या वसवो रुद्रा भवतां मूर्त्तयस्त्विमेः ।
योगिनो योगदेहाश्च योगाधाराश्च सुव्रताः ।
कामतो विचरिष्यध्वं फलदाः सर्व्वजन्तुषु ॥

महाभारते वराहरूपेण विष्णुना जलनिमग्नां धरणीमुद्धृत्य दंष्ट्राविलग्नान् मृत्पिण्डान् पितृत्वेन कल्पयित्वा तानभ्यर्च्च्योक्तम् ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ॥
नास्ति मत्तोऽधिकः कश्चित्को वाभ्यर्च्च्यो मया स्वयम् ।
को वा मम पिता लोके अहमेव पितामहः ।
पितुः पितामहश्चैव अहमेवात्र कारणम् ॥

विष्णुधर्म्मोत्तरे ।

पितृपैतामहः पिण्डो वासुदेवः प्रकीर्त्तितः ।
पैतामहस्य निर्द्दिष्टस्तथा सङ्कर्षणः प्रभुः ॥
पितृपिण्डस्य विज्ञेयः प्रद्युम्नश्चापराजितः ।
आत्मानिरुद्धो विज्ञेयः पिण्डनिर्व्वपणे बुधैः ।
श्राद्धं कर्त्तुं कथं शक्यं विना वैष्णवतेजसा ॥

भविष्यपुराणे ।

अनिरुद्धः स्वयं देवः प्रद्युम्नस्तु पिता स्मृतः ।
सङ्कर्षणस्तज्जनको वासुदेवस्तु तत्पिता ॥

स्वयं श्राद्धकर्त्ता अनिरुद्धो देवः । श्राद्धकर्त्तुः पिता प्रद्युम्नः । तज्जनकः श्राद्धकर्तृपितृजनकः सङ्कर्षणः । तत्पिता श्राद्धकर्तृपितृजनकपिता वासुदेवः स्मृत इत्यर्थः ।

स्मृतिषु पिण्डानां वरुणादिरूपत्वमुक्तम् ।

प्रथमो वरुणो देवः प्राजापत्यस्तथापरः ।
तृतीयोऽग्निः स्मृतः पिण्ड एष पिण्डविधिः स्मृत इति ॥

अथास्मिन् प्रकरणे पूर्व्वमुद्दिष्टानां सुभास्वरवर्हिषदाग्निष्वात्तादीनां लोकजनकोपासनभेदाः ।

विष्णुधर्म्मोत्तरे ।

सुभास्वरा ब्रह्मसुताः सोममाप्याययन्ति ते ।
ब्रह्मलोकचरा राजन्नित्यं मूर्त्तिविवर्जिताः ॥
तथा वर्हिषदो राजन् स्मृताः पुत्रा मरीचिनः ।

आप्याययन्ति ते देवलोके तिष्ठन्ति पूजिताः[१] ॥
विभ्राजलोके तिष्ठन्ति अग्निष्वात्ता नराधिप ।
पुलस्त्यस्य ऋषेः पुत्रा भावयन्ति जनानिमे ॥
क्रव्यादाश्चोपहूतास्च आज्यपाश्च सुकालिनः ।
कवेरङ्गिरसश्चैव कर्द्दमस्य प्रजापतेः ।
वशिष्ठस्य तथा पुत्राः क्रमेणैते प्रकीर्त्तिताः ॥
ज्योतिर्भासाः स्मृताः लोका ये च लोका मरीचिनः ।
तेजस्विनो मानसाश्च क्रमेणैषां प्रकीर्त्तिताः ॥

मात्स्यपाद्मादिषु ।

अमूर्त्तयः पितृगणा वैराजस्य प्रजापतेः ।
यजन्ति यान् देवगणा वैराजा इति विश्रुताः ॥
लोकाः सोमपथा नाम यत्र मारीचनन्दनाः ।
वर्त्तन्ते देवपितरो यान् देवा भावयन्त्यलम् ॥
अग्निष्वात्ता इति ख्याता यज्वानो यत्र संस्थिताः ।
यत्र वैभ्राजनामानो दिवि सन्ति सुवर्चसः ।
लोका वर्हिषदो यत्र पितरः सन्ति सुव्रताः ।
यत्र वर्हिणयुक्तानि विमानानि सहस्रशः ॥
सङ्कल्पा वर्हिषो यत्र तिष्ठन्ति फलदायिनः ।
यत्राभ्युदयशालासु मोदन्ते श्राद्धदायिनः ॥
यांश्च देवासुरगणाः[२] गन्धर्व्वाप्सरसाङ्गणाः ।

(१) सोमपदे स्थिता इति ग० ।
(२) यान् दानवाः सुरगणा इति ख० ।

यत्तरक्षोगणाश्चैव यजन्ति दिवि देवताः ॥
पुलस्त्यपुत्राः शतशस्तपोयोगबलान्विताः[१] ।
अमूर्त्तिमन्तः पितरो वशिष्ठस्य सुकालिनः ॥
नाम्ना तु मानसाः सर्व्वे सर्व्वे ते[२] धर्म्ममूर्त्तयः ।
ज्योतिर्भासेषु लोकेषु ये वसन्ति दिवं परम् ॥
विराजमानाः क्रीड़न्ति यत्र ते श्राद्धदायिनः ।
सर्व्वकामसमृद्धेषु विमानेष्वपि पादपाः ।
किं पुनः श्राद्धदा विप्रा भक्तिमन्तः क्रियान्विताः ॥
मरीचिगर्भा नाम्ना तु लोका मार्त्तण्डमण्डले ।
पितरो यत्र तिष्ठन्ति हविश्मन्तोऽङ्गिरस्सुताः ।
तीर्थश्राद्धप्रदा यान्ति यत्र क्षत्रियसत्तमाः ॥
राज्ञान्तु पितरस्ते वै स्वर्गमोक्षफलप्रदाः ।
सुस्वधा नाम पितरो यत्र तिष्ठन्ति ते सुताः ॥
आज्यपा नाम लोकेषु कर्द्दमस्य[३] प्रजापतेः ।
पुलहाङ्गजदायादा वैश्यास्तान् भावयन्ति च ॥
यत्र श्राद्धकृतः सर्व्वे पश्यन्ति युगपद्गतान् ।
पितृ-मातृ-स्वसृ-भ्रातृ-सखि-सम्बन्धि-बान्धवान् ।
अपि जन्मायुतैर्दानहेतुभूतान् सहस्रशः ॥
लोकास्तु मानसा नाम ब्रह्माण्डोपरिसंस्थिताः ।

---

(१) तपोयोगसमन्विता इति ग० ।
(२) सर्व्वे च इति ग० ।
(३) कल्माषस्येति ग० ।

सोमपा नाम पितरो यत्र तिष्ठन्ति शाश्वताः ॥
धर्ममूर्त्तिधराः सर्व्वे पितरो ब्रह्मणः सुताः ।
उत्पन्नाः स्वधया ये तु ब्रह्मत्वं प्राप्य योगिनः ॥
कृत्वा सृष्ट्यादिकं सर्व्वं मानसे संप्रतिष्ठिताः ।

ब्रह्माण्डपुराणे ।

लोकाः सनातना नाम[१] यत्र तिष्ठन्ति भास्वराः[२] ॥
अमूर्त्तयः पितृगणास्ते वै पुत्राः प्रजापतेः ।
विराजस्य प्रजाः श्रेष्ठा वैराजा इति विश्रुताः ॥
लोकाः सोमपथा नाम यत्र पूर्व्वं मरीचिनः ।
पितरस्तत्र वर्त्तन्ते देवास्तान् भावयन्त्युत ॥
बर्हिषदस्तु विख्याताः पितरः सोमपायिनः ।
विभ्राजमाना लोकास्ते दिवि भान्ति सुदर्शिताः ॥
अग्निष्वात्ताः स्मृतास्तत्र पितरो ये परिश्रुताः ।
तान्दानवगणा यक्षा रक्षोगन्धर्व्वकिन्नराः ।
नागाः सर्पाः सुपर्णाश्च भावयन्त्यमितौजसः ॥
एते पुत्राः स्मृता ब्रह्मण् पुलस्त्यस्य प्रजापतेः ।
भूय एते गणाः प्रोक्ता धर्ममूर्त्तिधराः स्मृताः ॥
उत्पन्ना ये स्वधायान्तु काव्या ह्यग्नेः कवेः सुताः ।
पितरो देवलोकेषु ज्योतिर्भासेषु भास्कराः ॥
सर्व्वकामसमृद्धेषु द्विजास्तान् भावयन्त्युत ।

(१) सन्तानकामाय इति ग० ।
(२) भास्वरा इति ख० ।

मरीचिगर्भास्ते लोकान् समाश्रित्य दिवि स्थिताः ॥
एते ह्यङ्गिरसः पुत्राः साध्यैः संवर्द्धिताः पुरा ।
उपहूताः स्मृतास्ते वै पितरो भास्करा दिवि ।
तान् क्षत्रियगणा दृष्ट्वा भावयन्ति फलार्थिनः ॥
आज्यपा नाम पितरः कर्द्दमस्य प्रजापतेः ।
समुत्पन्नस्य पुलहादुत्पन्नाः कर्द्दमस्य ते ॥
तेजस्विनोऽपि वर्त्तन्ते कामगेषु विहङ्गमाः ।
एतान् वैश्यगणाः श्राद्धे भावयन्ति फलार्थिनः ॥
सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः ।
हिरण्यगर्भस्य सुताः शूद्रास्तान् भावयन्त्युत ।
मानसा नाम ते लोका वर्त्तन्ते यत्र ते दिवि ॥

मनुस्मृतौ ।

विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः ।
अग्निष्वात्ताश्च देवानां मारीच्या लोकविश्रुताः ॥
दैत्यदानवयक्षाणां गन्धर्व्वोरगरक्षसाम् ।
सुपर्णकिन्नराणाञ्च स्मृता वर्हिषदोऽत्रिजाः ॥
सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यानामाज्यपा नाम शूद्राणान्तु सुकालिनः ॥
सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरःसुताः ।
पुलस्त्यस्याज्यपाः पुत्रा वसिष्ठस्य सुकालिनः ॥
अनग्निदग्धाग्निदग्धान्(१) काव्यान् वर्हिषदस्तथा ।

(१) अग्निदग्धानग्निदग्धानिति — मनुः १९९ श्लोकः, ३य अ० ।

अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्द्दिशेत् ॥

अस्य वाक्यस्य मनुभाष्यकृता व्याख्योच्यते ।

विराट्सुताः विराजः सुताः सोमसदो नाम, ते च साध्यानां देवविशेषाणां पितरस्तेषां पूज्याः । अनेनैतत् सूच्यते ईदृशमिदं पित्र्यं कर्म्मावश्यं कर्त्तव्यम्, यत्तत्कृत्यैरपि साध्यनामकैर्द्देवैः क्रियत इति। अग्निष्वात्तास्तु देवानां अग्नौ पक्वं चरुपुरोडाशादि स्वदन्ते इत्यग्निष्वात्ताः, देवानामिन्द्राग्न्यादीनां पितरस्तेषां पूज्याः । अनेनावश्यकर्त्तव्यता सूच्यते । एवमुत्तरत्रापि वेदितव्यम् ।

दैत्यदानवयक्षाणां वर्हिषदो नाम पितरः, अत्रेर्जाता अत्रिजाः। सुपर्णाः पक्षिणः, किन्नराः अश्वमुखाः, एतेषां तिरश्चामपि पितरोऽर्चनीयाः, किमुत कर्माधिकारिणां मनुष्याणामिति श्राद्धस्यावश्यकर्त्तव्यतैव सूचिता ।

सोमपा नामेत्यादि। सोमं पिवन्तीति सोमपाः, ज्योतिष्टोमादिदेवताः इन्द्रवाय्वाद्याः । हविर्भुजः पुरोडाशादिभुजो दर्शपूर्णमासादिदेवताः । आज्यपा आघाराज्यभागादिदेवताः । सुकालिनः कालयन्ति अपवर्जयन्ति समापयन्ति कर्म्मेति सुकालिनः कर्मापवर्गहोमादिदेवताः, अयाश्चाग्नेस्यनभिशस्तिपाश्चेत्यादिविहिताः ।

सोमपास्तु कवेरित्यादि। हविर्भुज एव हविष्मन्तः ।

अनग्निदग्धेत्यादि। अनग्निदग्धः सोमः न ह्यग्निनास्य पाकोऽस्ति, तेन या देवता इज्यन्ते ता अपि तत्सम्बन्धेनानग्निदग्धा इत्युच्यन्ते। एवमग्निदग्धा इत्यग्निना पच्यमानपुरोडाशादिहविःसम्बन्धिन्यः, अत्रैवमभिसम्बन्धः क्रियते। येऽग्निदग्धा उच्यन्ते तानग्निष्वात्तानिति

विनिर्द्दिशेत्। ये अनग्निदग्धाः तान् सौम्यान् सोमपानेव विनिर्द्दिशेत्। एवं काव्यान् बर्हिषद इति। कवेः पुत्राः काव्याः। तेन सोमपास्तु कवेः पुत्रा इत्युक्ताः। बर्हिषदोऽत्रिजा उक्ताः। नायमेवकारो यथादेशं द्रष्टव्यः। यथादेशत्वे ह्ययमर्थः स्यात्। विप्राणामेवैते पितरो न क्षत्रियादीनां। तच्च प्रागुक्तेन विरुध्यते। न चैते वर्णभेदेन पितृत्वेनोक्ताः, येन तत आच्छिद्य ब्राह्मणसम्बन्धितैषामुच्येत। तस्मादपक्षष्येवकारः सम्बन्धनीयः, अग्निष्वात्तानेव सौम्यानेवेति। विप्रग्रहणमनुवादत्वात् क्षत्रियादिप्रदर्शनार्थं।

एवंनामानश्च पितरो वेदे श्रूयन्ते। अग्निष्वात्ताः पितरो(१) ये अग्निदग्धा येऽनग्निदग्धा इति(२)। तान्मन्त्रान्नानाप्रकारेण सुहृद्भूत्वा विवृतवानिति ज्ञेयम्। अथवा विप्राणां निर्द्दिशेदिति न शब्दभेदेनार्थभेदाशङ्का कर्त्तव्या, विप्रग्रहणमपि क्षत्रियाद्युपलक्षणार्थम्। प्रधाने अनग्निदग्धा अग्निदग्धा बर्हिषदः सौम्याश्च पितरः सोमपाग्निष्वात्तेभ्यः पितरोऽन्य एव। ते चैते अनग्निदग्धादयः सौम्यान्ताश्चतुर्विधाः, कविपुत्राः सोमपा मरीचिपुत्रा अग्निष्वात्ताश्चेति द्विविधाः, एते षड्विधा अपि पितरः। न च वक्तव्यं सौम्या बर्हिषदोऽग्निष्वात्ताश्च साध्यादीनामपि पितर इति कृत्वा विप्राणामेव विरुध्यत इति। वर्णेषु मध्ये विप्राणामेवेति विवक्षितत्वेनाविरोधात्। न च वर्णोत्तमाभ्यनुज्ञातः शूद्रः सर्व्वान् पितॄन् यजेदिति वाराहपुराणोक्तेन सह विरोधः। अत्र हि विप्राभ्यनुज्ञया शूद्रस्य सर्व्वे विहिताः, न तु स्वतः।

(१) यजुः मा वा. १९. ५९। ऋ १०. १५. ११.।
(२) ऋ १०. १५. १४.। येऽग्निष्वात्ता येऽनग्निष्वात्ता इति यजुर्व्वेदे पाठभेदः।

विप्राणामेवेति तु स्वतो विवक्षितमित्यविरोधः। न च कविपुत्राणां सोमपानां विप्रसम्बन्धस्य पूर्वमेवोक्तत्वात् पौनरुक्त्यम्। एतावन्तो द्विजानामेवेति समुदायसम्बन्धस्य विवक्षितत्वाददोषः। वाराहपुराणे ब्राह्मणान् प्रतीत्थं व्यवस्थावाक्यमुक्तम् ।

ऊर्द्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः ।
वृद्धिश्राद्धेषु सततं पूज्याः श्रुतिविधानतः ॥
अग्निः पुरस्कृतो येस्तु तान् द्विजास्त्वग्निहोत्रिणः ।
नित्यैर्नैमित्तिकैः काम्यैः पार्वणैस्तर्पयन्तु तान् ।
आज्यं पिबन्ति ये चात्र तानर्चन्ति विप्राः सदा ॥

अग्निहोत्रिण इति। एवं क्षत्रियवैश्यैरपि सम्बध्यते। एवञ्च साग्निकानां त्रैवर्णिकानां पितृभागमभिधायानग्निकानामप्याह ।

अनाहिताग्नयो ये च ब्रह्मक्षत्रविशो जनाः ।
सुकालिनस्तेऽर्चयन्तु लोकाग्निषु रताः सदा ।
इत्येवं पूजिता यूयमिष्टान् कामान् प्रयच्छथ ॥

तथा वाराहपुराण एव ।

अनेकधा हि पितरः(१) वर्त्तन्ते द्विजसत्तम(२) ।
भूर्लोकवासिनां याज्या भुवर्लोकनिवासिनः ॥
वस्वाद्यास्तु ततस्तेषां याज्याः स्वर्गनिवासिनः ।
ब्रह्मपुत्रा मरीच्याद्यास्तेषां याज्या महर्गताः ॥
कल्पवासिन इत्युक्तास्तेषामपि जनस्थिताः ।
सनकाद्यास्ततस्तेषां वैराजास्तपसि स्थिताः ॥

---

(१) एते त एकतनव इति क० ।
(२) द्विजसत्तमा इति ग० ।

तेषां सत्यगणा उक्ताः इत्येषां पितृसन्ततिः ।
सप्तधा सप्तलोकेषु आदिमन्वन्तरक्रिया ॥
अन्येषां वसवः साध्या रुद्रादित्याश्विनावपि ।
मरुतः[१] सर्व्ववर्णानां साधारण्येन संस्थिताः ।
ऋषयश्च तदुत्पन्ना इति सप्तविधा गणाः ॥
तेषां कन्या तु सञ्जाता सोमपा पितृसन्ततिः ।
अग्निष्वात्तेति मारीची वैराजी वर्हिसंज्ञिता ॥
सुकाला नाम पितरो वशिष्ठस्य प्रजापतेः ।
तेऽपि याज्यास्त्रिभिर्व्वर्णैर्न शूद्रेण पृथक्श्रुतेः[२] ।
वर्णोत्तमाभ्यनुज्ञातः[३] शूद्रः सर्व्वान्पितॄन् यजेत् ॥

अस्यार्थः । सुकालिनस्तु शूद्राणामित्येवंविधेषु मन्वादिवचनेषु पृथक्श्रुतिदर्शनात् शूद्राणामेव सुकालिनः, सुकालिन एव शूद्राणामित्येवंविधो विशेषो न ग्रहीतव्यः। किन्तु ब्राह्मणादीनामपि सुकालिनः पितरो भवन्ति। अन्येऽपि शूद्राणां ब्राह्मणानुज्ञयेति ज्ञातव्यम्।

न तु सन्ति पृथक् तस्य पितरः शूद्रजातयः ।
मुक्ता स्वजनकान् ब्रह्मन् न तु दिव्येषु दृश्यते ।
विशेषः शास्त्रदृष्ट्या तु पुराणानां निदर्शनात् ॥

अस्यार्थः। न तु दिव्येषु पितृषु शूद्रत्वादिरूपो विशेषो दृश्यते। अतः शास्त्रेण दृश्यमानानां दिव्यपितॄणां विद्यते चेत् शूद्रत्वादिरूपो विशेषस्तर्हि शास्त्रेण दृश्येतेऽत्यर्थः। एवं ऋषिस्तुतैः शास्त्रैर्ज्ञात्वा याज्याः सम्भवाः।

(१) अग्रत इति ख० ।
(२) पृथक्कृतमिति ख० ।
(३) वर्णत्रयाभ्यनुज्ञात इति क० ।

स्वयं दृष्ट्वा स्मृतिं लब्ध्वा पुराणं ब्रह्मणो यतः।
परं निर्व्वाणमापन्नास्तेऽपि ज्ञानिन एव च॥
यक्षादीनां काश्यपाद्या वर्णानां ब्राह्मणादयः[१]।
अविशेषेण विज्ञेया गन्धर्व्वाद्या अपि ध्रुवम्॥
अग्निष्वात्ता ब्राह्मणानां पितरः परिकीर्त्तिताः।
राज्ञां वर्हिषदो नाम विशाङ्काव्याः प्रकीर्त्तिताः।
सुकालिनस्तु शूद्राणां व्यामा म्लेच्छान्तजादिषु॥

अथैतेषां माहात्म्यं ब्रह्मवैवर्त्तब्रह्माण्डयोः।

वैराजा इति विख्याता देवानां दिवि देवताः।
योगेन तपसा युक्ताः पितरश्च सदा प्रभो॥
आदिदेवा इति ख्याता महासत्त्वा महौजसः।
सर्व्वकामैः सदा पूज्या देवदानवमानवैः॥
मनोजवाः स्वधाभक्ताः सर्व्वकामपरिच्छदाः।
लोभमोहभयापेता निश्चिन्ताः कामवर्जिताः॥
एते योगपरिभ्रष्टाः प्राप्य लोकान् सुदर्शनान्।
दिव्याः पुण्या विपाप्मानो महान्तस्ते भवन्त्युत॥
ततो युगसहस्रान्ते जायन्ते ब्रह्मवादिनः।
प्रतिलभ्य पुनर्योगं मोक्षमिच्छन्त्यमूर्त्तयः॥
व्यक्ताव्यक्तं परित्यज्य महायोगबलेन च।
नश्यन्त्युल्केऽव गगने क्षणाद्विद्युत्प्रभेऽव च॥
उत्सृज्य देहजालानि महायोगबलेन च।

---

(१) वसवादय इति ग०।

निराख्योपाख्यतां यान्ति सरितः सागरं यथा ॥
क्रियया गुरुपूजाभिर्योगं कुर्व्वन्ति यततः ।
ताभिराप्याययन्त्येते पितरो योगवर्द्धनाः ॥
श्राद्धे पीत्वा पुनः सोमं पितरो योगमास्थिताः ।
आप्याययन्ति सोमेन त्रैलोक्यं येन जीवति ॥
श्राद्धैराप्यायितास्त्वेव पितरः सोममव्ययम् ।
आप्याययन्ति पुष्टार्थैर्वर्द्धयिष्यन्ति नित्यशः ॥
श्राद्धैराप्यायितः सोमो लोकमाप्याययिष्यति ।
कृत्स्नं सपर्व्वतवनं जङ्गमाजङ्गमैर्वृतम् ॥
एवमाज्ञाकृतं सर्व्वं ब्रह्मणा परमेष्ठिना ।
ते तु ज्ञानप्रदातारः पितरो वै न संशयः ॥
पितॄणां हि बलं योगो योगात् सोमः प्रवर्त्तते ।

मनुस्मृतौ ।

अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः ।
न्यस्तशस्त्रा महाभागाः पितरः पूर्वदेवताः ॥

अथ पितॄणां मार्गः वाराहपुराणे ।

इत्युक्त्वा तांस्तदा ब्रह्मा तेषां पन्थानमादिशत् ।
दक्षिणायनसंज्ञन्तु पितृयानं पितामहः ॥

इति श्रीमहाराजाधिराजश्रीमहादेवस्य सकलश्रीकरणाधिपतिपण्डित-
श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे
पितृनिरूपणप्रकरणं नाम द्वितीयोऽध्यायः ।

---

# अथ तृतीयोऽध्यायः ।

## देवतानिर्णयप्रकरणम् ।

यस्यैता गुणरत्नहारलतिकाः कण्ठोपकण्ठे परां
शोभां कन्दलयन्ति दिव्यकविताभाम्राज्यभाजां भुवि ।
सोऽयं श्रीकरणेश्वरो वितनुते हेमाद्रिराद्यः सतां
श्राद्धे दैवतनिर्णयं विदलयन्नानाविधं संशयम् ॥

अथैतेषां श्राद्धे देवतात्वं निर्णीयते। तत्र तावदिदं सन्दिह्यते। किमेतान्यग्निष्वात्तादिप्रतिपादकानि वाक्यान्यर्थवादाः, उत विधयः। विधित्वेऽपि किं गृहीत्वा गोत्रनामनी श्राद्धं कुर्यादित्येवं विधिवाक्यैः सामान्यतो गोत्रेषु विहितेष्वग्निष्वात्तासोमपादिसंज्ञकगोत्रविशेषनियमविधयः। उत श्राद्धदेवतारूपेषु यजमानस्य पितृपितामहादिष्वग्निष्वात्ताद्यभेददृष्टिविधयः। उताग्निष्वात्तादीनां श्राद्धे देवतात्वस्य विधय इति। तत्र तावद्विधित्वासम्भवान्मेधातिथिरेषां वाक्यानामर्थवादत्वं मन्यते। तथाहि न तावदेते सोमपादयो गोत्रविधयः। यतो नामनिर्देशोऽयं न गोत्रनिर्देशः सोमपा नामेति श्रवणात्। गोत्रनामत्वेऽपि नामशब्द उपपद्यत एवेति चेत् एवं तर्हि गोत्रनिर्देशे वैयधिकरण्यं स्यात्। पितॄणां सोमपागोत्रमिति, न तु सामानाधिकरण्यं पितरः सोमपा इति। अथाभेदोपचारेण गोत्रेण सन्तानभेदव्यपदेशो दृष्टः यथा वत्समिन्दुरिति। अत्रोच्यते। इदमिह निरूप्यं। किमेतद्गोत्रं नामेति। विद्यावित्तशौर्य्यौदार्य्यादिगुणयोगाद्विख्याततमेन येन कुलं व्यपदिश्यते स कुलसंज्ञाकारी आदिमः पुरुषो गोत्रमिति। एवं हि सर्व्वेषामेव ब्राह्मणादीनाम-

वान्तरगोत्रभेदाः सन्ति । स्मरन्ति च तादृशं । तत्सन्तानजाः पुरुषा वयममुष्य कुले जाता इति । अतस्तेनैव व्यपदेशो युक्तः । न हि सोमपा वयमिति कश्चित् गोत्रत्वेन सोमपान् स्मरन्ति यथा भृगु-गर्गगालवान् । ब्राह्मणानाञ्च तैरेव गोत्रैर्व्यपदेशो युक्तः। तानि हि मुख्यानि गोत्राणि रूढ़िरूपेण हि तत्र गोत्रशब्दः प्रवर्त्तते । न हि तेषां गोत्रत्वे एतल्लक्षणम् । आदिमः पुरुषः संज्ञाकारी गोत्रमिति अनादित्वादेव गोत्राणां ब्राह्मणजातिवत् । न हि पराशरान्मुनेरूर्द्धं पराशरव्यपदेशः । एवं हि सत्यादिमत्ता वेदस्य प्रसज्यते । अतो नित्यत्वादेतस्य गोत्रव्यपदेशस्य श्राद्धतर्पणादौ तदेव गोत्रं श्रावयि-तव्यम् । न हि नित्ये सम्भवत्यनित्यस्योपादानं वैदिके कर्म्मणि युक्तम् । अतो ब्राह्मणैर्यथागोत्रं गर्गगोत्रायामुकशर्म्मणे इत्येवमुद्देशं कृत्वा श्राद्धादि कर्त्तव्यं। क्षत्रियादीनान्तु नैतादृशो गोत्रव्यवहारो विद्यते । न हि यथा ब्राह्मणा गोत्रं नियतं स्मरन्ति एवं क्षत्रियादयः । तस्मात्तेषां लौकिकमेव गोत्रमादिपुरुषः संज्ञाकारी ख्याततम इति । अतस्तेन गोत्रेण ते श्राद्धादौ व्यपदिश्यन्ते, न तु हविर्भुज इत्यादिगोत्रैः । आदिमत्तापि नामधेये नास्ति । ननु यद्येवं पुरुष-विशेषस्य गोत्रत्वमभ्युपगम्यते तर्हि क्षत्रियादिषु तावदशास्त्रीयं गोत्र-व्यवहारमुत्सृज्य शास्त्रस्थैरेव हविर्भुजादिभिर्गोत्रव्यवहारः प्रवर्त्तताम् । न हि । हविर्भुजादीनां गोत्रत्वे प्रमाणाभावात् । स्वायम्भुवेक्ष्वाकुन-ऋषनाभागभरतर्षभभगीरथादिवत्तेषां गोत्रत्वेनाप्रसिद्धेः । शिष्टापरि-ग्रहाच्च । तस्मान्न गोत्रविधयः । नापि श्राद्धदेवतारूपेषु यजमानस्य पितृपितामहादिष्वग्निष्वात्ताद्यभेददृष्टिविधयः । तदनुगुणानां श्रुति-

लिङ्गवाक्यादीनामदर्शनात् । न ह्यादित्यो ब्रह्मेत्युपासीतेतिवत् पित्रादिषु सोमपादिदृष्टिः कर्त्तव्येति दृश्यते । यदपि च मनुदेवलशातातपस्मृतिषु ।

वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः ।
प्रपितामहास्तथादित्याः श्रुतिरेषा पुरातनी[१] ॥

यदपि च मनुस्मृतौ ।

वसून् वदन्ति वै पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्त्वादित्यान् श्रुतिरेषा सनातनी ॥

यदपि नन्दिपुराणादिषु ।

विष्णुः पितास्य जगतो दिव्यो यज्ञेश एव च ।
ब्रह्मा पितामहो ज्ञेयो ह्यहञ्च प्रपितामह इति ॥

यद्प्यादित्यपुराणे ।

मासाश्च पितरो ज्ञेया ऋतवश्च पितामहाः ।
संवत्सरः प्रजानां वै सुमेकः प्रपितामहः ॥

इति वस्वादिविष्णादिमासादीनां पित्रादिभिः सहाभेदाभिधानं तदपि न वस्वादिदृष्टिः कर्त्तव्येत्येवंपरं। आदित्योयुप इतिवत् प्राशस्त्यपरतयाप्युपपत्तेः । न च सम्भवत्यर्थवादत्वे विधिकल्पना युक्ता । तदेवं प्रमाणाभावात् नाभेददृष्टिविधयः। नाप्यग्निष्वात्तादीनां श्राद्धदेवतात्वस्यापि विधयः।

यतः । स पुत्रः पितरं यस्तु जीवन्तमनुवर्त्तते ।
संस्थितं तर्पयेद्भक्त्या श्राद्धेन विविधेन च ॥

(१) सनातनीति ग० ।

इत्यादयः श्राद्धविधयो मृतमनुष्यतृप्त्यर्था एवेति मनुष्याणामेव देवतात्वमापादयन्ति, देवतैव हि त्यज्यमानेन हविषा तर्पणीया भवति। बहवश्च ते तृप्तिसमर्थनप्रकरणे प्रदर्शिताः श्लोकाः, ये मृतमनुष्याणां श्राद्धेषु तर्पणीयत्वं प्रतिपादयन्ति । अथैवं मन्यसे त्यज्यमानहविःप्रत्युद्देश्यत्वं देवतात्वं न तर्पणीयत्वं, तच्चतुर्थ्यादिप्रमाणकमिति। तदपि तर्हि मनुष्येषु विद्यत एव। पित्रे, पितामहाय, मात्रे, मातामहाय पिण्डान्निर्वपेदित्यादेर्वाक्यस्याधिकारप्रकरणे बहुशो दर्शनात्। तथाहि ब्रह्मपुराणादिषु ।

कुर्य्यान्मातामहायैव पुत्रिकातनयस्तथा।
द्व्यामुष्यायणसंज्ञास्तु मातामहपितामहान् ।
पूजयेयुर्यथान्यायं श्राद्धैर्नैमित्तिकैरपि॥

अत्र चतुर्थ्यभावेऽपि मृतमनुष्याणां श्राद्धैः पूज्यत्वं देवतात्वं विना न सम्भवतीति ।

इच्छन्ति पितरः पुत्रान्नरकापातभीरवः।
पितृभ्यो जातिहीनोऽपि तस्मात्कुर्य्यात् पितृक्रियामिति ॥

तथा तस्मै तस्मै य एषां प्रेताः स्युरिति गणगारिः। प्रेतेभ्य एव निपृणीयादिति तौल्वलिरिति। शतपथश्रुतौ च चतुर्थ्यन्तपितृपितामहादिलिङ्गकमन्त्राम्नानं दृश्यते। असावेतत्तऽ इत्येव यजमानस्य पित्रेऽसावेतत्तऽ इति पितामहायासावेतत्तऽ इति प्रपितामहायेति[१]। तथा एतत्तेऽन्नं ये च त्वामन्वित्येवमादिषु पिण्डादीनामवनेजनाभ्यञ्जनादिप्रतिपादकेषु मन्त्रेषु मृतमनुष्यप्रकाशनस्य दर्शनात्। नहि प्रयोगा-

(१) शतपथब्राह्मणे २ अ०, ४. २. १९.।

समवेतं मन्त्रं प्रकाश्यमिति युज्यते। न च मृतमनुष्याणां देवतात्व-मन्तरेण प्रयोगसमवायः सम्भवति। साक्षाच्च मृतमनुष्योद्देशविधिः श्राद्धेषु दृश्यते। तथाच विष्णुधर्म्मोत्तरे वाराहवचनम्।

अद्यप्रभृति लोकेषु प्रेतानुद्दिश्य वै पितॄन्।
ये तु श्राद्धं करिष्यन्ति तेषां पुष्टिर्भविष्यति॥

नागरखण्डे पितॄन् प्रति ब्रह्मवचनम्।

पितुः पितामहस्यैव तत्पितुश्च ततः परम्।
समुद्देशेन यद्दत्तं[१] ब्राह्मणेभ्यः प्रभक्तितः।
सर्व्वेषां स्यात्परा तृप्तिर्यावदाहूतसंप्लवम्॥

तथा सर्व्वेषु स्मृतिपुराणेषु श्राद्धीयहविः पितुः प्रत्युद्देश्य सगोत्रसम्बन्धनामानि यथावत्परिकीर्त्तयेदित्यादिना गोत्रादिसंकीर्त्तनविधिना मृतमनुष्याणां देवतात्वावगमात्। द्विपितुः पिण्डदानं स्यात्पिण्डे पिण्डे च नामनी इति। तथा ह्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथगिति बौधायननारदादिस्मृतिषु दर्शनाच्च। यदि द्विपितास्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदित्यापस्तम्बसूत्रे विधानाच्च। भार्य्यादिषु गोत्रविशेषोपदेशात्। तृप्तिव्युत्पादनप्रकरणे श्राद्धदेशं प्रति मृतमनुष्यागमनस्योक्तत्वात्।

अपि नः स्वकुले भूयाद्यो नो दद्यात्त्रयोदशीम्।
पायसं मधुसंयुक्तं वर्षासु च मघासु च॥

इत्यादि मृतमनुष्याणां स्वकुलोत्पन्नश्राद्धकर्तृपुरुषप्रार्थनादर्शनात्। श्राद्धदेवतारूपाणां प्रशंसाप्रकरणोक्तफलदातृत्वं मृतमनुष्येष्वसम्भावि-

(१) यो दत्ते इति ग०।

तच्चेन्मन्यसे, तन्न। देवभूयं गतेषु मनुष्येषु सम्भवात्। तदेवं मृतमनुष्याणां पित्रादीनां श्राद्धेषु देवतात्वमवगम्यमानमग्निष्वात्तादीनां देवतात्वं बोध्यत इति नाग्निष्वात्तादिप्रतिपादकानि वाक्यानि देवतात्वस्य विधयः। न च पित्रादिभिः सहाग्निष्वात्तादीनां विकल्पः सम्भवति। यतः पितृपितामहादिभ्यः श्राद्धं कुर्य्यात्, तथा पित्रे पितामहाय पिण्डान्निर्वपेत्, तथा अत ऊर्द्ध्वं पुत्रास्त्रिभ्यो दद्युरित्येवमादिषु श्राद्धोत्पत्तिविधिवाक्येषु पुत्रादिभिः कर्त्तव्यमिति श्रूयते पुत्रादिशब्दाश्च सम्बन्धिशब्दाः, अतः पित्रादीनामुत्पत्तिशिष्टत्वादग्निष्वात्तादीनां तत्र विधानासम्भवात्। न ह्युत्पत्तिशिष्टगुणावरुद्धे कर्म्मणि तद्विरुद्धं गुणान्तरं विधातुं शक्यम्। शुद्धानुवादे तदप्रत्यभिज्ञानात्। विशिष्टानुवादे गुणान्तरानुरक्तताविरोधात्। न च देवतान्तरविशिष्टं श्राद्धविध्यन्तरमेवेदमिति वाच्यम्। विहितविधानासम्भवात् कर्म्मान्तरत्वप्रसङ्गात्।

किञ्च अग्निष्वात्तादयः पितर उपचर्य्या इत्येतावदेव श्रूयते। उपचारशब्दार्थश्च न कश्चिद्दानयागादिवद्विभक्तः प्रतीयते। प्रायेण ह्ययं करोतिवत् सन्निहितक्रियापरतया प्रयुज्यते। सन्निहितञ्च श्राद्धम्। श्राद्धकर्तृसम्प्रदानकं विहितमशक्यं पुनर्विधातुम्। अविधेयत्वे च न सन्निधिरस्ति। असन्निहितस्य च नोपचारनिर्व्वाचकः। योऽपि लोके गुरुवदुपचर्य्य इत्यत्र प्रयोगेऽपि शुश्रूषालक्षणोऽर्थः पादधावनादिः प्रतीयते, सोऽपि गुरुसम्बन्धित्वेन प्रसिद्ध उपमार्थेन वतिना सन्निध्यर्थ एव। असन्निहितस्यापि पादधावनादेरुपचारस्य प्रतीतावतीन्द्रियेषु पितृषु तत्सम्पादनमशक्यमेव। अतो विधियोग्य-

भावार्थविशेषवाचकशब्दाभावात् विधानानुपपत्तेः । न च स्वतःसाध्यभावार्थानन्तर्भूतगुणमात्रविधिः सम्भवति । इति नाग्निष्वात्तादीनां पित्रादिभिः सह विकल्पेन समुच्चयेन वा देवतात्वम् । इतश्च न समुच्चयः । त्रिभ्य एव दद्यादिति संख्यानियमबाधापत्तेः । पित्रादीनामग्निष्वात्तादीनाञ्चैकस्मिन् प्रयोगेऽन्वयासम्भवात् । न चैवं वक्तव्यम् । ये विज्ञातपित्रादिनामकास्तत्कर्तृकश्राद्धे पित्रादीनां देवतात्वं, ये चाविज्ञातनामकास्तत्कर्तृके सोमपादीनां देवतात्वमिति व्यवस्थया देवतात्वविधय इति । यतो नामान्यविद्वांश्चेत् पितामहेऽति पिण्डान्निर्वपेदिति । तथा यदि नाम न विन्द्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यादिति कल्पसूत्रेषु नामाज्ञानविषये श्राद्धप्रकारस्य विहितत्वात् तद्विरुद्धस्य कल्पस्य व्यवस्थाविधेरसम्भवात् । अतएव पतितपितृपितामहादिकर्तृकनित्यामावास्यादिश्राद्धविषयेऽपि न वस्वादिदेवताविधयः । इति न व्यवस्थापि सम्भवति ।

यदि च सोमपादयो यथावचनं श्राद्धदेवतात्वेनाभिप्रेताः स्युः ततोऽभिजनवचनमनुपयोगि स्यात् । एकत्वे तु सर्व्वमुपपद्यते । यः कश्चित्पितृद्वेषात् पित्रे कर्म्मण्यनादरपरः स्यात् तं प्रति प्रवृत्त्यर्थमिदमुच्यते, मैवं मंस्थाः । मृतमनुष्यरूपाः पितरः श्राद्धैः सन्तर्पिताः कमिव गुणं करिष्यन्ति । असन्तर्पिता वा कं दोषमिति । यत एते ब्रह्मपुत्राः मरीच्याद्यृषिपुत्राश्चाग्निष्वात्तादयो महामहिमानो मृतमनुष्यरूपपित्राद्यधिष्ठातारो मनुष्यनामभिः क्रियमाणैः श्राद्धैः सन्तर्पिताः सन्तः सन्तर्पकस्यापेक्षितानेकफललाभरूपं गुणं करिष्यन्ति । असन्तर्पितास्त्वापेक्षितहानिरूपं दोषञ्च करिष्यन्ति । इति सन्ति च प्रति-

पत्तारो य एतादृशेभ्योऽर्थवादवाक्येभ्यः कर्म्मकर्त्तव्यतां प्रतिपद्यन्ते, नान्यथा ।

अथ एतेऽर्थवादा एवेति । इतश्चार्थवादा अशिष्टशिष्टत्वात् । न हि सोमसदः साध्यानां पितरः, अग्निष्वात्ताश्च देवानां, वर्हिषदो दैत्यदानवयक्षाणां गन्धर्व्वोरगरक्षसां सुपर्णकिन्नराणामित्यादिना सोमसदादयः श्राद्धे देवतात्वेन विधीयन्ते । न हि साध्यादीनां देवानां उरगसुपर्णादीनां तिरश्चां वा धर्म्मरूपे कर्म्मण्यधिकारोऽस्ति । देवानां ह्यधिकारे कर्तृत्वापत्तौ देवतात्वहानिप्रसङ्गः देवतात्वकर्तृत्वयोर्भेदात् । तिरश्चाञ्च शक्तिज्ञानयोरभावात् । सोमसदः साध्यानां पितर इत्यादिना वा शिष्टैनैकवाक्यत्वात् 'सोमपा नाम विप्राणां क्षत्रियाणां हविर्भूजः' इत्येवमादयोऽप्यर्थवादा एवेति । अत्रोच्यते । यद्यपि मनुवाक्यैर्विस्पष्टमग्निष्वात्तादीनां श्राद्धे देवतात्वस्य विधिर्न दृश्यते तथापीतिहासपुराणेषु चतुर्थ्यन्तैः शब्दैः श्राद्धेन सहैषां सम्प्रयोगस्य दर्शनादवगम्यत एव देवतात्वम् । तथाहि पाद्ममात्स्ययोरग्निष्वात्तादीनभिधायोक्तम् ।

तेभ्यः सर्व्वे तु मनवः प्रजाः सर्गे तु निर्म्मिताः ।
ज्ञात्वा श्राद्धानि कुर्व्वन्ति धर्म्ममेवेति सर्व्वदा ॥

न चैवं वक्तव्यम् । वर्त्तमानोपदेशात् मनुभिरनुष्ठितस्य श्राद्धस्यानुवादोऽयं न ब्राह्मणादिकर्तृकस्य श्राद्धस्य विधिरिति । यतोऽनुवादमात्रमनर्थकम् । प्रशंसार्थमिति चेत्, न । प्रशंसापि हि विधेयस्यैव युज्यते । अतो ब्राह्मणादिकर्तृकाग्निष्वात्तादिदेवताकश्राद्धविध्यर्थमेवेदमिति मन्तव्यम् । विधिरपि साक्षात् दृश्यते ।

तथाच हरिवंशे ।

तेषामथाभ्युपगममनुस्मृते युगे युगे ।
प्रवर्त्तयति श्राद्धानि नष्टे धर्म्मे प्रजापतिः ॥
पितॄणामादिसर्गन्तु सर्व्वेषां द्विजसत्तम ।
तस्मादेवं स्वधर्म्मेण श्राद्धं देयं वदन्ति वै ॥

एवमग्निष्वात्तादीनुद्दिश्य ब्राह्मणादिभिरपि श्राद्धं देयम् । स्वधर्म्मेणेति स्वेन स्वेन धर्म्मेण यथा ब्राह्मणादिभिः पक्वेनान्नेन शूद्रेणामान्नेनैवमादिना प्रकारभेदेनेत्यर्थः ।

ब्रह्मवैवर्त्तब्रह्माण्डपुराणयोरपि ।

एतेषामभ्युपगमान्मनुर्मन्वन्तरेश्वरः ।
मन्वन्तरादौ श्राद्धानि प्रावर्त्तयत सर्व्वशः ॥
पितॄणामानुपूर्व्वेण सर्व्वेषां वरवर्णिनाम् ।
तस्मादिह स्वधर्म्मेण श्राद्धं देयन्तु सर्व्वदा ॥

अत्र हरिवंशादिष्वग्निष्वात्तादीनां षष्ठ्यापि श्राद्धसम्बन्धोऽभिधीयमानो देवतात्वरूपे विशेष एव पर्य्यवस्यतीति देवतात्वेनाभिमतेषु मृतमनुष्येष्वपि बहुशः षष्ठीप्रयोगदर्शनात् इतोऽप्येषां श्राद्धदेवतात्वम् । यतो विष्णुधर्म्मोत्तरादिष्वेतेषामेव साक्षात् श्राद्धभोक्तृत्वं, मनुष्याणान्तु एतद्द्वारकं तृप्तियोगमात्रमुक्तम् ।

एते श्राद्धस्य भोक्तारो विश्वेदेवैः सदा सह ।
एते श्राद्धं सदा भुक्त्वा पितॄन् सन्तर्पयन्त्युत ॥
तृप्ता तथैते विनियोजयन्ति दातुः पितॄन् सर्व्वगणान् महीपते ॥

न चैवं वाच्यम् । स्तुतिमात्रमेवेदं तृप्तियोगित्वमात्रं वा न तु

हविःप्रत्युद्देश्यत्वलक्षणं देवतात्वमिति । यतो विश्वेदेवैः सहेति हविः-प्रत्युद्देश्यैर्विश्वेदेवैः सह समानभोक्तृत्वस्याभिधानात् । तथा ब्रह्मपुराणे मूर्त्तामूर्त्तानां पितॄणां श्राद्धभोक्तृत्वमुक्तम् ।

अमूर्त्ता मूर्त्तिमन्तश्च पितरो द्विविधाः स्मृताः ।
नान्दीमुखाः पार्व्वणाश्च एकोद्दिष्टाशिनस्तथा ॥
उद्दिष्ट एष मूर्त्तानां पितॄणां निर्णयस्त्रिधा ।

अत्र मूर्त्ता अमूर्त्ताः पितरोऽग्निष्वात्तादय एव पितृनिरूपण-प्रकरणे दर्शिताः । अत्र च नान्दीमुखा इति वृद्धिश्राद्धाशिनः । पार्व्वणा इति पार्व्वणविधिनिष्पाद्यश्राद्धाशिन इति ज्ञायते । एकोद्दिष्टाशिन इत्येतन्न्यायपाठात्[१] । तथा ब्रह्मवैवर्त्तादिषु बहुपुराणेषु श्राद्धतर्पणीयत्वमेषामुक्तम् ।

श्राद्धैराप्यायितास्ते पितरः सोममव्ययम् ।
आप्याय्यमानं युक्ताभिर्वर्द्धयिष्यन्ति नित्यशः ॥
तथा । ऊर्द्धवक्त्रास्तु ये तत्र ते नान्दीमुखसञ्ज्ञिकाः ।
वृद्धिश्राद्धेषु सततं पूज्याः श्रुतिविधानतः ॥

इत्यादौ पितृनिरूपणप्रकरणे दर्शिते वाराहपुराणे श्राद्धविभागेन वर्णविभागेन च स्पष्टमेव दिव्यपितॄणां देवतात्वं गम्यते । दृश्यते चाचारे वृद्धिश्राद्धे नान्दीमुखानां देवतात्वम् । न चैवं दृश्यमानेऽपि विधावसति बाधकेऽर्थवादकल्पना न्याय्या । अर्थवत्त्वं हि विधावानर्थक्यमर्थवादे । यतः स्तुतश्चास्तुतश्च तावानेव सोऽर्थः न न्यूनातिरिक्त इति न्यायविदो मन्यन्ते ।

(१) पार्थक्यपाठादिति ग० ।

यानि पुनस्त्रोदकक्रियाप्रतिपादनपरैः फलकरणेतिकर्त्तव्यताभिधायकैः सहपदैः समभिव्याहृतान्यतदर्थानि पदानि तान्यध्ययनविधिविहितक्रियार्थत्वानुरोधेन "एषा हि बहुचीरा" इत्यादिवाक्येषु लोकव्युत्पत्तिमुपलभ्य च स्तावकत्वेन यथाकथञ्चिच्छास्त्रे क्रियापरतया वर्णितानि। यदि नामान्यनतिप्रयोजनवन्ति प्रयोजनशून्यानि वा तथापि तत्र न कश्चिदुपालम्भनयोग्योऽस्ति नित्यत्वाद्वेदस्येति। अध्ययनविध्यपेक्षितं क्रियाभिधानपरत्वन्तु सस्तुतिकमृतमनुष्याणां देवतात्वमुत्पत्तिशिष्टत्वान्न देवतान्तरविधिः सम्भवतीति। न शुद्धोत्पत्तेरपि दर्शनात्। तथाहि पाद्ममात्स्यादिषु।

पितृयज्ञन्तु निर्वर्त्त्य तर्पणाख्यन्तु योऽग्निमान्।
पिण्डान्वाहार्य्यकं कुर्य्याच्छ्राद्धमिन्दुक्षये सदा॥

मनुस्मृतावपि पार्व्वणस्य शुद्धैवोत्पत्तिः।

पितृयज्ञन्तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
कृत्वान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकमिति॥

अनेकेषु च श्राद्धकल्पेषु नित्यश्राद्धामावास्याश्राद्धादीनां पितृभ्यो दद्यादित्येवंविध एवोत्पत्तिविधिर्दृश्यते। अग्निष्वात्तादयोऽपि च पितृशब्दवाच्या इत्यग्निष्वात्तादीनामप्युत्पत्तिशिष्टत्वात् देवतात्वेनोत्पत्तिशिष्टगुणावरोधदोषः। यानि पुनरेकोद्दिष्टानि प्रेतश्राद्धानि सपिण्डीकरणसांवत्सरिके च पार्व्वणविकृतिभूते तत्रोत्पत्तिशिष्टमृतमनुष्यदेवताविरोधान्माभूदग्निष्वात्तादीनां देवतात्वम्। तस्मादस्त्वृत्पत्तिशिष्टदेवतानवरुद्धेषु क्वचिदमावास्योपरागादिषु पुण्यकालादिविहितेषु नित्यनैमित्तिककाम्येषु श्राद्धेष्वग्निष्वात्तादीनां वैकल्पिकं

देवतात्वं। अस्ति च वसुरुद्रादित्यानां श्राद्धे देवतात्वस्य विधिः। याज्ञवल्क्यस्मृतौ ।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवता इति ।

पैठीनसिरित्याह। य एवं विद्वान्पितॄन्यजते वसवो रुद्रा आदित्याश्चास्य प्रीता भवन्ति। क एते पितरो नाम येभ्यो दत्तमिहाक्षयं भवति। वसवः पितरः, रुद्राः पितामहाः, आदित्याः प्रपितामहास्तेभ्यो दत्तमिहाक्षयं भवति ।

देवलस्मृतौ ।

सर्व्वेत्र पितरः पूज्या देवतानाञ्च देवताः ।
शुचयो निर्म्मलाः शुद्धा दक्षिणां दिशमाश्रिताः ॥

वसवः पितरो ज्ञेया इत्यादि । अतो देवताविकल्पः । महार्णवप्रकाशकारादयस्तु देवताव्यवस्थां मन्यन्ते । तथाहि त्रिःप्रकाराः पितरः । एके जनकादयः । अपरे मरीच्यादिसुताः सोमपादयः । अपरे वस्वादयः । तत्र जनकादि औत्सर्गिकं श्राद्धं । तथाच शातपथी श्रुतिः। अथावेतन्न इत्येव यजमानस्य पित्र इति। तथा मनुस्मृतिः । प्रथिताः प्रेतकृत्येति । तथा म्रियमाणे तु पितरि पूर्व्वेषामेव निर्व्वपेदिति। नाजीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतेः । इत्येवमादिवाक्यैः मृतपित्राद्युद्देशेन पितृकार्य्यं विधीयते । तस्योद्देशस्य क्वचिदपवादः स्मर्य्यते ।

ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥
आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रियेत्यादि ।

एवञ्च पतितपितृकः श्राद्धकर्त्ता पितामहादिभ्यः श्राद्धं करोति, पतितपितृपितामहस्य प्रपितामहादिभ्यस्त्रिभ्यः ।

उक्तं हि । प्रपितामहपूर्व्वेभ्यो जीवत्पितृपितामहः ।

भोजयेत् पार्व्वणे श्राद्धे प्रत्यक्षौ तौ च पूर्व्ववत् ।
पूर्व्वेषु त्रिषु दातव्यं जीवेच्च त्रितयं यदि ॥

महापितृयज्ञे चोक्तं । त्रीन् परतरान् पितॄनाचष्टे, षष्ठं प्रथमे पिण्डे, पञ्चमं द्वितीये, चतुर्थं तृतीये, सप्तमे निवृत्तिः प्रतीयत इति ।

तत्र पित्रादीनां त्रिचतुराणां पिण्डायोग्यत्वे सप्तमादिभ्यश्च पिण्डनिषेधे पार्व्वणश्राद्ध-पिण्डपितृयज्ञयोश्च नित्यत्वे तयोः कथमनुष्ठानमित्यपेक्षायामुक्तं सोमपा नाम विप्राणामित्यादि । वसवः पितरो ज्ञेया इत्यादि च । तस्मात्पतितपित्रादिविषये सोमपादीनां वस्वादीनाञ्चामावास्यादिश्राद्धे पितृयज्ञे च देवतात्वम् ।

तथाचापस्तम्बगोभिलौ । यदि नाम न विन्द्यात्स्वधा पितृभ्यः पृथिवीषड्भ्य इति प्रथमं पिण्डं दद्यात् । स्वधा पितृभ्योऽन्तरीक्षषड्भ्य इति द्वितीयं, स्वधा पितृभ्यो दिविषड्भ्य इति तृतीयमिति । अनेन खल्वेकत्वविशिष्टस्य कस्यचिद्देवतात्वं बोधितम् । बहुत्वविशिष्टेन पितृत्वेन च शास्त्रान्तरे सोमपादयो वस्वादयश्च दर्शिताः । अतस्तेषामेव पृथिवीषड़ादिशब्देनाभिधानमित्येषैव लघ्वी कल्पना । लिङ्गदर्शनाच्च सोमपादीनां देवतात्वम् । तथाच ब्रह्मपुराणे ।

पितॄन् पितामहान् यच्चेद्भोजनेन यथाक्रमम् ।
प्रपितामहान् सर्व्वांश्च तत्पितॄंश्चानुपूर्व्वशः ।
उशन्तस्त्वेति च जपन् पितॄनावाहयेत्ततः ॥

सोमवन्तो वर्हिषदश्चाग्निष्वात्ताश्च येऽपरे ।
पितरः पुण्ययशसः सर्व्वेऽप्यायन्तु नस्त्विति ॥

वैदिकश्च मन्त्रः । आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैरिति[१] । तथा अग्निष्वात्ताः पितर एह गच्छत सदः सदः सदत सुप्रणीतय इति[२] । तथा वर्हिषदः पितर उत्यर्वागिमा वो हव्या चकृमा जुषध्वमिति[३] । तथा अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यास इति[४] । तथा ये नः पूर्व्वे पितरः सोम्यासोऽनूहिरे सोमपीथं वसिष्ठा इति[५] । तथा उपहूताः पितरः सोम्यासो वर्हिष्येषु निधिषु प्रियेष्विति[६] । तथा अग्निष्वात्तानृतुमतो हवामहे नाराशंसे सोमपीथं य आशुरिति[७] ।

हारीतस्मृतौ च । लिङ्गदर्शनं ब्राह्मणानुदपात्रे यथार्थमर्चयित्वेति व्याख्यातञ्च जयस्वामिना । यस्य वर्णस्य यैः पितृभिरर्चितैः श्राद्धार्थस्य श्राद्धप्रयोजनस्य निवृत्तिस्तान्पितॄननतिक्रम्यार्चयित्वेत्यर्थ इति । ते च सोमपा नाम विप्राणामिति मन्वादिभिर्दर्शिताः । तथा हारीत एव । सोमज्येष्ठान्पितॄंस्तेन प्रीणाति सोमपांश्च पितॄंस्तेन प्रीणातीति । अग्नौ करणे च दृश्यते । सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नमो यमायाङ्गिरस्वे पितृमते स्वधा नम इति । महाहविःसंज्ञकषट्कपालादि निर्वर्त्य पितृयज्ञे च दृश्यते । तथा च

(१) यजुः मा० वा० १९. ५८ । (५) यजुः मा० वा० १९. ५१ ।
(२) यजुः मा० वा० १९. ५९ । (६) यजुः मा० वा० १९. ५७ ।
(३) यजुः मा० वा० १९. ५५ । (७) यजुः मा० वा० १९. ६१ ।
(४) यजुः मा० वा० १९. ५० ।

शातपथे। महाहविषा ह वै देवा वृत्रं जघ्नुरित्युपक्रम्य तस्माद्वा एष एतेन यजते[१] इत्यन्तेन सार्थवादकेन वाक्येन पितृयज्ञं विधायोक्तम् । स पितृभ्यः सोमवद्भ्यः षट्कपालं पुरोडाशं निर्वपति सोमाय वा पितृमत इत्यादि[२]। तथा अथ पितृभ्यो वर्हिषद्भ्यः अन्वाहार्य्यपचने धानाः कुर्व्वन्तीति[३]। अथ पितृभ्योऽग्निष्वात्तेभ्यो निवान्यायै दुग्धे सक्तुदुपमथित एकशलाकया मन्थो भवतीत्यादि[४]। एतच्चाग्निष्वात्तादिपदानामर्थवादमात्ररूपत्वे कथञ्चिन्नोपपद्यते। तर्पणे च दृश्यते। सोमं पितृमन्तं यममङ्गिरस्वन्तं अग्निं कव्यवाहनं तर्पयेदित्यादि। वस्वादीनाञ्च देवतात्वे लिङ्गं ब्रह्मपुराणे जीवच्छ्राद्धप्रकरणे ।

आवाहनादिना पूर्व्वं विश्वान्देवान् प्रपूज्य च ।
अहं वसुभ्यस्त्वां विप्र रुद्रेभ्यस्त्वामहं ततः ।
सूर्य्येभ्यस्त्वामहं विप्र भोजयामीति तान्वदेदिति ॥

तदेवं क्वचित्केषाञ्चिद्दिव्यपितृणां देवतात्वदर्शनाद्व्यवस्थेति हरिहरादयो मन्यन्ते। अभेददृष्टिविधयो वैते। अयन्तु पक्षः सिद्धान्ततयाभ्युपगन्तुं न्याय्यः। अयमेव ह्याचारे दृश्यते। अयमेव हि सर्व्वेषां विश्वरूपादीनां सम्मतः। अयमेव ह्यनवद्यः। न्यायो हि स्तावकत्वाद्विधिपरत्वमित्येतत्पूर्व्वमेवोक्तम् । आदित्यो यूप इति वेदवाक्ये यूपेपि यदि नाम तथा स्यात्तदा किं नाम कर्म्मणो हीयेत वरं सगुणत्वमेव भवेत् ।

(१) शतपथब्राह्मणे २ अ० ५, ४, १ ।
(२) शतपथब्राह्मणे २ अ० ६, १, ४ ।
(३) शतपथब्राह्मणे २ अ० ६, १, ५ ।
(४) शतपथब्राह्मणे २ अ० ६, १. ६ ।

विधिपक्षान्तराणाञ्चावद्यानि वक्ष्यन्ते। एतच्च दृष्टिविधानं न षट्कपालादिनिर्वर्त्त्ये पितृयज्ञादौ। तत्र हि वर्हिषदादीनामेव देवतात्वस्य विधानात्। यत्र तु श्राद्धाख्ये कर्मण्युभयेषां तत्र ह्यग्निष्वात्तादीनां देवतात्वे त्रिसंख्याबाधः, पितृपितामहादिबाधो विकल्पो वा स्यात्। विकल्पेऽपि नित्यवत् श्रुतस्य पक्षे बाध एव। एतेऽन्ये च विकल्पदोषाः स्युः। श्राद्धप्रकरणश्रुतानामपि चेत् षट्कपालादिसाध्ये यज्ञे विनियोगस्तदा प्रकरणादुत्कर्ष इत्येष दोषः।

पतितपितृकादिकर्त्तृकश्राद्धे देवतात्वविधावापस्तम्बाद्युक्तपृथिवीषड़ादिदेवताबाधः स्यात्। अर्थवादत्वे च श्रुतदेवतात्वबाधप्रसङ्ग इति। तदेवं श्रुतदेवतात्वानुगुणानवद्यपक्षलाभे मनुष्यपितृभ्यो भेदेन श्रुतानामभेदोपदेशो भेदः श्रुत्यविरोधी देवतात्वविरोधी च कल्प्यते। श्राद्धप्रयोगे देवतात्वेन मन्त्रमनुष्योद्देशे क्रियमाणे मनुष्येषु सोमपादित्वादिविष्ण्वादि-प्रद्युम्नादि-मासादि-वरुणाद्यभेदारोपः कर्त्तव्य इति। अभेदारोपदार्ढ्याय च द्विजैः सोमपरूपेभ्य इत्यादयः,क्षत्रियैस्तु हविर्भुद्रूपेभ्य इति, वैश्यैस्त्वाज्यपरूपेभ्य इति, शूद्रैस्तु सुकालरूपेभ्य इति शब्दाः प्रयोज्याः। अथवा अस्मत्पितृ-पितामह-प्रपितामहेभ्यो वसु-रुद्रादित्यरूपेभ्य इति वा,प्रद्युम्न-सङ्कर्षण-वासुदेवरूपेभ्य इति वा, मासर्त्तु-संवत्सररूपेभ्य इति वा, सर्वैरेव शब्दाः प्रयोज्याः। पितृदाने तु अस्मत्पितृ-पितामह-प्रपितामहेभ्यो वरुण-प्रजापत्यग्निरूपेभ्य इत्यपि प्रयोज्यम्। एतच्च स्वावसरे तत्र तत्र वक्ष्यते। एवं हि सत्येकस्मिन्नेव प्रयोगे उभयेषामुद्देशेन देवतात्वं सिध्यति। न च कस्यचिद्बाधो भवति। भेदाभेदोपदेशौ च समर्थितौ भवतः। अत्र च मुख्यतया

मृतमनुष्याणामेवोद्देशः। सोमपादीनां वस्वादीनाञ्चाभेददृष्टिविधयो-द्देश्यस्वरूपे प्रवेशः। न पुनर्विपरीतम्।

अतएव वायुपुराणे मनुष्यपितॄणामेवोद्देशेन क्रियमाणे श्राद्धे दिव्यपितॄणां तृप्तिर्भवतीत्युक्तम्। न तु तेषां प्राधान्येनोद्देशो दर्शितः। उक्तं हि तत्र मनुष्यपितृभेदानभिधाय।

तेषां निर्वापदत्तेऽमी तत्कुलीनैश्च बान्धवैः।
मासश्राद्धभुजस्तृप्तिं लभन्ते सोमलौकिकाः॥

नागरखण्डे दिव्यपितॄन् प्रति ब्रह्मवचनम्।

पितुः पितामहस्यैव तत्पितुश्च ततः परम्।
समुद्देशेन दत्तेन ब्राह्मणेभ्यः प्रभक्तितः।
सर्वेषां स्यात् परा तृप्तिर्यावदाचन्द्रतारकम्॥
तथा मातामहानाञ्च पक्षे नास्त्यत्र संशयः।
त्रिभिः सन्तर्पितैस्तेऽपि तर्पितास्ते ममाज्ञया॥

इति मनुष्यपितृतृप्तिमभिधाय दिव्यपितृतृप्त्यर्थमुक्तम्।

युष्माकं तृप्तये यश्च सुखोपायो भविष्यति।
स श्रूयतां महाभागा गदतो मम साम्प्रतम्॥
पितॄनन्नेन येनैव समुद्दिश्य द्विजोत्तमान्।
तर्पयिष्यन्ति तेनैव पिण्डान् दास्यन्ति च क्षितौ।
तेनैव कर्म्मणा तृप्तिः शाश्वती वो भविष्यति॥

देवलस्मृतावपि मृतमनुष्योद्देश एवोक्तः।

प्रेतानुद्दिश्य यत्कर्म्म क्रियते मानुषैरिह।
तुष्यन्ति पितरस्तेन न प्रेताः पितरः स्मृता इति॥

न प्रेताः पितर इति निन्दार्थवादेन प्रेतानां हविःप्रत्युद्देश्यत्व-लक्षणं देवतात्वं निषिध्यत इति न मन्तव्यम् प्रेतानुद्दिश्येत्युपक्रमबाधापत्तेः। किन्तु नानायोनिगतानां मनुष्याणां कथं तृप्तिसन्तोषपूर्व्वकममानुषशक्तिं सम्पाद्य फलविशेषदातृत्वमित्याशङ्कां वारयितुं वस्वादीनां प्रेताधिष्ठातृत्वलक्षणं पितृत्वमुच्यत इति। अनेनैवाभिप्रायेण याज्ञवल्क्येनोक्तम्।

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः ॥

अत्र मृतमनुष्योद्देशेन निर्वर्त्त्यैनैव श्राद्धेन वस्वादयः तर्पिताः, अधिष्ठातृत्वेनैव मृतमनुष्यस्य तृप्तिं कुर्व्वन्तीति बोध्यम्। एतच्च तृप्तिसमर्थनप्रकरणे विस्तरेणाभिहितम्।

यदपि च नन्दिपुराणे दिव्यान् पितृगणानभिधायोक्तम्।

शुभाशुभगतिं प्राप्ता नानायोनिषु ये नराः ।
तैस्तैस्तु पुरुषैरिष्टाः पितरस्तर्पयन्ति तान् ॥
पुत्रैः पौत्रैश्च येषां हि खिष्टास्तु पितरः सुराः ।
पितृपितामहांस्तेषां तर्पयन्ति सुरास्तु तानिति ॥

तदपि याज्ञवल्क्यवचनेनैव व्याख्यातम्।

ये च नन्दिपुराणे। उद्दिश्य विष्णुर्यैरिष्टः पितरस्तैस्तु तर्पिताः ।
ब्रह्मा समिष्टः प्रीणाति पुंसः सर्वान् पितामहान् ॥
श्राद्धकाले समुद्दिश्य लिष्टोहं यैर्महात्मभिः ।
न यान्ति नरके घोरे तेषां वै प्रपितामहा इति ॥

तदपि न विष्ण्वादीनां प्राधान्येनोद्देश्यं प्रतिपादयति, किन्त्वभेद-

दृष्टिप्रकारेणोद्देश्यस्वरूपान्तर्भावमेव। एवमन्येष्वप्येवंविधेषु वचनेषु व्याख्यानं विधेयम्। तदेवं मृतमनुष्याणां श्राद्धे देवतात्वं। तदभेद-दृष्टिविधया तु दिव्यपितॄणां देवतास्वरूपेऽन्तर्भाव इति सिद्धम्। एवञ्च लिङ्गदर्शनान्यप्युपपन्नानीति। तदेवं तावल्लोकान्तरगता पित्रादयः श्राद्धे देवतात्वेनोद्देश्या इति वर्णितम्।

अथ के कुत्र कियत्संख्या उद्देश्या इत्यपेक्षायामुच्यते। तत्र ताव-न्मुख्ये पार्व्वणे पितृ-पितामह-प्रपितामहास्त्रयः, मातामह-प्रमातामह-वृद्धप्रमातामहाश्च त्रय इति। एवं षट् मनुष्यब्राह्मणभोजने पिण्ड-दाने च सपत्नीका उद्देश्याः। तथा च वायुपुराणे। "प्राक्दक्षिणा-भिमुखो दद्यात् पिण्डान् पिण्डादनन्तरं"। पिण्डानिति बहुवचनात् बहुत्वेऽवगते प्रथमातिक्रमे कारणाभावादिति न्यायात् वसन्ताय कपिञ्जलानालभत इतिवत् त्रीनेवेत्यवगम्यते। अतएवास्मिन्नेव पुराणेऽभिहितम्।

मधुसर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्व्वपेद्बुध इति।

जातूकर्णोऽप्याह। कृत्वावनेजनं दद्यात्त्रीन् पिण्डांस्तु यथाविधीति।

त एते त्रयः पिण्डाः पित्रे पितामहाय प्रपितामहाय इत्येवं त्रिभ्यो देया इति।

तथा च शातपथीश्रुतिः। असावेतत्तऽ इत्येव यजमानस्य पित्रेऽसावे-तत्तऽ इति पितामहायासावेतत्तऽ इति प्रपितामहायेति।

मत्स्यपुराणेऽपि पित्रादीनां त्रयाणां पिण्डभागित्वमुक्तम्।

लेपभागास्तुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति॥

अत्र चतुर्थो वृद्धप्रपितामहः स आद्यो येषां ते तदाद्यास्तद्गुणसंविज्ञानो बहुव्रीहिः, तस्यातद्गुणसंविज्ञानाद्बलीयस्त्वात्। तद्गुणे हि श्रुतग्रहणं, अग्रहणमतद्गुणे। तस्माच्चतुर्थ-पञ्चम-षष्ठास्त्रयः पुरुषा लेपभागिनः। पित्राद्याः पितृ-पितामह-प्रपितामहास्त्रयः। एते पिण्डभागिनः। मार्कण्डेयपुराणे चैतद्युक्तमुक्तम्।

पिता पितामहश्चैव तथैव प्रपितामहः।
पिण्डसम्बन्धिनो ह्येते विज्ञेयाः पुरुषास्त्रयः॥
लेपसम्बन्धिनश्चान्ये पितामहपितामहात्।
प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तम इति॥

तदेवं तावत् पिण्डदाने पित्रादयस्त्रय उद्देश्याः। ब्राह्मणभोजनेऽप्येत एवोद्देश्याः। तथाच वायुपुराणादिषु।

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
श्राद्धेषु चैव सर्व्वेषु तत्पूर्व्वानर्च्चयेत्पितॄनिति॥

ब्रह्मपुराणे च लिङ्गदर्शनम्।

पितॄन् पितामहान् यक्ष्ये भोजनेन यथाक्रमम्।
प्रपितामहांश्च सर्वांश्च तत्पितॄंश्चानुपूर्वश इति॥

तथा शौनकादिसूत्रेषु लिङ्गदर्शनम्। पितरिदन्तेऽर्घ्यं पितामहेदन्तेऽर्घ्यं प्रपितामहेदन्तेऽर्घ्यमिति ब्राह्मणहस्तेष्वर्घ्यं निनयेदिति। यमस्मृतौ अर्घ्यपात्रस्थापने विधीयमाने तेषां पित्रादिसम्बन्धोऽवगम्यते।

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत्।
प्रापितामहं ततो न्यस्य नोद्धरेन्न च चालयेत्॥

अत्र चार्घ्यपात्राणां भोज्यब्राह्मणभोजनान्वयात् भोजनान्वये सति

तत्रस्थदेवतासम्बन्ध उपपद्यते नान्यथेति ब्राह्मणभोजनेऽपि त्रयाणां देवतात्वम्। नन्वस्तु त्रयाणामेव देवतात्वम् यतः कल्पसूत्रेष्वमावास्याश्राद्धे त्रयाणामेव देवतात्वमुक्तम् । मैवम्। यतः मातामहानामप्येवं तन्त्रं वा वैश्वदैविकमिति विष्णुना। याज्ञवल्क्येन च पिण्डदानप्रयोगमभिधायोक्तम्। मातामहानामप्येवं दद्यादाचमनं तत इति।

अत्राह शङ्खश्रीधरः। स्यादेतदेवम् यदीदं याज्ञवल्क्यवचनमुपदेशकं स्यात् यावतातिदेशकं वाक्यमिति विद्वांसो मन्यन्ते। कथमिति चेत्? एवं कर्त्तव्यमित्युपदेशात्। तद्वत्कर्त्तव्यमित्येतदेवास्माद्वाक्यादवगम्यते, न पुनरेतत्कर्त्तव्यमिति। न ह्येतदेकं वाक्यं विधातुमतिदेष्टुञ्च शक्नोति, वाक्यभेददोषापत्तेरिति। अतोऽस्य वाक्यस्यायमर्थोऽवगम्यते। यः कश्चिद्वचनान्तरेण मातामहश्राद्धस्य कर्त्तावगतः पुत्रिकापुत्रादिः स मातामहश्राद्धं कुर्वन् पितृश्राद्धवत्कुर्य्यान्नान्यथेति। तदेतदयुक्तम्। विशिष्टविधौ वाक्यभेदाभावात्। श्रुत्यादिसर्व्वकर्त्तृसम्बन्धोऽवगम्यते प्रकरणेनापि स एव। ननु मातामहानामप्येवमित्येतावदेवात्र श्रूयते न तु श्राद्धं कुर्य्यादित्येतदपि। अतोऽस्य वाक्यस्यातिदेशमात्रपरत्वे श्रुतार्थविषयो विधिः। विशिष्टविधिपरत्वे च श्रुतार्थविषय इति। मैवं। श्राद्धं कुर्य्यादित्येतावतो वाक्यावयवस्यावश्यमनुषङ्गेण वा अध्याहारेण वात्र कल्पनीयत्वात्। न हि तमन्तरेण कस्यापि विधिः सम्भवति। ननु यावद्यावद्विधेयान्तरमुपादीयते तावत्तावद्विधिशक्तिस्तत्र सञ्चरति। यथा रक्तः पटो भवतीत्यत्र वाक्ये पटो भवतीत्येतमर्थं परित्यज्य रक्तो भवतीत्येतमर्थमाश्रयते। मैवं। अप्राप्तार्थविषयो हि विधिर्भवतीति विधेः स्वभावः,

न तु विधेयान्तरविषय इति। अन्यथा विशिष्टविधिभावोऽपि विलीयते। यस्तु विधेयान्तरविषया विधिशक्तिरित्येवंविधो न्यायः स तु प्राप्ते एकस्मिन् पदार्थे द्वितीयविषयपदार्थं एव भवति। अप्राप्ते तूत्तरपदार्थविषयोऽपीति विवेचनीयः।

"ननु कुर्य्यान्मातामहश्राद्धं नियमात्पुत्रिकासुतः। उभयोरर्थसम्बन्धः कुर्य्यात्स उभयोरपीति" यमसंहितावचने मातामहश्राद्धं पुत्रिकापुत्रस्यैव नियमेन विहितम्। अतो दौहित्रमात्रस्य न तत्र नियमेनाधिकारोऽस्तीत्यवगम्यते। यतः पुत्रिकासुत इत्येतस्माच्छब्दादपुत्रिकासुतस्य निवृत्तिरेव गम्यते। शब्दवृत्तेरन्यनिवृत्तिपरत्वादिति। तस्मादेतद्वचनाविरोधाय मातामहानामप्येवमित्येद्वचनमतिदेशमात्रपरं व्याख्येयमिति। मैवं। द्विविधो हि पुत्रिकापुत्रः। एको मातामहेनैव सम्बद्धः, अन्यो मातामहेन पित्रा च। तत्र यो मातामहेनैव सम्बद्धः पुत्रिकापुत्रः स मातामहश्राद्धमेव नियमात्कुर्य्यात्, पितृश्राद्धन्तु कुर्य्याद्वा न वेति। तस्य पितृश्राद्धनियमनिवारणार्थं 'नियमात्पुत्रिकासुतः' इत्येतद्वचनम्। न तु दौहित्रान्तरस्य मातामहश्राद्धनियमनिवारणार्थमिति। एतच्चाधिकारिप्रकरणे विस्तरेणाभिधास्यते। कर्कोपाध्यायेनाप्युक्तम्। श्राद्धं कर्त्तव्यमित्येवंविधे विधौ विशेषानवगमादुभयेषां श्राद्धं कर्त्तव्यमित्यवगम्यते। सूत्रकारवचनाच्च त्रींस्त्रीन् पिण्डानवनेज्य दद्यादिति, वीप्सा हीयं मातामहपिण्डापेक्षया सह प्रयोग एवोपपद्यते। मन्त्रलिङ्गाच्च पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्य इति। इतश्च पार्व्वणे मातामहश्राद्धमावश्यकम्। मातामहानामप्येवं तन्त्रं वा

वैश्वदेविकमिति वैश्वदेविकस्य तन्त्रतोपदेशात्। यदि मातामहश्राद्धं पितृश्राद्धप्रयोगकाले न प्रयुज्येत तदा किमपेक्षा वैश्वदेवतन्त्रता स्यात्। मरीचिरप्याह।

तथा मातामहश्राद्धं वैश्वदेवसमन्वितम्।
कुर्व्वीत भक्तिसम्पन्नस्तन्त्रं वा वैश्वदेविकमिति॥

तदेवं षड्दैवत्यं मुख्यं पार्व्वणमिति सिद्धम्। यच्च पार्व्वणेन विना क्रियमाणमष्टकासंक्रान्तिग्रहणादिसाधारणकालविहितं नित्यनैमित्तिकं काम्यं वा अहन्यहनि यच्छ्राद्धं तन्नित्यमित्येवंलक्षणकं प्रतिदिनमनुष्ठीयमानञ्च नित्यं तदपि षड्दैवत्यमेव। पार्व्वणेतिकर्त्तव्यतातिदेशात्, धौम्यवचनाच्च।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि।
अविशेषेण कर्त्तव्यं विशेषान्नरकं ध्रुवमिति॥

अत्राह शङ्खश्रीधरः। यत्र त्रयोदशीश्राद्धवृद्धिश्राद्धादौ वर्गद्वयस्य नियमेनैव श्राद्धं विहितं तद्विषयं धौम्यवाक्यं द्व्यामुष्यायणदत्तपुत्रिकापुत्रादिविषयञ्चेति तदयुक्तम्। सर्व्वविषयत्वे न्यायवचनाभ्यां विरोधाभावात्। पराभिमतत्रयोदश्यादिविषयत्वे चानुवादकत्वापत्तेः। यतस्त्रयोदश्यादौ वर्गद्वयस्य श्राद्धं तत्प्रकरणे विशेषवचनैरेव विहितम्। अविशेषविधायकत्वान्नानुवादकमिति चेत्। मैवं। पितरो यत्र पूज्यन्त इत्यादिपूर्व्वार्धस्यानुवादत्वानिवृत्तेः। किञ्च अविशेषविधावप्यनुष्ठेयाधिक्याभावाद्यावत्प्राप्तमेवोपदिश्यत इति सर्व्वस्याप्यनुवादकत्वम्। आदरस्यापि श्राद्धानतिरिक्तत्वात् श्रद्धान्वितः श्राद्धं कुर्व्वीतेत्यादिनैव प्राप्तत्वात्। नन्वनेनैव तर्हि सर्व्वत्र वर्गद्वयस्य श्राद्धे प्राप्ते त्रयो-

दर्शादौ वर्गद्वयश्राद्धोपदेशकानामनुवादकत्वं स्यात् । न स्यात् । प्रमादादन्यथाकरणे तेषां प्रत्यवायातिशयप्रतिपादनपरत्वात् विधित्वस्य वक्ष्यमाणत्वाच्च । वृहस्पतिस्मृतावपि ।

सर्व्वस्मात् प्रकृतादन्यात् पिण्डान्मधुतिलान्वितान् ।
पितृ-मातामहादीनां दद्यादृह्यविधानतः ॥

पितृ-मातामहादीनामित्यस्यायमर्थः । पित्रादीनां त्रयाणां मातामहादीनां त्रयाणामित्येवममावास्याश्राद्धे पिण्डान् दद्यादिति । कात्यायनोऽप्याह ।

कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम् ।
प्रत्याब्दिकं वा शेषेषु पिण्डाः स्युः षड़िति स्थितिरिति ॥

कर्षूसमन्वितं सपिण्डीकरणम् । अनेनार्थात् कर्षूसमन्वितादिषु मातामहश्राद्धं न विद्यत इति चोक्तं भवति । देवलादिस्मृतिषु ।

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षड़र्घ्यान् दापयेत्तत्र षड़्भ्यो दद्यात्तथाशनम् ॥
पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तु तालुस्थः कण्ठे मातामहः स्मृतः ।
प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थितः ॥
एवमप्याचरेच्छ्राद्धं षड्दैवत्यं महामुने[१] ।
विभक्तं कारयेद्यस्तु पितृहा स प्रजायते ॥

मत्स्यपुराणे पिण्डान्वाहार्य्यप्रयोगे ।

प्राचीनावीतिना कार्य्यमतः सर्व्वं विजानता ।

---

(१) महामुदे इति ख० ।

षड्वक्तश्राद्धविःशेषात् पिण्डान् कृत्वा तथोदकम्।
दद्यादुदकपात्रेषु सलिलं सव्यपाणिना ॥

पुलस्त्योऽप्याह।

मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः।
तेषान्तु पितृवच्छ्राद्धं कुर्य्युर्दुहितृसूनवः॥

पितृवदिति त्रैपुरुषिकं आवश्यकत्वेन तुल्यादरतया च।

व्यासोऽप्याह।

पितॄन् मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्।
अनृणः स्यात्पितॄणान्तु ब्रह्मलोकं स गच्छति॥

ब्रह्माण्डपुराणेऽपि।

तस्मात्तु पैतृकं श्राद्धं पितृप्रभृतिषु त्रिषु।
कुर्य्यान्मातामहानाञ्च तथैवानृण्यकारणात्॥

आनृण्यकारणादित्यभिधानात् तस्याकरणे पितॄणां ऋणमनपाकृत-मेव तिष्ठतीत्यवगमादावश्यकत्वं गम्यते। अतएव तस्याकरणे दोषोऽपि ब्राह्माण्डपुराणे।

पार्व्वणं कुरुते यस्तु केवलं पितृहेतुतः।
मातामहान्न कुरुते पितृहा स प्रजायत इति॥

ननु यदि दौहित्रमात्रस्य मातामहश्राद्धमावश्यकं तर्हि स्कन्दपुराणे धनहारिण एव दौहित्रस्य मातामहश्राद्धमावश्यकमिति कथं प्रतिपादितम्। तथा हि।

श्राद्धं मातामहानान्तु अवश्यं धनहारिणा।
दौहित्रेणार्थनिष्कृत्यै कर्त्तव्यं विधिवत् सदेति॥

अतो धनहारिणो दौहित्रादन्यस्य मातामहश्राद्धमनावश्यकमिति गम्यते । मैवं । अलमेतन्मनुष्याणामित्यादिवाक्यशेषपर्य्यालोचनया दौहित्रधनहारिशब्दस्य दौहित्रमात्रोपलक्षणपरत्वस्याधिकारिप्रकरणे वक्ष्यमाणत्वात् । किञ्च दौहित्रमात्रस्यामावास्यादिकालिकमातामहश्राद्धाधिकारे सत्यपि धनहारिणो दौहित्रस्य मातामहश्राद्धादावप्यधिकारलाभार्थमेतद्वचनमिति । न दौहित्रान्तराधिकारनिवृत्तौ पर्य्यवस्यति । यदपि मनुवचनम् ।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय चेति ॥

अपुत्रमातामहश्राद्धस्यैवावश्यकत्वं दर्शयति तदपि पूर्व्वेण समानार्थतया व्याख्येयमिति । तदेवमेतत्सिद्धम् अमावास्यादिसाधारणकालविहिते श्राद्धे पित्रादीनां त्रयाणां मातामहादीनामपि त्रयाणामित्येवं षण्णां देवतात्वमिति । तदेतदेषां देवतात्वं प्रत्येकमेव, न पुनः समुदितानाम् ।

तथा च श्रुतिः प्रत्येकमेवोद्देशं दर्शयति ।

असावेतत्त इत्येव यजमानस्य पित्रेऽसावेतत्त इति पितामहायाऽसावेतत्त इति प्रपितामहायेति ।

मनुः । यत्किञ्चिन्मधुसंमिश्रं गोक्षीरघृतपायसम् ।
दत्तमक्षयमित्याहुः पितरस्तेव देवता इति ॥

अत्र देवता इत्यस्मिन् बहुवचनान्ते शब्दे देवता च देवता चेत्येवंविधविग्रहवाक्योपदेशात् देवतानां बहुत्वावगतेः प्रत्येकपरिसमाप्तमेव देवतात्वमवगम्यत इति हरिहरः ।

वैजवापस्य। उशन्तस्त्वेत्यनया यजमानस्य पितरं पितामहं प्रपितामहं नामभिरावाह्यायन्तु न इति जपित्वा पात्राण्युद्दिश्यति। पितरेतत्तेऽर्घ्यं पितामहैतत्तेऽर्घ्यं प्रपितामहैतत्तेऽर्घ्यमित्यावाहनार्घ्यादौ प्रत्येकमेव पित्रादीन् निर्दिशतीति प्रत्येकमेव देवतात्वं मन्यते।

आश्वलायनस्य। स्वधा पित्रे स्वधा पितामहाय स्वधा प्रपितामहायेति प्रत्येकमेव निर्दिशति।

विष्णुश्च। नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखेषु निवेदयेदित्यन्ननिवेदने पित्रादिप्रत्येकमेव चतुर्थ्यन्तैः शब्दैर्निर्दिशति।

कात्यायनस्य। स्वधां वाचयिष्ये इति पृच्छति, वाच्यतामित्युक्ते पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यश्च स्वधा वाच्यतामिति प्रत्येकमेव निर्देशं दर्शयति। तथा असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतींस्त्रीनित्यवनेजनप्रयोगे प्रत्येकमेव निर्देशं दर्शयति। ब्रह्मपुराणेऽपि।

पितृभ्यश्च तथा दद्यादन्नमामन्त्रणेन तु।
एकैकस्यापि विप्रस्य गृहीत्वाङ्गुष्ठमादरात्॥

अमुकगोत्रैतत्तुभ्यमन्नं स्वधा नम इति। अत्रामुकगोत्रैतत्तुभ्यमन्नमित्ययं व्यक्तं पृथङ्निर्देशो दृश्यते। तदेवमादिभिः श्रुति-स्मृति-पुराणवचनैः पित्रादीनां प्रत्येकमेव देवतात्वमवगम्यते। ननु श्राद्धममावास्यायां पितृभ्यो दद्यादिति गौतमोक्तेः पितृभ्योदद्यात् पूर्व्वेद्युः ब्राह्मणान् सन्निधाप्येति वशिष्ठोक्तेश्च समुदितानां देवतात्वमवगम्यते। तत्र हि पितृभ्य इत्यनेनैकशेषेणेतरेतरयोगोऽवगम्यते। मैवं। न हि चतुर्थी देवतात्वं ब्रूते, किन्तु तया कल्पनीयं तद्भवेत्। न

च कल्पयितुं शक्यते । पूर्व्वोपदर्शितश्रुतिस्मृतिविरोधात्। इतरेतर-योगस्याभिधानक्रियापेक्षया लोके वेदे च दृष्टः। यथा गार्गी भोज्यन्तौ क्षौमे वसानावग्निमादधीयातामिति । ननु तदुभयविधवचनदर्शनात् प्रत्येकं मिलितानां वा देवतात्वमिति किं न कल्प्यते। अत्र कश्चिदाह। तुल्यबलप्रमाणद्वयोपनिपाते हि विकल्पः स्यात्। न चैतदत्रास्ति। मन्त्र-वर्णाद्धि प्रत्येकं देवतात्वमवगम्यते। समुदितानान्तु चतुर्थ्या, चतुर्थी च मन्त्रवर्णात् दुर्बला । प्रयोगसमवायी हि मन्त्रवर्णः प्रयुज्यमानावस्थ-पदार्थप्रकाशकत्वाद्देवतास्वरूपाभिधायकस्य इति चतुर्थीतोऽभ्यर्हितः । चतुर्थी तु साक्षाद्देवतास्वरूपानभिधायिकेति । अतो न प्रत्येकपक्ष-समुदायपक्षयोर्विकल्पः प्रमाणवान्। तन्न । श्रुतिर्हि चतुर्थी, लिङ्गं मन्त्रवर्णः, श्रुतिश्च बलीयसी। नन्वेवम्, तर्हि मिलितानां देवतात्वमाप-तितम्। मैवम् । पूर्व्वोक्तेन न्यायेन प्रत्येकदेवतात्वपक्षस्य निर्व्वाहात् बहुतरवचनावस्पृष्टत्वाच्च प्रत्येकपक्षस्य बलवत्वम्। यदि च समुदिता-नामपि देवतात्वं स्यात्तदा ब्राह्मणबहुत्वेऽपि कदाचिदेकैकस्मिन् ब्राह्मणे समुदितानामुद्देश्यत्वं स्यात्, न तु नियमाद्भेदेनेति। अथैकब्राह्मणपक्ष एव समुदितानां देवतात्वम्। मैवम् । ब्राह्मणबहुत्वैकत्वनिमित्तेन देवतात्वाश्रवणात् । अथान्य एवायं समुदितदेवताकः प्रयोगः, अन्य एव प्रत्येकदेवताकः प्रयोग इत्युच्यते तदा समुदितासमुदितदेवताभेदे-नारभ्यमाणविशेषतया चैकस्यापि प्रवृत्ततन्त्रत्वानवगमात्प्रसङ्गानुपपत्तौ पृथगनुष्ठाने प्राप्ते चत्वारो ब्राह्मणाः स्युरिति कृत्वा 'द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा भोजयेत् सुसमृद्धोऽपि' इत्यादिका त्रिब्राह्मणैक-ब्राह्मणपक्षयोः कल्पानुकल्परूपत्वप्रतिपादिका मन्वादिस्मृतिर्बाध्येत ।

किञ्चैकब्राह्मणपक्षेऽपि परिवेषितस्यान्नस्य विभागं कल्पयित्वा पृथ-गेकैकमुद्दिश्य त्यागं दर्शयन् बृहस्पतिरेकैकस्यैव पित्रादेर्द्देवतात्वं दर्शयति ।

यद्येकं भोजयेद्विप्रं स्वल्पत्वात् प्रकृतस्य तु ।

स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नन्तु प्रकल्पयेदिति ॥

अत्र केनचित्प्रचेतोनाम्ना वचनं कल्पितम् ।

उद्देश्यैक्ये द्विजैक्ये वा एकार्घ्यैकपवित्रकम् ।

पिण्डनिर्व्वपणञ्चैकमिति गालवभाषितमिति ॥

अत्र वाक्ये उद्देश्यानेकत्वेऽपि द्विजैक्ये विभागमपरिकल्प्यैव पिण्डदानविधानात्समुदितानां देवतात्वं गम्यते। तत्र विभागकल्पना-वचनैः पृथक्पिण्डदानवचनैश्च विरोधे श्चेयमेव तावदेतद्वचनम् । एकोद्दिष्टविषयत्वेन वा व्याख्येयम् । उद्देश्यैकत्वे सति ब्राह्मणभूयस्त्वं वैकत्वं वास्तु, तथाप्येकमेव श्राद्धं कर्त्तव्यमित्यर्थः । उद्देश्यभेदे हि द्विजैक्येऽपि पूर्व्ववचनैरेव भेदेनानुष्ठानस्य सिद्धत्वात् । एकब्राह्मण-निमन्त्रणवति प्रयोगान्तरे समुदितदेवतात्वपक्षाश्रयणे तत्र 'उशन्तस्त्वा' इत्यावाहनमन्त्रोऽन्वयो न स्यात् । ननु 'उशन्नुशन्त आवह पितॄन्' इति बहुवचनान्तेन पितृशब्देन द्वन्द्वसमानार्थैकशेषवशादितरेतरयुक्ताना-मेव पित्रादीनां देवतात्वमभिधीयत इति लिङ्गात् तत्रैव विनियोगे कथमनन्वयाशङ्का क्रियते। उच्यते। 'उशन्तस्त्वा' इत्यनया यजमानस्य पितरं पितामहं प्रपितामहं नामभिरावाह्येति प्रत्येकदेवतावत्येव प्रयोगे वैजवापवचनैर्विनियोगादैन्द्रीवल्लिङ्गानुरोधात् । तस्मादेक-ब्राह्मणपक्षेऽपि प्रत्येकमेव पित्रादीनां देवतात्वमिति प्रत्येकमेवोद्दिश्य

सर्व्वत्यागा विधेयाः, न तु कदाचिदितरेतरयोगाभिधायिना द्वन्द्वसमासेन समुदितानुद्दिश्येति स्थितम्। अथेदं विचार्य्यते। किमेषां सपत्नीकानां देवतात्वं उत केवलानामिति। तत्र तावत् केवलानामिति हरिहरो मन्यते। तथा च ब्रह्मपुराणे प्रयोगवाक्यं सपत्नीका इति विशेषणशून्यमेव रचितं दृश्यते।

एकैकस्याथ विप्रस्य गृहीत्वाङ्गुष्ठमादरात्।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नम इति॥

अत्राद्ये अमुकशब्दे सम्बन्धनामनी विवक्षिते। द्वितीये गोत्रं स्पष्टमेव। तदेवं प्रयोगवाक्यं निष्पद्यते। अस्मत्पितर्यज्ञदत्तशर्म्मन् वासिष्ठगोत्रैतत्तुभ्यमन्नं स्वधा नमो नम इति। कल्पसूत्रेष्वपि वाक्यरचनाविशेषणशून्यैव दृश्यते। तद्यथा साङ्ख्यायनगृह्ये। अन्नस्यासावेतत्त इत्युद्दिश्य भोजयेदिति। विष्णुग्रन्थेऽपि। पित्रे पितामहाय नामगोत्रेभ्यो गोत्राभ्यामुदङ्मुखेष्वित्यादि।

न चात्र पत्नीविशेषणवतः पित्रादेर्द्देवतात्वे प्रमाणमस्ति। न चैवं वाच्यम्। "अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा। अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सहेति" शातातपस्मृतौ मातुः पत्या सह श्राद्धं कर्त्तव्यमिति वचनात् पत्नीविशेषणवतः पित्रादेर्द्देवतात्वं कल्पनीयमिति। यतः कल्पनायां पूर्व्वोपदर्शितपुराणादिस्थितप्रत्यक्षप्रयोगवाक्यविरोधः स्यात्। किञ्च पतिना सहेति वचनात् सहयुक्तेऽप्रधान इति शब्दानुशासनाच्च पत्युः सहयोगेनाप्रधानत्वात् प्राधान्योपस्थापकविशेष्यत्वानुपपत्तौ सभर्तृकायै मात्रे इति प्रयोगवाक्यं स्यात्। किञ्च यथा 'पात्नीवतं ग्रहं गृह्णाति' इत्यत्र पत्नीवतो निरपेक्षस्य देवतात्वे सिद्धे

'सजूर्देवेन त्वष्ट्रा सोमं पिब' इति सहत्वे श्रुतिसामर्थ्येन न त्वष्ट्रा सहितस्य देवतात्वमेवमिहापि 'पित्रे पितामहाय श्राद्धं कुर्य्यात्' इति निरपेक्ष-श्रुतेर्न पत्नीसहितस्य देवतात्वमिति। न च वाच्यम् तद्धितविरोधात्तत्र तथा। अत्र तु कल्पनीयं देवतात्वम्। सहश्रुतिसामर्थ्यात् सपत्नीक-स्यैव कल्प्यमिति। यतस्तत्रापि गृह्णातीति ग्रहणमात्र एवोद्देश्यत्वश्रव-णाद्देवतात्वं कल्प्यमेव। यथैन्द्रवायवं गृह्णातीत्यादिष्विन्द्रवाय्वादीनां। इतश्च न पत्नीविशेषणवतः पित्रादेर्देवतात्वम्। यतः 'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते। सभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इत्यादीनि वाक्यानि योषितां विशेषणत्वेनाप्युद्देश्यत्वं नास्तीत्येतदेव प्रतिपादयन्ति। न चैतद्वक्तव्यम् पृथग्दाननिषेधादपृथग्दानमनुमत-मिति। पतिविशेषणत्वेनाप्युद्देश्यत्वमभ्यनुज्ञायत इति योषिद्ग्रहण-स्याविशेषणत्वात्। यतोऽस्मिन् पक्षे पत्नीसाहित्यात्पुरुषाणामपि पृथग्दानाभावात्। तस्मान्न योषिद्भ्यो दद्यादित्येतावदेवात्र विधीयते।

'स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इत्ययं हेतुवन्निगदो-ऽप्यमुमेवार्थं द्योतयति। अत्र हि भर्तृपिण्ड इति पिण्डो व्यपदिश्यते न पत्नीपिण्ड इति। यदि पत्न्या अपि तस्मिन् पिण्डे भर्तृविशेषणत्वे-नोद्देश्यत्वं स्यात्तदा द्वयोरेवासौ पिण्ड इति द्वाभ्यां व्यपदिश्येत। तस्मात्पुरुषानेवोद्दिश्य प्रदीयमानपिण्डांशेभ्यो योषितामपि तृप्ति-र्भवतीति नोद्देश्या योषित इत्युक्तं भवति। अतएव मत्स्यपुराणे अग्निमत्कर्तृकामावास्याश्राद्धप्रयोगे पत्नीनां पृथक्पिण्डा विहिताः। न पुनः पितृविशेषणत्वेनोद्देश्यत्वं विहितमिति। तद्यथा

षड्भ्यस्तस्माद्धविःशेषात् पिण्डान् कृत्वा तथोदकम्।

दद्यादुदकपात्रैस्तु सलिलं सव्यपाणिना ॥

इत्यादिनोल्लेखत्रावनेजन-ग्रहण-निनयन-प्रत्यवनेजन-नमस्कार-गन्ध-पुष्पाद्यर्चनाद्यन्तं पित्रादिषट्पुरुषपिण्डदानप्रयोगमभिधायोक्तम् ।

ततः कृत्वान्तरे दद्यात्तत्पत्नीभ्यः कुशान् बुधः ।

तत्तत्पिण्डादिकं कुर्य्यादावाहनविसर्जनम् ॥

इति चतुर्व्विंशतिमतेऽप्युक्तम् ।

त्र्यब्दं वर्जयित्वैकं स्त्रीणां नास्ति पृथक्क्रिया ।

केचिदिच्छन्ति नारीणां पृथक्श्राद्धं महर्षयः ॥

इति साङ्ख्यायनगृह्येऽपि पत्नीनां पृथगेव पिण्डदानं विहितम् । न पुनः पतिविशेषणत्वेनेति । तस्मात् पित्रादीनां केवलानां देवतात्वात् सपत्नीकेति विशेषणशून्य एव पित्राद्युद्देशः कर्त्तव्य इति प्राप्तेऽभिधीयते । सपत्नीकानामेव देवतात्वमिति 'अन्यत्र पतिना सहेति वचनात् । न च सभर्त्तृकार्थे मात्र इति प्रयोगप्रसङ्गः । प्रतीयमानस्यापि पत्न्याः प्राधान्यस्याविवक्षितत्वात् । पतिसहत्वस्य प्राधान्यस्य च विवक्षितत्वे गौरवं स्यात् । प्राप्ते च कर्म्मणि गुणद्वयविधौ वाक्यभेदः स्यात् । अप्राधान्यकारणानां भूयसामुपलम्भात्तेषाञ्चैककारणापेक्षया बलीयस्त्वात् । विप्रतिषिद्धधर्म्मसमवाये भूयसां स्यात् सधर्म्मत्वमिति न्यायात् । अथ तानि कारणानि प्रदर्श्यन्ते । तत्र तावत् 'अन्वष्टकासु वृद्धौ च प्रति संवत्सरं तथा । अत्र मातुः पृथक्श्राद्धं' इत्येतावता पदकदम्बकेन मातृश्राद्धस्य पृथक्त्वमात्रमभिधाय अन्यत्र तद्व्यतिरेकाभिधानं कृतम् । 'अन्यत्र पतिना सहेति तत्र पूर्व्वमभिहिताप्राधान्यव्यतिरेकात्मकस्य प्राधान्यस्याप्यभिधाने विवक्षिताभिधानमेव । विव-

चिताभिहितव्यतिरेकातिरिक्तत्वात्। स्त्रीधर्मेषु स्त्रीणां पतिपारतन्त्र्यादप्राधान्यमुक्तम्। लोकतोऽपि तदेव गम्यते। तस्माद्वस्तुबलविरोधात् शब्दबलोपनीतं प्राधान्यमविवक्षितमिति कल्प्यते। ननु शब्दैकप्रमाणके श्राद्धकर्त्तृव्यापाररूपे देवतात्वेनाभिधाने प्राधान्यं शब्दबलोपनीतम्। लोकादिभिश्च पत्नीव्यापारे पतिपारतन्त्र्यमवगतम्। न च तयोर्व्विरोधोऽस्तीति। कथं तद्बलात् प्राधान्यस्याविवक्षेति। उच्यते। 'प्रथिता प्रेतकृत्येत्यादिवचनपर्य्यालोचनया-भोजनद्वारेण प्रमीतमनुष्योपकारिकेयं श्राद्धक्रियेत्यवगमात् पत्या सह पत्न्या अपि भोजने क्रियमाणे स्वकार्य्ये तत्परतन्त्रतास्तीति। तथैवाभिधाने प्राप्ते श्राद्धकर्त्तृव्यापारेण सह विरुद्धं लोकाद्यवगतमप्राधान्यमिति। तदनुरोधात् प्राधान्यमविवक्षितं गम्यते। पित्रे पितामहाय प्रपितामहाय श्राद्धं कुर्य्यादित्येवंविधे श्राद्धोत्पत्तिविधौ पित्रादीनां देवतात्वेऽवगते पूर्व्वावगतेन तेनैव प्रधानस्थानवरोधे पश्चादागच्छतस्तत्पत्नीनां देवतात्वस्यागन्तूनां निवेशोऽन्त इति न्यायादप्रधानस्थानाश्रयणमेवोचितमिति नोत्पत्तिशिष्टगुणविरोधोऽपि। न हि मुखान्तरेण निविशमानफलचमसवदुत्पत्तिशिष्टेन बाधितुं शक्यते। विशेषणत्वेन निविशमानं सुतरां न शक्यते। सर्व्वस्यापि विशेषणं प्रति साकाङ्क्षत्वात्। अतएव सामान्यतो विहितं विशेषणेन सम्बध्यते। यथा सोमस्त्रिपर्व्वन्वादिना विशेषणेन। न चैवं सति त्वष्टुरपि विशेषणत्वमुखेन प्रसङ्गः। विध्यभावात्। अत्र तु पतिना सह मातुः श्राद्धं कर्त्तव्यमिति श्राद्धे देवतात्वं विधीयत इति, वैषम्यात्। इतश्च पित्रादिश्राद्धे तत्पत्नीनां देवतात्वमप्र-

धानत्वञ्च । यतः शातातपेन पतिश्राद्धे पत्न्या अंशभागित्वमुक्तम् ।

एकमूर्त्तित्वमायाति सपिण्डीकरणे कृते ।
पत्नी पतिपितृणान्तु तस्मादंशेषु भागिनीति ॥

अंशशब्दो हि महाद्रव्यस्यैकदेशं वदन् पित्रादिभोज्यस्यांशित्वरूपत्वं महाद्रव्यत्वं गमयन् तद्भोक्तॄणां पित्रादीनां प्रधानदेवतात्वं गमयति। एकमूर्त्तित्वञ्चात्र प्रेतभावापगमेन पितृभावप्राप्त्या सादृश्यसन्निकर्षादिरूपमेव श्राद्धभोक्तृत्वयोग्यतापादकं साहृप्यम्। न पुनर्मुख्यमैकरूप्यं, तस्यासम्भवात् । न हि चेत्रज्ञद्वयस्यैक्यं शरीरैक्यं वा क्वचिच्छास्त्रे दृश्यते । नापि शिष्टसम्मतम् । न चाप्यबाधितम्। एकस्मिन्देहे चेत्रज्ञभेदात् बुद्धीच्छा-प्रयत्न-प्रवृत्तिवैमत्योत्पत्तेरिह नानात्मवादिनः । वृहस्पतिस्मृतावपि पित्रादिश्राद्धे मात्रादीनां सहभावेन देवतात्वं दृश्यते ।

स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते सुधासमम्।
पितामही च स्वेनैव स्वेनैव प्रपितामहीति ॥

शङ्खस्मृतावपि ।

अन्वष्टकां तथा मातृश्राद्धञ्चैव मृताहनि ।
एकोद्दिष्टं तथा मुक्ता स्त्रीषु नान्यत् पृथग् भवेत् ॥

षट्त्रिंशन्मतेऽपि ।

एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके ।
न पृथक्पिण्डदानन्तु तस्मात् पत्नीषु विद्यत इति ॥

नन्वत्र यतो भर्त्रा सहैकत्वं सा गता पत्नी तस्मात्पत्न्याः पृथक्पिण्डदाननिषेधावगमादनुद्देश्यत्वमेवावगम्यते। मैवं। पृथक् न विद्यत

इत्यभिधानादपृथग्विद्यत एवेत्यनुज्ञा गम्यते। न च तदा पत्युरपि पृथग्दानाभावात् पत्नीग्रहणमविवक्षितं स्यादिति वाच्यम्। यतोऽत्र पत्या सह पत्न्याः श्राद्धे क्रियमाणे पतिमपेक्ष्य प्राधान्याप्राधान्यनियमेन प्राधान्येनैव वा तुल्यप्रधानतया वा निर्द्देशो न कर्त्तव्यः, किन्तु पतिविशेषणत्वेनैव, इत्येवंविधाप्राधान्यविवक्षार्थत्वात् पत्नीग्रहणस्य भवति चैवंविधप्रधानाप्रधानविषयो निर्द्देशः। पर्षद्भोजनार्थपाकात् पृथक् चैत्रभोजनार्थः पाक इति न ह्यत्र चैत्रभोजनार्थः पाको नास्ति, न वा चैत्रग्रहणमविवक्षितं जातम्, किन्त्वपृथग्भावेऽप्यप्रधानत्वगमकम्। तथात्र पत्न्या अपीति। एवमेव चैतद्वचनं व्याख्येयम्। अन्यथा न विद्यत इत्येतावन्मात्रेऽर्थे पृथक् न विद्यत इत्येतावद्वाक्यं स्यात्। तथा च पृथगित्यनर्थकं भवेत्। अनेनैव च न 'योषिद्भ्यः पृथग्दद्यादवसानदिनादृते' इत्यत्रोक्तो योषिद्ग्रहणस्याविशेषत्वप्रसङ्गोऽपि निराकृतः। यत्तूक्तं 'स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इत्यत्र भर्तृपिण्ड इति पिण्डो व्यपदिश्यते। न पत्नीपिण्ड इति कृत्वा न योषितां तत्रोद्देश इति। तदपि न वाच्यम्। पत्युः प्राधान्याभिधानात्। पत्युः पत्न्याश्च देवतात्वाविशेषेऽप्येकेन प्रधानेनैव निर्द्देशस्योचितत्वात्। अतः सिद्धममावास्यादिकालिकेषु पित्रादिश्राद्धेषु तत्पत्नीनामप्यप्राधान्येनोद्देश्यत्वमिति। तथा चास्मत्पितर्यज्ञदत्तशर्म्मन् वासिष्ठगोत्र सपत्नीकैतत्तुभ्यमन्नमित्यादिप्रकारप्रयोगवाक्यमाचारानुग्रहवशात् प्रत्येतव्यम्। येऽत्र मन्यन्ते। स्थितञ्चेत्पतिश्राद्धे पत्नीनामुद्देश्यत्वं तर्हि सम्बन्ध-नाम-गोत्राणि यथावत् परिकीर्त्तयेत् 'नामगोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः' इत्यादिविधिसिद्ध्यै पत्नी-

नामपि गोत्रनामनी कीर्त्तनीये इति, तेषान्तु मतेन अस्मत्पितर्यज्ञदत्त-शर्म्मन्वासिष्ठगोत्र सावित्रीनामिकया वासिष्ठगोत्रया पत्न्या सहैतत्तुभ्य-मन्नमित्यादिप्रकारकं प्रयोगवाक्यमनुसन्धेयम् । अस्मिंस्तु पक्षे यदा बहुपत्नीकः पिता भवति तदा अमुकामुकनामिकाभिर्वासिष्ठगोत्राभिः पत्नीभिः सहैतत्तुभ्यमन्नमित्यादिप्रकारकं प्रयोगवाक्यं प्रयोज्यम् । स्वजननीव्यतिरिक्तानामपि एकत्वं सा गता भर्त्तुरित्यादिवाक्यवशाद-विशेषेण पतिश्राद्धेऽंशभागित्वात् । "ननु स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्त इति" मातृशब्देन व्यपदेशात् जननीव्यतिरिक्तानां पितृप-त्नीनां न सहोद्देश इत्यवगम्यते । नैतदेवम् । सर्व्वासामपि मातृत्वात् । कथमित्थं "सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्व्वास्ता-स्तेन पुत्रेण प्राह पुत्रवतीर्मनुः" ॥ इति मनुवचनात् । नन्वन्यासां सोदरजातपुत्राभावे सपत्नीपुत्रेण पुत्रवत्त्वमितिवचनार्थावगमान्न सप-त्नीपुत्रमात्रविषयत्वं वचनस्येति कथमविशेषेणोक्तप्रयोगवाक्यरचनोप-पद्यते । उच्यते । सपत्नीपुत्रेणापि पुत्रवतीत्वं भवतीत्येतावन्मात्रस्यात्र वचने विवक्षितत्वात् । "एका चेत् पुत्रिणी नान्या" एवंविधायां विव-क्षायामेव शब्दार्थाध्याहारप्रसङ्गः । ननु सर्व्वस्यापि शब्दस्यान्यनिवृत्ति-परत्वान्नाध्याहारदोषः, मैवम् । स्वार्थसमर्पणपरत्वमेव शब्दानामौत्स-र्गिकं नान्यनिवृत्तिपरत्वम्, तत्परत्वे हि सर्व्वेषां परिसंख्यार्थत्वापत्तेः । यदि चैकाचेदित्यन्यनिवृत्तिपरं स्यात्तदा द्वयोः पुत्रवत्योस्तत्पुत्राभ्यां तृतीयाद्याः पुत्रवत्यो न स्युः । अथैका चेदित्येतन्न द्वितीयानिवृत्त्यर्थं किन्तु स्वेन पुत्रेण पुत्रिण्याः सपत्न्याः सपत्न्यन्तरपुत्रेण न पुत्रवतीत्वं स्वेनैव तु तद्भवेत्, अपुत्राया एव तु सपत्नीपुत्रेण पुत्रवतीत्वमिति ।

पुत्रवतीव्यावृत्त्यर्थमेवकेति पदमिति। मैवम्। एकपदस्य पुत्रवतीव्यावर्त्तनसामर्थ्याभावात्। स्वार्थविपरीतो ह्यर्थः शब्देन व्यावर्त्त्यते नान्यः। अनेक एव चैकशब्दार्थविपरीतो न तु पुत्रवतीत्येषः। नन्वस्त्वेकशब्दः पुत्रिणीव्यावर्त्तनासमर्थः पुत्रिणीशब्द एव तु भविष्यति। ननु चित्रमिदम्, पुत्रिणीशब्द एव पुत्रिणीव्यावर्त्तक इति। स्वार्थादन्योहि शब्देनार्थो व्यावर्त्त्यते न पुनः स्वार्थ एव। न हि भवति पुत्रिणीं न निमन्त्रयेत्यत्र सपुत्रायाः व्यावृत्तिः। अथ किं पुत्रिणीं न निमन्त्रयेत्यत्रापि न भवति व्यावर्त्तकः। मैवम्। न ह्यत्र पुत्रिणीशब्दो व्यावर्त्तकः, किन्तु नकारः, न चासौ प्रकृतेऽस्ति। अथ स्वेन पुत्रेण पुत्रिण्याः पुत्रवतीत्वाभावशङ्काविषयत्वायोगात् सिद्धेन च तत्पुत्रिणीत्वेनान्यासां पुत्रवतीत्वसाधनात् स्वेन पुत्रेण पुत्रवत्याः पुत्रवतीत्वप्रतिपादनमनाकाङ्क्षितमनर्थकमात्माश्रयदूषितञ्चेति। न हि भवत्येवंविध उपदेशः या येन पुत्रेण पुत्रिणी भवति सा तेन पुत्रेण पुत्रवतीति। एवं हि सत्येकस्यैव विधेयत्वानुवाद्यत्वे उपलक्षणत्वोपलक्ष्यत्वे ज्ञातत्वाज्ञातत्वे च युगपदेकं प्रत्येव स्याताम्। अतः पुत्रिणीशब्दः समभिव्याहृतपदान्तरसहकृतः पुत्रिणीं व्यावर्त्तयतीति न कश्चिद्विरोधः। उच्यते। या येन पुत्रेण पुत्रवती सा तेन पुत्रेण पुत्रवतीत्युपदेशासम्भवेऽपि एकस्याः पुत्रेण सपत्नी पुत्रवत्यपुत्रा वा पुत्रवती भवतीत्यन्यस्याः पुत्रवत्त्वोपदेशसम्भवात् समभिव्याहृतपदान्तरसहकृतोऽपि न पुत्रवतीनिवर्त्तने समर्थः पुत्रिणीशब्द इति। तदेवमेकस्याः पुत्रेण पुत्रवती पुत्ररहिता वा पुत्रवतीत्येवम्परत्वाद्वचनस्य सपत्नीपुत्रमात्रविषयं वचनमिति सर्व्वा अपि पितृपत्न्यः साधारणकालिके पितृश्राद्धे सहभावेनोद्देश्याः।

नन्वेवं सति स्वे पुत्रे विद्यमानेऽपि सपत्नीपुत्रेणौर्द्धदेहिकं कर्त्तव्यं स्यात् पुत्रत्वेन तस्याप्यधिकारात्। नैवम्। तस्यौर्द्धदेहिकं यावतामधिकारस्तावद्भिः पृथक् पृथक् क्रियते, किन्तु सर्व्वानुमत्या सङ्कदेकेनैवेति वच्यते, अन्यथा सोदरैरपि सर्व्वैस्तस्य पृथगनुष्ठानमापद्येत। सपत्नीपुत्रस्य ज्येष्ठत्वेऽपि स्वोदरजातस्यैवान्तरङ्गत्वात् मातुरौर्द्धदेहिकेष्वधिकारः। ननु यदि स्वेन पुत्रेण पुत्रवत्यपि सपत्नीपुत्रेण पुत्रवती स्यात् तदा "भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥" इति वचनादमावास्यादौ पितृश्राद्धे क्रियमाणे पुत्रवतः पितृव्यस्यापि पितृत्वात् द्विपितुः पिण्डदानं स्यादिति स्मृतेस्तस्याप्युद्देशः प्राप्नोति, इति चेत् हन्त तर्ह्यपुत्रपितृव्यस्योद्देशः पितृश्राद्धे प्रसज्यमानः केन वार्य्येत। अथ पितृव्ये पितृत्वस्य गौणत्वादनुद्देश इति मतम् तर्हि कदाचिदपि भ्रातृसुतः सुतरहितस्य पितृव्यस्य श्राद्धं न कुर्य्यात्। अथ पुत्रकार्य्यकरत्वेनोक्त इति कृत्वा तत्कुर्य्यात्, हन्तेदानीममावास्यादिकालेऽपि पितृश्राद्धे किमिति पितृव्योद्देशं न कुर्य्यात्। योऽपि च द्व्यामुष्यायणेन द्वितीयः पितोद्दिश्यते सोऽपि गौण एवेति नोद्देशमर्हतीति। अत्रोच्यते, न वयमत्र मातृत्वेन जननीव्यतिरिक्तानां पितृपत्नीनां सहभावेनोद्देश्यत्वं ब्रूमः, किन्तु पितृपत्नीत्वेनैव, "स्वेन भर्त्त्रा समं श्राद्धं माता भुङ्क्ते सुधासम"मित्यत्र मातृशब्दस्य पितृपत्नीमात्रोपलक्षणपरत्वात्, बहुषु वचनेषु पत्नीशब्दपुरस्कारेणैकश्राद्धे भोक्तृत्वविधिदर्शनात्। बहुपत्नीके च पितामहे सर्व्वासां तत्पत्नीनां सहोद्देशे न कश्चित् सन्देहोऽस्ति। तादृशे प्रपितामहेऽपि न सन्देह इत्यविचारितसिद्धः सर्व्वोद्देश

इति। मातामहादिश्राद्धेषु तु सहभावेन तत्पत्नीनामुद्देशो मातामहानामप्येवमित्यादिपितृश्राद्धसाम्योपदेशादवगन्तव्यः। "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता" इत्यादिभिर्व्वचनैश्चावगन्तव्यः। तदेवमेतन्निर्व्यूढं, यत् बहुपत्नीकपित्रादिदेवत्यामावास्यादिसाधारणकालिकश्राद्धप्रयोगे अस्मत्पितर्यज्ञदत्तशर्म्मन् वासिष्ठगोत्रामुकामुकनामिकाभिर्वासिष्ठगोत्राभिः पत्नीभिः सहैतत्तुभ्यमन्नमित्यादिभिः स्त्रीपुंसोद्देशोपलक्षितैर्वाक्यैरनुष्ठानं कर्त्तव्यमिति।

अत्र सिद्धान्तोऽभिधीयते। तत्र तावन्मुख्ये पार्व्वणे जननीव्यतिरिक्तानां पितृपत्नीनां न सहोद्देशः कर्त्तव्यः। नापि पितृजननीव्यतिरिक्तानां पितामहपत्नीनाम्, नापि पितामहजननीव्यतिरिक्तानां प्रपितामहपत्नीनाम्। तासां हि स्वोदरजातसुतसद्भावेऽन्योदरसुतानां व्यवधानात्। श्राद्धेषु नियमेनाधिकारो नास्तीति वक्ष्यते। अनियमेन तु कृपया स्नेहेन वा भवति। न चासौ नित्येन विधिना सम्बन्धमर्हति, नित्यानित्यसंयोगविरोधात्। ननु तासां पित्रादिपत्नीत्वेन सहभावोऽयं नित्यविधिपृष्ठभावेनागतो नाधिकारमपेक्षते, नित्यविधिपृष्ठभावेनागतत्वादेव वा नित्यमधिकारान्तरमनुमाय प्रवर्त्तते। नैवम्। पत्नीत्वेनापि सहभावोऽभवन् स्वतन्त्रसिद्धमेवाधिकारमपेक्ष्य भवितुमर्हति। क्लृप्तो हि कल्प्यं बाधते, निश्चितश्चाप्यनिश्चितम्, संवादी च असंवादिनम्। जननीश्राद्धाधिकारो हि क्लृप्तो निश्चितः संवादी च। अन्यस्तु विपरीतः। इतश्च जनन्यादिव्यतिरिक्तानां न सहभावेनोद्देशः नित्यानित्यसंयोगविरोधान्तरात्। न हि जनन्यादिव्यतिरिक्ता पित्रादिपत्न्यो भवन्त्येवेति नियमोऽस्ति। सोऽयं तासां पाक्षिक-सहभावो

न नित्यकर्म्मसम्बन्धार्हः। जननी तु नियमेन भवत्येवेति सहभाव-मर्हति। अतएवापुत्राणामपि तासां न नित्ये कर्म्मणि सहभावः, यतः सद्भाव एव तासामनित्यो भवति। योऽपि मातृत्वादेव तासां सहभावोऽभिमतः सोऽपि न समीचीनः। गौणं हि तासां मातृत्वं पितृव्यस्येव पितृत्वम्। गौणमुख्ययोर्हि मुख्ये सम्प्रत्यय इति न्यायात्। मातृशब्दवता वाक्येनोपदिश्यमानोऽर्थो जनन्या एव भवतीति। अन्यथा पितृव्यस्यापि गौणपितृरूपत्वात् द्व्यामुष्यायणकर्त्तृक इवामा-वास्याश्राद्धे क्षेत्रिणः समुद्देशः प्राप्नोति। ननु यदि मुख्ये सम्प्रत्ययः क्षेत्रिणोऽपि तर्हि नोद्देशः प्राप्नोति। नैवम्। "द्वौ द्वौ पिण्डौ निर्व्वपेद्युरेकैकस्मिन् पिण्डे द्वौ द्वावनुकीर्त्तयेयु"रित्यादिवचनवशात् तदुद्देशेन तु पितृभ्यः पितामहेभ्यो दद्यादित्येतद्दशादिति। अतएव द्वौ पिण्डावित्यादिवाक्यानामर्थवत्त्वमन्यथा पितृत्वेनैव तत्प्राप्तेरानर्थक्यं भवेत्। किञ्च क्षेत्र्यादिपिण्डदानार्थमेव क्षेत्रजादिपुत्रोत्पत्तिविधा-नादमुख्येऽपि संप्रत्ययो न तु मातृविषये। इतश्च मातुरुद्देश्यत्वेन जननीव्यतिरिक्तानां नोद्देशः तासां मातृत्वाभावात्। "सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनु"रित्यनेन सपत्नीपुत्रस्य पुत्रकार्य्यकरत्वं विहितं न मातृसपत्न्या मातृत्वं मातृकार्य्यकरत्वं वा। ननु किमिदं मातृकार्य्यं नाम। उच्यते। नित्याधिकारविहितस्य पुत्र कर्त्तृकस्य मातृश्राद्धस्य देवतात्वेन निष्पादनम्। अथ किं पुत्रकार्य्यं नाम। उच्यते। लोकान्तरगताया मातुः श्राद्धादिना तृप्त्यादिनिष्पादनम्। ननु कोऽत्र विशेषः। यदेव हि पुत्रकार्य्यं श्राद्धं तदेव देवतात्वेन मात्रा निष्पाद्यत इत्येकमेव द्वयोः कार्य्यं। सत्यमेवं। किन्त्वेकस्यैव

श्राद्धस्य प्रयोजनभेदरूपः कार्य्यभेदोऽभिमतः। अतो यत्र नित्यानुष्ठानसिद्धिमनुसन्धाय पुत्रः श्राद्धे प्रवर्त्तते तत्र पुत्रः स्वकार्य्यमेव करोतीति न मातृसपत्न्याः पार्व्वणे सहभावेनोद्देश इति। अनेनैवाष्टकासंक्रान्त्युपरागादिकालविहितानि नैयमिकानि यानि श्राद्धानि व्याख्यातानि पार्व्वणधर्म्मातिदेशवन्ति हि तानि भवन्ति। यानि पुनः शुद्धीच्छया[१] फलेच्छया वा पितृतृप्तीच्छया वा क्रियन्ते तान्यपि पार्व्वणधर्म्मातिदेशवन्ति। पितृश्राद्धान्येवंविधान्येव। तदेवममावास्यादिकालिकपितृश्राद्धे जनन्याः सहभावेनोद्देशेन जननीसपत्नीनामिति स्थितम्। यत्र तु पृथङ्मातृश्राद्धं विधीयते वृद्धिश्राद्धादौ तत्रापि मुख्ये सम्प्रत्यय इति न्यायाज्जनन्या एवोद्देश्यत्वं नान्यासामिति। यदा तु नानापितृतृप्तिकामनया विशिष्टे महालयादिकालविशेषे गयादितीर्थविशेषे वा श्राद्धं कुर्य्यात् तदा पुत्रवतीनामपुत्राणां वा मातृसपत्नीनामपि श्राद्धं कुर्य्यात्। पुत्रवतीनामपि तासां श्राद्धेषु कृपया स्नेहेन वा सपत्नीपुत्रस्यापि पाक्षिकाधिकारवत्त्वात्। एतेनैव पितृजननीव्यतिरिक्ताः पितामहपत्न्यः पितामहजननीव्यतिरिक्ताः प्रपितामहपत्न्योऽपि व्याख्याताः। जननीसपत्नीनां गौणत्वनिरूपणेन तज्जनकानामपि गौणमेव मातामहत्वमिति न पार्व्वणश्राद्धे तेषां देवतात्वमित्यपि निरूपितं भवति। यदा तु विशिष्टदेशकालादौ नानापितृतृप्तिकामनया श्राद्धं कर्त्तुमिच्छेत् तदा पाक्षिकेणाधिकारेण तेषामपि कुर्य्यादिति स्थितम्। तदेवं श्राद्धकर्तृपितामहादीनां

(१) शुद्ध्येच्छया इति ख०।

मातामहादीनाञ्च सपत्नीकानां षणाममावास्यादिकालविहिते मुख्य-पार्व्वणे देवतात्वे व्यवस्थिते पार्व्वणधर्म्मातिदेशयुक्तेषु साधारणकालिकेषु नित्यनैमित्तिककाम्यगोष्ठीशुद्धिश्राद्धेष्वपि तेषामेव देवतात्वमिति स्थितम् । यात्रायान्तु यदाधिकार्य्येव स्वयं यात्रां कर्त्तुमारभेत् तदा तावत् स्वपितृभ्य एव श्राद्धं कुर्य्यादित्येतत् सिद्धमेव । यदा तु स्वयमशक्तस्तदारम्भे सामदानादिना समुत्साह्य कर्त्त्रन्तरं प्रेरयति तदा सन्देहः । किमयं कर्त्ता स्वेभ्यः पितृभ्यः श्राद्धं कुर्य्यात् उताधिकारिपितृभ्य इति । तत्र "यो यः कश्चित्तीर्थयात्रामनुगच्छेत्" इत्यादिना कर्त्तव्यस्य श्राद्धोपदेशात् श्राद्धदेवताविधायकानां पित्रादिशब्दानां सम्बन्ध्यपेक्षायां सन्निहितः कर्त्तैव सम्बन्धी भवितुमर्हति । ननु येन केनचित् क्रियमाणायामपि यात्रायामधिकारवत्कर्तृत्वमप्यधिकारिण एव अधिकारकर्तृत्वयोः सामानाधिकरण्यात् । न हि परैकसमवेतफलोत्पादके कर्म्मणि कश्चिदात्मनः कर्तृत्वं बोद्धुमर्हति । न चानर्हं शब्दो बोधयति । तस्माच्छब्दप्रमाणकेषु कर्म्मस्वधिकारिण एव कर्तृत्वं शब्देन ज्ञापितम् । अतस्तस्यैव भवति । कथमन्यथा अन्येन कृतमधिकारिणैव कृतमित्युच्यते । सत्यमेवं । शक्तिरेव त्विह कल्प्यवचनेनापादिता । अतः कर्त्रन्तरेण कृते कर्म्मण्यधिकारिणः[१] फलभागित्वेन कर्तृत्ववादो गौण एव । लौकिकं हि कर्तृत्वं प्रत्यक्षादिप्रमेयम् । लोकश्च यस्मिन् प्रयतमाने यत् कर्म्म निष्पद्यते तमेव तत्र कर्त्तारं व्यवहरति । अस्तु वा कर्त्रन्तरेण क्रिय-

---

(१) अधिकारिवशादिति ग० ।

माणे कर्म्मण्यधिकारिणः प्रयोजककर्त्तृत्वेन कर्तृत्ववादो मुख्य एव। किन्तु यदधिकारबोधसमये साक्षात् कर्तृत्वमवगतं तद्वैयधिकरण्यं प्राप्तमेव। अतः कर्त्तैव स्वपितृभ्यः श्राद्धं कुर्य्यादिति। अत्रोच्यते। मुख्यवदनुकल्पावस्थायामपि यथावगतान्येवानुष्ठातव्यानि प्रकृते चाधिकारिकर्तृसम्बन्धिपितृभ्यः श्राद्धमवगतम्। तदन्योऽपि कर्त्ता कुर्व्वंस्तेभ्य एव करोति। कर्त्रवस्थायां स्थितमपि श्राद्धं याचाङ्गमेव न कर्त्रङ्गम् अनन्यनिष्ठभावार्थत्वे सत्यधिकारविधिना गृहीतत्वात्। अतो याचाधिकारिपितृभ्यः श्राद्धमिति। पुत्रार्थस्य तु काम्यवद्देवताः। "एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते" इत्येवं लक्षणलक्षिते तु नैमित्तिके पार्व्वणधर्म्मातिदेशाभावान्न षण्णां देवतात्वं किन्त्वेकस्यैव। अस्मिंश्च साधारणकालिकेऽपि न सपत्नीकस्य देवतात्वमेकोद्दिष्टसमाख्याबाधप्रसङ्गात्। "पत्नी पतिपितृणान्तु तस्मादंशेषु भागिनी" इत्यादिवाक्यबलाज्जघन्यप्रमाणस्य बाधोऽस्त्विति चेत् मैवं। समाख्यानधिष्ठिते विषये वाक्यावकाशादविरोधात् प्रमाणसमावेशलाभे बाधस्यान्याय्यत्वात्। सांवत्सरिकन्तु केषाञ्चित् पितृपितामहाद्याचारपरम्परया स्मृतिविशेषानुग्रहवशाच्चैकदैवत्यं केषाञ्चित्त्रिदैवत्यं। तत्र च मात्रादीनां मातामहादीनाञ्चानुद्देशः। तदेतत् सांवत्सरिकप्रकरणे विस्तरेण निर्णेष्यते। षोड़शश्राद्धानि त्वेकदैवत्यानीति प्रेतश्राद्धप्रकरणे वक्ष्यते। तेषां तु श्राद्धानामाभ्युदयिकश्राद्धानुष्ठाने प्रसक्ते स्वकालात्सपिण्डीकरणापकर्षे तदन्ततयापकृष्यानुष्ठाने कृते तान्येव च पुनः कुर्य्यादिति वचनादावर्त्तमानानि प्रतिमास्यानि त्रिदैवत्यानि कार्य्याणि। सपिण्डीकरणात् प्रेतभावापगमे सति तेषामनुष्ठीयमानत्वात्। सपिण्डीकरणञ्च पार्व्वणैकोद्दिष्ट-

कर्मद्वयात्मकमिति चतुर्दैवत्यं। नारायणबलिस्तु ब्रह्म-विष्णु-शिवाः सपरिवारो यमः प्रेतश्चेति पञ्चदैवत्यः। तथा चोक्तं भविष्योत्तरादिषु।

पञ्चपिण्डान् प्रदद्याद्वै दैवं रूपमनुस्मरन्।
प्रथमं विष्णवे दद्याद् ब्रह्मणेऽथ शिवाय च॥
यमाय सपरिवाराय चतुर्थं पिण्डमुत्सृजेत्।
मृतं सङ्कीर्त्य मनसा गोत्रपूर्वं ततः परम्।
विष्णोर्नाम गृहीत्वैवं पञ्चमं पूर्ववत् क्षिपेत्॥

इति विष्णोर्नाम गृहीत्वेत्यनेनाभेददृष्टिरुक्ता एवञ्च सत्येवंविधप्रयोगवाक्यमनुमीयते। वासिष्ठगोत्र अस्मत्पितर्यज्ञदत्त एतत्ते इत्यादि। तदेवं मुख्यपार्वणनित्यनैमित्तिककाम्यगोष्ठीशुद्धियात्रापुष्टिश्राद्धेषु एकोद्दिष्टसंज्ञके नैमित्तिके सांवत्सरिकेषु पुनरावर्त्तमानेषु च प्रतिमास्येषु सपिण्डीकरणे नारायणबलौ च देवतानिर्णयः कृतः। अथेदानीमाभ्युदयिके देवतानिर्णयः क्रियते। तत्र वृद्ध्याभ्युदयिके मार्कण्डेयपुराणे।

पितरश्चात्र सम्पूज्याः ख्याता नान्दीमुखास्तु ये।

याज्ञवल्क्यस्मृतौ।

एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखान् पितॄन्।
यजेत दधिकर्कन्धुमिश्राः पिण्डा यवैः क्रियाः॥

विष्णुपुराणे।

नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृहीति।

ब्रह्मपुराणे।

जन्मन्यथोपनयने विवाहे पुत्रकस्य च।

पितॄन् नान्दीमुखान् नाम तर्पयेद्विधिपूर्वकम् ॥

मत्स्यपुराणे।

उत्सवानन्दसन्ताने[१] यज्ञोद्वाहादिमङ्गले।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम्।
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च ॥

अत्र बहुवचनान्तेन मातृशब्देन मातृ-पितामही-प्रपितामह्यस्तिस्र उच्यन्ते। अतएव शातातपस्मृतौ।

तिस्रस्तु मातरः पूर्वं पूजनीयाः प्रयत्नत इति।

पितृशब्देन च पितृ-पितामह-प्रपितामहाः, मातामहशब्देन च मातामह-प्रमातामह-वृद्धप्रमातामहाः।

अतएव पुलस्त्यः।

मातुः पितरमारभ्य त्रयो मातामहाः स्मृता इति।

कात्यायनोऽप्याह।

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति॥

षड्भ्य इति पुंवर्गद्वयविवक्षया मातृश्राद्धस्य "संपूज्या मातरः पूर्वं" इति स्मृत्यन्तरे विहितत्वात्। अत्र नान्दीमुखः पितृगणः पूर्वं दर्शितः "ऊर्द्धवक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः" इति। एते दिव्यपितरः मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः नान्दीमुखाश्च तद्भेददृष्टिविधया उद्देश्यस्वरूपेऽन्तर्भावनीया इति पूर्वमेव पूर्वोत्तरपक्षप्रपञ्चनेन निर्णीतम्। अत्र नान्दीमुखानां पितृणामिदमासनं नान्दी-

(१) उत्सवानन्दसम्भारे इति ख०।

मुखान् पितॄनावाहयिष्ये इत्येवमादिभिर्वाक्यैः प्रयोगो विधेयः। एवमेव च कात्यायनीयं प्रयोगवचनं । "नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छति नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च" इति। कर्माङ्गाभ्युदयिकेष्वेत एव पितरो देवताः। "निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्" इति वचनेन वृद्धिश्राद्धधर्मातिदेशात्। तदेवमत्र मातृ-पितामही-प्रपितामहीनां पितृ-पितामह-प्रपितामहानां मातामह-प्रमातामह-वृद्धप्रमातामहानाञ्च वृद्धिश्राद्धदेवतात्वे स्थिते वृद्धौ नान्दीमुखान् पितॄन् यजेत इत्यादिषु त एव नान्दीमुखशब्दाभिधेयत्वेन विवक्षिताः ।

ये तु ब्रह्मपुराणाभिहिताः ।

ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्विति ।
प्रसन्नमुखसंज्ञाः स्युर्मङ्गलीया मतास्तु ते ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्त्तिताः ।
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखा इति ॥

ते प्रोष्ठपदे पौर्णमासीनिमित्त एव श्राद्धे देवताः न पुत्रजन्मादिकालिके नान्दीमुखान्तरे इति प्रकीर्णकालप्रकरणे वक्ष्यामः । इह तावदेतावत् सिद्धं। यन्नामकरण-चौलोपनयन-विवाहादिषु यः कर्त्ता स नान्दीमुखविशेषणवद्भ्यो मनुष्यपितृभ्यः श्राद्धं कुर्यादिति सन्ति च प्रकृतेषु कर्मसु कर्तृविकल्पाः । तथाहि तावन्नामकरणे दशम्यामुत्थाप्येति प्रकृत्य शङ्खलिखितौ। "तदहरेव नामकरणं कुलदेव-

तानत्वचादिसम्बद्धं पिता कुर्यात्। अन्यो वा कुलवृद्धः इति । अनेन नामकरणात् प्रभृति ये संस्कारास्तेषु पित्रभावे आवश्यकसंस्कारापेक्षितकर्तृविधिसिद्ध्यर्थं यथाप्रत्यासत्ति कुलीनानां कर्तृत्वमुक्तं ।

उपनयने त्वाह याज्ञवल्क्यः ।

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकं ।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेदिति ॥

अत्र गुरुग्रहणात् पितैव तावदुपनयनं कुर्यादित्यपरार्कादयः। पितुरभावे तस्मिन् उपनयनकर्तृत्वायोग्ये वा कर्त्रन्तरमापस्तम्बादयो दर्शयन्ति। "तमसो वा एष तमः प्रविशति यमविद्वानुपनयेत यश्च विद्वानिति हि ब्राह्मणं तस्मादभिजनविद्यासमुपेतं समाहितं संस्कारमीप्सेत" ।

याज्ञवल्क्यः ।

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैरिति । वक्ष्यमाणः स्वात्मानमुपनयेदित्यादिभिः पितृव्यतिरिक्तस्याप्युपनयनकर्तृत्वं गम्यते ।

कन्याविवाहे चाह कात्यायनः।

स्वयमेवौरसीन्दद्यात् पित्रभावे तु बान्धवाः ।
मातामहस्ततोऽन्यो हि माता वा धर्मजां सुतामिति ॥

याज्ञवल्क्योऽपि ।

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

प्रकृतिस्थो नामाविप्लुतबुद्धिः। अप्रकृतिस्थेन हि स्वातन्त्र्यार्हेणापि कृतं कार्यमकृतमेव भवति ।

तदाह नारदः ।

स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिङ्गतः ।
तदप्यकृतमेव स्यादस्वतन्त्रत्वहेतुत इति ॥

स्वतन्त्रोऽपीति पितृत्वादिना स्वतन्त्रत्वादिना स्वतन्त्रत्वार्होऽपीत्यर्थः । अप्रकृतिङ्गतो वातादिना विप्लुतबुद्धिस्तत्कृतं कन्यादेर्वाग्दानाद्यकृतमेव वेदितव्यम् । तथा ।

पिता दद्यात् स्वयं कन्यां भ्राता चानुमतः पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते ।
तस्यामप्रकृतिस्थायान्दद्युः कन्यां स्वजातय इति ॥

तदेवं कर्तृविकल्पे यदा पितृव्य उपनयनादिकर्त्ता स्यात्तदा वृद्धिश्राद्धं केभ्यः पितृभ्यः कुर्य्यात्। किं स्वेभ्य उतोपनेयादिसम्बन्धिभ्य इति। ननु पितैव तावत्स्वेभ्यः कुर्य्यान्नास्वेभ्य इति क्रमः कस्मात्। उच्यते । श्राद्धदेवताविधायकानां मातृ-पितृ-मातामहादिशब्दानां सम्बन्धिशब्दत्वात् सम्बन्ध्यपेक्षायां वृद्धिश्राद्धकर्तृत्वेनोपात्त एव सम्बन्धी गम्यत इति । कुतस्तर्हि सन्देहः । यदा हि पितृव्यतिरिक्त उपनयनाधिकारितां प्राप्तस्तदा प्रधानेऽधिकृत एवाङ्गेऽधिकृत इति न्यायात् स एव वृद्धिश्राद्धाधिकारिताङ्गत इति पित्रादिपदार्थस्य सम्बन्धित्वेन विशेषको भवति। अतः सोपि स्वेभ्य एव दद्यादिति निश्चयात्। ननु अत्र पितैव मुख्योऽधिकारी तदसम्भवे त्वन्यः, देवताविधिस्तु मुख्येनैव निराकाङ्क्षीकृतो नासम्भवोपस्थापितममुख्यं स्वीकरोति। मैवं। अधिकारी हि विशेषको न पिता। नानिष्ट्वा तु पितृश्राद्धे कर्म वैदिकमाचरेदित्येवमुत्पन्ने वृद्धिश्राद्धमात्रेऽयं देवताविधिः सम्बद्धः। न च वृद्धि-

श्राद्धमात्रं पित्रेकसम्बद्धं । पुत्रसंस्कारव्यतिरिक्तेष्वपि कर्मसु तद्विधानात्। तस्माद्यो यदोपनयनादावधिकारं प्रतिपद्यते स तदा स्वपितृभ्यो वृद्धिश्राद्धं कुर्यादिति प्रतिपद्यामहे। अतो यदा पितृव्यतिरिक्तः कश्चित् भ्रात्रादिरुपनयनादिकं कुर्य्यात्तदा स्वपितृभ्य एव श्राद्धं दद्यादिति । ननूपनयनादावुपनेयादिरेवाधिकारी । उपनेता तु कर्त्तैव ऋत्विगादिवत्। ननु यदि कर्मफलभागेवाधिकारी तर्हि जातेष्टौ पुत्रस्यैवाधिकारः प्राप्त इति। न पुत्रगतस्य पूतत्वादेः पित्रैव काम्यमानत्वात् पितुरेवाधिकारः, प्रकृते तु पितृव्यतिरिक्तानामुपनेयादिसमवेतफलकामनाऽयोगात् । मैवं । उपनयनं नामोपनेयादन्यस्य व्यापारः तत्र हि कर्मकारकीभूतस्योपनेयस्य कर्तृत्वानुपपत्तेः। कर्मकर्त्तुस्तु विवक्षितमेव कर्तृत्वम्। न चात्र तद्विवक्षाद्योतकं किमप्यस्ति पदजातं। तमहमात्मानं पातयामीत्यादिषु पुनरस्मदात्मादिशब्दसमभिव्याहारात् कर्तृकर्मणोरभेदाध्यवसानमुपपद्यते। अतो नोपनेयादीनां स्वसंस्काराधिकारः। ननु नात्र प्रापणार्थो नयतिः किन्तूपसर्गसन्निधानात् मौञ्जी बन्धनादिरूपकर्मान्तरवचनः । मैवं। उपसर्गयोगे ह्ययमाचार्यसमीपप्रापणार्थ एव भवति न पुनरप्रसिद्धार्थान्तरवाचकः। अस्य चार्थस्याध्ययनापेक्षितगुरुशिष्यसन्निधिविशेषापादकत्वेन दृष्टार्थत्वात्। न पनेयव्यतिरिक्तकर्तृकेऽस्मिन्नुपनयनरूपे व्यापारे विधिना नोपनेयः प्रवर्त्तयितुं शक्यः । स्वव्यापारे हि पुरुषाः कर्तृत्वेन नियुज्यन्त इति न्यायात् । यदि च कर्मफलभागित्वादुपनेयोऽधिकारी तदा गर्भोऽपि स्वसंस्कारकत्वेन स्वोपकारकपुंसवनाद्यधिकारी स्यात्। प्रमीतस्यौर्द्धदेहिकादौ । अशक्तेनैवमिति चेत्। तुल्यमुपनयनेऽपि ननूपनेय आचा-

र्थ्यादिप्रवर्त्तने न शक्तः। यथा पुरोहितप्रवर्त्तने न ऋत्विक् प्रवर्त्तते न वा क्षत्रियवैश्यौ यागे। ननु विधिना स्वयमप्रवर्त्तितः किमर्थमन्यं प्रवर्त्तयेत्। क्षत्रियादयस्तु विधिना यागे प्रवर्त्तन्त एव पुरोहितादिकं याजने प्रवर्त्तयन्ति। अध्ययने च प्रवर्त्तितोऽध्यापने। न चाचार्यमुपगच्छेदित्युपगमनं विहितं। येन तत्र विधिना प्रवर्त्तितः सन्नाचार्यमुपनयने प्रवर्त्तयेत्। उपनयनविधिनार्थादुपगमनं माणवकस्य विहितं परिणयनविधिना परिगमनञ्च कन्याया इति चेत् मैवं। अर्थप्राप्ते विधेरव्यापारात्। यत्रान्यस्याधिकारिणो विधीयमानं कर्म्म स्वसिद्ध्यर्थमन्यस्याधिकारिकर्त्तन्तरगतं कर्माक्षिपति न तत्तस्यावश्यकं। यथा यागविधिनाक्षिप्यमाणा याजकप्रवृत्तिः, यथा वा क्रयविधिनाक्षिप्यमाणो विक्रयः कस्यचित्। न च तस्याकरणे प्रत्यवायः। अतः किमर्थमुपनयनाक्षिप्तो गमनकर्त्तोपनेतारं प्रवर्त्तयेत्। किन्तूपनेतैव स्वविहितक्रियासिद्ध्यर्थमुपनेयं प्रवर्त्तयेदिति।

उच्यते। अस्ति ह्युपनयनाद्यभावे कर्मीभूतस्योपनेयादेरनर्थसम्बन्धः। स च तत्प्रतिघातमपेक्षमाणस्तदुपाये मुख्योऽधिकारी। तदुपायश्चोपनयनादिरेव। यथा जले कर्द्दमे वा निमज्जन् कश्चित् स्वतः स्वोद्धरणे शक्तिरहितोऽपि स्वानर्थप्रतिघातमपेक्षमाणस्तदुपायेऽधिकारी भवन् मामुद्धरेति पुलिनवर्त्तिबलवत्पुरुषान्तरप्रेरणयाधिकारं निर्वर्त्यानर्थं प्रतिहन्ति तथायमुपनेयादिरुपनयनादौ। यस्तु गर्भः प्रमीतो वा पित्रादिः पुंसवनादावौर्द्ध्वदेहिकादौ वा स्वानर्थप्रतिघातोपाये परप्रेरणयाप्यधिकारनिर्वर्त्तनासमर्थः स तु नाधिकारी। किञ्च यः स्वोपकारके यस्मिन् कर्मणि परप्रेरकत्वेनोक्तः स एव तत्राधिकारी।

उक्तश्चायमष्टादिवर्षो ब्राह्मणादिः स्वोपनयने विशिष्टाचार्यप्रेरकत्वेन । तथा च स्मृतिमहार्णवे आह बुधः । गर्भाष्टमे वर्षे वसन्ते ब्राह्मण आत्मानमुपनाययेत् । एकादशे क्षत्रियो ग्रीष्मे । द्वादशे वैश्यो वर्षाखिति ।

स्मृत्यन्तरे तु उपनेयव्यतिरिक्तानामप्यधिकारिणां स्वयमशक्तानामन्यप्रवर्त्तकत्वमुपलभ्यते । यथाह यमः । गर्भाष्टमेऽब्दे ब्राह्मणमुपनाययेत् । एकादशे तु राजन्यानुपनाययेत् । वैश्यांस्तु द्वादशे वर्षे उपनाययेदिति ।

मनुशंखव्यासाः । गर्भाष्टमे वै कुर्वीत ब्राह्मणस्योपनायनम् ।

एतच्च हेतुमणिजन्तमुपनायनशब्दं व्याचक्षाणैरपरार्कादिभिरुपपादितम् । तस्मादुपनयनादिषूपनेयादीनामस्त्यधिकार इति । अतएव सत्यकामो नाम जावालो मातरमामन्त्र्यात्मानमुपनाययितुं गौतममाजगामेति छान्दोग्योपनिषदि श्रूयते । कन्यानाञ्च स्वयमपि स्वविवाहकर्तृत्वं कारयितृत्वञ्च दृश्यते । अतस्तासामपि स्वानर्थप्रतिघातके स्वविवाहेऽस्त्यधिकारः । तदानीमन्येषान्तदधिकारनिर्वर्त्तकत्वेनैव कर्तृत्वकारयितृत्वे । पितृमातृभ्रात्रादीनान्त्वनन्यप्रेरितानां विधित एवाधिकारनिर्वर्त्तकत्वं अनिर्वर्त्तकत्वे दोषश्रवणात् । तदन्येषां विध्यभावात् कन्या प्रेरणसहकृतपाणीति[१] तत्र तानि वचनानि "गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयम्वरं" इत्यादीनि याज्ञवल्क्याद्युक्तानि । अतो मातृमातुलादिभिः क्रियमाणेऽपि विवाहे कन्याया एव पित्रादिवर्गेभ्यो वृद्धिश्राद्धं कुर्यादिति। ननु मातृमातुलादीनामपि विवाह-

(१) कन्या प्रेरणसहकृत कृपाणितीति ग० ।

कर्तृत्वोपदेशादकरणे च दोषाभिधानात्तेषामप्यधिकारे तदीयपितृभ्योऽपि श्राद्धं देयमेव। नैतदेवं। नहि प्रत्यधिकारमङ्गावृत्तिः। प्रधानेनैक्यात् यत्र इव तत्र हि प्रत्येकमधिकारभेदेऽपि[१] प्रधानमेकमेव समुच्चितानां कर्तृत्वविधेः। न चात्र वैपरीत्यं विकल्पो वास्त्विति शङ्कनीयम्, फलभागित्वेन कन्यानामेव मुख्याधिकारित्वात्। न चैवं सति विवाहाख्यप्रधानैक्यात् कन्यादातृ-प्रतिग्रहीत्रोरप्येकमेव नान्दीमुखं श्राद्धं स्यान्न पुनः पृथक्श्राद्धद्वयम्। द्वे एवैते प्रधाने य एष प्रतिग्रहो दानञ्च। कन्यापुत्रविवाहे चेति पृथग्विधानाच्च। अन्यथा विवाह इत्येवोच्यते। तस्मात् कश्चिदाचार्यः परपुत्रमुपनयन्नुपनेयपितृभ्य एव नान्दीश्राद्धं कुर्यात्। मातृमातुलादिश्च कन्याविवाहं कुर्वन् कन्यापितृभ्य एवेति। अतएव संस्कार्य्यस्यैव पितृभ्यः श्राद्धकरणे प्राप्ते यदा पितुः संस्कारकत्वं तदा संस्कारकस्य पितृभ्य एव श्राद्धमित्याह कात्यायनः।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमादिति॥

यदि पुनः सर्व एव कर्त्ता स्वपितृभ्यो दद्यात् तदेतन्न वक्तव्यं स्वपितृभ्यः पितेति। ननु संस्कारकर्मसु पितृभ्यः पिण्डान् दद्यादित्येतावन्मात्रं विधीयते, अन्यदनूद्यते इत्यतः पिता चेत् स्वपितृभ्यः इत्येष सम्बन्धो न विधीयते। मैवं। गुणविधौ हि प्रधानानुवादस्तादर्थ्यादुपयुज्यते न प्रधानविधौ गुणानुवादः। गुणानाञ्चानुवादः प्रधानविधिना

(१) तद्वदेवाधिकारभेदेऽपीति ग०।

अर्थादुपस्थापितानां वक्तव्यः, स चायं विध्येकवाक्यतानुपपत्तेरयुक्तः। पर्य्यवसिते हि प्रधानविधायकव्यापारे गुणानां प्राप्तिः। तत्पर्यवसानञ्च स्वसहचरितपदार्थानुवादपूर्वकम्। अतः प्रधानोत्पत्तिवाक्यैर्गुणानुवादे परस्पराश्रयं, अनेकवाक्यता, विरम्य व्यापारः, एकस्मिन्नेव वाक्ये एकस्यैव विधित्वानुवादत्वे चेति एते दोषाः प्रसज्येरन्। विध्यनुवादयुक्ते च वाक्ये पूर्वमानुवादिकं पश्चाद्विधिः। यतस्तत्रोद्दिश्यविधिर्भवति। ननु विध्यनुवादमन्तरेणैव तावत्पदानि स्वार्थाभिधानेनैकार्थपराणि सन्त्येकवाक्यतामनुभवन्ति पश्चात् प्राप्ताप्राप्तविवेकेन शब्दप्राप्यार्थप्राप्यविवेकेन वा विध्यनुवादरूपतां। मैवं। विधित्वानुवादत्वप्रतीतिमन्तरेण वाक्यार्थस्यैवानवगमात्। प्राप्ताप्राप्तविवेकादिना यत्पश्चात् विधेयविवेचनं क्रियते तदपि पूर्वप्रतीतविपरीतविध्यनुवादभावनिवृत्त्यर्थं सन्देहनिवृत्त्यर्थं वा। अनिवर्त्तमाने हि तस्मिन्नन्यादृशं विध्यनुवादभावमाश्रित्यैव वाक्यार्थं प्रतिपादयन्ति। तस्यामवस्थायान्तु विरोधमावहन्त्येव। अतएव कर्म्मोत्पत्तिवाक्ये श्रूयमाणो गुणः सोमादिर्नानुवादोऽस्त्वत्र गुणविधिः। आ उद्वाहनादित्ययन्तु गुणो विधीयतां। उद्वाहात्परेषु सुतसंस्कारेषु पितुरधिकाराभावात् तस्य तेषु वृद्धिश्राद्धाप्राप्तेस्तन्निवृत्त्यर्थो विधिरनर्थकः प्राप्तार्थत्वाच्चाविधित्वं जह्यात्। अतः पिता चेत् स्वपितृभ्य एष सम्बन्धो विधीयते नान्य इति। अतएव तस्याभावे तु तत्क्रमादित्येतदुपपद्यते। पितुरभावेऽन्योपि यः कश्चित् संस्कारं कुर्यात् स तत्क्रमात् तं पितरमारभ्य यः संस्कार्य्यस्य पितॄणां क्रमः तेन क्रमेण दद्यान्न तु स्वकीयेभ्यः पितृभ्य इति। ननु नायमस्यार्थः किन्तु तत्क्रमादनन्तराधिकारिक्रमादिति। मैवं। एवं हि

सति तुशब्दापादितपूर्वविहितवैपरीत्यावगतिपर्य्यालोचनया पूर्वं पितुः कर्त्तृत्वं विहितमिति मन्तव्यम्। तथा चानर्थक्यं पितृकर्तृकेषु सुतसंस्कारेषु अन्यस्य श्राद्धकर्तृत्वाप्राप्तेः। प्रधानेऽधिकृतोऽङ्गेऽधिक्रियत इति न्यायात् पितुः प्राप्तेश्च। तदनन्तराधिकारिक्रमादित्येवं विधे चार्थे गृह्यमाणे असन्निहितपरामर्शः प्रसज्येत। किञ्च अस्मिन् पचे वचनान्तरावगतः क्रमोऽनुसन्धीयमानोऽनुवाद एव स्यात्। नन्विदं वचनं पितृव्यतिरिक्तैर्मातृमातुलादिभिर्विवाहादिसंस्कारं कुर्वाणैः स्वपितृभ्य एव श्राद्धं कर्त्तव्यमित्यमुमेवार्थं विधत्ते कथं स्वपितृभ्य इत्यस्यानुषङ्गात्। भवेदेवं यदि तत्क्रमादित्यत्र कर्तृक्रम उच्यते पितृतस्त्वेष इति व्याख्यातत्वात्। किञ्च यदि सर्वेऽपि कर्त्तारः स्वपितृभ्यो दद्युस्तदा स्वपितृभ्यः पितेति न वक्तव्यं स्यात्। तस्मादाचार्यमातृमातुलादयः संस्कार्य्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युर्न स्वपितृभ्य इति।

अथात्र पारमार्थिकः पक्षोऽभिधीयते। यदा पिता पुत्रादेर्विवाहोपनयनादि कुर्यात् तदा स्वेभ्य एव पितृभ्यो नान्दीश्राद्धं कुर्यात् स्वेभ्य एव दद्यादितिवचनात्। यदा चान्ये वचनलब्धाधिकाराः पितामहभ्रातृसकुल्यजनन्यादयस्तदापि स्वपितृभ्यः, तस्याभावे तु तत्क्रमादित्यत्र स्वेभ्य एवेत्यनुषङ्गात् प्रधानेऽधिकृत एवाङ्गेऽधिक्रियते। मातृपितृमातामहानां श्राद्धं कुर्यादित्येवंविधस्य विधिर्मात्रादिशब्दानां सम्बन्धिशब्दत्वादधिकारिणमेव सम्बन्धिनमुपादाय पर्यवस्यतीति। ये पुनः केचनाहत्यवचनेनानुक्ताधिकारास्ते तदीयेभ्यः श्राद्धं कुर्युरिति। इत्याभ्युदयिकश्राद्धदेवताः।

अथ देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते इत्येवं लक्षणलक्षिते

तु दैविके श्राद्धे प्रीणनीयतयाभिमता या काचन देवता इत्येवमुक्ताः सर्वेष्वपि श्राद्धभेदेषु देवताः। अथेदानीन्तेष्वेव श्राद्धेष्वधिकारिविशेषप्रयुक्तदेवतानिर्णयः। तत्र तावद्द्व्यामुष्यायणमधिकृत्योच्यते। नारदस्मृतौ।

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
रिक्थादर्द्धात्समादद्युर्बीजिक्षेत्रिकयोस्तथा॥

अत्र पृथगित्यभिधानादेकैकस्मिन् पितृवर्गे त्रयस्त्रयः पिण्डा इत्येवं षट्पिण्डाः प्रदेया इत्युक्तं भवति। अतएव देवलस्मृतौ।

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
षण्णान्देयास्तु षट्पिण्डा एवं कुर्वन्न मुह्यतीति॥

बौधायनादयस्तु षड्दैवत्यास्त्रय एव पिण्डा इत्याहुः।

द्विपितुः पिण्डदानं स्यात् पिण्डे पिण्डे च नामनी।
त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्वन्न मुह्यतीति॥

आपस्तम्बोऽपि।

यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति। तदेवं षण्णां षट्पिण्डास्त्रयोवेति विकल्पः। यथा गृह्यमवस्था चेत्यवगन्तव्यम्। अत्र देवलबौधायनादिस्मृतिषु पिण्डशब्दः श्राद्धोपलक्षणपरः। अत एव प्रवराध्याये द्वे श्राद्धे कुर्यादेकं श्राद्धं वा पितॄनुद्दिश्यैकपिण्डे द्वावनुकीर्त्तयेत् प्रतिग्रहीतारश्चोत्पादयितारश्च आ तृतीयात् पुरुषादिति। अत्र पितृवर्गद्वयस्य द्वे श्राद्धे कुर्यात् षट्पिण्डांश्च प्रदद्यात्। अथ वा वर्गद्वयस्यैकमेव श्राद्धं कुर्यादेकैकस्मिन् ब्राह्मणे द्वौ द्वौ पितरौ पितामहौ प्रपितामहौ च सम्बन्धनामगोत्रैरनुकीर्त्तयेदित्यनु-

सम्बेयम् । हारीतसूत्रे तेषामुत्पादयितुः प्रथमः प्रवरो भवति द्वौ द्वौ निर्वापे दद्युरेकस्मिन्नेव वा द्वावनुकीर्त्तयेयुर्द्वितीये पुत्रस्तृतीये पौत्र इति ।

अस्यार्थः । प्रवरस्त्वार्षेयादिः, सबीजिसम्बन्धी क्षेत्रजेन प्रथममाश्रयणीयः । ततः क्षेत्रसम्बन्धी । निरुप्यतेऽस्मिन्निति निर्वापः पितृयज्ञः । तत्र क्षेत्रजादयो द्व्यामुष्यायणा द्वौ द्वौ पिण्डौ दद्युः । द्वौ द्वाविति वीप्सावशादिदमवगम्यते । द्वयोः पित्रोर्द्वौ पिण्डौ । द्वयोः पितामहयोः द्वौ । द्वयोः प्रपितामहयोर्द्वाविति । एवं सत्यमावास्याश्राद्धे पितृवर्गद्वयाय दीयमानाः षट्पिण्डा भवन्ति । एकस्मिन्नेव वा द्वावनुकीर्त्तयेयुरित्यत्र द्वौ द्वाविति वीप्सा वेदितव्या । एवञ्च वर्गद्वयाय दीयमानास्त्रय एव पिण्डा भवन्ति । द्व्यामुष्यायणस्य पुत्रो द्वितीये पितामहे द्वौ पिण्डौ दद्यादेकस्मिन् पिण्डे वा द्वौ पितामहौ सम्बन्धनामगोत्रौ कीर्त्तयेत् । उपलक्षणञ्चैतत् । तदेवं द्व्यामुष्यायणपुत्रस्य पिण्डभेदपक्षे अमावास्यायामेकः पित्रे द्वौ द्वावितरयोरिति पञ्चपिण्डाः प्रदेया भवन्ति । अभेदपक्षे तु त्रय एव । द्व्यामुष्यायणस्य पौत्रस्तु तृतीये प्रपितामहे एव पिण्डभेदे द्वौ पिण्डौ अभेदे तु प्रपितामहद्वयस्य नाम कीर्त्तयेदिति तस्य चत्वारः पिण्डाः प्रदेया भवन्ति त्रय एव वेति । केनचित् पुनरेकस्मिन्नेव वा द्वावनुकीर्त्तयेयुरित्यस्य व्याख्यानान्तरं कृतं । द्वावपि[१] क्षेत्रजौ भवतः । एकः कुण्डः अपरो गोलक इति । तत्र यः कुण्डः स प्रथमे पितृसम्बन्धिन्येव पिण्डे द्वौ बीजिक्षेत्रिणौ पितरावनुकीर्त्तयेत् इतरयोस्तु पिण्डयोः क्षेत्रिसम्बन्धिनमेवैकैकं पुरुषं कीर्त्त-

(१) द्वौ चेति ख० ।

येदिति। गोलकस्तु प्रथमे द्वौ पितरौ कीर्तयित्वा अन्ययोः पिण्डयोर्वीजिनः पितृपितामहावेवैकैकशः कीर्त्तयेदिति। कुण्डगोलकयोस्तु पुत्रौ द्वितीये पितामहपिण्ड एव, द्वौ वीजिक्षेत्रिणौ पितामहौ कीर्त्तयतः। प्रथमतृतीययोस्तु पिण्डयोरेकैकमेव पितरं प्रपितामहञ्चेति। तत्र कुण्डपुत्रः कुण्डं स्वपितरं क्षेत्रिवीजिनौ द्वावपि स्वपितामहौ क्षेत्रिजनकं स्वप्रपितामहञ्चेति चतुरः कीर्त्तयेत्। गोलकपुत्रो गोलकं स्वपितरं वीजिक्षेत्रिणौ पितामहौ वीजिजनकं स्वप्रपितामहञ्चेति चतुरः कीर्त्तयेत्। कुण्डगोलकयोः पौत्रौ तृतीय एवैकत्र पिण्डे प्रपितामहौ कीर्त्तयेतामिति। तदेतद्व्याख्यानं न स्मृत्यन्तरसम्वादीत्येकस्मिन्नेव वा द्वावनुकीर्त्तयेयुरिति वीप्सां पुरस्कृत्य पूर्वोक्तव्याख्या ग्रहीतुं न्याय्येति अनेन हारीतवचनेनैवाविष्कृतं। यत् षट्पिण्डत्रिपिण्डपञ्चविकल्पो वाशब्दाद्युक्त ईरितः। द्व्यामुष्यायणमधिकारिणं प्रकृत्य षण्णान्देयास्तु षट्पिण्डा इत्येवंविधेषु मातामहपिण्डापेक्षया षट्संख्येयमिति या शङ्का सा च निराकृता इति द्व्यामुष्यायणसम्बन्धिश्राद्धदेवतानिर्णयः कृतः। इदानीन्तु अनेकद्व्यामुष्यायणसम्बन्धिषु(१) क्रियते। तत्र यदि द्व्यामुष्यायणस्यान्यतरः पिता द्व्यामुष्यायणो भवेत् तदा पितृभ्यां पिण्डद्वयं प्रदाय पितामहेभ्यः पिण्डत्रयं दत्त्वा प्रपितामहेभ्यस्त्रयमित्यष्टौ पिण्डान् दद्यात्। यदा तु तस्यान्यतरः पिता पितामहस्यान्यतर एव द्व्यामुष्यायणः स्यात् तदा पितृभ्यां पिण्डद्वयं निरूप्य पितामहेभ्यस्त्रीन् पिण्डान् दत्त्वा प्रपितामहेभ्यश्चतुरो दद्यादित्येवं नव। यदा तु द्व्यामुष्यायणस्य द्वावपि पितरौ द्व्यामुष्यायणौ स्यातां तदा

(१) अनेक द्व्यामुष्यायणसम्बन्धेनेति ग० ।

पितृभ्यः द्वौ पिण्डौ दत्त्वा पितामहेभ्यश्चतुरः प्रपितामहेभ्योऽपि चतुरो दद्यादित्येवं दश। यदा तु द्व्यामुष्यायणस्य द्वावपि पितरौ द्व्यामुष्यायणौ पितामहस्त्वेक एव द्व्यामुष्यायणः तदा पितृभ्यां द्वौ पिण्डौ प्रदाय पितामहेभ्यश्चतुरो दत्त्वा प्रपितामहेभ्यः पञ्च दद्यात् इत्येवमेकादश । यदा तु द्व्यामुष्यायणस्य द्वावपि पितरौ द्व्यामुष्यायणौ द्वावेव पितामहौ द्व्यामुष्यायणौ भवतः तदा पितृभ्यां पिण्डद्वयं प्रदाय पितामहेभ्यश्चतुरो दत्त्वा षट् प्रपितामहेभ्यः षड्भ्योदद्यादिति द्वादश। अस्यैव यदा त्रयः पितामहा द्व्यामुष्यायणाः स्युः तदा पितृभ्यां पितामहेभ्यश्च पूर्वोक्तसंख्यकान् दत्त्वा प्रपितामहेभ्यः सप्त सप्तभ्यो दद्यादित्येवं त्रयोदश। यदि चास्यैव सर्वे पितामहा द्व्यामुष्यायणास्तदा पितृपितामहेभ्यः पूर्ववद्दत्त्वा प्रपितामहेभ्योऽष्टावष्टभ्योदद्यादित्येवं चतुर्दश। एकत्र पिण्डे अनेकनामकङ्कीर्त्तनपक्षे तु सर्वेषां त्रय एव पिण्डा इति सिद्धमेव। यस्य पुनरस्य द्व्यामुष्यायणस्य पितामह एव द्व्यामुष्यायणः स चतुरः पिण्डान् दद्यात्। यस्य पितैव स पञ्च। यस्य पिता द्व्यामुष्यायणोऽन्यतरः पितामहस्य स षट्। यस्य पिता द्व्यामुष्यायणौ द्वावपि च पितामहौ स सप्तेति। एषु पक्षेषु मध्ये तु आद्यौ द्वौ द्वितीये पुत्रस्तृतीये पौत्र इत्यत्र गतावपि सङ्गत्यनुरोधात् पुनर्लिखितौ। नन्वत्र द्वौ द्वौ पिण्डौ निर्वापे दद्युः। षष्मान्द्येयास्य षट् पिण्डा इत्येवमादिभिर्वचनैः षड़ेव पिण्डा विहितास्तेनाधिकसंख्याव्यावृत्तिरेव गम्यते। मैवं। यदि षट्संख्याविधिपराणि वचनानि कथमन्यसंख्यानिवृत्तिपराण्यपि भवेयुः। व्रीह्यादिविधायकान्यर्थात् प्रियङ्ग्वादिनिवृत्तिपराणि यथा, तथैतान्यपि स्युरिति चेत्। न। भवेदयं

प्रकारो नियमार्थेषु वाक्येषु, पक्षेऽप्राप्तौ नियमार्थं वाक्यं। यत्र तु सर्वात्मना अप्राप्तं विधीयते तत्र प्रापकत्वमेव नान्यनिवर्तकत्वं। प्रकृते च षट्सप्तादिभ्यः पिण्डदानस्याप्राप्तत्वान्न सप्तमादिव्यावर्त्तनपराणीति। नन्वमावास्यायां पितृभ्यो दद्यादिति सामान्यतो विधेर्यथा स्वमिच्छया षट्सप्तादिभ्यो दानं प्राप्तमेवेति षण्णामित्यादिभिर्वाक्यैर्नियम्यते। उच्यते। पित्रादिभ्यस्त्रिभ्यो दद्यादित्यनन्तरमेव नियमितत्वात् पित्रादिशब्देषु मुख्ये सम्प्रत्यय इतिन्यायाद्गौणपित्राद्यग्रहणादप्राप्तमेव षण्णां श्राद्धदेवतात्वं विधीयत इति नान्यनिवर्त्तकमिति। ननु मास्तु षट्संख्याविधिवाक्यानां सप्तादिसंख्यानिवृत्तिपरत्वं, भवदभ्युपगतायास्तु पितामहादिदेवतागतायास्तदुद्देशेन प्रदीयमानपिण्डगतायाश्च कुतः प्राप्तिः। षण्णां देयास्तु षट्पिण्डा इत्यस्मादेव विधेः समानन्यायत्वात्। नात्र त्रिसंख्यानियमः, गौणपित्रादीनामपि ग्रहणादित्येतावन्मात्रस्य विवक्षितत्वात्। तस्मात् मुख्यार्थग्रहणन्यायस्य त्रिसंख्यानियमवाक्यस्य वापवादं कर्त्तुमयं विधिरिति सप्तादीनामपि प्राप्तिः, गौणानां पित्रादीनामुपलक्षणार्थं एवायं षट्संख्याविधिरिति युक्तं पश्यामः। ननु विधौ न परः शब्दार्थ इति न्यायात् कथमुपलक्षणपरत्वं। इत्थं अस्य नियमविधित्वाभावात् सप्तनिवर्त्तकत्वानुपपत्तौ त्रिसंख्यानियममात्रपरत्वे अवधारिते षट्संख्यायाः स्वत एव प्राप्तौ विध्यनुपयोगे संख्यावचनस्योपलक्षणार्थत्वं गम्यते। नन्वेवं सतीच्छावशाद् गृह्यमाणया यया कयाचिच्चतुरादिसंख्यया कृतार्थः श्राद्धकर्त्तानियमेन षड़ादिसंख्यामुपाददीत। तथा वृद्धप्रपितामहादीनपि वा देवतात्वेनोपाददीतेति। नैव। न्यायावष्टम्भवचनलभ्यो मुख्यपित्रादिगतस्त्रिसंख्याग्रहणनियमो ह्यनेन

वचनेन बाध्यते । न पुनर्वचनमात्रलभ्यपित्रादिसामान्यगतत्रिसंख्या-नियम इति पूर्व्वोक्तदोषद्वयानवकाशः। विध्यन्तरानुरोधाच्च षट्पिण्डा इत्यस्योपलक्षणपरत्वमेव न्याय्यं । तथा हि पारस्करस्मृतौ ।

द्विगोत्रैः परतो जातास्तेषाञ्चेत् पुत्रिकासुतः ।
स त्रिगोत्रस्त्रिवर्गस्य मृताहान्यत्र कारयेत् ॥

ये द्व्यामुष्यायणत्वाद्द्विगोत्रा भवन्ति ते इत्यादितः उत्पादकैः पितृभिः पितामहेन च सम्बद्धत्वादुभयसम्बन्धी स चेत् पुत्रिकापुत्र-स्त्रिगोत्रः, द्वे द्व्यामुष्यायणजनकसम्बन्धिनी गोत्रे मातामहसम्बन्धि चैकमित्येवं स त्रिवर्गसम्बन्धितया वर्गत्रयस्य मृताहादन्यत्र अमावास्यादौ साधारणे काले श्राद्धं कारयेत् कुर्य्यादिति। अतः कार्ष्णाजिनिः सपिण्डीकरणं विषयीकृत्याह ।

यावन्तः पितृवर्गाः स्युस्तावद्भि र्दत्तकादयः(१) ।
प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह ॥
द्वाभ्यां सहाय तत्पुत्राः पौत्रास्त्वेकेन तत्समम् ।
चतुर्थपुरुषे छन्दस्तस्मादेषा त्रिपौरुषी ॥
साधारणेषु कालेषु विशेषो नास्ति वर्गिणाम् ।
मृताहे त्वेकमुद्दिश्य कुर्य्युः श्राद्धं यथाविधीति ॥

अस्यार्थः। दत्तकादिद्व्यामुष्यायणानां यावन्तः पित्रोः सम्बन्धिनः पितामहवर्गाः स्युस्तत्सम्बन्धेन च स्वं प्रति पितृव्यादिरूपतां गताः, ये च मुख्यगौणपितृसम्बन्धेन भ्रात्रादिरूपताङ्गताः ते सर्व्वे दत्तका-

---

(१) तावद्भि दत्तकादय इति ख० ।

दीनां पितृवर्गाः। तेषु मध्ये ये प्रेताः स्युस्तेषां तत्समानजातीयवर्गजैः पितृभिः सह ते दत्तकादयो योजनं सपिण्डीकरणं कुर्य्युः। द्व्यामुष्यायणपुत्रास्तु तेषु तेषु वर्गेषु मध्ये स्वकीयेन पित्रा तत्पूर्व्वाभ्याञ्च द्वाभ्यां तस्य तस्य प्रेतस्य सपिण्डीकरणं कुर्य्युः। द्व्यामुष्यायणपौत्रस्तु स्वेन पित्रा द्व्यामुष्यायणेन च पितामहेन तत्पित्रा चैकेन तत्समं तत्तद्वर्गोत्पन्नं तेन तेन योजयेत्। द्व्यामुष्यायणप्रपौत्रस्तु गौणपितृवर्गमध्यस्थितं प्रेतं योजयेत् वा न वा। एषा हि गौणपितृसन्ततिस्त्रिपौरुष्येव। यथा दत्तकादिभिः सर्वपितृवर्गसम्बन्धिनः सपिण्डीकरणं कार्य्यं तथैवामावास्यादौ साधारणे काले सर्व्ववर्गसम्बन्धेन नैयमिकं श्राद्धं कर्त्तव्यमित्येतदनुक्तं साधारणेषु कालेषु विशेषो नास्ति वर्गिणामिति। मृताहे त्वेकमुद्दिश्येति। यो यस्मिन्नहनि मृतस्तस्मिन्नहनि तु यच्छ्राद्धं तत्तस्यैव नान्यस्येति। तदेवमेतत् सिद्धं, यावन्तः पितामहाः प्रपितामहाः स्युस्तावतां द्व्यामुष्यायणैरमावास्यादिश्राद्धेषूद्देशं कृत्वा पृथक्पिण्डाः प्रदेयाः। एकैकस्मिन् वा पिण्डे तावतां नामानि कीर्त्तनीयानि।

अथ पुत्रिकापुत्राधिकारिकश्राद्धदेवताः। तत्र तावत् पुत्रिकापुत्रश्चतुःप्रकारो भवति। एकस्तावत् पुत्रिकैव पुत्र इत्येवंविधया संविदा कृतः। अस्यास्तु पुत्रो यः परः स संविदमन्तरेणैव योगसामर्थ्यात् पुत्रिकापुत्रसंज्ञां लभते। एतावांस्तु विशेषो यदयं न पुत्रस्थानीयः किन्तु पौत्रस्थानीयः दौहित्र एव वा। अतएव शङ्खलिखितयोर्वचने दौहित्रत्वेनायं निर्दिष्टः। पुत्रिका हि पुत्रवदिति प्राचेतसस्तस्या अपत्यं पुत्रिकासुतो मातामहपितामहानां पिण्डदः, पौत्रदौ-

हित्रयोर्न विशेषोऽस्त्यनुग्रह इति । तृतीयस्तु पुत्रिकापुत्रः "यदपत्यं भवेदस्यान्तन्मम स्यात् स्वधकरं" इत्येवंविधया संविदा दत्तायां दुहितर्य्युत्पन्नः । स तु गौणपुत्रत्वेन मातामहसम्बन्ध्येव । चतुर्थस्तु "यदपत्यं भवेदस्यान्तद्द्वयोः स्यात् स्वधाकरं" इत्येवंविधया संविदा दत्तायां दुहितर्य्युत्पन्नः स मातामहस्य जनयितुश्च, इत्येवमुभाभ्यां पुत्रत्वेनैव सम्बन्धी भवति । चिन्तितापि पुत्रिका भवतीत्यस्मिन् पक्षे संविदमन्तरेणापि स्वचित्तपरिकल्पनामात्रेणैव एवं पुत्रिकापुत्र-भेदा भवन्ति । पुत्रभेदप्रकरणे चैते व्यक्ता भविष्यन्तीति । एवं स्थिते स्मृतिः ।

मातामह्यन्तु मात्रादिपैतृकं पितृपूर्वकम् ।
मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मत इति ॥

न चैतद्वचनं दौहित्रमात्रविषयमिति मन्तव्यम् । मनुस्मृतावेवैतद्वच-नार्थस्य पुत्रिकापुत्रसम्बन्धावगमात् ।

मातुः प्रथमतः पिण्डं निर्वपेत् पुत्रिकासुतः ।
द्वितीयन्तु पितुस्तस्याः तृतीयन्तु पितुः पितुरिति ॥

एतच्च वचनद्वयं न सामान्यतः पुत्रिकापुत्रविषयम् । किन्तु पुत्रत्वेन परिकल्पिता या पुत्रिका तत्पुत्रैकविषयम् । ननु निर्व्वपेत्पुत्रिकासुत इति सामान्योपन्यासात् कुतः पुत्रिकापुत्रविशेषैकविषयः । उच्यते । या हि पुत्रिका पुत्रत्वेन न कल्पिता तत्पुत्रस्तु कल्पितः, स तु गौणसु-तत्वेन साक्षान्मातामहसम्बन्धीति कृत्वा मातामहश्राद्धं कुर्वन्मातामहा-द्येव कुर्य्यात् । पुत्रस्य हि पितृश्राद्धे पितृप्रभृत्येवाधिकारात् । या तु पुत्रत्वेन कल्पिता पुत्रिका तस्यास्तु सुतो मातामहपुत्रस्य सुत इति

मातामहस्य पौत्रस्थानीय इति पौत्रक्रियमाणश्राद्धतुल्यं स्वमातामह-श्राद्धं करिष्यन् पितृस्थानीयमातृप्रभृत्येव कुर्य्यादिति । ननु नास्ति-वचनस्यातिभार इति न्यायाद्वचनात् पुत्रिकापुत्रमात्रक्रियमाणमाता-महश्राद्धे मात्रादित्वमस्तु । मैवं । सन्निहिताभिहितेनौचित्येन वचनस्य विशेषेऽवस्थापनात् । ननु किमिदमौचित्यमदृष्टार्थेषु पदार्थेषु "कृते सपिण्डीकरणे तत्पूर्वं श्राद्धमाचरेत्" इत्यादिवचनान्तरावगतकर्मस्व-रूपानुसरणमेवेत्यवेहि एकवाक्योपात्तहेतुसामर्थ्यञ्च । यतोऽत्र मातृ-पूर्व्वकत्वं पितृपूर्वकत्वञ्चोपदिश्य तत्पूर्वकत्वसाधकस्तथाविधाधिकारस-द्भावो हेतुरुक्तः "मातृतः पितृतो यस्मादधिकारोऽस्ति धर्मत इति"। स चायं हेतुर्हेतुत्वादेव पूर्वसिद्धतामपेक्षमाणः पौत्रस्थानीयमेव श्राद्धाधिकारिणं विषयीकरोति । अनेनैवंविधस्य पूर्वसिद्धत्वाभा-वात् हेतुवन्निगदोऽस्त्विति चेन्न । हेतुत्वासम्भवे हि हेतुवन्निगदो न पुनस्तस्य सम्भवे। इतश्च गौणपुत्रीभूतस्य पुत्रिकापुत्रस्य नायं मा-तृपूर्वकत्वविधिः किन्तु दौहित्ररूपस्यैव मातामह्यमितिनिर्देशात् । अन्यथा पैतृकमितिनिर्देशोऽभविष्यत्। ननु पौत्रस्थानीयत्वात्पैतामह्य-मिति निर्देशः प्राप्नुयात् । पुत्रस्य हि पुत्रः पौत्रो भवति यमपेक्ष्य च यः पौत्रस्तदपेक्षया स पितामहो भवति यतः। मैवं । पुत्रत्वमेव हि संविदोत्पादितं पुत्रिकायां तत्पुत्रस्य मातामहं प्रति पौत्रत्वं कल्प-नामात्रभवं न लौकिकं न वैदिकमिति नोत्तरव्यवहारोत्पादनसमर्थं। नन्वेवं सति क्षेत्रजादीनां पुत्रैः पितृश्राद्धादीनि कुर्व्वाणैः क्षेत्र्यादयः पितामहत्वेन न सङ्कीर्त्तेरन् । उच्यते । वयमत्र गौणत्वेन स्वरसतो लौकिकव्यवहारगम्यत्वेन च सूक्ष्मतरं पितृपितामहादिरूपसम्बन्धान्तरं

शास्त्रोपदिष्टप्रकारसमुत्पादितं नात्यन्तं निवारयामः किन्तु तद्वाचक-शब्दप्रयोगेण व्यवहारं । यस्मादयं व्यवहारः स्वारसिकतया सकलजन-साक्षितया च समुद्भूततरं बलवत्तरं मातृमातामहादिसम्बन्धं गोचरयता जनकसन्ततिवाचकताभ्रमविषयतामलभमानेन मातृमातामहादिशब्द-प्रयोगरूपेण व्यवहारान्तरेण बाध्यते । अतोऽयं पुत्रिकापुत्रो माता-महश्राद्धं कुर्वन्मातृमातामहादिशब्दप्रयोगेण पितृपितामहादिशब्द-प्रयोगं बाधते । यथा भ्रातृसुतः गौणपितृताङ्गतस्य सुतस्य पितृव्यस्य गौणसुतः श्राद्धमन्यमपि वा कमपि लौकिकव्यवहारं कुर्व्वन् स्वारसि-कसर्वजनसाक्षिक-पितृव्यत्वरूपसम्बन्धवाचक-शब्दप्रयोगेण पितृत्वरूपस-म्बन्धवाचक-शब्दप्रयोगरूपं व्यवहारम् । नन्वेवं सत्यन्येनापि पुत्रिका-पुत्रेण न्यायसाम्यात् मातामहादिशब्दैरेव श्राद्धप्रयोगोऽनुष्ठेयः । मैवं । तथाहि सति पुत्रिकापुत्रोपदेशोऽनर्थकः स्यात् । आवश्यकश्राद्धाधि-कारप्राप्त्यर्थं स इति चेन्न । विनापि हि पुत्रीकरणं दौहित्रस्यापुत्रमा-तामहश्राद्धाधिकारस्यावश्यकत्वात् । न चैष दायहरस्यैव दौहित्रस्येति शङ्कनीयं । अग्रे निराकरिष्यमाणत्वात् । अतः पुत्रीकृतस्य पुत्रिका-पुत्रस्य पित्रादिशब्दप्रयोगयोग्येव मातामहश्राद्धं मातामहाद्येव च । पुत्रीकरणरहितस्य तु पुत्रिकापुत्रस्य मात्रादि मातृमातामहादिशब्द-प्रयोगयोग्येव चेति । इतस्चैतन्मातामहादिशब्दप्रयोगयुक्तं । यतो माता-मह्यन्तु मात्रादि मातुः प्रथमतः पिण्डमित्यादिषु तच्छ्राद्धप्रकार-विधायकवाक्येषु मातृमातामहशब्दप्रयोग एव श्रूयते[१] विधिशब्दस्य च मन्त्रकार्य्यकरत्वं न्याय्यम् । ननु नात्र मातृमातामहादिशब्दाः श्राद्ध-

(१) दृश्यते इति ख० ।

प्रयोगकालेप्येत एव प्रयोज्या इत्यनेनाभिप्रायेण प्रयुक्ताः किन्तु मात्रादित्वमात्रविधानार्थवाक्यावयवभावेनेति । सत्यं। किन्तु यत्र विधिशब्दः प्रयोगकाले मन्त्रवदनुष्ठेयस्मारकत्वेन प्रयुज्यते तत्र सर्वत्र विधेयस्मारकशक्तियुक्तत्वेनैवाकाङ्क्षावशादेव च स्वीक्रियते न तु तदभिप्रायप्रयुक्तत्वादित्यदोषः । न च चेत्रजादिषु सम्बन्धान्तरमस्ति। न चास्ति कश्चित् पितृपितामहादिशब्दव्यतिरिक्तो विधिशब्दः। अतस्तेषां पितृपितामहादिशब्दव्यतिरिक्तो विधिशब्दः। अतस्तेषां पितृपितामहादिशब्दैरेव सङ्कीर्त्तनं न्याय्यमिति। यत्तु पुत्रिकापुत्रस्य मातामहश्राद्धे मातृपूर्व्वकत्वमुक्तं तस्य वृद्धावपवादमाह व्याघ्रपात् ।

कुर्य्यान्मातामहश्राद्धं(१) सर्वदा मातृपूर्वकम् ।
विधिज्ञो विधिमास्थाय वृद्धौ मातामहादिति ॥

न चात्रैवं शङ्कनीयं मातृश्राद्धे मातामहश्राद्धे च दौहित्रमात्रस्यैकस्मिन् काले कदाचिदन्वष्टकादौ तीर्थादिविशेषे वा देशकालादीनां साधारणत्वेन युगपत्कर्त्तव्ये प्राप्ते तत्र द्वयोः क्रमप्रतिपादनार्थं वचनं न पुनः पुत्रिकापुत्रकर्तृके मातामहश्राद्धे मातुर्देवतात्वस्य विधायकस्यापवादकञ्चेति। यतः पुत्रिकापुत्रक्रमेऽस्य वचनस्योपलम्भात् वृद्धिश्राद्धप्रकरणे वक्ष्यमाणस्य मातृश्राद्धपूर्व्वकत्वस्य बाधापत्तेश्च । न च क्रमविकल्पो न्याय्यः। सर्व्वस्मृतिपुराणेषु वचनशतेन प्रत्यहं मातृश्राद्धपूर्व्वकत्वस्य विधानात्। इति पुत्रिकापुत्रकर्तृकश्राद्धदेवताः । तदेवमुक्तं द्व्यामुष्यायणाधिकारिकेषु नैयमिकेषु श्राद्धेषु गौणस्यापि पितृवर्गस्य देवतात्वम् ।

(१) कुर्व्वन्मातामहश्राद्धमिति ग० ।

अथेदं वक्तव्यं किमेतत्कर्तृकेष्वेतेषु श्राद्धेषु गौणपितृवर्गीयः पत्नीवर्गोऽपि मुख्यपितृवर्गीयपत्नीवर्गवत् स्वपतिसहभावेन देवतात्वं लभते वा न वेति। तत्र तावद्गौणपितृवर्गेण देवतात्वे लब्धे सति वचनान्तरेण तस्य पत्नीसहितस्य देवतात्वमुक्तमिति, न तद्रहितस्य देवतात्वं श्राद्धम् । नन्वेवं तर्हि गौणस्य पितुरविद्यमानायां पत्न्यां विद्यमानायामपि वा जीवन्त्याममावास्यादिश्राद्धेषु तस्यानुद्देशः प्राप्नोति । तथा च सति "षण्णान्देयास्तु षट्पिण्डाः" इत्यादिका नित्यवच्छ्रुतिर्बाध्यते । अथ किं नित्यवच्छ्रुतिबाधभयादप्रमीतेऽपि पितरीति पितुरुद्देशः कार्य्यः । यदि पुनः सा पित्रादिमरणापेक्षा नित्यवच्छ्रुतिस्तर्हि मातृमरणापेक्षाप्यस्तु, जीवत्पितृकाधिकारिक-श्राद्धन्यायो वास्त्विति। न चात्र मुख्ये सम्प्रत्यय इत्ययं न्यायः प्रवेशं लभते गौणपितृपत्नीत्वं गताया मुख्याया मातुरभावात् गौणपितृनिवेशस्य न्याय्यत्वात् । अतोऽत्र गौणस्य पित्रादेर्देवतात्वे गौणीनां मातृणां सहभावेन देवतात्वमस्तु। अत्रोच्यते । यथा मुख्यपितृश्राद्धे गौणीनां न सहभावेन देवतात्वं तथात्रापि(१) यासां हि स्वतन्त्राधिकारेण पृथक्श्राद्धं प्राप्नोति तासामेवैष सहभावो विहितः । पृथक्श्राद्धविध्यपवादरूपत्वादस्य सहभावविधेः । न चास्ति गौणमातृश्राद्धे पृथङ्नित्योधिकारः। मातृश्राद्धविधेर्मुख्यमातृपरि-ग्रहेण कृतार्थत्वात्। नन्वेवं तर्हि गौणपितृपत्नीनां श्राद्धानि कः कुर्य्यात्। लोकदृष्ट्या पुत्रस्थानपातात् स एवेति ब्रूमः। सोऽपि

(१) यथा मुख्ये पितृश्राद्धे नित्यानित्यसंयोगे विरोधादिना गौणमातृणां न सहोद्देश्यत्वं तथा गौण-पितृश्राद्धेऽपि इति ग० ।

लोकविरोधपरिहाराय परिच्छदादानकलङ्कक्षालनाय वा कृपया स्नेहेन वा करोतीति न तत्र तस्य नित्योऽधिकारः। यस्तु स्त्रीपुंसाभ्यामेव गौणत्वेन गृहीतः पुत्रः स यथा वहुभिः पुरुषैः गृहीतो वहूनां पुरुषाणां करोति एवं स्त्रीपुंसाभ्यामपीति। अत्र तु मातामहानामनेकत्वेऽपि मातामहश्राद्धविधेर्मुख्यमातामहश्राद्धेनैव कृतार्थत्वात् न वहूनि मातामहश्राद्धानि। न चाप्येकस्मिन्नेव श्राद्धे सर्व्वेषां नामानि कीर्त्तनीयानि, तथा विध्यभावात्। अथ वा यः पत्या सम्पादितो गौणः पुत्रः सम्मत एव पत्न्या अपि पुत्रो भवति। विवाहसमये हि तस्याः पत्न्या धर्मकामार्थेष्वनतिचरणीयत्वप्रतिज्ञानात्। अतएव तदुपार्जितधनधर्मयोस्तस्याः स्वतः स्वत्वं। उक्तं हि इदमापस्तम्बादिभिः "जायापत्योर्न विभागो विद्यते सहाधिकाराद्धनधर्मयोः"। नहि प्रोषिते प्रेते वा पत्यौ आवश्यकेषु धनसाध्येषु धर्मकार्य्येषु पतिधनेन क्रियमाणेषु पत्न्याः स्तेयमुपदिशन्तीति। अतोऽस्ति गौणसुतस्य गौणमातृश्राद्धे पृथगधिकार इति कृत्वा अन्यत्र पतिना सहेत्यपवादोऽप्यस्तीति सिद्धं पार्व्वणे तस्याः सहभावेन देवतात्वमिति। न चैवं जननीसपत्नीष्वपि वाच्यं। तत्र मुख्यमातृसद्भावेन कृतार्थत्वादिति पूर्वमुक्तत्वात्। एवञ्च सति गौणमातामहानामपि गौणपितृवच्छ्राद्धं कर्त्तव्यमिति। एवमुक्ता द्व्यामुष्यायणाधिकारिकेषु श्राद्धेषु देवताः।

अथेदानीं जीवत्पितृकाधिकारिकेषु श्राद्धेषूच्यन्ते।

तत्राह विष्णुः।

पितरि जीवति श्राद्धं कुर्य्यात् येषां पिता कुर्य्यात् तेषां कुर्य्यात्। पितरि पितामहे च जीवति येषां पितामहः। पितरि पितामहे प्रपि-

तामहे च जीवति नैव कुर्य्यात् यस्य पिता प्रेतः स्यात् स पित्रे पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्। यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्। यस्य पितामहः प्रेतः स्यात् स तस्मै पिण्डं निधाय प्रपितामहात्परं द्वाभ्यां दद्यात्। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्त्वा पितामहपितामहाय दद्यात्।

मातामहानामप्येवं कुर्य्यात् श्राद्धं विचक्षणः।
संख्योहेन यथान्यायं शेषाणां मन्त्रवर्ज्जितं।

अस्यार्थः। पितरि जीवति श्राद्धं कुर्य्यात् येषां पिता कुर्य्यात्। पितर्य्येव जीवत्यन्येषु प्रमीतेष्विति प्रथमः पक्षः। पितरि पितामहे च जीवति अन्येषु प्रमीतेष्विति द्वितीयः। त्रयो जीवन्तीति तृतीयः। यस्य पिता प्रेतः स्यात् पितामहप्रपितामहौ जीवत इति चतुर्थः। यस्य पिता पितामहश्च प्रेतौ स्यातां प्रपितामहश्च जीवतीति पञ्चमः। पितामहपितामहो वृद्धप्रपितामहः। यस्य पितामहः प्रेतः स्यात् पिता प्रपितामहश्च जीवत इति षष्ठः। यस्य पिता प्रपितामहश्च प्रेतौ स्यातां पितामहश्च जीवति इति सप्तमः। अयमत्राशयः। अन्तर्हितेभ्योऽनन्तर्हितेभ्यो वा प्रेतेभ्यस्त्रिभ्यः क्रमेण श्राद्धं कर्त्तव्यमिति। न्यायप्राप्ते ऊहे पुनर्वचनं एकप्रयोगतया तदप्राप्त्याशङ्कायां शेषाणां मन्त्रवर्जितमिति। पितृमातामहव्यतिरिक्तानां ऊहितमन्त्रवर्जितं पितृपदवानेव मन्त्रः स्यादित्यर्थः। अत्र च संख्योहवचनं लिङ्गं, न पुनः पितृव्यादिश्राद्धमन्त्रनिषेधः। कुर्य्यादिति यच्छब्दा-

योगादकरणे न जीवत्पितृकस्य प्रत्यवायः किन्तु कुर्व्वाणस्य फलविशेषो भवतीति।

अथ जीवच्छ्राद्धदेवताः।

ब्रह्मा, विष्णुः, ईश्वरः, रुद्रः, इन्द्रः, प्रकृतिः, मुद्गलः पुरुषः, शिव इत्यष्टौ। शर्व्वः, शर्वपत्नी, भवो, भवपत्नी, रुद्रो, रुद्रपत्नी, उग्रः, उग्रपत्नी, भीमो, भीमपत्नी, ईशः, ईशपत्नी, महादेवो, महादेवपत्नी, पशुपतिः, पशुपतिपत्नी, इति षोड़श। प्राणापानव्यानसमानोदानाः एषामधिपतयः पृषातका रुद्राश्चेति दश। अग्निवाय्वादित्या व्याहृतिदेवतास्तिस्रः। सपत्नीकाः पित्रादयो मातामहादयश्चेति षट्। पार्व्वणोपदिष्टाग्नौकरणवैश्वदेविकदेवताश्च एताश्च विधिना मन्त्रवर्णमातिदेशेन चावगताः। विष्ण्वादींश्च तत्तत्प्रकरणे दर्शयिष्यामः। इति जीवच्छ्राद्धदेवताः।

अथ सन्न्यासाङ्गभूतश्राद्धेषु देवताः।

तत्र देवश्राद्धे ब्रह्मविष्णुमहेश्वराः। ऋषिश्राद्धे देवर्षिब्रह्मर्षिक्षत्रर्षयः। क्वचिद् ग्रन्थे देवर्षिक्षत्रर्षिमनुष्यर्षयः। दिव्यश्राद्धे वसुरुद्रादित्याः। मनुष्यश्राद्धे सनकसनन्दनसनातनाः। भूतश्राद्धे पृथिव्यादीनि भूतानि, चक्षुरादीनि करणि, चतुर्व्विधभूतग्राम इति तिस्रः। पितृश्राद्धे पितृ-पितामहा मातामह-प्रमातामह-वृद्धप्रमातामहाश्च। मातृश्राद्धे मातृपितामहीप्रपितामह्यः। आत्मश्राद्धे आत्मपितृपितामहाः। एते च सर्व्वे नान्दीमुखविशेषणवन्तो देवताः। यतः शौनकप्रोक्ते सन्न्यासविधौ पठ्यते।

अथातः सन्न्यासविधिं व्याख्यास्यामः।

पूर्व्वेद्युर्नान्दीमुखश्राद्धं कुर्य्यादेव। ऋषिदिव्यमनुष्यभूतपितृमात्रात्मादीनां पृथक्पिण्डदानैर्युग्मैर्ब्राह्मणैरष्टौ श्राद्धानि कुर्य्यादिति। एषाञ्च श्राद्धानां सन्न्यासार्थत्वेन कर्माङ्गत्वादिष्टिश्राद्धे क्रतुदक्ष इति, विश्वेदेवाः सत्यवसुसंज्ञका वा "सत्यो नान्दीमुखे वसुः" इति वचनात्। इति सन्न्यासाङ्गश्राद्धे देवताः।

तदेवमुक्ताः श्राद्धशब्दार्थान्तर्गत-ब्राह्मणभोजन-पिण्डनिर्व्वपणात्मकप्रधानकर्म्मद्वय-सम्बन्धिन्यो देवताः। अथेदानीं श्राद्धान्तर्गताग्नौकरणसंज्ञक-प्रधानकर्म्म-सम्बन्धिन्योऽभिधीयन्ते।

तत्तावच्छतपथे पिण्डपितृयज्ञप्रकरणे।

स उदास्याग्नौ द्वे आहुती जुहोति देवेभ्यः। देवान्वा एष उपावर्त्तते य आहिताग्निर्भवति यो दर्शपूर्णमासाभ्यां यजतेऽथैतत्पितृयज्ञेनेवाचारीत्तद् देवेभ्यो निह्नुते स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति तस्मादुदास्याग्नौ द्वे आहुती जुहोति देवेभ्यः॥ स वा अग्नये च सोमाय च जुहोति[१]।

महाभारतेऽपि पुराकल्पक्रूपार्थश्राद्धसहितोऽग्नौकरणे अग्निविधिर्दृश्यते। तथा।

तत्र यज्ञे प्रवृत्ते[२] तु सर्व्व एव महर्षयः।
पितृयज्ञानकुर्व्वंस्ते विधिदृष्टेन कर्म्मणा॥
ऋषयो धर्म्मनित्यास्तु कृत्वा निवपनान्युत।
तर्पणञ्चाप्यकुर्व्वन् वै तीर्थाम्भोभिर्यतव्रताः॥

---

(१) शतपथब्राह्मणे २ अ०. ४.२.१.
(२) पुराकल्पप्रवर्त्ते इति ग०।

निवापैर्दीयमानैश्च चातुर्व्वर्ण्येन भारत ।
तर्पिताः पितरो देवास्तेऽन्नं न जरयन्ति वै ॥
अजीर्णेनाभ्यहन्यन्त ते देवाः पितृभिः सह।
सोममेवाभ्यपद्यन्त निवापान्नाभिपीड़िताः ॥
तेऽब्रूवन् सोममासाद्य पितरो जीर्णपीड़िताः ।
निवापान्नेन पीड़ा नः श्रेयो नोऽत्र विधीयताम् ॥
तान् सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः ।
स्वयम्भूसदनं यात स च श्रेयो विधास्यति ॥
ते सोमवचनाद्देवाः पितृभिः सह भारत।
मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥

देवपितर ऊचुः ।

निवापान्नेन भगवन् भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥
इति तेषां वचः श्रुत्वा स्वयम्भूरिदमब्रवीत् ।
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति ॥

अग्निरुवाच ।

सहितास्तत्र भच्यामो निवापे समुपस्थिते ।
जरिष्यत्यथ वोऽप्यन्नं मया सार्द्धं न संशयः ॥
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वरा बभुः ।
एतस्मात् कारणादग्नेः प्राक्तनं दीयते नृप ॥
न्युप्ते चैवाग्निपूर्व्वे वै निवापे पुरुषर्षभ।
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥

रक्षांसि चापवर्त्तन्ते स्थिते देवे विभावसौ ।

ब्रह्मवैवर्त्तब्रह्माण्डपुराणयोः यमस्यापि देवतात्वमाहुतिमन्त्राम्नानादवगम्यते ।

अग्नये कव्यवाहनाय स्वधा चाङ्गिरसे नमः ।

सोमाय पितृमते स्वधा चाङ्गिरसे नमः ।

यमाय वैवस्वते स्वधा नम इति ब्रुवन्निति ।

आपस्तम्बसूत्रे यमस्य वैकल्पिकं देवतात्वमुक्तम् । न यमाय जुहोतीत्येक इत्यभिधानात् । एवमुक्ताः श्राद्धे प्रधानकर्म्मदेवताः ।

अथेदानीं वैश्वदेविकाख्याङ्गसमवायिन्योऽभिधीयन्ते । तत्र विश्वेषां देवानामुत्पत्तिर्ब्रह्माण्डब्रह्मवैवर्त्तयोः ।

दक्षस्य दुहिता साक्षाद्विश्वा नामेति विश्रुता ।

विधिना सा तु धर्म्मज्ञ दत्ता धर्म्माय धीमते ॥

तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ।

विख्यातास्त्रिषु लोकेषु सर्व्वलोकनमस्कृताः ॥

एतेषां स्वरूपं गरुड़पुराणे ।

विश्वायां दक्षकन्यायां जाता धर्म्मान्महात्मनः ।

विश्वेदेवा इति ख्याता देववर्य्या महाबलाः ॥

शक्रेण सह योद्धृणां विजेतारस्तु रक्षसां ।

यन्नामस्मरणादेव प्रद्रवन्त्यसुराः क्षणात् ॥

वाणवाणासनधरा द्विभुजाः श्वेतवाससः ।

केयूरिणः कुण्डलिनः किरीटकटकान्विताः ॥

धैर्य्यसौन्दर्य्यसंयुक्ता दिव्यस्रगनुलेपनाः ।

इन्द्रस्यानुचराः सर्व्वे गोप्तारस्त्रिदिवस्य ते ॥

यमसंहितायां ।

विश्वेऽपि विश्वेदेवास्तु दक्षिणे बाणपाणयः ।

द्विहस्ता वामभागे तु शरासनपरायणाः ॥

पद्मपुराणे ।

विश्वांस्तु देवान् शरचापपाणीन्

ध्यायेद्विचित्राभरणान् सुवेशान् इति ।

एतेषां श्राद्धदेवतात्वे इतिहासस्तु ब्रह्माण्डब्रह्मवैवर्त्तयोः ।

समानवमहात्मानस्तेरुरुग्रमहत्तपः ।

हिमवच्छिखरे रम्ये देवर्षिगणसेविते ॥

सर्व्वाप्सरोभिश्चरिते नित्यं गन्धर्व्वसेविते ।

शुद्धेन मनसा प्रीताः पितरस्तानथाब्रुवन् ॥

वरं वृणीध्वं प्रीताः स्म कं कामं करवामहे ।

ब्रह्मा चाह महातेजास्तपसासौ सुतर्पितः ॥

प्रीतोऽस्मि तपसानेन कं कामं वितरामि वः ।

एवमुक्तास्तदा विश्वे ब्रह्मणा विश्वकर्म्मणा ॥

ऊचुस्ते सहिताः सर्व्वे ब्रह्माणं लोकपावनं ।

श्राद्धेऽस्माकं भवेद्देयं स ह्येष काङ्क्षितो वरः ॥

प्रत्युवाच ततो ब्रह्मा तान् वै त्रिदशपूजितः ।

भविष्यत्येवमेवेति काङ्क्षितो वो वरस्तु यः ॥

पितृभिश्च तथेत्युक्तमेवमेतन्न संशयः ।

सहास्माभिस्तु भोक्तव्यं यत् किञ्चित् पच्यते त्विह ॥

अस्माकं कल्पिते श्राद्धे भवन्तोऽप्यग्रिनो हि वै ।
भविष्यन्ति मनुष्येषु सत्यमेतदुदाहृतम् ।
माल्यैर्गन्धैस्तथान्नेन युष्मांश्चैवार्चयन्तु वै ॥
दत्ते दत्ते तु युष्मभ्यमस्मभ्यन्दास्यते ततः ।
विसर्जनमथास्माकं पूर्वं पश्चात्तु दैवतं ॥
रक्षणश्चैव श्राद्धस्य अतिथेस्तु विधिश्च यः ।
भूतानां देवतानाञ्च पितॄणां श्राद्धकर्म्मणि ॥
एवं कार्य्यञ्च सम्यक् तु सर्व्वमेतद्भविष्यति ।
एवं दत्वा वरं तेषां ब्रह्मा पितृगणैः सह ।
भूतानुग्रहकृद्देवः स चचार यथासुखमिति ॥

तथा क्रतुस्मृतिभविष्यत्पुराणयोः ।

सदैवं भोजयेच्छ्राद्धं तत्पूर्व्वञ्च प्रवर्त्तयेत् ।
अन्यथा ह्यवलुम्पन्ति सदेवासुरराक्षसाः ॥

अत्र विश्वान्देवानुदिश्य क्रियमाणं श्राद्धाङ्गभूतं कर्म्म दैवमित्युच्यते । तेन सहितं सदैवं, सदैवेतिनियमेन तत्पूर्व्वं दैवपूर्व्वं प्रवर्त्तयेत् कुर्य्यात् । यदि तन्न क्रियते तदा श्राद्धफलं रक्षांस्यपघ्नन्ति स्वयं वा आददत्ते । अत्र खलु दैवेन कर्म्मणा सह वर्त्तते श्राद्धशब्दवाच्यं कर्म्मेति समासार्थावगमात् श्राद्धाङ्गदेनाप्रधानत्वेन च दैवस्य व्यपदेशादङ्गत्वमवगम्यते । श्राद्धरक्षार्थत्वाभिधानेनोपकारकत्वावगमात् ।

मनुस्मृतावपि ।

दैवकार्य्याद्द्विजातीनां पितृकार्य्यं विशिष्यते ।
दैवं हि पितृकार्य्यस्य पूर्व्वमाप्यायनं स्मृतम् ॥

तेषामारक्षभूतन्तु पूर्व्वं दैवं नियोजयेत्।
रक्षांसि हि विलुम्पन्ति[१] श्राद्धमारक्षवर्जितं॥

अस्यार्थः। पितृकार्य्यं विशिष्यते प्रधानतया श्रेष्ठतां लभते। कथमित्यत आह दैवं हि पितृकार्य्यस्य पूर्व्वं क्रियमाणं विघ्नकारकराक्षसनिवारणद्वारेणाप्यायननिर्वाहकं भवतीति। अनेनापि वैश्वदेविकमङ्गकर्म्मैवेति ज्ञायते, पित्रादिदैवत्यमातामहदैवत्य-प्रधानद्वयवत्यमावास्याश्राद्धप्रयोगे "तन्त्रं वा वैश्वदेविकम्" इति याज्ञवल्क्येन प्रधानप्रवृत्तत्वाभिधानाच्च[२] तत्पूर्व्वं प्रवर्त्तयेदित्युक्तं। अतोवक्ष्यमाणान् पदार्थान् प्रत्येकं वैश्वदेवस्थाने कृत्वा पितृस्थाने कुर्य्यात्।

तथा च देवलः।

यत्र तत् क्रियते कर्म्म पैतृके ब्राह्मणान् प्रति।
तत्सर्व्वं तत्र कर्त्तव्यं वैश्वदैवत्यपूर्व्वकं॥

पैतृके पितृदेवत्ये कर्म्मणि श्राद्ध इत्यर्थः।

विष्णुधर्म्मोत्तरेऽपि।

आदौ समर्च्चयेद्विप्रान् वैश्वदेवनिवेशितान्।
निवेशितांश्च पित्रर्थे ततः पश्चात् समर्चयेत्॥

वृद्धशातातपेऽपि।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः।
प्रदद्यात् पार्व्वणश्राद्धे दैवपूर्व्वं विधानतः॥

पार्व्वणग्रहणादमावास्याश्राद्ध एव वैश्वदेवपूर्व्वकत्वं नियम्यते।

---

(१) रक्षांसि विप्रलुम्पन्तीति ग०।
(२) प्रधानद्वयोपकारार्थमिति ख०।

एकोद्दिष्टाभ्युदयिकनित्यश्राद्धेषु वैश्वदेविकाभावोवच्यते भविष्यत्-पुराणे ।

तप्यमानास्तपस्तीव्रं प्रोषिता ब्रह्मशासनात् ।
विश्वेदेवास्तु रक्षार्थे पितृयज्ञे च सर्व्वदा ।
अतः पूर्व्वं प्रदातव्यं तेभ्योऽन्नं पितृकर्म्मणि ॥

अन्नग्रहणं गन्धादीनामप्युपलक्षणार्थं । एवं सर्व्वेषां श्राद्धसम्बन्धिनां पदार्थानां वैश्वदेवपूर्व्वत्वप्राप्तौ क्वचिदपवादः प्रदृश्यते ब्रह्माण्डपुराणे ।

पश्चाद्विसर्जयेद्देवान् पूर्व्वं पैतामहान् द्विजान् ।
मातामहानामप्येवं सह देवैः क्रमः स्मृतः ॥

पैतामहग्रहणं पैत्रप्रपैतामहयोरप्युपलक्षणार्थं ।

शातातपस्मृति-विष्णुधर्म्मोत्तरयोः ।

विश्वेदेवनिविष्टानां चरमं हस्तधावनं ।
विसर्जनञ्च निर्द्दिष्टं तेषु रक्षा यतः स्थिता ।
सर्व्वमन्यत् प्रदातव्यमादौ तेषां नराधिप ॥

'चरमं' पाश्चात्यं । 'हस्तधावनं' भोजनान्नावलिप्तहस्तक्षालनार्थजलदानम् ।

तदेवमेतद्ब्रह्मवैवर्त्ताद्युक्तं विश्वेषां देवानां श्राद्धे देवतात्वं नित्यश्राद्धादावपोह्यते ।

आह शातातपः ।

नित्यश्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च ।
मातृश्राद्धन्तु युग्मैः स्याद्दैवं प्राङ्मुखैः पृथक् ।

योजयेद्दैवपूर्व्वाणि श्राद्धान्यन्यानि यत्नतः॥

मातृश्राद्धमत्राभ्युदयिकपूर्व्ववर्त्ति विवक्षितं। ब्राह्मणयुग्मत्वप्राङ्मुखोपवेशनलिङ्गात्। तत्र यद्यपि पित्रा मातामहादिश्राद्धद्वयात् पृथग्भिन्नकालेऽनुष्ठीयते तदानीमदैवं वैश्वदेवरहितं कर्त्तव्यम्। यदा पुनरेकस्मिन्नेव काले श्राद्धत्रयं क्रियते तदा तन्त्रेणावृत्त्या वा वैश्वदेविकानुष्ठानमिति श्राद्धत्रयं प्रकुर्व्वीत। "तन्त्रं वा वैश्वदेविकमिति" वशिष्ठवचनादवगन्तव्यं। तत्र भिन्नकाले श्राद्धत्रयानुष्ठानं।

पूर्व्वेद्युर्मातृकं श्राद्धं कर्म्माहे पितृकं तथा।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु॥

इत्यादिभिर्वचनैराभ्युदयिकश्राद्धप्रकरणे दर्शयिष्यते। पृथगनुष्ठीयमानमातृश्राद्धव्यतिरिक्तान्याभ्युदयिकनिमित्तकानि श्राद्धानि विकल्पेन वैश्वदेवविहीनानि कार्य्याणि। तथाचाभ्युदयिकं प्रकृत्य मार्कण्डेयपुराणे उक्तं।

विश्वदेवविहीनन्तु केचिदिच्छन्ति मानवाः।
युग्माश्चात्र द्विजाः कार्य्यास्ते पूज्याश्च प्रदक्षिणम्॥

केचिद्ग्रहणादत्र विकल्पो गम्यते।

शातातपभविष्यत्पुराणयोः।

एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेत् द्विजान्॥

ब्रह्मपुराणे।

पार्व्वणं दैवपूर्व्वं स्यादेकोद्दिष्टं सुरैर्व्विना।

तथा एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकमित्यादि चैकोद्दिष्टप्र-

करणे वक्ष्यते । अत्रैकोद्दिष्टेषु वैश्वदेविककर्माभावे कारणं नागरखण्डेऽभिहितं ।

वृत्रासुरस्य सङ्ग्रामे प्रमीतानां दिवौकसां ।
निवापाय गयाकूपमवाप त्रिदशेश्वरः ॥
नगरे नगरे तत्र चतुर्दश्यां महालये ।
श्राद्धानि श्रद्धया कर्त्तुमारेभे विधिवद् वृषा ॥
श्राद्धमन्त्रैरथाहूतानग्निष्वात्तादिकान् पितॄन् ।
अन्यानपि स्ववर्गीयान्[१] प्रेतान् शस्त्रहतांश्च तान् ॥
ब्राह्मणानां शरीरेषु विशतः सन्ददर्श सः ।
विश्वान्देवांस्तु नापश्यत्तदर्थञ्च व्यलम्बत ॥
अथ शक्रेण सहसा दृष्टः पृष्टश्च नारदः ।
विश्वेषां प्राह देवानामनागमनकारणं ॥
गयायां कुर्व्वतः श्राद्धं ब्रह्मणः परमेष्ठिनः ।
विश्वेदेवा मया दृष्टाः तत्किमर्थं विलम्बसे ॥
इति नारदवाक्येन क्रुद्धो वृद्धश्रवास्ततः ।
विश्वैर्देवैर्व्विना श्राद्धमेकोद्दिष्टविधानतः ॥
चक्रे शतक्रतुस्तेऽपि प्रेताः प्रापुः परां गतिं ।
एवंविधञ्च समयं श्रावयामास तान्[२] द्विजान् ॥
विश्वे हि देवाः श्राद्धस्य रक्षणार्थं व्यवस्थिताः ।
तैर्विना श्राद्धसंरक्षा मयैव हि विधास्यते ॥

---

(१) अन्यांश्च पितृवर्गांश्चेति ग० ।
(२) स इति ग० ।

अवैश्वदेविकं श्राद्धमत ऊर्द्धं प्रवर्त्तताम् ।
इति तस्मिन् वदत्युच्चैर्व्विश्वेदेवाः समाययुः ॥
पुरुहूत पुरा सृष्टा वयं देवेन वेधसा ।
त्वया तु चरमं नाथ(१) विसृष्टैवं प्रसीद नः ॥
मघवन्नघवन्तोऽद्य न भवामः कथञ्चन ।
बहिः करोषि श्राद्धेऽद्य(२) कस्मादस्मान् दिवस्पते ॥
इति वाष्पाम्बुकल्लोलचालितः चितिशोकतः ।
अभ्यर्थनाभिस्तेषां स प्रससाद न सीदताम् ॥
अथ वाष्पोष्मणस्तस्मादण्डान्यासन्ननेकशः ।
जज्ञिरे पुरुषास्तेभ्यो लक्षशो राक्षसोपमाः ॥
विश्वैर्द्देवैस्तथादिष्टास्ते जगद्ग्रासलालसाः ।
अस्मद्विरहितं श्राद्धमाहारो वो भविष्यति ॥
जाताः चित्यूष्मजैरण्डैस्तेन कूष्माण्डसंज्ञिताः ।
विहरध्वमिति प्रोच्य विश्वेदेवास्तिरोदधुः ॥
अथ कूष्माण्डसंकीर्णविश्वमालोक्य विश्वसृक् ।
आहूय विश्वानिन्द्रञ्च व्यवस्थां विदधे विधिः ॥
एकोद्दिष्टाभिधानानि सदा श्राद्धान्यतः परं ।
विश्वैर्द्देवैर्व्विना सन्तु सत्यत्रागस्तु वृत्रहा ॥
अवैश्वदेविकं श्राद्धमन्यत् कूष्माण्डतृप्तये ।
भविता भस्मरेखाभिः पात्ररचा च यत्र न ॥

---

(१) तातेतिख० ।
(२) श्राद्धेभ्य इति ग० ।

कूष्माण्डीभिरतोरग्निः सलिलैरभिमन्त्रितैः ।
अप्रेक्षितः श्राद्धपाको भवद्भिर्भुज्यतां सुखम् ॥
इत्युक्त्वा प्रीणणञ्चक्रे कूष्माण्डानां पितामहः ।
अग्नये वायवेऽर्काय प्रददौ प्रविभज्य तान् ॥
पितृपक्षे चतुर्दश्यामेकोद्दिष्टविधानतः ।
श्राद्धं शस्त्रहतस्यैव कार्य्यं नान्यस्य कस्यचित् ॥
इत्यूचिवान्विरिञ्चोऽन्तर्दधे सर्व्वान् विसर्ज्य तान् ।
अवैश्वदेविकं श्राद्धमेकोद्दिष्टं ततोऽभवत् ॥

अथैतेषां विश्वेषां नामान्युच्यन्ते । तत्र तावन्महाभारते ॥

विश्वे नाग्निमुखादेवाः संख्याताः पूर्व्वमेव ते ।
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् ॥
सहः कृतिर्विपाप्मा च पुण्यकृत् पावनस्तथा ।
ग्राष्णिक्षमः समूहश्च दिव्यभानुस्तथैव च ॥
विवस्वान् वीर्य्यवान् ह्रीमान् कीर्त्तिमान् कृत एव च ।
विध्यर्थः सोमपूर्व्वश्च सूर्य्यश्रीश्चेति नामतः ॥
सोमाय सूर्य्यः सावित्रो दत्तात्मा पुण्डरीयकः ।
उष्णीलाभो नभोदश्च त्रिश्चायुर्दीप्तिरेव च ॥
समुद्दनः सुवेषश्च यमारिः शङ्करोभवः ।
ईशः कर्त्ता कृतिर्धाता भुवनो दिव्यकर्म्मकृत् ॥
गणितः पञ्चवीर्य्यश्च प्राचीनोरञ्जितस्तथा ।
सप्तकृत्सोमवर्च्चाश्च विश्वकृत् कविरेव च ॥
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च ।

जितात्मा मुनिवीर्य्यश्च दृप्तरोमा प्रभङ्करः ॥
अतिकर्म्मा प्रतीतश्च प्रदाता चांशुमांस्तथा।
शैलाभः परमक्रोधी धारोष्णी भूपतिस्तथा॥
स्रजीवो विकरी चैव विश्वेदेवाः सनातनाः।
कीर्त्तितास्ते महाभागाः कालस्य गतिगोचराः ॥

एते च महाभारतोक्ता सहकृत्यादिनामानो विश्वेदेवाः यथोक्तैर्नामभिः संबुद्ध्यादिविभक्त्यन्तैः प्रतिपदार्थं सङ्कीर्त्य श्राद्धे समुच्चयेन विनियोज्याः। संक्षेपेण वा सकृत् सर्व्वानपि बुद्धावारोप्य सहकृत्यादयो विकरीपर्य्यन्ता विश्वेदेवा इदं वः पाद्यमित्यादिप्रकारः प्रयोगो विधेयः। एते च परस्परमेव समुच्चीयन्ते न तु बृहस्पत्याद्युक्तपुरूरवआर्द्रवादिभिः सहेति। यतस्तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनामित्यनेन भागशब्दवाच्यहविःसंबन्धविधायकेन शास्त्रेण तेषामिति सर्व्वनामरूपैकपदोपात्तानामेतेषामेव सहकृत्यादीनां परस्परसापेक्षाणामेव प्रयोगनिर्व्वर्त्तकत्वमवगम्यते। ननु शास्त्रान्तरविहितपुरूरव-आर्द्रवादिसापेक्षाणामिति न वाच्यं। इष्टिश्राद्धे क्रतुदक्ष इत्यादिना वचनेन विशेषविहितपुरूरव-आर्द्रवादिभिरेव सर्व्वेषां श्राद्धानामवरुद्धत्वात्सहकृत्यादयो न क्वचिदवकाशं लभन्त इति न वैश्वदेविके देवतात्वेन कीर्त्तनार्हा इति। आनर्थक्यप्रहतानां विपरीतं बलाबलमिति न्यायात् सामान्यतो विहिता अपि विशेषतो विहितान् पुरूरवआर्द्रवादीन् बाधित्वा देवतात्वेन निविशन्ते। ते च विशेषग्रहणाभावात् सर्व्वेष्वपि श्राद्धेष्विति मन्यमानं प्रतिविशेषग्रहणमुच्यते। प्रकृतौ वा द्विरुक्तत्वादिति न्यायात् प्रकरणात् पार्व्वण एव

निविशन्ते। न पार्व्वणविकृतिभूतेषु कर्म्माङ्गादिश्राद्धेषु। नन्वतिदेशा द्भविष्यति। न। आतिदेशिकैः क्रत्वादिभिर्बाधात्। तदेवं पार्व्वणश्राद्धे सहक्रत्वादीनां वैश्वदेविके कर्म्मणि पुरूरवआर्द्रवाभ्यां सह विकल्पेन देवतात्वं सिद्धम्। अथैतेषां यैर्नामभिः कर्म्मसमावायः प्रसिद्धस्ता-न्युच्यन्ते। बृहस्पतिस्मृतौ।

क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथैव च।
धुरिश्च रोचनश्चैव तथा चैव पुरूरवाः।
आर्द्रवश्च दशैते तु विश्वेदेवाः प्रकीर्त्तिताः॥

एते एषु श्राद्धेषु विभज्य विनियोज्याः।

उक्तं बृहस्पतिस्मृतावेव।

इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः।
नैमित्तिके कालकामौ काम्ये च धुरिरोचनौ।
पुरूरवा आर्द्रवश्च पार्व्वणे समुदाहृताविति॥

शङ्खस्मृतावपि।

इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके।
नान्दीमुखे सत्यवसू काम्ये च धुरिरोचनौ॥
पुरूरवार्द्रवौ चैव पार्व्वणे समुदाहृतौ।
नैमित्तिके कालकामाविति सर्व्वत्र कीर्त्तयेत्॥ इति।

इष्टिश्राद्धशब्देनात्र कर्म्माङ्गं श्राद्धं गृह्यते। तथा चाधानसोम-यागनिषेकादिसंस्कारादिभूतमपि श्राद्धं लभ्यते। कर्म्माङ्गञ्च श्राद्ध-भेदप्रकरणे वक्ष्यते।

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्म्माङ्गं वृद्धिवत्कृतमिति।

अत्र कर्म्माङ्गमिति परिभाष्यते। वृद्धिवदिति नान्दीमुखे दैवतत्व-स्वाहाशब्दप्रयोगो दधिबदरादिमिश्रपिण्डत्वादयो वृद्धिश्राद्धधर्म्मा अतिदिश्यन्ते। विहितं वृद्धिश्राद्धं याज्ञवल्क्यादिस्मृतिषु। एवं प्रदक्षिणीकृत्य वृद्धौ नान्दीमुखान् पितॄन् यजेतेत्यादिभिर्वचनैः वृद्धि-श्राद्धञ्च वृद्धवशिष्ठादिभिर्दर्शितं। पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतमिति। अत्राभ्युदयिकश्राद्धविशेषे वृद्धिश्राद्धशब्दः परिभाष्यते। आदिशब्देन गर्भाधान-पुंसवन-सीमन्तोन्नयन-व्यतिरिक्तानामन्नप्राशन-चूडाकरणादिसंस्कारकर्म्मणां ग्रहणं। गर्भाधानादिसंस्कारत्रयाङ्गभूतस्याभ्युदयिकस्य कर्म्माङ्गशब्देनाभिधानात्। एतच्च वृद्धिश्राद्धाद्भिन्नं कर्म्माङ्गं वृद्धिवदिति पारस्करेऽतिदेश दर्शनात्। भेदे ह्यतिदेशो भवति। श्राद्धभेदोद्देशे भेदाभिधानाच्च। काम्यपार्व्वणादिभेदास्तत्तत्प्रकरणे वक्ष्यन्ते। ननु नैमित्तिके कालकामावित्युक्तं एकोद्दिष्टञ्च श्राद्धं नैमित्तिकशब्देनोच्यते, एकोद्दिष्टञ्च यच्छ्राद्धं तन्नैमित्तिकमुच्यते इत्येवं परिभाषितत्वात्। एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकमित्येवञ्चैकोद्दिष्टे वैश्वदेविकनिषेधात् कथं कालकामौ। न च निमित्ते भवं नैमित्तिकमित्येवं व्युत्पत्त्या नवान्नलाभादिनिमित्तविहितमपि नैमित्तिकशब्देनाभिधातुं शक्यं। तस्य सामान्यशास्त्रस्थानीयस्य योगस्य विशेषशास्त्ररूपिण्या परिभाषया बाधस्य न्याय्यत्वात्। सत्यमेवं तथापि प्रकृते विरोधात् योगमेवाश्रित्य नैमित्तिकशब्देन नवान्नलाभादिनिमित्तविशेषे क्रियमाणं श्राद्धमुच्यते। यदुक्तमादित्यपुराणे।

विश्वेदेवौ क्रतुर्दक्षः सर्व्वास्विष्टिषु कीर्त्तितौ ।
नित्यं नान्दीमुखश्राद्धे वसुसत्यौ च पैतृके ॥
नवान्नलाभे द्वौ देवौ कालकामौ सदैव हि ।
अपि कन्यागते सूर्य्ये श्राद्धे च धुरिरोचनौ ।
पुरूरवार्द्रवौ चैव विश्वेदेवौ तु पार्व्वणे ॥ इति ।

सर्व्वास्विष्टिषु सर्व्वेषु कर्म्माङ्गश्राद्धेषु, नवान्नलाभे नवान्नलाभनिमित्ते सति । अत्रापि श्राद्धविधिः श्राद्धकालप्रकरणे व्रीहियवपाकैरित्यादिना वक्ष्यते । स्मृतिचन्द्रिकाकारस्तु नवान्नलाभे सति नवान्नभोजनोपक्रमात् पूर्व्वं पितृभक्त्या नवान्नेन श्राद्धे क्रियमाणे द्वौ कालकामौ वैश्वदेविके कर्म्मणि देवतात्वेन कीर्त्तनीयावित्याह । एतच्च निमित्ताधिकारेण क्रियमाणानां वैश्वदेविकान्वितानामुपरागादिश्राद्धानामुपलक्षणार्थं । कन्यागते सूर्य्य इति भाद्रपदापरपक्षे, एतच्च काम्यश्राद्धोपलक्षणार्थं । तदेवं विरोधादवचनाच्च नैमित्तिकशब्देन नवान्नलाभादिनिमित्ते क्रियमाणं श्राद्धमुच्यत इति सिद्धं । अथवा नैमित्तिके कालकामावित्यत्र नैमित्तिकशब्देनैकोद्दिष्टाभिधायिना एकोद्दिष्टयुक्तं सपिण्डीकरणमुच्यते । तत् हि एकोद्दिष्टपार्व्वणरूपप्रधानद्वयात्मकं अतोविश्वदेविकं तत्रास्तीति कालकामयोर्विधिर्युक्तः । शङ्खधरहरिहरौ पुनरेवमाहतुः । केचित् प्रत्यब्दमेकोद्दिष्टमिच्छन्ति । अन्ये तु पार्व्वणं । अतोनैमित्तिकशब्दवाच्यस्यैकोद्दिष्टस्य स्थाने क्रियमाणं त्र्याहिकं पार्व्वणमपि नैमित्तिकशब्दं लब्धुमर्हतीति तस्मिन् कालकामविधिरिति । इयं वा अनयोरुत्प्रेक्षा प्रागुक्तरीत्या वचनार्थव्यवस्थोपपत्तेर्नाविचार्य्य ग्रहीतव्या ।

अथेदं चिन्त्यते । किं पुरूरवआर्द्रवयोः पार्वणप्रयोगे समुच्चितयोः प्रयोग उत विकल्पितयोरिति । एवमिष्टिश्राद्धे क्रतुदक्षयोः, एवं नान्दीमुखादिविहितसत्यवस्वादिषु युग्मेष्वपि विकल्पनीयम् । तत्र तावद्विकल्पितयोरिति गृह्यते । व्यवस्थापने क्रतुर्दक्ष इति पृथगेकैकस्य कर्म्मसम्बन्धावगमात् । न त्वेकैकस्य पृथग्देवतात्वात् द्रव्यदेवतासम्बन्धभेदात् कर्म्मण एव भेदः स्यात् । को विकल्पस्यावकाशः । एककर्म्मान्वयिनोर्ह्येकद्वारत्वे विकल्पाभिधा । अस्तु नाम कर्म्मभेदः एकप्रयोगानन्वयमात्रेण विकल्पाभिधा । वस्तुतस्तु न देवताभेदात् कर्म्मभेदः । शब्दान्तराभ्यास-संख्या-गुण-प्रक्रिया-नामधेयानां कर्म्मभेदकत्वाभिधानात्। ननु देवतापि गुण इति भेदिका भवितुमर्हति । मैवं। न हि गुण इत्येव भेदकः किन्त्वेकस्मिन् कर्म्मण्यलभमानोऽन्वयम्। अन्यथा द्रव्यविकल्पो देवताविकल्पः तयोः समुच्चयो वा क्वचिन्न स्यात् । दृश्यते चाग्निहोत्रादीनां द्रव्यादौ विकल्पः समुच्चयश्च। सोमे च देवतासमुच्चयः । न च वाच्यं । यथा सप्तदशप्राजापत्यानित्यत्र पृथक्त्वनिवेशिन्या संख्यया द्रव्यदेवतासम्बन्धभेद एवमत्रापि देवताभेदेन सम्बन्धभेदात् कर्म्मभेद इति । यत एवं मन्यमानोभवानिन्द्रवाय्वाद्यनेकदेवतान्वितं सोमयागमेव स्मरतु । ननु स्मृत एवं किन्तु तत्रेन्द्रवाय्वादीनामेकयागसम्बन्धित्वेनावगतद्रव्यसम्बन्धावगमात् न कर्म्मभेदकत्वं। इह तु न तथेति भेदकत्वमिति । न। उत्पत्तिवाक्ये हि श्रूयमाणो गुणो भेदकः। ननूत्पन्ने कर्म्मणि गुणं विधातुं प्रवृत्ते वाक्ये तस्य हि कर्म्मभेदकत्वेन क्वापि विकल्पसमुच्चयौ स्यातां । अतोविकल्पितयोः प्रयोग इति प्राप्ते उच्यते । "यत्तत्र क्रियते कर्म्म

पैत्रिकैर्ब्राह्मणान् प्रति । तत् सर्व्वं तत्र कर्त्तव्यं वैश्वदेविकपूर्व्वकम्" इत्यादिषु देवलादिवाक्येषु वैश्वदेविकं कर्त्तव्यमित्येवंविधे उत्पत्ति-विधाववगते विश्वेषां देवानामेकपदोपादानादन्योन्यसहितानां देव-तात्वेऽवगते सति तेषां समुच्चयोवगम्यमानो न गुणवाक्यस्थेन पृथक्-प्रयोगेण वाधितुं शक्यते । नन्वेकपदोपादानेन स्वरसतः सर्व्वेषामेव विश्वेषां साहित्यमवगतम् । तच्चेद्व्यवस्थावचनेन त्रिचतुरादिषु विश्वे-देवेषु भग्नं तदा भग्नमेवास्य साहित्यप्रतिपादनपरत्वमिति कथं समुच्चयः । उच्यते । सामान्यतोऽवगम्यमानो वचनार्थो यावत्यंशे वचनान्तरेण बाधितस्तदन्यस्मिन्नंशे व्यवतिष्ठतीति समुच्चितयोर्देव-तात्वम् । अस्त्वेवमिदन्तु सन्दिह्यते । किमेकैकं स्वेन स्वेन नाम्ना पृथग्विभक्त्यन्तेनोद्दिश्यैकैको वैश्वदेविकपदार्थोऽनुष्ठेयः उत द्वौ द्वौ द्वन्द्वसमासप्रयुक्तेन नामद्वयेनोद्दिश्येति। तदर्थमिदं विचिन्त्यते। किं सहितयोर्देवतात्वं उत देवतयोः साहित्यमिति। यदि देवतयोः साहित्यं तदा प्रत्येकं देवतात्वात् प्रत्येकमुद्देशे तत्सम्पूर्व्वत्वात् पृथक्पृथक् चतु-र्थ्यादिप्रयोगं कृत्वा पदार्थोऽनुष्ठेयः । उक्तं हि। एतस्या इति सङ्कल्प उद्देशोऽत्राभिधीयते इति। यदा तु सहितयोर्देवतात्वं तदा पुरूर-वआर्द्रवसंज्ञकयो-रग्निषोमयो-रिवैकदेवतात्वरूपाधिष्ठानभूतत्वाद्द्वन्द्वस-मासेनोद्देशं कृत्वा प्रयोगो विधेयः। तत्र "इष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्त्यौ वैश्वदेविके" इत्येवंविधेन शब्दादिवचनेन देवताविधिः, वैश्वदेविकपूर्व्व-कमित्येवंविधेन देवतादिवचनेन कर्म्मविधिः,कर्मविधिर्वा वैश्वदेविकश-ब्दस्तत्प्रत्यचन्यायेन नामधेयमिति वा मन्यमानः एकैकस्य पृथग्विभ-क्त्यन्तेन नाम्नोद्देशमाह।न च वाच्यं। तद्धितचतुर्थ्यादिविधायकभावार्था-

नामश्रवणात् कथं देवताविधिः । इत्थं वैश्वदेविके इत्यनेनानूदिते भावार्थे क्रतुदक्षादीनां विधौ तेषां द्रव्यरूपलाभाभावात्परिशेष्याद्देवतात्वेन विनिवेशे तद्धितचतुर्थ्यादीनामनुपयोगात्। एवम्प्राप्तेऽभिधीयते। यत्र तद्धितभावार्थविधायकास्तत्र न विधिरन्यत्र विधिरित्येतत् कस्य हृदयं प्रवेशं लभेत्। ननु यत्रैते सर्व्वे तस्य क्रमपरत्वमवगम्यते। यावत्यावद्विधेयान्तरमुपादीयते तावत्तावद्विधिशक्तिस्तत्र तत्र सञ्चरतीति न्यायात् । सत्यमेवं । कर्म्मविधौ तु सर्व्वविशेषणविशिष्टं कर्म्म विधातुं शक्यमिति तत्र देवताविधौ न दोषः । तत्र चेद्विहिता देवताः द्वयोरेकपदोपादानात् साहित्यविशिष्टयो-र्दैवतात्वमित्यशेषेमवत्पुरूरवआर्द्रवयो-र्द्वन्द्वसमासेनोद्दिश्य प्रयोगो विधेयः। नामधेयतापि तत्प्रख्यशास्त्रान्तरोपपादनान्निरस्तैवेति। ननु पुरूरवआर्द्रवप्रभृतिनामद्वन्द्वनिर्द्देशो विवक्षित एव नामद्वयस्याप्रयोज्यत्वात्तत्कृतस्तदनुरोधाद्विकल्पसमुच्चयन्याससमासानां प्रसङ्गः। यदि पुनः प्रयोज्यं स्यात्तदा एतन्नामद्वयानभिज्ञस्य देवतानभिज्ञत्वाच्छ्राद्धे नाधिकार एव स्यात् । दर्शितश्च तस्याप्यधिकारः ।

उत्पत्तिनाम वै तेषां न विदुर्ये द्विजातयः।
अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

इत्यनेन शास्त्रेण यदि च नामद्वयं प्रयोज्यं स्यात् तदा विश्वेदेवास आगत शृणुताम इमं हवमित्यादिमन्त्रेण श्रूयमाणं बहुवचणं विरुध्येत। तस्माद्विश्वेदेवा इत्येतच्छब्दोल्लिखनैर्वा अर्घ्यादिदानं कर्त्तव्यं। नन्वनुष्ठा-

नकाले नामद्वयानुच्चारणे तत्कथनस्य किं प्रयोजनमिति चेत् समुद्रध्यानवदनुचिन्तनमात्रमिति ब्रूमः। अत्रोच्यते। नामद्वया-प्रयोगेऽपि व्यवस्थावाक्यस्य देवतासंख्याप्रतिपादनपरत्वाद्वस्तुवृत्त्या द्वयो-रेव देवतात्वात् मन्त्रस्थबहुवचनविरोधस्तदवस्थ एवेति। अथैतद्भूयः प्रमुखस्य गणस्य विवक्षितत्वात् पूजार्थत्वाद्वा न विरोधः। तर्हि नामद्वयप्रयोगेऽपि तस्यैव विवक्षितत्वादविरोध इति क्रतुदक्षादि-नामद्वन्द्वानि प्रयोज्यान्येव। एवञ्च सति "इष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्यौ वैश्वदेविके" इति सङ्कीर्त्तनविधिरभ्युपपन्नः स्यात्। यत्तु हरिहरेणा-विवक्षितत्वाभिधानं कृतं तद्द्वित्वाभिप्रायेण न नामाभिप्रायेण। अतो नामद्वयप्रयोगेऽपि बहुवचनमेव प्रयोक्तव्यं न द्विवचनमिति तस्याभिप्रायो वेदितव्यः। यदत्र स्मृतिचन्द्रिकाकारेण बहुवचनप्रयोगे कारणमुक्तं विश्वान्देवानावाहयिष्य इति पृच्छतीति स्मृतिपुराणेषु बहुषु बहुवचनान्तप्रयोगदर्शनादिति तदस्तु नाम। मन्त्रस्थानीयस्य प्रैषस्य एकैकप्रयोगसमवायात् प्रैषवाक्याभिप्रायेणेदमुक्तमित्यभिप्राया-न्तरोतप्रेक्षासम्भवात्। यत्तु "निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत्" इत्यादिबहुवचनप्रयोगदर्शनादित्युक्तं, तत् सर्व्वप्रयोगसम-वायिविश्वेदेवानुसन्धानेनापि विधिवाक्ये बहुवचनोपपत्तेरसाधकमेव। इतश्चासाधकं। "नैमित्तिके कालकामौ काम्ये च धुरिरोचनौ" इत्यादिद्विवचनान्ततयापि प्रयोगदर्शनात्। इतश्च बहुवचनान्त-प्रयोगः। प्रायेण विश्वशब्दस्य बह्वर्थवाचकत्वात् बहुवचनान्ततया प्रयोगे प्राप्ते तद्विशेषणीभूतानां पुरूरवआर्द्रवादिशब्दानां तत्सामा-नाधिकरण्येन प्रयुज्यमानानां बहुवचनान्तता उचितेति। इदमुच्यते।

किमेकैकेब्राह्मणपुरोभागस्थापितैकैकपात्रस्थमन्नं पृथक् पृथग्विश्वान् देवानुद्दिश्य त्याज्यं उत सकृद्देवोद्दिश्येति । तत्र देवतैक्यात्सकृत्यागो लाघवादितिन्यायात् सकृदिति । अथोच्येत । पृथक्परिकल्पनस्य दृष्टार्थत्वानुरोधात् पृथक्त्याग इति । तन्न । तस्य पृथग्भोजनार्थत्वेनापि दृष्टार्थत्वनिर्व्वाहात् । एकपात्रपरिवेषितानां नानाजातीयानामन्नानां सकृद्बुद्धौ निवेशवन्नानापात्रपरिवेषितानामपि निवेशसम्भवात् सकृत्त्यागोपपत्तिः । एवञ्च परिकल्पनाङ्गानुरोधेन प्रधानावृत्तिर्न भविष्यति । एवं प्राप्त उच्यते । आपस्तम्बादिभिर्ब्राह्मणानामाहवनीयस्थानीयत्वाभिधानात् तत्प्राप्तिपर्य्यन्तस्तावद्गन्धादित्यागवदन्नत्यागः कार्य्यः । ते च पृथङ्निवेशिताः पृथङ्निवेशितान्यन्नानि न सकृत् प्रापयितुं शक्यन्ते । प्राप्तीनां पृथगिष्टत्वात् । तस्मात् पृथक् त्याज्यान्यन्नानि । अगत्या च त्यागावृत्तिर्न दोषाय इत्येकैकस्मिन्नधिष्ठाने पुरूरवआर्द्रवसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं न ममेत्यादिप्रयोगैस्त्यागो विधेयः । अत्रैतेषु विचारेष्वेवमवस्थानामुद्देश इत्येतावत्येवांशे तात्पर्य्यं । यत्पुनरेवम्भूतः प्रयोगोऽप्येवम्भूत इत्युपन्यस्तं तत्प्रयोगस्य विचारप्रयोजनभूतत्वाभिप्रायेण न साचाद्विचार्य्यत्वाभिप्रायेणेति । अतो देवतास्वरूपविचाराय प्रकृतिप्रकरणे[१] सङ्गतिर्विचारणमिति । इति वैश्वदेविकदेवतानिर्णयः ।

अथ विकिरभुक्तोच्छिष्टयोर्देवताः ।

मनुविष्णू । असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।
उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥

---

(१) प्रवर्त्तितप्रकरणे इति ग० ।

हारीतः । अच्छिन्नदन्ता ये नाम मृता गर्भाद् विनिःसृताः ।
मृता ये चाप्यसंस्कारास्तेषां भूमौ प्रदीयते ॥

मार्कण्डेयपुराणे ।

अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ।
तेन तृप्तिमुपायान्ति[१] ये पिशाचत्वमागताः ॥
ये चादन्ताः[२] कुले बालाः क्रियायोग्या ह्यसंस्कृताः ।
विपन्नास्तेऽन्नविकिरसम्मार्जनजलाशिनः ॥

मनुः । उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।
दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते ॥

वशिष्ठः । प्राक्संस्कारात् प्रमीतानां[३] स्वप्रेक्षाणामिति[४] श्रुतिः ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥
उच्छेषणं भूमिगतं विकिरं लेपनोदकम्[५] ।
अनुप्रेतेषु विसृजेदप्रजानामनायुषाम् ॥

इति विकिरभुक्तोच्छिष्टयोर्दैवताः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य सकलश्रीकरणाधिपतिपण्डित-
श्रीहेमाद्रिविरचिते चतुर्व्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे
देवतानिर्णयप्रकरणं नाम तृतीयोऽध्यायः ।

---

(१) तृप्तिमथायान्तीति ख० ।
(२) ये वा दग्धा इति ग० ।
(३) प्राक्संस्कारप्रमीतानामिति ग० ।
(४) प्रवेशनमितीति ग० ।
(५) विकिरेल्लेपनोदकमिति ख० ।

# अथ चतुर्थोऽध्यायः।

## श्राद्धदेशकथनप्रकरणम्।

यत्पुण्याचरितप्रवाहसरलस्रोतस्विनीनिर्म्मित-
श्रीमत्तीर्थरसावगाहविगलत्पापोपतापो जनः।
रोमाञ्चैरुपचीयते स सुकृती हेमाद्रिरुद्धारधीः
कर्त्तुं श्राद्धपदार्थनिश्चयमथो यत्नं समालम्बते॥

तदेवमुक्ते प्रकरणे श्रद्धया पित्रादिरूपदेवतोद्देशेन ब्राह्मणभोजनादि श्राद्धपदार्थ इत्येतत्सिद्धवत्कृत्योद्देश्यपित्रादिनिर्णयः कृतः। अथामुमेव श्राद्धशब्दार्थं विचार्य्य निश्चेतुं प्रकरणान्तरमारभ्यते। तत्र तावच्छ्राद्धनिर्वचनेन विचार्य्योऽर्थः प्रस्तूयते।

वृहस्पतिस्मृतौ।

संस्कृतं व्यञ्जनाढ्यञ्च पयोमधुघृतान्वितम्।
श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते॥

नागरखण्डे।

श्राद्धे श्रद्धा यतो मूलं तेन श्राद्धं प्रकीर्त्तितम्।
तस्मिन् प्रक्रियमाणे तु न किञ्चिद् व्यर्थतां व्रजेत्॥

मूलमिति श्रेष्ठमङ्गं। तथाच कात्यायनकृते श्राद्धकल्पे। श्रद्धान्वितः श्राद्धं कुर्वीतेति विहितं। न ह्यत्र श्रद्धानिमित्तत्वेन चोत्पद्यते, किन्तु यः श्राद्धं कुर्वीत स श्रद्धयान्वितः सन् कुर्वीतेति श्रद्धायाः श्राद्धाङ्गत्वमुच्यते। तथाच बार्हस्पत्यप्राराशरेण तृतीया-

विभक्त्या श्राद्धविशेषणत्वेन श्रद्धोक्ता ।

देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्यात् श्रद्धयान्वितम् ॥

अतएव मनुस्मृतौ श्रद्धायोगेन वैशिष्टमुक्तम् ।

यद्यद्ददाति विधिवत् सम्यक् श्रद्धासमन्वितः ।
तत्पितृणाञ्च भवति परत्रानन्तमक्षयमिति ॥

नन्दिपुराणेऽपि ।

श्रद्धा पवित्रं सर्व्वेषां पवित्राणां प्रकीर्त्तितम् ।
श्रद्धैव धर्म्मं परमं पावनञ्चैव सर्व्वदा ॥
श्रद्धाभूतानि भूतानि पवित्राणि सदैव तु ।
श्रद्धा तु माता भूतानां श्रद्धा श्राद्धेषु शस्यते ॥

अतएव यमस्मृतौ श्रद्धाभावेन वैगुण्यमुक्तम् ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
अश्रद्धया कृतं दत्तं तद्वै रक्षांसि भुञ्जते ॥

बौधायनोऽप्याह ।

श्रद्धया बोध्यते बुद्धिः श्रद्धया शोध्यते मनः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापविमोचनी ।
तस्मादश्रद्दधानस्य हविर्नाश्नन्ति देवता इति ॥

ननु सर्वस्यापि सत्कर्मणः श्रद्धाङ्गं, तत् केन विशेषेणास्यैव श्राद्धशब्दोऽयम् ।

तथा च विष्णुधर्म्मोत्तरे ।

श्रद्धान्वितेन मनसा यद्यत् किञ्चित् समाचरेत्(१)।
तत्तद्बहुफलं तस्य जायते लोकयोर्द्वयोः॥
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।
देवश्रद्धा नरा देवाः कथिता देवभाजिनः॥
पितृश्रद्धाश्च पितरो दैत्यश्रद्धा दितेः सुताः।
पापश्रद्धास्तथा पापा विज्ञेया नरकङ्गमाः॥
तस्माच्छ्रद्धां समास्थाय धर्मं धर्मी समाचरेत्।
पुण्यं बहुफलं तस्य श्रद्धामास्थाय यत्कृतम्॥
श्रद्धा पवित्रं परमं हि लोके
श्रद्धा शरीरं पुरुषस्य चोक्तम्।
श्रद्धां समास्थाय नरास्तु कृत्वा
पुण्यानि पुण्याङ्गतिमाप्नुवन्ति॥

वृहत्पाराशरे।

श्रद्धापूतं प्रदातव्यं पात्रे दानमयाचितम्।
याचितेऽपि हि दातव्यं पूतं स्वं श्रद्धया धनमिति॥

तदेवं सर्व्वस्यापि सत्कर्म्मणः श्रद्धारूपाङ्गयुक्तत्वात् कथमस्यैव श्राद्धशब्दो नामधेयमिति। उच्यते। त्रिविधा शब्दस्यार्थेषु वृत्तिः रूढ्या योगेन योगरूढ्या चेति। तत्र यः समुदायशक्त्या वर्त्तते स तत्र प्ररूढ इव भवतीति रूढ्या वर्त्तते। यस्त्ववयवशक्त्या यावद्योगं वर्त्तते स तु अन्वयवार्थयोगाद्वर्त्तत इति योगेन वर्त्तत इत्युच्यते। यस्त्ववयवशक्त्या

---

(१) समारभेदिति ग०।

वर्त्तमानोऽपि नियतप्रयोगात् यावत् योगं वर्त्तते स योगरूढ्या वर्त्तत इत्युच्यते। तथा च श्राद्धशब्दो योगरूढ्या वर्त्तत इत्यस्यैव नामधेयं। ननु विप्रतिषेधान्न योगरूढिर्घटते। यद्यवयवशक्त्या वर्त्तते न तर्हि समुदाय-शक्त्येति विप्रतिषेधः। सत्यं। अवयवशक्त्यैव वर्त्तमानः प्रयोगनियमात् सङ्कुचितावयवशक्तित्वेन नात्यन्तयोगपरतन्त्र इति रूढ्येव वर्त्तत इति गौणवादादविरोधः। केचित् पुनराहुः। प्रत्यक्षपरोक्षानिवृत्तियोगेनैव शब्दोऽर्थे वर्त्तते। यत्राविकृतैरेवावयवैर्वर्त्तते। यथा निघण्टुशब्दस्तत्रैव सोपि परोक्षया वृत्त्या वर्त्तते इत्युच्यते। तत्रायं श्राद्धशब्दः प्रत्यक्षयैव वृत्त्या श्रद्धायोगेन कर्म्मविशेषे वर्त्तते। किन्तु प्रयोगनियमात् सङ्कुचितावयवशक्तित्वान्नान्यत्र वर्त्तते। यथा गोशब्दो गच्छतीति गौरित्यनया व्युत्पत्त्या प्रवर्त्तमानो योगिकोऽपि न अश्वादिषु वर्त्तते एवं द्रव्यादावप्रसिद्धेः श्राद्धशब्दः कर्म्मणो नामधेयं। ननु कर्म्मण्यपि प्रसिद्धभावात् विधेश्च प्रवृत्त्यर्थत्वात् गुणविधित्वे च गुणांशे पुरुष-प्रवृत्तिविशेषजनकत्वेन प्रयोजनवत्त्वात् द्रव्याभिधानं भवेत्। तदुक्तं।

प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च।
अधिकत्वात् प्रवृत्तेश्च गुणरूपं विधीयते इति॥

अथोच्यते। न तावत्कर्म्मणि गुणविधिः समभिव्याहृतकर्म्मविशेषाश्रुतेः। न च करोतिवाक्ये भावनामात्रे विधिः। सिद्धरूपस्य साक्षाद्भावनानन्वयात्। नापि फले गुणविधिः। आश्रयरूपकर्म्मानन्वितस्य फलान्वयासम्भवात्। प्रणयनाद्याश्रित एव हि गोदोहनादिः फले विधीयते। तन्न। नामधेयत्वेऽपि हि कस्य नामधेयमिति पर्य्यनुयोगसाम्यात्। नामापि हि न भावनामात्रस्य सम्मतम्। सर्व्वकर्म्मनाम-

लापत्तेः । अथ "प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः । ये यजन्ति पितॄन् देवान् ब्राह्मणांश्च हुताशनान्" इत्यादि प्रकरणाम्नातवाक्यावगतस्य कर्मणोनामधेयं मन्यसे तदा तदवगत एव कर्म्मणि फले वायं गुणविधिरिति ममापि निःसरणसरणिः सुलभैव। श्रद्धायोगलक्षणं नाम प्रवृत्तिनिमित्तञ्च तुल्यमेव। "श्राद्धमामन्तु कर्त्तव्यमिति वेदविदां स्थितिः" इत्यत्र द्रव्यसामानाधिकरण्यदर्शनाच्च गवादिवत् श्राद्धं देयमिति देयत्वावगमाच्च। न हि दानादिकर्मणो देयत्वं सम्भवति। लाक्षणिको द्रव्ये प्रयोग इति चेन्न। लक्षणायां प्रमाणाभावात्। वाक्यान्तरावगते च कर्म्मणि गुणे विधीयमाने न मत्वर्थलक्षणा। पदैकवाक्यत्वे हि सा न वाक्यैकवाक्यत्वे, नित्यनैमित्तिककाम्यादिव्यपदेशोऽपि चमसगोदोहनादिष्विव द्रव्येऽपि न विरुध्यते। तस्मान्नैतत् कर्म्मनामधेयमिति प्राप्त उच्यते। तदर्थशास्त्रान्तरसद्भावादग्निहोत्रपदवन्नामता। यथा हि यदग्नये च प्रजापतये च सायं जुहोतीत्यादिना प्रकरणाम्नातेन शास्त्रान्तरेण विधित्सितदेवताप्राप्तिः एवमत्रापि माष-यव-तिल-गोधूम-मांसादिद्रव्यं पित्रादिभ्यः श्रद्धया देयमित्यादिना श्राद्धशब्दविहितद्रव्यप्राप्तिरस्त्येव। प्रसिद्ध्यभावाच्च न गुणविधिः। प्रसिद्धेरेव हि सोमेनेत्यादिर्गुणविधिः। यत् पुनः क्वचित् श्राद्धशब्दस्यामशब्दसामानाधिकरण्यं तल्लक्षणावृत्त्या। देयत्वञ्च द्रव्यस्य लक्षणया द्रव्ये श्राद्धशब्दं प्रयुज्योक्तं। नित्यनैमित्तिकादिव्यपदेशश्च कर्म्मणि भूयसीं प्रसिद्धिं गतः स्वरसवृत्त्या न कर्मपक्षपातञ्जहाति। ननु सर्व्वत्र प्रधानकर्म्मणोयागादेः करणत्वान्नामत्वे श्राद्धमिति द्वितीयान्तता न स्यात्। उक्तं हि। विधाने चानुवादे च यागः करणमिष्यते इति।

उच्यते। यथा दार्वादिद्वैधीभावफलोद्देशप्रवृत्तायां परशूद्यमन-निपतनात्मिकायां करणीभूतोऽपि परशुस्तद्दारुध्वंससंयोगविभागपरम्पराख्यक्रियाफलभागित्वादनीप्सितकर्म्मभूतस्तथा स्वर्गादिफलोद्देशप्रवृत्तायां भावनायां करणीभूतोऽपि यद् यज्यादार्थस्तद्भावनानिर्वर्त्यत्वेन कर्म्मेत्यग्निहोत्रमित्यादिकं तदवस्थाविवक्षायां द्वितीयान्ततोपपद्यते। भावनास्वरूपनिर्वर्त्यस्य यागादेर्निर्वर्त्तकभावनायाः स्वर्गादिफलकत्वावस्थायां करणत्वमित्येकं प्रति कर्म्मत्वकरणत्वयोर्न विरोधः। स्वतः पूर्व्वापरीभूतस्य साध्यैकस्वभावस्य धात्वर्थस्यैव भावनारूपेण करोत्यर्थेन साक्षादन्वयः। सिद्धस्य द्रव्यादेर्भावार्थद्वारेणेति व्यवहितत्वाज्जघन्य इति कर्म्मणो नामधेयं श्राद्धशब्दः। आपस्तम्बवचनादपि कर्म्मनामत्वमवगम्यते। अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच प्रजानिःश्रेयसार्थं तत्र पितरो देवता इति। एवं स्थिते विचार्य्यते। किमिदं पिण्डदानस्य ब्राह्मणभोजनस्य वा केवलस्य नामधेयं उत प्रकृतानां पिण्डदानब्राह्मणभोजनाग्नौकरणरूपाणां कर्म्मणां समुदायस्येति। तत्र तावत् कर्कोपाध्यायः पिण्डदानस्यैव नामधेयमित्याह। तथा हि। प्रधानस्य हि इदं नामधेयमधिकारवाक्यगतत्वात्। पिण्डदानञ्च प्रधानतया अस्मिन् प्रकरणेऽवगम्यते। तथा च लिङ्गदर्शनं।

अपि नः स कुले भूयात् यो नो दद्यात्त्रयोदशीं।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च इति॥

अत्र खलु श्राद्धदेवतानां पितॄणां पिण्डविषये प्रार्थनातिशयदर्शनात् पिण्डदानं प्रधानमवगम्यते। महाभारते गयायां पिण्डे प्रदीयमाने पिण्डग्रहणाय पितॄणां हस्तोत्थानस्याभिधानाच्च। तथा श्राद्ध-

कर्त्तव्यतायां विवक्षायां स्मृतिषु पिण्डनिर्व्वपणस्य कर्त्तव्यतोक्ता "सह-पिण्डक्रियायान्तु कृतायामस्य धर्म्मतः । अनयैवावृता कार्य्यं पिण्डनि-र्व्वपणं सुतैः" इत्यादिना वचनेन ब्राह्मणभोजनासम्भवे पिण्डदानमात्र-विधानाच्च । तदेवमेतैर्लिङ्गदर्शनैः पिण्डदानस्य प्राधान्यावगमादस्यैव श्राद्धशब्दो नामधेयमिति । ननु ब्राह्मणभोजनस्यापि पितृरूपप्रधान-देवताभिसम्बन्धात् प्राधान्यमस्त्येव । मैवं । भोजनस्य "यद्येकं भोज-येच्छ्राद्धे" इति वचनात् भोजनक्रियासामर्थ्याच्च साक्षात् ब्राह्मणसम्ब-न्धात् पित्रर्थत्वे प्रमाणाभावात् । नन्वेवं सति पिण्डपितृयज्ञवदुपचारः पित्र्यत्वाभिधानं स्यात् । न । श्राद्धार्थब्राह्मणार्थत्वेन तदुपपत्तेः । ननु पिण्डदानमात्रे श्राद्धशब्दार्थे पिण्डाभोजनेऽपि श्राद्धमनेन भुक्तमिति प्रयोगः कथं । लक्षणया श्राद्धाङ्गभूतभूज्यर्थं इति ब्रूमः । तत् सिद्धं पिण्डदानस्यैव नामधेयमिति । एवञ्च क्वचित् प्रयोगे पिण्डदानानि-ष्पत्तौ प्रयोगे विघ्ने समुत्पन्ने सति पिण्डदानार्थं पुनर्ब्राह्मणभोजनाभ्या-वृत्तिः प्रधानार्थत्वादङ्गानां । अङ्गं हि तद्दानस्य ब्राह्मणभोजनादि । अन्ये त्वाहुः ब्राह्मणभोजनमेव प्रधानमिति तस्यैव श्राद्धशब्दोनामधेय-मिति । तथाचापस्तम्बसूत्रे । अथैतन्मनुः श्राद्धशब्दं कर्म्म प्रोवाच प्रजानिः-श्रेयसार्थं तत्र पितरोदेवता ब्राह्मणास्त्वाहवनीयार्थे इति । आहवनी-यार्थे आहवनीयकार्य्ये प्रक्षिप्यमाणहविर्द्धारणलक्षणे वर्त्तते । न चा-भुञ्जानास्ते तत्कार्य्यं कर्त्तुं शक्नुवन्तीत्यर्थात् ब्राह्मणभोजनपर्य्यन्ततास्य वाक्यस्य भवति । अतएव याज्ञवल्क्यः ।

ततो यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यता इति ।

तदेवं ब्राह्मणभोजनात्मकप्रयोज्यव्यापारविषयकस्य प्रयोजकव्यापारस्य

गौणाहवनीयप्राप्तिपर्य्यन्तत्वात् अधिगतहोमाभिधानस्य श्राद्धशब्दो नामधेयमिति विश्वरूप-मेधातिथि-वामदेव-प्रभृतीनां मतं । विहितश्चायं व्यापारविशेषः फलसम्बन्धित्वेन श्राद्धप्रकरणे बह्वीष्वपि स्मृतिषु ।

एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत् ।
पुष्कलं फलमाप्नोति तस्मात् यत्नेन भोजयेदिति ॥

शौनकगृह्येऽपि ।

नवावरान् श्रोत्रियान् भोजयेदयुजो वेति ।

मनुस्मृतावपि ।

द्वौ दैवे पितृकार्य्ये(१) त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि न प्रसज्येत विस्तरे इति ॥

तदेवं यजमाननिष्ठस्य ब्राह्मणभोजनाख्यस्य प्रयोजकव्यापारस्य श्राद्धशब्दो नामधेयं। यत्तु हरिहरेण विश्वरूपादीनां मतमुपन्यस्तं प्रयोजकव्यापारात् विनाभूतत्वात् प्रयोज्यव्यापारस्य ब्राह्मणकर्तृकं प्रयोज्यव्यापाररूपमपि भोजनं श्राद्धशब्दवाच्यं। अतएव श्राद्धं भुक्तमनेनेति श्राद्धशब्दस्य भुजिसामानाधिकरण्यं दृश्यते। तथा। एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चित इत्यादिनिर्देशश्च। अपिच। जीवत्पितृकश्राद्धे जीवद्भिः पिण्डदानाभावे नियते भोजनविधानं भोजनतदनुकूलव्यापारयोः प्राधान्यबोधकं। विप्रवद्वापि तच्छ्राद्धे स्वकं पितरमाशयेदिति। पितामहो वा तच्छ्राद्धं भुञ्जीतेत्यादि। तदेतन्मतमयुक्तमिवावगम्यते। यतः प्रयोज्यव्यापारस्याधिकारिव्यापारत्वाभावात्तस्य फलासम्बन्धे प्रधानत्वानुपपत्तौ कुतः प्रधानकर्म्माभिधा-

(१) पितृकृत्ये इति ग० ।

यकश्राद्धशब्दाभिधेयत्वं। नन्वेवं तर्हि ऋत्विग्व्यापाराणामाग्नेयादीनां प्रधानत्वाभावे दर्शपूर्णमासशब्दाभिधेयत्वं न स्यात्। मैवं। यजमानव्यापारत्वेनैव विहितस्याग्नेयादेर्वाक्यान्तरविहितयजमानापादित-ऋत्विग्व्यापारनिर्वर्त्त्यत्वेऽपि यजमानभावनारूपव्यापारनिर्वर्त्यत्वात् प्रधानकर्माभिधायकदर्शपूर्णमासशब्दाभिधेयत्वं न विरुध्यते। भोजनस्य पुनरयजमानव्यापारनिर्वर्त्त्यस्य यजमानव्यापारत्वेऽभिधानात् यजमाननिर्व्वर्त्त्यभावनाव्याप्यत्वेऽपि न श्राद्धशब्दाभिधेयत्वं। यथा दानभावनाविधौ प्रतिग्रहस्य व्याप्यत्वाद्भावनान्तर्भावेऽपि न दानशब्दवाच्यत्वम्। अत्रापि हि स्वस्वत्वनिवृत्तिपूर्व्वकं परस्वत्वोत्पादनं दानशब्दार्थः। परस्वत्वापादनञ्च न प्रतिग्रहमनापाद्य सिद्ध्यति। प्रतिग्रहेण हि परस्वत्वं निष्पद्यते। अतः प्रतिग्रहस्यापि दानभावनाव्याप्यत्वमस्त्येव। किन्तु यजमानव्यापारत्वेन विध्यभावादप्रधानत्वं। प्रतिग्रहे यजमाननियोगासम्भवात्। स्वव्यापारे हि पुरुषः कर्त्तृत्वेन नियुज्यत इति न्यायात्। न च प्रतिग्रहो यजमानव्यापार इति।

## अथ श्राद्धदेशाः।

तत्र मनुः

शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत्।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत्॥
अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा॥

यमस्मृतौ।

दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणम्।

शुचिं देशं परीक्ष्याशु गोमयेनोपलेपयेत् ॥
अगारेषु विविक्तेषु तीर्थेषु च नदीषु च ।
विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥
नदीतीरेषु तीर्थेषु स्वभूमौ च प्रयत्नतः ।
उपह्वरनितम्बेषु तथा पर्व्वतसानुषु ।
गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ॥

उपह्वरमत्र पर्व्वतान्तिकम् ।

पृथ्वीचन्द्रोदये विष्णुधर्म्मे ।

दक्षिणाप्रवणे देशे तीर्थादौ च गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्य्यात् प्रयत्नत इति ॥

स्कान्दे ।

तुलसीकाननच्छाया यत्र यत्र भवेद्द्विज ।
तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे ॥

देवलोऽप्याह ।

श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागश्च नैमिषं पुष्कराणि च ॥
नदीतटेषु तीर्थेषु शैलेषु पुलिनेषु च ।
विविक्तेषु च तुष्यन्ति दत्तेनेह पितामहाः ॥

शङ्खस्मृतावपि ।

गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके ।
नर्म्मदावाहुदातीरे भृगुलिङ्गे हिमालये ॥
गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा ।

सन्निहत्यां गयायाञ्च दत्तमक्षयतां व्रजेत् ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यो नो दद्यात् समाहितः ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेदिति ॥

अथ निषिद्धदेशाः ।

पृथ्वीचन्द्रोदये स्कान्दे ।

त्रिशङ्कोर्व्वर्जयेद्देशं सर्व्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन तु कीकटात् ॥
देशस्त्रैशङ्कवो नाम श्राद्धकर्म्मणि वर्ज्जितः ।

वायुपुराणे ।

कारस्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च ।
प्रणष्टाश्रमधर्म्माश्च देशा वर्ज्याः प्रयत्नत इति ॥

कारस्करो देशविशेषः । कीकटोमगधः ।

ब्रह्मपुराणे ।

परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेज्जड़ः ।
तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात् ॥

यमस्मृतौ

परकीयप्रदेशेषु पितॄणां निर्व्वपेत्तु यः ।
तद्भूमिस्वामिपितृभिः श्राद्धकर्म्म विहन्यते ॥
अटव्यः पर्व्वताः पुण्या नद्यस्तीर्थानि यानि च ।
सर्व्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥

रुचं कृमियुतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकं ।
देशन्त्वनिष्टशब्दञ्च वर्जयेच्छ्राद्धकर्मणि ॥

अनिष्टशब्दं प्रतिकूलशब्दमित्यर्थः ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य सकलश्रीकरणाधिपतिपण्डित-
श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे
श्राद्धदेशकथनं नाम चतुर्थोऽध्यायः ।

# अथ पञ्चमोऽध्यायः ।

## श्राद्धकालनिर्णयप्रकरणम् ।

नमेरोर्मेरोर्वा महिमहरणे धौरिकमिति-
र्हरीशश्रीरम्यप्रकृतिरहरीशप्रतिकृतिः ।
मनीषी हेमाद्रिर्गुणगरिमगम्भीरचरितः
करोतीह श्राद्धे हितविहितकालप्रकरणम् ॥

अथाधिकरणत्वेन कृत्स्नप्रयोगाङ्गत्वेन प्राधान्याद्देशानन्तरं श्राद्धकालोऽभिधीयते ।

गरुड़पुराणे ।

विश्वं सृजत्यवत्यत्ति कालात्मैव जनार्द्दनः ।
अतोऽयं कालमेवेह परमं कारणं विदुः ॥
न हि कालमनाश्रित्य लोके वेदेऽपि कुत्रचित् ।
विधयः प्रतिषेधाश्च सम्भवन्ति विशाम्पते ॥
काल एव ततः साध्यः साधनं पुण्यपापयोः ।
तस्मात् कर्म्माणि पुण्येषु कुर्य्यात् कालेषु धार्म्मिकः ।
नाकाले विदुषा किञ्चित् कर्त्तव्यमिति निश्चयः ॥

पुण्येषु पुण्यसाधनत्वेनाम्नातेषु, कालेषु कालावयवेषु । नन्वमूर्त्तत्वनित्यत्वविभुत्वैर्हेतुभिर्निरवयवत्वात् कालस्य कथमवयवा इत्येतच्छङ्कापरिहारो देवीपुराणे ।

नित्यो विभुः स्थितः कालो ह्यवस्थास्तस्य हेतुजाः ।
निमित्तादिविशेषैः स लोके पुण्यफलप्रद इति ॥

अस्यार्थः। सत्यमस्य न सन्त्येवावयवाः स्वाभाविकाः यतोऽयं नित्यः ते चानित्यस्यैव भवन्ति। यतः सावयवं नामावयवजन्यं। जन्यञ्च विनाशादन्यद्विनश्यत्येव। नन्ववयवसमवेतमात्रं सावयवं न तु तज्जन्यं। मैवं। सामान्यस्यापि सावयवत्वप्रसङ्गात्। किञ्च कालस्यावयवास्तज्जातीया अवयविनमपेक्ष्य चाल्पपरिमाणा वक्तव्याः। तथाचास्य विभुत्वैकत्वयोर्हानिः। लिङ्गविशेषाच्च[१] अस्यैकत्वविभुत्वे कणादाक्षपादादिमुनिसम्मते स्मृतिपुराणादिप्रसिद्धे चेति। अतो न सन्त्येवास्यावयवाः स्वाभाविकाः। तथाप्यौपाधिकाः सम्भवन्तीत्याह अवस्थास्तस्य हेतुजा इति। अवस्थाः पूर्व्वाह्ण-मध्याह्नापराह्ण-दिवस-क्षपा-पक्ष-मास-ऋत्वयन-संवत्सरादिरूप-विभागात्मिकाः, हेतुः रविपरिस्पन्दप्रचयविशेषरूपोपाधिभेदः, तज्जाः तदवच्छेदनिबन्धनाः। ताश्चास्य नित्य-नैमित्तिक-काम्यकर्म्माङ्गत्वोपाधिभेदेन त्रिविधाः। अतोऽयं कालो नित्यो नैमित्तिकः काम्य इति त्रिधा व्यपदिश्यते। सोयमेवं त्रिधा विभक्तः पुण्यफलप्रद इति। अत्र शतपथश्रुतिः। वसन्तो ग्रीष्मो वर्षाः। ते देवा ऋतवः शरद्धेमन्तः शिशिरस्ते पितरो य एवापूर्य्यतेऽर्द्धमासः स देवा योऽपक्षीयते स पितरोऽहरेव देवा रात्रिः पितरः पुनरह्नः पूर्व्वाह्णो देवा अपराह्णः पितर इति[२]। अत्रोत्तरायणदक्षिणायनशुक्लकृष्णपक्षाहोरात्रपूर्व्वाह्णापराह्णविभागेन देवपितृसम्बन्धः कालस्योच्यते।

हारीतोऽप्याह। "संवत्सरः प्रजापतिस्तस्योदगयनं शुक्लोऽहः पूर्व्वाह्णश्च देवानां दक्षिणायनन्तामिस्रो रात्र्यपराह्णश्च तत् पितॄणां

(१) लेखाविशेषाच्चेति क०।
(२) काण्डं २. प्रपां १ अध्यां १. ३. १.

नान्यभावः कृत्स्नभावादुभयथा इज्यन्ते व्यामिश्रत्वादहरहरथाप्यत्रो-दाहरन्ति। यस्येमे वर्त्मनी हव्यकव्ये वहतो देवा यस्याह्नं पितरोऽर्द्धं तथैव निमेषा ऋतवो यस्य मूलं तं वै यजन्तमन्तमियादिति ।

अस्यार्थः । योऽसौ प्रजापतिर्नाम देवताविशेषः श्रूयते स एवायं संवत्सरात्मकः कालः । तस्यैतस्य भागद्वयं भवति। तत्रोदगयनं शुक्लोऽहः पूर्व्वाह्न इत्येकोभागः। उदगयनं सूर्य्योपभुज्यमानमकरादि-राशिषट्कोपलक्षितः कालः, शुक्लः पक्षः अमावास्योत्तरां प्रतिपदमारभ्य पौर्णमासीपर्य्यन्तः कालः । अहर्दिनं । पूर्व्वाह्णो द्विधाकृतस्याह्नः पूर्व्वोभागः । तथा च स्कन्दपुराणे ।

आवर्त्तनात्तु पूर्व्वाह्णो ह्यपराह्णस्ततःपरमिति ।

आङ्मर्य्यादायां। आवर्त्तनाच्छायायाः परिवर्त्तनं मर्य्यादीकृत्य यः कालः स पूर्व्वाह्णः । तदेतत् संवत्सरावयवजातं देवानां । अत्र दैवि-कानि कर्म्माणि कर्त्तव्यानीत्यर्थः । दक्षिणायनं तामिस्रो रात्रिस्तेति द्वितीयोभागः । दक्षिणायनं सूर्य्योपभुज्यमानकर्कटकादिराशिषट्कोप-लक्षितः कालः । तामिस्रः कृष्णपक्षः पौर्णमास्युत्तरां प्रतिपदमार-भ्यामावास्यापर्य्यन्तः कालः । रात्रिर्भूव्यवहितसूर्य्यादर्शनावच्छिन्नः कालः। तदेतत् संवत्सरावयवजातं पितॄणां। अत्र पित्र्यं कर्म्म कर्त्तव्य-मित्यर्थः। एवं दैवत्वेन पित्र्यत्वेन च द्वैविध्यमेव कालस्य नान्यभावो नान्यरूपत्वं। कस्मादित्याह कृत्स्नभावात्। यस्मात् संवत्सरातिरिक्त-कालाभावादेतावानेव सर्व्वः कालः। अतो दैवपित्र्यरूपपूर्व्वाह्णापराह्णा-त्मककालव्यामिश्रत्वाद्दैवपित्र्यरूपत्वेन देवाश्च पितरश्चोभयथा पूर्व्वाह्णा-पराह्णविभागेनाहरहः प्रतिदिनमिज्यन्ते त्यज्यमानस्य हव्यस्य कव्यस्य

घोद्देश्यत्वं प्रार्थ्यन्ते[१]। अथास्यार्थस्य नेदं प्रथमवाक्यमिति संवादं दर्शयति। अथाप्यत्रोदाहरन्तीति। अत्रास्मिन् विषये पूर्व्वे महर्षयः उदाहरन्ति पठन्ति चेत्यर्थः। यस्येमे वर्त्मनी हव्यकव्ये वहतः। यस्य संवत्सरात्मकस्य प्रजापतेर्देवान् पितॄंश्च प्रति हव्यकव्ये नयतः। उत्तरायणदक्षिणायनात्मके देवयानपितृयानात्मके वा द्वे वर्त्मनी द्वौ मार्गौ यस्याद्धं देवाश्चार्द्धञ्च पितरः। यस्य च मूलं निमेषाः। निमेषः काष्ठाकलादयः मूलं अवयवरूपत्वेनारम्भका इत्यर्थः। तथा यस्य ऋतवो मूलं। ऋतवः षट्। ते च श्रुतावुक्ताः। मधुश्च माधवश्च वासन्तिकावृतू। शुक्रश्च शुचिश्च ग्रैष्मावृतू। नभश्च नभस्यश्च वार्षिकावृतू। इषश्चोर्जश्च शारदावृतू। सहश्च सहस्यश्च हैमन्तिकावृतू। तपश्च तपस्यश्च शैशिरावृतू। मधुश्च माधवश्च चैत्रश्च वैषाखश्च द्वौ मासौ वासन्तिकौ वसन्तसम्बन्धिनौ, ऋतू ऋत्ववयवौ। अनेन चैत्रवैशाखमासद्वयात्मको वसन्ताख्यऋतुर्भवतीत्युक्तं भवति। एवमुत्तरे ग्रीष्मादयः। त एते यस्य संवत्सरस्य मूलं तं संवत्सरं प्राप्य यथाविभागं देवांश्च पितॄंश्च यजन्तं पुरुषममृतं मोक्षादिफलाभिमुखेन इयात् आगच्छतीत्यर्थः। इति दैवपित्र्यविभागेन कालनिरूपणं।

अथ श्राद्धविशेषः।

तत्र याज्ञवल्क्यः।

अमावास्याष्टकावृद्धिः कृष्णपक्षोऽयनद्वयं।
द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसंक्रमः॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः।

(१) प्राप्यन्ते इति ख०।

श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः॥

अमावास्यादिकालाः स्वस्वप्रकरणे एकैकशो वक्ष्यन्ते। रुचिरिच्छा सा यदा श्राद्धानुष्ठानविषया भवति तदुपलक्षितोऽपि कालः श्राद्धाङ्गं भवति। अस्यानिमित्तत्वं पूर्व्वोक्तश्राद्धानिमित्तत्वनिराकरणन्यायेनैव निराकरणीयं। तत्रामावास्योच्यते। अमावास्या कृष्णपक्षस्य पञ्चदशी तिथिः। अस्याश्च लक्षणं गोभिलेनोक्तं। यः परमो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी, यः परमः सन्निकर्षः सामावास्येति। तत्रामावास्याशब्दनिर्व्वचनं शतपथश्रुतौ। ते देवा अब्रुवन्। न वा इममन्यत्सोमाद्धविनुयात्सोममेवास्मै सम्भरामेति तस्मै सोमं सम-भरन्नेष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद्दृशे तदिमं लोकमागच्छति स इहैवापश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नं ह्येषां तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नामेति(१)। अत्र प्रथमवाक्ये वृत्रवधानन्तरं प्रोषितेन्द्रसमागमे देवानामुक्तं वसुनेन्द्रेण अमा सह निवासादमा-वास्येति। द्वितीयवाक्ये तु वसोः चन्द्रमसोऽस्यां रात्रावस्मिन् लोके निवासादमावास्येति द्विधा निर्वचनम्।

पद्मपुराणे।

अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः।
अच्छामा(२) नाम तेषान्तु मानसी कन्यका मता(३)॥

---

(१) काण्डं १. प्रपां ५. अध्यां ६. ४. ५.
(२) अच्छोदा इति ग०।
(३) सतीति ख०।

तमथामावसुं नाम पितरं वीक्ष्य साङ्गना ।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीड़नात् ॥
योगाद् भ्रष्टा तु तेनासौ व्यभिचारेण भामिनी ।
धरान्न स्पृशते पूर्व्वं पपाताथ भुवस्तले ॥
पिता यामावसुर्य्यस्मादिच्छाञ्चक्रे न तां प्रति ।
धैर्य्येण तस्य सा लोके अमावास्येति विश्रुता ।
पितॄणां वल्लभा यस्मात्तस्याक्षयकारिणी ॥

परमसंयमिपितृगणाभिमतब्रह्मचर्य्याप्रच्युतिहेतुभूतामावसुधैर्य्य-निर्वहणप्रतीतमहिमत्वादमावास्येत्युच्यते इत्येतदितिहासतात्पर्य्यं ।

स्कान्दे नागरखण्डे ।

अमा नाम कलारश्मिः सहस्रप्रमुखस्थितः ।
यस्यास्य तेजसा सूर्य्यः प्रोक्तस्त्रैलोक्यदीपकः ॥
तस्मिन् विशति येनेन्दुरमावास्या ततः स्मृता ।
अक्षया धर्म्मकृत्ये सा पितृकृत्ये विशेषतः ॥

ब्रह्माण्डपुराणे ।

अमा नाम कलारश्मिः सहस्रप्रमुखस्थितः ।
त्रैलोक्यदीपकः प्रोक्तश्चन्द्रलोके प्रतिष्ठितः ॥
यस्मात् सोमो विशत्यस्याममावास्या ततः स्मृता ।

मत्स्यवायुपुराणयोः ।

अमा वसेतां ऋक्षे तु यदा चन्द्रदिवाकरौ ।
एषा पञ्चदशी रात्रिरमावास्या ततस्तु सा ॥

अमा सह एकत्रेत्यर्थः ।

22

"आश्रित्यताममावास्यां पश्यतस्तु समागतौ।
अन्योन्यं चन्द्रसूर्य्यौ तौ यदा तद्दर्श उच्यते॥

सा च द्विविधा। तथा च स्कन्दपुराणे।

राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता।
सिनीवाली कुहूश्चैव अमावास्या द्विधैव तु।

तयोश्च लक्षणं श्रुतौ। या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका, या पूर्व्वामावास्या सा सिनीवाली, योत्तरा सा कुहूरिति विज्ञायते। अत्र चतुर्दशीमिश्रा सिनीवालीत्युक्तं भवति। अस्याञ्च त्रिमुहूर्त्ताधिकचतुर्दशीमिश्रायां चन्द्रो भवतीति ज्योतिर्विद्वचनात् प्रायिकं चन्द्रोदयोपलक्षितेयमित्यभिप्रेत्याह व्यासः।

दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूः स्मृता।
सिनीवाली सदा पित्र्ये कुहूर्दैवे तु कर्मणीति॥

अथानयोर्निर्वचनं पर्व्वसन्धिं प्रकृत्य।

सिनीवालीप्रमाणस्तु क्षीणशेषो निशाकरः।
अमावास्यां विशत्यर्कं सिनीवाली तथा स्मृता॥

सिनी सिता अवसितेति यावत्। अल्पो वालो वाली। सिनीचासौ वाली च सिनीवाली तत्परिमाणः सिनीवालीप्रमाणः वालाग्रमात्र इत्यर्थः।

कुहूरिति पिकेनोक्ते यावत्कालः समाप्यते।
तत्कालसम्मिता ह्येषा अमावास्या कुहूः स्मृतेति॥

कोकिलोच्चारितकुहूशब्दपरिमितपर्व्वसन्ध्युपलक्षितमहोरात्रं कुहूः। नित्यश्चायं श्राद्धकालः।

तथा च विष्णुधर्म्मोत्तरे ।

श्राद्धकालममावास्यां नित्यं पार्थिवसत्तम ।
पौर्णमासीं तथा माघीं श्रावणीञ्च प्रचक्षत इति

मनुस्मृतावपि ।

पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकं ॥

चन्द्रक्षयोऽमावास्या तस्यां श्राद्धं कुर्य्यात् । तत्रापि न सर्व्वस्यां वेलायां किं तर्हि पितृयज्ञं पिण्डपितृयज्ञं कृत्वेत्यर्थः । विप्रग्रहणमुपलक्षणं । पिण्डान्वाहार्य्यकमिति श्राद्धस्य नामधेयं । मासस्यानुमासस्य तयोर्भवं मासानुमासिकं । मासानुमासशब्दो मासगतां वीप्सामाचष्टे मासि मासि कर्त्तव्यमिति । अतश्च नित्यतासिद्धिः ।

मार्कण्डेये ।

कार्य्यं श्राद्धममावास्यां मासि मास्युडुपक्षये ।
तथाष्टकास्वप्यवश्यमिष्टङ्कालं निबोध मे ॥

उडुपश्चन्द्रः । इष्टङ्कालं निबोध मे इत्येषा वक्ष्यमाणस्यैच्छिकस्य कालस्य प्रतिज्ञा ।

ब्रह्मपुराणे ।

श्राद्धं देयमुशन्तीह मासि मास्युडुपक्षये।
पौर्णमासीषु च श्राद्धं कर्त्तव्यं ऋक्षगोचरे॥

ऋक्षगोचरे मासनक्षत्रसंयोगे । अत्रापि वीप्सया नित्यत्वं ।

विष्णुपुराणेऽपि ।

मासि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर।

तथाष्टकासु कुर्वीत काम्यान् कालान् शृणुष्व मे इति ।

अत्र काम्यान् कालानिति वक्ष्यमाणानां काम्यत्वं वदन् पूर्व्वोक्तानां नित्यत्वमनुसन्धत्ते ।

नागरखण्डे ।

श्राद्धं चन्द्रक्षयेऽवश्यं सदा कार्य्यं विपश्चिता ।
यदि वेच्छति स स्वर्गं सन्तानञ्च तथा नृप ॥
शीतार्त्ता यद्वदिच्छन्ति वह्निं प्रावरणानि च ।
पितरस्तद्वदिच्छन्ति क्षुत्क्षामाश्चन्द्रसङ्क्षयं ॥
दरिद्रोपहता यद्वद्धनं वाञ्छन्ति मानवाः ।
पितरस्तद्वदिच्छन्ति क्षुत्क्षामाश्चन्द्रसङ्क्षयं ॥
यथा वृष्टिं प्रवाञ्छन्ति कर्षकाः शस्यवृद्धये ।
तथात्मतृप्तये प्रीताः प्रवाञ्छन्तीन्दुसङ्क्षयम् ॥
यथोषश्चक्रवाकश्च वाञ्छन्ति रविदर्शनम् ।
पितरस्तद्वदिच्छन्ति श्राद्धं दर्शसमुद्भवम् ॥
जलेनापि च यः श्राद्धं शाकेनापि करोति न ।
दर्शाह्ने पितरस्तस्य यान्ति शापप्रदायिनः ॥

तथा ।

अमावास्यादिने प्राप्ते गृहद्वारं समास्थिताः ।
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ॥
यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ।
ततश्चास्तं गते भानौ निराशा दुःखसंयुताः ।
निःश्वस्य सुचिरं यान्ति गर्हयन्तः स्ववंशजमिति ।

अस्यामावास्याश्राद्धस्यावश्यकत्वार्थमितिहासे ।

विष्णुधर्म्मोत्तरे ।

सशरीरो नृपः स्वर्गं तदा प्राप्य पुरूरवाः ।
शक्रेणाभ्यर्चितः काले विजहार यथासुखम् ॥
देवोद्यानेषु सर्व्वेषु उर्व्वश्या सहितस्तदा ।
नापवारयितुं[१] शक्यः कदाचिदपि पार्थिवः ॥
अमावास्याममावास्यां नियतं चन्द्रभास्करौ ।
द्रष्टुं याति महीपालस्त्वेकराशिगतौ सदा ॥
सहोर्वश्या तु यौचस्य यदा वसति चन्द्रमाः ।
तदा सुधारसं देवः स्नेहात् स्रवति मानवः ॥
सोमामृतरसं तच्च पिबन्ति पितरस्तदा ।
श्राद्धकालस्तदा प्रोक्तो नृणां नृपवरोत्तम ॥
तदा श्राद्धं हि यद्दत्तं सुधारसविमिश्रितम् ।
तदश्नन्ति महीपाल पितरो जलसन्निभाः ॥
अमावास्याममावास्यां तदा श्राद्धं प्रयत्नतः ।
कुरुष्व भूमिपश्रेष्ठ सर्व्वकामानवाप्स्यसि ॥
ये चान्येऽपि करिष्यन्ति तदा श्राद्धं नराधिप ।
तेषामायुर्यशः स्वर्गं दास्यन्ति प्रपितामहाः ॥
राज्यकामः स्वर्गकामः पुष्टिकामस्तथैव च ।
पितॄन् सन्तर्पयेच्छ्राद्धे चन्द्रसूर्य्यसमागमे ॥

---

(१) नापचारयितुमिति ख० ।

वसन्ति सततं राजन् पितरश्चन्द्रमण्डले।
तेषां मासमहोरात्रविभागं तत्र मे शृणु॥
कृष्णपक्षाष्टमीमध्ये तेषामुदयते रविः।
शुक्लाष्टम्यां तथैवास्तं तेषां याति दिवाकरः॥
अमावास्या सदा तेषां मध्याह्नो जायते नृप।
तस्मात् श्राद्धानि देयानि तस्मिन् काले प्रयत्नतः॥

अथास्यास्तिथेर्वारविशेषेण पुण्ययोगतमत्वमाह व्यासः।

अमा वै सोमवारेण रविवारेण सप्तमी।
चतुर्थी भौमवारेण विषुवत्सदृशं फलम्॥

अमा अमावास्या।

शङ्खोऽपि।

अमावास्या तु सोमेन सप्तमी भानुना सह।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी॥
चतस्रस्तिथयस्तैस्तु तुल्याः सूर्य्यग्रहणादिभिः।
सर्व्वमक्षयमत्रोक्तं स्नानदानजपादिकम्॥

भूमिपुत्रो मङ्गलः। सोमपुत्रो बुधः।

अथ नक्षत्रयोगे पुण्यतमत्वं।

ब्रह्मपुराणे।

अमावास्यायां श्रवणं रत्नोघ्नं वैष्णवं यदा।
तदा पितृभ्यः श्राद्धन्तु दत्तमक्षय्यमुच्यत इति॥

विष्णुपुराणे।

अमावास्या यदा मैत्रविशाखास्वातियोगिनी ।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम् ॥

मैत्रमनुराधानक्षत्रम् ।

अमावास्या यदा पुष्ये रौद्रर्क्षे पुनर्व्वसौ ।
द्वादशाब्दां तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥

रौद्रमार्द्रानक्षत्रम् ।

वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छताम् ।
वारुणेनाप्यमावास्या देवानामपि दुर्लभा ॥

वासवं वसुदैवत्यं धनिष्ठानक्षत्रम् । अजैकपादर्क्षं पूर्व्वभाद्रपदानक्षत्रम् । वारुणं शतभिषानक्षत्रम् ।

माघासिते पञ्चदशी कदाचित्
उपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितॄणां
नह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तस्मिन्
भवेत्तु भूपाल तदा पितृभ्यः ।
दत्तं जलान्नञ्च ददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः ॥

तस्मिन् काले माघे मासि असितपञ्चदश्यामित्यर्थः ।

तत्रैव चेत् भाद्रपदास्तु पूर्व्वा
काले तदा यत् क्रियते पितृभ्यः ।
श्राद्धं परां तृप्तिमुपेत्य ते च

युगं समग्रं पितरः स्वपन्तीति ॥

तत्रैव तस्यां माघपञ्चदश्यामित्यर्थः ।

अथामावास्याद्वैधनिर्णयः ।

तत्राह कात्यायनः ।

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः ॥

अत्र त्रिधाविभक्तस्य वासरस्य तृतीयेंऽशे। इन्दुक्षयस्तु कदा भवतीत्यपेक्षायां स एवाह ।

अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमेंऽशे तु पुनः किल भवेदणुः ॥

इह खलु ग्रहचारविदो राशित्रिंशांशैर्द्वादशभिर्द्वादशभिश्चन्द्रमसः सूर्य्येण सन्निकर्षे विप्रकर्षे वा एकैका तिथिर्भवतीति वर्णयन्ति। अतश्चतुर्दशी वामावास्या वा द्वादशांशैर्भवति। तत्र चतुर्दश्यष्टमांशान्ते चन्द्रः क्षीयते। अमावास्याष्टमांशान्ते चाणुर्भूत्वा पुनर्जायते। किलशब्दोऽत्र ज्यौतिषिकैः किलैतद्व्याख्यातमिति। एतमर्थमाह शतपथश्रुतिः। स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकलाः। ध्रुवैवास्य षोडशी कला सा रात्रिभिरेव च पूर्य्यते न च क्षीयते। सोमः अमावास्यां रात्रिमेतया षोडश्या कलया सर्व्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते। तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्या इति । अत्रायमाशयः। षोडशकलस्यास्य चन्द्ररूपस्य प्रजापतेः कृष्णपक्षप्रतिपदमारभ्य चतुर्दश्यन्तासु तिथिषु क्रमादेकैककलाक्षयेण चतुर्दशकलाः क्षीणा भवन्ति। चतुर्दशी-

तृतीयांशे तु पञ्चदश्यपि कला क्षीयते । ततोऽमावास्यायां ध्रुवया अविनश्वरया षोडशकलया भूर्लोकमागत्य सर्व्वं प्राणिजातं संविशति । अमावास्यातृतीयांशे तु तयैव षोडश्या कलया दिवमारुह्य पुनः प्रादुर्भवतीति । अमावास्याविशेषे चन्द्रक्षयस्य कालमाह कात्यायन एव ।

आग्रहायण्यमावास्या तथा ज्यैष्ठस्य या भवेत् ।
विशेषमस्यां ब्रुवते चन्द्रचारविदो जनाः ॥
अत्रेन्दुराद्ये(१) प्रहरेऽवतिष्ठते
चतुर्थभागोनकलावशिष्टः ।
तदन्त एव क्षयमेति हन्त
मेवं ज्योतिश्चक्रविदो वदन्ति ॥

अस्यार्थः । वृषस्थे चन्द्रे ज्यैष्ठस्यामावास्यान्ते वृश्चिकस्थे च अग्रहायण्यमावास्यान्ते च चन्द्रस्य परमोच्चनीचस्थाने तद्वशाच्चन्द्रस्य गतिवैलक्षण्यात् यदन्यास्वमावास्यास्वष्टमे प्रहरेऽस्य क्षयं तदनयोरमावास्ययोः प्रथम एव भवतीति । ये तु चन्द्रादर्शन एव पिण्डपितृयज्ञादिकं मन्यन्ते तस्मिन्नक्षयेऽपि तान्निराकर्तुं कदाचित् तृतीयायामपि चन्द्रादर्शनं दर्शयति ।

यस्मिन्नब्दे द्वादशैकश्च यत्र-
स्तस्मिन् तृतीयापरतो न दृश्यते(२) ।
एवं चारं चन्द्रमसो विदित्वा
क्षीणे तस्मिन्नपराह्णे च दद्यात् ॥

---

(१) अत्रेन्दुराद्ये प्रहरेऽवतिष्ठेदिति ग० ।
(२) तृतीयया परिदृश्योनोपजायते इति ग० ।

अस्यार्थः। यथो मासः यस्मिन्नब्दे द्वादशाधिको भवति तस्मिन्नब्दे मलमासानन्तरतृतीयाया अपरस्यां तृतीयायां चन्द्रो न दृश्यते। न चैतावता चन्द्रादर्शनविहितः पिण्डपितृयज्ञस्तत्र क्रियते। अतश्चन्द्रचारं विदित्वा तस्मिन् क्षीणेऽपि चतुर्दशीमिश्रायाममावास्यायामपराह्णे पिण्डपितृयज्ञादि कुर्य्यादिति। अतश्चतुर्दश्यन्तेऽपि पिण्डान्वाहार्य्यकार्थो निर्व्वापः कर्त्तव्य इति स्थितिः। पूर्व्वपक्षमवतारयन्ति। नैतदस्ति चतुर्दश्यन्ते निर्व्वाप इति पिण्डपितृयज्ञानन्तरं विहितं। पिण्डपितृयज्ञश्चामावास्यायामपराह्णे विहितः। अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्पसूत्रकारवचनात्। यत्तु मतं। औपवसथ्यदिनोपलक्षणार्थोऽमावास्याशब्द इति। तन्न। लक्षणायां प्रमाणाभावात्। विश्वावन्याय्यत्वाच्चास्याः। या तु श्रुतिः। तस्मात् पूर्व्वेद्युः पितृभ्यः क्रियत उत्तरमहर्देवान् यजति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इति तयाग्न्यन्वाधानं प्रकृत्यापराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्पसूत्रकारवचनम्। तदेतद्यस्मिन्नौपवसथ्येऽह्न्यपराह्णे अमावास्यास्ति तद्विषयमिति कृत्वा न पूर्व्वदिनमात्रपरं सल्लक्षणायां प्रमाणं भवितुमर्हति। अन्ये तु पूर्व्वपक्षयन्ति। चन्द्रोदयोपलक्षितदिनान्तर्गतायाममावास्यायामपि पिण्डान्वाहार्य्यकं न कर्त्तव्यं। तस्य पिण्डपितृयज्ञानन्तरं विहितत्वात्। पिण्डपितृयज्ञस्य चन्द्रादर्शनवत्याममावास्यायां विहितः। तथा च श्रुतिः। यदैवैष न पुरस्तान्न पश्चाद्दृशेऽथैभ्यो ददातीति[१]। सूत्रकारवचनं। यदहश्चन्द्रमसं न पश्यन्ति तदहः पितृयज्ञं कुरुत इति। नात्रादर्शनं क्षयोपलक्षणपरं। क्षीणे राजनीत्यस्यादर्शनेऽ-

(१) काण्डं २। प्रपा० ३। अध्या० ४—२। ७।

प्यनतिक्रमात् । न च क्रमो विवक्षितः, प्रमाणाभावात् । अथ मतं । यदैकस्मिन् दिने द्वयं तदायं क्रमो नान्यदेति । यदा चोपवसथ्य एव चन्द्रादर्शनं तदैकस्मिन् दिने द्वयमन्यदा पिण्डपितृयज्ञं यजनीयदिनं प्रकृत्य कुरुत इति । तन्न । तदाद्युत्कर्षन्यायेनान्वाहार्य्यकस्याप्युत्कर्षात् । यत्तु लौगाक्षिवचनं ।

सिनीवाली द्विजैः कार्य्या साग्निकैः पितृकर्म्मणि ।
स्त्रीभिः शूद्रैः कुहूः कार्य्या तथा चानग्निकैर्द्विजैरिति ॥

तत् पिण्डपितृयज्ञपिण्डान्वाहार्य्यकान्यपितृकार्य्यविषयमस्तु । अत्रेदमुच्यते । चतुर्दश्यन्ते न निर्व्वाप इति । तदयुक्तं । यतश्छन्दोगपरिशिष्टे पिण्डपितृयज्ञं प्रकृत्याह कात्यायनः ।

यथोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया ।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्व्वपेदिति ॥

यच्च दृश्यमानेऽपि चन्द्रे पिण्डपितृयज्ञं कुर्य्यादितिश्रुतावुक्तं तच्चतुर्दशीविवक्षया । अतोऽमावास्यां प्रतीक्षेत चतुर्दश्यन्ते एव एषां निर्व्वपेदिति । अनेन चन्द्रदर्शनदिने पितृयज्ञः श्रुत्यनुगृहीत एवेति च दर्शितम् । अदर्शनश्रुतेः क्षयोपलक्षणत्वञ्चाह स एव ।

यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः ।
तत् क्षयापेक्षया(१) ज्ञेयं क्षीणे राजनि चेत्यपीति ॥

यच्चान्यत् पूर्व्वपक्षितं । चन्द्रोदयोपलक्षितदिनान्तर्गतायाममावास्यायामपि न पिण्डपितृयज्ञपिण्डान्वाहार्य्यक इति । तदपि यथोक्तं

(१) अनयापेक्षयेति ख० ।

दृश्यमानेऽपीत्यादिना कात्यायनवचनेन निराकृतमेव। दृश्यमानेऽप्य-नेन गोभिलवचनेन हारीतेनापि निराकृतम्। "यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते। अपराह्णे क्षयस्तस्यां पिण्डानां करणं ध्रुवमिति" निर्देशः पिण्डपितृयज्ञं नातिवर्त्तितुमीहते।

पुनः कात्यायनः।

यदा चतुर्दशीयामन्तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यत इति॥

किञ्च। यजनीयदिनात् पूर्व्वदिने हि पिण्डपितृयज्ञश्राद्धे विहिते तस्मात् पितृभ्यः पूर्व्वेद्युः क्रियत इति। यदा च प्रतिपद्दिने पूर्व्वाह्णेऽथवा मध्याह्नेऽमावास्या समाप्यते तदा तदहरेव याग इति पूर्व्वस्यां चन्द्रोदयवत्यां। एवं पिण्डपितृयज्ञादि। सिनीवाली द्विजैः कार्य्या साग्निकैः पितृकर्म्मणीत्यस्य पिण्डान्वाहार्य्यकार्य्यव्यतिरिक्तविषयत्वे प्रमाणाभावाच्चेति। तदेवममावास्याद्वैधे सिनीवाल्यां श्राद्धमिति सिद्धम्। अस्यापवादो बौधायनेनोक्तः।

मध्याह्नात् परतो यत्र चतुर्दश्यनुवर्त्तते।
सिनीवाली तु सा ज्ञेया पितृकार्य्ये तु निष्फलेति॥

बृहस्पतिरप्याह।

मध्याह्नाद्या त्वमावास्या परस्तात्संप्रवर्त्तते।
भूतविद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत्॥

मतस्य।

भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा।
श्राद्धकर्म्माणि ये कुर्य्युस्तेषामायुः प्रहीयते॥

इत्येतत् कार्ष्णाजिनिवचनमपराह्णप्रविष्टचतुर्दशीविद्धसिनीवाली-विषयमेव व्याख्येयं। अनेनाभिप्रायेणाह वृद्धमनुः।

यस्यामस्तं रविर्य्याति पितरस्तामुपासते।

तिथिन्तेभ्यो यतोदत्तस्त्वपराह्णः स्वयम्भुवेति॥

अनेनापराह्णव्यापिनी चेत् सिनीवाली तर्ह्येव सा ग्राह्या अन्यदा तु कुहूरेव ग्राह्येत्युक्तं भवति।

तदाह हारीतः।

अपराह्णः पितृणान्तु या पराह्णानुयायिनी।

सा ग्राह्या पितृकार्य्ये तु न पूर्व्वास्तानुयायिनी॥

एवमपराह्णव्यापिन्याः सिनीवाल्याः पितृकार्य्यार्थं ग्रहणे सिद्धे पूर्व्वाह्णव्यापिन्यास्त्वपराह्णव्यापकत्वेऽस्यावश्यकत्वात् सिद्धे तस्या अपि ग्रहणे पुण्यतमत्वं प्रतिपादयितुमाह बौधायनः।

घटिकैकाप्यमावास्या पूर्व्वाह्णव्यापिनी यदि।

भूतविद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्व्वदेति॥

अमुमेवार्थं प्रकारान्तरेणाह जावालः।

प्रतिपत्स्वप्यमावास्या पूर्व्वाह्णव्यापिनी यदि।

भूतविद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्व्वदेति॥

पूर्व्वदिने पूर्व्वाह्ण एव प्रवृत्ता परदिने पूर्व्वाह्ण एव समाप्यते तदा सिनीवाल्येव कर्त्तव्या इत्यर्थः।

यत्तु हारीतवचनं।

तुलामकरमीनेषु कन्यायां मिथुने तथा।

भूतविद्धाप्यमावास्या पूज्या भवति यत्नत इति॥

तत् प्रेतोपवासादिविषयमिति मन्यन्ते। अथ यथोक्तसिनीवाली-परित्यागेन कुहूग्रहणपराणि दृश्यन्ते तत्र कैश्चिन्निबन्धकारैर्हारीत-नाम्ना वचनं लिखितं।

पूर्व्वाह्णे चेदमावास्यापराह्णेन भवेद्यदि।
प्रतिपद्यपि कर्त्तव्यं श्राद्धं श्राद्धविदो विदुरिति॥

अत्र हरिहरेणोक्तं। अनिर्ज्ञातमूलमिदं वचनं परस्परव्याहत-पदोपबन्धञ्चेति। तथाहि पूर्व्वाह्णे चेदित्येतावत् प्रतिपद्दिनविषयं। पूर्व्वाह्णस्य दिवसस्य तृतीयभागो वा पूर्व्वार्द्धं वा। एवं च सति सर्व्वथा कस्मिंश्चिदपराह्णे न भवेदित्येतन्न युज्यते प्रतिपद्दिने पूर्व्वाह्णमात्राव-स्थितायाश्चतुर्दशीदिनेऽपराह्णसम्बन्धावश्यकत्वात्। षट्घटिकाधिकस्य तिथिह्रासस्याभावात्। अथ यदि प्रतिपद्दिनापराह्ण एव न भवेदित्यु-च्यते तर्हि पूर्व्वाह्णे चेदित्यनर्थकं स्यात्। अथ यदि पूर्व्वाह्णशब्दस्य मुख्यार्थमभ्युपेत्य कश्चिदविरुद्धोऽर्थः कल्प्यते तदा स्मृतिमहार्णवे तु कल्पितः।

तथाहि। तिथिवृद्धौ प्रतिपद्युक्तायाममावास्यायां श्राद्धमुक्तं। तच्च पितृयज्ञं निर्व्वर्त्त्येत्यादिना पिण्डपितृयज्ञानन्तरमेव मनुना विहितं। पिण्डपितृयज्ञश्चाहत्य श्रुत्यापराह्णे विहितो नान्यथा कर्त्तुं शक्यः। तस्य च तिथेरेककालत्वात्तेनैव सकलापराह्णव्याप्त्यावमावास्या-श्राद्धस्य का गतिरित्यत उक्तं पूर्व्वाह्ण इति नापराह्णे कृत्स्न इत्यर्थः। तदा प्रतिपद्यपि पिण्डान्वाहार्य्यकं कर्त्तव्यमिति। स्मृतिचन्द्रिकाका-रस्त्वाह।

यत्र पूर्व्वेद्युश्चन्द्रादर्शनासम्भवेन पिण्डपितृयज्ञोत्कर्षस्तत्र प्रतिपदि

पिण्डपितृयज्ञविधानार्थमिति । इदन्तु व्याख्यानमपरिस्फुटार्थं मन्दञ्चे-त्युपेक्ष्यते । अथान्यान्यपि हरिहरेण कुहूग्रहणपराण्येवानिर्ज्ञातकर्तृत्वेन महार्णवलिखितत्वेन चोपालभ्य कैश्चिदुक्तानीत्युक्तोपन्यस्तानि ।

अरुणोदयवेलायाममावास्या यदा भवेत् ।
स कालः परमो ज्ञेयः पितॄणां दत्तमक्षयं ॥
घटिकैका त्वमावास्या प्रतिपत्तु न चेत् तदा ।
भूतविद्धा तु सा कार्य्या दैवे पित्र्ये च कर्म्मणि ॥
मुहूर्त्तमप्यमावास्या प्रतिपद्यपि चेद्भवेत् ।
तदा तदुत्तमं ज्ञेयं पर्व्वशेषन्तु पर्व्ववदिति ॥

अत्रारुणोदयवेलायामित्येतत्सामान्यप्रवृत्तं विशेषोल्लेखप्रवृत्तबाधा-यासमर्थं । अतः कस्मिंश्चिच्छ्राद्धविशेषे प्रवर्त्तते । पित्र्ये कर्मणीदमस्तु । एवमन्यदपि मुहूर्त्तमप्यमावास्येत्येतत् तुलापुरुषादिदानविषयम् । अथवा त्रिमुहूर्त्तापि कर्त्तव्या पूर्व्वा दर्शा च बह्वृचैः ।

कुहूरध्वर्युभिः कार्य्या यथेष्टं सामगायिभिः ॥

इत्येतद्वचनानुसारिणी व्यवस्थास्तु ।

अथ कुतपव्याप्तिप्रयुक्तपूर्व्वापरामावास्याग्रहणपराणि । तत्र हारीतः ।

भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकीति ॥

स्मृत्यन्तरेऽपि ।

मध्याह्नव्यापिनी या तु तिथिः पूर्व्वापरापि वा ।
तदहः कर्म्म कुर्व्वीत ह्रासवृद्धी न कारणमिति ॥

आह प्रचेताः ।

सिनीवाली कुहूश्चैव श्रुत्युक्ते श्राद्धकर्मणि ।
स्यातां न चेत्तु मध्याह्ने[१] श्राद्धादि स्यात् कथं तदा ॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।
साम्येति च कुहूर्ज्ञेया वेद-वेदाङ्ग-वेदिभिरिति ॥

अत्र श्राद्धाङ्गत्वेन कुतपोऽपराह्णश्च विहितः ।

तत्र येऽपराह्णमाद्रियन्ते यत्र पिण्डपितृयज्ञपिण्डान्वाहार्य्यकादिकं विशेषतोऽपराह्णे विहितं ते च तत्रापराह्णव्याप्तिं पुरस्कृत्य सिनीवाल्यां कुह्वां वा श्राद्धं कुर्य्युः। ये तु कुतपमाद्रियन्तेऽनग्निकादयः यत्र विशेषतः कुतपविहितमेकोद्दिष्टमामश्राद्धादि ते तत्र कुतपव्याप्तिं पुरस्कृत्य पूर्व्वस्यां परस्यां वा अमावास्यायां श्राद्धं कुर्य्युः। तदा विहितकालसमुच्चयो लभ्यते। तथा च स्मृतिः ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्व्वीत ह्रासवृद्धी न कारणमिति ॥

अत्र येऽन्येऽपि केचन सिनीवालीनिषेधास्ते तिथिवृद्धिविषयत्वेनानग्निकविषयत्वेनापराह्णव्याप्तिराहित्यविषयत्वेन दानादिविषयत्वेनापवादत्वेनोपसंहारत्वेन कल्पसूत्रविभागेन वा सति सम्भवे व्याख्येयाः । कुहूविधयोऽप्येवं न तु सहसा विहितप्रतिषिद्धत्वेन विकल्पोऽभ्युपेयः ।

श्रुतिद्वैधन्तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥

इत्यमावास्यानिरूपणं ।

---

(१) स्यातां यदि न मध्याह्ने इति ग० ।

अथाष्टकाः ।

अष्टकाशब्देन मार्गशीर्षादिमासचतुष्टयापरपक्षाष्टम्यः । हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टका इति शौनकस्मरणात् । केषाञ्चिन्मते तिस्र एवाष्टकास्तिस्रश्चान्वष्टकाः ।

तथा च विष्णुः ।

अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका इति । अष्टकानामनु पश्चाद्भवन्तीत्यन्वष्टकाः । अष्टकानामुपरितना नवम्यः ।

कूर्म्मपुराणे ।

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथेति ॥

विष्णुधर्म्मोत्तरे ।

अग्रहायणतिक्रान्तौ कृष्णास्तिस्रोऽष्टकास्तथेति ।

अथ पूर्व्वोक्ताष्टकाचतुष्टयव्यतिरिक्तापि भाद्रपदापरपक्षेऽष्टका । तस्याश्चेतिहासपूर्व्वकमुत्पत्तिः प्रशंसा चोच्यते ।

पद्मपुराणे ।

अग्निष्वात्ता इति ख्याता यज्वानो यज्ञसंस्थिताः ।
अच्छोदा नाम तेषान्तु मानसी कन्यका मता[१] ॥
तमथामावसुं नाम पितरं वीक्ष्य साङ्गना ।
वव्रे वरार्थिनी सङ्गं कुसुमायुधपीडनात्[२] ॥
योगाद्भ्रष्टा तु तेनाथ व्यभिचारेण भामिनी ।
धरान्न स्पृशते पूर्व्वं पपाताथ भुवस्तले ॥

(१) नदीति ख॰ ।
(२) कुसुमायुधपीड़ितेति ग॰ ।

अच्छोदाधोमुखी दीना लज्जिता तपसः क्षयात् ।
सा पितॄन् प्रार्थयामास पुनरात्मसमृद्धये ॥
विलप्यमाना पितृभिरिदमुक्ता तपस्विनी ।
इदमूचुर्म्महाभागाः प्रसादं शुभया गिरा ॥
अष्टाविंशे भवित्री तु द्वापरे मत्स्ययोनिजा ।
नाम्ना सत्यवती ख्याता व्यासस्य जननी शुभा ॥
व्यतिक्रमात् पितॄणां त्वं कष्टं कुलमवाप्स्यसि ।
तस्माद्राज्ञो वसोः कन्या त्वमवश्यं भविष्यसि ॥
प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यसि ।
आयुरारोग्यदा नित्यं सर्व्वकामफलप्रदा ॥

ब्रह्मवैवर्त्तवायुपुराणयोः ।

अथ कालं प्रवक्ष्यामि श्राद्धकर्म्मणि पूजितम् ।
काम्यनैमित्तिकाजस्रश्राद्धकर्म्मविधायिभिः ॥
पुत्रदा धर्म्ममूलं[१] स्युरष्टकास्तिस्र एव च ।
कृष्णपक्षे विशिष्टा[२] हि पूर्व्वा चैन्द्री उदाहृता[३] ॥
प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदैविकी[४] ।
आद्यापूपैः सदा कार्य्या मांसैरन्या भवेत्तदा ॥
शाकैः कार्य्या तृतीया स्यादेष द्रव्यगतो विधिः ।

---

(१) पित्र्यदानाय मूले इति ग० ।
(२) वरिष्ठा इति ग० ।
(३) विभाव्यते इति ख० ।
(४) वैश्यदेविकीति ग० ।

अष्टका च पितृणां वै नित्यमेव विधीयते ॥
या वाप्यन्या चतुर्थी स्यात्ताञ्च कुर्य्याद्विशेषतः ।
तासु श्राद्धं बुधः कुर्य्यात् सर्व्वस्वेनापि नित्यशः ॥
परत्रेह च सर्व्वेषु नित्यमेव सुखी भवेत् ।
पूजकानां सदोत्कर्षो नास्तिकानामधोगतिः ॥
पितरः सर्व्वकालेषु तिथिकालेषु देवताः ।
सर्व्वे पुरुषमायान्ति निपानमिव(१) धेनवः ॥
यस्य ते प्रतिगच्छेयुरष्टकाभिरपूजिताः ।
मोघस्तस्य भवेल्लोको लब्धञ्चास्य विनश्यति ।
देवांस्तु दायिनो यान्ति तिर्य्यग्गच्छन्त्यदायिनः ॥

अत्र चतुर्थी फाल्गुनकृष्णपक्षाष्टमी "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाष्टमी" इति शौनकस्मरणात् । पौषमासकृष्णाष्टमीमारभ्य तिस्रोऽष्टका इत्येतन्मतपरिग्रहे चतुर्थी भाद्रपदापरपक्षाष्टमीसन्निहिता दर्शिता पद्मपुराणे इतिहासानुसारात् ।
ब्रह्मपुराणे च ।

चतसृष्वष्टकासु क्रमेणाधिदेवतानिरूपणे पितृतर्पणद्रव्यनिरूपणे च भाद्रपदापरपक्षाष्टम्या ग्रहणात् ।

ऐन्द्र्यान्तु प्रथमायाञ्च शाकैः सन्तर्पयेत् पितॄन् ।
प्राजापत्या द्वितीया स्यान्मांसैः पुष्टैश्च तर्पयेत् ॥
वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमं ।
वर्गास्तु मध्ये शाकैश्च चतुर्थ्यामेव सर्व्वदेति ॥

---

(१) निपानस्येवेति ग० ।

अत्र शाकमांसापूपशब्दाः श्राद्धे विहितस्य सर्व्वस्यापि भोज्यस्य तत्तद्द्रव्यप्रधानत्वप्रतिपादनपराः न तु द्रव्यान्तरनिवृत्तिपराः। यतो विधेरेकविध्यन्तराबाधेनैव तावद्गतिं न्याय्यां मन्यन्ते। किन्तु वह्नतरविध्यन्तराबाधेन दृष्टाविरोधेन च। दृष्टं हि शाकप्रधानस्य भोज्यस्य तर्पकत्वं न तु केवलस्य शाकस्येति।

आह वशिष्ठः।

"श्रावण्याग्रहायण्योश्चाष्टकासु पितृभ्यो दद्यात्"। अष्टकाग्वष्टकास्वपि चावश्यकमेव श्राद्धं।

यदाह पितामहः।

अमावास्याव्यतीपात-पौर्णमास्यष्टकासु च।
विद्वान् श्राद्धमकुर्व्वाणो नरकं प्रतिपद्यत इति॥

वायुपुराणे तिर्य्यग्गच्छन्त्यदायिन इत्यष्टकाश्राद्धमकुर्व्वाणस्य तिर्य्यग्योनिप्राप्तिरूपानिष्टाभिधानाच्च। विष्णुना अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः माघीप्रोष्ठपद्यूर्द्धं कृष्णत्रयोदशी व्रीहियवपाकौ चेत्यनुक्रम्योक्तं।

एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिरिति।

विष्णुधर्म्मोत्तरे।

श्राद्धकालममावास्या नित्यं पार्थिवसत्तम।
पौर्णमासी तथा माघी श्रावणी च नृपोत्तम॥
प्रोष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी।
आग्रहायण्यतिक्रान्तौ कृष्णास्तिस्रोऽष्टकास्तथा॥
शाकैश्च प्रथमा कार्य्या मांसैश्च तदनन्तरा।

तृतीया च तथापूपैर्नित्यमेव विजानता ॥
एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः ।
श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यत इति ॥

देवलः ।

मनुना श्राद्धकल्पोऽयं मानवः समुदाहृतः ।
बहुपिण्डाष्टका तु स्यादेकपिण्डा तु नाष्टकेति ॥

अत्र बहुपिण्डैकपिण्डशब्दौ पार्व्वणैकोद्दिष्टविधिनिषेधपरौ

ब्रह्मपुराणे ।

अष्टकासु च कर्त्तव्यं श्राद्धं हैमन्तिकासु वै ।
अन्वष्टकासु क्रमशो मातृपूर्व्वं तदिष्यत इति ॥

अत्र स्मृतिः ।

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरं तथा ।
मातृश्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सहेति ॥

शङ्खस्मृतिः ।

अन्वष्टका तथा मातुः श्राद्धञ्चैव मृताहनि ।
एकोद्दिष्टं तथा मुक्ता स्त्रीषु नान्यत् पृथग्भवेदिति ॥

विष्णुधर्म्मोत्तरे चास्मिन् मातृश्राद्धे कर्षूविधिरुक्तः ।

अन्वष्टकासु च स्त्रीणां श्राद्धं कार्य्यं तथैव च[१] ।
अष्टकाविधिना कृत्वा क्रमेणैतासु पञ्चकं ॥
मात्रे राजन् पितामह्यै श्राद्धं कार्य्यं यथाविधि ।
तथैव प्रपितामह्यै वैश्वदेवपुरःसरम् ॥

---

(१) तथाविधीति ग० ।

पिण्डनिर्व्वपणं कार्य्यं तस्यैव पितृवन्नृप ।
भुक्तवत्सु तु विप्रेषु तत्र कार्य्यं(१) निबोध मे ॥
प्रादेशमात्रा राजेन्द्र चतुरङ्गुलमायताः ।
तावदेव समुत्सेधाः षट्कर्षूस्तत्र कारयेत् ॥
प्रत्येकं कर्षूमूले तु परिस्तीर्य्य कृताशनं ॥
अग्नीसोमयमानाञ्च यागं कृत्वा यथा पुरा ।
कर्षूत्रितयमूले तु पुरुषाणान्तु कारयेत् ॥
पितृनिर्व्वपणं प्राग्वदेकैकस्मिन् यथाविधि ।
कर्षूणां त्रितयं तत्र चीरान्नाभ्यां प्रपूरयेत् ॥
कर्षूत्रितयमूले च स्त्रीणां निर्व्वपणं भवेत् ।
दध्ना मांसेन पयसा कर्षूणाञ्चैव पूरणं ॥
अन्नोदकविमिश्रेण कार्य्यं मनुजपुङ्गव ।
भवतीभ्यो भवत्वेतदक्षय्यमिति न त्यजेत् ॥

इत्यष्टकानिरूपणं ।

## अथ वृद्धिश्राद्धं ।

वृद्धिर्नाम पुत्रजन्मादिनिमित्तोपलक्षितः कालः ।

तथा च वृद्धवशिष्ठः ।

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतमिति ।

जाबालिः ।

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।

---

(१) कर्म्मेति ख० ।

पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेदिति ॥

विष्णुपुराणे ।

जातस्य जातकर्म्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्व्वीत पिता श्राद्धञ्चाभ्युदयात्मकं ॥

कात्यायनः ।

स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्म्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमादिति ॥

अत्र संस्काराः ।

गर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म्म-नामकरण-निष्क्रमणा-न्नप्राशन-चौड़ोपनयन-व्रतचर्य्याध्ययन-समावर्त्तन-विवाह-यज्ञदानादि । तत्रैतेषु सुतसंस्कारेषु पिता स्वपितृभ्यो दद्यात् । शेषेषु संस्कारेषु स्वयमेवाधिकारीत्येतद्विस्तरेणोक्तमेवाधिकारनिरूपणे ।

विष्णुपुराणे ।

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणं पूजयेत् प्रयतो गृही ॥

पुत्रादिमुखदर्शने पुत्रजन्मनीत्यर्थः ।

ब्रह्मपुराणे ।

कर्म्मण्यथाभ्युदयिके मङ्गल्ये चातिशोभने ।
जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥
पितृन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्व्वकम् ।

वशिष्ठः।

पूर्व्वेद्युर्मातृकं श्राद्धं कर्म्माहे पैतृकं तथा।
उत्तरेद्युः प्रकुर्व्वीत मातामहगणस्य तु॥

वृद्धशातातपः।

पृथग्दिनेष्वशक्तश्चेदेकस्मिन् पूर्व्ववासरे।
श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवञ्च तान्त्रिकम्॥

एकस्मिन्नपि दिने क्रियमाणानां कालभेदेनानुष्ठानं कार्य्यमित्याह शातातपः।

पूर्व्वाह्णे मातृकं श्राद्धमपराह्णे च पैतृकम्।
ततो मातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतम्॥

एवंविधस्यापि कालभेदस्यासम्भवे आह वृद्धमनुः।

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः।
पूर्व्वेद्युर्वै प्रकुर्व्वीत पूर्व्वाह्णे मातृपूर्व्वकम्॥

बौधायनसूत्रे।

वेदकर्म्माणि प्रयोक्ष्यन् पूर्व्वेद्युरेव युग्मान् ब्राह्मणान् भोजयेदिति। नान्दीमुखा एवैते उक्ता भवन्ति। नैकाह्नेन पित्र्यं दैवञ्च कुर्व्वन्ति। यस्यैकाह्ना पित्र्यं दैवं च कुर्व्वन्ति प्रजा अस्य प्रमायुका भवन्ति। तस्मात् पितृभ्यः पूर्व्वेद्युः करोति पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानः प्रतनुत इति। ब्राह्मणमप्यत्र पूर्व्वमुपन्यस्तं।

सकलश्राद्धकालोद्देशस्थानीये याज्ञवल्क्यवचने वृद्धिशब्दस्याशेषनान्दीमुखश्राद्धकालोपलक्षणपरत्वात् कर्म्माङ्गश्राद्धकाला अपि संगृहीताः।

तेनाह पारस्करः ।

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्म्माङ्गं वृद्धिवच्छतम् ॥

निषेककालः षोड़शरात्रात्मको भार्य्याया ऋतुकालः । तत्र पुण्यनक्षत्रान्विते गर्भाधानाख्यकर्म्माङ्गश्राद्धं कार्य्यम् । सोमशब्दो-ऽग्निहोत्रादिकर्म्मणामुपलक्षणार्थः ।

इति वृद्धिश्राद्धनिरूपणम् ।

अथ कृष्णपक्षः ।

तत्र वाजसनेयसूत्रे कात्यायनः ।

अपरपक्षे श्राद्धं कुर्वीतोर्द्धं वा चतुर्थ्या यदहः सम्पद्येतेति । अपरपक्षे प्रतिपत्प्रभृत्यमावास्यान्ते कृष्णपक्षे ऊर्द्धं वा चतुर्थ्या यस्मिन् वा अहनि श्राद्धसाधनसम्पत्तिस्तस्मिन्नहनि श्राद्धं कुर्वीतेति ।

गौतमोऽपि ।

आमावास्यायां पितृभ्यो दद्यात् पञ्चमीप्रभृति वापरपक्षस्य यथा-श्रद्धं सर्व्वस्मिन् वा द्रव्य-देश-ब्राह्मणसम्भवे कालनियमः शक्तित इति । अपरपक्षे एकस्मिन्नहनि श्राद्धमित्येकः पक्षः । प्रत्यहमित्यपरः । काल-नियमः शक्तित इति तृतीयः । यथासामर्थ्यं कालव्यवस्थेत्यर्थः । अत्र नित्यं श्राद्धं । तथा च कात्यायनः । "शाकेनापि नापरपक्षमतिक्रामेत्" इति । यत्तु मार्कण्डेयपुराणादिषु "प्रतिपद्धनलाभाय द्वितीया पश्चसम्पदे" इत्यादिभिर्व्वचनैरपरपक्षान्तर्गतासु तिथिषु प्रत्येकं फल-सम्बन्ध उक्तो न तेनापरपक्षे श्राद्धस्य नित्यता हीयते । दर्शपूर्णमास-वन्नित्यत्व-काम्यत्वयोरुपपत्तेः । यद्यपि चैतदेकस्मिन्नेवाहनि क्रियते

तदाप्यमावास्याश्राद्धात् पृथगेव कार्य्यं। "अमावास्याष्टका वृद्धिः कृष्णपक्षः" इत्यत्र याज्ञवल्क्यवचने अमावास्यातः कृष्णपक्षस्य पृथगुपन्यासात्। अनेन यदत्र केश्चिदुक्तं, अमावास्यादिश्राद्धेन सहापरपाक्षिकं श्राद्धं विकल्प्यत इति तदपास्तम्। यत्तु निगमस्मरणम्, "अपरपक्षे यदहः सम्पद्येतामावास्यायां विशेषेणेति", तत् पृथक्त्वापृथक्त्वोभयपक्षाविरोधीति न विकल्पे प्रमाणमिति स्मृतिचन्द्रिकाकारः। केचित्तु विकल्पमेव मन्यन्ते।

आह आपस्तम्बः।

"मासि मासि कार्य्यमपरपक्षस्यापराह्णः श्रेयांस्तथापरपक्षस्य जघन्यान्यहानीति"। जघन्यानि दशम्यादीनि। नैतत् पूर्व्वेषां नवम्यादीनामश्रेयस्त्वाभिधानार्थं किन्तु पूर्व्वेभ्यः परेषां श्रेष्ठतमत्वप्रतिपादनार्थं। तदेतच्चतुर्दशीं वर्जयन्नाह मनुः।

कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्।
श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतरा इति॥

अत्र चतुर्दशी नात्यन्तं वर्जनीया किन्तु शस्त्रादिहतव्यतिरिक्तदैवत्यश्राद्ध एवेत्याह याज्ञवल्क्यः।

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम्।
शस्त्रेण तु हता ये वै तेषां तत्र(१) प्रदीयत इति॥

शस्त्रग्रहणमन्येषामपि केषाञ्चिन्मरणकारणानामुपलक्षणार्थमिति वक्ष्यते।

---

(१) तेभ्यस्तत्रेति ग०।

अथ भाद्रपदापरपक्षः ।

अत्र यद्यप्यपरपक्षे श्राद्धं कुर्वीत, शाकेनापि नापरपक्षमतिक्रामेदित्यादिभिर्द्वादशापरपक्षग्राहकैः सामान्यवचनैः भाद्रपदापरपक्षोऽपि गृहीत एव । तथापि तस्य पुण्यतमत्वप्रतिपादनार्थं तदतिक्रमे प्रत्यवायप्रतिपादनार्थञ्च स्मृतिपुराणादिषु विशेषतस्तस्याभिधानं कृतम् । तद्यथा विष्णुधर्म्मोत्तरे ।

उत्तरादयनाद्राजन्(१) श्रेष्ठं स्याद्दक्षिणायनम् ।
याम्यायनाच्चतुर्म्मासं तत्र सुप्ते तु केशवे(२) ॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्द्धन्तु तत्रापि दशम्यूर्द्धन्ततोऽप्यति ।
मघायुक्ता तु तत्रापि शस्ता राजंस्त्रयोदशीति ॥

उत्तरायणाद्दक्षिणायनं श्राद्धकरणे श्रेष्ठम् । सर्व्वस्माद्दक्षिणायनादपि तन्मध्यवर्त्त्युपेन्द्रनिद्रादिनादाषाढ्याः पौर्णमास्याः प्रभृति मासचतुष्टयं श्रेष्ठम् । तस्मादपि सर्व्वस्मात् प्रोष्ठपदस्य मासस्यापरपक्षः । तत्रापि पञ्चम्या ऊर्द्धं दशदिवसाः, तत्रापि दशम्या ऊर्द्धं पञ्च । तत्रापि मघायुक्ता त्रयोदशीति ।

ब्रह्मपुराणे ।

अश्वयुक्कृष्णपक्षे तु श्राद्धं कार्य्यं दिने दिने(३) ।
त्रिभागहीनं पक्षं वा त्रिभागन्त्वर्द्धमेव वा ॥
श्यामाकैस्तु विशेषेण प्रसिद्धैस्तु पितृप्रियैः ।

(१) श्राद्ध इति ग० ।
(२) चातुर्म्मास्यञ्च तत्रापि प्रसुप्ते केशवे हितमिति ख० ।
(३) कुर्य्याद्दिने दिने इति ग० ।

अत्र विष्णुधर्म्मोत्तरे।

प्रौष्ठपदमाससम्बन्धिनि कृष्णपक्षे श्राद्धमित्युक्तम्। ब्रह्मपुराणे तु अश्वयुङ्माससम्बन्धिनीति, सेोऽयमनयोर्विसंवादः परिह्रियते। तथाहि इह खलु शुक्लपक्षप्रतिपद्युपक्रम्य मासनामप्रवर्त्तिकां पौर्णमासीं मध्यावयवीकृत्यामावास्यान्तं चान्द्रमासं दाक्षिणात्याः परिकल्पयन्ति। औत्तरास्तु कृष्णपक्षप्रतिपद्युपक्रम्य नामप्रवर्त्तकपौर्णमास्यन्तम्। एवं च सति दाक्षिणात्यव्यवहारेण प्रौष्ठपदयुक्तायां पौर्णमास्यां प्रौष्ठपदामावास्याद्यपक्षसमाप्तौ तदुत्तरः पक्षः प्रौष्ठपद्यो भवति। उत्तरव्यवहारेण तु तस्यामेव पौर्णमास्यां प्रौष्ठपदमाससमाप्तौ तदुत्तरः पक्षः अश्वयुङ्मासमध्ये भवतीत्येक एव व्यवहारद्वयेन व्यपदेशद्वयं लभते।

आदित्यपुराणे।

प्रावृट्कृतौ यमः प्रेतान् पितॄंश्चाथ यमालयात्।
विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम्॥
क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतन्ते स्वयं कृतम्।
काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतम्॥
तस्मात्तांस्तत्रविधिना तर्पयेत्पायसेन तु।
मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा॥
ग्रासमात्रं परगृहादन्नं यः प्राप्नुयान्नरः।
भिक्षामात्रेण यः प्राणान् सन्धारयति वा स्वयम्॥
यो वा सन्धारयेद्देहं प्रत्यहं स्वात्मविक्रयान्।
श्राद्धन्तेनापि कर्त्तव्यं तैर्द्रव्यैः सुसञ्चितैरिति॥

नागरखण्डे पितॄन् प्रति ब्रह्मवचनम् ।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे ।
यो वै श्राद्धं नरः कुर्य्यादेकस्मिन्नपि वासरे ॥
तस्य संवत्सरं यावत् तृप्ताः स्युः पितरो ध्रुवम् ।

शाट्यायनिरप्याह ।

नभस्यस्यापरे पक्षे तिथिषोडशकस्तु यः ।
कन्यागतान्वितश्चेत् स्यात् स कालः श्राद्धकर्म्मणि ॥

ब्रह्मपुराणमार्कण्डेयपुराणयोः ।

दिव्यभौमान्तरीक्षाणि स्थावराणि चराणि च ।
पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ ॥
कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत् ॥
राजसूयाश्वमेधाभ्यां य इच्छेद्दुर्लभं फलम् ।
अप्यम्बुशाकमूलान्नैः पितॄन् कन्यागतेऽर्च्चयेत् ॥

यद्यपि कन्यागते मासमात्रं भवति तथाप्यपरपक्षस्यैव पैत्र्यत्वा-द्वचनान्तरसंवादाच्च तत्रैव श्राद्धमित्यनुसन्धेयम् ।

आदित्यपुराणे ।

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि पितॄणां दत्तमक्षयमिति ॥

अत्र यद्यपि बहुषु वचनेषु पक्षस्यैव श्राद्धकालत्वमुक्तं, पक्षश्च पञ्च-दशतिथ्यात्मक एव । तथापि कदाचित् तिथिवृद्धौ षोडशदिनात्मको भवति । तत्रैकदिनहानिर्म्माभूदित्यनेनाभिप्रायेणाच तिथिषोडशक

इत्युक्तं। अमावास्योत्तरां प्रतिपदमपि वा संग्रहीतुं पूर्व्वां पौर्णमासीं वा तस्यां हि नान्दीमुखानां श्राद्धं वक्ष्यते। अत्र पक्षमध्ये यस्मिन् कस्मिंश्चिदप्यहनि कन्यासंक्रमे सति प्रतिपदादिषोडशाप्यहान्युपादेयानि। न तु संक्रमणात् पूर्वाणि हेयानीत्येवं वेदितव्यम्।

अतएवाह बृहन्मनुः।

मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत्।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते॥

अत्र कन्यागतत्वस्योक्तिः प्रशस्ततरत्वप्रतिपादनार्था, न तु कन्यागतत्वराहित्ये तत्परित्यागार्था।

तथा चादित्यपुराणे।

पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्॥
आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः।
श्राद्धं तत्र प्रकुर्वीत कन्याङ्गच्छति वा न वेति॥

कार्ष्णाजिनिः।

पुत्रानायुस्तथारोग्यमैश्वर्य्यमतुलं तथा।
प्राप्नोति पञ्चमे दत्वा श्राद्धं कामांश्च पुष्कलान्॥

एवं भाद्रपदापरपक्षे कृते विशिष्टेष्टप्राप्तिरुक्ता। तस्मिन्नकृते त्वनिष्टप्राप्तिमाह।

कार्ष्णाजिनिः।

प्रेतास्तत्रैव हिंसन्ति पञ्चमं यो व्यतिक्रमेत्।
तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम्॥

नागरखण्डे।

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति।
शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपैष्यति॥
आसनं शयनं भोज्यं स्पर्शनं भाषणं तथा।
तेन सार्द्धं न कर्त्तव्यं हव्यं कव्यं कदाचन॥
ये न श्राद्धं करिष्यन्ति ते ते पापतरा नराः।
भविष्यन्ति न सन्देहः सन्तत्या च विवर्जिताः।
न सुखं धनधान्यञ्च तेषां भावि कदाचनेति॥

ब्रह्मपुराणे।

सूर्य्ये कन्यागते कुर्य्यात् श्राद्धं यो न गृहाश्रमी।
धनं पुत्राः कुतस्तस्य पितृनिःश्वासपीड़या॥
न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते॥

अथ केनचित्प्रकारेण श्राद्धमन्तरेणैवोक्तस्य पक्षस्यातिक्रमे तन्निमित्तस्य श्राद्धस्य तदुत्तरदिनेष्ववधिविशेषावच्छिन्नेषु कर्त्तव्यतोच्यते यमस्मृतौ।

हंसे श्राद्धन्तु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः॥

हंसः सूर्य्यः। उभयपक्षपञ्चम्योरन्तर इति भाद्रपदकृष्णपञ्चम्याः परस्तादाश्विनशुक्लपञ्चम्याः पूर्व्वमन्तरालकाल इत्यर्थः। अनेनाश्विनशुक्लपञ्चमीपर्य्यन्तं श्राद्धमभ्यनुज्ञातं भवति।

ब्रह्मपुराणे।

यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः ।
तावच्छ्राद्धस्य कालः स्यात् शून्यं प्रेतपुरं तदा ॥

तथा ।

कन्यागते सवितरि पितरो यान्ति वै सुतान् ।
शून्या प्रेतपुरी सर्व्वा यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकसम्प्राप्ता निराशाः पितरो गताः ।
पुनश्च भवनं यान्ति शापं दत्त्वा सुदारुणम् ॥

नागरखण्डे ।

न ददाति नरः श्राद्धं पितॄणां चन्द्रसङ्क्षये ।
क्षुत्पिपासापरीताशाः पितरस्तस्य दुःखिताः ॥
प्रेतपक्षं प्रतीक्षन्ते(१) गुरुवाञ्छासमन्विताः ।
कर्षका जलदं(२) यद्वद्दिवानक्तमतन्द्रिताः ॥
प्रेतपक्षेऽप्यतिक्रान्ते यावत्कन्यागतो रविः ।
तावच्छ्राद्धं प्रवाञ्छन्ति दत्तं वै पितरः सुतैः ॥
ततस्तुलागतेऽप्येके सूर्य्ये वाञ्छन्ति पार्थिव ।
श्राद्धं स्ववंशजैर्दत्तं क्षुत्पिपासासमाकुलाः ॥
तस्मिन्नपि व्यतिक्रान्ते काले वृश्चिकगे रवौ ।
निराशाः पितरो दीनास्ततो यान्ति निजालयम् ॥
मासद्वयं प्रतीक्षन्ते(३) गृहद्वारं समाश्रिताः ।
वायुभूताः पिपासार्त्ताः क्षुत्क्षामाः पितरो नृणाम् ॥

---

(१) परीक्षन्ते इति ग० ।
(२) कर्षुका हि जलमिति ख० ।
(३) परीक्षन्ते इति ख० ।

यावत्कन्यागतः सूर्य्यः तुलास्थश्च महीपते ।

सुमन्तुराह ।

कन्याराशौ महातेजा यावत्तिष्ठेद्विभावसुः ।
तस्मात् कालात्तु वै देयं वृश्चिकं यावदागमः ॥
येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यां दद्यान्न चेद्दत्तं पितॄणां वै महालये ॥

अत्र महालयो भाद्रपदापरपक्षः ।

यत्तु जातूकर्ण्येनोक्तं ।

आकाङ्क्षन्ति स्वपितरः पञ्चमं पक्षमाश्रिताः ।
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलमिति ॥

तत् फलातिशयहानिपरं, न सर्व्वथा फलहानिप्रतिपादकम् ।

अथात्र त्रयोदशीश्राद्धं प्रपञ्चेनोच्यते ।

मनुस्मृतौ ।

यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षयमेव स्यात् वर्षासु च मघासु च ॥

यमः ।

गाथाश्च पितृभिर्गीताः कीर्त्तयन्ति पुराविदः ।
अपि नः स्वकुले भूयात् यो नो दद्यात् त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥

अथ पितृगीते गाथे भवतः ।

विष्णुः ।

अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।

प्रावृट्काले सिते पक्षे त्रयोदश्यां समाहितः ॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत् ।
कार्त्तिकं सकलं वापि प्रच्छाये कुञ्जरस्य च ॥

पैठीनसिरप्याह ।

छागेन सर्व्वलोहेन वर्षासु च मघासु च ।
पुत्रो वा यदि वा पौत्रो यो नो दद्यात् त्रयोदशीम् ॥
जायेत किमसौ कश्चिद्धार्मिको वंशवर्द्धनः ।

महाभारते ।

अपि नः स्वकुले भूयात् यो नो दद्यात् त्रयोदशीम् ।
मघासु सर्पिषा युक्तं पायसं दक्षिणामुखः ॥

शङ्खलिखितौ ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव ॥
मधुमांसेन खड्गेन पयसा पायसेन वा ।
एष दास्यति नः श्राद्धं वर्षासु च मघासु च ॥

याज्ञवल्क्यः ।

यो ददाति[१] गयास्थस्य सर्व्वमानन्त्यमश्नुते ।
तथा वर्षात्रयोदश्यां मघासु च विशेषतः[२] ॥
प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च ॥

---

(१) यद्ददातीति ख० ।
(२) न संशय इति ग० ।

प्रशस्ततरा चैषा तिथिर्भाद्रपदापरपाक्षिकाभ्योऽपि तिथिभ्यः ।
तथा च ब्रह्मपुराणे ।

यो वा सम्बर्द्धयेद्देहं प्रत्यहं स्वात्मविक्रयात् ।
श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः ।
त्रयोदश्यां प्रयत्नेन वर्षासु च मघासु च ॥
नास्मात्परतरः कालः श्राद्धेष्वन्येषु वर्त्तते ।
यदत्र पितरो दत्तं गृह्णन्ति स्रुतमक्षयम् ॥

मार्कण्डेयपुराणे ।

उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
चातुर्म्मास्यन्तु तत्रापि प्रसुप्ते केशवेऽधिकम् ॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चपूर्व्वन्तु तत्रापि दशपूर्व्वं ततोप्यति[१] ।
मघायुक्ता च तत्रापि शस्ता राजन्त्रयोदशीति ॥

अत्र पञ्चपूर्व्वं पञ्चमीमारभ्य, दशपूर्व्वं दशमीमारभ्येत्यर्थः ।
आवश्यकञ्चेदं श्राद्धमुक्तम् विष्णुधर्म्मोत्तरे ।

श्राद्धकालममावास्या नित्यं पार्थिवसत्तम ।
पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥
प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी ।
अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तम ॥
एतानि श्राद्धकालानि नित्यान्याह प्रजापतिः ।

---

(१) पञ्चम्यूर्द्धन्तु तत्रापि दशम्यूर्द्धन्ततोप्यतीति ग० ।

श्राद्धमेतेष्वकुर्व्वाणो नरकं प्रतिपद्यत इति ॥

विष्णुरपि अमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः। माघीप्रौष्ठपद्यूर्द्धं कृष्णा त्रयोदशीत्युपन्यस्य एतानि श्राद्धकालानीत्यमुमेव श्लोकमुक्तवान्। अथात्र निषेधवचनानि ।

ज्योतिर्वृहस्पतिः ।

कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितं ॥

षट्त्रिंशन्मते ।

गृही त्रयोदशीश्राद्धं न कुर्य्यात् पुत्रवानपि ।
उपवासश्च संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ॥
त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृही ।
नेष्यते चोपवासस्तु कैश्चिदप्ययनद्वये ॥

आपस्तम्बः ।

त्रयोदश्यां बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्तीति ।

कात्यायनश्चाह ।

युवानस्तत्र म्रियन्त इति ।

स्कान्दे नागरखण्डे ।

यो वाञ्छति नरो मुक्तिं पितृभिः सह चात्मनः ।
असन्तानस्य यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी ।
सन्तानयुक्तो यः कुर्य्यात्तस्य वंशक्षयो भवेत् ॥

आनर्त्त उवाच ।

त्रयोदश्यां कृते श्राद्धे कस्माद्वंशक्षयो भवेत् ।
एतन्मे सर्व्वमाचक्ष्व विस्तरेण महामुने ॥

भर्तृयज्ञ उवाच ।

आसीद्रथन्तरे कल्पे पूर्व्वं पार्थिवसत्तम ।
सिताश्वो नाम पञ्चालदेशीयः पितृभक्तिमान् ॥
मधुना कालशाकेन खड्गमांसेन केवलम् ।
स हि श्राद्धं त्रयोदश्यां कुरुते पायसेन वा ॥
कदाचिद्ब्राह्मणैर्भूयः स पृष्टः कौतुकान्वितैः ।
अन्येषु विद्यमानेषु विचित्रेषु कुतो नृप ॥
अस्वादुखड्गमांसञ्च कालशाकञ्च यच्छसि ।
अप्रत्याख्येयमत्याज्यं श्राद्धे दत्तं हविर्द्विजैः ॥
इति तद्बुध्यतेऽस्माभिस्तदा मे कारणं वद ।
एतच्छ्रुत्वा वचस्तेषां ब्राह्मणानां वचोऽब्रवीत् ॥
अवाच्यमपि वक्ष्यामि शृणुध्वं सुसमाहिताः ।
अहमासन् पुरा हिंस्रो लुब्धकः पितृभक्तिमान् ॥
भ्रमन् कदाचित् प्राप्तोऽहं अग्निवेश्याश्रमं निशि ।
शिष्यानुपदिशन् विप्रो दूरस्थेन मया श्रुतः ॥

अग्निवेश्य उवाच ।

ऋक्षे पैत्रे यदा चन्द्रो हंसश्चैव करे स्थितः ।
त्रयोदश्यान्तु सा छाया विज्ञेया कुञ्जराह्वया ॥
श्राद्धेष्वतिप्रशस्ता सा पितॄणां तृप्तिकारिणी ।
तत्प्रातः श्राद्धसम्भाराः सम्भ्रियन्तामतः शुभाः ॥

"पैत्रनृत्रं" मघा । "हंसः" सूर्य्यः । "करे" हस्ते ।

मित्राश्च उवाच ।

इति तस्य मुनेर्वाक्यमाकर्ण्येदमचिन्तयम् ।
अहञ्चापि करिष्यामि प्रातः श्राद्धक्रियामिति ॥
ततः प्रभाते श्राद्धीयद्रव्यार्थं पर्य्यटन् वने ।
खड्गमांसं कालशाकं मधु च प्राप्तवानहम् ॥
यथोपपन्नैस्तैर्द्रव्यैस्त्रयोदश्यां समाहितः ।
निजान् पितॄन् समुद्दिश्य स्वजातीयान् त्वभोजयम् ॥
श्राद्धेन तादृशेनापि पितरो द्वादशाब्दिकीम् ।
तृप्तिमापुरहञ्चापि नृपो जातिस्मरोऽभवम् ॥
अतो मघात्रयोदश्यामेतैरेव हि साधनैः ।
करोमि श्रद्धया श्राद्धं तत्प्रभावमनुस्मरन् ॥
तस्य तद्वचनं श्रुत्वा ते चान्ये च जना भुवि ।
नभस्यस्य त्रयोदश्यां श्राद्धं चक्रुर्मुदान्विताः ॥
प्रापुश्च परमां सिद्धिं स्पर्द्धमानाः सुरोत्तमैः ।
ईर्षालवस्ततस्तेषु वसुरुद्रादयः सुराः ॥
असंशयं त्रयोदश्यां श्राद्धकर्तॄन् क्रुधान्विताः ।
अद्यप्रभृति यः श्राद्धं त्रयोदश्यां करिष्यति ॥
कन्यासंस्थे सहस्रांशौ तस्य स्याद्वंशसंक्षयः ।
इति शापेन देवानां निर्दग्धेयं महातिथिः ।
ततः प्रभृति नैतस्यां क्रियते श्राद्धमुत्तमम् ॥
यः प्रमादेन कुरुते तस्य स्याद्वंशसंक्षयः ।

एतत्त्रयोदशीश्राद्धं वंशच्छेदस्य कारणम् ॥
अतः श्राद्धं विना देयं तद्दिने मधुपायसम् ।
खङ्गमांसं कालशाकं वार्ध्रीणसास्थमेव च ॥

वार्ध्रीणसो वक्ष्यमाणलक्षणो वृद्धच्छागः ।

तस्याभावे प्रदातव्यं क्षीरोदनमनुत्तमम् ।
तस्मिन्नहनि विप्रेभ्यः पितृणां तुष्टये नृप ।
तस्याभावेऽपि दातव्यं जलं तिलविमिश्रितमिति ॥

अथात्र केचिदाहुः । त्रयोदशीश्राद्धनिषिद्धवाक्यानामप्रामाण्यमेव । यत्किञ्चिन्मधुना मिश्रमित्यादिमनुवचनविरोधात् । मनुस्मृतिर्हि स्वाध्यायात् प्रसिद्धत्वात् वक्तृभिः सम्प्रदायेन पठ्यमानत्वात् अपभ्रष्ट-पाठासम्भवात् मूलान्तरा वेति क्षुद्रतरेभ्यो नाममात्रेणाप्रसिद्धेभ्यः केनचिदप्यपठ्यमानेभ्योऽनवस्थितपाठेभ्यः सम्भावितभ्रान्त्यादिमूलेभ्यः स्वविरोधप्रत्यक्षश्रुतिवद्बलीयसीति ।

अतएव बृहस्पतिः ।

वेदार्थोपनिबन्धृत्वात् प्रामाण्यन्तु मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यत इति ॥

मनुरप्याह ।

यः कश्चित् कस्यचिद्धर्म्मो मनुना परिकीर्त्तितः ।
स सर्व्वो विहितो वेदे सर्व्वज्ञानमयो हि स इति ॥

उच्यते । यत्तावदुक्तं मनुस्मृतेः श्रुतितुल्यत्वेन विधेः स्मृत्यन्तरेभ्यो बलीयस्त्वमिति तत्कल्पमात्रं । बृहस्पतिवचन मन्वर्थविपरीतानां बुधादिस्मृतीनामप्रामाण्यमाह । ननु शिष्टत्रैवर्णिकस्वीकृतानां का-

त्यायनादिस्मृतीनां वेदार्थप्रतिबद्धत्वादित्यप्रामाण्यहेतुर्विद्यमानत्वात् अतो मनुशब्देनात्र सर्व्वे वेदार्थस्मर्त्तारः कात्यायनादयोऽभ्युपलक्ष्यन्ते। अथवा मनज्ञान इति धातुपाठात् वेदार्थज्ञानवान् मुनिर्मनुरुच्यते।

अन्ये त्वाहुः। कस्यचिदपि श्राद्धस्य निषेधानुपपत्तेः निषेधवाक्यानामप्रामाण्यमिति। तथाहि न तावन्नित्यस्य श्राद्धस्य निषेधोऽयं। यत आह मनुः।

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्व्वापि पितृभ्यः प्रीतिमाहरन्निति॥

दक्षोऽप्याह।

अस्नात्वा वाप्यहुत्वा वा अदत्त्वा यः समश्नुते।
देवादीनामृणी भूत्वा अप्रजः स व्रजत्यध इति॥

अहरहः स्वाध्यायं कुर्य्यादुदपात्रात्तथैनं पितृयज्ञं समाप्नोतीति। एवमेतैर्व्वचनैर्नित्यस्य श्राद्धस्याहरहर्विधानादकरणादधोगमनाभिधानात् त्रयोदश्यां तदनुष्ठानमर्हति। नापि नैमित्तिकस्य निषेधः। न तावन् मृताहादिनिमित्तकस्य।

यत आह याज्ञवल्क्यः।

मृताहनि तु दातव्यं प्रतिमासन्तु वत्सरम्।
प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनीति॥

कात्यायनोऽप्याह।

ततः संवत्सरे संवत्सरे प्रेतायान्नं दद्यात्। यस्मिन्नहनि प्रेतः स्यादिति सिद्धान्तेनैकोद्दिष्टं कुर्य्यादित्यर्थः। एवमन्येष्वपि स्मृतिपुराणेषु च। मृताहादिविहितस्य मृताहादिष्वपेक्षितत्वात्तदनुष्ठानं न प्रतिषेधः

प्रतिषेद्धुमर्हति । नापि वृद्ध्यादिनिमित्तस्य "पुत्रजन्मनि कर्त्तव्यं जातकर्म्म समं नरैः" इत्यादिभिर्व्वाक्यैः पुत्रजन्मादिकालेषु जातकर्म्मवदावश्यकत्वेन विहितत्वात्तदनुष्ठानमपि प्रतिषेधाः प्रतिषेद्धुमर्हन्ति। नापि त्रयोदशीनिमित्तकस्य पार्व्वणस्यैव, यतः "अन्ये त्रयोदशीश्राद्धं पुत्रवत्यप्युभाय वै। एकस्यैव न तत् कुर्य्यात् पार्व्वणन्तु समाचरेत्" इति तस्यावश्यकत्वेन विधानात् एकस्यैव वर्गस्य न कुर्य्यात् पार्व्वणं समाचरेदिति पितृवर्गस्य मातामहवर्गस्य च इत्येवं वर्गद्वयस्य कुर्य्यादित्यर्थः। न चैकवर्गाय दीयमानस्य श्राद्धस्य निषेधः। तथाविधस्य तन्निमित्तकस्य श्राद्धस्य प्राप्तेरभावात्। पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमिति धौम्यवचनेन वर्गद्वयस्यैव श्राद्धविधिदर्शनात्। नापि काम्यस्य, तस्यापि त्रयोदशीसम्बन्धेनैव विशेषविहितत्वात् । तदेवंविषयासम्भवात्प्रतिषेधवाक्यानामप्रामाण्यमित्युच्यते । नित्यस्य नैमित्तिकस्य वैशेषिकस्य च कदाचित् प्रतिषेधः । यथा स्नतकादौ विशेषविहितत्वस्यापि त्रयोदशीनिमित्तकस्य विशेषवचनेन तन्मात्रविषयकेन प्रतिषेधः सम्भवति । यथा नातिरात्रे षोड़शिनं गृह्णातीत्यत्र ग्रहणप्रतिषेधः । त्रयोदशीश्राद्धस्य च नित्यवद् यथाकथञ्चिदनुष्ठाने प्राप्ते सत्यामपि धौम्यस्मृतौ व्यामोहादेकवर्गीयश्राद्धस्यानुष्ठाने प्रतिषेधसम्भवात्। तस्माद्विषयासम्भवात् प्रतिषेधवाक्यानामप्रामाण्यमिति मतं । तस्मादत्र व्यवस्था वक्तव्या । तत्र तावच्छन्दधरः । मघात्रयोदशीश्राद्धविधिवाक्यानि वर्गोद्देशेनानुष्ठीयमानं श्राद्धमाश्रयन्ते । निषेधास्त्वेकवर्गोद्देशेनानुष्ठीयमानं श्राद्धमाश्रयन्ते। अतएव कार्ष्णाजिनिः ।

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।

न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य त इति ॥

एकस्य वर्गस्य पित्रादिमात्रस्य मातामहादिमात्रस्य वा नोपक्रमेत् । किन्तु मातामहादिसहितस्य कुर्य्यात् । षणां पुरुषाणां श्राद्धाकरणे त्रयोदशीप्रतिषेधदोष इत्यर्थः । अन्ये तु, सन्ति प्रमीतानां पितृभावङ्गतानां वर्गाः पितृव्यवर्गो भ्रातृवर्गो मातुलवर्ग इत्येवमादयः । अथवा पितृपक्षीयाणां सपिण्डानां वर्गो मातृपक्षीयाणां सपिण्डानाञ्चेत्येवं वर्गद्वयं । एषां वर्गाणां मध्ये श्राद्धे लब्धाधिकारेण पुरुषेण दिनान्तरे कस्यचिद्वर्गस्य श्राद्धं कृतं, करिष्यते वा कस्यचिदित्येवं किञ्चित्कारणमनुसन्धाय मघात्रयोदश्यां न कर्त्तव्यं । किन्तु सर्व्वेषां वर्गाणां कर्त्तव्यं । यतो मघात्रयोदश्याः पितृतृप्तिकारणभूतानां तिथीनां मध्ये श्रेष्ठतमत्वात् सर्व्वेषां पितॄणां मधुमिश्रपायसादिद्रव्येण दीयमानस्य श्राद्धस्यापेक्षितत्वात् । येभ्य एव न दीयते त एव कुपिताः श्राद्धकर्त्तुः प्रजां नाशयन्ति । तदेवं निषेधवाक्यानामेकस्यैव वर्गस्य क्रियमाणं श्राद्धं विषय इति । अन्ये त्वाहुः, पुत्रवता गृहिणा क्रियमाणं त्रयोदशीश्राद्धं विषय इति ।

ज्योतिर्वृहस्पतिः ।

कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयात् ज्येष्ठपुत्रस्य निश्चितं ॥

षट्त्रिंशन्मते ।

गृही त्रयोदशीश्राद्धं न कुर्य्यात् पुत्रवानपि ।
उपवासञ्च सङ्क्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ॥

स्मरन्ति च ।

त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृही ।
नेष्यते चोपवासश्च कैश्चिदप्ययनद्वये ॥

आपस्तम्बः ।

त्रयोदश्यां बहुपुत्रो बहुमित्रो दर्शनीयापत्यो युवमारिणस्तु भवन्तीति ।

कात्यायनः ।

युवानस्तत्र म्रियन्त इति ।

केचित्पुनः पुत्रमरणरूपेण दोषेण न त्रयोदशीश्राद्धनिवृत्तिं मन्यन्ते ।

ते ह्याहुः । नैयोगिकत्वादस्य फलस्य काम्यमानमेवैतद्भवति नत्वेवमेव, तदुक्तं, काम्यमानं फलं स्यातं नानिच्छोस्तद्भविष्यतीति । तस्मात् क्रियमाणेऽपि श्राद्धे न पुत्रमरणरूपं काम्यमानं कर्म्मफलं भवतीति गृहिणा पुत्रवतापि कर्त्तव्यं त्रयोदशीश्राद्धमिति । तदयुक्तं । त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृहीत्यादिनिषेधवाक्यापेक्षितानर्थरूपफलविशेषप्रापणं "पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितं" इत्यादिवाक्यैः क्रियते न पुनः कस्यचित्पुत्रमरणेच्छोरभिचाररूपं त्रयोदशीश्राद्धं विधीयते । निषेध्यमानक्रियाफलस्यानर्थरूपत्वान्न कश्चिदिच्छति । न च सकृदुच्चरितं वाक्यं कञ्चित्पुरुषं प्रत्यर्थत्वेन कञ्चिच्च प्रत्यनर्थत्वेन पुत्रमरणं बोधयितुं शक्तं । वाक्यभेदप्रसङ्गात् । यत्तु कैश्चिदुक्तं मघात्रयोदश्यां श्राद्धाचरणस्य धर्म्मरूपत्वात्तदनुष्ठाने पुत्रमरणाद्यनिष्टं भवतीति न युक्तमिति । तथा तृप्ताः सन्तः पितरोऽनिष्टं फलं प्रयच्छन्तीत्यपि न युक्तमिति । तन्न वक्तव्यं । यतः

शास्त्रबोधितोऽर्थो न युक्तिमात्रेण निवर्त्तयितुं शक्यते । शास्त्रैकगम्यस्यार्थस्य युक्त्यविषयत्वात् । यत्तु महाभारते दानधर्म्मेषु । "ज्ञातीनान्तु भवेच्छ्रेष्ठः कुर्व्वन् श्राद्धं त्रयोदशीं । नावश्यन्तु युवानोऽस्य प्रमीयन्ते नरा गृहे" इति युवमरणरूपस्य दोषस्य आपस्तम्बाद्युक्तस्य निराकरणं कृतं । तदपि नात्यन्तं कृतं । नावश्यमित्यभिधानेन दोषस्य पाक्षिकत्वाभ्यनुज्ञानात् । यत्त्ववश्यं न म्रियन्त एवेति स्मृतिचन्द्रिकाकारस्य व्याख्यानं तच्छङ्खधरहरिहरादीनां न सम्मतमिति ।

अन्ये तु । "अयनद्वितये श्राद्धं विषुवद्द्वितये तथा । युगादिषु च सर्व्वासु पिण्डनिर्व्वपणादृते" ॥ इति पुलस्त्यवचनाद्भाद्रपदापरपक्षत्रयोदश्यास्च युगादित्वात् पिण्डनिर्व्वपणं विना श्राद्धं कर्त्तव्यमिति निषेधवाक्यानां पिण्डदानसहितं श्राद्धं विषय इत्याहुः । केचित्तु पायसादिद्रव्यव्यतिरिक्तद्रव्येण श्राद्धाचरणं निषिद्धमित्येवंविधं विषयमाहुः, तदयुक्तं । पायसादिद्रव्यव्यतिरिक्तद्रव्येणामश्राद्धकरणे नागरखण्डे दोषस्योक्तत्वात् । हरिहरस्त्वत्रैवं कारणमुक्तवान् । तदयुक्तं । अपदार्थवाक्यार्थापत्तेः । पुत्रवान् गृही त्रयोदशीश्राद्धं न कुर्य्यादित्येते पदार्थाः । पायसव्यतिरिक्तद्रव्येण श्राद्धं न कर्त्तव्यमिति वाक्यार्थ इति, हरिहरः स्वयन्त्वीदृशीं व्यवस्थामाह । भाद्रपदापरपक्षान्तर्गतमघान्वितत्रयोदश्यां नित्यं महाफलञ्च श्राद्धं । तदर्थमेव च पितॄणां पौराणिकीषु गाथासु पुत्रप्रार्थनं महता प्रबन्धेन श्रूयते । अतस्त्रयोदशीमात्रसम्बन्धीनि निषेधवाक्यानि सामान्यशास्त्ररूपत्वाद्भाद्रपदापरपक्षत्रयोदशीं परित्यज्य शेषास्वेकादशसु त्रयोदशीषु कृतार्थयन्त्यात्मानमिति । एतत्तु विशेषतो भाद्रपदापरपक्षत्रयोदश्यामेव श्राद्ध-

निषेधस्य नागरखण्डेतिहासे स्पष्टमेव दर्शितत्वात् । अनतिश्लाघ्यं काम्यश्राद्धविषयत्वेन वा प्रतिषेधवचनानि व्यवस्थापनीयानि । यतः कामसम्बन्ध एव श्राद्धे दोषः स्मर्य्यते ।

तथाहि । त्रयोदशीश्राद्धकर्त्तुर्ज्ञातिश्रैष्ठ्यं बहुपुत्रत्वादिफलं सङ्कीर्त्य व्यासापस्तम्बाभ्यां युवमरणलक्षणो दोषोऽपि तत्रैवोदितः । तदेवं निषेधवाक्यानामेतावन्तो विषयाः, एकवर्गश्राद्धं पिण्डवच्छ्राद्धं पुत्रवद्गृहमेधिकर्त्तृकं श्राद्धं काम्यश्राद्धमिति । विधिवाक्यानाञ्चान्यानि श्राद्धानि विषय इति मन्यन्ते ।

इति मघात्रयोदशीश्राद्धनिरूपणं ।

अथापरपक्ष एव चतुर्द्दशीश्राद्धं ।

तत्र याज्ञवल्क्यः ।

प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीं ।
शस्त्रेण[१] तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥

मार्कण्डेयब्रह्मपुराणयोः ।

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्य्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥

ब्रह्मवैवर्त्तवायुपुराणयोः ।

युवानस्तु गृहे यस्य मृतास्तेषां प्रदापयेत् ।
शस्त्रेण वा हता ये वै तेषां दद्याच्चतुर्दशीं ॥

वृद्धमनुः ।

चतुर्द्दशीं वर्जयित्वा श्राद्धं श्राद्धविशारदाः ।

(१) अस्त्रेण इति ग० ।

प्रीयन्ते पितरस्तस्य ये च शस्त्रहता रणे ॥

काम्यप्रक्रमे च मनुः ।

ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु सुप्रजाः ।

प्रीयन्ते पितरस्तस्य ये च शस्त्रहता रण इति ॥

शस्त्रग्रहणमुपलक्षणं ।

ब्रह्मपुराणे ।

प्रायोऽनशनशस्त्राग्निविषोद्बन्धनिनान्तथा ।

चतुर्द्दश्यान्तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः ॥

नागरखण्डे ।

येषाञ्च शस्त्रमृत्युः स्यादपमृत्युरथापि वा ।

उपसर्गात् मृतानाञ्च विषमृत्युमुपेयुषां ॥

वह्निना च प्रदग्धानां जलमृत्युमुपेयुषां ।

सर्पव्याघ्रहतानाञ्च शृङ्गैरुद्बन्धनैरपि ॥

श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप ।

तेषां तस्मिन् कृते तृप्तिस्ततस्तत्पक्षजा भवेत् ॥

अपमृत्युरकालमृत्युरप्राप्तजरसामेव मृत्युरित्यर्थः । यक्षभूतग्रहाद्युपसृष्टानां यन्मरणं तदुपसर्गान्मरणं । तत्पक्षजा सर्व्वस्मिन्नपरपक्षे श्राद्धकरणात् यावती तृप्तिस्तावतीत्यर्थः ।

मरीचिरपि ।

विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनां ।

चतुर्द्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता ॥

विषादिभिर्घातो येषां ते तथोक्ताः । अनेन शस्त्रादिहतानामेव

चतुर्दशीति कालमात्रं नियम्यते । न तु चतुर्दश्यामेव शस्त्रादिहतानां ।
किन्तु तेषामन्यस्मिन्नपि काले भवत्येव श्राद्धमिति । प्रचेता अपि ।

वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषादिभिः ।
नखदंष्ट्रैर्विपन्नानां तेषां शस्ता चतुर्दशी ॥

आदिशब्देन गिरिशिखरादिविषमस्थलारोहणपतनलगुड़ाद्यभिघातोद्बन्धनोपघातादयः प्रागुक्तसधर्म्माणो मरणोपायाः संगृह्यन्ते । यत्तूक्तविरुद्धार्थं शाकटायनवचनं "जलाग्निभ्यां विपन्नानां संन्यासे वा गृहे पथि । श्राद्धं कुर्व्वीत तेषां वै वर्जयित्वा चतुर्दशीमिति" तत् प्रायश्चित्ताद्यर्थविहितजलाग्न्यादिमरणयुक्तप्राणिविषयं । ये हि पापमृत्यवस्तेषामेव चतुर्दश्यां श्राद्धं कर्त्तव्यं । वृक्षारोहणेत्यादौ प्रचेतोवचने पापमृत्युप्रायपाठात् । अतएव प्रमीते पत्यौ विहिताग्निप्रवेशविधिनानुमरणकृतां योषितामपि चतुर्दशीश्राद्धं न कर्त्तव्यं । तदेवमविहितैर्ज्वलनादिभिर्मृतानां मनुब्रह्मपुराणवचनप्रामाण्यात् संग्रामप्रायोपवेशनमृतानाञ्च कृष्णचतुर्दशीश्राद्धमिति सिद्धं । अथैतत्सपिण्डीकरणादूर्द्ध्वमप्येकोद्दिष्टमेव कर्त्तव्यम् ।

यदाह गार्ग्यः ।

चतुर्दश्यान्तु यच्छ्राद्धं सपिण्डीकरणात्परं ।
एकोद्दिष्टविधानेन तत्कार्य्यं शस्त्रघातिन इति ॥

मनुः ।

एकपिण्डीकृतानान्तु पृथक्त्वं नोपपद्यते ।
सपिण्डीकरणादूर्द्ध्वं मृते कृष्णचतुर्दशीमिति ॥

भविष्यत्पुराणे ।

समत्वमागतस्यापि पितुः शस्त्रहतस्य तु ।
एकोद्दिष्टं सुतैः कार्य्यं चतुर्द्दश्यां महालये ॥

प्रेतत्वपरित्यागेन पितृत्वं प्राप्तैः पितामहादिभिः सह सपिण्डीकरणात् प्रेतत्वपरित्यागेन पितृत्वप्राप्त्या साम्यमागतस्यापीत्यर्थः । शस्त्रहतस्य पितुर्महालये चतुर्द्दश्यामेकोद्दिष्टश्राद्धे कृतेऽपि दिनान्तरे पार्व्वणं श्राद्धं कार्य्यं । एकोद्दिष्टश्राद्धेन पितामहादितृप्त्यसिद्धेः । नन्वेवं मृताहेप्येकोद्दिष्टश्राद्धे कृते पार्व्वणश्राद्धमपि पितामहादितृप्तिसिद्ध्यर्थं कर्त्तव्यं स्यात् । नैवं । पितुर्मृताहे पितामहादेस्तर्पणीयत्वास्मरणात्तत्तृप्त्यर्थं श्राद्धस्याननुष्ठेयत्वात्[१] । महालये तु । काङ्क्षन्ति पुत्रपौत्रेभ्यः पायसं मधुसंयुतं । तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु । मध्वाज्यतिलमिश्रेणेति पितामहादेरपि तर्पणीयत्वस्मरणात्तत्तृप्तये दिनान्तरे पार्व्वणश्राद्धं कार्य्यमिति । यस्य तु पितामहोऽपि शस्त्रादिना हतस्तस्य महालये पितामहश्राद्धमपि चतुर्द्दश्यामेकोद्दिष्टरूपं कार्य्यं ।

तथा च स्मृत्यन्तरे ।

एकस्मिन् द्वयोर्व्वैकोद्दिष्टविधिरिति । एकस्मिन् पितरि पितामहे वा शस्त्रादिना हते पित्रादित्रयमध्ये द्वयोर्व्वा शस्त्रादिना हतयोश्चतुर्द्दश्यामेकोद्दिष्टविधिना प्रत्येकं श्राद्धं कार्य्यमित्यर्थः । द्वयोरेकोद्दिष्टविधानेन प्रत्येकं श्राद्धे कृतेऽपि प्रपितामहतृप्तिसिद्ध्यर्थं दिनान्तरे पार्व्वणश्राद्धं कार्य्यं । पित्रादिषु त्रिष्वपि शस्त्रादिहतेषु नैकोद्दिष्टविधिरिति गम्यते ।

---

(१) श्राद्धस्यानुक्तत्वादिति ग० ।

अत्र केचिदाहुः। पृथगेकोद्दिष्टानि कार्य्याणीति।

अन्ये त्वाहुः। एकस्मिन् द्वयोर्वेत्यभिधानात् त्रिषु पितृ-पितामह-प्रपितामहेषु शस्त्रादिना हतेषु नैकोद्दिष्टविधिरिति। तेन त्रिषु शस्त्रादिहतेषु चतुर्दश्यां पार्व्वणविधिरेव। युक्तञ्चैतत्। सपिण्डीकृतानां शस्त्रादिहतानां त्रयाणामपि चतुर्दशीरूपविहितकालसम्भवे सत्यशस्त्रहतापाप्तिकृतकालासम्भवनिबन्धनस्यैकोद्दिष्टविधेरनवतारात्। अनेनैवाभिप्रायेणापरार्केणोक्तं। "तत्र चैकस्य शस्त्रहतत्वे एकोद्दिष्टविधानं, न तु त्रयाणां तथात्वे तत्र तु पार्व्वणमेव" इति। त्रयाणां तथात्वे नैकोद्दिष्टविधानं, किन्तु तत्र पार्व्वणमेवेति तस्यार्थः। तदयुक्तं। एकस्मिन् द्वयोर्व्वेत्येतस्योपलक्षणत्वात्। एकोद्दिष्टविधेश्च शस्त्रादिहतत्वनिमित्तत्वात् न कालासम्भवः, निबन्धनकालासम्भवस्याश्रुतत्वात्। एकोद्दिष्टविधेस्तु तन्निबन्धनत्वे कल्पनामात्रमूलत्वापत्तेः। अतएव देवस्वामिनाभिहितं। त्रिष्वपि शस्त्रादिहतेषु पृथगेकोद्दिष्टत्रयमेव कार्य्यं, न तु पार्व्वणं, आहत्यवचनाभावादिति। अत्र शस्त्रादिहतानां चतुर्द्दश्यामेकोद्दिष्टमिति वाक्यार्थावगमात् मृताहादौ पार्व्वणमेव कर्त्तव्यं। ये तु चतुर्द्दश्यामेव शस्त्रादिभिर्मृतास्तेषां मृताहे किं पार्व्वणमेकोद्दिष्टं वेति संशयेऽभिधीयते। चतुर्द्दशीनिमित्तकस्य मृताहनिमित्तकस्य च श्राद्धस्य कालसमवायप्रकरणे वक्ष्यमाणन्यायेन भेदेऽपि युगपदनेकनिमित्तोपनिपाते एकेनैव नैमित्तिकेन कुतपादिकालावरोधे द्वितीयस्यानवकाशे देश-काल-कर्त्तृ-देवतैक्ये विशेषाग्रहणात्तन्त्रेण नैमित्तिकानुष्ठाने सति स्वकुलवृद्धपरम्परानुसारात् मृताहेऽपि यैरेकोद्दिष्टपक्षपरिग्रहः कृतस्तेषां मृताहनिमित्तकमपि चतुर्द्दश्यामे-

कोद्दिष्टमेव । यैस्तु पार्व्वणपक्षपरिग्रहः कृतः स तैरुदितानुदितहोमवत् यावज्जीवं परिगृहीत एवेति चतुर्द्दश्यामपि न तैरसौ परित्याज्यः। यस्तु चतुर्द्दश्यां पार्व्वणत्वनिषेधः श्राद्धस्य, स चतुर्दशीनिमित्तकस्य, न मृताहनिमित्तकस्यापि । ननु चतुर्दश्यां न पार्व्वणमित्यत्र चतुर्दशीनिमित्तकं न चतुर्दश्यामिति विशेषणेऽध्याहारवाक्यभेदौ स्यातां। मैवं। प्रकृतत्वादिना विशेषत्वलाभस्योपन्यस्तदोषानास्पदत्वात् । यच्च नागरखण्डे चतुर्दश्यां क्रियमाणस्य पार्व्वणस्य वैफल्यमुक्तं तदपि चतुर्दशीनिमित्तकस्यैव, न मृताहनिमित्तकस्येति ।

अथ चतुर्दशीनिमित्तमेकोद्दिष्टं मृताहनिमित्तकञ्च पार्व्वणमिति श्राद्धद्वयं कुर्य्यादेकमेव वा अङ्गवैधर्म्यात् गृह्यमाणविशेषत्वेन तन्त्रानुष्ठानासम्भवात् संशयः । तत्र समानेऽहनि नैकः श्राद्धद्वयं कुर्य्यादित्यस्य निषेधस्य भिन्ननिमित्तकश्राद्धगोचरत्वाभावात् श्राद्धद्वयं कुर्य्यात् । मैवं। देवतैक्यात् प्रधानद्वयस्य सहानुष्ठाने भूयसां श्राद्धधर्म्माणामनुग्रहाय पार्व्वणधर्म्मैरेकोद्दिष्टधर्म्मबाधे पार्व्वणेन नैमित्तिकस्य सिद्धौ न भेदेन श्राद्धद्वयानुष्ठानमिति । ननु काम्यमपि चतुर्दशीश्राद्धमस्ति कामप्रवणप्रवृत्तित्वाच्च नराणां कामप्रवृत्तेरुत्कटत्वाच्चतुर्दशीनिमित्तके श्राद्धेऽनुष्ठेये सत्येकोद्दिष्टधर्म्मा एव प्राप्नुवन्ति । भवेदेवं यदि भूयसामनुग्रहोऽत्र विशेषो नावगम्येत । अस्तु वास्मान्तियौ निमित्तभेदे श्राद्धद्वयमिति, महालयपक्षे च यथाकथञ्चिच्चतुर्दश्यां श्राद्धासम्भवे तत्पक्षमध्ये कस्मिंश्चिदपि दिने कर्त्तव्यं। प्रशस्ततरमुख्यकालासम्भवेऽपि तत्पक्षकर्त्तव्यस्य श्राद्धस्यावश्यकत्वात् । दिनान्तरे च शस्त्रहतानामपि पार्व्वणमेव, चतुर्दश्यामेवैकोद्दिष्टविधानात् । चतुर्दश्यां

शस्त्रादिहतानामेकोद्दिष्टमेव कर्त्तव्यमित्यत्र कारणमुक्तं नागरखण्डे ।

आनर्त्त उवाच ।

कस्माच्छस्त्रहतानाञ्च प्रोक्ता श्राद्धे चतुर्दशी ।
एकोद्दिष्टं कुतः श्राद्धं कारणं प्रब्रवीहि मे ॥

भर्तृयज्ञ उवाच ।

बृहत्कल्पे पुरा राजन्(१) हिरण्याक्षो महासुरः ।
बभूव बलवान् शूरः सर्व्वदेवभयङ्करः ॥
ब्रह्मा प्रतोषितस्तेन विधाय विविधन्तपः ।
कृष्णपक्षे चतुर्दश्यां नभस्ये मासि संस्थिते ॥

ब्रह्मोवाच ।

परितुष्टोऽस्मि ते वत्स प्रार्थयस्व यथेप्सितं ।
अदेयमपि दास्यामि दुर्लभं यत्सुरासुरैः ॥

हिरण्याक्ष उवाच ।

भूताः प्रेताः पिशाचाश्च राक्षसा दैत्यदानवाः ।
बुभुक्षिताः प्रधावन्ति मां नित्यं पद्मसम्भव ॥
पितृपक्षे कृते श्राद्धे कन्यासंस्थे दिवाकरे ।
एतस्मिन्नहनि प्रायस्तृप्तिः स्याद्वर्षसम्भवा ॥
तदेषामत्र दिवसे(२) तृप्त्युपायं कुरु प्रभो ।

ब्रह्मोवाच ।

---

(१) महाराज इति ग० ।
(२) तदेषामेकदिवसे इति ग० ।

यः कश्चिन्मानवः श्राद्धं स्वपितृभ्यः प्रदास्यति ।
पितृपक्षे चतुर्दश्यां नभस्ये मासि संस्थिते ।
प्रेतानां राक्षसानाञ्च भूतानां तद्भविष्यति ॥
एवमुक्त्वा ततो ब्रह्मा गतश्चादर्शनं नृप ।
हिरण्याक्षोऽपि संहृष्टः स्वीयमेव गृहं ययौ ॥
यच्च शस्त्रहतानाञ्च तस्मिन्नहनि दीयते ।
एकोद्दिष्टं नरैः श्राद्धं तत्ते वक्ष्यामि कारणं ॥
संख्ये शस्त्रहता ये च निर्व्विकल्पेन चेतसा ।
युध्यमाना न ते मर्त्ये जायन्ते मनुजाः पुनः ॥
पराङ्मुखा ये हन्यन्ते पलायनपरायणाः ।
ते भवन्ति नराः प्रेता एतदाह पितामहः ॥
सन्मुखा अपि ये दैन्यं हन्यमाना वदन्ति च ।
पश्चात्तापञ्च वा कुर्य्युः प्रहारैर्जर्जरीकृताः ॥
तेऽपि प्रेता भवन्तीह मनुः स्वायम्भुवोऽब्रवीत् ।
कदाचिच्चित्तचलनं पुरुषाणां संप्रजायते ॥
तेषामपि दिने तत्र देयं प्रेतत्वशङ्कया ।
अपमृत्युगतानाञ्च सर्व्वेषामेव देहिनां ॥
प्रेतत्वं जायते यस्मात्तस्मात्तेषां हि तद्दिनं ।
श्राद्धार्हं पार्थिवश्रेष्ठ विशेषेण प्रकीर्त्तितं ॥
एकोद्दिष्टं प्रकर्त्तव्यं तस्मात्तत्र दिने नरैः ।
सपिण्डीकरणादूर्द्ध्वं तत्ते वक्ष्यामि कारणं ॥
यदि प्रेतत्वमापन्नः कदाचित्तत्पिता भवेत् ।

तृप्त्यर्थं तस्य कर्त्तव्यं श्राद्धं तस्य दिने नृप ॥
पितामहाद्यास्तत्राह्नि श्राद्धं नार्हन्ति कुत्रचित् ।
अथ चेद्भ्रान्तितो दद्यात् ह्रियते राक्षसैस्तु तत् ॥
ब्रह्मणो वचनाद्राजन् भूतप्रेतैश्च दानवैः ।
तेनैकोद्दिष्टमेवात्र कर्त्तव्यं न तु पार्व्वणं ॥
पितृपक्षे चतुर्दश्यां कन्यासंस्थे दिवाकरे ।
एतस्मात् कारणाच्छ्राद्धं पार्व्वणं न विधीयते ।
तस्मिन्नहनि सम्प्राप्ते व्यर्थं श्राद्धं भवेद्यतः ॥

इति चतुर्दशीश्राद्धनिरूपणं ।

अथैतद्भाद्रपदापरपक्षश्राद्धं मलमासे न कर्त्तव्यमित्युच्यते ।
काठकगृह्ये ।

यस्मिन्मासे न संक्रान्तिः संक्रान्तिद्वयमेव च ।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेत् ॥

वार्हस्पत्ये ज्योतिःशास्त्रे ।

यस्मिन् मासे न संक्रान्तिः संक्रान्तिद्वयमेव च ।
संसर्पांहस्पतीमासावधिमासश्च निन्दितः ॥

नन्दिपुराणे ।

अमावास्यामहोरात्रे यदा सङ्क्रमते रविः ।
स तु मासः पवित्रः स्याद्व्यतीते ह्यधिको भवेत् ॥

आह भृगुः ।

एकराशिस्थिते सूर्य्ये यदा दर्शद्वयम्भवेत् ।

हव्यकव्यक्रियाहन्ता तदा ज्ञेयोऽधिमासक इति ॥

पैठीनसिरपि ।

श्रौतस्मार्त्तक्रियाः सर्व्वा द्वादशे मासि कीर्त्तिताः ।
त्रयोदशे तु सर्व्वास्ता निष्फला इति संज्ञिताः ।
तस्मात् त्रयोदशे मासि कुर्य्यात् ता न कथञ्चनेति ॥

उक्तं सुमन्तुना ।

न कुर्य्यादधिके मासि कर्म्मी कर्म्म कदाचन ।
मलं वदन्ति कालस्य मासं कालविदोऽधिकमिति ॥

गृह्यपरिशिष्टेऽपि ।

मलिम्लुचस्तु मासो वै मलिनः पापसम्भवः ।
गर्हितः पितृदेवेभ्यः सर्व्वकर्म्मसु सन्त्यजेत् ॥

शातातपः ।

वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋत्ययातुधानाद्यैः समाक्रान्तो विनाशकः ॥
मलिम्लुचः समाख्यातः सूर्य्यसंक्रान्तिवर्जितः ।
मलिम्लुच इति ख्यातो गर्हितः सर्व्वकर्म्मसु ॥

सत्यव्रतः ।

मलिम्लुचस्तु यो मासः स मासः पापसंज्ञितः ॥

न चैषां वचनानां पितृकार्य्यव्यतिरिक्तविषयत्वं मन्तव्यं । हव्यकव्यक्रियाहन्तेति गर्हितः पितृदेवेभ्य इति च पितृकार्य्यस्यापि निषेधात् । यत्तु ज्योतिःपराशरेणोक्तं ।

उपाकर्म्म तथोत्सर्गं प्रवासाद्युत्सवाष्टकाः ।

मासवृद्धौ पराः कार्य्या वर्जयित्वा तु पैतृकमिति ॥

तत् प्रसवनिमित्तकपैतृकमात्रविषयं ।

उक्तं हि मत्स्यपुराणे ।

चन्द्रसूर्य्यग्रहे चैव मरणे पुत्रजन्मनि ।

मलमासेऽपि देयं स्याच्छ्राद्धमक्षयकारकं ॥

अष्टकागतस्य तु पैतृकस्य नात्र प्रतिप्रसवः। तत्र साक्षान्निषेधस्य दर्शयिष्यमाणत्वात्। नन्वावश्यकत्वादपरपक्षश्राद्धस्य मलमासेऽपि कर्त्तव्यता न विरुध्यते।

उक्तं हि गृह्यपरिशिष्टे ।

मलं वदन्ति कालस्य मासं कालविदोऽधिकं ।

नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेरिति ॥

नैतदेवं। अस्य वचनस्यानन्यगतिकनित्यविषयत्वात् ।

तथा च स्मृतिः ।

अनन्यगतिकं नित्यं कुर्य्यान्नैमित्तिकं तथेति ॥

यस्य नित्यस्य मुख्यकालातिक्रमे जघन्यस्य कालान्तरस्यानभ्यनुज्ञानादत्यन्तलोपः, प्रायश्चित्तञ्च प्रसज्यते तत्कर्मानन्यगतिः। तत् मलमासेऽपि कुर्य्यात् । भाद्रपदापरपक्षश्राद्धस्य उत्तरकालाभ्यनुज्ञादर्शनान्नानन्यगतिकत्वं। अतो मलमासे न कर्त्तव्यं। अतएवास्य मलमासे स्पष्टो निषेधो दृश्यते।

तत्र तावत्काठकगृह्यपरिशिष्टे ।

तथा मलेऽनन्यगतिं नित्यां नैमित्तिकीं क्रियां ।

सोमयागादिकर्म्माणि नित्यान्यपि मलिम्लुचे ॥

पुष्टीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि ।
महालयाष्टकाश्राद्धोपाकर्म्मोत्सर्गकर्म्म यत् ।
स्पष्टं मासविशेषाख्याविहितं वर्जयेन्मले ॥

महालयो भाद्रपदापरपक्षः ।

भृगुस्मृतावपि ।

वृद्धिश्राद्धं तथा सोममन्याधेयं महालयं ।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते ॥

ज्योतिःपितामहोऽपि ।

मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म्म तुलास्थे कर्तुरक्षयमिति ॥

देवलः ।

अर्के तु तस्य कन्यास्थे श्राद्धपक्षः प्रकीर्त्तितः ।
सिनीवालीमतिक्रम्य यदा कन्यां व्रजेद्रविः ।
तदा कालस्य वृद्धत्वादतीतैव पितृक्रियेति ॥

तस्मान्मलमासान्तर्गते भाद्रपदापरपक्षे श्राद्धं न कर्त्तव्यं ।

यत्तु ज्योतिःसिद्धान्ते ।

घटकन्यागते सूर्य्ये वृश्चिके वापि धन्वनि ।
मकरे वाथ कुम्भे वा नाधिमासो विधीयत इति ॥

तत् संवत्सरमध्ये मलमासद्वये सति वेदितव्यं ।

तथा च ब्रह्मसिद्धान्ते ।

मासद्वयेऽब्दमध्ये तु संक्रान्तिर्न यदा भवेत् ।
प्राकृतस्तत्र पूर्व्वः स्यादधिमासस्तथोत्तरः ॥

अत्र सिंहसङ्क्रान्तिमारभ्य मीनसङ्क्रमणावधिके काले यो मासः पूर्व्वः स प्राकृत एव, तत् पुनर्वैकृतो मलमासो भवतीत्यर्थः । "चैत्रादर्व्वाङ्नाधिमासः परतस्त्वधिको भवेत्" इत्यस्यापि ब्रह्मसिद्धान्तवचनस्यायमेवार्थो व्याख्येयः । तस्मात् मलमासान्तर्गते महालयापरपक्षे श्राद्धं न कर्त्तव्यमिति स्थितं । ननु किं तदा लुप्यत एव तत्, कालान्तरे वा क्रियमाणमपुण्यकालं स्यात् । नहि । यतस्तदुत्तरकाले कर्त्तव्यमिति । अत आह पराशरः ।

रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।
तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत् ॥

तथा ।

पक्षद्वयेऽर्कसङ्क्रान्तिर्यदा न स्यात् सितासिते ।
तदा तन्मासिकं कार्य्यमुत्तरे मासि कारयेत् ॥
एवं षष्टिदिनोमासस्तदर्द्धञ्च मलिम्लुचं ।
त्यक्त्वा तदुत्तरे(१) कुर्यात् पितृदेवादिकाः क्रियाः ।

प्रजापतिः ।

उपाकर्म्म च हव्यञ्च कव्यं पर्व्वोत्सवं तथा ।
उत्तरे नियतं कुर्य्यात् पूर्वे तन्निष्फलं भवेत् ॥

ज्योतिःशास्त्रेऽपि ।

षष्ट्या तु दिवसैर्मासः कथितो वादरायणैः ।
पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते ॥
अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्जितं ।

---

(१) तत्कालादुत्तरे इति ग० ।

मलिम्लुचः स विज्ञेय उत्तरस्तूत्तमाभिधः ॥

अथ मलमासे श्राद्धकर्मणां प्रतिप्रसवाः ।

आह यमः ।

गर्भे वार्द्धुषिके कृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासो विधीयते ॥
तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ।
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ॥
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ।
चन्द्रसूर्य्यग्रहे स्नानं श्राद्ध-दान-जपादिकं ।
कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥

नारदीयपुराणे ।

नित्यनैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैव च ॥

काठकपरिशिष्टेऽपि ।

प्रेतसंस्कारमारभ्य श्राद्धपिण्डोदकक्रियाः ।
सपिण्डीकरणान्तास्तु यथाकालमुपस्थिताः ॥
यवव्रीहितिलैर्होमो जातकर्मादिकाः क्रियाः ।
मघात्रयोदशीश्राद्धं प्रत्युपस्थितहेतुकं ।
अनन्यगतिकत्वेन कर्त्तव्यं स्यान्मलिम्लुचे ॥

सौरपुराणे ।

एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्य्यं मलमासेऽपि कालाधिक्येऽपि धर्म्मतः ॥

व्यासः ।  जातकर्म्मणि यच्छ्राद्धं दर्शश्राद्धं तथैव च ।

मलमासेऽपि कर्त्तव्यं व्यासस्य वचनं यथा ॥

शातातपः ।

प्रतिसंवत्सरे श्राद्धे नाधिमासं विवर्जयेत् ।

मलमासेऽपि कर्त्तव्यं श्राद्धं यत् प्रतिवत्सरं ॥

एतदाद्यसांवत्सरिकविषयं । मलमासे सांवत्सरिकं श्राद्धं कृत्वा तदुत्तरमासे पुनस्तदेवावर्त्तनीयमित्येवंविधमतानुसारि चेदं वचनमत्र वचनानि ।

वृद्धवसिष्ठः ।

असङ्क्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।

तथैव मासिकं श्राद्धं सपिण्डीकरणन्तथा ॥

पैठीनसिः ।

मलमासमृतानान्तु श्राद्धं यत् प्रतिवत्सरं ।

मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन ॥

यमः ।

आब्दिकं प्रथमं यत्स्यात्तत्कुर्व्वीत मलिम्लुचे ।

त्रयोदशे तु सम्प्राप्ते कुर्व्वीत पुनराब्दिकं ॥

लघुहारीतः ।

प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया द्विजैः ।

क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्का तु वत्सरं ॥

वसिष्ठः ।

आब्दिकाहनि सम्प्राप्ते अधिमासो भवेद्यदि ।

श्राद्धद्वयं प्रकुर्व्वीत एवं कुर्व्वन्न मुह्यति ॥

तदेवं सपिण्डीकरणान्तानि प्रेतश्राद्धानि पुत्रजन्मनिमित्तकमुपरागनिमित्तकमाद्यं सांवत्सरिकमनाद्यमपि मलमासमृतसांवत्सरिकं गजच्छायाश्राद्धममावास्याश्राद्धं प्रत्यहमनुष्ठीयमानञ्च नित्यश्राद्धं वर्जयित्वान्यच्छ्राद्धं मलमासे नानुष्ठेयमिति स्थितं।

इति मलमासनिरूपणपूर्व्वको मलमासेऽपरपक्षादिश्राद्धापवादः। पर्य्यवसितञ्चापरपक्षनिरूपणं ।

अथायनादयः श्राद्धकालाः ।

तत्र यद्यपि याज्ञवल्क्यवचने द्रव्यब्राह्मणसम्पत्तिभ्यां व्यवधाय अयनविषुवत्सङ्क्रान्तयो निरूपितास्तथाप्यत्र सङ्क्रान्तित्वसाधर्म्म्यादव्यवधानेन निरूप्यन्ते।

तत्र विष्णुपुराणे ।

उपप्लवे चन्द्रमसो रवेश्च
त्रिष्वष्टकास्वप्ययनद्वये च(१) ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत् पितरो वदन्ति ।

अत्र किल पानीयमपीतिवचनादावश्यकता श्राद्धद्वयस्योच्यत इति मन्यन्ते ।

---

(१) त्रिष्विति आर्षप्रयोगः।

यत्तु । आदित्यसङ्क्रमस्तोभे अयने विषुवद्वयं।
व्यतीपातोऽथ जन्मर्क्षं चन्द्रसूर्य्यग्रहस्तथा ।
एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः ॥

इति विष्णुवचनेन ग्रहणादेः काम्यश्राद्धकालत्वमुक्तं, तन्न नित्यत्वनिराकरणक्षमं, वाक्यद्वयबलेनाग्निहोत्रादिवन्नित्यत्वकाम्यत्वयोरविरोधात् ।

आह शङ्खः ।

हस्तिच्छायासु यद्दत्तं यद्दत्तं राहुदर्शने ।
विषुवत्ययने चैव सर्व्वमानन्त्यमुच्यते ॥

अत्रायनद्वयं विषुवत्सूर्य्यसङ्क्रम इत्यस्मिन् याज्ञवल्क्यवचने च अयनयोर्विषुवतोश्च सङ्क्रान्तिपदेनैव संग्रहसिद्धावपि द्वयोरपि यत् पृथगभिधानं तत् सङ्क्रान्त्यन्तरेभ्यो विषुवः, विषुवादयनमिति यथापूर्व्वं प्राशस्त्यातिशयप्रतिपादनार्थमिति मन्तव्यं ।

तथा च विष्णुधर्म्मोत्तरे ।

श्राद्धं सङ्क्रमणे भानोः प्रशस्तं पृथिवीपते ।
विषुवद्वितयं तत्राप्ययने द्वे विशेषतः ॥

विषुवतोरयनयोश्च लक्षणं ।

नागरखण्डे ।

यदा स्यान्मेषगो भानुस्तुलाञ्चाथ यदा व्रजेत्(१) ।
तदा स्याद्विषुवाख्यस्तु कालश्चाक्षयकारकः ॥
मकरे कर्कटे चैव यदा भानुर्व्रजेन्नृप ।

---

(१) तुलायां वा यदा भवेदिति ग० ।

तदायनाभिधानस्य विषुवस्य विशिष्यते ॥

अस्मिंश्च काले पिण्डनिर्व्वपणं विनैव श्राद्धं कर्त्तव्यं।

यदाह पुलस्त्यः।

अयनद्वितये श्राद्धं विषुवद्वितये तथा।

युगादिषु च सर्व्वासु पिण्डनिर्व्वपणादृते ॥

ब्रह्मपुराणे सर्व्वास्वपि सङ्क्रान्तिषु पिण्डनिर्व्वपणं विना श्राद्धमुक्तं।

अयनद्वितये श्राद्धं विषुवद्वितये तथा।

सङ्क्रान्तिषु च सर्व्वासु पिण्डनिर्व्वणादृत इति ॥

एतेषु कालेषु पिण्डनिर्व्वपणं विना श्राद्धं कर्त्तव्यं। एतत्कालनिमित्तक एव श्राद्धे पिण्डनिर्व्वपणप्रतिषेधोयं, न मृताहादिनिमित्तके प्रसङ्गादयनादिषु पतिते। यस्मादयनद्वितये श्राद्धमित्यनेनायनादिभिर्नित्यान्वितं श्राद्धमवगम्यते। तन्निमित्तकमेव च तैर्नित्यान्वितं नान्यत्। नित्यान्वयस्यानित्यान्वयाद्बलीयान् भवति।

किञ्च।

अत्र हि विधीयमानस्य श्राद्धस्य पिण्डनिर्व्वपणादृत इति विशेषणं न प्रसङ्गात्तत्कालपतितं मृताहादिश्राद्धमाश्रयितुमर्हति। यद्येवंविधं श्राद्धमेतेषु कालेषु विधीयते तदा भावार्थविधिरित्येष गुणो भवति।

अथ सङ्क्रान्तितद्भेदतत्कालपरिमाणाद्युच्यते।

नागरखण्डे।

रवेः संक्रमणं राशौ सङ्क्रान्तिरिति कथ्यते।

स्नान-दान-जप-श्राद्ध-होमादिषु महाफलं ॥

राशौ मेषादिसंज्ञे ज्योतिःशास्त्रप्रसिद्धे।

देवीपुराणे ।

समायनं चतुर्मासपक्षाहादि क्रमेण तु ।
सूक्ष्म-स्थूलविभागेन देवी सर्व्वगता विभो ॥
द्वादशैव समाख्याताः समा सङ्क्रान्तिकल्पनाः ।
सप्तधा सा तु बोद्धव्या एकैका तु(१) यथा शृणु ॥
मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता प्रोक्ता सङ्क्रान्तिः सप्तधा नृप ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी यथा ।
क्षिप्रे ध्वाङ्क्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥
चरैर्महोदरी(२) ज्ञेया दारुणैश्च राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितैश्च सङ्क्रमे ॥
त्रिचतुःपञ्चसप्ताष्टनवद्वादश एव च ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकं ॥
अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः ।
एष स्थूलविभागस्तु मुक्तिकामस्य कीर्त्तितः ॥
परमार्थेन या संख्या कथयामि नृपोत्तम ।
स्वस्थे नरे सुखासीने यावत् स्पन्दति लोचनं ।
तस्य त्रिंशत्तमं भागं तत्परं परिकीर्त्तितं ॥
तत्पराच्छतभागस्तु त्रुटिरित्यभिधीयते ।
त्रुट्याः सहस्रभागार्द्धं तत्कालं रविसङ्क्रम इति ॥

---

(१) एकैकेवेति ख० ।
(२) चारैर्महोदरीति ख० ।

समायनेत्यादि। 'देवी' सङ्क्रान्तिरूपा, सा समायनादिभिः स्थूलैः सूक्ष्मैश्चावयवैः 'सर्व्वगता' सर्व्वव्यापिनी । संवत्सरादयः सङ्क्रान्त्यवयवाः। कथमित्याह द्वादशैवेत्यादि । द्वादशैव सङ्क्रान्तिकल्पनाः, 'समा' संवत्सरो भवति । अयमाशयः, द्वादशभिः सङ्क्रान्तिभिरेकः संवत्सरः। षड्भिः सङ्क्रान्तिभिरयनं । सङ्क्रान्तिद्वयेन ऋतुः । एकसङ्क्रान्त्यवच्छिन्नः कालो मासः । संक्रान्त्यर्द्धः पक्षः । सङ्क्रान्तेस्त्रिंशांशोऽहोरात्रं । आदिशब्देन यामार्द्ध-याममुहूर्त्तादयः । एवमयं सङ्क्रान्तिरूपस्तपनपरिस्पन्दः शक्त्यात्मिका देवीति। एकैकस्याः सङ्क्रान्तेर्ध्रुवादिनक्षत्रसंयोगे पुण्यकालपरिमाणार्थं मन्दादिसंज्ञामाह । मन्देत्यादि । 'ध्रुवाणि' रोहिण्युत्तरात्रयञ्चेति चत्वारि। मृदूनि चित्रानुराधामृगशिरोरेवतीति चत्वारि । 'क्षिप्राणि' अश्विनी पुष्यो हस्तोऽभिजिदिति चत्वारि। 'उग्राणि' पूर्व्वत्रयं भरणी मघेति पञ्च । 'चराणि' श्रवणा धनिष्ठा शततारका पुनर्व्वसुः स्वातीति पञ्च।'दारुणानि' मूलं ज्येष्ठार्द्राश्लेषेति चत्वारि। 'मिश्रे' विशाखा कृत्तिकेति द्वे। एकैका सप्तधेति निर्द्देशात् ध्रुवादीनि दिननक्षत्राणि विज्ञायन्ते, न सहानक्षत्राणि। तेषु न एकैकस्याः सप्तधात्वमुपपन्नं। पुण्यकालपरिमाणमाह ।

त्रिचतुःपञ्चेति। मन्दायां तिस्रो घटिकाः पुण्यकालः । मन्दाकिन्यां चतस्र । ध्वाङ्क्ष्यां पञ्च । घोरायां सप्त । महोदर्य्यां अष्टौ । राक्षस्यां नव । मिश्रायां द्वादशेति । तत्र कृते दानयज्ञतपःश्राद्धादिकर्म्मणि सङ्क्रान्तिकालनिमित्तकं पुण्यं पारमार्थिकमतिशयितमित्यर्थः । इतः किञ्चिदूनफलः सर्व्वसङ्क्रान्तिषु पञ्चदशघटिकात्मकः पुण्यकालोस्तीत्याह अतीतानागत इत्यादि ।'भोगः' व्याप्तिः, 'अतीते' सङ्क्रमणात्

पूर्व्वस्मिन् । 'अनागते' परस्मिन् काले । सङ्क्रान्तिसमयात् पूर्व्वतः परतश्च पञ्चदश घटिकाः पुण्यकाल इत्यर्थः । अतीतानागतकाल-व्याप्तिश्च पूर्व्वोक्तेषु व्यादिश्यमानेष्वपि वेदितव्या । अत्र पुण्यकालस्य पूर्व्वभावित्वं पश्चाद्भावित्वञ्च वच्यमाणव्यवस्थयानुसर्त्तव्यं। एवं स्थूलं पुण्यकालमुक्त्वा प्रशस्ततमफलं सूक्ष्मकालमाह परमार्थेनेत्यादि। त्रुटि-सहस्रतमभागाद्धस्य दुर्लभत्वेऽपि तत्सन्निहितकालग्रहणार्थप्रतिपादनं । आह वसिष्ठः ।

सङ्क्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः(१) ।
तद्योगाचाप्यधश्चोर्द्धं त्रिंशन्नाड्यः पवित्रिताः ॥

अत्र त्रिंशन्नाड्यः पूर्व्वं पञ्चदश, पश्चात् पञ्चदशेत्येवंसङ्कलनया द्रष्टव्याः । एवं हि सति देवीपुराणेन सह संवादो भवति । ब्रह्मवैवर्त्ते ।

मेषादिराशिषु रविः क्रमाद्गच्छति सङ्क्रमात् ।
द्वादशैव भवन्त्येषां द्विज नामानि मे शृणु ॥

मेषादिराशिषु सूर्य्यगत्या तद्राशिसंज्ञका एव द्वादश सङ्क्रमाः स्युः । तेषामेव प्राशस्त्यतारतम्यभोगपौर्व्वापर्य्याद्युपदेशार्थं विष्णुपदादिसंज्ञा-चतुष्टयमाह ।

एकं विष्णुपदं नाम षड़शीतिमुखं तथा ।
विषुवच्च तृतीयञ्च अयने दक्षिणोत्तरे ॥
कुम्भालिगोहरिषु विष्णुपदं वदन्ति

---

(१) पिशिताशनैरिति ग० ।

स्त्रीचापमीनमिथुने षडशीतिवक्त्रं ।
अर्कस्य यानमयनं शशिधाम्नि याम्यं
सौम्यं झषे तु विषुवं त्वजतौलिनोः स्यात् ॥

'कुम्भः' प्रसिद्धः । 'अलिः' वृश्चिकः । 'गौः' वृषः । 'हरिः' सिंहः । एषु राशिषु रवेरयनं सङ्क्रमणं 'विष्णुपदं' विष्णुपदसंज्ञं भवति । 'स्त्री' कन्या । 'चापं' धनुः । 'मीनमिथुनौ' प्रसिद्धौ । एतेषु षडशीतिमुखं । 'शशिधाम्नि' कर्कटके, याम्यायनं । 'झषे' मकरे । सौम्यायनं, 'अजः' मेषः । 'तौली' तुलाधारः । तयोर्विषुवसञ्ज्ञं ।

वशिष्ठोऽपि ।

अयने द्वे विषुवे चैव चतस्रः षड़शीतयः ।
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादश स्मृताः ॥
झषकर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुला-मेषौ तयोर्मध्ये ततोऽपराः ॥
वृष-वृश्चिक-कुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलं ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षड़शीतिमुखा प्रोक्ता षड़शीतिगुणा फले ॥

लौगाक्षिः ।

यस्यायने विष्णुपदे तथादौ
दानाद्यनन्तं विषुवे तु मध्ये ।
वदन्त्यतीते षड़शीतिवक्त्रे-
महर्षयः खल्वयने च सौम्ये ॥

बौधायनः । भविष्यत्ययने विष्णोर्व्वर्त्तमाने विषूवति ।
षडशीतिमुखेऽतीते व्यतीते चोत्तरायणे ॥

देवीपुराणे ।

षडशीतिमुखेऽतीते मध्ये(१) च विषुवद्दये ।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥

वृद्धवशिष्ठः ।

अतीतानागते पुण्ये द्वे उदग्दक्षिणायणे ।
तूपरागे तु तत्कालं व्यतीते चोत्तरायणे ॥

वायुपुराणे ।

मध्ये दानं विषुवति दक्षिणे वैष्णवे पुरः ।
षडशीतिमुखेऽतीते व्यतीते चोत्तरायणे ॥

अत्र सर्वेषु वचनेष्वतीते चोत्तरायण इत्यत्र चकारादनागते चेति स्मृतिनिबन्धकारा मन्यन्ते । उक्तस्य पूर्व्वोत्तरादिपुण्यकालस्य परिमाणमाह ।

बौधायनः ।

नाड्यो विषुवति प्रोक्ता दश पूर्व्वा दशापराः ।
पुण्यः कालोऽर्कसङ्क्रान्तौ स्नानदानजपादिषु ॥

वशिष्ठः । त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः ।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश ॥
षड़शीत्यां व्यतीतायां षष्टिरुक्तास्तु नाड़िकाः ।
पुण्यास्तु विष्णुपद्याश्च प्राक्पश्चादपि षोड़श ॥

(१) वृते इति ग० ।

ब्रह्मवैवर्त्ते। विषुवत्षण्मुहूर्त्तं स्यात् षडशीतिमुखे त्रयं।
तथा विष्णुपदे त्रीणि पुण्यानि कवयो विदुः ॥
त्रिंशत् कर्कटके नाड्यो मकरे तु दशाधिकाः ।
भविष्यत्ययने पुण्या अतीते चोत्तरायणे ॥

वृहस्पतिः ।

भविष्यत्ययने पुण्यास्त्रिंशदेव तु दक्षिणे ।
अतीत उत्तरे नाड्य इति प्राहुः पुराविद इति ॥

गौतमः ।

अर्व्वाक् षोड़शनाड्यस्तु परतः षोडशैव तु ।
ता एव दक्षिणे पूर्व्वमतीते चोत्तरायणे ॥

मरीचिः ।

नाड्यः षोडशपूर्व्वेण सङ्क्रान्तेरपरेण वा ।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः ॥

शातातपः ।

संक्रान्तेः पुण्यकालस्तु षोड़शोभयतः कलाः ।
चन्द्रसूर्य्योपरागे तु यावद्दर्शनगोचराः ॥

अत्र केषुचिद्वचनेषु पुण्यकालपरिमाणमधिकमुक्तं। केषुचिन्न्यूनमुक्तं। तत्र यन्न्यूनं तत् फलातिशयप्रतिपादनार्थं । यत्त्वधिकं तत् पुण्यकालमात्रप्रतिपादनार्थं। न पुनर्न्यूनमधिकनिराकरणार्थमधिकं वा न्यूननिराकरणार्थमिति मन्तव्यं ।

अतएवाह शातातपः ।

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमा मताः ।

एवञ्च सति सर्व्वेषां पुण्यकालावधिवचनानां अविरोधे सति विरोधपरिहारार्थं वचनार्जवभङ्गो न कर्त्तव्यो भवति ।

अत्राह वसिष्ठः ।

अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितं ।
रात्रौ संक्रमणे पुण्यं दिनार्द्धं(१) स्नानदानयोरिति ॥

अनेन संक्रमणसन्निहितोऽपि रात्रिरूपः पुण्यकालो न भवति । किन्तु दिनार्द्धरूप एवेत्युक्तं भवति । सोऽपि यः संक्रमणसन्निहितः स एव ग्राह्यः ।

तदाह गोभिलः ।

रात्रौ संक्रमणे भानोर्दिवा कुर्य्यात्तु तत्क्रियां ।
पूर्व्वस्मिन् परतो वापि प्रत्यासत्तेश्च तत्फलमिति ॥

प्रत्यासत्तेरित्यनेनेदमुक्तं, यदि पूर्व्वरात्रे संक्रमणं भवति, तदा पूर्व्वस्य दिनस्योत्तरार्द्धं पुण्यं। यद्यपररात्रे तदा अपरस्य दिनस्य पूर्व्वार्द्धमिति । यदि मध्यरात्रे तदा विशेषग्रहणाभावात् पूर्व्वस्योत्तरार्द्धमुत्तरस्य च पूर्व्वार्द्धमित्येतद्द्वयमपि पुण्यार्हमिति ।

तदाह वसिष्ठः ।

अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्द्ध्वं संक्रमणे भानोरुदयात् प्रहरद्वयं ॥
पूर्णे चेदर्द्धरात्रे तु यदा संक्रमते रविः ।
तदा दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति ॥

मकरकर्कटविषये तु यज्ञपार्श्ववचनं ।

---

(१) भानोर्दिनार्द्धमिति ख० ।

आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने ॥

अयने दिन इति । दक्षिणोत्तरायणयोस्तु दिन एव संक्रमणे सति दिने पुण्यकालः । तेन रात्रावयनसंक्रमे रात्रावेव प्रशस्ततरः पुण्यकालः । बौधायनः ।

अस्तङ्गते यदा सूर्य्ये झषं याति दिवाकरः ।
प्रदोषे वार्द्धरात्रे वा तदा पुण्यं दिनान्तरं ॥
कार्मुकन्तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वार्द्धरात्रे वा तदा भोगः परेऽहनि ॥

स्कन्दपुराणे ।

धनुर्मीनावतिक्रम्य कन्याञ्च मिथुनं यदा ।
पूर्व्वापरविभागेन रात्रौ संक्रमते यदा ।
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदये च तथा पञ्च दैवे पित्र्ये च कर्म्मणि ॥

अत्र पुण्यतमत्वाभिधानाद्दिनार्द्धपक्षेण सहाविरोधः । निगमः । विष्णुपद्यां धनुर्म्मीननृयुक्कन्यासु वै यदा ।

परतः पूर्व्वतो वापि रात्रौ(१) संक्रमणं भवेत् ॥
पूर्व्वाह्णे पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्म्मणीति ॥

'नृयुक्' मिथुनराशिः । तिथिभेदनिबन्धनमपि संक्रान्तिभोगस्य पूर्व्वापरविभागमाह ।

(१) भानोरिति ग० ।

आदौ पुण्यं विजानीयात् यद्यभिन्ना तिथिर्भवेत् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि ।

अर्द्धरात्रादनन्तरमपि यदि पूर्व्वतिथिमध्ये संक्रमस्तदा पूर्व्वमेव दिनं पुण्यं। अपरतिथिसंक्रमे त्वपरमेवेति वचनार्थः । अथ रात्रौ निषिद्धस्य स्नानादेः संक्रान्तिविशेषप्रतिप्रसवाभिधानार्थं निषेधस्तावदुच्यते ।

भविष्यत्पुराणे ।

रात्रौ स्नानं न कुर्व्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्व्वीत स्नानं दानञ्च रात्रिषु ॥

विष्णुः ।

विवाह-व्रत-संक्रान्ति-प्रतिष्ठा-ऋतु-जन्मसु ।
तथोपरागपातादौ स्नाने दाने निशा शुभा ॥

'ऋतुः' गर्भाधानं । चन्द्रार्कदृष्टिसन्निपातसमयः पातः ।

गोभिलः ।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

'अत्ययः' बन्धुमरणं । अत्र संक्रान्तिशब्देन मकरकर्कटावेव गृह्यते, रात्रौ संक्रमणे दिनस्य पुण्यतां वदता वशिष्ठेन मुक्ता मकरकर्कटावित्यभिधानात् । अतो मकरकर्कटयोरेव रात्रौ स्नानादेः प्रतिप्रसव इति गम्यते । संक्रान्त्यन्तरेषु गोभिलादिवचनानुसारादस्त्येव रात्रौ स्नानादेर्निषेध इति । अत्र मन्यन्ते । मुक्ता मकरकर्कटावित्येष पूर्व्वदिनोभयग्रहणापवादो, न तु सर्व्वात्मना दिनापवादेन रात्रि-

ग्रहणोपदेशः। बौधायनादिवचनेषु रात्रौ मकरसंक्रमणे परदिनस्यैव पुण्याहत्वाभिधानात् दिनार्द्धग्रहणवचनानि तु केनचित् प्रकारेण रात्रौ संक्रमण-सन्निहित-षोड़शनाड़िकादिपरिमितकाले स्नानदानाद्यसम्भवे व्यवहितमपि दिनार्द्धं ग्राह्यमित्येवंपराणीति सर्व्वास्वपि संक्रान्तिषु रात्रौ स्नानदानादिप्रतिप्रसव इत्याहुः। अन्ये तु रविसंक्रमणे दिनं पुण्यं, ग्रहान्तरसंक्रमणे तु रात्रिरेव पुण्येत्याहुः। ग्रहान्तरसंक्रमण-समयस्यापि पुण्यतामाह जैमिनिः।

नक्षत्रराश्यो रविसंक्रमे स्यु-
र्वाक्परश्चापि रसेन्दुनाड्यः।
पुण्यास्तथेन्दोस्त्रिधरापलैर्यु-
गेकैव नाड़ी मुनिभिः शुभोक्ता॥
नाड्यस्ततस्तः सपलाः कुजस्य
बुधस्य तिस्रो मनवः पलानि।
सार्द्धास्ततस्तः पलसप्तयुक्ता
गुरोश्च शुक्रे सपलास्ततस्तः॥
दिग्नागनाड्यः पलसप्तयुक्ताः
शनैश्चरस्याभिहिताः सुपुण्याः।
आद्यन्तमध्ये जपदानहोमं
कुर्व्वन्नवाप्नोति नरेन्द्रधाम॥

नक्षत्रे राशौ वा सूर्य्यस्य संक्रमणे सति, पूर्व्वतः परतोऽपि रसेन्दु-नाड्यः षोड़शघटिकाः पुण्यकालः। इन्दोस्तु त्रिधरापलैर्युक् त्रयो-दशभिः पलैर्युक्ता एकैव घटिका। 'कुजस्य' भौमस्य तु एकपलयुक्ता-

स्रतस्रो घटिकाः । बुधस्य चतुर्दशपलयुक्तास्तिस्रः । 'गुरोः' वृहस्पतेः, सप्तत्रिंशत्पलयुक्तास्रतस्रः । शुक्रस्य पलाधिकास्रतस्रः । शनैश्चरस्य पलसप्तयुक्ताः द्विर्नागनाड्यः । 'नागाः' अष्टौ, द्विरावृत्ता नागा द्विर्नागाः । तदेतेषु रात्रित्यागपरिग्रहपक्षेषु चोदकमो ग्राह्यः ।

इति संक्रान्तिनिरूपणम् ।

अथ व्यतीपातः ।

तत्र प्रशंसादि याज्ञवल्क्यः ।

शतमिन्दुक्षये दानं(१) सहस्रन्तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥

वाराहपुराणे ।

दर्शे शतगुणं दानं तच्छतघ्नं दिनक्षये ।
तच्छतघ्नञ्च संक्रान्तौ शतघ्नं विषुवे ततः ॥
युगादौ तच्छतगुणमयने तच्छताहतं ।
सोमग्रहे तच्छतघ्नं रविग्रहे त्वसंक्षयं ।
व्यतीपाते त्वनन्तञ्च दानं वेदविदो विदुः ॥

'शतघ्नं' शतगुणमित्यर्थः । व्यतीपातोऽत्र विष्कम्भादिषु योगेषु स... ।

अ... गालवः ।

चन्द्रार्कयोर्नयनवीक्षणजातमूर्त्तिः
कालानलद्युतिनिभः पुरुषोऽतिरौद्रः ।

(१) पुण्यमिति ग० ।

अस्तोद्यतोऽनुनिपतंश्च[1] निरीक्ष्यमाणः
सङ्घातयेवमिति च व्यतिपातयोगः ॥

अस्य चोत्पत्ति-भ्रमण-पतनसमयेषु पतनानन्तरञ्च क्रियमाणं स्नानदानश्राद्धादिकं महाफलं भवति ।

तथाह याज्ञवल्क्यः ।

उत्पत्तौ लक्षगुणं, कोटिगुणं भ्रमणनाड़िकायान्तु ।
अर्बुदगुणितं पतने, जपदानाद्यक्षयं पतिते ॥

उत्पत्त्यादिमानञ्च ज्योतिःशास्त्रे ।

विंशतिर्द्वियुतोत्पत्तौ भ्रमणे चैकविंशतिः ।
पतने दशनाड्यस्तु पतिते सप्तनाडिकाः ॥

वृद्धमनुना तु प्रकारान्तरेण व्यतीपातो दर्शितः ।

श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

नागदैवतमश्लेषा । मस्तक इति श्रवणादिभिः प्रत्येकं सम्बध्यते केचित्तु मस्तकं मृगशिर इति व्याचक्षते । 'अमा' अमावास्या । सा यद्येतेषु नक्षत्रेष्वादित्यवारयुक्ता भवति तदा स एव योगो व्यतीपातसञ्ज्ञो भवति ।

शास्त्रान्तरे ।

पञ्चाननस्थौ गुरुभूमिपुत्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।

---

(१) अस्तोद्यतोनुविपतंश्चेति क० ।

पाशाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥
अस्मिन् हि गोभूमिहिरण्यवस्त्र-
दानेन सर्व्वं परिहाय पापं ।
सुरत्वमिन्द्रत्वमनामयत्वं
मर्त्याधिपत्यं लभते मनुष्यः ॥

'पञ्चाननः' सिंहः। 'गुरु-भूमिपुत्रौ' वृहस्पत्यङ्गारकौ । 'पाशा-भिधाना' द्वादशी । 'करभं' हस्तनक्षत्रं ।

आह भृगुः ।

क्रान्तिसाम्यसमयः समीरितः
सूर्य्यपर्व्वसदृशो मुनीश्वरैः ।
तत्र दत्तहुतजप्तपूजनं
यागकोटिगुणमाह[१] भार्गवः ॥

अयमर्थः । सूर्य्याचन्द्रमसोः क्रान्तिसाम्ये पुण्यकालद्वयं भवति । एको व्यतीपाताख्यः । अपरो वैधृत्याख्यः । तत्र क्रान्तिसाम्यलक्षणस्य व्यतीपातस्य गण्डोत्तरार्द्धादारभ्य क्रमात् सार्द्धेषु पञ्चयोगेषु सम्भ-वोऽस्ति। वैधृतिसंज्ञस्य तु शुक्लयोगादारभ्य क्रमात् सार्द्धेषु पञ्चयोगेषु सम्भवः। तत्पर्व्वकालसंख्या च दशघटिकाभ्यः समारभ्यैकषष्ट्यधिक-शतपर्य्यन्तं सम्भाव्यते ।

तथा च वेदाङ्गे ज्योतिषे ।

---

(१) लक्षकोटिगुणमाहेति ख० ।

गण्डोत्तरार्द्धाद्युतिपातसम्भवः
शूलाद्यादितो वैधृतिसंज्ञको भवेत् ।
सार्द्धेषु पञ्चसु परेषु तयोर्व्यते सः
एवं द्वयं तत् सुकृतैकसाधकं ॥

आह विष्णुः ।

वैधृतौ च व्यतीपाते दत्तमक्षयकृत् भवेत् ।

भरद्वाजः ।

व्यतीपाते वैधृते च दत्तस्यान्तो न विद्यते ।
व्यतीपाते विशेषेण स हि सूक्ष्मः प्रकीर्त्तितः ॥

स्थूलप्रकारेण प्रसिद्धस्तु सप्तविंशतितमो योगो वैधृत इति । अत्र च व्यतीपाते श्राद्धं कर्त्तव्यमित्याह पितामहः ।

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्व्वाणः प्रायश्चित्तीयते तु सः ॥

अत्र प्रायश्चित्तीयते इति वचनं श्राद्धस्यावश्यकतां गमयति ॥

इति व्यतीपातनिरूपणं ॥

## अथ गजच्छाया ।

स्कन्दपुराणे ।

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
तिथिर्वैश्रवणी या च गजच्छायेति सा स्मृता ॥

'इन्दुः' चन्द्रमाः । 'पितृदैवत्ये' नक्षत्रे मघायां । 'हंसः' सूर्य्यः । 'करः' हस्तः । 'तिथिर्वैश्रवणी' त्रयोदशी ।

नरसिंहपुराणे । हंसे हंसस्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैश्रवणी नाम सा छाया कुञ्जरस्य तु ॥

ब्रह्मपुराणे ।

योगो मघात्रयोदश्योः कुञ्जरच्छायसंज्ञकः ।
भवेन्मघायां संस्थे च शशिन्यर्के करस्थित इति ॥

अयमर्थः । सूर्य्ये हस्तस्थिते चन्द्राधिष्ठिताभिर्मघाभिस्त्रयोदश्या योगो गजच्छायसंज्ञकः । स च भाद्रपदापरपक्षे सम्भवति ।

विभाषासेनासुराच्छायेति छायाशब्दस्य नपुंसकत्वं ।

हंसे हंसस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

'हंसः' सूर्य्यः । हंसदेवतत्वात् हस्तनक्षत्रमपि हंसः । 'करान्विता' चन्द्रयुक्तहंसान्विता ।

सैंहिकेयो यदा सूर्य्यं ग्रसते पर्व्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेदिति ॥

'सैंहिकेयः' राहुः । 'पर्व्वसन्धिषु' अमावस्याप्रतिपदोः सन्धिषु । 'गजच्छाया', प्रसंगाद्दृशरूपापि गजच्छायोच्यते ।

मनुः ।

अपि नः स कुले भूयाद्यो नो दद्यात् त्रयोदशीं ।
पायसं मधुसर्पिर्भ्यां प्राक्छाये कुञ्जरस्य च ॥

प्राचीच्छाया यस्मिन् देशे स प्राक्छायो देशः तस्मिन् कुञ्जरः प्रसिद्धः ।

महाभारतेऽपि । अजेन सर्व्वलोहेन वर्षासु नियतव्रतः ।

हस्तिच्छायासु विधिवत् कर्णव्यजनवीजितः ।

श्राद्धं दद्यादिति शेषः ।

'सर्व्वलोहेन' लोहितसर्व्वाङ्गेन । कर्णव्यजनवीजित इत्यनेनैतद्वचनं प्रत्यक्षगजच्छायाविषयमित्यवगम्यते ।

मार्कण्डेयपुराणे ।

वनस्पतिगते सोमे छाया तु प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्पयेत् ॥

अमावास्यापराह्ण इत्यर्थः ।

वायुपुराणे ।

घृतेन भोजयेद् विप्रान् घृतं भूमौ समुत्सृजेत् ।
छायायां हस्तिनश्चैव दद्याच्छ्राद्धं न शोचति ॥

विष्णुधर्म्मोत्तरे पितृवाक्यं ।

गयायां दर्शने राहोः खड्गमांसेन योगिनं ।
भोजयेत् तु कुलेऽस्माकं छायायां कुञ्जरस्य च ॥
आकल्पकालिकी तृप्तिस्तेनास्माकं भविष्यति ।
दाता सर्व्वेषु लोकेषु कामचारी भविष्यति ॥
यदैतत्पञ्चकं न स्यादेकेनापि वयं तदा ।
तृप्तिं प्राप्स्यामो महतीं किं पुनः सर्वसम्पदेति ॥

अत्र श्राद्धभोक्तुर्दोषः स्मृत्यन्तरे दर्शितः ।

कृष्णाजिनप्रतिग्राही विक्रयी चैव रेतसः ।
गजच्छायाश्रितो भुक्त्वा न भूयः पुरुषो भवेदिति ॥

ब्रह्मपुराणेप्युक्तं ।

मृतके सूतके चैव ग्रहणे चन्द्रसूर्य्ययोः ।
छायायां कुञ्जरस्याथ भुक्त्वा तु नरकं व्रजेदिति ॥

अयञ्च गजच्छायायां भोजने दोषः ।

केनचित्प्रत्यक्षगजच्छायायामित्युक्तं । केनचित् पारिभाषिकगजच्छायायामिति । तत्र विस्पष्टो विशेषहेतुर्नोपलभ्यते । इति सार्वत्रिक एवं दोषः ।

इति गजच्छायानिरूपणं ।

अथ चन्द्रसूर्य्ययोर्ग्रहणं ।

तत्र प्रशंसादि शातातपः ।

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरीं रात्रिमन्यत्र तस्मात्तां परिवर्जयेत् ॥

देवलः ।

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

मार्कण्डेयपुराणे ।

चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं तत्रार्के तु विशेषतः ॥

'दृष्टे' दर्शनयोग्य इत्यर्थः ।

व्यासः ।

सर्व्वं भूमिसमं दानं सर्व्वे ब्रह्मसमा द्विजाः ।
सर्व्वं गङ्गासमन्तोयं राहुग्रस्ते दिवाकरे ॥

इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटीरवेर्दश ॥

देवीपुराणे ।

कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे ।
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने ॥
पौषे तु नर्मदा पुण्या माघे सन्निहती शुभा ।
फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती ॥
वैशाखे ग्रहणे पुण्या चन्द्रभागा सरिद्वरा ।
ज्यैष्ठे तु कौशिकी पुण्या आषाढ़े तापिका नदी ॥
श्रावणे सिन्धुनामा च प्रौष्ठे श्रेष्ठा च गण्डकी ।
आश्विने सरयूः श्रेष्ठा भूयः पुण्या तु नर्मदा ॥
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्य्ये च शशिना ग्रस्ते तमोरूपे महामते ॥
नर्मदातोयसंसर्गात् कृतकृत्यो भवेन्नरः ।
स्पृशन्ति चावगाहन्ति नराः प्रकृतिमानुषाः ॥
स्मृत्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलं ।
स्पृष्ट्वा गोमेधजं पुण्यं पीत्वा सौत्रामणीं लभेत् ।
स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः ॥
रविचन्द्रोपरागे च अयने चोत्तरे तथा ।
एवं गङ्गापि द्रष्टव्या तद्वद्देवी सरस्वती ॥

गङ्गायमुनमित्यत्र सर्व्वोऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः ।

अत्र यद्यपि पौषे तु नर्मदा पुण्येत्यातिदेशप्रधानो व्यपदेशो दृश्यते तथापि कार्त्तिके ग्रहणं श्रेष्ठमित्याद्युपक्रमानुरोधात् सर्व्वत्र ग्रहणकालस्यैव प्राधान्यमवगन्तव्यम् ।

व्यासः ।

सूर्य्यवारे भवेद्भानोः सोमे सोमग्रहस्तथा ।
चूड़ामणिरिति ख्यातस्तत्रानन्तं फलं भवेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्य्ययोः ।
तत्पुण्यं कोटिगुणितं योगे चूड़ामणौ स्मृतम् ॥

विष्णुपुराणे ।

राहोश्च दर्शने दत्तं श्राद्धमाचन्द्रतारकम् ।
गुणवत् सर्वकामीयं पितॄणामुपतिष्ठते ॥

ऋष्यशृङ्गः ।

राहुग्रस्ते तु वै सूर्य्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेन वै सकला पृथ्वी दत्ता विप्रस्य वै करे ॥

वृद्धवसिष्ठः ।

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मुक्तिकाले च राक्षसा इति ॥

ग्रहणस्यादिमध्यावसानेषु कृते श्राद्धे क्रमात् त्रिदशादयस्तृप्यन्तीत्यर्थः ।

लिङ्गपुराणे शातातपः ।

सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति ॥

इतिवचनं श्राद्धस्यावश्यकताङ्गमयति। कूर्मपुराणे चास्य श्राद्धस्य नैमित्तिकत्वेनावश्यकतां प्रतिपाद्य काम्यत्वमपि प्रतिपादितम् ।

अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ।
तिस्रश्चान्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥
त्रयोदशी मघायुक्ता वर्षासु च विशेषतः ।
तस्य पाकश्राद्धकाला नित्याः प्रोक्ता दिने दिने ॥
नैमित्तिकं तु कर्त्तव्यं ग्रहणे चन्द्रसूर्य्ययोः ।
बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा ॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ।
अयने विषुवे चैव व्यतीपातेष्वनन्तकम् ॥
सङ्क्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ।
नक्षत्रेषु च सर्व्वेषु कार्य्यं काम्यं विशेषत इति ॥

मार्कण्डेयपुराणे ।

विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने ।
विषुवे रविसंक्रान्तौ[१] व्यतीपाते च पुत्रक ॥
श्राद्धार्हद्रव्यसम्प्राप्तौ[२] तथा दुःस्वप्नदर्शने ।
जन्मर्क्षग्रहपीड़ासु श्राद्धं कुर्व्वीत चेच्छयेति ॥

अत्र सूर्य्यग्रहणादिकालेषु तथा 'इच्छया' स्वर्गफलकामनया, श्राद्ध कुर्य्यादिति इच्छयेत्यस्यार्थः, न पुनर्यदीच्छति कर्त्तुं तर्हि कुर्य्यात् न चेन्न कुर्य्यादिति ।

---

(१) सति संक्रान्तौ इति ग० ।
(२) श्राद्धार्थे द्रव्यसम्प्राप्तौ इति ख० ।

मत्स्यपुराणे । चन्द्रसूर्य्यग्रहे चैव मरणे पुत्रजन्मनि ।
मलमासेऽपि देयं स्याद्दत्तमक्षयकारकम् ॥

शातातपः ।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्य्यग्रहे तथा ।
आमश्राद्धं द्विजो दद्याच्छूद्रो दद्यात्सदैव तु ॥

षट्त्रिंशन्मते ।

सूर्य्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्व्वीत दद्याद्दानं न च क्वचित् ॥

इति ग्रहणनिरूपणं ।

अथ युगादयः ।

भविष्यपुराणे ।

वैशाखस्य तृतीया या नवमी कार्त्तिकस्य तु ।
पौर्णमासी च माघस्य नभस्ये च त्रयोदशी ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारिकाः ॥

नभस्यो भाद्रपदः । अत्र त्रयोदशीव्यतिरिक्ताः सर्व्वाः शुक्लाः ।

तथा च ब्रह्मपुराणे ।

वैशाखशुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् ।
माघे तु पौर्णमास्याञ्च घोरं कलियुगं तथा ।
युगारम्भास्तु तिथयो युगाद्यास्तेन संस्मृताः ॥

कृतयुगं प्रवृत्तमिति शेषः । अत्र केचित् । 'द्वे शुक्ले द्वे तथा कृष्ण

युगादौ कवयो विदुः' इति नारदीयपुराणवचनात् युगादिद्वयस्य कृष्णपक्षस्थत्वं मन्यमाना माघस्यामावास्यामेव युगादिमाहुः।

तथा च नागरखण्डे।

अधुना शृणु राजेन्द्र युगाद्याः पितृवल्लभाः।
यासां सङ्कीर्त्तनेनापि चीयते पापसञ्चयः॥
नवमी कार्त्तिके शुक्ला तृतीया माधवे सिता।
अमावास्या च तपसो नभस्ये च त्रयोदशी।
त्रेता-कृत-कलीनान्तु द्वापरस्यादयः क्रमात्॥
स्नाने दाने जपे होमे विशेषात् पितृतर्पणे।
कृतस्याक्षयकारिण्यः सुकृतस्य महाफलाः॥

'माधवे' वैशाखे, 'सिता' शुक्ला, 'तपसः' माघस्य।

विष्णुपुराणे।

वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे।
नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत् पितरो वदन्ति॥

यासौ तृतीया यासौ नवमीत्यादिसम्बन्धः।

भविष्योत्तरे।

वैशाखस्य तृतीया या समा कृतयुगेन सा ।
नवमी कार्त्तिके या तु त्रेतायुगसमा तु सा ॥
त्रयोदशी नभस्ये तु द्वापरेण समा मता ।
माघे पञ्चदशी राजन् कलिकालसमा स्मृता ॥
एतास्तिस्रो राजेन्द्र युगानां प्रभवाः शुभाः ।
युगादयस्तु कथ्यन्ते तेनैताः पूर्व्वसूरिभिः ॥
उपवासस्तपोदानं श्राद्धं होमो जपस्तथा ।
यदत्र क्रियते किञ्चित् सर्व्वं कोटिगुणं भवेत् ॥

कृतयुगेन समेति। समग्रेऽपि कृतयुगे प्रत्यहं क्रियमाणेन कर्म्मणा यावत् पुण्यं भवति तावदस्यामेव तिथावित्यर्थः । कोटिशब्दोऽत्र बाहुल्यातिशयपरः ।

मत्स्यपुराणे ।

वैशाखस्य तृतीया या नवमी कार्त्तिकस्य तु ।
पञ्चदश्यपि माघस्य नभस्ये तु त्रयोदशी ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारिकाः ॥

देवलः ।

तृतीया रोहिणीयुक्ता वैशाखस्य तु या सिता ।
मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ।
युगादयः स्मृता ह्येता दत्तस्याक्षयकारिकाः ॥

ब्रह्मपुराणे ।

वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य तु ।
श्राद्धं कार्य्यन्तु शुक्लायां संक्रान्तिविधिना नरैः ॥

त्रयोदश्यां भाद्रपदे माघे चन्द्रक्षयेऽहनि ।
श्राद्धं कार्य्यं पायसेन दक्षिणायनवच्च तत् ॥

पिण्डनिर्वपणं विनेत्यर्थः ।

इति युगादयः ।

अथ युगान्ताः ।

ब्रह्मपुराणे ।

सूर्य्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य तु ॥
ज्ञेयस्तु वृषसंक्रान्त्यां द्वापरान्तस्य संज्ञया ।
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य तु ।
युगादिषु युगान्तेषु श्राद्धमक्षयमुच्यते ॥

इति युगान्ताः ।

अथ मन्वन्तरादयः ।

तत्र मात्स्यब्रह्मपुराणयोः ।

अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य च ।
चैत्रस्य तु तृतीया या तथा भाद्रपदस्य तु ॥
फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ।
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ॥
आषाढस्य तु दशमी माघमासस्य सप्तमी ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठे पञ्चदशी तथा ।
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः ॥

स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ।
सर्व्वमेवाक्षयं विद्यात् कृतं मन्वन्तरादिषु ॥

अमावास्याष्टमीव्यतिरेकेण सर्व्वाः शुक्ला एव ।

नारदीयपुराणे ।

श्रावणस्यामावास्या भाद्रपदस्य कृष्णाष्टमी मन्वन्तरादय इति प्रतिपादितम् ।

तद्यथा ।

आश्विने शुक्लनवमी द्वादशी कार्त्तिके तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
श्रावणस्याप्यमावास्या पौषस्यैकादशी तथा ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
नभस्यस्याष्टमी कृष्णा तथाषाढीयपूर्णिमा ।
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठे पञ्चदशी तथा ।
मन्वन्तरादयो ह्येता दत्तस्याक्षयकारिकाः ॥

नागरखण्डे माघशुक्लतृतीयापि मन्वन्तरादिरित्युक्तं ।

मन्वादिरपि ते वत्स ताः शृणुष्व नराधिप ।
पितॄणां वल्लभा नित्यं सर्व्वपापक्षयावहाः ॥
यासु तोयमपि क्षायां प्रदत्तं तिलमिश्रितम् ।
पितृभ्योऽक्षयतां याति श्रद्धापूतेन चेतसा ॥
अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकस्य च ।
तृतीयापि च माघस्य तथा भाद्रपदस्य च ॥
अमावास्या तपस्यस्य पौषस्यैकादशी तथा ।

तथाषाढस्य दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा ।
तथा कार्त्तिकमासस्य तथा वै फाल्गुनस्य च ॥
चैत्रस्य ज्यैष्ठमासस्य पञ्चैताः पूर्णिमा नृप ।
मन्वन्तरादयः प्रोक्ता आसां पूर्णास्तु या नव ॥
आसु तोयमपि स्नात्वा तिलदर्भविमिश्रितम् ।
पितॄनुद्दिश्य यो दद्यात् स गतिं परमां लभेत् ॥
इह लोके परे चैव पितॄणाञ्च प्रसादतः ।
किं पुनर्व्विविधैरन्नैरसैर्व्वस्त्रैस्तु दक्षिणैः ॥

मात्स्यब्राह्मपुराणयोः ।

यस्यां मन्वन्तरस्यादौ रथमाप दिवाकरः ।
माघमासस्य सप्तम्यां सा तु स्याद्रथसप्तमी ॥
पानीयमप्यत्र तिलैर्व्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत् पितरो वदन्ति ॥

इति मन्वन्तरादयः ।

अथ कल्पादयः ।

तत्र नागरखण्डे ।

अथ कल्पादयो राजन् कथ्यन्ते तिथयः शुभाः ।
यासु श्राद्धे कृते तृप्तिः पितॄणामक्षया भवेत् ॥

चैत्रशुक्लप्रतिपदि श्वेतः कल्पः पुराभवत् ।
तस्य शुक्लत्रयोदश्यामुदानः समजायत ॥
कल्पस्तु नारसिंहाख्यः कृष्णायां प्रतिपद्यभूत् ।
अथ कृष्णत्रयोदश्यां गौरीकल्पोऽप्यकल्पयत् ॥
वैशाखस्य तृतीयायां शुक्लायां नीललोहितः ।
चतुर्दश्यान्तु शुक्लायां प्रवृत्तो गारुडाभिधः ॥
समानस्तु द्वितीयायां कृष्णायामुपपद्यते ।
माहेश्वरश्चतुर्दश्यां कृष्णपक्षे समागमत् ॥
ज्यैष्ठशुक्लतृतीयायां वामदेवस्य सम्भवः ।
पौर्णमास्यान्तु तस्यैव कौर्मः प्रवर्त्तते नृप ॥
कृष्णपक्षे तृतीयायामाग्नेयः समगच्छत ।
पितृपक्षे त्वमावास्यान्तस्यैवाश्रित्य पप्रथे ॥
शुचौ शुक्लचतुर्थ्यान्तु कल्पो रथन्तरोऽभवत् ।
तस्यान्तस्यैव कृष्णायां सोमकल्पः समापतत् ॥
श्रावणे शुक्लपञ्चम्यां रौरवः समवर्त्तत ।
तस्यैव कृष्णपञ्चम्यां मानवः समपद्यत ॥
षष्ठीं प्रौष्ठपदे शुक्लां प्राप्य प्राणाधिपोऽभवत् ।
सितेतरायां षष्ठ्यान्तु तस्य तत्पुरुषाह्वयः ॥
वह्निकल्पस्तु सप्तम्यां शुक्लायामाश्विनस्य तु ।
कृष्णायामपि वैकुण्ठः प्रविवेश विशाम्पते ॥
कार्त्तिकस्य सिताष्टम्यां कल्पः कन्दर्पसंज्ञकः ।
असितायां पुनर्जज्ञे लक्ष्मीकल्पस्य कल्पना ॥

मार्गे शुक्लनवम्यान्तु कल्पः सत्त्वोऽभ्यपद्यत ।
असितायान्तु सावित्रीकल्पः प्रारम्भमभ्यगात् ॥
पौषे दशम्यां शुक्लायां ईशानः प्रादुरास ह ।
असितायामघोरस्य कल्पस्योपक्रमोऽभवत् ॥
एकादश्यान्तु शुक्लायां माघे व्यानः प्रजज्ञिवान् ।
तस्यामेव तु मिश्रायां वाराहः प्राप भूपते ॥
सारस्वतस्तु द्वादश्यां शुक्लायां फाल्गुनस्य च ।
कृष्णायामथ वै राजन् विराजस्तु महामते ॥
इति त्रिंशदमी कल्पास्तिथयः परमेष्ठिनः ।
आरम्भतिथयस्तेषामुक्ताः पुण्यतमा मया ।
तासु श्राद्धे कृते पुण्यमाकल्पाय प्रकल्पते ॥

मत्स्यपुराणे ।

वैशाखस्य तृतीया या कृष्णा या फाल्गुनस्य च ।
पञ्चमी चैत्रमासस्य तस्यैवान्त्या तथा परा ॥
शुक्ला त्रयोदशी माघे कार्त्तिकस्य च सप्तमी ।
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहं ।
कल्पानामादयो ह्येता दत्तस्याक्षयकारिकाः ॥

'अन्त्या' अमावास्या । वैशाखतृतीया, फाल्गुनतृतीया, चैत्रपञ्चमी, चैत्रामावास्येति कृष्णाः । माघत्रयोदशी, कार्त्तिकसप्तमी, मार्गशीर्ष-नवमी एताः शुक्लाः ।

इति कल्पादयः ।

अथ द्रव्यब्राह्मणसम्पत्त्योपलक्षितः कालः ।

तत्र हारीतः । तीर्थद्रव्योपपत्तौ तु न कालमवधारय ।

पात्रञ्च ब्राह्मणं प्राप्य सद्यः श्राद्धं विधीयते ॥

'तीर्थं' गयादि, 'द्रव्यं' अन्नादि वक्ष्यमाणं । श्रोत्रियेत्यादिविशेषणविशिष्टञ्च ब्राह्मणं प्राप्य न कालान्तरं प्रतीक्षेत, किन्तु तस्मिन्नेव काले श्राद्धं कुर्य्यात् । अत्र सद्य इति वचनादावश्यकत्वं प्रतीयते ।

मार्कण्डेयपुराणे ।

विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने ।

श्राद्धार्हद्रव्यसम्पत्तौ तथा दुःस्वप्नदर्शने ।

जन्मर्क्षग्रहपीडासु श्राद्धं कुर्वीत चेच्छयेति ॥

अत्रेच्छापदं यथा नित्यत्वेन न विरुध्यते तथा व्याख्यातमेव ग्रहणप्रकरणे ।

ब्रह्मपुराणे ।

यदा च श्रोत्रियोऽभ्येति गेहं वेदविदग्निचित् ।

तेनैकेनापि कर्त्तव्यं श्राद्धं विषुवतच्छुभम् ॥

श्राद्धीयद्रव्यसम्प्राप्तिर्यदा स्यात् साधुसङ्गमः ।

पार्व्वणेन विधानेन श्राद्धं कार्य्यं द्विजोत्तमैः ॥

विष्णुपुराणे द्रव्यब्राह्मणसम्पत्त्युपलक्षिते काले काम्यमपि श्राद्धमुक्तं । तथाहि तत्र 'काम्यान् कल्पान् शृणुष्व' इत्यस्यानन्तरं भवति वचनं ।

श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजं ।

श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥

इति द्रव्यब्राह्मणसम्पत्त्युपलक्षितकालनिरूपणं ।

अथ प्रकीर्णकालः ।

मत्स्यपुराणे ।

अतःपरं प्रवक्ष्यामि विष्णुना यदुदीरितम् ।
श्राद्धं साधारणं नाम भुक्तिमुक्तिफलप्रदम् ॥
अयने विषुवे युग्मे सामान्ये वार्कसंक्रमे ।
अमावास्याष्टकायां वा कृष्णपक्षे विशेषतः ॥
आर्द्रा-मघा-रोहिणीषु द्रव्यब्राह्मणसङ्गमे ।
गजच्छायाव्यतीपाते विष्टिवैधृतवासरे ॥

तथा ।

वैशाख्यामुपरागे तु तथोत्सवमहालये ।

ब्रह्मपुराणे ।

श्राद्धन्देयमुशन्तीह मासि मास्युडुपक्षये ।
पौर्णमासेऽपि च श्राद्धं कर्त्तव्यमृक्षगोचरे(१) ॥
नित्यं श्राद्धं विधेयञ्च मनुष्यैरिह गोपते ।
वृद्धिश्राद्धञ्च कर्त्तव्यं जातकर्मादिके बुधैः ॥
कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्व्वणेनेह विधिना श्राद्धं तत्र विधीयते ॥

आह जातूकर्णः ।

ग्रहोपरागे च सुते च जाते
पित्र्ये मघायामयनद्वये वा ।

---

(१) कर्त्तव्यं वृषगोचरे इति ख० ।

नित्यञ्च शङ्के च तथैव पद्मे
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥

अत्र यन्नित्यं दत्तमित्यन्वयं मन्यमाना ग्रहोपरागादिषु श्राद्धादेर्नित्यतां ब्रुवते। अथवा 'नित्यम्' अहरहर्य्यावज्जीवं। 'पित्र्ये मघायाम्' इति भाद्रपदापरपक्षस्थितासु मघास्वित्यर्थः ।

शङ्खपद्मयोर्लक्षणमपि स एवाह ।

शङ्कं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टकासु भवेत्पद्मं तयोर्दत्तं तथाक्षयमिति ॥

शङ्खस्त्वाह ।

यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च ।
पद्मकं नाम तत् प्रोक्तमयनाच्च चतुर्गुणमिति ।

विष्णुधर्म्मोत्तरे ।

आश्विनस्यापरे पक्षे प्रथमे कार्त्तिकस्य च ।
यस्तु श्राद्धं सदा कुर्य्यात् सोऽश्वमेधफलं लभेत् ॥
निद्रां त्यजति सर्व्वात्मा तस्मिन् काले जनार्दनः ।
तत्र श्राद्धमथानन्तं नात्र कार्य्या विचारणा ॥

तथा ।

अक्षयञ्च तथा श्राद्धं विज्ञेयं राहुदर्शने ।
व्रीहिपाके च कर्त्तव्यं यवपाके च पार्थिव ।
न तौ त्याज्यौ महाराज विना श्राद्धं कथञ्चन ॥

शातातपः ।

नवोदके नवान्ने च गृहप्रच्छादने तथा ।

पितरः स्पृहयन्त्यन्नं वर्षासु च मघासु च ।
तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥

आह पितामहः ।

अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्व्वाणो नरकं प्रतिपद्यते ॥

इति प्रकीर्णकालाः ।

अथ काम्यश्राद्धकालाः ।

तत्र तावत्तिथयः ।

आह कात्यायनः । अथ काम्यानि भवन्ति । स्त्रियः प्रतिरूपाः प्रतिपदि । द्वितीयायां स्त्रीजन्म । अश्वाः तृतीयायां । चतुर्थ्यां क्षुद्र-पशवः । पुत्राः पञ्चम्यां । षष्ठ्यामध्वभागी । कृषिः सप्तम्यां । वाणिज्य-मष्टम्यां । एकशफं नवम्यां । दशम्याङ्गावः । परिचारका एकादश्यां । द्वादश्यां धनधान्यं कुप्यं जातिश्रैष्ठ्यं । हिरण्यानि त्रयोदश्यां । युवानः शस्त्रहतस्य चतुर्दश्यां । अमावास्यायां सर्व्वमिति ।

आपस्तम्बः ।

सर्व्वेष्वेवापरपक्षस्याहःसु क्रियमाणे पितॄन् प्रीणाति । कर्तुस्तु कालनियमात् फलविशेषाः । प्रथमेऽहनि क्रियमाणे स्त्रीप्रायमपत्यं जायते । द्वितीये स्तैणं । तृतीये ब्रह्मवर्चसं । चतुर्थे क्षुद्रपशुः । पञ्चमे पुमान् बहुपत्यो न चानपत्यः प्रमीयते । षष्ठेऽध्वशीलोऽक्षशीलश्च । सप्तमे कृषेराप्तिः । अष्टमे पुष्टिः । नवमे एकखुरं । दशमे व्यवहारसिद्धिः । एकादशे कृष्णायमन्त्रपुशोभं । द्वादशे पशुमान् । त्रयोदशे बहुमित्रो

दर्शनीयापत्यो युवपरिमाणस्तु भवति । चतुर्दशे आयुधसिद्धिः । पञ्चदशे पुष्टिः ।

सततं श्राद्धं कुर्व्वन्नाप्नोतीत्यधिकारे विष्णुः ।

गृहे सरूपास्त्रियः प्रतिपदि । कन्यां वरां द्वितीयायां । अश्वांस्तृतीयायां । यशश्चतुर्थ्यां । श्रियं पञ्चम्यां । द्यूतविजयं षष्ठ्यां । कृषिः सप्तम्यां । वाणिज्यमष्टम्यां । पशून् नवम्यां । वाजिनो दशम्यां । पुत्रान् ब्रह्मवर्चस्विनस्त्वेकादश्यां । कनकरजते द्वादश्यां । सौभाग्यं त्रयोदश्यां । सर्व्वान् कामान् पञ्चदश्यां । शस्त्रहतानां श्राद्धकर्म्मणि चतुर्दशी प्रशस्ता ।

श्राद्धं कुर्य्यादित्यधिकारे हारीतः ।

पञ्चमीं पुत्रकामः । षष्ठीं धनकामः । सप्तमीं पशुकामः । अष्टमीं राज्यकामः । नवमीं जेतुकामः । दशमीमन्नकाम । एकादशीं वृद्धिकामः । द्वादशीं स्त्रीकामः । त्रयोदशीं यशस्कामः । चतुर्दशीं भूतिकामः । स्वस्तिकामोऽमावास्यायां सर्व्वकामः । पैठीनसिः ।

पञ्चम्यां पुत्रकामो यजेत । षष्ठ्यां पशुकामः । सप्तम्यां वृद्धिकामः । अष्टम्यामन्नाद्यकामः । नवम्यां ब्रह्मवर्चसकामः । दशम्यां सर्व्वकामः । एकादश्यां धनकामः । द्वादश्यां क्षेत्रकामः । त्रयोदश्यां स्त्रीवशित्वं । चतुर्दश्यां शस्त्रेण हतानां । सर्व्वकामोऽमावास्यायां ।

मनुः ।

कुर्व्वन् प्रतिपदि श्राद्धं सरूपान् लभते सुतान् ।
कन्यकान्तु द्वितीयायां तृतीयायान्तु वन्दिनः ॥

पशून् क्षुद्रांश्चतुर्थ्यान्तु पञ्चम्यां शोभनान् सुतान् ।
षष्ठ्यां द्यूतं कृषिञ्चापि सप्तम्यां लभते नरः ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
नवम्यामेवैकखुरं दशम्यां द्विखुरं तथा ॥
एकादश्यां तथा रौप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूपञ्च रजतं कुप्यमेव च ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु सुप्रजाः ।
प्रीयन्ते पितरश्चास्य ये च शस्त्रहता रणे ॥
पक्षत्यादिविनिर्दिष्टान् विपुलान् मनसः प्रियान् ।
श्राद्धदः पञ्चदश्यान्तु सर्व्वान् कामान् समश्नुते ॥

'वन्दिनः' स्तावकान् ।

ब्रह्मपुराण-मार्कण्डेयपुराणयोः ।

कन्यागते सवितरि दिनानि दश पञ्च च ।
पार्व्वणेनेह विधिना श्राद्धं तत्र विधीयते ॥
प्रतिपद्धनलाभाय द्वितीया द्विपदप्रदा ।
वरार्थिनी तृतीया तु चतुर्थी पापनाशिनी[१] ॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यो भवेन्नरः ।
गणाधिपत्यं सप्तम्यां अष्टम्यां बुद्धिमुत्तमाम् ॥
श्रियो नवम्यां प्राप्नोति दशम्यां पूर्णकामताम् ।
वेदांस्तथाप्नुयात् सर्व्वानेकादश्यां क्रियापरः ॥

---

(१) शत्रुनाशिनीति ग० ।

द्वादश्यां जयलाभञ्च प्राप्नोति पितृपूजकः ।
प्रजां मेधां पशून् वृद्धिं स्वातन्त्र्यं पुष्टिमुत्तमां ॥
दीर्घमायुरथैश्वर्य्यं कुर्व्वाणस्तु त्रयोदशीं ।
अवाप्नोति न सन्देहः श्राद्धं श्रद्धापरो जनः ॥
युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्य्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥
श्राद्धं कुर्व्वन्नमावास्यां यत्नेन पुरुषः शुचिः ।
सर्व्वान् कामानवाप्नोति स्वर्गे वासं समश्नुते(१) ॥

विष्णुधर्म्मोत्तरे ।

स्त्रियः सुरूपाश्च गृहे कन्याजन्म तथा धनं ।
सर्व्वान् कामान् यशश्चैव श्रियं द्यूतजयं कृषिं ॥
वाणिज्यञ्च पशूंश्चैव वाजिनश्च तथा सुतान् ।
सुवर्णारोग्यसौभाग्यं प्राप्नोति श्राद्धदः क्रमात्(२) ॥
प्रतिपत्प्रभृतिष्वेतद्यावद्राजन् त्रयोदशीं ।
चतुर्दश्यान्तु कर्त्तव्यं ये नराः शस्त्रघातिताः ॥
श्राद्धं सदा पञ्चदशीषु कुर्व्वन्
कामान् समग्रान् लभते मनुष्यः ।
तस्मात् प्रयत्नेन नरेन्द्र कार्य्यं
श्राद्धं सदा पञ्चदशीषु तज्ज्ञैः ॥

विष्णुधर्म्मोत्तरे ।

---

(१) स्वर्गञ्चानन्तमश्नुते इति ग०
(२) सदेति क० ।

कन्यागते सवितरि कृष्णपक्षेऽष्टमी तु या ।
सा च पापहरा पुण्या शिवस्यानन्दवर्द्धनी ॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनं ।
सर्व्वं प्रीतिकरं स्याद्धि कृतं तस्यां त्रिलोचने ॥
विशेषतः कृतं श्राद्धं होमश्च विधिवन्मुने ।
तस्मात् श्राद्धं प्रयत्नेन तस्यां कुर्य्याद्विचक्षणः ॥
एकभक्तन्तु पञ्चम्यां षष्ठ्यां नक्तं विदुर्व्बुधाः ।
उपवासस्तु सप्तम्यां अष्टम्यां पूजयेच्छिवं ॥
पूजयित्वा शिवं भक्त्या पितृश्राद्धन्तु कल्पयेत् ।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितं ॥
यस्तस्यां कुरुते श्राद्धं पूजयित्वा त्रिलोचनं ।
तस्य वर्षाणि तृप्ताः स्युः पितरो दश पञ्च च ॥

इति काम्यास्तिथयः ।

अथ नक्षत्राणि ।

तत्र मनुः ।

युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामान् समश्नुते ।
अयुक्षु च पितॄनर्च्चन्[१] प्रजां प्राप्नोति पुष्कलां ॥

'युक्षु' समेषु । 'अयुक्षु' विषमेषु ।

यमः ।

युक्षु कुर्व्वन् दिनर्क्षेषु सर्व्वान् कामानवाप्नुयात् ।
गजच्छायां पितॄनर्च्चन् प्रजां प्राप्नोति पुष्कलां ॥

---

(१) सर्व्वानिति ख० ।

याज्ञवल्क्यः। स्वर्गं ह्यपत्यमोजश्च शौर्य्यं चेत्रं बलं तथा।
पुत्रं श्रैष्ठ्यं ससौभाग्यं समृद्धिं मुख्यतां शुभम्॥
प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा।
अरोगित्वं यशो वीतशोकतां परमाङ्गतिं॥
धर्म्मं विद्यां भिषक्सिद्धिं कुप्यङ्गास्वाप्यजादिकम्।
अश्वानायुश्च विधिवत् यः श्राद्धं संप्रयच्छति॥
कृत्तिकादिभरण्यन्तं सर्व्वान् कामानवाप्नुयात्।
आस्तिकः श्रद्दधानश्च व्यपेतमदमत्सरः॥

'प्रवृत्तचक्रता' अप्रतिहताज्ञाशास्तित्वं।

विष्णुः।

स्वर्गं कृत्तिकासु। अपत्यं रोहिणीषु। ब्रह्मवर्चसं सौम्ये। रौद्राणां सिद्धिं रौद्रे। भुवं पुनर्व्वसौ। पुष्टिं पुष्ये। श्रियं सार्पे। सर्व्वान् कामान् पैत्र्ये। सौभाग्यं भाग्ये। धनमार्य्यम्णे। ज्ञातिश्रैष्ठ्यं हस्ते। रूपवतः सुतांस्त्वाष्ट्रे। वाणिज्यसिद्धिं स्वातौ। कनकं विशाखासु। मित्राणि मैत्रे। राज्यं शाक्रे। कृषिं मूले। समुद्रयानसिद्धिमाप्ये। सर्व्वान् कामान् वैश्वदेवे। श्रैष्ठ्यमभिजिति। सर्व्वान् कामान् श्रवणे। बलं वासवे। आरोग्यं वारुणे। कुप्यद्रव्यमाजे। गृहमाहिर्बुध्ने। गाः पौष्णे। तुरङ्गमा आश्विने। जीवितं याम्ये।

'सौम्यं' मृगशिरः। 'रौद्रं' आर्द्रा। 'सार्पम्' अश्लेषा। 'पैत्र्यं' मघा। 'भाग्यं' पूर्व्वफाल्गुन्यः। 'आर्य्यम्णं' उत्तराफाल्गुन्यः। 'त्वाष्ट्रं' चित्रा। 'मैत्रम्' अनुराधा। 'शाक्रं' ज्येष्ठा। 'आप्यं' पूर्व्वाषाढ़ा। 'वैश्वदेवम्' उत्तराषाढा। 'वारुणं' शतभिषा। 'वासवं' धनिष्ठा।

'आजं' पूर्व्वा भाद्रपदा । 'आहिर्बुध्न्यः' उत्तरा भाद्रपदा । 'पौष्णं' रेवती । 'आश्विनम्' अश्विनी । 'याम्यं' भरणी ।

विष्णुधर्म्मोत्तरे ।

स्वर्गं ह्यपत्यानि तथा ब्रह्मवर्च्चसमेव च ।
रौद्राणां कर्म्मणां सिद्धिं भुवं पुष्टिं तथा श्रियं ॥
सर्व्वान् कामांश्च सौभाग्यं धर्म्मं ज्ञातिप्रधानतां ।
रूपयुक्तांश्च तनयान् वाणिज्यं धनसम्पदं ॥
कनकं सुहृदो राज्यं सफलाञ्च तथा कृषिं ।
समुद्रयानलाभञ्च सर्व्वान् कामांस्तथैव च ॥
श्रैष्ठ्यं कामांस्तथा सर्व्वान् बलमारोग्यमेव च ।
कुप्यद्रव्यं गृहञ्चाश्च तुरगांश्चैव जीवितं ॥
कृत्तिकादिभरण्यन्ते क्रमादुडुगणे नरः ।
एकैकस्मिन् क्रमात् कुर्व्वन् श्राद्धमाप्नोत्यसंशयम् ॥

मार्कण्डेयपुराणे ।

कृत्तिकासु पितॄनर्च्चन्(१) स्वर्गमाप्नोति मानवः ।
अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां(२) लभेत् ॥
शौर्य्यमार्द्रास्ववाप्नोति क्षेत्रादि च पुनर्व्वसौ ।
पुष्टिं पुष्ये सदाभ्यर्च्च्य अश्लेषासु वरान् सुतान् ॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फल्गुनीषु च ।
प्रदानशीलो भवति सापत्यश्चोत्तरासु च ॥

(१) पितॄनर्च्च्येति ख० ।
(२) चौजस्वितामिति ग० ।

प्रयाति श्रेष्ठतां यस्य हस्ते श्राद्धप्रदो नरः ।
रूपयुक्तस्तु(१) चित्रासु तथापत्यान्यवाप्नुयात् ॥
वाणिज्यलाभदा स्वाति विशाखा(२) पुत्रकामदा ।
कुर्व्वन्तश्चानुराधासु लभन्ते चक्रवर्त्तितां(३) ।
आधिपत्यञ्च ज्येष्ठासु मूले चारोग्यमुत्तमं ॥
आषाढासु यशःप्राप्तिमुत्तरासु विशोकतां ।
श्रवणे च शुभान् लोकान् धनिष्ठासु धनं महत् ॥
वेदवित्त्वमभिजिति भिषक्सिद्धिं च वारुणे ।
अजादिकं प्रोष्ठपदे विन्देद्भार्य्यां तथोत्तरे ॥
रेवतीषु तथा कुप्यमश्विनीषु तुरङ्गमान् ।
श्राद्धं कुर्व्वंस्तथाप्नोति भरणीष्वायुरुत्तमं ॥
तस्मात् काम्यानि कुर्व्वीत ऋक्षेष्वेतेषु तत्त्ववित् ।

ब्रह्मवैवर्त्ते ।

यमस्तु यानि श्राद्धानि प्रोवाच शशिविन्दवे ।
तानि त्वं शृणु काम्यानि नक्षत्रेषु पृथक् पृथक् ॥
श्रद्धायोगे तु यः श्राद्धं करोति सततं नरः ।
अग्निदाता सुधीमान् यो यजते स गतज्वरः ॥
अपत्यकामो रोहिण्यां सौम्ये तेजस्वितां लभेत् ।
क्रूराणां कर्म्मणां सिद्धिं आर्द्रायां श्राद्धमाचरन् ॥

---

(१) रूपयुक्तानीति ग० ।
(२) वाणिज्यलाभं स्वात्यान्त्विति क० ।
(३) कुर्व्वन्तश्चानुराधासु दद्युश्चक्रप्रवर्त्तनमिति क० ।

क्षेत्रभागी भवेत् पुत्री श्राद्धं कुर्व्वन् पुनर्व्वसौ ।
पुष्टिकामः पुनः पुष्ये श्राद्धं कुर्व्वीत मानवः ॥
अश्लेषासु पितॄनर्च्चन् वीरान् पुत्रानवाप्नुयात् ।
श्रेष्ठो भवति ज्ञातीनां मघासु श्राद्धमाचरन् ॥
फाल्गुनीषु पितॄनर्च्चन् सौभाग्यं लभते नरः ।
प्रधानशीलः सोऽवश्यमुत्तरासु करोति यः ॥
स सर्व्वमुख्यो भवति हस्ते यस्तर्पयेत् पितॄन् ।
चित्रायाञ्चैव यः कुर्य्यात् पश्येद्रूपवतः सुतान् ॥
स्वातीषु चैव यः कुर्य्याद्वाणिज्याल्लाभमाप्नुयात् ।
पुत्रार्थी तु विशाखासु श्राद्धमीहेत मानवः ॥
अनुराधासु कुर्व्वाणो नरश्चक्रं प्रवर्त्तयेत् ।
आधिपत्यं लभेच्छ्रेष्ठं ज्येष्ठासु सततन्तु यः ॥
मूलेनारोग्यमिच्छन्ति आषाढासु महेश्वरः ।
उत्तरासु त्वाषाढासु तीर्णशोको भवेन्नरः ॥
श्रवणे मनुलोकेषु प्राप्नुयात् परमाङ्गतिं ।
राज्यभोगं धनिष्ठासु प्राप्नुयाद्विपुलं धनं ॥
श्राद्धन्त्वभिजिते कुर्व्वन् वेदान् साङ्गानवाप्नुयात् ।
नक्षत्रे वारुणे कुर्व्वन् भैषज्ये सिद्धिमाप्नुयात् ॥
पूर्व्वे प्रौष्ठपदे भक्तो विन्देताजादिकं बहु ।
उत्तरास्वनतिक्रम्य विन्देद् गावश्च सहस्रशः ॥
बहुकुप्यकृतं द्रव्यं विन्देत् कुर्व्वंस्तु रेवतीं ।
अश्वानाश्वयुजे भुङ्क्ते भरण्यामायुरुत्तमं ॥

इमं श्राद्धविधिं कुर्व्वन् शशविन्दुर्महीमिमाम् ।
कृत्स्नाञ्च लेभे सोऽत्कृष्टो[१] लब्ध्वा च प्रशशास तां ॥

कूर्म्मपुराणे ।

स्वर्गञ्च लभते कृत्वा कृत्तिकासु द्विजोत्तमः ।
अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्च्चसं ॥
रौद्राणां कर्म्मणां सिद्धिमार्द्रायां शौर्य्यमेव च ।
पुनर्व्वसौ क्षेत्रसिद्धिं पुष्ये पोषमवाप्नुयात् ।
सर्व्वान् कामांस्तथा सार्पे पैत्र्ये सौभाग्यमेव च ॥
आर्य्यम्णे तु धनं विन्द्यात् फाल्गुन्यां पापनाशनं ।
ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायाञ्च बहून् सुतान् ॥
वाणिज्यसिद्धिं स्वातौ तु विशाखासु सुवर्णकं ।
मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च ॥
मूले कृषिं लभेत् यानसिद्धिमाप्ये समुद्रतः ।
सर्व्वान् कामान्वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः ॥
धनिष्ठायां तथा कामान् वारुणे च परं बलं ।
अजैकपादे कुप्यं स्यादाहिर्ब्रध्ने गृहं शुभं ॥
रेवत्यां बहवो गावः अश्विन्यान्तुरगांस्तथा ।
याम्ये तु जीवितव्यं स्यात् यः श्राद्धं सम्प्रयच्छति ॥

अत्रान्यान्यपि ब्रह्मपुराणादिवचनानि वैलक्षण्येऽपि सर्व्वथा पूर्व्वोक्तानतिरिक्तार्थानीति न लिख्यन्ते ।

ब्रह्माण्डपुराणे ।

---

(१) विसर्गलोपे सन्धिरार्षः ।

मघासु कुर्व्वन् श्राद्धानि सर्व्वान् कामानवाप्नुयात् ।
प्रत्यक्षमर्च्चितास्तेन भवन्ति पितरः सदा ॥

इति काम्यानि नक्षत्राणि ।

अथ वाराः ।

अत्र विष्णुः ।

सततमादित्येऽह्नि श्राद्धं कुर्व्वन्नारोग्यमाप्नोति। सौभाग्यं चान्द्रे । समरविजयं कौजे । सर्व्वान् कामान् बौधे। विद्यामभीष्टां जैवे। धनं शौक्रे। जीवितं शनैश्चरे। 'कौजे' मङ्गलदिने । 'जैवे' वृहस्पतिदिने । विष्णुधर्म्मोत्तरे ।

अथ काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव ।
आरोग्यमथ सौभाग्यं समरे विजयं तथा ॥
सर्व्वान् कामांस्तथा विद्यां धनञ्जीवितमेव च ।
आदित्यादिदिनेष्वेवं श्राद्धं कुर्व्वन् सदा नरः ।
क्रमेणैतदवाप्नोति नात्र कार्य्या विचारणा ॥

कूर्म्मपुराणे ।

आदित्यवारे त्वारोग्यं चन्द्रे सौभाग्यमेव च ।
कुजे सर्व्वत्र विजयं सर्व्वान् कामान् बुधस्य तु ॥
विद्यामभीष्टाञ्च गुरौ धनं वै भार्गवे पुनः ।
शनैश्चरे लभेदायुरारोग्यञ्च सुदुर्लभम् ॥

भविष्यत्पुराणे ब्रह्मोवाच ।

ये त्वादित्यदिने प्राप्ते श्राद्धं कुर्व्वन्ति मानवाः ।
सप्तजन्मानि ते जाताः सम्भवन्त्यविरोधिनः ॥

पञ्चतारं भवेद्यच नक्षत्रं गोवृषध्वज ।
वारे तु देवदेवस्य स वारः पुत्रदः स्मृतः ॥
उपवासो भवेत्तत्र श्राद्धं कार्य्यं तथा भवेत् ।
प्राशनञ्चापि पिण्डस्य मध्यमस्य प्रकीर्त्तितं ॥
सोपवासस्तु वै भक्त्या पूजयेच्चैव गोपतिम् ।
धूप-माल्योपहारैस्तु दिव्यगन्धसमन्वितैः ॥
एवं पूज्य विवस्वन्तं तस्यैव पुरतो निशि ।
भूमौ स्वपिति वै वीर जपन् श्वेतं महामते ॥
प्रातरुत्थाय च स्नानं कृत्वा दत्त्वार्घ्यमुत्तमं ।
रक्तचन्दनसंमिश्रैः करवीरैर्गणाधिपं ॥
संपूज्य ग्रहभूतेशमासीनन्तु त्रिलोचनं ।
वीरञ्च पूजयित्वा तु ततः श्राद्धं प्रकल्पयेत् ॥
पञ्चभिर्ब्राह्मणैर्देव दिव्यैर्भौमैश्च सुव्रत ।
मगसंज्ञैस्तत्र देवं ब्राह्मणैः परिकल्पयेत् ॥
पित्र्यांस्तु ब्राह्मणान् भौमान् प्रकल्प्यान्धकसूदन ।
कुर्य्यादेवं ततः श्राद्धं पार्व्वणं भास्करप्रियं ॥
श्राद्धे समाप्ते विधिना लद्यात् पिण्डन्तु मध्यमं ।
पुरतो देवदेवस्य स्थित्वा मन्त्रेण सुव्रत ॥
स एष पिण्डो देवेश योऽभीष्टस्तव सर्व्वदा ।
अश्नामि पुरतस्तुभ्यं येन मे सन्ततिर्भवेत् ।
प्रसादात्तव देवस्य यन्मोऽभ्यर्थयते मनः ॥
इत्थं संपूजितो यत्र भास्करः पुत्रदो भवेत् ।

अतोऽयं पुत्रदो वारो देवस्य परिकीर्त्तितः ॥
एवमत्र सदा यस्तु भास्करं पूजयेन्नरः ।
उपवासपरः श्राद्धे स पुत्रं लभते धनं ॥
धनं धान्यं हिरण्यञ्च आरोग्यं सुखमुत्तमं ।
सूर्य्यलोकं स्वयं प्राप्तस्ततो राजा भवेन्नृप ॥
प्रभया द्विजसङ्काशः कान्त्या जम्बुकसन्निभः ।
वीर्य्येण गोपतेस्तुल्यो गाम्भीर्य्ये कलशोद्भवः ॥

'अविरोधिनः' शत्रुशून्याः । रोहिण्यस्तेषामघाहस्ताख्यानि चत्वारि नक्षत्राणि पञ्चताराणि । श्रेष्ठो गौः 'गोवृषः', स ध्वजो यस्य स 'गोवृषध्वजः' । वृष-व्याघ्र-पुङ्गव-कुञ्जराणां श्रैष्ठ्यवाचिना उत्तरपदे, भरतर्षभादिषु दर्शनात् । 'देवदेवः' सूर्य्यः । उपवासोऽत्र शनैस्वरदिने । श्राद्धमादित्यवारे । एतच्च प्रातरुत्थायेत्यादिना ग्रन्थेन व्यक्तीभविष्यति । मध्यमपिण्डप्राशनमत्र यजमानस्यैव प्रतीयते, श्राद्धान्तरेषु तु पत्न्या विहितत्वात्तत्कृतमेव । अत्र तु दम्पत्योः पुत्रकामयोः सहाधिकाराद्विशेषानभिधानाच्च द्वयोरपि पिण्डप्राशनमिति युक्तं । दृश्यते च पुत्रकामकर्म्मान्तरे द्वयोरपि शेषप्राशनं । तद्यथा शतपथे "क्षीरोदनं पाचयित्वा सर्प्पिश्मन्तमश्नीयातां" इत्यादि । तथाचैव होमानन्तरं जुह्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छतीति । 'गोपतिः' सूर्य्यः, स सुवर्णादिप्रतिमायां भविष्यत्पुराणोक्तप्रकारेण व्योम्नि वा पूजनीयः । 'श्वेतः' महाश्वेताख्यः षडक्षरः सूर्य्यमन्त्रः खगोल्काय नमः इत्येवं प्रसिद्धः । अर्घ्यदानमम्बरस्थसूर्य्याभिमुखो भूत्वा स्थण्डिले कुर्य्यात् । 'पूजयित्वा', इति पुनः पूजनोपादानात् पूजनान्तरावगतौ

ग्रहभूतेशादयः पञ्चदेवताः प्रणवादिभिश्चतुर्थ्यन्तैः स्वस्वनामभिः पीठे पूज्याः। 'दिव्या मगाः' भोजकाख्या ब्राह्मणविशेषत्वेनोत्तरापथे प्रसिद्धाः, तदन्ये 'भौमाः'। अत्र वैश्वदेविकस्य स्थाने मगानुपवेश्य पित्र्यस्थाने ब्राह्मणान्तराण्युपवेशयेत्। एवमत्र 'सदा' इति त्रिशिष्ट-फललाभार्थमावृत्तिकथनं। 'प्रभा' औज्ज्वल्यं। 'द्विजः' चन्द्रमाः। 'कान्तिः' तेजः। 'जम्बुकः' वरुणः। वरुणो वै जम्बुक इति। वरुणश्चादित्यविशेषः, वरुणो माघमासे तु तपतीति दर्शनात्। 'गोपतिः' शम्भुरित्यर्थः। 'कलशोद्भवः' अगस्त्यः, स च गम्भीरतया विवक्षितः।

पद्मपुराणे।

शुक्राङ्गारकयुक्ता या चतुर्थी जायते तदा।
श्रद्धया श्राद्धकृद्विप्रो न प्रेतो जायते मृतः॥

स्कन्दपुराणे

अमायां यदि सोमः स्यात् सप्तम्यां वै दिवाकरः।
चतुर्दश्यां चतुर्थ्यां वा वारः स्यान्मङ्गलस्य चेत्॥
तदा श्राद्धं प्रकर्त्तव्यं पितॄणां तृप्तिमिच्छता।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च॥
नन्दन्ति पितरः स्वर्गे विमानाम्बरमास्थिताः।
तावन्तमेव कालं हि श्राद्धकर्त्तुस्तथा फलं(१)॥

इति काम्यवाराः।

---

(१) फल इति ग०।

अथ काम्याः प्रकीर्णकालाः ।

तत्र विष्णुपुराणे । मासि मास्यसिते पक्षे पञ्चदश्यां नरेश्वर ।
तथाष्टकाः प्रकुर्व्वीत काम्यान् कालान् शृणुष्व मे ॥
श्राद्धार्हमागतं द्रव्यं विशिष्टमथवा द्विजं ।
श्राद्धं कुर्व्वीत विज्ञाय व्यतीपातेऽयने तथा ॥
विषुवे चापि सम्प्राप्ते ग्रहणे शशिसूर्य्ययोः ।
समस्तेष्वेव भूपाल राशिष्वर्कोनुगच्छति ॥
नक्षत्रग्रहपीड़ासु दुष्टस्वप्नावलोकने ।
इच्छाश्राद्धानि कुर्व्वीत नवसस्यागमे तथा ॥

मार्कण्डेयपुराणे ।
कार्य्यं श्राद्धममावास्यां मासि मास्युडुपक्षये ।
तथाष्टकास्वप्यवश्यमिच्छाकालं[१] निबोध मे ॥
विशिष्टब्राह्मणप्राप्तौ सूर्य्येन्दुग्रहणेऽयने ।
विषुवे रविसङ्क्रान्तौ व्यतीपाते च पुत्रक ॥
श्राद्धार्हद्रव्यसम्प्राप्तौ[२] तथा दुःस्वप्नदर्शने ।
जन्मर्क्षग्रहपीड़ासु श्राद्धं कुर्व्वीत चेच्छया ॥

विष्णुरप्याह । सङ्क्रान्तिविषुवे चैव विशेषेणायनद्वयं ।
व्यतीपातोऽथ जन्मर्क्षं चन्द्रसूर्य्यग्रहस्तथा ॥
इत्येतान् श्राद्धकालांस्तु काम्यानाह प्रजापतिः ।
श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते ॥

---

(१) इष्टं कालमिति ग० ।
(२) श्राद्धार्हद्रव्यसम्पत्ताविति ग० ।

ब्रह्मवैवर्त्ते। अमावास्यां प्रयत्नेन श्राद्धं कुर्य्याच्छुचिः सदा ।
सर्व्वान् कामानवाप्नोति स्वर्गञ्चान्ते समश्नुते ॥
घृतं दद्यादमावास्यां सोमस्याप्यायनं महत्।
एवमाप्यायितः सोमः त्रीन् लोकान् धारयिष्यति ॥
सिद्धचारणगन्धर्व्वैः स्तूयते नित्यपूजितः ।
सर्व्वैः पुष्पैर्मनोज्ञैश्च सर्व्वकामपरिच्छदैः॥
नृत्यवादित्रगीतैः स्यादप्सरोभिः सहस्रशः ।
उपक्रीडेद्विमानस्थः पितृभक्तो दृढव्रतः ।
स्तुवन्ति देवगन्धर्व्वाः सिद्धसङ्घाश्च तं सदा ॥
पितृभक्तस्त्वमावास्यां सर्व्वान् कामानवाप्नुयात् ।
पितृदेवान् यजन् भक्त्या यतोऽस्यामक्षयं फलं ॥

तथा ।

पुष्टिं प्रजां स्मृतिं मेधां पुत्रानैश्वर्य्यमेव च ।
कुर्व्वाणः पौर्णमास्यान्तु सर्व्वं संपूर्णमश्नुते ॥

ब्रह्मपुराणे ।

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यान्तु कर्त्तव्यं वराहवचनं यथा ॥

भाद्रपदमासान्तर्गते यत्र क्वचन दिने कन्याराशौ रविसंक्रमणे जाते तन्मासमध्यवर्त्तिन्यां पौर्णमास्यां नान्दीमुखानां पितॄणां श्राद्धं कर्त्तव्यं । तच्चावश्यकं प्रत्यब्दमिति वचनात् । नान्दीमुखशब्देन चात्र त्रयः प्रपितामहात्परे विवक्षिताः । यस्मादस्मिन्नेव पुराणे अस्य वचनस्यानन्तरमेवोक्तं ।

ये स्युः पितामहादूर्ध्वं ते स्युर्नान्दीमुखास्त्रयः ।
प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु त इति ॥

अत्र पितामहशब्देन प्रपितामहो लक्षणीयः ।

यदुक्तं ब्रह्मपुराणे ।

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्त्तिताः ।
तेभ्यः पूर्व्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृता इति ॥

अस्य नान्दीमुखवचनस्यैतत्पौर्णमासीनिमित्तकश्राद्धविधिनैकवाक्यतापन्नत्वात् श्राद्धान्तरे नान्दीमुखशब्देन प्रपितामहात्परे त्रयो न ग्राह्याः । अथैतेषां नान्दीमुखसंज्ञा किमर्था । अथ यथा वसवः पितरो ज्ञेया इत्यादौ वस्वादिशब्दो वस्वाद्यभेददृष्टिविधानार्थः, तथात्र वाराहकल्पीयपितृगणाभेदप्रकरणोक्तनान्दीमुखाख्यपितृगणाभेददृष्टिविधानार्थं उच्यते । तन्न । यतोऽत्र प्रसन्नमुख इत्यादिना नन्दनमुखयोगान्नान्दीमुखशब्दनिष्पत्तिरभिप्रेतेति[१] दर्शितं । अतो नाभेददृष्ट्युपदेशार्थः । अथ यथा कौण्डपायीनीये मासहोमेऽग्निहोत्रमिति परशब्दः परत्र प्रयुज्यमानः परसारूप्यभावङ्गमयन्नैयमिकाग्निहोत्रधर्म्मातिदेशार्थः, तथात्र नान्दीमुखशब्दोऽपि पुत्रजन्मादिकालविहितप्रसिद्धनान्दीमुखधर्म्मातिदेशार्थ इति । तन्न । उक्तोत्तरत्वात् । नह्ययं परशब्दः परसारूप्यविवक्षया प्रयुक्तः, किन्तु नन्दनमुखत्वयोगादिति । अतोऽस्य प्रशंसैव प्रयोजनं मन्यामहे ।

---

(१) नान्दीमुखशब्देनैषां व्युत्पत्तिरभिप्रेतेतीति ख० ।

हारीतः । अष्टका माघाभ्युदयास्तीर्थयात्रोऽपपत्तयः ।

पितृणामतिरेकोऽयं मासि कार्य्ये ध्रुवः स्मृतः ॥

ब्रह्मवैवर्त्तवायुपुराणयोः ।

अथ कालं प्रवक्ष्यामि श्राद्धकर्म्मणि पूजितं ।

काम्यनैमित्तिकाजस्रश्राद्धकर्म्मविधायिभिः ॥

पुत्रदा धनमूलं स्युरष्टकास्तिस्र एव च ।

इति काम्याः प्रकीर्णकालाः ।

अथ वैशेषिकाः श्राद्धकालाः ।

तत्र याज्ञवल्क्यवचनोपबद्धकालप्रक्रममनुसरद्भिरस्माभिर्वृद्धिश्राद्धकालाः पूर्व्वमेव निरूपिताः । अथेदानीं सांवत्सरिकश्राद्धकालाः कथ्यन्ते । तत्र तावत् क्षयाहनिर्णयः ।

ब्रह्मपुराणे ।

प्रतिसंवत्सरं कार्य्यं मातापित्रोर्मृताहनि ।

पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

मात्रादीनां श्राद्धं कार्य्यमित्यनेनार्थात् पुत्रादीनां कर्त्तव्यमुक्तं । एतच्चाधिकारमात्रोपलक्षणार्थं । भ्रातुरित्यत्रापुत्रस्येत्यनुषञ्जनीयं । ज्येष्ठस्येत्यनेन कनिष्ठस्य भ्रातुर्नावश्यकं सांवत्सरिकमिति दर्शितं । तथा च । "न पुत्रस्य पिता दद्यान्नानुजस्य तथाग्रजः"

इति नियताधिकारनिराकरणात् स्नेहादिना त्वनियतेनाधिकारेणापुत्रस्य कनिष्ठस्यापि सांवत्सरिकं कर्त्तव्यमेव ।

तथाचोक्तं ।

अपि स्नेहेन कुर्य्याच्चेत् सपिण्डीकरणं विनेति ।

एतच्च प्रागेवाधिकारप्रकरणे प्रपञ्चेनोक्तं ।

प्रभासखण्डे ।

मृताहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात् ।
मातुश्चैव वरारोहे वत्सरान्ते मृताहनि ।
नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः ॥

भविष्यत्पुराणे ।

सर्व्वेषामेव श्राद्धानां श्रेष्ठं सांवत्सरं मतं ।
क्रियते यत् खगश्रेष्ठ मृतेऽहनि बुधैः सदा ॥
मृतेऽहनि पितुर्यस्तु न कुर्य्यात् श्राद्धमादरात् ।
मातुश्च खगशार्दूल वत्सरान्ते मृतेऽहनि ॥
नाहं तस्य खगश्रेष्ठ पूजां गृह्णामि नो हरिः ।
न ब्रह्मा न च वै रुद्रो न चान्ये देवतागणाः ॥
तस्माद्यत्नेन कर्त्तव्यं वर्षे वर्षे मृतेऽहनि ।
नरेण खगशार्दूल भोजकेन विशेषतः ॥
भोजको यस्तु वै श्राद्धं न करोति खगाधिप ।
मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि ॥
स याति नरकं घोरं तामिस्रं नाम नामतः ।
ततो भवति दुष्टात्मा नगरे शूकरः खग ॥

अत्र मृताहशब्देन मरणाहर्वर्त्तिनी तिथिर्विवक्षिता संवत्सरान्ते मुख्यमृताहस्यासम्भवात् । न हि तान्येवाहानि परिवर्त्तन्ते । नह्यह्नां प्रातिस्विकं नामास्ति चिह्नं । अतो यत्र क्वचनाह्नि सांवत्सरिकं

प्राप्नुयात् संवत्सरान्तिमाहर्ग्रहणान्नेति चेत् । न । मृताहर्ग्रहणानर्थक्यापत्तेः । अतो मरणाहर्वर्त्तिनी तिथिर्विवक्षिता । अहर्ग्रहणं रात्रेरप्युपलक्षणार्थं । तेन रात्रिमृतस्यापि सा तिथिर्लभ्यते । एवं च संवत्सरान्ते मृताहसम्बन्धिन्यां तिथौ सांवत्सरिकं कर्त्तव्यमिति लभ्यते ।

अत्र च ।

> यान्तिथिं समनुप्राप्य उदयं याति भास्करः ।
> सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु ॥
> यान्तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
> सा तिथिः सकला ज्ञेया स्नानदानजपादिष्विति ॥

देवलादिवचनानुसाराद्यथा कर्म्मकालेष्वविद्यमानाया अपि तिथेः सम्पूर्णत्वकल्पनया ग्रहणं, न तथा मृताहर्वर्त्तिन्यास्तिथेर्मरणसम्बन्धितया ग्रहणं, किन्तु मरणकालिन्या एव । अतः सांवत्सरिके मृताहशब्देनोक्ता मरणकालिक्येव तिथिर्वेदितव्या ।

तदाह नारदीयपुराणे वसिष्ठः ।

> पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।
> पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते ॥

'तात्कालिकी' यस्मिन् काले उपवासादिव्रतपारणं मरणं वा तत्कालवर्त्तिन्येव तयोस्तिथिः । न पुनरतत्कालवर्त्तिनी । प्रातरादिषु त्रिमुहूर्त्तादिना पित्र्ये सांवत्सरिकादावस्तमयवेलायामहरन्ते स्पृष्टापि मरणकालिकी तिथिः सम्पूर्णा निगद्यते । मरणकालिक्यान्तिथौ सांवत्सरिके कर्त्तव्ये प्राप्ते यदि सास्तमयवेलायामपि दिना-

न्तोऽस्ति तदा सा कुतपापराह्णयोरस्तीति मत्वा तदुपलक्षित एव दिवसे कुतपादिषु श्राद्धं कर्त्तव्यमिति ।

अथवात्र मृताहशब्देनोपलक्षणत्रयविशिष्टमहोरात्रमभिप्रेतं । तदाह व्यासः ।

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रात्यब्दन्तत्तथाभूतं क्षयाहं तस्य तं विदुरिति ॥

तथाभूतमित्युपलक्षणत्रयोपेतं । अत्र मासपक्षाहोरात्राणि चान्द्राण्येव ग्राह्याणि, न सौरसावनानि । सन्ति च तानि ब्रह्मसिद्धान्ते निरूपितानि ।

दर्शाद्दर्शस्तान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः ।
रविसङ्क्रान्ति विशिष्टः सौरो मासो निगद्यते तज्ज्ञैः ।

तथा ।

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्य्यावत्कालं मासः सभास्कर इति ॥

एषु च मासेषु मध्ये सांवत्सरिकादिपितृकार्य्ये च चान्द्रस्यैव ग्रहणमाह व्यासः ।

विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्य्ये च मासश्चान्द्रमसः स्मृत इति ॥

लघुहारीतः ।

चक्रवत्परिवर्त्तेत सूर्य्यः कालवशाद् यतः ।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितं ॥
मासचिह्नन्तु कर्त्तव्यं पौषमाघाद्यमेव हि ।

यतस्तत्र विधानेन मासः स परिकीर्त्तितः ॥

पौषादिसंज्ञा चान्द्रस्यैव ग्राह्या । तत्र यद्यपि परस्मिन्नपि दिने कर्म्मकालव्याप्तिसम्भवः, तथापि प्रथमातिक्रमे कारणाभावात् पूर्व्वस्मिन्नेवाहनि श्राद्धं ।

आह सुमन्तुः ।

द्विरह्व्यापिनी चेत्स्यात् मृताहस्य तु या तिथिः ।
पूर्व्वस्यान्निर्व्वपेत् पिण्डमित्याङ्गिरसभाषितं ॥

वृद्धयाज्ञवल्क्यः ।

दैवकार्य्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः ।

शिवरहस्यसौरपुराणयोः ।

प्रायः प्रान्त उपोष्यः स्यात्तिथिर्दैवफलेप्सुभिः ।
मूलं हि पितृतृप्त्यर्थं पैत्र्यं चोक्तं महर्षिभिः ॥
'मूलं' आरम्भः ।

नारदीयपुराणे ।

तिथिप्रान्तं सुराख्यं हि उपोष्यं कवयो विदुः ।
पैत्रं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ॥

निगमः ।

पूर्वाह्णिकास्तु तिथयो देवकार्य्ये फलप्रदाः ।
अपराह्णिकास्तथा ज्ञेया पित्रर्थे तु शुभावहाः ॥

अत्रापराह्णः सूक्ष्मकालः वक्ष्यमाणेष्वपराह्णेष्वन्यतमो वेदितव्यः । अतः पूर्व्वदिनसम्बन्धिनी मृताहतिथिः सांवत्सरिकेऽभ्युपेया सा च

यद्यपराह्णे त्रिमुहूर्त्ता भवेत् तदैव ग्राह्या । न तु त्रिमुहूर्त्तान्यूना । तदाह बौधायनः ।

उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोरिति ॥

अस्यार्थः । भानावुदिते सत्युत्तरकाले अह्नो मुहूर्त्तद्वयं 'दैवतं' देवदेवत्यं । तस्मिंश्चास्तमिते तत्पूर्व्वकालीनमह्नो मुहूर्त्तत्रयं 'पित्र्यं' पितृदेवत्यं । अतस्तावत्कालव्यापिनी या तिथिर्भवति सैव क्रमात् हव्यकव्ययोर्ग्राह्येति । तदेवमस्तमयात् पूर्व्वं त्रिमूहूर्त्ता ग्राह्येति स्थिते यद्भविष्यत्पुराणे ।

व्रतोपवासस्नानादौ घटिकैकापि या भवेत् ।
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृक इति ॥

'विपरीता' अस्तमयसम्बन्धिनी । यच्च व्यासोक्तं ।

अह्नोऽस्तमयवेलायां कलामात्रापि या भवेत् ।
सैव प्रत्याब्दिके ग्राह्या इतरा पुत्रहानिदेति ॥

यच्च वसिष्ठोक्तं ।

पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्व्वा निगद्यत इति ।

तदेतत् पूर्व्वदिनापराह्णत्रिमुहूर्त्तव्यापि, किं पुनर्न्यायेन प्रशंसार्थं । न तु घटिकादिमात्रकालीनायाः परिग्रहार्थं, तथाविधायाः कर्म्मापर्य्याप्तत्वात् । उत्तरदिने कर्म्मपर्य्याप्तापराह्णे व्याप्तिलाभाच्च । अतएव हारीतः ।

तथाहि ।

पुष्येण युक्तश्चन्द्रो यस्यां पौर्णमास्यां सा पौषी । सा यस्मिन् मासे

स पौषमासः। एवं माघादयोऽपि। तदाह पाणिनिः। नक्षत्रेण युक्तः कालः। सास्मिन् पौर्णमासीति संज्ञायामिति। न च सौर-सावनयोः एवंविधास्ति संज्ञा, एवंविध पौर्णमासीयोगनियमो वा अतः सांवत्सरिकादौ चान्द्र एव मासो ग्राह्यः।

यत् पुनर्व्वचनं।

यस्मिन्राशौ गते सूर्य्ये विपत्तिं याति मानवः।
तद्राशावेव कर्त्तव्यं पितृकार्य्यं मृताहनि॥

तदेतदधिमासविषयं।

अधिमासे विपत्तिश्चेत् सौरं मानं समाश्रयेत्।
स एव दिवसस्तस्य श्राद्धं पिण्डोदकादिषु॥

व्याख्यातो मासः। अस्यार्द्धं पक्षः। तिथिस्तु चान्द्रमहोरात्रं।

तदुक्तं ब्रह्मसिद्धान्ते।

सावनं स्यादहोरात्रमुदयादुदयो रवेः।
रवेस्त्रिंशत्तु राश्यंशस्तिथिसम्भोग ऐन्दवः॥

सूर्य्योदयात् सूर्य्योदयान्तरपर्य्यन्तं सावनमहोरात्रं। मेषादिसंज्ञ-कराशित्रिंशांशभोगो रवेः राश्यंशः सौरसंज्ञक इत्यर्थः। तिथिसम्भोग इति। यावता कालेन राशेर्द्वादशत्रिंशांशाश्चन्द्रमसा भुज्यन्ते तावत् कालस्तिथिसम्भोगः, तच्चान्द्रमहोरात्रं, तदेतत् प्रतिपदादिसंज्ञाभि-र्व्यवह्रियते। एवं मासोपलक्षितमासविशेषणत्रयोपेतं सावनमहोरात्रं मृताहशब्देनोक्तं वेदितव्यं।

इति क्षयाहनिर्णयः।

अथ क्षयाहद्वैधनिर्णयः।

तत्र क्षयाहश्राद्धतिथिद्वैधे कर्मकालव्यापिनी ग्राह्या।
यदाह व्यासः।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणं॥

यदा तु तिथिसाम्ये द्वयोरपि तिथ्योरपराह्णसम्बन्धस्तदानीं पार्व्वणेतिकर्त्तव्यताके सांवत्सरिके पूर्व्वैव तिथिः।

अपराह्णे पितृणान्तु या पराह्णानुयायिनी।
सा ग्राह्या पितृकार्य्ये तु न पूर्व्वाह्णानुयायिनी॥

भविष्यत्पुराणेऽपि।

व्रतोपवासनियमे घटिकैका यदा भवेत्।
सा तिथिः सकला ज्ञेया पित्र्ये चापराह्णिकीति॥

अस्तादिशब्दाश्चापराह्णपरा एव।
तथा च वृद्धमनुः।

यस्यामस्तं रविर्य्याति पितरस्तामुपासते।
तिथिस्तेभ्यो यतो दत्ता ह्यपराह्णे स्वयम्भुवा॥

मनुरपि। यस्यामस्तं रविर्य्याति पितरस्तामुपासते।
सा पितृभ्यो यतो दत्ता ह्यपराह्णे स्वयम्भुवा॥

अतएव शिवरहस्य-ब्रह्मवैवर्त्त-सौर-नारदीयपुराणेषु।

दर्शे च पौर्णमासे च पितुः सांवत्सरं दिनं।
पूर्व्वविद्धमकुर्व्वाणो नरकं प्रतिपद्यते इति।

यत्तु युग्माग्नियुगभूतानामित्यादि निगमवाक्यं, तद्व्रतोपवासादिविषयं ।

तदाह व्यासः ।

द्वितीयादिषु युग्मानां पूज्यता नियमादिषु ।
एकोद्दिष्टादिवृद्ध्यादौ वृद्धिह्रासादिचोदनादिति ॥

एकोद्दिष्टेत्यादि पैतृकश्राद्धोपलक्षकं । तदेवं तिथिसाम्ये पूर्व्वा ग्राह्येति सिद्धं । वैषम्ये तु आह बौधायनः ।

सा तिथिस्तदहोरात्रं यस्यामभ्युदियाद्रविः ।
वर्द्धमानस्य पक्षस्य ह्रासे त्वस्तमियाद्रविः ॥

क्षयाहमेव विषयीकृत्य स एवाह ।

अपराह्णद्वयव्यापिन्यतीतस्य यदा तिथिः ।
क्षये पूर्व्वा तु कर्त्तव्या वृद्धिकार्य्ये तथोत्तरा ॥
यत्तु व्याघ्रेण तिथिसाम्येऽपि परतिथिग्रहणमुक्तं ।
खर्व्वो दर्पस्तथा हिंसा त्रिविधन्तिथिलक्षणं ।
खर्व्वदर्पौ परौ पूज्यौ हिंसा स्यात् पूर्व्वकालिकीति ॥

'खर्व्वः' साम्यं । 'दर्पः' वृद्धिः । 'हिंसा' क्षयः । तदेतत्साम्यशास्त्रं क्षयाहव्यतिरिक्ततिथिविषयमास्तां ।

यच्च ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविरिति ॥

मार्कण्डेयवचनं ।

तत्तु शुक्लपक्षशब्दयोर्द्दैवपित्र्यकर्म्मोपलक्षकत्वात् दैवपित्र्यकर्म्म-

कालविभागमात्रपरत्वेन व्यवस्थापनीयं। तदेवं पार्व्वणैकसम्बन्धोऽपराह्णस्पर्शपराधीननिर्णयः। पार्व्वणेतिकर्त्तव्यताकस्य सांवत्सरिकस्यायमङ्गभूतः कालो विवेचितः। एकोद्दिष्टस्य माध्याह्निकत्वात् पूर्व्वोत्तरयोर्मध्याह्नस्पर्शपुरस्कारेणैव एकोद्दिष्टविधिं निर्व्वर्त्त्य सांवत्सरिकश्राद्धाङ्गकालनिर्णयो विधेयः।

तत्र मनुः।

पूर्व्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्व्वणं।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकं॥

हारीतोऽपि।

आमश्राद्धन्तु पूर्व्वाह्णे एकोद्दिष्टन्तु मध्यतः।
पार्व्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकं॥

वृद्धगौतमः।

मध्याह्नव्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत्।
अपराह्णव्यापिनी या पार्व्वणे सा तिथिर्भवेत्॥
मध्याह्नव्यापिनी या तु तिथिः पूर्व्वा परापि वा।
तस्यां पितृभ्यो दातव्यं ह्रासवृद्धौ न कारणं॥

इति क्षयाहद्वैधनिर्णयः।

अथ क्षयाहापरिज्ञाने सांवत्सरिकश्राद्धकालाः।

भविष्यत्पुराणे।

अरुण उवाच।

न जानाति दिनं यस्तु मासं वाप्यमराधिप।
मृतयोस्तु महाप्राज्ञ पित्रोस्तु स कथं नरः।

श्राद्धं करोतु वै ताभ्यां विधिवत् वत्सरात्मकम् ॥

अत्र पित्रोरित्युपलक्षणम् ।

आदित्य उवाच ।

मृताहं यो न जानाति मानवो विनतात्मज ।
तेन कार्य्यममावास्यां श्राद्धं सांवत्सरं नृप ॥

यस्य प्रोषितस्याप्रोषितस्य वा मृतस्य तिथिर्न ज्ञायते तस्य तन्मासामावास्यायां सांवत्सरिकं कार्य्यमित्यर्थः ।

तदाह वृहस्पतिः ।

न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति[१] ।
मासश्चेत् प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि ॥

प्रोषिते इत्यज्ञानकारणोपलक्षणम् । 'दर्शे' तन्मासामावास्यायां । 'मृताहनि' तत्र कर्त्तव्यन्तदितिशेषः ।

अस्मिन्नेव विषये एकादश्यां श्राद्धमाह मरीचिः ।

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृताहनि ।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः ॥

अत्र विशेषत इति कृष्णपक्षस्य प्रशस्ततरत्वाभिधानेन शुक्लपक्षोऽप्यनुज्ञायत इति गम्यते । ततश्च शुक्ल-कृष्णैकादश्योर्विकल्पे प्राप्ते एवं व्यवस्था । मासे पक्षे च विज्ञाते तिथिमात्रस्यापरिज्ञाने तस्य मासस्य तत्पक्षस्थितायामेकादश्यां श्राद्धं कार्य्यं, विज्ञायमानपक्षपरित्यागे कारणाभावात् । पक्षस्याप्यपरिज्ञाने कृष्णैकादश्यां तदलाभे शुक्लैकादश्यामपीति ।

---

(१) प्रोषिते संस्थिते सतीति ग० ।

भविष्यत्पुराणे।

दिनमेव विजानाति मासं नैव तु यो नरः।
मार्गशीर्षेऽथ वा भाद्रे माघे वाथ समाचरेत्[१]॥

यस्य तु मृताहः परिज्ञायते मासस्तु न ज्ञायते तस्य मार्गशीर्षे भाद्रपदे माघे वा तस्मिन्नहनि श्राद्धं कार्य्यं।

तदाह बृहस्पतिः।

यदा मासो न विज्ञातो विज्ञातं दिनमेव तु।
तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत्॥

यदा तु प्रोषितमृतस्य दिनमासावुभावप्यविज्ञातौ स्यातां तदा तत्प्रस्थानकालिकयोर्दिनमासयोस्तत्सांवत्सरिकं कार्य्यम्।

तदाह बृहस्पतिः।

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा॥

इत्यस्यायमर्थः। प्रस्थानतिथ्यज्ञाने तन्मासज्ञाने च तन्मासवर्त्तिन्याममावास्यायां सांवत्सरिकं, प्रस्थानतिथिज्ञाने मासाज्ञाने च मार्गशीर्षे माघे वा तस्यामेव तिथौ कुर्य्यात्। प्रस्थानतिथिमासयोरुभयोरप्यज्ञाने तु तन्मरणश्रवणकालिकयोस्तिथिमासयोः कुर्य्यात्। तदाह प्रचेताः। अविज्ञातमृते अमावास्यायां श्रवणदिवसे वा। 'श्रवणदिवसे' मरणवार्त्ताकर्णनतिथौ।

भविष्योत्तरेऽपि।

---

(१) माघे वा तद्दिनं भवेदिति ख०।

मृतवार्त्ताश्रुतौ ग्राह्यौ तौ पूर्व्वोक्तक्रमेण तु।

श्रवणतिथिस्मरणे च मार्गशीर्षे माघे वा तस्यामेव तिथौ कार्य्यं। श्रवणतिथिमासयोरुभयोरपि विस्मरणे माघस्य मार्गशीर्षस्य वा अमावास्यायां कार्य्यं।

तदुक्तं प्रभासखण्डे।

मृतस्याहो न जानाति मासं वापि कथञ्चन।
तेन कार्य्यममावास्यां श्राद्धं माघेऽथ मार्गके॥

'कथञ्चन' मरण-प्रस्थान-श्रवणरूपेण केन केनाप्युपलक्षणेनेत्यर्थः। भविष्योत्तरे।

प्रवासमन्तरेणापि स्यातान्तौ विस्मृतौ यदा।
तदानीमपि तौ ग्राह्यौ पूर्व्ववन्मृतकादिके॥

यस्य तु प्रोषितस्य मरणवार्त्ता तज्जीवनवार्त्तापि नागता पञ्चदशवर्षपर्य्यन्तमागमनं नास्ति तस्य तदूर्द्ध्वं पालाशीभिः समिद्भिः कुशैर्वा शरीरप्रतिकृतिं कृत्वा यथाविधि दाहसंस्कारं निर्व्वर्त्य तदानीन्तनपक्षमासतिथिस्पृष्टेऽहनि सांवत्सरिकं कर्त्तव्यमित्याह जातूकर्णः।

पितरि प्रोषिते यस्य न वार्त्ता नैव चागतिः।
ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तु प्रतिरूपकम्॥
कुर्य्यात्तस्य च संस्कारं यथोक्तविधिना ततः।
तदादीन्येव सर्व्वाणि शेषकर्म्माणि सञ्चरेत्॥

एतच्च प्रोषितमृतश्राद्धप्रयोगप्रकरणे विस्तरेण दर्शयिष्यते।

इति क्षयाहापरिज्ञाने सांवत्सरिकदिनकालः।

इति सांवत्सरिककालनिरूपणं।

अथ प्रेतश्राद्धानां कालाः ।

तत्र तावन्नवसंज्ञकानां श्राद्धानां, तत्र चान्तर्दशाहं क्रियमाणानां नवश्राद्धसंज्ञां निवेशयन्नाश्वलायनो दशाहपर्य्यन्तं नवश्राद्धसंज्ञकत्वमाह। नागरखण्डे भर्तृयज्ञः ।

त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतं ।
यत्र स्थाने भवेत् मृत्युस्तत्र श्राद्धं प्रकल्पयेत् ॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः ।
ततः सञ्चयनस्थाने तृतीयं श्राद्धमिष्यते ॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ।
दशमैकादशे चैव नवश्राद्धानि तानि च ।
वैतरण्यामसम्प्राप्तः प्रेतस्तृप्तिमवाप्नुयात् ॥

ब्रह्मपुराणे ।

तृतीयेऽहनि कर्त्तव्यं प्रेतदाहावनौ द्विजाः ।
सूतकान्ते गृहश्राद्धमेकोद्दिष्टं प्रचक्षते ॥

आह कात्यायनः ।

चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

व्यासः ।

प्रथमे सप्तमे चैव नवमैकादशे तथा ।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥

आह शङ्खः ।

आद्यं श्राद्धमशुद्धोऽपि कुर्य्यादेकादशेऽहनि ।

कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥

'आद्यं' नवं ।

पैठीनसिः ।

सद्यःशौचे प्रदातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

कूर्म्मपुराणे ।

प्रेताय च गृहद्वारि प्रथमे भोजयेद्द्विजान् ।
द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म्म सबान्धवैः ॥
चतुर्थे बान्धवैः सर्व्वैरस्थ्नां सञ्चयनं भवेत् ।
पूर्व्वान्विप्रान् प्रयुञ्जीत युग्मांस्तु श्रद्धया शुचीन् ॥
पञ्चमे नवमे चैव तथैवैकादशेऽहनि ।
युग्मांश्च भोजयेद्विप्रान् नवश्राद्धन्तु तद्विदुः ॥

ब्रह्मपुराणे ।

चतुर्थे ब्राह्मणानाञ्च पञ्चमेऽहनि भूभृतां ।
नवमे वैश्यजातीनां शूद्राणां दशमात्परे ॥

अत्रिः ।

प्रेतार्थं सूतिकान्ते तु ब्राह्मणान् भोजयेत्ततः ।
अत्र श्राद्धनिमित्तन्तु एकमेकादशेऽहनि ॥

एवंसत्येकादशाहिकान्नवश्राद्धादशौचान्तविधीयमानं ब्राह्मणभोजनं कर्म्मान्तरमिति गम्यते ।

वृहस्पतिः ।

चतुर्थेऽहनि विप्रेभ्यो देयमन्नं हि बान्धवैः ।

गावः सुवर्णं वित्तञ्च प्रेतमुद्दिश्य शक्तितः ॥

'चतुर्थे' सञ्चयाहनीत्यर्थः ।

यदिष्टञ्जीवतश्चासीत्तद्दद्यात्तस्य यत्नतः ।

तस्य प्रेतस्य जीवतो यत्किञ्चिदभीष्टमासीत्तद्दद्यादित्यर्थः ।

इति नवश्राद्धकालाः ।

अथ षोडशश्राद्धानीत्येवं प्रसिद्धानां प्रेतश्राद्धानां कालाः ।

तत्र ब्रह्मपुराणे ।

पितॄणान्त्यक्तदेहानां श्राद्धषोडश सर्व्वदा ।
चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥
ततो द्वादशभिर्म्मासैः श्राद्धा द्वादशसंख्यया ।
कर्त्तव्याः श्रुतितस्तेषां तत्र विप्रांश्च तर्पयेत् ॥

जातूकर्णः ।

द्वादश प्रतिमास्यानि आद्यं षाण्मासिके तथा ।
सपिण्डीकरणञ्चैव इत्येतच्छ्राद्धषोडशं ॥

षाण्मासिके इत्येतेन विहितयोः श्राद्धयोर्निरूपणार्थमाह ।

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनाः संवत्सराश्चैव स्यातां षाण्मासिके तदा ॥

एकेनाह्ना त्रिभिर्व्वा यदा षण्मासाः, न्यूनाः स्युः संवत्सराश्च तदा षण्मासाब्दिके कार्य्ये इत्यर्थः ।

भविष्यत्पुराणे ।

अस्थिसञ्चयने श्राद्धं त्रिपक्षे मासिकानि च ।

पैठीनसिः ।

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्व्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि च ॥

तथा ।

सपिण्डीकरणादर्व्वाक् कुर्य्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्य्यात्सर्व्वाणि तानि तु ॥

ब्रह्मपुराणे ।

द्वादशेऽहनि मासे च त्रिपक्षे च ततः परं ।
मासि मासि तु कर्त्तव्यं यावदावत्सरं द्विजाः ।
ततः परतरं कार्य्यं सपिण्डीकरणं क्रमात् ॥
कृते सपिण्डीकरणे चरमं प्रोच्यते पुनः ।
ततःप्रभृति निर्मुक्तः प्रेतत्वात् पितृताङ्गतः ॥

व्याघ्रपादः ।

एकादशे चतुर्थे च मासि मासि च वत्सरं ।
प्रतिसंवत्सरं चैवमेकोद्दिष्टं मृताहनि ॥

अग्निमत्प्रेतश्राद्धे विशेषमाह कात्यायनः ।

श्राद्धमग्निमतः कार्य्यं दाहादेकादशेऽहनि ।
ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्व्वदा ॥

त्रैपक्षिकादूर्द्धानि ध्रुवाणि ।

अतएवाह जातूकर्णः ।

ऊर्द्धं त्रिपक्षात् यच्छ्राद्धं मृताहन्येव तद्भवेत् ।
अधस्तु कारयेद्दाहमाहिताग्नेर्द्विजन्मन इति ॥

हारीतस्त्वसमर्थविषये मासिकानां कालविकल्पानाह ।

मुख्यं श्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति ।
द्वादशाहेन वा कुर्य्यादेकाहे द्वादशायवेति[१] ॥

तत्रोपरितने प्रकरणे वृद्धावुपस्थितायां सपिण्डीकरणापकर्षणं वक्ष्यते। तन्निबन्धनं मासिकानामपकर्षं अपुनरावृत्तिञ्च तत्रैव वक्ष्यामः ।

इति षोडशश्राद्धानीत्येवंप्रसिद्धश्राद्धानां कालः ।

अथ सपिण्डीकरणकालः ।

तत्र यथाकालं द्वादशसु मासिकेष्वनुष्ठितेषु पूर्णे संवत्सरे तदूर्द्धमौत्सर्गिकोऽनग्निसपिण्डीकरणस्य कालः ।

तथा च मार्कण्डेयपुराणे मासिकान्तानि श्राद्धान्युक्ताभिहितं ।

अथ संवत्सरे पूर्णे यथावत् क्रियते नरैः ।
सपिण्डीकरणं सम्यक् तत्रापि विधिरुच्यते ॥

अस्य च कालस्यानग्निमत्कर्तृकानग्निमद्दैवत्यसपिण्डीकरणाङ्गत्वं नैमित्तिकञ्च कालान्तरमुक्तं भविष्यत्पुराणे ।

सपिण्डीकरणं कुर्य्याद्यजमानो ह्यनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्व्वेद्युर्भरतर्षभ ॥

उक्तञ्च पुलस्त्येन ।

निरग्निः सहपिण्डत्वं पितुर्मातुश्च धर्म्मतः ।
पूर्णे संवत्सरे कुर्य्याद्वृद्धिर्व्वा यदि वा भवेत् ॥

वृद्धिश्चौड़मौञ्जीविवाहादिरूपोऽभ्युदयः ।

उपलक्षणञ्चैतन्नान्दीश्राद्धनिमित्तभूतस्य कर्म्ममात्रस्य । एतच्चा-

(१) द्वादशाहेन वा भोज्या एकाहे द्वादशापि चेति क० ।

धानाद्युपसंप्राप्ताविच्युशनोवचने "कर्त्तुं नान्दीमुखं" इति शाट्यायनिवचने च स्फुटीभवति। सैषा यस्मिन् दिने वृद्धिरापद्यते ततः प्रागेवापकृष्यसपिण्डीकरणं कृत्वा तदङ्गभूतं नान्दीमुखसंज्ञकं कुर्यादित्यर्थः। अनेन प्रवृत्ताधिकारस्यापरिसमापितप्रेतश्राद्धस्य चौड़-मौञ्जी-विवाहाधानादौ तदङ्गभूते च नान्दीश्राद्धेऽनधिकारोऽपि दर्शितः।

आह लघुहारीतः।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च।
सहपिण्डक्रियां कुर्यात्[१] कुर्य्यादाभ्युदयं ततः॥

नागरखण्डे।

ततः सपिण्डीकरणं वत्सरादूर्द्धतः स्थितम्।
वृद्धिर्वा गामिनी चेत् स्यात्तदर्वागपि कारयेत्॥

आधानाङ्गभूतान्नान्दीश्राद्धात् प्रागपकर्षमभिप्रेत्याहोशनाः।

पितुः सपिण्डीकरणं वार्षिकं मृतवत्सरे।
आधानाद्युपसंप्राप्तावेतत् प्रागपि वत्सरात्॥

अत्र चापकृष्यमाणसपिण्डीकरणे तदन्तमपकर्षं स्यादिति न्यायात् पूर्वाणि मासिकान्यपकृष्य सपिण्डीकरणं कर्त्तव्यम्।

वृद्धवसिष्ठोऽप्याह।

श्राद्धानि षोड़शादत्वा न तु कुर्य्यात् सपिण्डनम्।
तद्धानौ तु यतः प्रेतः पितृत्वं न प्रपद्यते॥

अपकर्षपक्ष एवैतत्। अनपकर्षे क्रमविधानादेव तत्सिद्धेः।

अतएव शाट्यायनिः।

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा।

---

(१) कृत्वा इति ख०।

अपकृष्य प्रकुर्व्वीत कर्त्तुं नान्दीमुखं द्विजः ॥

यत्तु लौगाक्षिवचनम् ।

यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
मासिकं चोदकुम्भञ्च देयं तस्यापि वत्सरमिति ॥

तत्तु तदन्तापकर्षन्यायेन कृतेष्वपि मासिकेषु "तान्येव तु पुनः कुर्य्यात्" इति कल्पसूत्रकारवचनोक्तपुनरनुष्ठानविषयत्वेन व्याख्येयम् । अपकृष्येत्यनुवृत्तावाहोशनाः ।

वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
स श्राद्धी नरके घोरे पितृभिः सह पच्यते ॥

अनुपस्थितायां वृद्धौ यः प्रेतश्राद्धान्यपकर्षेदित्यर्थाद् वृद्धिमन्तरेणानपकर्षोऽयं समर्थविषयः। असमर्थविषये तु वृद्धिश्राद्धप्रत्युपस्थानं विनाप्यपकृष्यमाणस्य च कालविकल्पानाह गोभिलः । "पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा यदहर्वा वृद्धिरापद्येत"। अत्र केचित् पूर्णे संवत्सरे यदहर्वा वृद्धिरापद्येतेत्येतयोः पक्षयोरनग्निकैकविषयत्वं । षण्मासे त्रिपक्षे वेत्येतयोस्तु साग्निकैकविषयत्वमिति व्यवस्थां मन्यन्ते। उद्भावयन्ति चात्र पैठीनसिवचनम् ।

त्रिपक्षेऽग्निमतः कालो वृद्धौष्टापूर्त्तकर्म्मसु ।
सपिण्डीकरणं कुर्य्यात् पूर्णे संवत्सरेऽपि वेति ॥

अग्निमत्सपिण्डीकरणकालप्रकरणे वक्ष्यमाणानि वचनान्युपन्यस्यन्ति। अत्रेदं वक्तव्यं । यद्यग्निमत्त्वविशेषणवतस्त्रिपक्षादिपक्षाः सन्ति, सन्तु तेऽस्य संवत्सरान्ते कर्त्तुं समर्थस्यापि मुख्यकल्पाः। अनग्निकत्वसामर्थ्यप्रयुक्ताः प्रकृते गोभिलवचनोक्तसंवत्सरपक्षेणैकवाक्यतां गताः

मन्तः सन्त्वनुकल्पाः। व्याघस्त्वग्निरहितानामपि सह षोड़शभिः श्राद्धैः सपिण्डीकरणस्य द्वादशाह एव प्रशस्तः काल इत्याह।

आनन्त्यात् कुलधर्म्माणां पुंसां चैवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते॥

इत्यनग्निकसपिण्डीकरणकालाः।

अथ साग्निकसपिण्डीकरणकालः।

तत्राह लघुहारीतः।

अनग्निस्तु यदा वीर भवेत् कुर्य्यात्तदा गृही।
प्रेतश्चेदग्निमान् यस्तु त्रिपक्षे वै सपिण्डनम्॥

अत्र गृही श्राद्धकर्त्ता यद्याहवनीयरहितः प्रेतश्चाहवनीयवान् भवेत् तदा स कर्त्ता तस्य प्रेतस्य मृताहदिवसादारभ्य पक्षत्रये पूर्णे सपिण्डीकरणं कुर्य्यात्।

तथा।

यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत्।
द्वादशाहे भवेत् कार्य्यं सपिण्डीकरणं सुतैः॥

अत्र मृताहादारभ्य द्वादशे दिने इति वेदितव्यम्।

आह कात्यायनः।

एकादशाहं निर्व्वर्त्य पूर्णे दर्शाद्यथाविधि।
प्राक् कुर्व्वीताग्निमान् विप्रो मातापित्रोः सपिण्डताम्॥

अस्याभिप्रायः। अग्निमता ह्यमावास्यायां पिण्डपितृयज्ञः पिण्डान्वाहार्य्यकं कर्त्तव्यम्। तच्च प्रमीतमातापितृकस्य सपत्नीकपित्रादिदैवतं। न चाकृतसपिण्डीकरणयोस्तयोर्दर्शश्राद्धादौ देवतात्वमुपपद्यते। तस्य

सपिण्डीकरणोत्तरकालिकत्वस्मरणात् । अतः पिण्डपितृयज्ञश्राद्धयो-र्लोपो माभूदिति मत्वा अग्निमान् विप्र एकादशाहकर्त्तव्यं प्रेतकार्य्यं निर्वर्त्य दर्शात् प्रागेव यस्मिन् कस्मिन्नप्यहनि मातापित्रोः सपिण्डी-करणं कुर्य्यादिति । विप्रग्रहणमुपलक्षणम् । क्षत्रियादिष्वपि न्यायस्य तुल्यत्वात् ।

पक्षान्तरमाह हारीतः । या तु पूर्व्वममावास्या तस्यामिति ।

अतएवाह जाबालः ।

सपिण्डीकरणं कुर्य्यात् पूर्व्वे दर्शेऽग्निमान् सुतः ।
परतो दशरात्रस्य पूर्णत्वे तु तथापरः ॥

मृताहमारभ्य यद्दशरात्रं तस्मात् परतो यः प्रथमो दर्शो भवेत् तस्मिन्नग्निमान् सुतः पित्रोः सपिण्डीकरणं कुर्य्यादित्यर्थः । दशरात्र-ग्रहणमशौचकालोपलक्षणार्थम् । तदेवं साग्निकस्य त्रयः सपिण्डी-करणकाला उक्ता भवन्ति । "द्वादशाहः, दशाहात् परकालीनाया अमावास्यायाः पूर्व्वं किमप्यहः, दशाहात् परामावास्या चेति" ॥

इति साग्निकसपिण्डीकरणकालाः । इति त्रैवर्णिकाणाम् ॥

अथ शूद्रस्य सपिण्डीकरणकालाः ।

तत्र सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ विष्णुः ।

मन्त्रवर्ज्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितमिति ।

अमावास्याश्राद्धकारिशूद्रविषयमेतदिति वृद्धाः । वचनबलादशौच-मध्य एव श्राद्धकरणं ।

इति शूद्रस्य सपिण्डीकरणकालाः ।

इति सपिण्डीकरणकालाः ।

तदेवमेते सपिण्डान्वाहार्य्यक-साधारणसंज्ञकोभयविध-पार्व्वण-वृद्धिकर्म्माङ्ग-काम्य-सांवत्सरिक-श्राद्धानां नवश्राद्धषोड़शश्राद्धानीत्येवं प्रसिद्धानां सपिण्डीकरणस्य चास्मिन् प्रकरणे कालाः प्रतिपादिताः । अथान्येषां श्राद्धकालेषु वक्तव्येष्विदमुच्यते। तीर्थश्राद्ध-शुद्धिश्राद्ध-दैविकश्राद्ध-यात्राश्राद्ध-जीवच्छ्राद्ध-गोष्ठीश्राद्धानान्त्वधिकारवाक्योपदिष्टा एव काला इति । ते विशेषाधिकारप्रकरण एव निरूपिताः । तत्र च अकाले काले वा तीर्थप्राप्तिस्तदनन्तरमेव तीर्थश्राद्धकालः। अकालेऽप्यथ काले वा तीर्थे श्राद्धं यथा नरैः। इति मत्स्यपुराणस्मरणात्। पापक्षयार्थकृच्छ्रादिव्रतसमाप्तौ शुद्धिश्राद्धकालः। "श्राद्धं कुर्य्याद्व्रतान्ते तु गोहिरण्यान्नदक्षिणाः।" इति जाबालवचनात्। प्रीणनीयतत्तद्देवताधिष्ठितं तिथिवारादिकं दैविकश्राद्धस्य कालः। तन्नित्यश्राद्धवच्छ्राद्धं दर्शादिषु च यत्नत इति भविष्यत्पुराणदर्शनात्। तीर्थयात्रादिनात् पूर्व्वदिनं, समापिततीर्थयात्रस्य गृहप्रवेशानन्तरदिनञ्च यात्राश्राद्धस्य कालः। गच्छेद्देशान्तरमित्यादिभविष्यत्पुराणस्य यः कश्चित्तीर्थयात्रामित्यादिब्रह्मपुराणाग्निपुराणयोश्च श्रवणात्। अरिष्टदर्शनानुमितमरणकालस्य मुमुक्षोरुत्तरकालः जीवच्छ्राद्धकालः। "जीवच्छ्राद्धं प्रकर्त्तव्यं" इत्यादिभविष्यत्पुराणादिप्रतिपादनात्। कस्यचिद्ब्राह्मणः समागमसमूहसमय एव गोष्ठीश्राद्धकालः। गोष्ठ्यां यत् क्रियते श्राद्धमित्यादिभविष्यत्पुराणोक्तेः। सन्न्यासाङ्गानां षोड़शश्राद्धानां दैवादिश्राद्धाष्टकदिनात् प्राचीनदिनमेव कालः। दैवादीनान्तु सन्न्यासादित्यादिस्मरणात् ।

इति देवताप्रकरणं निरूपितं ।

अथातः सन्न्यासविधिं व्याख्यास्यामः।

पूर्व्वेद्युर्नान्दीमुखं श्राद्धमित्यादिना शौनकवचनेन दुर्मरणमृतानां पातकविशेषवतां मृताहमारभ्य संवत्सरे पूर्णे या काचिच्छुक्लैकादशी स एव नारायणबलिसंज्ञकस्य श्राद्धस्य कालः।

तथाच भविष्योत्तरे दुर्मृत्युमृतान् पापविशेषकारिणश्चानुक्रम्योक्तं।

पूर्णे संवत्सरे तेषामथ कार्य्यं दयालुभिः।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिमित्यादि॥

इति तीर्थश्राद्धादिकालाः।

इति वैशेषिकश्राद्धकालाः।

अथ मुख्यकालातिक्रमकालाः।

ते च गौणा वाचनिकानुकल्पिकाश्चेति द्विप्रकाराः। तत्रेदं तावद्विचार्य्यते। मुख्यकालासम्भवे गौणकालग्रहणं कार्य्यं न वेति। ननु को मुख्यः को वा गौणः। यो विहितः स मुख्यः। यथा वृद्धिश्राद्धादौ प्रातरादिः। यस्त्वविहितः तत्समीपवर्त्ती तेष्वेवाङ्गभावं नीयमानः सङ्गवादिर्गौणः।

तदाह त्रिकाण्डमण्डनः।

स्वकालादुत्तरो गौणः कालः पूर्व्वस्य कर्म्मणः।
यदागामिक्रियामुख्यकालस्याप्यन्तरालवत्।
गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्म्मणीति॥

अस्यार्थः। पूर्व्वोत्तरयोः कर्म्मणोर्यः स्वकालस्तस्मादुपरितनः। उत्तरकर्म्मस्वकालाच्च पूर्व्वभावी पूर्व्वापरयोः कर्म्मणोरन्तरालकाल

इति यावत्। स पूर्व्वस्मिन् कर्म्मणि गौणो ज्ञेयः। यदा यथोक्ता-न्तरालवदागामिक्रियामुख्यकालस्यापि पूर्व्वस्मिन् कर्म्मणि गौणकालतां मन्यन्त इति। कथं पुनरुत्तरकर्म्मकालस्य पूर्व्वकर्म्मानुष्ठानाग्रहणमा-शङ्क्येत येन स्वकालात् प्रच्युतं पूर्व्वं कर्म्म तावद्विनष्टप्रायं उत्तरञ्च स्वकालाप्रच्युतत्वादविनष्टरूपं। तत्र यद्युत्तरकर्म्मकाले पूर्व्वं क्रियते तदा विनष्टसमाधानार्थमविनष्टविनाशनं प्रसज्येत। तन्मृतजीवना-शया जीवनमरणस्योपक्रमः। उत्तरकर्म्मकाले द्वयोरवकाशे सतीद-मुच्यते न पुनरसत्यपि तस्मिन्निति। ननु मुख्यकालसमीपवर्त्तिनः कालस्याभिधेयाविनाभूतप्रवृत्तिलभ्यत्वाल्लाक्षिकमेवोचितं। सत्यमेव। तथापि तत्र बालातपकालोपलक्षणीभूतयातपमार्दवादिगुणोपनीतया लौकिक्या प्रातरादिशब्दप्रवृत्त्या तस्य गौणत्वोक्तिर्न विरुध्यते। ननु तस्यानुपदेशात् कथं ग्राह्यत्वमाशङ्क्यते। प्रतिनिधिन्यायेनेति ब्रूमः। नन्वेवं तर्हि यथाकथञ्चित् सादृश्यान्मध्याह्नादावपि कदाचित् प्रात-रादिशब्दाः प्रसज्येरन्। किमत्रानिष्टं, क्रियत एव हि कदाचिदत्यन्त-सादृश्यवतः प्रचुरगौणप्रयोगसङ्गिनः सङ्गवादेरलाभे। तदेवम-स्मिन् संशये क्वचित् पूर्व्वाह्णे दैविकं श्राद्धमित्यादिकालसंयुक्ते वाक्ये कालं प्रति कर्म्मणो गुणभावेन विधानं मत्वा प्रधानभूतविहितकाला-तिक्रमे गुणभूतकर्म्मानुग्रहाय कालान्तरानुष्ठानं न कार्य्यमिति पूर्व्वपक्षमभिप्रेत्य सिद्धान्तितवान्। काले हि कर्म्म चोद्यते न कर्म्मणि कालः। अतः कर्म्मणामेव प्राधान्यं कालमनूद्य कर्म्मणो विधानात्। ततः कर्म्म प्रति गुणभूतविहितकालातिक्रमे प्रधानभूतकर्म्मानुग्रहार्थं गौणकालेऽप्यनुष्ठानं कार्य्यं। कालहानेः कर्म्मणोऽपि त्यागस्यान्याय-

त्वात् । न ह्येकव्यञ्जनविनाशे भोजनमेव संत्यज्यत इति । तदयुक्तं । न तावत्कर्म्मगुणीभावेनाच पूर्व्वपचो घटते । कर्म्मणः फलसम्बन्धात् । फलवत्सन्निधावफलं तदङ्गमिति न्यायेन कालस्यैवाङ्गत्वात् । न च कर्म्मणः कालार्थतया परार्थत्वात् फलश्रुतिरर्थत्वानुवाद इति वाच्यं । कालस्य फलवत्कर्म्मार्थत्वावगमाभावात् । नापि कालभावस्य गुणीभावेनोक्तः सिद्धान्तो घटते । असिद्धहेतुत्वात् सोपन्यासात् । न ह्यत्र कालानुवादेन कर्म्म विधीयते । कालस्यान्यतः प्राप्तिविरहात् । ननु कालस्य वाक्यान्तरेण प्राप्त्यभावेऽमावास्यादिरूपेण लोकव्यवहाराय देवज्ञातस्यानुवादो भविष्यति । मैवं । लोकसिद्धकालस्वरूपानुवादेन कर्म्मविधौ तस्य स्वयमेव फलतया फलवत्कर्म्माङ्गत्वाभावेन च विधेरानर्थक्यप्रसङ्गः स्यात् । किञ्चास्मिन् कर्म्मण्युद्देश्यस्य कालस्य न कर्म्मान्तरसम्बन्धो घटते । तस्यैतत्कर्म्मानुष्ठानानन्तरमेव विवचितत्वात् । नन्वेवं तर्हि यजेत स्वर्गकाम इत्यत्रापि स्वर्गकामिनमनूद्य यागविधेरवधारणात्कथं न विधेरानर्थक्यं । उच्यते । यद्यपि स्वर्गकामस्योद्देश्यतया वाक्यान्वयस्तथापि भावनायाः प्रथमं भाव्यस्यापेक्षणत्वात् पुरुषस्यैव सिद्धरूपतया तदनर्हत्वात् स्वर्गकामवत्कामनाविषयभूतः स्वर्ग एव साध्यत्वेन समर्थ्यते । स्वर्गकामस्तु पूर्व्वसिद्ध एवानूद्यते । यथा लोहितोष्णीषाऋत्विजः प्रचरन्तीत्यादौ विशेष्याणामृत्विजां प्राप्तत्वादप्राप्तविशेषणमात्रपरं वाक्यं, एवमिहापि ।

तदुक्तं मण्डनमिश्रैः ।

अपेक्षितत्वाद्भाव्यस्य कामशब्दा हि तत्पराः ।
विशेषणप्रधानत्वं दण्डीत्यादिषु दर्शितमिति ॥

अतः कालानुवादेन तत्र कर्म्मविधिरित्युक्तं। तदेवं यथोक्तपूर्व्वापरपक्षावयुक्तैकावच तर्हि तौ युक्तौ उच्येते। तत्र तावत् पूर्व्वपक्षः। नित्यनैमित्तिकेषु आवश्यकत्वेन प्राप्तेषु तादृग्विधस्वरूपनिर्व्वाहार्थं यथा शक्नुयादित्युपबन्धे विहितायां सम्पत्तौ तत्सदृशप्रतिनिधिग्रहणं कर्त्तव्यमिति स्थिते मुख्यकालासम्पत्तौ गौणकालग्रहणं कार्य्यम् ।

तदाह त्रिकाण्डमण्डनः ।

मुख्यकाले यदावश्यं कर्म्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्यत्रेदृशो भवेदिति ॥

'ईदृशः' मुख्यकालसदृशः । अनेनास्य प्रतिनिधित्वयोग्यता दर्शिता । स्मृतयोऽपि गौणकालग्रहणं दर्शयन्ति ।

यथाकथञ्चित्कर्त्तव्यं नित्यं कर्म्म विजानता ।
न प्राप्तेऽस्य विलोपोऽस्ति पैतृकस्य विशेषत इति ॥

तथा ।

दिनोदितानि कर्म्माणि प्रमादादकृतानि वै ।
यामिन्याः प्रहरं यावत्तावत् सर्वाणि कारयेत् ।
सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ॥

इत्यादिकः स्मार्त्तसन्ध्यादिकालविशेषनिषेधश्चागौणत्वेन तत्कालग्रहणप्राप्तौ सत्यामेवावकल्पते । नित्यनैमित्तिके च यथा कुर्य्यादित्युपबन्धसामर्थ्यान्नित्यवदाम्नातान्यप्यङ्गान्यनित्यानि भवन्ति ।

तदाह पैठीनसिः।"प्रधानसहितान्यङ्गानि भवन्ति न भवन्ति चेति"।

ननु यदि मुख्यकालातिक्रमे गौणकालग्रहणमविरुद्धं तर्हि दर्शपौर्णमासपार्व्वणश्राद्धादीनाममावास्यादिविहितकालालाभे पञ्चम्या-

दिकर्त्तव्यत्वं प्रसज्येत। का नामैषा प्रसक्तिः। अभिमतमेव हि गौण-कालस्वीकारवादिनस्तदनुष्ठानं। एतच्च गौणकालग्रहणं न काम्येषु। तत्र हि सर्व्वाङ्गोपसंहारशक्तस्यैवाधिकारप्रतिपादनात्। गौणकालग्रहणेन कर्म्मानुष्ठाने कश्चिद्विशेषस्त्रिकाण्डमण्डनेनोक्तः। प्रसङ्गादुच्यते। गौणेष्वेतेषु कालेषु कर्म्म चोदितमाचरेत्। प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्। कालान्तरे चोदितं कर्म्मैतेषु पूर्व्वोक्तलक्षणेषु गौणेषु कालेष्वाचरन् प्रायश्चित्तप्रकरणोक्तां निष्कृतिं प्रायश्चित्तमाचरेत्। पक्षान्तरमपि तेनैवोक्तं। "प्रायश्चित्तमकृत्वा वा गौणकाले समाचरेत्"। अत्राकृत्वा इत्यत्र पूर्व्वकालताप्रतीतिरविवक्षिता। तदेवं गौणकालग्रहणे प्राप्ते विधीयते। सर्व्वत्र सप्तम्यन्तनिर्द्दिष्टकालस्यानुपादेयत्वेनोद्देश्यैकस्वभावस्य निमित्तत्वेनाभिधानादधिकारिविशेषणत्वे विहितकालमन्तरेणाधिकाराभावात् कालान्तरे कृतमकृतमेव स्यादिति गौणकालग्रहणं न कार्य्यं। विहितकालाभावे चाधिकाराभावः सान्तपनीयाधिकरणे प्रापणावनिमित्तस्येत्यत्र सूत्रे प्रतिपादितः।

अतएव लौगाक्षिः।

गणितात् ज्ञायते कालः काले तिष्ठन्ति देवताः।
वरमेकाहुतिः काले नाकाले लक्षकोटयः॥

यत्तु त्रिकाण्डमण्डने।

गौणकालग्रहणमुक्तं तत्पूर्व्वपक्षन्यायशैवसिद्धान्तमभिमन्य नोक्तमित्युपेक्षणीयं। यत्तु यथाकथञ्चिदित्यादि स्मरणं न तत्र गौणकालग्रहणं प्रतिपद्यते किन्त्वग्रहणमेव। यतस्तस्यायमर्थोऽवगम्यते। स्वकालं प्राप्तस्य कर्म्मणो मुख्यद्रव्याद्यसम्पत्तिवशात् लोपोऽननुष्ठानं न कार्य्यं।

किन्तु स्वकाल एव यथाकथञ्चिन्मुख्यद्रव्यादिसदृशद्रव्यान्तरोपादानेन किञ्चिद्विफलमपि कर्त्तव्यमिति। यच्च दिनोदितानि कर्म्माणीत्यादिवचनं, तेन न सर्व्वेष्वपि कर्म्मसु सर्व्वेषाञ्च गौणकालानां गौणत्वप्रयुक्तया ग्रहणमुच्यते। किन्तु केषुचिदेव कर्म्मसु किञ्चिदेव कालान्तरमनुकल्पत्वेन मुख्यकालवन्न्यायादप्राप्तमेव विधीयते। अतान्येव तद्वचनबलेन संवत्सरर्त्तुमासतिथ्यादिकालविशेषविहितानि कर्म्माणि तत्कालातिक्रमे कालान्तरेऽपि कर्त्तुं युज्यन्ते। यस्तु सन्ध्यारात्र्योः श्राद्धनिषेधः सोऽपि रागप्राप्तस्य भक्षणादेरिव न्यायाभासादिना प्राप्तस्योपपद्यते। अथवा "द्रव्यं ब्राह्मणसम्पत्तिः श्राद्धं प्रति रुचिश्च ह। अकाले यदि वा काले तीर्थश्राद्धं सदा नरैः। प्रातरेवाह्नि कर्त्तव्यं" इत्यादिभिरपराह्णव्यतिरिक्तकालप्राप्तस्य श्राद्धस्य सन्ध्यादिकालेष्वयं प्रतिषेधः। यत्तु मुख्यकालातिक्रमे नित्यनैमित्तिकानां गौणकालेऽनुष्ठानं दृश्यते तत् क्वचित्तु गर्हापरिहारमनःपरितोषाद्यर्थं, क्वचिच्चानुकल्पत्वेन कालान्तरविधेरित्यनवद्यम्। उपदिष्टकालातिक्रमे चाधिकाराभावादेव मुख्यद्रव्यालाभान्मुख्यकालातिक्रमो न कार्य्यः। एतदेव च सन्देहपूर्व्वकमुपन्यस्य त्रिकाण्डमण्डने निश्चितं। मुख्यकाले हि मुख्यञ्चेत्स्यात् कालातिक्रमो न कार्य्यः। धनं नैव लभ्यते चेत्कालद्रव्ययोः कस्य मुख्यत्वं गौणतापि वा।

मुख्यकालमुपश्रित्य गौणमप्यस्तु तद्धनं।
न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणं॥

तदेवमेतत्सिद्धवचनमन्तरेण गौणग्रहणं न कार्य्यं। सति तु वचने गौणस्य तस्मात्परस्यापि वा कार्य्यमिति।

तत्राह ऋष्यशृङ्गः ।

देये पितॄणां श्राद्धे तु अशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं विधीयते ॥

मुख्यकालिकोपक्रमात् प्राग्यदा श्राद्धाधिकारिणामशौचं जायते । तदा मुख्यकालप्रत्यासन्ने अशौचेन चादूषिते अशौचापगमानन्तरकाल एव पैतृकं कर्म्म कार्य्यमित्यर्थः ।

यत्त्विवचनं ।

तदहस्चेत् प्रदुष्येत केनचित्सूतकादिना ।
सूतकानन्तरं कुर्य्यात् पुनस्तदहरेव वेति ॥

तत्र तिथिपक्षादिशब्दोक्तनिमित्तान्तरविघ्निते मुख्यकालविषये इति पूर्व्ववचनाविरोधाय कल्पनीयं । एतच्च पक्षान्तरत्रयाहक्रियमाण-प्रतिमासिक-श्राद्धविषयं । तत्र मासस्पृष्टकालाभावेऽपि पक्षतिथिमा-सस्पृष्टस्यापि ग्राह्यत्वात् । अतएवाह देवलः । पक्ष इति मृतकसूत-काभ्यां मृताहोपघाते तदतिक्रम्याशौचनिवृत्तौ श्राद्धं कर्त्तव्यमित्युक्तं । तत्पाकोपक्रमान्निमन्त्रणाद्वा पूर्व्वमेवाशौचविज्ञाने सति नोत्तरकालं । तथा च ब्रह्मपुराणे ।

गृहीतमधुपर्कस्य यजमानस्य चर्त्विजः ।
पश्चाद्शाहे पतिते नाशौचमिति निश्चयः ॥
तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।
स्नानमवभृथे यावत्तावत्तस्य न विद्यते ॥
निवृत्ते कृच्छ्रहोमादौ ब्राह्मणादिषु भोजने ।
गृहीतनियमस्यापि न स्यादन्यस्य कस्यचित् ॥

नैष्ठिकस्याथवान्यस्य भिक्षार्थं प्रस्थितस्य च ।
वानप्रस्थस्य वान्यस्य साधिकारस्य सर्वदा ।
प्रतिग्रहाधिकाराच्च निवृत्तस्य न विद्यते ॥
गोमण्डलादौ वैश्यानां रक्षाकालात्ययादपि ।
निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि ॥
निमन्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च ।
देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ॥
अपि दातृगृहीत्रोश्च सूतके मृतके तथा ।
अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कदाचन ॥
विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं तथा ।
भोजनार्द्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ॥
यदा कश्चित्तदोच्छिष्टशेषन्त्यक्त्वा समाहितः ।
आचम्य परकीयेन जलेन शुचयो द्विजाः ॥
विवाहयज्ञयोर्मध्ये सूतके सति चान्तरा ।
शेषमन्नं परैर्देयं दातृन् भोक्तृंश्च न स्पृशेत् ॥

अत्र "निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्म्मणि" इति तद्वयोपन्यासात् पाकारम्भात् प्राक् यदा निमन्त्रणात् प्रभृत्या कर्म्मसमाप्तेरा शौचाभावः, यदा तु पाकात्पूर्व्वं निमन्त्रणं कृतन्तदा पाकारम्भप्रभृत्या कर्म्मसमाप्तेराशौचाभावः तदादिपाकोपक्रमस्यैव प्रथमावयवरूपत्वेन श्राद्धारम्भाभावत्वं । भोजनार्द्धे तु सम्भुक्ते यदि दातुः कश्चिद्विपद्यत इत्येतस्य तत्कालमृतदातृसपिण्डनिबन्धनाशौचविषयत्वेन श्राद्धगृहमृताशौचविषयत्वेन वा निमन्त्रितेषु विप्रेष्वित्यादिना पूर्व्वोक्तेन सह

विरोधपरिहारो विधेयः। शेषमन्नं परैर्देयमित्येतत्तु भोक्तृगृह-व्यतिरिक्तजन्ममरणविषयं। दातृन् भोक्तृंश्च न स्पृशेदित्यत्र दोष इति शेषः।

आह क्रतुः।

पूर्व्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति।

उक्तमिदमशौचदूषितेऽधिकारिणि मुख्यकालमतिक्रम्याशौचनिवृत्तौ श्राद्धं कर्त्तव्यमिति। गृहमेधिनस्य भार्य्यया सहैवाधिकारात्तस्यां रजोदर्शननिबन्धनाशुचित्त्वदूषितायां मुख्यकालमतिक्रम्याशुचित्वनिवृत्तावेव श्राद्धे कर्त्तव्ये प्राप्ते रजस्वलापतिनैवैकाकिना मुख्यकाल एवामश्राद्धं कर्त्तव्यमित्याहोशनाः।

अपत्नीकः प्रवासी च यस्य भार्य्या रजस्वला।

सिद्धान्नेन न कुर्वीत आमं तस्य विधीयत इति॥

अस्यामद्रव्यश्राद्धविधेः क्वचिदुपसंहारपूर्व्वकमपवादः। "श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितं। अमावास्यादिनियतं मासं संवत्सरादृते"। मासिकसांवत्सरिकविषये आमश्राद्धनिषेधः। मृताहे प्राप्ते यस्य भार्य्या रजस्वला भवति तस्मिन्नेव दिने अन्नेनैव श्राद्धं कुर्य्यात् नामेन कालान्तरे वा।

स्मृत्यन्तरे।

आब्दिके समनुप्राप्ते यस्य भार्य्या रजस्वला।

पञ्चमेऽहनि तच्छ्राद्धं न कुर्य्यात्तन्मृतेऽहनि॥

तद्भर्तुः प्रत्याब्दिके अपुत्रा पत्नी स्वयमेव श्राद्धकर्त्री यदि। "अपुत्रा तु यदा भार्य्या सम्प्राप्ते भर्त्तुराब्दिके। रजस्वला भवेत्सा

ह्नि तत् कुर्यात् पञ्चमेऽहनि" इति गौतमस्मरणात् यद्भार्य्यारजोदर्शनादिरूपे श्राद्धविघ्ने सत्यामश्राद्धं कर्त्तव्यमिति प्रकीर्त्तितं तदमावास्यादिकालिकमेव न तु यन्मृताहकालिकं मासिकं सांवत्सरिकञ्च तदपीत्यर्थः। किन्तु तत् पक्वान्नेनैव कर्त्तव्यम्। तच्चैकभार्य्येण।

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्य्यात् प्रयत्नतः॥

'अन्यस्मिन्' अनन्तरे मासि। 'तत्तिथौ' मृततिथौ 'तस्मिन्' शुक्ले कृष्णे वा मृतस्तस्मिन् पक्षे। श्राद्धं विघ्नवशादतिक्रान्तं कुर्य्यादित्यर्थः। यदि विघ्न इत्यत्रापि ऋष्यशृङ्गवचनाविरोधायाशौचव्यतिरिक्तनिमित्तेनेति विशेषो द्रष्टव्यः। अशौचनिमित्तेन विघ्ने जाते मासिकविषयेऽपि सूतकानन्तरमेव श्राद्धानुष्ठानं ऋष्यशृङ्गवचनोक्तमनुसन्धेयं। अतएव देवस्वामिनाप्युक्तं। एतत् ऋष्यशृङ्गवचनं सूतकाशौचविषयं, निमित्तान्तरैस्तु तदहर्विघाते "एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते" इत्यादि स्मृत्यन्तरवचनमिति।

यत्पुनर्व्यासवचनं।

श्राद्धविघ्ने समुत्पन्ने अन्तरामृतसूतके।
अमावास्यां प्रकुर्वीत शुद्धावेके मनीषिण इति॥

'अन्तरामृतसूतके' श्राद्धप्रयोगमध्ये पाकोपक्रमात् प्राक् मृतके सूतके वा जाते। 'अमावास्यां' अमावास्यायां। 'शुद्धौ' शुद्ध्यनन्तरं। एतदविज्ञातमृताहसांवत्सरिकश्राद्धविषयम्। अमावास्याग्रहणं शुक्लैकादश्याः कृष्णैकादश्याश्चोपलक्षणम्।

अतएव मरीचिः।

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यान्तु कर्त्तव्यं कृष्णपक्षे विशेषतः ॥

कृष्णपक्षे या एकादशी तस्यां विशेषतः कर्त्तव्यमित्यन्वयः। पितृकार्य्येषु कृष्णपक्षस्यैव ग्राह्यत्वात्। कृष्णैकादशीतोऽप्यमावास्यायाः पितृकार्य्यश्रैष्ठ्यं दण्डापूपन्यायसिद्धम्बोद्धव्यम्। यत्तु षट्त्रिंशन्मतं।

मासिकाब्दे तु सम्प्राप्ते अन्तरामृतसूतके(१)।
वदन्ति शुद्धौ तत्कार्य्यं दर्शे वापि विचक्षणा इति ॥

तावतोक्तान्येव तु पुनः कुर्य्यादिति विहितानुमासिकश्राद्धविषयं। एकोद्दिष्टरूपमासिके पूर्व्वमेवानुकल्पस्योक्तत्वात्। अत्र शुद्ध्यनन्तरकालो मुख्यकालप्रत्यासन्नत्वाच्छ्रेष्ठः। दर्शकालस्तु ततो जघन्यः। मुख्यकालप्रत्यासत्त्यभावादिति मन्तव्यं।

तथा च ऋष्यशृङ्गः।

शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।
सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचनेति ॥

अयमर्थः। शुचीभूतेन ताद्दातव्यं। तेन मुख्यकाले शुद्ध्यसम्भवे शुद्ध्यनन्तरं या तिथिः प्रतिपद्यते लभ्यते सा तिथिस्तस्य कर्त्तव्या कर्म्माङ्गतया नेया। या मुख्या तिथिरशौचदूषिता कदाचन सा नानुष्ठेयेति। अशौचादूषिता तु मुख्या तिथिः सदानुष्ठेयेति।

तिथिच्छेदो न कर्त्तव्यो विनाशौचं यदृच्छया।
पिण्डं श्राद्धञ्च दातव्यं विच्छित्तिं नैव कारयेदिति ॥

'यदृच्छया' स्वेच्छया, 'श्राद्धं' ब्राह्मणतर्पणं, चशब्देनाग्नौकरणमपि

(१) मासिके चाब्दिके त्वद्धि संप्राप्ते मृतसूतके इति (ख०)

कर्त्तव्यमिति,समुच्चित्येति। श्राद्धशब्देनात्र ब्राह्मणतर्पणमात्रमुपचारा-दुच्यते। न तु मुख्यार्थतया। अग्नौकरण-ब्राह्मणतर्पण-पिण्डदानात्मककर्मत्रितयसमुदायस्यैव मुख्यार्थत्वात्। विच्छित्तिं नैव कारयेदित्यस्यायमर्थः। कृत्स्नस्य श्राद्धशब्दार्थस्य कर्तुमशक्यत्वेऽपि तद्देशमात्रं वा यथासामर्थ्यं कुर्य्यात्। सर्वथा कर्मविच्छित्तिं नैव कुर्य्यादिति।

अतएव निगमः।

आहिताग्नेः पित्रर्चनं पिण्डैरेव ब्राह्मणानपि वा भोजयेदिति। तत्र यथासामर्थ्यं व्यवस्था। ततश्च द्वितीयपक्षासामर्थ्ये प्रथमोक्तप्रतीतिर्जायते। तद्बाधो मा भूदित्येतदर्थमेवमभ्युपगन्तव्यं। ननु दर्शयिष्यमाणैस्त्रिधाचतुर्धादिविभागवचनैर्यौगिको दृष्टान्तसाहूप्यकल्पनामूलकस्य विभागो बाध्यताम्। सत्यं। पारिभाषिकस्य प्रत्यक्षवचनोपदिष्टस्य चानवकाशत्वेन प्रत्यक्षत्वेन च यौगिकात् काल्पनिकाच्च बलीयस्त्वादेव बाधः। किन्तु परिभाषया यौगिकस्य बाधोमा भूदित्येतदर्थमेव योगसिद्धोऽप्यर्थः।

स्कान्दपुराणे।

आवर्त्तनात्तु पूर्व्वाह्णो ह्यपराह्णस्ततः परमिति।

'आवर्त्तनं' दिनम्, इति द्विधाविभक्तस्याह्नो द्वितीयो यो भागोऽपराह्ण इत्येकं मतम्। अथ त्रिधाविभक्तस्याह्नस्तृतीयोभागोऽपराह्ण इत्यपरं मतं। उच्यते तत्र श्रुतिः। पूर्व्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणां। तस्मादपराह्णे ददातीति। अत्र पञ्चदशमुहूर्त्तात्मकदिवसस्य पञ्चदशमुहूर्त्तपरिमितं पूर्व्वाह्णादिनाम्नस्त्रीन् भागान् परिकल्प्य क्रमाद्दैवमानुषपैतृकेषु कर्म्मसु विनियुङ्क्ते श्रुति-

रितिप्रतीतिर्जायते। अत्रापराह्नकाले विहितस्य पार्व्वणश्राद्धस्य वासरतृतीयांशमानतः कर्त्तव्यतोपदेशकालं विनियोगप्रकरणे दर्शयिष्ये । सोऽपि त्रिधाविभक्तस्याह्नस्तृतीयोभागोऽपराह्न इत्यन्यत्रप्रदर्शनेनानुसन्धेयः, इति सहाधिकारिभार्य्यादूषणाद्भार्य्यान्तरस्य वा रजस्वलाभावे तद्विषयवचनाभावाद्रजोदर्शनरूपविघ्नापगमकाल एव कर्त्तव्यम्। स चोक्तः प्रभासखण्डे ।

संशुद्धा स्याच्चतुर्थेऽह्नि स्नाता नारी रजस्वला ।
दैवे कर्म्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

स्मृत्यन्तरे ।

मृतेऽहनि तु सम्प्राप्ते यस्य भार्य्या रजस्वला ।
श्राद्धन्तदा न कर्त्तव्यं कुर्य्यात्तत् पञ्चमेऽहनि ॥

अधिकारिभार्य्यान्तरयुक्तेन त्वधिकारानपगमान्मुख्यकाल एव कर्त्तव्यं ।

इति मुख्यकालातिक्रमे कालाः ।

अथात्र कस्मिंश्चिच्छ्राद्धे प्रातःकालः। कस्मिंश्चित् पूर्व्वाह्णः कस्मिंश्चिन्मध्याह्नः कस्मिंश्चिदपराह्णो विहितः। सायङ्कालस्तु निषिद्धः। अतस्तद्विवेकार्थं पूर्व्वाह्णादपराह्णो विशिष्यत इति। नन्वत्र श्राद्धविषये पूर्व्वाह्णादपराह्णस्य वैशिष्ट्यमात्रमुच्यते। न पुनरहः द्विधा विभज्य पूर्व्वभागस्य पूर्व्वाह्णसंज्ञकत्वमिति। अथोच्यते। द्विधा विभक्तस्य मासस्य भागौ पूर्व्वापरौ पक्षौ भवतः। तौ चात्र दृष्टान्तीकृतौ स्वसारूप्यादह्नोऽपि द्विधाविभक्तस्य पूर्व्वापरयोर्भागयोः पूर्व्वापराह्णसंज्ञकत्वङ्गमयत इति। तत्र वैशिष्ट्यमात्रेण सारूप्यादृष्टान्तत्वोपपत्तेः। सत्यं। तथाविभागान्तरानुपादानात् सर्व्वसारूप्यानुरोधाच्च

विवक्षितविभागप्रतीतिर्जायते । तद्बाधो मा भूदित्येतदर्थमेवमभ्युपगन्तव्यं ।

इति त्रिधा विभक्तस्य तृतीयोभागोऽपराह्न इति मतं ।

अथ विषमैर्भागैश्चतुर्द्धा विभक्तस्य तृतीयोभागोऽपराह्न इत्यपरं । तथा च गोभिलः ।

पूर्व्वाह्णं प्रहरं सार्द्धं मध्याह्नं प्रहरं तथा ।
आ तृतीयादपराह्णं सायाह्नश्च ततः परमिति ॥

अत्र सूर्य्योदयात् प्रभृति सार्द्धप्रहरपरिमितं दिनभागं पूर्व्वाह्णम् । तदूर्द्धं प्रहरपरिमितं मध्याह्नं । तदूर्द्धं तृतीयप्रहरसमाप्तिपर्य्यन्तमर्द्धप्रहरपरिमितमपराह्णं । तदूर्द्धं प्रहरमात्रं सायाह्नमाहुरित्यर्थः ।

इति चतुर्द्धा विभक्तस्य तृतीयोभागोऽपराह्न इति मतं ।

अथ समविभागैः पञ्चधा विभक्तस्याह्नश्चतुर्थोभागोऽपराह्न इत्यपरमपि मतं ।

तत्र शतपथश्रुतिः ।

आदित्यस्यैव सर्वे ऋतवः । यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदापराह्णोऽथ शरद्यदैवास्तमेत्यथ हेमन्तः[१] इति । एवं पञ्चदशमुहूर्त्तसंमितस्य दिवसस्य पञ्चधा विभागे क्रियमाणे त्रिमुहूर्त्तपरिमिताः प्रातरादयः पञ्च काला भवन्ति । अत्र यद्यपि तस्मात्तु मध्यन्दिन एवादधीतेत्यनन्तरमेवाम्नायमस्याधानसम्बन्धो मध्यन्दिनविधिः । शेषभूततया पञ्चधा विभागः श्रूयते । तथाहि प्रातरादिविहितैः कर्म्मभिराकाङ्क्षित-स्वकालपरिमाणज्ञाप-

(१) शतपथब्राह्मणे——काण्ड० २, अध्या० २, प्रपा० २, सू० ८ ।

कृतयोपजीव्यमानः सर्व्वकामसम्बन्धितां लभते । अतएवायन्त्रिमुहूर्त्तपरिमाणावयवः पञ्चधा विभागः साधारण्येनैव दृश्यते ।

तथा च प्रभासखण्डे ।

मुहूर्त्तत्रितयं प्रातस्तावानेव च सङ्गवः ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः ।
सायाह्नस्त्रिमुहूर्त्तोऽथ सर्व्वकर्म्मवहिष्कृत इति ॥

अतएव तत्कालविहितकर्म्ममात्रोपयोगितामस्य विभागस्याह पराशरः ।

लेखाप्रभृत्यथादित्यान्मुहूर्त्तास्त्रय एव च ।
प्रातस्तु स स्मृतः कालो भागश्चाह्नः स पञ्चमः ॥
सङ्गवस्त्रिमुहूर्त्तोऽथ मध्याह्नस्तत्समस्ततः ।
ततस्त्रयो मुहूर्त्ताश्च ह्यपराह्णो विशिष्यते ॥
पञ्चमोऽपि दिनांशो यः स सायाह्न इति स्मृतः ।
यद्यदेतेषु विहितं तत्तत् कुर्य्यादिचक्षण इति ॥

उदयमानस्य भास्वन्मण्डलस्य रेखावत्प्रकाशमानः प्रथमोपलम्भयोग्यभागो 'लेखा'। 'आदित्यात्' आदित्योदयात् । तथाच लेखाप्रभृत्यादित्योदयादारभ्य ये त्रय मुहूर्त्तास्ते प्रातःसंज्ञा भवन्तीत्युक्तं भवति ।

उक्तं हि स्कन्दपुराणे ।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तोत्थिते तु वै ।
प्रातस्ततः स्मृतः कालो भागश्चाह्नः स पञ्चम इति ॥

यद्यदेतेषु प्रातरादिकालेषु कर्म्म विहितं तत्तदेतेषु यथोक्तेषु त्रिमुहूर्त्तपरिमितेषु कुर्य्यादित्यर्थः ।

अथ यथोक्तवचनप्रपञ्चमिताः पूर्व्वाह्णादिकालाः कल्प्या एवोच्यन्ते। तत्र द्विधाहर्व्विभागे भास्वन्मण्डलार्द्धांशनिरीक्षणादारभ्याष्टममुहूर्त्त-पूर्व्वार्द्धसमाप्तिपर्य्यन्तः पूर्व्वाह्णः। त्रिधा विभागे लेखाप्रकाशात् प्रभृति पञ्चमुहूर्त्तावसानावधिः। चतुर्धा विभागे तत एवारभ्य षष्ठमुहूर्त्ततृतीयपादपूर्व्वार्द्धसमाप्तिपर्य्यन्तः। पञ्चधा विभागे तूदयादारभ्य षण्मुहूर्त्तपरिमितस्य कालस्य पूर्व्वाह्णत्वं वक्तव्यं। तदा हि यौगिकीं वृत्तिं परिकल्प्य पूर्व्वाह्णशब्दस्यार्थो वाच्यः। यद्यपि दिनाद्यस्य मुहूर्त्तषट्कस्य प्रातःसङ्गवात्मकसंज्ञाद्वयावरोधोऽस्ति तथाप्यसौ नियोगविरोधीति न पूर्व्वाह्णसंज्ञानिवेशपरिपन्थितां प्रतिपद्यते।

इति चतुर्व्विधपूर्व्वाह्णविवेकः।

अथ मध्याह्नकल्पाः।

द्विधाविभागे दिवसस्य मध्यमक्षणादुभयतो मध्याह्नविहितकर्म्मप्रयोगपर्य्याप्तो मध्याह्नः। न चात्र विरुद्धसंज्ञान्तरनिवेशोऽप्यभ्युपेयः। त्रिधा विभागे षष्ठमुहूर्त्तादारभ्य दशममुहूर्त्तावसानावधिर्म्मध्याह्नः। चतुर्द्धा विभागे षष्ठमुहूर्त्ततृतीयपादोत्तरार्द्धादारभ्य दशममुहूर्त्तद्वितीयपादपूर्व्वार्द्धसमाप्तिपर्य्यन्तः। पञ्चधा विभागे तु षष्ठमुहूर्त्तादारभ्य दशममुहूर्त्तसमाप्तिपर्य्यन्तः।

इति चतुर्व्विधमध्याह्नविवेकः।

अथापराह्णकल्पाः।

द्विधा विभागे अष्टममुहूर्त्तोत्तरार्द्धादारभ्य पश्चिमसन्ध्यारम्भपर्य्य-

न्तोऽपराह्णः । त्रिधा विभागे लेकादशमुहूर्त्तादारभ्य पश्चिमसन्ध्यापर्य्यन्तः । चतुर्धा विभागे दशममुहूर्त्त-द्वितीयपादोत्तरार्द्धादारभ्य द्वादशमुहूर्त्ताद्यपादावसानपर्य्यन्तः । पञ्चधा विभागे दशममुहूर्त्तादारभ्य द्वादशमुहूर्त्तावसानपर्य्यन्तः ।

इति चतुर्विधापराह्णविवेकः ।

अथ सायाह्नकल्पाः ।

अथ सायङ्कालो द्विधा त्रिधा विभागे तत्कालविहितकर्म्मप्रयोगपर्य्याप्तोऽस्तमयात्पूर्व्वं कल्पनीयः । चतुर्द्धा तु विभागे द्वादशमुहूर्त्त-द्वितीयपादादारभ्य सूर्य्यास्तमयावधिः । पञ्चधा विभागे त्रयोदशमुहूर्त्तादारभ्य सूर्य्यास्तमयं सायाह्न इति ।

एते च पूर्व्वाह्णादयो वक्ष्यमाणविनियोगानतिक्रमेण यथालाभं ग्राह्याः । प्राशस्त्यतारतम्यक्रमेण च यो यं कालमपेक्ष्य सूक्ष्मः स तस्मात् प्रशस्ततरः । महावधिवचनेन महतः कालस्य पूर्व्वाह्णत्वे प्रमिते तदेकदेशस्यापि प्रमितमेव पूर्व्वाह्णत्वं । यथा हिमवत्कुहरादारभ्य पूर्व्वसमुद्रसीमो जलप्रवाहविशेषस्य गङ्गात्वे प्रमिते प्रमितमेव तदन्तर्वर्त्तिनः प्रवाहैकदेशस्यापि गङ्गात्वं । कथमन्यथा गङ्गायां स्नानं कुर्य्यादपराह्णे पितृयज्ञमाचरेदिति विहितस्य तदेकदेशेऽनुष्ठाने विधेः सिद्धिर्दृश्यते च । केचित्समुदायतदेकदेशयोः साधारणशब्दाः । यदुक्तमाचार्य्यैः ।

विन्दौ च समुदाये च तोयशब्दो यथेष्यते ।
संसर्गिद्रव्यरूपत्वात्सूक्तं वाक्यं पदं तथेति ॥

अतोऽवान्तरावधिवचन-प्रमितपूर्व्वाह्णैकदेशान्तरनिवर्त्तकत्वेन वा स्वाभिधेयस्यापि प्राशस्त्यप्रतिपादनपरत्वेन चार्थवत्त्वं वक्तव्यम्। तत्राद्ये पक्षे महावधिवचनानर्थक्यबाधौ स्यातां। अतोऽवान्तरावधिवचनं प्रशस्ततरत्वार्थमिति निश्चीयते।

अथ कुतपकालाः।

स्कन्द-वायुपुराणयोः।

कुं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे।
स कालः कुतपो ज्ञेयस्तत्र दत्तं महाफलम्॥

'कुः' पृथ्वी: तां, 'गोपतिः' सूर्य्यः, 'गोभिः' स्वकीयैः करैः, 'कार्त्स्न्येन' समग्रां, यस्मिन् क्षणे 'तपति' उष्णां करोति, स कालः कुतपो ज्ञेयः। तदनेन कुतपशब्दनिर्व्वचनं कृतं। निरूपितस्य कुतपोऽयमिति। सर्व्वच्छायासङ्कोचाद्दिवसमध्य एव हि सूर्य्यः कृत्स्नां पृथ्वीं तपति, अतो दिवसमध्यः कुतप इत्येवमसौ निर्द्धारितो भवति। स च मुहूर्त्तपरिमितोऽपि स्वल्पमनुसन्धायोपचारवृत्त्या क्षणशब्देनोक्तः।

उक्तं हि वायुपुराण एव।

मुहूर्त्तात् सप्तमादूर्द्ध्वं मुहूर्त्तान्नवमादधः।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयमिति॥

प्रभासखण्डेऽपि।

अह्नोमुहूर्त्ता विख्याता दश पञ्च च सर्व्वदा।
तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः॥

खड्गपात्रादिकं तु कुतपपदशक्यमध्याह्नवाच्यवस्थितत्वात् पृथक्कर्त्तु-मशक्यमिति मध्याह्नप्रसङ्गादिहैव लिख्यते।

कालिकापुराणे ।

ब्राह्मणाः कम्बलो गावो रूप्याग्न्यतिथयोऽपि च ।
तिला दर्भाश्च मध्याह्नः सर्व्वैते कुतपाः स्मृताः ॥

प्रभासखण्डे ।

मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।
रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्य कुतपा इति विश्रुताः ॥

कौषीतकिना तु तथान्यः कालकम्बल इति पठितं ।

इति कुतपः ।

अथैतेषामपराह्णादिकालानां पार्व्वणादिषु श्राद्धेषु विनियोगः कथ्यते ।
तथाह शातातपः ।

आमश्राद्धन्तु पूर्व्वाह्णे प्रातर्वृद्धिनिमित्तकम् ।

मनुरप्याह ।

पूर्व्वाह्णे मातृकं श्राद्धमपराह्णे तु पार्व्वणं ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकमिति ॥

आह मार्कण्डेयपुराणे ।

शुक्लपक्षस्य पूर्व्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः ।
कृष्णपक्षापराह्णे तु रौहिणन्तु न लङ्घयेदिति ॥

अत्र शुक्लपक्षे पूर्व्वाह्णान्तर्गते कुतपपूर्व्वार्द्ध एव पार्व्वणमेकोद्दिष्टं वा श्राद्धमारम्भणीयं । कृष्णपक्षे त्वपराह्णान्तर्गते कुतपोत्तरार्द्ध एव ।

एतच्च वचनं पार्व्वणे कुतपस्य पूर्व्वार्द्धमेकोद्दिष्टे तु परार्द्धं प्रापयितुं। वैपरीत्येन हि पूर्व्वापरार्द्धयोः मध्याह्नापराह्णौ विध्यन्तरादेव प्राप्तः । अथवा शुक्लपक्षस्येत्यनेन तत्पक्षविहितं दैविकं श्राद्धमुपलक्ष्य पूर्व्वाह्णो विधीयते। कृष्णपक्षेत्यनेन पैतृकमुपलक्ष्यापराह्ण इति। एवञ्च विध्यन्तराविरोधेनैव सत्याङ्गतौ मध्याह्नापराह्णौ च बाधितौ न भविष्यतः । तत्रापराह्णस्य तावद्विनियोगो विविच्यते।

शातातपः ।

दर्शश्राद्धन्तु यत् प्रोक्तं पार्व्वणं तत् प्रकीर्त्तितं ।
अपराह्णे पितृणान्तु तत्र दानं प्रशस्यत इति ॥

यत्पिण्डपितृयज्ञानुष्ठानरहिताग्निकर्तृकं स्त्रीशूद्रादिकर्तृकं वा दर्शश्राद्धं तत्रामावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति कल्प-सूत्रकारोक्तापराह्णकालानुष्ठेयपिण्डपितृयज्ञोत्तरकालत्वं विधेः, तदनु-सारेणैव त्रिधा विभक्तस्याह्नस्तृतीयभागो यथालाभमासन्ध्यं ग्राह्यः। तथाचाह मनुः ।

पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपत इति ॥

तथा ।

पितृयज्ञन्तु निर्व्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकमिति ॥

नचैतद्वक्तव्यम्। "पितृयज्ञन्तु निर्व्वर्त्य तर्पणाख्यन्तु योऽग्निमान्। पिण्डान्वाहार्य्यकं कुर्य्याच्छ्राद्धमिन्दुक्षये सदा" इति मत्स्यपुराण-वचनात्पञ्चमहायज्ञान्तर्भूततर्पणाख्यपितृयज्ञानन्तर्य्यमन्वाहार्य्यकस्य न

पिण्डपितृयज्ञानन्तर्य्यमिति । तदनुरोधेनापराह्णग्रहणमिति ।
यत आह लौगाक्षिः ।

पक्षान्तं कर्म्म निर्व्वर्त्य वैश्वदेवञ्च साग्निकः ।
पिण्डयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुध इति ॥

अतः पिण्डपितृयज्ञादूर्द्धमनुष्ठेयस्य दर्शश्राद्धस्य पितृयज्ञस्य समाप्त्यनुसारेण नातिसन्ध्यासामीप्यपर्य्यन्तो वासरस्य तृतीयांशो ग्राह्यः ।

इत्यपराह्णकालविनियोगः ।

अथ पूर्व्वाह्णकालविनियोगः ।

तत्र पूर्व्वाह्णे दैविकं श्राद्धमिति दैविकश्राद्धाङ्गभूते पूर्व्वाह्णे वक्तव्याभावादामश्राद्धाङ्गभूतं प्रत्युच्यते । तत्र चामश्राद्धन्तु पूर्व्वाह्ण इत्ययं पूर्व्वाह्णविधिर्द्विजकर्तृकामश्राद्धविषय एव न पुनः शूद्रकर्तृकामश्राद्धविषयोऽपीति कश्चिन्निश्चिकाय । स हि मन्यते, उभयकर्तृकामश्राद्धविषयत्वे एकत्रापराह्णस्यात्यन्तिकं बाधं कृत्वान्यत्र पाक्षिकं निवेश्यमानस्यैकत्र नित्यत्वमन्यत्र पाक्षिकत्वमिति वैरूप्यमापद्यते ।
तथाहि ।

द्विजामश्राद्धे तावदातिदेशिकस्यापराह्णस्यात्यन्तं बाधङ्कृत्वा पूर्व्वाह्णं निवेशयेत् । पूर्व्वाह्णोपदेशो भवत्वित्युपदेशस्यादेशाद्बलीयस्त्वेन नातिदेशिकस्यापराह्णस्य पाक्षिकं बाधङ्कृत्वा निवेशयेदिति । अतो शूद्रामश्राद्धे तूपदेशान्तरेण तुल्यबलत्वादौपदेशिकस्यापराह्णस्य पाक्षिकं बाधङ्कृत्वा निवेशयेत् ।

अतोवैषम्यं। कथं पुनः द्विजामश्राद्धे अपराह्न आतिदेशिकः, शूद्रामश्राद्धे चौपदेशिक इति । उच्यते। मुख्यं हि पार्व्वणं ब्राह्मणभोजनात्मकं नित्यं । तद्द्विजरूपकर्तृविषयमेव न शूद्रकर्तृविषयं । तस्य ब्राह्मणभोजनात्मकश्राद्धनिषेधेन नित्यमेवामश्राद्धविधानात्। निषेधं बाधित्वापि यदि तत्र पक्वान्नविधिरपि निविशेत् तदा शूद्रविषये निषेधबाधसापेक्षो द्विजविषये निरपेक्ष इति वैषम्यमापद्येत। तदेवं ब्राह्मणभोजनात्मकं यद्ब्राह्मणं यन्मुख्यं पार्व्वणं तद्द्विजरूपकर्तृविषयं नित्यञ्च। अनित्यन्तु द्विजानां पाकासम्भवादिनिमित्तविहितमामश्राद्धं। एवं च सत्यपराह्नप्रभृतयः प्रकृतावुपदिश्यमाना धर्म्मा ब्राह्मणभोजनात्मकस्य नित्यस्यैवोपदेशतो भवितुमर्हन्ति नान्यस्य। द्विजकर्तृकामश्राद्धस्यापि नित्यानित्यसंयोगविरोधात्। यथोपदिश्यमाना दीक्षणीयादयो धर्म्मा नित्यस्यैवाग्निष्टोमसंस्थस्य ज्योतिष्टोमस्योपदेशतो भवन्ति । नानित्यस्यान्यस्यापि । यथा वा क्रयादयः सोमद्रव्यसाध्यस्य नित्यस्यैव ज्योतिष्टोमस्य, नानित्यस्य अन्यद्रव्यसाध्यस्यापि। किन्त्वनित्येऽतिदेशत एव भवन्ति। अतश्चानित्ये द्विजकर्तृकामश्राद्धेऽतिदेशत एवापराह्णः। शूद्रामश्राद्धस्य तु अनैमित्तिकत्वेन नित्यत्वादुपदेशत एवापराह्न इत्यौपदेशिकः। पूर्व्वाह्णस्तेन सह तत्र विकल्पतो द्विजामश्राद्धत्वातिदेशिकत्वेन बाधते। अतश्चायं पूर्व्वाह्णविधिः एकत्र नित्योऽन्यत्र पाक्षिक इत्येवंविधवैषम्याकुलीकृतः स्वैकमेव विषयमाश्रयितुमर्हति। सचान्यस्य विकल्पदुष्टं शूद्रामश्राद्धं परिहृत्य द्विजामश्राद्धमेवाश्रयते। एवं च सति "मध्याह्नात्परतो यस्तु कुतपः समुदाहृतः। आममात्रेण तत्रैव पितॄणां दत्तमक्षयं"

इति वचनमत्रापराह्णानुवादकं, साधारणेनैव वचनेनाप्राप्यापराह्ण-लाभात् । तस्मात्कुद्रामश्राद्धं कुतपोत्तरार्द्धात् प्रभृति प्रवृत्तेऽपराह्णे । द्विजामश्राद्धन्तु पूर्व्वाह्ण इति ।

इति पूर्व्वाह्णविनियोगः ।

अथ मध्याह्नविनियोगः ।

तत्र चैकोद्दिष्टन्तु मध्याह्न इत्यत्र यद्यपि मध्याह्नत्वेन षष्ठोपक्रमाः पञ्च मूहूर्त्ता एकोद्दिष्टकालत्वेनोपदिष्टास्तथापि कुतपस्यातिप्राशस्त्यात् प्रयत्नेन कुतपेन श्राद्धारम्भं सम्पादयेत् ।

तदुक्तं मत्स्यपुराणे ।

मध्याह्ने सर्व्वदा यस्मान्मन्दीभवति भास्करः ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥

यथा कुतपे श्राद्धारम्भो विशिष्टस्तथा रौहिणे समाप्तिरपीत्याह ।

गौतमः ।

प्रारभ्य कुतपे श्राद्धं कुर्य्यादारौहिणाद्बुधः ।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेदिति ॥

'रौहिणं' नवमो मूहूर्त्तः । न लङ्घयेदित्येतदपि रौहिणान्तः-समाप्तिप्रशंसार्थं । न रौहिणातिक्रमनिषेधार्थं । तस्यापि मध्याह्नत्वेना-पराह्णत्वेन च श्राद्धाङ्गत्वात् । अतएव मत्स्यपुराणे कुतपात्प्रभृतिमुहू-र्त्तपञ्चकस्य श्राद्धाङ्गत्वमुक्तं ।

मुहूर्त्तात् कुतपादूर्द्धं यन्मुहूर्त्तचतुष्टयं ।
मुहूर्त्तपञ्चकं ह्येतत् स्वधाभवनमिष्यत इति ।

स्वधाभवनमित्यस्याभिप्रायः। स्वधाशब्दवतः पार्व्वणस्यैकोद्दिष्टस्य चायङ्कालो न पुनः स्वाहाशब्दवतो दैविकस्य नान्दीश्राद्धस्य वेति। तयोर्हि पूर्व्वाह्न-प्रातःकालयोरेव विधानात्।

इति मध्याह्नविनियोगः।

अथ प्रातःकालविनियोगः।

तत्र प्रातर्वृद्धिनिमित्तकमित्ययं प्रातःकालविधिः पुत्रजन्मनिमित्तकव्यतिरिक्तवृद्धिश्राद्धविषयः। तस्य हि पुत्रजन्मरूपे निमित्ते सति विधानात्। तदनन्तरमेवानुष्ठेयत्वे जन्मनस्त्वनियतकालत्वे नियतकालत्वमेवावसीयते। ननु निमित्ते विहितमपि श्राद्धं वैश्वानरीयस्वकालं प्रति किं नोत्कृष्यते। उत्कर्षकारणाभावादिति जानीहि, न त्वस्याशौचमुत्कर्षकारणं। न हि वैश्वानरीयेष्टिराशौचदोषनिवृत्त्यर्थमुज्जृम्भिता।

अथोच्यते।

दानं प्रतिग्रहो होमः स्वाध्यायं पितृकर्म्म च।
प्रेतपिण्डक्रियावर्जमाशौचविनिवृत्तये॥

इत्यादिनिषेधानुरोधादुत्कर्ष इति।

तत्र पुत्रे जाते श्राद्धं कुर्य्यादितिनैमित्तिकविधेर्विशेषशास्त्रेण निषेधबाधकत्वात्। अस्ति च तत्काले नास्त्यशौचमित्येवम्परो वचनप्रपञ्चः।

तत्र तावच्छङ्खलिखितौ।

पिता पितामहश्चैव तथैव प्रपितामहः।

भूयस्तत्रैव जायन्ते तदहर्व्वेदयन्ति च ।
तस्मात् स दिवसः पुण्यः पितॄणां प्रीतिवर्द्धनः ॥

आदित्यपुराणेऽपि ।

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यञ्च सर्व्वदा ॥
तत्र दद्यात् सुवर्णन्तु भूमिं गां तुरगं रथं ।
छत्रं वस्त्रञ्च माल्यञ्च शयनञ्चासनं गृहं ॥

हारीतोऽप्याह ।

जाते च कुमारे पितॄणामामोदात्पुण्यन्तदहरिति ।

'पितॄणामामोदात्' अतिशयेन हर्षोत्पत्तेः, 'पुण्यं' 'पावनं', तदहः दानादेव । पुण्यस्य स काल इत्यर्थः । अत्र पुत्रजन्मदिवसस्याशौचदूषितत्वाभावात्तत्काल एव जन्मनिमित्तं श्राद्धं कर्त्तव्यं । नाशौचोत्तरकालं प्रत्युत्कर्षणीयं । अत्र यद्यपि शङ्खादिवचने तदहः पुण्यमिति प्रतिभाति तथापि शङ्ख्नाभ्युच्छेदात् पूर्व्वमेवेति वेदितव्यं । तथा च हारीतः ।

प्राङ्नाभ्युच्छेदात् संस्कारपुण्यार्थान् कुर्व्वन्ति, नाभ्यामुच्छिन्नायामाशौचमिति । 'संस्कारः' जातकर्म्म । 'पुण्यार्थान्' गुड़तिलतैलगोभूहिरण्यवस्त्रधान्यादिदानानिति ।

मनुरप्याह ।

प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म्म विधीयत इति ।

'वर्द्धनं' छेदः ।

जैमिनिरपि ।

यावत् न नश्यते नालं तावन्नाप्नोति सूतकं ।
छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते ॥

विष्णुधर्म्मोत्तरे मार्कण्डेय आह ।

अच्छिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि ।
अशौचोपरमे कार्य्यमथ वा नियतात्मभिः ॥

पुत्रजन्मन्यानाभिकर्त्तनात्पुण्यं तदहः । तत्र जातकर्म्मामश्राद्धं कुर्य्यात्, पात्राणि सहिरण्यानि वा दद्यात्, प्रजापतये नाभ्यां छिन्नायामशौचं । अतो नालच्छेदात् पूर्व्वमेव श्राद्धं । एतच्च नैमित्तिकत्वाद्रात्रावपि कर्त्तव्यं ।

यदाह व्यासः ।

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः ।
नैमित्तिकन्तु कुर्वीत स्नानं दानञ्च रात्रिषु ॥

तथा ।

ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ।
पुत्रजन्मनि यात्रायां सर्व्वर्य्यान्दत्तमक्षयमिति ॥

एतच्च तत्काले सूतकान्तरनिमित्ताशौचसन्निपाते सत्यपि कर्त्तव्यं ।

तदाह प्रजापतिः ।

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्व्वाशौचेन शुध्यति ॥

'कर्तुः' जातकर्म्मकर्तुः । पूर्व्वप्रवृत्तजन्माशौचनिवृत्तौ सत्यां स

कर्म्मणि शुद्धो भवतीत्यर्थः। यदि पुनरिदं तत्काले जातकर्म्मकर्त्तुरनुपपत्तेः शावाशौचान्तरनिपाताद्वा न कृतं स्यात्तदा सूतकानन्तरं कस्मिंश्चिद्दिने प्रातःकाल एव कार्य्यं। ननु स्वकालात् परिभ्रष्टमिदं किमिति कालान्तरे कर्त्तव्यं। न ह्युपरागादिकर्म्माणि निमित्तबन्धनानि कर्म्माणि वा तत्कालातिक्रमेऽपि क्रियन्ते। सत्यमेवं। इदन्तु वचनात् क्रियते।

तथा च विष्णुधर्म्मोत्तरे।

अच्छिन्ननाभ्यां कर्त्तव्यं श्राद्धं वै पुत्रजन्मनि।
अशौचोपरमे कार्य्यमथवा नियतात्मभिरिति॥

तत्राशौचोपरमोऽप्यस्य कालः। स तु नालच्छेदपूर्व्वकालासम्भवनिबन्धनः। इत्येतत् कुतः। वैजवापायनवचनाद् ब्रूमः।

जन्मनोऽनन्तरं कार्य्यं जातकर्म्म यथाविधि।
दैवादतीतकालश्चेदतीते सूतके भवेदिति॥

इति प्रातःकालविनियोगः।

अथ निषिद्धकालाः।

तत्र व्याघ्रपाद आह।

स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके।
श्रौतकर्म्मणि तत्कालं स्नानं शुद्धिमवाप्नुयात्॥

राहुसूतकादन्यस्मिन् सूतके स्मार्त्तं श्राद्धादिकर्म्म न कुर्वीत। श्रौतन्तु दर्शपूर्णमासाग्निहोत्रादि स्नात्वा सद्य एव कुर्य्यादित्यपरार्कः। स हि जननाशौचे राहुग्रस्तचन्द्रार्कसाक्षात्पूर्व्वकाले च मृते सूतकशब्दप्रयोगोऽस्तीत्यभिप्रेत्यैवं व्याख्यातवान्। अन्यथैवं व्याचक्षते। सूतके

जन्माशौचे सर्व्वकर्म्मत्यागः कर्त्तव्यः। "स च राहोरन्यत्र" स च राहुदर्शननिमित्तात्मककर्म्माणि विहायेत्यर्थः। तत्र प्रथमव्याख्याने जन्ममरणाशौचयोर्द्वितीयव्याख्याने तु जन्माशौचे श्राद्धं न कर्त्तव्यमिति सिद्धं भवति। कर्म्मशब्दस्य प्रेतपिण्डक्रियाव्यतिरिक्तकर्म्मविषयः। तथा च पैठीनसिः।

दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म्म च।
प्रेतपिण्डक्रियावर्जमाशौचे विनिवर्त्तयेदिति॥

मनुशातातपौ।

रात्रौ श्राद्धं न कुर्व्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव(१) सूर्य्ये चैवाचिरोदित इति॥

रक्षांसि अस्याञ्चरन्ति बलवन्ति वा भवन्तीति राक्षसीत्युच्यते। तस्यां हि रक्षोभिः श्राद्धमवलुप्यते। पूर्व्वापरयोरपि सन्ध्ययोः श्राद्धं न कर्त्तव्यं।

सन्ध्ययोर्म्मानन्तु याज्ञवल्क्य आह।

उदयात् प्राक्तनी सन्ध्या मुहूर्त्तद्वयमुच्यते।
सा च सन्ध्या त्रिघटिका अस्तादुपरि भास्वत इति॥

सूर्य्ये चैवाचिरोदित इति यदुक्तं तत्सन्ध्यासमीपकालस्योपलक्षणं। तेनास्तमयसन्ध्यासमीपोऽपि कालो लभ्यते। तदनेन प्रातःकालविहितं पूर्व्वसन्ध्या-तत्समीपकालयोः प्रसक्तं वृद्धिश्राद्धं निषिध्यते। अपराह्ण-विहितञ्च पार्व्वणं पश्चिमसन्ध्या-तत्समीपकालयोश्च प्रसक्तं निषिध्यते। मध्यमसन्ध्या-तत्समीपकालयोस्तु कुतपत्वान्न क्वचिन्निषेधः।

---

(१) सन्ध्ययोरुभयोर्व्वापीति ख०।

स्कन्दपुराणे ।

उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन ।
स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत् ॥

अनेन सन्ध्यासामीप्यनिषेधे सायङ्कालात् पूर्व्वं श्राद्धारम्भसमाप्त्योरसमर्थं प्रति सन्ध्यासमीपव्यतिरिक्तः सायङ्कालः सोऽनुज्ञातो भवति । यत्तु "सायाह्ने त्रिमुहूर्त्तस्तु सर्व्वकर्म्मबहिष्कृतः" इति प्रभासखण्डवचनं,

चतुर्थे प्रहरे प्राप्ते श्राद्धं यः कुरुते नरः ।
आसुरन्तद्भवेच्छ्राद्धं दाता च नरकं व्रजेदिति च ॥

बौधायनवचनं ।

दिवसस्यान्तिमे भागे मन्दीभूते दिवाकरे ।
आसुरन्तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठत इति ॥

याज्ञवल्क्यः ।

प्रायः प्रान्त उपोष्यः स्यात्तिथिर्दैवफलेप्सुभिः ।
मूलं हि पितृतृप्त्यर्थं पैत्रं चोक्तं महर्षिभिः ॥

'मूलं' आरम्भः ।

नारदीयपुराणे ।

तिथिप्रान्तं सुराख्यं हि उपोष्यं कवयो विदुः ।
पैत्र्यं मूलं तिथेः प्रोक्तं शास्त्रज्ञैः कालकोविदैः ॥

निगमः ।

"पूर्व्वाह्णिकास्तु चेच्छ्राद्धं दाता च नरकं व्रजेत्" । इति हारीतवचनं तत् सायङ्कालात् पूर्व्वमेव श्राद्धारम्भसमाप्तिसमर्थं प्रत्येव ।

आह व्याघ्रपात् ।

विधिज्ञः श्रद्धयोपेतः सम्यक् पात्रे नियोजकः(१) ।
रात्रेरन्यत्र कुर्व्वाणः श्रेयः प्राप्नोत्यनुत्तममिति ॥

'रात्रिः' सन्ध्या । सन्ध्यातत्समीपकालनिषेधस्यापवादमाह विष्णुः ।

सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनमिति ॥

'राहुदर्शनं' चन्द्रोपरागः ।

इति निषिद्धकालाः ।

अथ प्रेतक्रियासु निषिद्धकालाः

तत्राह गार्ग्यः ।

प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत् ।
आशौचमध्ये क्रियते पुनः संस्कारकर्म्म चेत् ॥
शोधनीयं दिनं तत्र यथासम्भवमेव तु ।
आशौचविनिवृत्तौ चेत् पुनः संस्क्रियते मृतः ॥
संशोध्यैव दिनं ग्राह्यमूर्द्धं संवत्सराद्यदि ।
प्रेतकार्य्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणं ।
कृष्णपक्षस्य तत्रापि वर्जयेत्तु दिनत्रयम् ॥

इह द्विविधः प्रेतसंस्कारः । एकः प्रत्यक्षशरीरस्य । प्रतिकृतेरपरः । तत्र प्रत्यक्षशरीरसंस्कारे शुभाशुभदिनपरीक्षानवकाशः । प्रतिकृति-

(१) सम्यक् पात्रेऽभियोजक इति ख० ।

संस्कारस्य तु त्रयः कालाः । आशौचमध्ये, संवत्सरान्तः, संवत्सराद्बहि-श्चेति। तत्राशौचमध्ये प्रतिकृतिसंस्कारः सति सम्भवे वक्ष्यमाणति-थिनक्षत्रादिवर्जिते काले विधेयः। यदा त्वशौचाद्बहिः संवत्सरमध्ये प्रतिकृतिसंस्कारस्तदानीं वक्ष्यमाणप्रकारेणारम्भकालशोधनमवश्यं कार्य्यं। संवत्सराद्बहिरपि क्रियमाणे तस्मिन् शोधनीय एव कालः । किन्तु तत्रोत्तरायण-कृष्णपक्षौ सम्पाद्यमानौ गुणोत्तरौ भवतः । दिनक्षय-दिनन्तु सर्व्वत्र वर्जनीयं ।

मरीचिः ।

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
तत्र श्राद्धं न कुर्व्वीत गृही पुत्रधनक्षयात् ॥

प्रतिपत् षष्ठ्येकादशी च नन्दा । 'भार्गवदिनं' शुक्रवारः । कृत्ति-का-पुनर्व्वसूत्तराफाल्गुनी-विशाखोत्तराषाढा-पूर्व्वभाद्रपदाख्यानि नक्षत्राणि 'त्रिपुष्कराणि । श्राद्धशब्देनात्र प्रेतक्रिया विवक्षिता । नन्दादिष्वेव मध्ये दुष्टतमान्याह स एव ।

एकादश्यान्तु नन्दायां सिनीवाल्यां भृगोर्दिने ।
नभस्यस्य चतुर्दश्यां कृत्तिकासु त्रिपुष्करे ॥

अत्र श्राद्धं न कुर्व्वीतेत्यनुषङ्गः । सिनीवाल्यां भृगोर्दिन इति सम्बन्धः ।

महाभारते ।

नक्षत्रेण न कुर्व्वीत यस्मिन् जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्य्यं तथाग्नेये च भारत ।
दारुणेषु च सर्व्वेषु प्रत्यरे च विवर्जयेत् ॥

जन्मनक्षत्रमत्र श्राद्धकर्त्तुः। 'प्रोष्ठपदयोः' भाद्रपदाद्वये। 'आग्नेयं' कृत्तिका। 'दारुणानि' आर्द्रा-श्लेषा-ज्येष्ठा-मूलानि। जन्मनक्षत्रात्पञ्चमं चतुर्दशं त्रयोविंशञ्च 'प्रत्यरं'।

ज्योतिःपराशरः।

साधारणध्रुवोग्रमैत्रेषु न शस्यते मनुष्याणां प्रेतक्रिया कथञ्चित् पुष्करे यमलाधिष्ठे च।

'साधारणे' कृत्तिकाविशाखे। 'ध्रुवाणि' उत्तरात्रयं रोहिण्यश्च। 'उग्राणि' पूर्व्वात्रयं भरणी मघा च। 'मैत्राणि' मृग-चित्रानुराध-रेवत्यः। त्रिपुष्कराण्युक्तानि। 'यमलाधिष्ठं' धनिष्ठा। मृग-चित्रयोर्मैत्रेषु उक्तत्वात्।

वाराहपुराणे।

चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत्।
प्रेतकृत्यं व्यतीपाते वैधृते परिघे तथा॥
करणे विष्टिसंज्ञे च शनैस्चरदिनेषु च।
त्रयोदश्यां विशेषेण जन्मताराचये तथा॥

उत्पत्तिनक्षत्रं दशममेकोनविंशञ्चेति जन्मतारात्रयं।

आह काश्यपः।

भरण्यार्द्रा मघाश्लेषा मूलं त्रिचरणानि च।
प्रेतकृत्येऽतिदुष्टानि धनिष्ठाद्यञ्च पञ्चकं॥
फाल्गुनीद्वितयं रोहिण्यनुराधा पुनर्व्वसुः।
द्वे आषाढे विशाखा च भानि द्विचरणानि च।
एतानि किञ्चिद्दुष्टानि वर्जयेत्सति सम्भवे॥

तदेवमेषु प्रेतकृत्यमात्रस्य प्रतिषेधे प्राप्ते क्वचिदपवादमाह गोभिलः ।

नन्दायां शुक्रवारे च चतुर्दश्यां त्रिजन्मसु ।
एकादशप्रभृतिषु नैकोद्दिष्टं निषिध्यते ॥

'त्रिजन्मानि' जन्मताराचयं ।

वैजवापः ।

प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेऽहनि ।
नक्षत्रतिथिवारादि शोधनीयं न किञ्चन ॥
युगमन्वादिसंक्रान्तिदर्शे प्रेतक्रिया यदि ।
दैवादापतिता तत्र न नक्षत्रादिशोधनं ॥

इति प्रेतक्रियासु निषिद्धकालाः ।

अथ पिण्डदाने निषिद्धकालाः ।

तत्राह पुलस्त्यः ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
युगादिषु च सर्व्वासु पिण्डनिर्व्वपणादृते इति ॥

एतेषु कालेषु श्राद्धं 'पिण्डनिर्व्वपणादृते' पिण्डदानं विना कर्त्तव्यमिति ।

मत्स्यपुराणे ।

वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च ।
श्राद्धं कार्य्यन्तु शुक्लायां सङ्क्रान्तिविधिना नरैः ॥

अत्र सङ्क्रान्तिष्वित्यनेनैवायनादीनामपि लाभे पुनस्तदभिधानं तत्कालकृतस्य पिण्डदानस्यातिनिन्दितत्वद्योतनार्थं । सङ्क्रान्तिविधिने-

त्यनेन पिण्डदानराहित्यमुक्तं। वैशाखस्य तृतीयायामित्यादिकं सर्व्व-युगाद्युपलक्षणं। युगादिषु च सर्व्वाखिति पुलस्त्यवचनात् ।

ब्रह्मपुराणे ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
सङ्क्रान्तिषु च कर्त्तव्यं पिण्डनिर्व्वपणादृते ॥
वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य तु ।
श्राद्धं कार्य्यन्तु शुक्लायां सङ्क्रान्तिविधिना नरैः ॥
त्रयोदश्यां भाद्रपदे माघे चन्द्रक्षयेऽहनि ।
श्राद्धं कार्य्यं पायसेन दक्षिणायनवच्च तत् ॥
यदा च श्रोत्रियोऽभ्येति गेहं वेदविदग्निवित् ।
तेनैकेन तु कर्त्तव्यं श्राद्धं विषुवदुत्तमं ॥

'विषुवतो विषुवच्छ्राद्धात् उत्तमं' श्रेष्ठं । श्रोत्रियागमननिमित्तक-मपि श्राद्धं प्रायःपाठादपिण्डमेव भवितुमर्हति।

वृहत्पाराशरः ।

युगादिषु मघायाञ्च विषुवत्ययने तथा ।
भरणीषु च कुर्व्वीत पिण्डनिर्व्वपणं न हि ॥

मघायुक्तां भाद्रपदापरपक्षत्रयोदशीमधिकृत्य देवीपुराणे ।

तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत् ॥

'तत्रापि' भाद्रपदापरपक्षत्रयोदश्यामपि, 'पितृदैवते ऋक्षे' मघानक्षत्रे जाते सति, 'महती' श्राद्धलक्षणा पूजा कर्त्तव्या। स तु कर्त्ता 'ज्येष्ठपुत्रवान्' जीवत्प्रथमपुत्रश्चेद्भवेत् तर्हि तत्र श्राद्धं कुर्व्वन् पिण्ड-

प्रदानं वर्जयेत्। पिण्डरहितं श्राद्धं कुर्य्यादित्यर्थः। ज्येष्ठपुत्त्रीत्यनेन मघाकालिकस्य त्रयोदशीकालिकस्य उभयसमवायकालिकस्य च पिण्डदानस्य ज्येष्ठपुत्त्रविनाशकलक्षणो दोषः सूचितः।

तत्र च महाभारते ।

सङ्क्रान्तावुपवासेन[१] पारणेन च भारत ।
मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यतीति ॥

ज्योतिःपाराशरः ।

विवाहे विहिते मासांस्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्व्वापं मौञ्जीबन्धे षडेव हि ।

अस्यापवादः ।

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्व्वीत पिण्डनिर्व्वपणं सदेति[२] ॥

वृद्धशातातपः ।

पिण्डनिर्व्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र विकिरंस्तु न लुप्यते ।
अक्षय्य-दक्षिणा-स्वस्ति-सौमनस्यं यथास्थितम् ॥

इति पिण्डदाने निषिद्धकालाः ॥

अत्रेदं विचार्य्यते। सपिण्डीकरणोत्तरकालिकानि मृताहापरपक्षामावास्याष्टका-व्यतीपात-सङ्क्रान्त्युपराग-युगमनुकल्पादि-गजच्छायादि-

(१) संक्रान्तावुपरागेणेति ग० ।
(२) सुत इति ख० ।

युक्तानि श्राद्धानि प्रतिकालं भिद्यन्ते न वेति तदर्थमिदं विचार्य्यते। किं कालयुक्तानि वाक्यानि कर्म्मोत्पत्तिविधय उतोत्पन्ने कर्म्मणि कालस्य विधय इति। तत्र यद्यपि गुणविधाने भावार्थे विधिः वाक्यार्थविधिश्चापाद्यते तथापि विशेषणे विधिशक्तिसंक्रमात् लाघवाच्च गुणविधय एवेति न कर्मभेदमापादयन्ति। अतः कर्म्मैक्याद्-युगपद्भाविष्वपि वैकल्पिकेषु क्वचिदेकस्मिन् कालेऽनुष्ठानं न सर्व्व-स्मिन्। कुतस्तु युगपद्भाविषु पृथगनुष्ठानमिति कालसमवाये सकृ-देकमेव श्राद्धं कर्त्तव्यमिति। नहि कस्यचित्कालरूपगुणानुरोधेन प्रधानावृत्तिः सम्मता। या तु सायंप्रातरादिकालानुरोधेन होमा-वृत्तिः सा तत्कालावच्छिन्नजीवनरूपनिमित्तावृत्त्येति।

अत्रोच्यते। यत्र प्रृङ्खोत्पत्तिः सन्निधावस्ति तत्र गुणयुक्तेषु वाक्येषु तत्प्रत्यभिज्ञानाद्गुणमात्रविधिर्भवति। अत्र तु प्रृङ्खोत्पत्त्यभावादगत्या विशिष्टविधौ गौरवाद्यदोषः। प्रृङ्खोत्पत्तिकल्पनायान्तु सर्व्वत्र विशिष्ट-विधिलोपेन क्वचिद्गुणाद्भेदः स्यात्। अतो विशिष्टविधित्वात् प्रति-कालं श्राद्धभेदः। निमित्तत्वाच्चोपरागादीनान्तद्भेदे स्पष्टो भेदः। अतस्तत्कालागमने तत्तच्छ्राद्धमनुष्ठेयमिति स्थितम्।

अथेदानीं कालसमवाये निमित्तसमवाये च सन्दिह्यते। किं तदा तत्तत्कालिकानां तत्तन्निमित्तकानां श्राद्धानां मध्ये किञ्चिदेकमेवा-नुष्ठेयमुत सर्वाणि पृथक् पृथक्। अथ तन्त्रेणेति। तत्रैकदिनेऽनेक-श्राद्धनिषेधात् किञ्चिदेकमेवेति प्राप्त उच्यते।

एककाले गतासूनां बहूनामथवा द्वयोः।
तन्त्रेण श्रपणं कृत्वा कुर्य्याच्छ्राद्धं पृथक् पृथक्॥

पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ।
तृतीयस्य ततः कुर्य्यात् सन्निपातेष्वयं क्रमः ॥

इति भृगुणा समानेऽप्यहनि नानानिमित्तानामनेकेषां[१] श्राद्धानामनुष्ठानस्योक्तत्वात् "द्वादशाहः प्रशस्यते" इत्यादौ नानानिमित्तकानां प्रेतश्राद्धानामेकस्मिन्नेवाहनि अनुष्ठानस्य श्रुत्यादितत्वात् "नैकः श्राद्धद्वयं कुर्य्यात् समानेऽहनि कुत्रचित्" इति अस्य निषेधस्य श्रद्धाजडारभ्यमाणैकनिमित्तश्राद्धवृद्धिविषयत्वे स्थिते सर्वाण्यपि पृथगनुष्ठेयानीति पक्षो गृह्यते । यत्तु देशकालकर्त्रैक्यादिविशेषग्रहणाभावेनाग्नेयादियागाङ्गानां प्रयाजादीनां तन्त्रमनुष्ठानमुक्तं तदेकप्रयोगविधिगृहीतेष्वङ्गेष्वेवोचितं न तु स्वतन्त्रेषु प्रधानेष्वपि । यस्तु काम्यापूर्वार्थमनुष्ठितयोर्दर्शपौर्णमासयोर्नित्यापूर्वप्रसङ्ग उक्तः सोऽपि कर्म्मैक्ये वक्तुमुचितः । यावेव ह्याग्नेयादिसमुदायौ काम्यापूर्वार्थौ तावेव नित्यापूर्वार्थौ उत्पत्तिवाक्यैक्यादवगमात् । यस्तु तत्र भेदव्यवहारः स कामरूप-निमित्तरूपोपाधिसम्बन्धनिबन्धनप्रतीतिकालव्यवस्थाभेदाश्रयो न वस्तुभेदाश्रयः । अपूर्वभेदस्तु वास्तवोऽधिकारभेदात् । अतस्त्वायमौपाधिकोऽप्यपूर्व्वभेदानुनिष्पादीति कृत्वा भेदलक्षणे विचारितः । ननु तत्तत्प्रकृत्यर्थरूपोपाधिभेदोपरागप्रतीतिभेदनिबन्धनो वास्तवोऽपि यागदानहोमभावनानां भेदः प्रतिपादितः। सत्यं। किन्तु प्रकृत्यर्थोपरागप्रत्यायितो भेदस्तत्र बाधकाभावाद्वास्तवोऽङ्गीकृतः । प्रकृतेतूत्पत्तिशास्त्रैकलापादितकर्म्मैक्यप्रतिरूपबाधकसद्भावादवास्तवः ।

अतोऽत्र कर्म्मैक्यात्काम्यापूर्वार्थमनुष्ठिताभ्यामेव दर्शपूर्णमासाभ्यां

(१) भिन्ननिमित्तानामनेकेषामिति ग० ।

नित्यानुष्ठानसिद्धौ न पृथक् अनुष्ठानं क्रियते। भिन्ने तु कर्म्मण्यन्या पूर्वस्यान्येनासिद्धेस्तदर्थमन्यस्याप्यनुष्ठानमिति। अस्तु वात्र कश्चिद्वास्तवो ऽपि सूक्ष्मः कर्मभेदः। स तु भेदान्तरेभ्यो विलक्षणः। न स्वसामान्याभ्यगतं किमप्यन्यत्रार्थयितुमर्हतीति।

अत्रोच्यते। कर्म्मभेदेऽपि देशकालकर्त्राद्यैकत्वे सकृदनुष्ठानेन सर्वकर्म्मसिद्धिर्युगपदेव सर्वापूर्वनिष्पत्तिर्जायते। न गृह्यते हि तदा विशेषः, इदं निष्पन्नं नेदमिति। अभ्युपगतञ्च यागभेदेऽपि देवतैक्ये तन्त्रमनुष्ठानं। सान्नाय्ये स्वप्नदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवमित्यत्र युगपदनेकामेध्यदर्शनरूपनिमित्तसमवाये प्रतिनिमित्तं आरब्धं मनो दरिद्रं चक्षुरित्येतन्मन्त्रजपरूपनैमित्तिकावृत्तौ प्राप्तायां विशेषग्रहणाभावात् सकृन्नैमित्तिकानुष्ठानमिति चैकदेशे स्थितम्।

अतः श्राद्धनिमित्तसमवाये कालसमवाये च देशैक्ये च कर्त्रैक्ये देवतैक्ये च विशेषग्रहणाभावात्तन्त्रेण सर्व्वश्राद्धानुष्ठानं कर्त्तव्यमिति। एवञ्च सति संक्रान्तिनिमित्तकममावास्यानिमित्तकं व्यतीपातनिमित्तकान्येतानि तन्त्रेण करिष्य इति सङ्कल्पं कुर्य्यात्।

इति कालसमवायनिर्णयः।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसमस्तकरणाधीश्वरसकलविद्याविशारदसकलश्रीकरणाधिपतिपण्डितश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे श्राद्धकालनिरूपणं नाम पञ्चमोऽध्यायः समाप्तः ॥०॥

# अथ षष्ठोऽध्यायः ।



यत्सारस्रुतनिर्झरव्यतिकरप्रारब्धपूरोर्म्मिषु
स्लाघ्यन्ते घनमीनकच्छपकुलस्पर्द्धानिबद्धादराः ।
आम्नाय-स्मृति-नीति-शास्त्रनिकराः सोऽयं विधत्तेऽधुना
श्राद्धे योग्य-तदन्यविप्रकथनं हेमाद्रिमन्त्रीश्वरः ॥

अथ ब्राह्मणा निरूप्यन्ते ।

अत्र देशकालानन्तरं श्राद्धप्रयोगे निरूपणीये हविःप्रक्षेपाधिकरणभूताहवनीयस्थानीयानां प्रथमसम्पाद्यत्वात् द्रव्यादिभ्यः पूर्व्वं निरूपणं क्रियते। तत्र चतुर्भिरपि वर्णैः क्रियमाणेषु श्राद्धेषु ब्राह्मणानामेवामन्त्रणीयत्वेन विहितत्वात् त एव नियोज्याः ।

तत्र ब्राह्मणप्रशंसा ।

तत्र तैत्तिरीयश्रुतिः। यावतीर्वै देवतास्ताः सर्व्वा वेदविदि ब्राह्मणे वसन्ति । तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्य्यान्नाश्लीलं कीर्त्तयेत्। एता एव देवता एव प्रीणातीति। नमस्कारोऽत्र पूजोपलक्षणार्थः ।

शतपथश्रुतिरपि। द्वया वै देवाः। देवा अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानामाहुतिभिरेव देवान् प्रीणाति दक्षिणाभिर्मनुष्य-

देवान् ब्राह्मणांश्चशुश्रुवुषोऽनूचानांस्त एनमुभये देवाः प्रीताः सुधायां दधतीति[१] ।

भविष्यत्पुराणे ।

ब्राह्मणा दैवतं भूमौ ब्राह्मणा दिवि दैवतम् ।
ब्राह्मणेभ्यः परं नास्ति भूतं किञ्चिज्जगत्त्रये ॥
अदैवं दैवतं कुर्य्युः कुर्य्युर्दैवमदैवतम् ।
ब्राह्मणा हि महाभागाः पूज्यन्ते सततं द्विजाः ॥
ब्राह्मणेभ्यः समुत्पन्ना देवाः पूर्व्वमिति श्रुतिः ।
ब्राह्मणेभ्यो जगत्सर्व्वं तस्मात् पूज्यतमा द्विजाः ॥
एषामश्नन्ति[२] वक्त्रेण देवताः पितरस्तथा ।
ऋषयश्च तथा नागा किम्भूतमधिकं ततः ॥

याज्ञवल्क्यः ।

तपस्तप्त्वा सृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्म्मसंरक्षणाय च ॥

मत्स्यपुराणे ।

नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परः शत्रुर्नास्ति विप्रात्परो विधिः ॥

विष्णुधर्म्मोत्तरे भगवद्वाक्यम् ।

ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ।
निर्भर्त्सितैश्च निर्भर्त्सितस्तैरहं सर्व्वकर्म्मसु ॥

---

(१) शतपथब्राह्मणे — का० २, प्रपा० १, अध्या० २, सू० ६ ।
(२) येषामश्नन्तीति ख० ।

विप्राः परागतिर्मह्यं यस्मात् पूजयते नृप ।
तमहं स्वेन रूपेण प्रपश्यामि युधिष्ठिर ॥

स्कन्दपुराणे देवीं प्रति ईश्वरवचनम् ।

श्रुतीनामाकरा ह्येते रत्नानामिव सागराः ।
विप्रा विप्राधिपमुखि पूजनीयाः प्रयत्नतः ॥

"विप्राधिपमुखि" चन्द्रमुखीति देव्याः सम्बोधनम् ।

यत्र वेदविदो विप्रा न प्राश्नन्त्युत्तमं हविः ।
न तत्र देवा देवेशि हविरश्नन्ति(१) कर्हिचित् ॥
अपि नारायणोऽनन्तो ब्रह्मा स्कन्दोऽनलः शिखी ।
तत्कर्म्म नाभिनन्दन्ति यत्र विप्रा न पूजिताः ॥
येषां प्रसादात् सुलभमायुर्धर्म्मः सुखं धनम् ।
श्रीर्यशः स्वर्गवासश्च तान् विप्रानर्चयेद्बुधः ॥

इति ब्राह्मणप्रशंसा ।

अथ ब्राह्मणलक्षणम् ।

अत्राङ्गराचार्य्याः ।

ब्राह्मणत्वजात्याश्रयो ब्राह्मण इति। अत्र यद्यप्युपदेशानपेक्षाक्षिसन्निपातमात्रानुभवनीय-क्षत्त्रियवैश्यादिव्यावृत्त-ब्राह्मणत्वाभिमत-व्यक्तिमात्रानुवृत्त-द्रव्यगुणकर्म्मसंस्थानादिकृत-वैलक्षण्याभावान्मनुष्यत्वावान्तरसामान्याभिव्यञ्जक-स्थूलतरकारणासम्भवस्तथापि विशुद्धमातापितृसन्ततिजत्वोपदेशसापेक्ष-बुद्धिविशेषसमुद्भासित-सूक्ष्मतरसौक्ष्म्याद्यात्मक-ब्राह्मणत्वाभिव्यञ्जकसम्भवः परीक्षकापरीक्षकसाक्षिको-

(१) येषामश्नन्तीति ख० ।

ऽस्त्येव। अभ्युपगतश्च रत्नादावुपदेशसापेक्षोऽपि सामान्याभिव्यञ्जकावभासः सर्व्वैः। ननु विशुद्धमातापितृसन्ततिजत्वं नाम ब्राह्मणजातीयमातापितृजत्वमेव तथा चोपदेशे ज्ञप्तिप्रतिबन्धकमन्योन्याश्रयत्वमापद्यते। उपदेशार्थज्ञानाधीनं ब्राह्मणत्वज्ञानं ब्राह्मत्वज्ञानाधीनमुपदेशार्थज्ञानमिति। मैवं। अयमत्रोपदेशार्थः। ब्राह्मणत्वसामान्यवान् ब्राह्मणः। ब्राह्मणत्वव्यवस्थापकन्तु तज्जन्यत्वमिति। ननु तर्हि यत्र ब्राह्मणैकजन्यत्वं व्यवतिष्ठत इत्येवंविधे व्यवस्थापकोपदेशे व्यवस्थापकधर्म्मगर्भीकृतस्य ब्राह्मणत्वस्य व्यवस्थाज्ञानाभावात्तथाभूतस्य व्यवस्थाज्ञानसाधनत्वासम्भवादन्योन्यात्माश्रयानवस्थाद्यापातः। मैवं। अस्तु नाम व्यवस्थाज्ञापकत्वेऽन्योन्याश्रयादिकं कारकहेतुत्वे तु न तस्य प्रसङ्गः। सत्तामात्रेण कारकत्वात्। कारकस्य चायमुपदेशः। न ज्ञापकस्य। तदेवं व्यवस्थाकारकोपदेशानन्तरं ब्राह्मणत्वाभिव्यञ्जकपूर्व्वोक्तधर्म्मविशेषावभासकृतो ब्राह्मणत्वसामान्यावगमोऽस्त्येव। नन्वेवं सतीदृग्विधोपदेशश्रवणवतो नरस्यादृष्टचरमविज्ञातकुलनामानमुपलक्षिताचारवेषविशेषं ब्राह्मणपुरुषमुपलभ्याक्षिसन्निपातमात्रेण निर्व्विचिकित्सा ब्राह्मणत्वबुद्धिरुत्पद्येत। तथा च प्रश्नपरीक्षे न स्यातां। अथ ब्राह्मणत्वव्यवस्थापकस्य विशुद्धमातापितृसन्ततिजत्वलक्षणस्योपाधेः तद्व्यक्तिनिष्ठतयानवगमात्तद्गतसामान्यानभिव्यक्तिः, तर्हि व्यवस्थापकस्योपाधेः ज्ञापकत्वापाते सति इतरेतराश्रयादिकमापतितमेव। मैवं। उपदेशदशातिक्रान्तमिदं लिङ्गत्वेन कारकस्य ज्ञापकत्वमदृष्टमेव। अथोच्यते। अनादाविह संसारे दुर्व्वारे मकरध्वजे कुले च कामिनीमूले का जातिपरिकल्पनेति। तन्न प्रतिकूलं कुलाभिमानि-

भिः पुरुषैस्तादृग्विधाभिः स्त्रीभिश्च रक्ष्यमाणानि कुलान्युपप्लुतान्ये-वानुवर्त्तमानानि दृश्यन्ते। प्रपञ्चितश्चायमर्थस्तेषु तेषु शास्त्रेष्वित्युप-रम्यते। न च यजन-याजनाध्ययनाध्यापन-दानप्रतिग्रहाचारसम्पदहिं-सा-सत्य-शौचादिसम्पन्नत्वं ब्राह्मणलक्षणं। अस्य हि याजनाध्यापनप्रति-ग्रहादीनामन्यतमवैकल्येऽपि अध्ययनयजनदानादिमात्रसद्भावे ब्राह्म-णजातीये ब्राह्मणव्यवहारस्यानुपप्लवात्र समुच्चितस्य लक्षणत्वं। न चासमुच्चितस्य, क्षत्रियादिषु सत्वात्। न च याजनाध्यापनप्रतिग्रहसमुच्च-यस्य ब्राह्मणलक्षणत्वं। प्रतिग्रहवर्जनव्रतवतोऽप्रतिषिद्धव्रते ब्राह्मणत्वं न स्यात्। एतत्त्रयवतः क्षत्रियत्वेनाभिमतस्य च ब्राह्मणत्वं स्यात्। किञ्च वृत्त्यर्थं ब्राह्मणः प्रतिगृह्णीयाद्याजयेदध्यापयेद्वेति ब्राह्मणस्य सतः प्रतिग्रहादयो विहिताः। पश्चाद्भाविनो न पूर्व्वसिद्धब्राह्मण-संज्ञाप्रवृत्तिनिमित्तं भवितुमर्हन्ति, यूपवदिति चेन्न। अनन्यगति-न्यायलभ्यानामर्थानामन्यगतिमदर्थविषयलाभावात्।

यत्तु वह्निपुराणे वृत्तान्येव ब्राह्मणलक्षणमित्युक्तं।

न जातिर्न कुलं राजन् न स्वाध्यायः श्रुतं न वा।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणं॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु॥
नैकमेकान्ततो ग्राह्यं पावनं हि विशाम्पते।
वृत्तमन्विष्यतां तात रक्षोभिः किं न पच्यते॥
बहुना किमधीतेन नटस्येव दुरात्मनः।
तेनाधीतं श्रुतं वापि यः क्रियामनुतिष्ठति॥

कपालस्थं यथा तोयञ्चन्दने च यथा पयः ।
दूष्यं स्यात् स्थानदोषेण वृत्तहीनं तथा श्रुतं ॥
चतुर्व्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः ।
तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ॥
सत्यं दमस्तपोदानमहिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥

यच्च ब्रह्माण्डपुराणे उक्तम् ।

जातकर्म्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्म्मस्ववस्थितः ॥
सत्यवाक् विघसाशी तु शीलवांश्च गुरुप्रियः(१) ।
सत्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ।
तपःश्रुते च योनिश्चाप्येतत् ब्राह्मणकारणं ॥
सत्यं दानं तपो होम आनृशंस्यं क्षमा नृणां ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥

'षट्सु कर्म्मसु' यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहेषु । 'विघसाशी' अवश्यभोजनीयातिथिप्रभृतिभुक्तावशिष्टभोजी ।

तथा च व्यासः ।

देवेभ्यश्च पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
दत्त्वा शिष्टन्तु योभुङ्क्ते तमाहुर्विघसाशिनमिति ॥

यच्च यम-शातातपाभ्यामुक्तं ।

---

(१) शौचाचारे स्थितः सम्यक् विघसाशी गुरुप्रिय इति ग० ।

तपो धर्म्मो दया दानं सत्यं ज्ञानं श्रुतिर्घृणा ।
विद्या विनयमस्तेयमेतद्ब्राह्मणलक्षणं ॥

यच्च वसिष्ठेनोक्तं ।

योगस्तपो दया दानं सत्यं शौचं श्रुतं घृणा ।
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणं ॥
यत्र सन्तं न चासन्तं नाश्रुतं न बहुश्रुतं ।
न सुव्रतं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥

यच्च यमेनोक्तं ।

अहिंसानिरतो नित्यं जुह्वानो जातवेदसं ।
स्वदारनिरतो दाता स वै ब्राह्मण उच्यते ॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव[१] श्रुतानुगा ।
असम्भिन्नार्य्यमर्य्यादः स वै ब्राह्मण उच्यते ॥
आशिषोर्थार्थं[२] पूजासु प्रसङ्गांस्तु करोति यः ।
निवृत्तो लोभमोहाभ्यां तं देवा ब्राह्मणं विदुः ॥

'आशिषः' आशीर्व्वादान् । 'अर्थार्थं' धनलाभाय । 'पूजा' सत्क्रिया, देवतापूजा वा । 'प्रसङ्गाः' तास्ताः प्रस्तावनाः, तेषु तेषु विषयेषु आसक्तीर्व्वा ।

सत्यं दानं क्षमा शीलमानृशंस्यं दया घृणा ।
दृश्यन्ते यत्र लोकेऽस्मिन् तं देवा ब्राह्मणं विदुः ॥

'घृणा' कुत्सितविषये विवादः । तदेतत्सर्व्वं न ब्राह्मणलजा-

(१) यस्येति ख० ।
(२) आशिषोर्थांस्त्वेति ग० ।

तिनिराकरणेन शीलवृत्तादेरेव ब्राह्मणशब्दप्रवृत्तिनिमित्तत्वप्रतिपादनपरं, किन्तु हव्यकव्यभोक्तृत्वार्हतापादकब्राह्मणगतप्राशस्त्यप्रतिपादनपरं। अपशवोऽन्ये गोऽश्वेभ्यः, पशवो गोअश्वा इत्येतद्यथा गोऽश्वेभ्यः प्राशस्त्यप्रतिपादनपरं ।

अतएवाह बौधायनः ।

विद्या तपश्च योनिश्च एतद्ब्राह्मणलक्षणं ।
विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः ॥

इति विद्यादियुक्तत्वं हव्यकव्यार्हप्रशस्तब्राह्मणलक्षणं। विद्यादिरहिते तु यद्ब्राह्मणत्वं तद्ब्राह्मणत्वरूपजातियोगमात्रमित्यर्थः। 'जातिब्राह्मण एव' इत्यत्र जात्यैव स ब्राह्मण इत्यन्वयविग्रहो। अतएव विद्यादियोगो ब्राह्मणानां पात्रत्व एव स्मृतिपुराणेषु हेतुरुक्तो न ब्राह्मणशब्दप्रवृत्ताविति ।

इति ब्राह्मणलक्षणं ।

अथ पात्रीभूतब्राह्मणलक्षणं ।

याज्ञवल्क्यः ।

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितं ॥

अङ्ग-स्मृति-पुराण-न्याय-मीमांसासहिता वेदा विद्या ।

तपोलक्षणमाह देवलः ।

अथ तपोविधिं व्याख्यास्यामः । तद्यथा व्रतोपवास-नियमैः शरीरोत्तापनं तप इति । व्रतादीन्यपि तेनैव दर्शितानि । तत्र ब्रह्मचर्य्यं सत्यवचनं मधुमांसवर्जनं मौनमयाचनमृतुकालाभिगमनमित्येवमा-

दीनि व्रतानि। अनशनमुपवासः। स्वाध्यायशीलत्वं, मातापितृ-गो-ब्राह्मणशुश्रूषा, पुण्यक्षेत्राभिगमनं, तीर्थावगाहनं, शीतोष्णवर्षातपा-वश्यायानामप्रतीकारः, कण्टक-शर्करा-दर्भ-दारुफलक-वल्वज-सिकता-भूमिशयनं, हेमन्त-शिशिरयोरार्द्रपटप्रावरणं, वर्षासु जलशय्या, ग्रीष्मवसन्तयोः पञ्चाग्निमध्याधिष्ठानेन दिवसावस्थानं, गुड-लवण-गोरस-स्नेह-धान्यादीनां स्वादूनामनुपभोजनं, फल-मूल-शाक-पुष्पकपि-ण्याकभोजनमिति नियमाः। निजवर्णाश्रमविहितधर्मानुष्ठानन्तपः। वृद्धशातातपः।

स्वाधायवान् नियमवांस्तपस्वी ज्ञानविच्च यः।
क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते॥

'स्वाधायः' वेदः, तस्याध्यापनार्थावबोध-व्याख्यानादिभिर्युक्तः 'स्वाधायवान्'। 'नियमवान्' यम-नियमसम्पन्नः। ते च।

ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता।
अहिंसा स्तेयमाधुर्य्ये दमश्चेति यमाः स्मृताः॥
स्नान-मौनोपवासेज्या-स्वाधायोपस्थनिग्रहाः।
नियमा गुरुशुश्रूषा-शौचाक्रोधाप्रमादताः॥

इति याज्ञवल्क्योक्ता विज्ञेया। तत्र निषिद्धस्त्रीसङ्गवर्जनं 'ब्रह्मचर्य्यं'। प्राणिमात्रविपत्प्रतीकारेच्छा 'दया'। द्वन्द्वदुःखसहिष्णुता 'क्षान्तिः'। अभिमतदेवानुचिन्तनं 'ध्यानं'। भूतहिताय यथार्थवचनं 'सत्यं'। दम्भ-राहित्यं 'अकल्कता'। अविहितवधवर्जनं 'अहिंसा'। अहार्य्यपरस्वानपहारः 'अस्तेयं'। परप्रीतिकरवेष-भाषणचेष्टावत्त्वं 'माधुर्य्यं'। स्वैरवृत्तिनिवृत्ति-प्रयोजनकं परिमितग्रासभोजनादिभिरुपायैरिन्द्रियमदापहरणं 'दमः'।

नित्यनैमित्तिकं जलनिमज्जनादिरूपं 'स्नानं'। निषिद्धवाक्प्रवृत्तिवर्जनं 'मौनं'। नित्यनैमित्तिकमहोरात्रानशनं 'उपवासः'। आवश्यकं देवतामुद्दिश्य स्वकीयद्रव्यत्यागः 'इज्या'। वेदाध्ययनं 'स्वाध्यायः'। अविहितप्रकारकशुक्रविमोचनव्यापारवैमुख्यं 'उपस्थनिग्रहः'। गुरोरनुकूलाचरणं 'गुरुशुश्रूषा'। बाह्याभ्यन्तरमलापहरणं 'शौचं'। हनन-भर्त्सन-शपनादिक्रूरकर्मारम्भनिदानीभूतान्तर्विकारविशेषवर्जनं 'अक्रोधः'। विहिते निषिद्धार्थाननुष्ठाने च सावधानत्वं 'अप्रमादता:' इति। ज्ञानस्यात्मतत्त्वज्ञानस्य वेदेन लाभात् 'ज्ञानवित्'।

महाभारते।

साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभ।
षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः॥

वसिष्ठः।

किञ्चिद्वेदमयं पात्रं शूद्रान्नं यस्य नोदरे।

शूद्रद्रव्यप्रतिग्रहसम्पादितमन्नं 'शूद्रान्नं'। साक्षाच्छूद्रान्नस्य वर्जने हि का नामातिपात्रता।

वृहस्पतिः।

ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे॥

व्यासः। किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयं।
असङ्कीर्णं तु यत्पात्रं तत्पात्रं परमं स्मृतं॥

योनिसङ्कर-वृत्तिसङ्कर-पतितादिसंसर्गरहितं 'असङ्कीर्णं'।

ऋष्यशृङ्गः।

किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयं ।
अतिथिपरं यत्पात्रं तत्पात्रं परमं विदुः ॥

अतिथिलक्षणं वक्ष्यते ।

भविष्यत्पुराणे ।

क्षान्त्यस्पृहा दमः सत्यं दानं शीलं तपः श्रुतं ।
एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणं ॥

शीललक्षणमुपरिष्टाद्वच्यते ।

देवलः । त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेन्द्रियः ।
विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥

त्रीणि कुल-विद्या-वृत्तानि 'शुक्लानि' विशुद्धानि यस्यासौ 'त्रिशुक्लः'। 'घृणालुः' दयालुः। 'सकलेन्द्रियः' अहीनाधिकाङ्गः। 'योनिदोषैर्विमुक्तः' योनिसङ्करकारणानामकर्त्ता।

वृद्धवसिष्ठोऽप्याह।

स्वाधायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं वहुज्ञं ।
स्त्रीषु क्षान्तं धार्म्मिकं गोशरण्यं व्रतैः क्लान्तं ब्राह्मणं पात्रमाहुः ॥

'स्त्रीषु क्षान्तः' स्त्रीविषये सहिष्णुरलोलुप इत्यर्थः। 'गोशरण्यः' गोशुश्रूषापरः। 'व्रतैः क्लान्तः' व्रतानुष्ठानेन संशोषितशरीरेन्द्रियः।

यमोऽप्याह।

विद्यायुक्तो धर्म्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः।
वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्ररूपः ॥

'वृत्तिम्लानः' शिलोञ्छादिभिः क्षामशरीरः। 'यज्वा' यागानुष्ठानवान्।

इति पात्रीभूतब्राह्मणलक्षणं।

अथ पात्रसंज्ञाभिधानप्रसङ्गादुत्तम-मध्यमाधमविभागज्ञानोपयोगिन्यः कुल-शील-वृत्तादियोग-वियोगनिबन्धना अन्या अपि ब्राह्मणानां संज्ञाः कथ्यन्ते ।

तत्राह देवलः ।

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च तपःपरः ।
अनूचानस्तथा भ्रूण ऋषिकल्पो ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।
तेषान्तपःपरः श्रेष्ठो विद्यावृत्तविशेषतः ॥

विद्यावृत्तातिशयकृतादेशिष्याद्धेतोरित्यर्थः ।

उद्देशक्रमेणैवैतेषां लक्षणान्याह स एव ।

ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥

'अनुपेतः' उपनयनरहितः ।

एकादशमतिक्रम्य वेदस्याचारवान्द्विजः ।
स ब्राह्मण इति प्रोक्तो निवृत्तः सत्यवान् घृणी ॥

'एकादशातिक्रमः' वेदस्य किञ्चिन्न्यूनस्याध्ययनं । 'निवृत्तः' शान्तः ।

एकां शाखां सकलां वा षड्भिरङ्गैरधीत्य वा ।
षट्कर्म्मनिरतो विप्रः श्रोत्रियो नाम धर्म्मवित् ॥

यमोऽपि ।

ॐकारपूर्व्विकास्तिस्रः सावित्रीं यस्तु विन्दति ।
चरितब्रह्मचर्य्यश्च स वै श्रोत्रिय उच्यते ॥

'ॐकारपूर्व्विकाः,' महाव्याहृतीरिति शेषः ।

ब्रह्मवैवर्त्तेऽपि श्रोत्रियलक्षणमुक्तं ।

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया चापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

देवलः ।

वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शिष्टः श्रोत्रियतां प्राप्तः सोऽनूचान इति स्मृतः ॥
अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेन्द्रियः ॥
वैदिकं लौकिकञ्चैव सर्व्वं ज्ञानमवाप्य यः ।
आश्रमस्थो वनी नित्यमृषिकल्प इति स्मृतः ॥

'लौकिकं' अर्थार्जनादिज्ञानं ।

ऊर्द्ध्वरेतास्तपस्युग्रो नियताशी न संशयं ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ॥

सत्या सन्धा अभिसन्धिरभिप्रायो यस्य असौ 'सत्यसन्धः' सत्यसङ्कल्प इत्यर्थः ।

निवृत्तः सर्व्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निःक्रियो दाता त्रिशुक्लस्य स्मृतो मुनिः ॥

'निवृत्तः' निषिद्ध-काम्यकर्म्मभ्यः । 'निःक्रियः' अर्थार्जनादिक्रियारहितः ।

एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः ॥
त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ।

सम्वर्त्तः ।

उत्पत्तिं प्रलयञ्चैव भूतानामगतिङ्गतिम् ।
वेत्ति विद्यामविद्याञ्च स भवेद्वेदपारगः ॥

महाभारते ।

अध्यापयेत्तु यः शिष्यं कृतोपनयनं द्विजः ।
सरहस्यञ्च सकलं वेदं भरतसत्तम ।
तमाचार्य्यं महाबाहो प्रवदन्ति मनीषिणः ॥

आह बृहस्पतिः ।

आचिनोति च शास्त्राणि आचारे स्थापयत्यपि ।
स्वयमाचरते यस्तु तमाचार्य्यं प्रचक्षते ॥

मनुः ।

अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः ।
तमपीह गुरुं विद्यात् श्रुतोपक्रियया तथा ॥
सर्व्वं वा यदि वाप्यर्द्धं पादं वा यदि वाक्षरं ।
सकाशाद्यस्य गृह्णीयान्नियतं तस्य गौरवमिति ॥

शिवधर्म्मे ।

संस्कृतैः प्राकृतैर्व्वाक्यैः यः शिष्यमनुरूपतः ।
देशभाषाद्युपायैस्च बोधयेत् स गुरुः स्मृतः ॥

महाभारते ।

एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा गुरुः ।
योऽध्यापयेत् स्ववृत्त्यर्थं(१) उपाध्यायः स उच्यते ॥

---

(१) योऽध्यापयति वृत्त्यर्थमिति ग० ।

व्यासः ।

अन्याधेयं पाकयज्ञमग्निष्टोमादिकं तथा ।
यः करोति वृतो नूनमृत्विजन्तं प्रचक्षते ॥

शिवधर्म्मोत्तरे ।

चराचरस्य कर्त्तारमनन्तविभवं विभुं ।
आत्मानमेव यो वेत्ति स चात्मज्ञ इति स्मृतः ॥
शिवधर्म्मरताः शान्ताः शिवज्ञानपरायणाः ।
शिवधर्म्मप्रवक्तारो विप्राः स्युः शिवयोगिनः ॥

मनुः ।

सान्तानिकं यक्ष्यमाणमध्वगं सार्व्ववेदसं ।
गुर्व्वर्थं पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनं ।
नवैतान् स्नातकान् विद्यात् ब्राह्मणान् धर्म्मभिक्षुकान् ॥

'सान्तानिकः' सन्तानप्रयोजनः विवाहार्थीत्यर्थः। 'अध्वगः' अत्र धर्म्मार्थे प्रचलितः। 'सार्व्ववेदसः' सर्व्वस्वदक्षिणयज्ञकृत्। 'उपतापी' व्याधिपीड़ितः।

आदित्यपुराणे ।

अक्रोधना धर्म्मपराः शान्ताः शमदमे रताः ।
निस्पृहाश्च महाराज ते विप्राः साधवः स्मृताः ॥

सौरपुराणे ।

गङ्गायमुनयोर्म्मध्ये मध्यदेशः प्रकीर्त्तितः ।
तत्रोत्पन्ना द्विजा ये वै साधवस्ते प्रकीर्त्तिताः ॥

ब्रह्माण्डपुराणे ।

अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विता ।
सा गौरी तत्सुतो यस्तु स गौरः परिकीर्त्तितः ॥

हारीतः ।

काण्डमेषाङ्कुलव्याख्या पर्व्वाण्यङ्गयुगानि तु ।
यस्तु तन्मापयेत् रक्षेत् स कुलीन इति श्रुतिः ॥

देवलः ।

धर्म्माधर्म्मविभागज्ञो निविष्टो वेदशासने ।
क्रियालज्जाक्षमाधीमानार्य्योम्लेच्छो विपर्य्यये ॥

यमः ।

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
न पाणिपादचपलो न नेत्रचपलो द्विजः ।
न च वाक्चपलश्चैव इति शिष्टस्य लक्षणं ॥

इति प्रशस्तब्राह्मणसंज्ञाः ।

अथाब्राह्मणाः ।

आह शातातपः ।

अब्राह्मणास्तु षट् प्रोक्ता ऋषिः शातातपोऽब्रवीत् ।
आद्यो राजभृतस्तेषां द्वितीयः क्रयविक्रयी ॥
तृतीयो बहुयाज्यः स्यात् चतुर्थो ग्रामयाजकः[(१)] ।
पञ्चमस्तु भृतस्तेषां ग्रामस्य नगरस्य च ॥
अनागतान्तु यः पूर्व्वां सादित्याञ्चैव पश्चिमां ।

(१) ग्रामयाचक इति ख० ।

नोपासीत द्विजः सन्ध्यां स षष्ठोऽब्राह्मणः स्मृतः ॥

व्यासः ।

ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः ।
जातिमात्रोपजीवी च भवेदब्राह्मणस्तु सः ॥

मनुः ।

नानृग्ब्राह्मणो भवति न वणिक् न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥

'अनृक्' ऋग्वर्जितः, वेदशून्य इत्यर्थः ।

'कुशीलवः' गीतनृत्यवृत्तिः ।

देवलः ।

कूपमात्रोदकग्रामे विप्रः संवत्सरं वसन् ।
शौचाचारपरिभ्रंशाद् ब्राह्मण्याद्धि प्रमुच्यते ॥

अथ दुर्ब्राह्मणाः ।

अत्राह हारीतः ।

पक्षिमीनमृगघ्ना ये सर्पकच्छपघातिनः ।
नानाजन्तुवधासक्ताः प्रोक्ता दुर्ब्राह्मणा हि ते ॥

तथा ।

अथ वेदश्च वेदी च त्रियुगं यस्य सीदति ।
स वै दुर्ब्राह्मणः प्रोक्तो ब्रह्मवादिषु गर्हितः ॥

'वेदः' वेदाध्ययनं। 'वेदी' वेदसाधनका दर्शपूर्णमासादयो यागाः । 'त्रियुगं' प्रपितामहप्रभृतिपितृपर्य्यन्तं मिथुनत्रयं यावत्, 'सीदति' अवसीदति उच्छिद्यत इत्यर्थः ।

आह यमः ।

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम् ।
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ॥

अथ वृषलीपतिप्रभृतयः ।

अत्र वृषलीपतिशब्देन शूद्रापतिरेव योगसामर्थ्याल्लभ्यते । तस्य च निन्दा त्रयोदशविधपुत्रप्रकरणे विस्तरेण विवृता । पारिभाषिकन्तु वृषवलीपतिमाहोशनाः ।

बन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥
यस्त्वेतामुद्वहेत् कन्यां ब्राह्मणो ज्ञानदुर्ब्बलः ।
अश्रद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिं ।

चमत्कारखण्डे ।

वृषो हि भगवान् धर्म्मस्तस्य यः कुरुते त्वलं ।
वृषलन्तं विदुर्देवाः सर्व्वधर्म्मबहिष्कृतं ॥

तथैव स्त्री वृषली तत्पतिः वृषलीपतिः । 'अलं' वारणं यः कुरुते सः 'वृषलः' धर्म्मोपघातीर्थः ।

प्रभासखण्डे ।

वृषलीत्युच्यते शूद्री तस्या यस्य पतिर्भवेत् ।
लालोच्छिष्टस्य संयोगात् पतितो वृषलीपतिः ॥
स्वं वृषन्तु परित्यज्य परेण तु वृषायते ।
वृषली सा तु विज्ञेया न शूद्री वृषली भवेत् ॥
चाण्डाली बन्धकी वेश्या रजस्था या च कन्यका ।

ऊढ़ा या च स्वगोत्रा स्यात् वृषल्यः संप्रकीर्त्तिताः ॥
पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता(१)।
पतन्ति पितरस्तस्याः सा कन्या वृषली भवेत् ॥
यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्ब्बलः।
अश्रद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिं ॥
परदाराभिगो मोहात् पुरुषोऽज्ञान उच्यते।
स एव पतितो ज्ञेयो यः सदा सेवते गृहे ॥

यमः।

पुनर्भुवः पतिर्य्यस्तु स भवेद्दिधिषूपतिः।

मनुः।

परपूर्व्वापतिं धीरा वदन्ति दिधिषूपतिं।
द्विजोऽग्रे दिधिषूस्तैव यस्य सैव कुटुम्बिनी ॥

देवलस्तु।

ज्येष्ठस्य भार्य्यां सम्प्राप्तां सकामान्दिधिषूपतिः।
द्विजोऽग्रे दिधिषूस्तैव यस्य सैव कुटुम्बिनी ॥

वृद्धमनुः।

भ्रातुर्म्मृतस्य भार्य्यायां योऽनुरज्येत कामतः।
धर्म्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपतिः॥

देवलः।

गूढलिङ्गावकीर्णो स्यात् यस्य भग्नव्रतस्तथा।

---

(१) रजः प्राप्नोत्यसंस्कृतेति क०।

'गूढ़लिङ्गी' ब्रह्मचर्य्याद्याश्रमोपदिष्टदण्डादिलिङ्गरहितः। 'भग्न-व्रतः' विप्लुतब्रह्मचर्य्यः।

यमः।

व्रती यः स्त्रियमभ्येति सोऽवकीर्णी निरुच्यते।

"व्रती" ब्रह्मचारी ।

अथ शूद्रतुल्याः।

तत्र देवलः।

अनुपासितसन्ध्या ये नित्यमस्नानभोजनाः।
नष्टशौचाः पतन्त्येते शूद्रतुल्याश्च धर्म्मतः॥

वशिष्ठः।

उदक्यान्वासते येषां ये च केचिदनग्नयः।
कुलञ्चाश्रोत्रियं येषां सर्व्वे ते शूद्रधर्म्मिणः॥

'उदक्या' रजस्वला, सा येषां स्नानभोजनदेवपूजादिकाले समीपे तिष्ठति।

बौधायनः।

गोरक्षकान् वाणिजिकांस्तथाकारुकुशीलवान्।
विप्रान् वार्द्धुषिकांश्चैव राजन् शूद्रवदाचरेत्॥

'कारवः' वर्द्धक्यादिकर्म्मकरवृत्त्युपजीविनः। 'वार्द्धुषिकाः' वक्ष्यमाणलक्षणाः।

मनुः।

गोरक्षकान् वाणिजिकांस्तथाकारुकुशीलवान्।
विप्रान् प्रैष्यान् हीनवर्णैः राजन्[१] शूद्रवदाचरेत्॥

---

(१) प्रैष्यान् वार्द्धुषिकांश्चैव विप्रानिति ग०।

'प्रेष्यान् हीनवर्णैः' शूद्रादिभिः प्रेष्यान्।

ये व्यपेत्य स्वकर्म्मभ्यः परपिण्डोपजीविनः।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत्॥

भविष्यपुराणे।

न यस्य वेदो न जपो न विद्या च विभाव्यते।
स शूद्र इव मन्तव्य इत्याह भगवान् मनुः॥
वैश्वदेवेन ये हीना आतिथ्येन बहिष्कृताः।
सर्व्वे ते वृषला ज्ञेयाः श्रुतवन्तोऽपि हि द्विजाः॥

वैश्वदेवग्रहणं पञ्चयज्ञोपलक्षणार्थं।

चमत्कारखण्डे।

वृषोहि भगवान् धर्म्मस्तस्य यः कुरुते लयं।
वृषलन्तं विदुर्देवाः सर्व्वधर्म्मबहिष्कृतं॥

आह देवलः।

द्वितीयस्य पितुर्योऽन्नं भुक्त्वा परिणतो द्विजः।
अवरेढ़ इति ज्ञेयः शूद्रधर्म्मा स जातितः॥

'द्वितीयस्य' प्रतिग्रहीतुः। क्रेतुर्वा पितुरन्नादिना यः संवृद्धः सः 'अवरेढ़ः' दत्तकक्रीतकादिरित्यर्थः।

अन्यमप्यवरेढ़माह मनुः।

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते।
अवरेढ़ इति ज्ञेयः शूद्रधर्म्मा स जातितः॥

अथ ब्राह्मणब्रुवादयः।

व्यासः।

गर्भाधानादिभिर्युक्तस्तथोपनयनेन च ।
न कर्म्मवान्[१] न चाधीते स भवेद्ब्राह्मणब्रुवः ॥

सम्वर्त्तः ।

अव्रतौ वैश्यराजन्यौ शूद्रश्चाब्राह्मणास्त्रयः ।
वेदव्रतविहीनश्च ब्राह्मणो ब्राह्मणब्रुवः ॥

वसिष्ठः ।

यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥
गर्भाधानादिभिर्युक्तस्तथोपनयनादिमान् ।
न कर्म्मवान्न चाधीते स भवेद्ब्राह्मणब्रुवः ॥

हारीतः ।

शूद्रप्रेष्यो भृतो राज्ञा वृषलो ग्रामयाजकः ।
वधबन्धोपजीवी च षडेते ब्रह्मबान्धवः ॥

ब्रह्माण्डपुराणे ।

आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं स चोक्तो ब्रह्मराक्षसः ।

हारीतः ।

अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः ।
रौद्रेषु निरता नित्यं यातुधानाः प्रकीर्त्तिताः ॥

विष्णुः ।

देशं गोत्रं कुलं विद्यामन्नार्थं यो निवेदयेत् ।

---

(१) कर्म्मकृदिति क० ।

वैवस्वतेषु धर्म्मेषु वान्ताशी सः प्रकीर्त्तितः ॥

सर्व्वज्ञा वयमित्येवमभिमानरता नराः ।

वान्ताश्निनः परित्याज्याः श्राद्धे दाने च लम्पटाः ॥

अथ कुण्डगोलकादयः ।

मनुशातातपौ ।

परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।

पत्यौ जीवति कुण्डस्तु मृते भर्त्तरि गोलकः ॥

तौ तु जातौ परक्षेत्रे प्राणिनां प्रेत्य चेह वै ।

नियुक्तौ हव्यकव्यानि नाशयेतां प्रदायिनां ॥

वृहस्पतिः ।

पारदार्य्यमधर्म्मन्तु तज्जातौ कुण्डगोलकौ ।

अश्राद्धेयावभोज्यान्नौ क्षेत्रजाद्यास्ततोऽशुभाः ॥

आह यमः ।

जीवत्पितरि योऽन्येन जातः कुण्डः स उच्यते ।

तस्य यो ब्राह्मणो भुङ्क्ते स कुण्डाशी निगद्यते(१) ॥

पराशरः ।

जीवतो जारजः कुण्डो मृते भर्त्तरि गोलकः ।

यस्तयोरन्नमश्नाति स कुण्डाशीति कथ्यते ॥

कुण्डगोलकावभिधायाह मनुः ।

यस्तयोरन्नमश्नाति स कुण्डाश्युच्यते द्विजः ।

ब्रह्मपुराणे ।

(१) कुण्डाशी निरुच्यते इति ख० ।

चतुःषष्टिपलैः शुद्धैः कुण्डं प्रस्थचतुष्टयं ।
भवेत्तद्यस्तु निगिरेत् स कुण्डाशी पतत्यधः ॥

एकस्मिन्नेव भोजने यः प्रस्थचतुष्टयपरिमाणमन्नं निगिरेत् भक्षयति स कुण्डाशी ।

अथ काण्डपृष्ठाः ।

तत्र हारीतः ।

शूद्रापुत्राश्च दत्ता ये ये च वै क्रीतकाः स्मृताः ।
सर्व्वे ते मैत्रिणा प्रोक्ताः काण्डपृष्ठा न संशयः ॥
स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।
तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥
स्वकुलं काण्डमित्युक्तं तत् कृत्वा पृष्ठतस्तु यः ।
कुलान्तरं व्रजेद् यस्मात् काण्डपृष्ठस्ततः स्मृतः ॥

यमोऽप्याह ।

आपद्दत्तो ह्यपकृतो यस्य स्याद् वैष्णवीसुतः ।
इत्येते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयस्तथा ॥

मासोपवासादिव्रतैर्विष्णोराराधनपरा विधवा 'वैष्णवी', तस्यां तदवस्थायां सवर्णादुत्पन्नः 'वैष्णवीसुतः' । विस्तीर्णापदो ब्राह्मणस्य क्षत्रियवैश्यवृत्तित्यागोपदेशानन्तरमाह नारदः ।

तस्यामेव तु यो वृत्तौ ब्राह्मणो रमते रसात् ।
काण्डपृष्ठश्च्युतो मार्गात् सोऽपाङ्क्तेयः प्रकीर्त्तितः ॥

देवलः ।

वेश्यापतिः कृष्णपृष्ठः काण्डपृष्ठो भटो भवेत् ।

अथ वैडालव्रतिकादयः ।

मनु-विष्णू ।

धर्म्मध्वजी सदा लुब्धः छाद्मिको लोकदम्भकः ।
वैड़ालव्रतिको ज्ञेयो हिंस्रः सर्व्वाभिसन्धकः ॥
यस्य धर्म्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि वैड़ालं नाम तद्व्रतं ॥

यमः ।

यः कारणं पुरस्कृत्य व्रतचर्य्यां निषेवते ।
पापं व्रतेन प्रच्छाद्य वैड़ालं नाम तद्व्रतं ॥
अर्थञ्च विपुलं गृह्य हित्वा लिङ्गं निवर्त्तयेत् ।
आश्रमान्तरितं रक्षेत् वैड़ालं नाम तद्व्रतं ॥

यो ह्यन्यायेन विपुलमर्थं संगृह्य राजादिभिस्तदपहारमाशङ्कमानः पूर्व्वाश्रमलिङ्गानि परिवर्त्त्य अतिमाननीययत्याद्याश्रमस्वीकारेण तद्द्रव्यं रक्षति तस्य तद्व्रतं वैडालसंज्ञं भवति ।

प्रतिगृह्याश्रमं यस्तु स्थित्वा तत्र न तिष्ठति ।
आश्रमस्य तु लोपेन वैड़ालं नाम तद्व्रतं ॥
दत्त्वोदकेन कन्यान्तु कृत्वा चैव प्रतिग्रहं ।
कृतार्थो नार्थवान् यस्तु वैड़ालं नाम तद्व्रतं ॥

यो जलपूर्व्वं योग्याय कन्यां प्रदाय कृतार्थः सन्नपि तामेव भूयोऽप्यन्यस्मै दातुमिच्छन्नार्थवान् अकृतार्थ इव भवति तस्य तच्चरितं वैडालं व्रतं । यस्तु नियतकृत्यपर्य्याप्तं प्रतिगृह्याप्यसन्तोषादकृतार्थमिवात्मानं मन्यते तस्यापि तच्चरितं वैड़ालं ।

यतीनामाश्रमं गत्वा प्रत्यवास्य तु यः पुनः ।
यतिधर्म्मविलोपेन वैड़ालं नाम तद्व्रतं ॥
अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः ।
शठो मिथ्याविनीतश्च वकव्रतचरो द्विजः[१] ॥

कूर्म्मपुराणे ।

बौद्ध-श्रावक-निर्ग्रन्थाः पञ्चरात्रविदो जनाः ।
कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥
अनाश्रमी द्विजो यः स्यादाश्रमी वा निरर्थकः ।
मिथ्याश्रमास्तु ये विप्रा विज्ञेयाः श्राद्धदूषणे ॥

देवलः ।

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयं ।
असौ देवलको नाम हव्यकव्येषु गर्हितः ॥

तथा ।

देवतांशोपजीवी च नाम्ना देवलको भवेत् ।
भवेत् करणसंज्ञश्च सङ्घेषु व्यवहारवान्[२] ॥
अगारदाही स ज्ञेयः प्रेतदग्धा ह्यनेकशः[३] ।

'प्रेतदग्धा' प्रेतदाहकः ।

स चाप्यगारदाही स्याद्यो द्वेषाद्वेश्मदाहकः ।
क्षेत्र-सस्यावनीनाञ्च दग्धारोऽरण्यदाहिनः ॥
महिषीत्युच्यते भार्य्या सा चैव व्यभिचारिणी ।

---

(१) वकवृत्तधरो द्विज इति ख० ।
(२) स क्रय्यव्यवहारवानिति ग० ।
(३) प्रेतदग्धाधमेन य इति ख० ।

तस्यां यो जायते गर्भः स वै माहिषकः स्मृतः ॥

ब्रह्मपुराणे ।

महिषीत्युच्यते भार्य्या सा चैव व्यभिचारिणी ।
तस्यां यः क्षमते दोषं स वै माहिषकः स्मृतः ॥

देवलः ।

गोरसानाञ्च विक्रेता गोविक्रेता च वै द्विजः ।
गुड़-लवण-तिलानां विक्रेता दुष्टविक्रयी ॥
निकृष्टोत्कृष्टमध्ये यो वर्णेषु अनवग्रहः ।
आचरत्यपराचारं वर्णसम्भेदकस्तु सः ॥
एकाकी व्यसनाक्रान्तो धन्य इत्युच्यते बुधैः ।
विप्रं वार्द्धुषिकं विन्द्यात्तृणवृद्ध्युपजीविनं ॥

विष्णुः ।

यस्तु निन्देत्परं जीवं प्रशंसत्यात्मनो गुणान् ।
स वै वार्द्धुषिको नाम सर्व्वकर्म्मसु गर्हितः ॥

वसिष्ठः ।

समर्घं धान्यमादाय महार्घं यः प्रयच्छति ।
स वै वार्द्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
यः सगोत्रां समारूढः स विप्रो गोत्रवाड़्भवेत् ।
राजप्रेषकरो नित्यं ब्राह्मणोऽधिहृतः स्मृतः ॥

नारदः ।

पुत्राचार्य्यः स विज्ञेयो ग्रामे यो बालपाठकः ।
पुत्रादवाप्तविद्यो वा पुत्राचार्य्यो निगद्यते ॥

यो भ्राम्यति भ्रमरवद्विभवार्थं गृहे गृहे ।
अतिलुब्धतया विप्रो भ्रामरी स निगद्यते ।
यस्तु दुष्टतपश्चर्य्यः स मूढ़ो नाम संज्ञया ॥

छन्दोगपरिशिष्टे कात्यायनः ।

यः स्वाध्यायाग्निमालस्याद्देवादीन्नैभिरिष्टवान् ।
निराकर्त्तामरादीनां स विज्ञेयो निराकृतिः ॥

गौतमः ।

अधीत्य विस्मृतो वेदं भवेद्विप्रो निराकृतिः ।

देवलः ।

आत्मानं धर्म्मकृत्यञ्च पुत्त्रदारांश्च पीड़येत् ।
लोभाद् यः प्रचिनोत्यर्थं स कदर्य्य इति स्मृतः ॥

उशना ।

राज्ञः प्रबोधसमये घण्टाशिल्पस्तु घाण्टिकः ।

वृद्धगौतमः ।

आत्मानं धर्म्मकृत्यञ्च पुत्त्रदारांश्च पीड़येत् ।
मोहाद् यः पितरौ भृत्यान् स कदर्य्य इति स्मृतः ॥

हारीतः ।

ये दिवं बहुभिः पापैः छादयन्ति नराधमाः ।
दुष्प्रापणात्तु देहस्य दुरात्माना हि ते स्मृताः ॥

'दिवं' परलोकं, 'छादयन्ति' तिरस्कुर्व्वन्ति । 'देहस्य दुष्प्रापणात्' दुष्टेन कर्मणा निर्व्वहणात् ॥

यमः ।

परद्रव्योपहर्त्तारस्तेनाः स्युर्ब्राह्मणाधमाः ।
दुष्प्रापणात्तु देहस्य दुरात्मानो हि ते स्मृताः ।
ये व्यपेताः स्वकर्मभ्यः ते नास्तिकाः प्रकीर्त्तिताः ॥

कात्यायनः ।

हुङ्कारं कासनञ्चैव लोके यच्च विगर्हितं ।
अनुकुर्य्यादनुब्रूयाद्वाग्दुष्टं तं विवर्जयेत् ॥

अथ पतिताः ।

उशनाः ।

असमान-याजकाश्च श्रुतिविक्रयिकाश्च ये ।
अन्यपूर्व्वाप्रजाताश्च पतितान् मनुरब्रवीत् ॥

'अन्यपूर्व्वाः' पुनर्भूप्रभृतयः ।

यमः ।

शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

देवलः ।

भृतकाध्यापको यश्च भृतकाध्यापितश्च यः ।
तावुभौ पतितौ विप्रौ स्वाध्यायक्रयविक्रयात् ॥

उक्तञ्च गार्ग्येण ।

सोदर्य्ये तिष्ठति ज्येष्ठे कुर्य्याद्यो दारसंग्रहं ।
आवसथ्यं तथाधानं पतितस्तु तथा भवेत् ॥

वायुपुराणे ।

आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं पतितो ब्रह्मराक्षसः ॥

अथ षण्ढाः ।

देवलः ।

षण्ढको वातजः षण्डः षण्डः क्लीवो नपुंसकः ।
कीलकश्चेति षण्डोऽयं षण्डभेदो विभाषितः ॥
तेषां स्त्रीतुल्यवाक्श्लिष्टः स्त्रीधर्म्मात् षण्डको भवेत् ।
पुमान् भूत्वा स्वलिङ्गानि पश्चाच्छिन्द्यात्तथैव च ॥
स्त्री च पुंभावमास्थाय पुरुषाचारवद्गुणा ।
वातजो नाम षण्डः स्यात् स्त्रीषण्डो वापि नामतः ।
अस्त्रीलिङ्गोऽपि षण्डः स्यात् षण्डस्तु म्लानमेहनः ॥
स कीलक इति ज्ञेयो यः क्लैव्यादात्मनः स्त्रियं ।
अन्येन सह संयोज्य पश्चात्तामेव सेवते ॥

अथ नग्नाः ।

तत्राह पराशरः ।

नग्नः काषायवस्त्रः स्यान्नग्नः कौपीनमात्रधृक् ।
नग्नः स्यान्मलवद्वासा नग्नश्चार्द्धपटावृतः ॥

रञ्जकद्रव्यनिर्य्यासः कषायस्तेन रक्तं वस्त्रं काषायं तद्वसानो नग्न इत्युच्यते । गुह्यप्रदेशमात्राच्छादनपर्य्याप्ता पुरतः पृष्ठतः कटिसूत्रग्रथनोपायेन वसनीया वस्त्रचीरिका कौपीनं तत्परिधानाधिकारित्वेनानुक्तो गृहस्थादिस्तन्मात्रधृङ्नग्नः । अधौतवस्त्रो रजकादिधौतवस्त्रयुक्तो वामलवद्वासाः । एकस्यैवानवच्छिन्नस्य पटस्यार्द्धं वसानोऽर्द्धं प्रावृण्वानोऽर्द्धपटावृत इत्युच्यते खण्डपटवसनो वा ।

भृगुस्मृति-प्रभासखण्डयोः।

नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः।
विकच्छोऽनुत्तरीयश्च द्विकच्छोऽवस्त्र एव च।
नग्नः काषायवस्त्रः स्यान्नग्नश्चार्द्धपटः स्मृतः॥

'कौपीनकेवलः' कौपीनमात्रधृक्। परिहितवाससो गुह्यप्रदेशाच्छादनोपयोगी प्रान्तःकच्छः स यस्य विमुक्तस्त्विकच्छ निषङ्गरहितः। 'अनुत्तरीयः' उत्तरीयरहितः। कटिबन्धनवस्त्रं कक्षा। परिहितवस्त्रो परिहिततदुत्तरार्द्धेन वस्त्रान्तरेण वा तिर्यक्सम्मिलनसंकुचितविस्तरेण कटिबन्धनं द्वितीया कक्षा। तद्वान् 'द्विकच्छः'। इमाञ्च द्वितीयां कक्षामासुरीशब्देनाह याज्ञवल्क्यः।

परिधानाद्वहिःकक्षा निबद्धा ह्यासुरी भवेदिति।

ब्रह्मवैवर्त्ते।

सर्व्वेषामेव भूतानां त्रयी संवरणं यतः।
ये वै त्यजन्ति तां मोहात्ते तु नग्नाः प्रकीर्त्तिताः॥

अथ परिवित्त्यादयः।

आह देवलः।

ज्येष्ठे चाप्यनिविष्टे च ज्येष्ठमुत्क्रम्य यः पुनः।
विन्देत परिवित्तिश्च परिवेत्ता च तावुभौ॥

'ज्येष्ठे' भ्रातरि, 'अनिविष्टे' अकृतविवाहे, यदा कनीयान् 'विन्देत' दारसंग्रहं कुर्य्यात्, तदा ज्येष्ठः 'परिवित्तिः' इतरः 'परिवेत्तेति वचनार्थः।

मनुः।

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्व्वजः ॥

'स्थिते', दाराग्निहोत्रसंयोगं विनेति शेषः । अग्निहोत्राद्युत्तर-क्रियाप्रयोज्यमाधानं विवक्षितं ।

उक्तञ्च गार्ग्येण ।

सोदर्य्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसंग्रहं ।
आवसथ्यं तथाधानं पतितस्त्वन्यथा भवेत् ॥

'आवसथ्यं' आवसथ्याधानं, दायविभागकाले क्रियमाणमौपा-सनाधानमिति यावत् । विवाहकाले क्रियमाणस्यौपासनाधानस्य न कुर्य्याद्दारसंग्रहमित्यनेनैवार्थान्निरस्तत्वात् । अतएवौपासनं समादध्या-त्स्वकाले परिवेदयन्निति ब्रह्मगर्भवचनेऽपि स्वकालशब्देन दायवि-भागकाल एवोक्तः न तु विवाहकालोपीत्यवगम्यते । 'आधानं' गार्हपत्याद्याधानं । 'पतितो भवेत्' उपपातकी भवेदित्यर्थः । उप-पातकपरिगणनावचने परिवेत्तृ-परिवित्त्योः कीर्त्तनात् ।

लौगाक्षिः ।

सोदर्य्ये तिष्ठति ज्येष्ठे योऽग्न्याधेयं करोति हि ।
तयोः पर्य्याहितो ज्येष्ठः पर्य्याधाता कनिष्ठकः ॥

सोदर्य्यग्रहणादसोदर्य्ये ज्येष्ठे तिष्ठति कनिष्ठस्य दारसंग्रहादौ जातेऽपि न पातित्यदोष इत्यवगम्यते । शातातपेन त्वसोदर्य्यविषये दोषाभावः साक्षादेवोक्तः ।

पितृव्यपुत्रसापत्नपरनारीसुतेषु च ।
ज्येष्ठेष्वपि च तिष्ठत्सु भ्रातॄणान्तु कनीयसां ।

दाराग्निहोत्रसंयोगे न दोषः परिवेदने ॥

'पितृव्यपुत्राः' पितृभ्रातृसुताः । 'सापत्नाः' भिन्नमातृजाः । 'परनारीसुताः' द्व्यामुष्यायणपरिभाषया स्वजनकेन परक्षेत्रोत्पादिता भ्रातरः । सत्स्वप्येतेषु ज्येष्ठेषु भ्रातृषु कनिष्ठानां पूर्व्वमपि दाराग्निसंयोगं कुर्व्वतां परिवेत्तृत्वसंज्ञको दोषो नास्तीत्यर्थः । परनारीसुतग्रहणं दत्तकादेरप्युपलक्षणार्थं ।

अतएवाह यमः ।

पितृव्यपुत्रान् सापत्नान् परपुत्रांस्तथैव च ।
दाराग्निहोत्रधर्म्मेषु नाधर्म्मः परिविन्दने ॥

परपुत्रान् दानक्रयादिना स्वपितुः पुत्रत्वमापन्नान् ज्येष्ठान् भ्रातृन् परिविन्दतो नाधर्म्मोऽस्ति । सोदरेऽपि ज्येष्ठे सति कदाचित्परिवेदने कनिष्ठस्य दोषोनास्तीत्याह शातातपः ।

क्लीवे देशान्तरस्थे च पतिते भिक्षुकेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

'भिक्षुकः' प्रव्रजितः । 'योगशास्त्राभियुक्तः' विरक्तः ।

कात्यायनोऽप्याह ।

देशान्तरस्थक्लीवैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रतुल्यातिरोगिणः ॥
जड़मूकान्धवधिरकुब्जवामनखोडकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ॥
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकांस्तस्करांश्चापि परिविन्दन्न दुष्यति ॥

'एकवृषणः' रोगप्रवृद्धवृषणः। 'रोगी' अचिकित्स्यरोगः। 'स्रोडकः' भग्नचरणद्वयः। 'अभार्य्यान्' नैष्ठिकब्रह्मचारिणः। 'कामतोऽकारिणः' स्वेच्छयैव नित्यं विवाहमकुर्व्वाणाः। 'कुहकाः' परवञ्चनाय वृथोद्योगपराः। अत्र ये सर्व्वात्मना विवाहानधिकारिणः क्लीवादयः तेषु सत्सु कालविशेषमन्तरेणापि परिवेदने न दोषः। ये तु कालान्तरे सम्भावितविवाहाधिकाराः देशान्तरस्थ-विरक्त-वेश्यातिसक्त-शूद्रतुल्य-कृषिसक्त-राजपरतन्त्र-धनवृद्धिप्रसक्त-कामतोऽकारि-कुहक-तस्कराः तेषु सत्सु वक्ष्यमाणकालप्रतीक्षां कृत्वा परिवेदनं कुर्व्वतां न दोषोऽस्ति।

तत्र देशान्तरस्थे ज्येष्ठे वशिष्ठ आह।

अष्टौ दश द्वादशवर्षाणि ज्येष्ठं भ्रातरमनिविष्टमप्रतीक्षमाणः प्रायश्चित्ती भवतीति। देशान्तरादागतस्य विवाहादावधिकारसम्भवादित्यभिप्रायः। अत्र धर्म्मार्थमर्थार्थं वा देशान्तरगतस्य ज्येष्ठस्य द्वादशवर्षं प्रतीक्षा।

तथा च स्मृतिः।

द्वादशैव तु वर्षाणि ज्यायान् धर्म्मार्थयोर्गतः।
न्याय्यः प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः॥

धर्म्मार्थयोरिति विद्याया अप्युपलक्षणार्थं। अतएव गौतमेन नष्टे भर्त्तरीति प्रक्रम्य द्वादशवर्षाणि ब्राह्मणस्य विद्यासम्बन्धेनेति भार्य्याया भर्तृप्रतीक्षाकालमुक्त्वाभिहितं भ्रातरि चैवं ज्यायसि यवीयान् कन्याग्न्याधेयेष्विति। 'नष्टे भर्त्तरि' कुत्र गत इत्यज्ञाते भर्त्तरि अत्यन्तदूरदेशान्तरगत इति यावत्। 'विद्यासम्बन्धेन' विद्याग्रहणार्थं देशान्तरगते भर्त्तरि, ब्राह्मणभार्य्यया द्वादशवर्षाणि प्रतीक्ष्य तत्क्रियादिकं कार्य्यं।

एवं ब्राह्मणः कनिष्ठो ज्येष्ठे भ्रातरि विद्याग्रहणार्थं देशान्तरगते द्वादशवर्षाणि प्रतीक्ष्य विवाहाग्न्याधाने कुर्य्यात्। कार्य्यान्तरार्थं देशान्तरगमने तु अष्टौ दश वेति पक्षद्वयं । अत्रेदं विवक्षितं, देशान्तरगतस्य स्वाभिमतं कार्य्यं निर्वर्त्य प्रत्यागमनयोग्ये कार्य्येप्यनागतस्य जीवितसन्देहे सति विवाहसम्भावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन दाराग्निहोत्रसंयोगे क्रियमाणे न परिवेत्तृत्वरूपो दोषो भवतीति । एवमेवं विरक्त-वेश्यातिसक्तादिष्वपि च कियन्तमपि कालं तथैवावस्थितेषु तत्स्वभावत्वावधारणेन विवाहसम्भावनानिवृत्तौ तदुत्तरकालं कनिष्ठेन विवाहादौ क्रियमाणे न दोषः । अनेनैवाभिप्रायेण सुमन्तुनाप्युक्तं ।

व्यसनासक्तचित्तोवा नास्तिको[१] वाथ वाग्रजः ।
कनीयान् धर्म्मकामस्तु आधानमथ कारयेत्॥

आधानग्रहणं विवाहस्याप्युपलक्षणार्थं क्लीवादयस्तु स्वभावतः सर्व्वथा विवाहानर्हत्वात्कियन्तमपि कालं न प्रतीक्षणीयाः ।

तथाच स्मृतिः ।

उन्मत्तः किल्विषी कुष्ठी पतितः क्लीव एव वा ।
राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुं ।
खञ्ज-वामन-कुब्जेषु गद्गदेषु जड़ेषु च ।
जात्यन्धे वधिरे मूके न दोषः परिवेदने॥

एवंविधे ज्येष्ठे सति कनिष्ठस्य परिवेदने दोषोनास्तीत्यर्थः । एवमाधानाधिकारिण्यकृताधाने ज्येष्ठे विद्यमाने तदनुज्ञातस्य कनिष्ठस्य नाग्न्याधाने परिवेत्तृत्वदोषः ।

---

(१) कामुक इति ख० ।

तथाच वृद्धवसिष्ठः ।

अग्रजस्य यदानग्निरादध्यादनुजः कथं ।
अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि ॥

आधानेऽधिकार्य्यप्यग्रजो यदाधानविधिमतिक्रम्याग्न्याधेयं नाद्रियते तदा तदनुमतिं गृहीत्वा अनुज आधानं कुर्य्यादित्यर्थः ।

अयमेवार्थः सुमन्तुनाप्युक्तः ।

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत् ।
अनुज्ञातस्तु कुर्व्वीत शङ्खस्य वचनं यथा ॥

ज्येष्ठभ्रातृग्रहणं पितुरपि प्रदर्शनार्थं ।

तथाच स एव ।

पितुर्यस्य तु नाधानं कथं पुत्रस्तु कारयेत् ।
अग्निहोत्राधिकारोऽस्ति शङ्खस्य वचनं यथा ॥

तथा ।

अनुज्ञातस्य पित्रा तु आधानं सर्व्वदा भवेत् ।

पित्रानुज्ञातस्य पुत्रस्येति शेषः । पितृग्रहणं पितामहस्यापि प्रदर्शनार्थम् ।

अतएवोशनाः ।

पिता पितामहो यस्य अग्रजो वाप्यनग्निमान् ।
तपोऽग्निहोत्रमन्त्रेषु[१] न दोषः परिवेदने ॥

अत्रापि पित्राद्यनुज्ञाततस्येति शेषः । मन्त्रशब्दो वेदोपलक्षणार्थः ।

तथाच शातातपः ।

---

(१) यथाग्निहोत्रमन्त्रेष्विति ख० ।

नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका ॥

यथा वेदाध्ययनतपःश्राद्धराहित्येन स्थितेऽपि ज्येष्ठे तानि तदनुज्ञामन्तरेणापि कनिष्ठेनानुष्ठितानि परिवेदनहेतवो न भवन्ति। तथा ज्येष्ठानुज्ञयाग्नयोऽप्याधीयमाना परिवेदनहेतवो न भवन्तीत्यर्थः । या च कन्या विरूपिकेत्यस्यायमर्थः । विवाहाधिकारिण्यां ज्येष्ठायां कन्यायां विकृतरूपायामनूढायां स्थितायां तदनुज्ञया विनापि कनिष्ठाया विवाहकालातिक्रमभीत्या कृतो विवाहो न दोषायेति । एवं चैवंविधविषयव्यतिरिक्तविषये कन्यास्वपि परिवेदने वरपरिवेदनोक्तं सर्व्वमनुसन्धेयं । अनुजस्य ज्येष्ठविवाहात् पूर्व्वं विवाहे तु ज्येष्ठानुज्ञायामपि दोषो भवतीत्याह(१) हारीतः ।

सोदराणान्तु सर्व्वेषां परिवेत्ता कथं भवेत् ।
दारैस्तु परिविन्दन्ते नाग्निहोत्रेण नेज्यया(२) ॥

अग्निहोत्रादिष्वनुज्ञाता न परिविन्दन्त इति स्थितं। दारैः पुनरनुज्ञाता अपि परिविन्दन्त इति वचनार्थः।

वृद्धयाज्ञवल्क्यः ।

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते ।
सोऽनाहिताग्निर्भवति परिवेत्ता तथोच्यत इति ॥

अस्यार्थः ।

'आवसथ्यं' औपासनाग्निं, 'अनादृत्य' 'अनाधाय, 'त्रेतायां'

(१) ज्येष्ठानुज्ञयापि दोषो नापैतीत्याहेति क० ।
(२) नाधानेन न चेज्ययेति क० ।

गार्हपत्याद्यग्निचयाधाने, 'यः', प्रवर्त्तते 'सोऽनाहिताग्निः', एव भवति। तथा प्रथममौपासनाग्निमनाधाय गार्हपत्याद्याधानकारणात् परिवेत्तेति गीयते।

इति परिवित्त्यादयः ।

इत्यप्रशस्तब्राह्मणसंज्ञाः ।

इति ब्राह्मणसंज्ञाप्रकरणं ।

अथ श्राद्धे प्रशस्ता ब्राह्मणा निरूप्यन्ते।

तत्र मनुशातातपौ ।

तत्र ये भोजनीयाः स्युर्ये च वर्ज्या द्विजोत्तमाः।
यावन्तश्चैव यैश्चान्नैस्तावद्वक्ष्याम्यशेषतः ॥
श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः।
अर्हत्तमाय विप्राय तस्मै दत्तं महाफलं ॥

यः स्वकीयां कृत्स्नां मन्त्रब्राह्मणात्मिकां शाखामधीते सः'श्रोत्रियः'। श्राद्धे विश्वेदेवानुद्दिश्य विहितानि हवींषि 'हव्यानि', पितृनुद्दिश्य विहितानि 'कव्यानि' 'अर्हत्तमाय' कुलशीलविद्याधारायेत्यर्थः। 'तस्मै' श्राद्धादन्यदपि 'दत्तं महाफलं' भवतीति ।

वशिष्ठः।

श्रोत्रियायैव देयानि हव्यकव्यानि नित्यशः ।
अश्रोत्रियाय यद्दत्तं तृप्तिं नार्हन्ति देवताः ॥

आह मनुः ।

सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते ।
एकस्तान् मन्त्रवित् प्रीतः सर्व्वानर्हति धर्म्मतः ॥

'अनृचां' अवेदार्थविदामिति ज्ञेयं । यतः श्रोत्रियायैव देयानी-त्युक्तेरनधीयानानां प्राप्तिरेव नास्ति । मेधातिथिस्तु अनृचा इति प्रथमाबहुवचनान्तं पाठान्तरं दर्शितवान् । तस्मिन् पक्षे अनृचाः सहस्रं यत्र भुञ्जत इति सम्बन्धः । 'मन्त्रवित्' वेदार्थवेत्ता । 'प्रीतः' तर्पितो भोजित इति यावत् । 'सर्व्वान्' 'तान्' 'अनृचान्' 'अर्हति' स्वीकरोतीति अभेदमापद्यते । अभेदे च यत्तेषु सहस्रसंख्येषु भोजितेषु फलन्तदेकस्मिन्नवाप्यत इत्यर्थः ।

ज्ञानोत्कृष्टेषु देयानि कव्यानि च हवींषि च ।
नहि हस्तावसृग्दिग्धौ रुधिरेणैव शुध्यतः ॥

ज्ञानेन विद्यया उत्कृष्टा अधिका 'ज्ञानोत्कृष्टाः', तेभ्यः हव्यकव्यानि देयानि नेतरेभ्य इति । यथा 'असृजा रुधिरेण' 'दिग्धौ' लिप्तौ, 'हस्तौ' 'रुधिरेण' प्रक्षाल्यमानौ न निर्म्मलौ भवतः, एवमविद्वद्ब्रा ह्मणभोजनेनोपक्रियमाणाः पितरो न तत्फलं लभन्त इत्यर्थः ।

तथा ।

दातॄन् प्रतिग्रहीतॄंश्च कुरुते फलभागिनः ।
विदुषे दक्षिणा दत्ता विधिवत् प्रेत्य चेह च ॥

'विदुषे' या 'दक्षिणा' दीयते सा 'दातॄन् प्रतिग्रहीतॄन्' अपि 'फलभागिनः' 'कुरुते' । प्रशंसैषा ईदृशमेतद्विदुषे दानं यत्प्रतिग्रही-तारमप्यदृष्टफलेन योजयति किं पुनर्दातारमिति । 'प्रेत्य', स्वर्गः फलं, 'इह', कीर्त्तिः । भोजयेदित्यनुवृत्तौ गौतमः ।

श्रोत्रीयावाग्रूपवयःशीलसम्पन्नयुवभ्यो दानं प्रथममेके पितृवत् । 'वाक्सम्पन्नाः' संस्कृतभाषिणः । 'रूपसम्पन्नाः' मनोज्ञशरीराः । 'वयः-

सम्पन्नाः' परिणतवयसः। ते हि प्रायेण प्रशान्तविषयानुरागतया विशुद्धमतयो भवन्ति। 'शीलसम्पन्नाः' मनोवाक्कायैः सकलप्राणिहितकारिणः। वयःसम्पन्नत्वस्यापवादमाह। 'युवभ्य' तरुणेभ्यः, 'प्रथमं,' दानं, प्रथमश्राद्धानि नवश्राद्धानीत्यर्थः। प्रथमं प्रधानं वा, यूनां सकलश्राद्धनियमसम्पादनसमर्थत्वात्। 'एके पितृवत्' इति पितृतुल्यान् ब्राह्मणान् भोजयेदित्येके मन्यन्ते। पितरमुद्दिश्य तरुणं, पितामहमुद्दिश्य स्थविरं, प्रपितामहमुद्दिश्य स्थविरतरमिति।

वशिष्ठः।

पितृभ्यो दद्यात् पूर्व्वेद्युः ब्राह्मणान् सन्निपात्य यतीन् गृहस्थान्।
साधूनपरिणतवयसोऽविकर्म्मस्थान् श्रोत्रियान् शिष्यानन्तेवासिनः॥

'पूर्व्वेद्युः' श्राद्धदिनात् पूर्व्वस्मिन्नहनि, 'ब्राह्मणान्','सन्निपात्य' आमन्त्र्य, 'यतयः' प्रव्रजिताः। तदसम्भवे 'गृहस्थान्'।

साधुलक्षणमुक्तं।'अपरिणतवयसः' नातिस्थविरान्।'अविकर्म्मस्थान्' प्रतिषिद्धवर्ज्जकान्। ये च न शिष्या चान्तेवासिनः न सेवका इत्यर्थः। कात्यायनः।

स्नातकानेके यतीन् गृहस्थसाधून्वा श्रोत्रियान् वृद्धाननवद्यान् स्वकर्म्मस्थानभावेऽपि शिष्यान् सदाचारान्।

कृतसमावर्त्तनोऽकृतविवाहः 'स्नातकः'। 'वृद्धः' विद्यातपोभ्यां श्रेष्ठः। येषां मातृतः पितृतश्चावद्यं दोषो नास्ति ते 'अनवद्याः'। 'स्वकर्म्मस्थाः' स्वाश्रमविहित-श्रौतस्मार्त्तकर्म्मनिरताः, उक्तलक्षणब्राह्मणाभावे 'सदाचारान् शिष्यान्' अपि निमन्त्रयेत्। आपस्तम्बः।

तुल्यगुणेषु वयोवृद्धः श्रेयान् द्रव्यकृशश्च, शम-तपः-श्रुत-शीला-

दिभिस्तुल्यत्वे वयोवृद्धः श्रेष्ठः। वयसापि तुल्यत्वे द्रव्यक्षाः क्षीणवृत्तिः श्रेयान्। स च यदि निजेच्छया द्रव्यक्षो भवति न पुनरयोग्यत्वे-नालब्धप्रतिग्रहतया ।

पैठीनसिः ।

प्रयताय शुचये सर्व्वत्र देयं हव्यं कव्यं च तस्माच्छुचिरिति विज्ञायते ।

'प्रयताय' संयताय । 'शुचये' वाह्याभ्यन्तरशौचयुक्ताय । 'सर्व्वत्र' जनने मरणे देवभोजनादौ च। अयमर्थः श्रुतौ विज्ञायते । श्रुति-प्रतीकम्पठति 'तस्माच्छुचिः' इति ।

आपस्तम्बः ।

शुचीन्मन्त्रवतः सर्व्वकृत्येषु भोजयेत् ।

'मन्त्रवन्तः' अधीतवेदाः। 'सर्व्वकृत्येषु' विहितब्राह्मणभोजनेषु श्रौतस्मार्त्तेषु कर्म्मसु। अत्र केचिद्यथा कन्या तथा हविरिति कन्या-साधर्म्म्येण हविषां स्वशाखीयप्रतिपाद्यत्वं मन्यमानाः स्वशाखीयमेव श्रोत्रियत्वादिगुणविशिष्टं श्राद्धे नियोजयन्ति । तदसत् । स्मृती-तिहास-पुराण-गृह्य-कल्पसूत्रेषु क्वचिदपि स्वशाखीयनियमाश्रवणात् । प्रत्युत स्मृत्यादिषु 'त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णो ज्येष्ठसामगः' इत्यादि-भिर्नानाशाखीयानां नानावेदाध्यायिनामेव विधिदर्शनाच्च। न चैतेषां शूद्रकर्त्तृकश्राद्धविषयत्वमिति मन्तव्यं । व्यवस्थायां प्रमाणाभावात् । नापि कन्यासादृश्यदर्शनमात्रेण नियमाव्यवस्थानं युक्तं । सादृश्यस्या-न्यथाप्युपपत्तेः । किञ्च कन्यायामेव तावदेकशाखाध्यायिनियमः कुतो ऽवगतः यद्बलेन हविष्यपि साध्यते । आचारादिति चेत् । कन्यादान-

प्रतिग्रहेषु स्वशाखीयैरेव सह व्यवहरन्तः परशाखीयांश्च प्रयत्नेन परिहरन्तः शिष्टा दृश्यन्ते । तेन ज्ञायते अस्त्यत्र नियम इति । मैवं । शिष्टव्यवहारस्य कुलादिज्ञानाज्ञानमूलत्वात् । तयोश्च सन्निधानव्यवधानाधीनत्वात् । प्रायेण हि तुल्यशाखिनः स्वाध्यायाध्ययन-वेदव्रत-गृह्यकर्म्म-सन्ध्योपासनादि--क्रियाकलाप-विचारणार्थमन्योन्यसङ्गममभिलषन्तः समानदेशवासिनो भवन्ति । सन्निधानाच्च विज्ञातकुलशीलाचाराः परस्परं यौनसम्बन्धविधिमाद्रियन्ते । अन्यशाखीयांस्तु देशान्तरनिवासादविज्ञातस्वरूपतयैव न श्रद्दधते । आर्य्यावर्त्तेषु च समानदेशवासिनां नानाशाखाध्यायिनामप्युपलभ्यन्त एव परस्परमनवगीयमानाः सर्व्वतो विवाहसम्बन्धाः । अविज्ञातपरस्पराणामेकशाखाध्यायिनामपि नोपलभ्यन्ते । अतः । समानदेशवासादिसमुत्थंकुलादिज्ञानमेव परिणयनसम्बन्धप्रवर्त्तकमिति । या तु केषाञ्चित्सत्यपि सादृश्ये न दृश्यते सम्बन्धप्रवृत्तिः तत्रैतन्निदानं येषां पूर्व्वपुरुषैः पूर्व्वमतिविदूरानेकदेशवासिभिर्विगर्हितेतरेतरदेशाचारैः कालान्तरे कथञ्चन सह संवासमासादयद्भिरपि स्वस्वकुलश्रेष्ठत्वाहङ्कारं समुद्वहद्भिरन्योन्यं न प्रवर्त्तते समुद्वाहविधिस्ततस्तत्सन्तानेषु सैवाप्रवृत्तिः कियन्तं कालमनुवर्त्तत इति । अतो न कन्यादाने नापि हविर्दाने स्वशाखीयद्विजनियम इति सिद्धं । एवं च सति वक्ष्यमाणानि वचनानि समञ्जसार्थानि स्युः ।

यमः ।

वेद-विद्या-व्रतस्नाताः श्रोत्रिया वेदपारगाः ।
स्वधर्म्मनिरताः शान्ताः क्रियावन्तस्तपस्विनः ।

तेभ्यो हव्यञ्च कव्यञ्च प्रशान्तेभ्यः प्रदीयते ॥

वेदान्वेदौ वेदञ्चाधीत्य समावृत्ताः 'वेदस्नातकाः'। विद्यां वेदार्थविचारं समाप्य निवृत्ताः 'विद्यास्नातकाः'। व्रतं ब्रह्मचर्य्यं समाप्य निवृत्ताः 'व्रतस्नातकाः'। सत्यपि वेदपारगत्वे नित्यं वेदाभ्यासनिरतत्वप्रदर्शनार्थं श्रोत्रियग्रहणं। द्वन्द्वदुःखसहिष्णवः 'दान्ताः'। अक्रोधनाः 'शान्ताः'।

मनुः।

वेद-विद्या-व्रतस्नातान् श्रोत्रियान् गृहमेधिनः।
पूजयेद्धव्यकव्येन विपरीतांस्तु वर्ज्जयेत् ॥

'गृहमेधिनः' गृहस्थाः।

तथा।

यत्नेन भोजयेच्छ्राद्धे वह्वृचं वेदपारगं।
शाखान्तगमथाध्वर्य्युं छन्दोगञ्चासमाप्तिकं ॥
एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्च्चितः।
पितॄणान्तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥

वेदपारगशाखान्तगासमाप्तिकशब्दैरेकार्थैः सकलशाखाध्येतार उच्यन्ते। ऋग्वेदाध्यायी 'वह्वृचः'। वेदस्य पारं पर्य्यवसानं गच्छतीति 'वेदपारगः'। नायमृत्विग्विशेषोऽध्वर्य्युः किन्तु अध्वर्य्युर्वेदस्य यजुर्वेदस्याध्येता पुरुषः 'अध्वर्य्युः'। शाखाया मन्त्रब्राह्मणात्मिकाया अन्तं पारं गच्छतीति 'शाखान्तगः'। "छन्दोगः" सामवेदाध्यायी। आसमाप्तिरस्यास्तीति 'आसमाप्तिकः'। एषां त्रिविधानां 'अन्यतमः' एकोऽपि, यस्य श्राद्धं भुञ्जीत तस्य पितॄणां साप्तपौरुषी तृप्तिः स्यात्। 'अर्च्चितः'

'साप्तपौरुषी'। कालमहत्त्वोपलक्षणार्थञ्चैतत्। यावत् सप्तपुरुषा आगामिनः पुत्रपौत्रादयो जाताः जनिष्यन्ते च तावत्कालमिति मेधातिथिः। 'शाश्वती' अनवच्छिन्ना। ननु बह्वृचादिशब्दैरेव तत्तद्वेदाध्यायिनः प्रत्येकं विहिताः। अत एषामन्यतम इति किमर्थं। केचिदाहुः। आथर्व्वणिकनिवृत्त्यर्थमेतत्। एषां बह्वृचाध्वर्य्युच्छन्दोगानामेवान्यतमः श्राद्धे भोजनीयो न तु तद्व्यतिरिक्तः कश्चित्। त्रयी वै विद्या ऋचो यजूंषि सामानीति शतपथेऽथर्व्वाङ्गिरसां विद्यात्वेनानभिधानात्। तदयुक्तं। आथर्व्वणिकं विदधद्भिः तदतिक्रमे दोषञ्चाभिदधद्भिर्बहुभिर्यमशातातपादिवचनैः सह विरोधात्। शतपथश्रुतेश्चायमर्थः। ऋग्यजुःसामसंज्ञका त्रय्येव विद्या वैतानिककर्म्मोपयोगिनी नान्येति न पुनरेतदतिरिक्ता विद्यैव न भवतीति। श्रूयते च शतपथब्राह्मण एव। ब्राह्मणस्वाध्यायसंशब्देन पूर्व्विकाथर्व्वाङ्गिरसां प्रशंसा स एव विद्वानथर्व्वाङ्गिरसोऽहरहः स्वाध्यायमधीते मेद आहुतिभिरेव तद्देवांस्तर्पयति त एनं तृप्तास्तर्पयन्ति योगक्षेमेण प्राणेन रेतसा सर्व्वात्मना सर्व्वाभिः पुण्याभिः सम्पद्भिर्घृतकुल्या मधुकुल्याः पितॄन् स्वधा अभिवहन्तीति शतपथः। आश्वमेधिककाण्डे पारिप्लवब्राह्मणे तेषां वेदसंज्ञाशब्दतापि दृश्यते। अथर्व्वाणो वेदः सोऽयमित्यथर्व्वाणामेकं पर्व्व व्याचक्षाणइवानुद्रवेत्। अङ्गिरसो वेदः सोयमित्यङ्गिरसामेकं पर्व्व व्याचक्षाणइवानुद्रवेदिति। अङ्गानि वेदाश्चत्वार इति स्मृतिपुराणादिष्वपि अथर्व्वाङ्गिरसामेव चतुर्थवेदत्वेनाभिधानमभिमतं। अतो नाथर्व्वणिकनिवृत्त्यर्थमिदं किन्तु पितृक्रतौ त्रयस्तावन्निमन्त्रणीयाः। ते च छन्दोगश्चेति चशब्देन बह्वृचोऽध्वर्युः छन्दोग इत्येवं

त्रयः सर्व्वदा गृह्णीरन् नन्वन्यतरवेदाध्यायिनोऽपीति शङ्कानिवृत्त्यर्थमुक्तमेषामन्यतम इत्यादि।

यमः।

वह्वृचो यस्त्रिसौपर्णश्छन्दोगो ज्येष्ठसामगः।
पञ्चाग्निर्व्वा यजुर्व्वेदी अथर्व्वा ब्रह्मशीर्षकः॥
आत्मविद्याङ्गविच्चैव ब्रह्मदेयासुतस्तथा।
एते सर्व्वे यथावत् स्युरेकदेशोऽपि वा भवेत्॥
त्रयः परेवराश्चैव आत्मा तत्रैव सप्तमः।
ते सप्तपुरुषाः सर्व्वे तदन्नमुपभुञ्जते॥

त्रिसुपर्णः। ऋग्यजुषयोः एकदेशः तदध्ययनाङ्गं व्रतञ्च तदस्यास्ति असौ 'त्रिसौपर्णः'। 'ज्येष्ठसाम' सामविशेषः। पञ्चाग्निर्नाम यजुर्व्वेदविद्या तदध्ययनाङ्गं व्रतञ्च तत्सम्बन्धात् पुरुषः 'पञ्चाग्निः'। अथवा गार्हपत्याहवनीयदक्षिणाग्निसभ्यावसथ्याः अग्नयो यस्य स 'पञ्चाग्निः'। ब्रह्मशीर्षमथर्व्वोपनिषदेकदेशः तद्वेत्ता 'ब्रह्मशीर्षकः'। 'आत्मवित्' आत्मतत्त्ववेत्ता। 'ब्रह्मदेया' ब्राह्मविवाहोढ़ा तस्यामुत्पन्नः 'ब्रह्मदेयासुतः'। 'एते सर्व्वे' वह्वृचाद्याः। 'एकदेशोऽपि' इति उक्तानां सर्व्वेषां असम्भवे यावन्तो लभ्यन्ते तावन्तो ग्राह्याः। 'परे' चतुर्थात् पुरुषात् प्रभृतयः, 'अवरे' चतुर्थात् पूर्व्वे त्रयः पितृपितामहप्रपितामहाः। 'आत्मा' यजमानः, एते सप्त पुरुषाः विशिष्टपात्रे दत्तं अन्नं भुञ्जते। यथा पित्रादीनां षर्णां पुरुषाणां श्राद्धमुपकारकं भवति एवं यजमानस्यापि परलोके विशिष्टफलोत्पादकं भवति।

आह वृहस्पतिः।

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते ॥
अटेत पृथिवीं सर्व्वां सशैलवनकाननां ।
यदि लभ्येत पित्रर्थे साम्नामक्षरचिन्तकः ॥
ऋचा तु तृप्यति पिता यजुषा च पितामहः ।
पितुः पितामहः साम्ना छन्दोगोऽभ्यधिकस्ततः ॥

यम-शातातपौ ।

छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे च बह्वृचं ।
पुष्टिकर्म्मणि चाध्वर्य्युं शान्तिकर्म्मण्यथर्व्वणं ॥

पुष्ट्यर्थं कर्म्म पुष्टिकर्म। अरिष्टोपशमनार्थं यत्क्रियते तच्छान्तिकर्म्म।

शातातपः ।

भोजयेद् यद्यथर्व्वाणं दैवे पित्र्ये च कर्म्मणि ।
अनन्तमक्षयञ्चैव फलन्तस्येति वै श्रुतिः ॥

'अनन्तं' अपर्य्यवसानं । 'अक्षयं' अकृशं ।

यस्त्वन्यं भोजयेच्छ्राद्धे विद्यमानेष्वथर्व्वसु ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥
तस्मात्सर्व्वप्रयत्नेन श्राद्धकाले त्वथर्व्वणं ।
भोजयेत् हव्यकव्येषु पितृणाञ्च तदक्षयं ॥

याज्ञवल्क्यः ।

अग्र्यः सर्व्वेषु वेदेषु श्रोत्रियो ब्रह्मविद् युवा ।
वेदार्थवित् ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥

कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः ।
पितृमातृपरास्चैव ब्राह्मणाः श्राद्धसम्पदे ॥

'अग्र्यः' मुख्यः अध्येतॄणां । 'सर्व्वेषु' चतुर्षु वेदेषु । 'श्रोत्रियः' यथाविधि स्वशाखाध्यायी । 'ब्रह्मवित्' उपनिषत्पुरुषवित् । 'युवा' मध्यमवयस्कः । 'वेदार्थवित्' मन्त्रब्राह्मणार्थवेत्ता । त्रिमध्वाख्यं व्रतं कृत्वा यस्तदाख्यमृग्वेदैकदेशमधीते सः 'त्रिमधुः' । त्रिसुपर्णव्रतपूर्व्वकं तदाख्ययजुर्व्वेदभागाध्येता 'त्रिसुपर्णिकः' । 'कर्म्मनिष्ठाः' विहितानुष्ठानपराः । 'श्राद्धसम्पदे' श्राद्धसमृद्धये ।

ब्रह्माण्डपुराणे ।

ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ।
अधीयानाः पुराणं ये धर्म्मशास्त्रमथापि वा ॥
ये च पुण्येषु तीर्थेषु कृतस्नाताः कृतश्रमाः ।
मखेषु ये च सर्व्वेषु भवन्त्यवभृथप्लुताः ॥
ये च सत्यव्रता नित्यं स्वधर्म्मनिरताश्च ये ।
अक्रोधनाः क्षान्तिपरास्तान् श्राद्धेषु नियोजयेत् ॥

मत्स्यपुराणे ।

आथर्व्वणः(१) वेदविच्च ज्ञातवंशः कुलान्वितः ।
पुराणवेत्ता ब्रह्मण्यः स्वाध्यायजपतत्परः ॥
शिवभक्तः पितृपरः सूर्य्यभक्तोऽथ वैष्णवः ।
ब्रह्मण्यो योगविच्छान्तो विजितात्मा सुशीलवान् ।
एतांस्तु भोजयेन्नित्यं दैवे पित्र्ये च कर्म्मणि ॥

(१) अथर्व्वज्ञ इति ख० ।

मण्डलब्राह्मणज्ञा ये ये सूक्तं पुरुषं विदुः ।
तांस्तु दृष्ट्वा नरः क्षिप्रं सर्व्वपापैः प्रमुच्यते ॥
शतरुद्रीयजाप्येषु निरता ये द्विजोत्तमाः ।
पितॄन् सन्तारयन्त्येते श्राद्धे यत्नेन भोजिताः ॥

तथा ।

गायत्रीजाप्यनिरतं हव्यकव्येषु योजयेत् ।
पापं तिष्ठति नो तस्मिन्नब्बिन्दुरिव पुष्करे ॥

अपां विन्दुः 'अब्बिन्दुः' । 'पुष्करं' पद्मपत्रं ।

ब्रह्मपुराणे ।

षड़ङ्गविद्याज्ञो योगी[१] यज्ञतत्त्वज्ञ एव च ।
अयाचिताशी विप्रो यः श्राद्धकल्पविदेव च ॥
अष्टादशानां विद्यानामेकस्या अपि पारगः ।
त्रिमधुश्च त्रिसौपर्णः पञ्चाग्निर्ज्येष्ठसामगः ॥

चत्वारो वेदाश्चत्वार उपवेदाः, षड़ङ्गानि, स्मृतयः, पुराणानि, मीमांसा न्याय इत्यष्टादशविद्याः ।

चान्द्रायणैः पराकैर्व्वा नियमैर्यश्च संस्कृतः ।
वार्हस्पत्यं नीतिशास्त्रं शब्दविद्याञ्च वेत्ति यः ॥
इतिहासपुराणैश्च यः पवित्रीकृतः सदा ।
अकृत्यमपि कुर्व्वाणः स पवित्रशताद्वरः ॥
बहुनात्र किमुक्तेन इतिहासपुराणवित् ।
अथर्व्वसिरसोऽध्येता तावुभौ पितृभिः पुरा ।

(१) षड़ङ्गवित् ज्ञानायोगीति ग० ।

तपः कृत्वा नियोगार्थं प्रार्थितो पितृकर्म्मणि॥

महाभारते।

ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः।
मखेषु च समस्तेषु भवन्त्यवभृथप्लुताः॥
अबाधना अचपलाः क्षान्ता दान्ता जितेन्द्रियाः।
सर्व्वधर्म्मरता ये च श्राद्धेष्वेतान्नियोजयेत्॥
अक्रोधनाः कर्मपराः सन्तो नित्यन्दमे रताः।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलं॥
अमानिनः सर्व्वसहाः सुहृष्टा विजितेन्द्रियाः।
सर्व्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलं॥
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः।
स्वकर्म्मनिरता ये च तेभ्यो दत्तं महाफलं॥
प्रज्ञाश्रुताभ्यां शीलेन कुलेन च समुच्छ्रिताः।
तारयेत्तत् कुलं कृत्स्नमेकोपीह द्विजर्षभः॥

ब्रह्मवैवर्त्ते।

अकृतान्नं घृणिक्लान्तं क्षमवृत्तिमयाचकं।
एकान्तशीलं ह्रीमन्तं सदा श्राद्धेषु भोजयेत्॥

न विद्यते कृतमन्नं यस्यासौ 'अकृतान्नः'। 'घृणा' दया सा विद्यते यस्यासौ 'घृणी'। 'क्लान्तः' व्रतश्रान्तः, घृणी चासौ क्लान्तश्च 'घृणिक्लान्तः'। तीर्थयात्राशीलतया वा घृणिभिः सूर्य्यरश्मिभिः क्लान्तो 'घृणिक्लान्तः' प्रतिग्रहादिसङ्कुचिततया क्षमावृत्तिर्व्वर्त्तनं यस्यासौ 'क्षमवृत्तिः'। 'ह्रीमान्' लज्जावान्। तथाविधान् विप्रान् गृहस्थान् वेदार्थविदो निरभिमानिनः।

पत्नीपुत्रसमायुक्तान् श्राद्धकर्म्मणि योजयेत् ।
देहस्यार्द्धं स्मृता पत्नी न समग्रो विना तया ।
न वा पुत्रस्य लोकोऽस्ति श्रुतिरेषा सनातनी ॥

स्कान्दे प्रभासखण्डे ।

अथ विप्रान् प्रवच्यामः श्राद्धे वै केतनक्षमान् ।
विशिष्टः श्रोत्रियो योगी वेदवित् ज्येष्ठसामगः ।
पञ्चाग्निः कर्म्मनिष्ठश्च तपोनिष्ठो जितेन्द्रियः ॥

नन्दिपुराणे ।

यतीन् वा वालखिल्यान् वा भोजयेच्छ्राद्धकर्म्मणि ।
वानप्रस्थोपकुर्व्वाणौ पूजयेत्परितोषयेत् ॥
गृहस्थं भोजयेद् यस्तु विश्वेदेवास्तु पूजिताः ।
वानप्रस्थेन ऋषयो वालखिल्यैः पुरन्दरः ॥
यतीनां पूजनाद्वापि[१] साक्षाद्ब्रह्मा सुपूजितः ।
आश्रमाः पावनाः पञ्च उपधाभिरताश्रमाः ।
चत्वार आश्रमाः पुण्याः श्राद्धे दैवे तथैव च ॥

तथा ।

श्राद्धं देयन्तु विप्रेषु संयतेष्वग्निहोत्रिषु ।
अवदातेषु विद्वत्सु श्रोत्रियेषु विशेषतः ॥
मण्डलब्राह्मणज्ञश्च पुराणार्थविशारदः ।
अकल्कः स्वल्पसन्तुष्टः प्रतिग्रहविवर्जितः ।

---

(१) पूजया वापीति ग० ।

एते श्राद्धे नियोक्तव्या ब्राह्मणाः पङ्क्तिमूर्द्धनि ॥

नागरखण्डे ।

त्रिणाचिकेतः सौपर्णी धर्म्मद्रोणस्य पाठकः ।
सद्यः प्रचालको यस्य परोपकरणे रतः ॥
मृष्टान्नदो मृष्टवांश्च सदा जपपरायणः ।
एते वै ब्राह्मणा ज्ञेया विशेषाः श्राद्धसिद्धये ॥

वार्हस्पत्यसंहितायां ।

अङ्गिरोनारदभृगुवृहस्पत्युदिताः स्मृतीः ।
पठन्ति ये श्रद्दधानास्तेऽभियोज्याः प्रयत्नतः ।
वेदान्तनिष्ठाः श्राद्धेषु व्याख्यातारो विशेषतः ॥

प्रचेताः ।

त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित् ।
ज्ञाननिष्ठस्तपोनिष्ठः कर्म्मनिष्ठस्तथापरः ॥
दान्तश्च मातृभक्तश्च श्रद्धया देवपूजकः ।
शिलोञ्छनादिवृत्तिश्च श्रोत्रियस्य सुतस्तथा ।
एते विप्रा महापुण्या हव्यकव्येषु चाश्रिताः ॥

यमः ।

नक्षत्रतिथिपुण्याहान्(१) मुहूर्त्तान्मङ्गलानि च ।
न निर्दिशन्ति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेत् ॥
प्रयत्नाद्धव्यकव्यानि पात्रीभूते द्विजन्मनि ।

---

(१) नक्षत्रतिथिपुण्यादीनिति ख० ।

प्रतिष्ठाप्यानि विद्वद्भिः फलानन्तमभीप्सुभिः ॥

याज्ञवल्क्यः ।

गोभूतिलहिरण्यादि पात्रे दातव्यमर्च्चितं ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेयइच्छता ॥

कूर्म्मपुराणे ।

असमानप्रवरको ह्यसगोत्रस्तथैव च ।
असम्बन्धी च विज्ञेया ब्राह्मणाः श्राद्धसिद्धये ॥

गरुड़पुराणे ।

श्राद्धेषु विनियोज्याः स्युर्ब्राह्मणा ब्रह्मवित्तमाः ।
ये योनिगोत्रमन्त्रान्तेवासिसम्बन्धवर्ज्जिताः ॥

'योनिसम्बन्धाः' मातुलादयः । 'गोत्रसम्बन्धाः' सपिण्डादयः । 'मन्त्रसम्बन्धाः' अध्यापकादयः । 'अन्तेवासिसम्बन्धाः' शिल्पशास्त्रोपाध्यायाः ।

इति प्रशस्ता ब्राह्मणाः ।

अथ पाङ्क्तेयाः ।

तत्र शङ्खलिखितौ ।

अथ पाङ्क्तेया वेदवेदाङ्गवित्पञ्चाग्निरनूचानः शाङ्ख्ययोगोपनिषद्धर्म्मशास्त्रविच्छ्रोत्रियस्त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णौ ज्येष्ठसामगः । शाङ्ख्ययोगोपनिषद्धर्म्मशास्त्राध्यायी वेदपरः सदाग्निको मातृपितृशुश्रुषुर्धर्म्मशास्त्ररतिरिति ।

'शाङ्ख्यशास्त्रं' कापिलं, 'योगशास्त्रं' पातञ्जलं । 'उपनिषच्छास्त्रं' वेदान्ताः । 'सदाग्निकः' नित्यमग्निहोता ।

पाङ्क्तेयनिरूपणार्थं कुलश्रुतशीलवृत्तरूपगुणानाह हारीतः ।

स्थितिरविच्छिन्नवेदवेदिता अयोनिसङ्करित्वमार्षेयत्वञ्चेति कुलगुणाः। वेदो वेदाङ्गानि धर्मोऽध्यात्मं विज्ञानं स्थितिरिति षड्विधं श्रुतं। ब्रह्मण्यता देवपितृभक्तता समता सौम्यतापरोपतापिताऽनसूयता मृदुतापारुष्यं मैत्रता प्रियवादित्वं कृतज्ञता शरण्यता प्रशान्तिश्चेति त्रयोदशविधं शीलं। क्षमा दमोदया दानमहिंसा गुरुपूजनं शौचं स्नानं जपोहोमस्तपः स्वाध्यायः सत्यवचनं सन्तोषो दृढ़व्रतत्वं उपशान्तिवञ्चेति षोडशगुणं वृत्तं। तस्मात्कुलीनाः श्रुतवन्तः शीलवन्तो वृत्तस्थाः सत्यवादिनोऽव्यङ्गाः पाङ्क्तेया इति ।

अस्यार्थः ।

सन्ततिरूपेण चिरकालावस्थानं स्थितिरिति स्मृतिचन्द्रिकाकारः। हरिहरस्त्वाह । शास्त्रोक्तवर्णाश्रमादिधर्मेष्ववस्थानमापद्यपि ततोऽप्रच्यवनं स्थितिः ।

यदाहुः।

अयाच्याप्रवलनममार्गे चाप्रवर्त्तनम् ।
आपद्यपि यतो धैर्य्यं स गुणः स्थितिरुच्यते इति ॥

ब्राह्मण्यादिवत् पितृपितामहादिप्रबन्धेन तोरणायणीयादिचरणाख्यातृत्वेनाविच्छिन्नस्य वेदस्य वेत्तृत्वं अविच्छिन्नवेदवित्त्वं ।

यथाहुः ।

जातिवद्विप्रबन्धेन स्मर्य्यते चरणं कुले ।
तद्वेदनमविच्छिन्नवेदवित्ता प्रकीर्त्तिता ॥

अपरे तु वेदवेद्योरविच्छिन्नत्वेन पूर्व्वपुरुषेष्वपि वेदाध्ययनयागानु

ष्ठानयोरव्यवच्छेदं कुलगुणमाहुः। विजातीयायामपत्यानुत्पादनेन दत्तक्रीतादिरूपपरकुलसंसर्गराहित्येन चासङ्कीर्णयोनित्वमयोनिसा-ङ्कर्य्यं, स्वीयप्रवरगतर्षिज्ञातृत्वमार्षेयत्वं, "अनूचानपुत्रत्वपरो यो वै ज्ञातोऽनूचानः स ऋषिः आर्षेय" इति शतपथश्रुतिदर्शनात् ।

एते तावत्कुलगुणाः शुद्धिहेतवः। ऋगादिभेदेन चतुर्व्विधो वेदः। वेदाङ्गानि शिक्षादीनि तदुक्तं ।

शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषाकृतिः ।
छन्दोविचितिरित्येवं वेदाङ्गानि षडूचिरे ॥

'धर्म्मः' मन्वादिधर्म्मशास्त्रं । 'अध्यात्मं' आत्मविवेकशास्त्रं । 'विज्ञानं' प्रमाणप्रमेयादिपदार्थविशेषज्ञानहेतुर्न्यायदर्शनादि । स्थिति-हेतुवार्त्तादिशास्त्रं 'स्थितिः'। अधीताविस्मरणं वा 'स्थितिः'। धर्म्मा-दिक्रमावस्थितं वा यत्रेतिहासादौ कथ्यते सा 'स्थितिः'। एवं च वेद-प्रभृतिचतुर्दशविद्यास्थानान्युक्तानि भवन्ति । एतेषां षणां श्रवणं 'श्रुतं'। ब्रह्मणि साधुत्वं 'ब्रह्मण्यता'। अमायया देवपितृकर्म्मानुष्ठानं 'देवपितृभक्तता'। जीवतोर्व्वा पित्रोरशाठ्येन शुश्रूषणं 'पितृभक्तता'। विगलितरागद्वेषता 'समता'। सर्व्वजनहृद्यचरित्रत्वं 'सौम्यता'। वागादिभिः परपीड़ाराहित्यम् 'अपरोपतापिता'। परदोषाना-विष्करणं 'अनसूयता'। अकठिनहृदयत्वं 'मृदुता'। कलहविरहितत्वं 'अपारुष्यं'। प्रसन्नमनस्कता 'मैत्रता'। साधुकारिणामनुमोदनं 'प्रियवादिता'। उपकारसम्प्रतिपत्तिः 'कृतज्ञता'। शरणं गृहरक्षि-त्रोरित्यभिधानकोशस्मरणात् शरणमाश्रयो रक्षिता वा, शरणमेव शरण्यः। स्वार्थिकोऽत्र तद्धितः। अथवा शरणे आश्रयत्वे रक्षितृत्वे

वा साधुः शरण्यः, तस्य भावः 'शरण्यता'। विद्याद्यनुत्सेकः 'प्रशान्तिः'। चमादिषु व्याख्यातानि न व्याख्यायन्ते। यथाविधि स्वस्य सत्त्वनिवृत्तिपूर्व्वकं परस्वत्वापादनं 'दानं'। विशिष्टमन्त्रावृत्तिः 'जपः'। देवतोद्देशेन प्रक्षेपान्तः स्वत्वत्यागो 'होमः'। 'सन्तोषः' वितृष्णता। स्वीकृतव्रतापरित्यागः 'दृढव्रतत्वं'। 'उपव्रतित्वं' दशम्यादावेकभक्तता। व्रतान्युपव्रतानि चाह

व्यासः।

अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता।
अस्तेयमिति पञ्चैते यमाश्चैव व्रतानि च॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवं।
अप्रमादश्च नियमाः पञ्चैवोपव्रतानि च॥

आह यमः।

पाङ्क्तेयान् ब्राह्मणान् वक्ष्ये येभ्यो दत्तमथाचयं।
यं दृष्ट्वा सर्व्वभूतानां मनसो निर्वृतिर्भवेत्॥
येषाञ्चैवोपविष्टस्तु पङ्क्तिमेकोऽपि पावयेत्।
शतं शतसहस्रञ्च पश्यन्नपि समन्ततः॥
नमस्कृत्य द्विजातिभ्यः प्रवक्ष्याम्यहमग्रतः।
वेदश्रुतोनसङ्कीर्णांस्तान् मे निगदतः शृणु॥
ये सोमपा विरजसो धर्म्मज्ञाः शान्तबुद्धयः।
व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः॥
पञ्चाग्निरप्यधीयानो यजुर्व्वेदविदेव च।
वह्वृचश्च त्रिसौपर्णस्त्रिमधुर्व्वाथ यो भवेत्॥

'त्रिमधुः' ऋग्वेदैकदेशः तद्व्रतश्च ।

त्रिणाचिकेतो विरजाः छन्दोगो ज्येष्ठसामगः ।
अथर्व्वशिरसोऽध्येता सर्व्वे ते पङ्क्तिपावनाः ॥

विरजा नाम मन्त्रविशेषस्तदध्ययनात् पुरुषोऽपि 'विरजाः' । अथर्व्वशिरो नाम अथर्व्ववेदैकदेशः ।

शिष्टुरप्यग्निहोत्री च न्यायविद् यः षड़ङ्गवित् ।
मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः ॥
ऋषिव्रती ऋषीकश्च तथा द्वादशवार्षिकः ।
ब्रह्मदेयासुतश्चैव गर्भशुद्धः सहस्रदः ॥
चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ।
निष्णातः सर्व्वविद्यासु शान्तो विगतकल्मषः ॥
गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ।
विमुक्तः सर्व्वतो धीरो ब्रह्मभूतो द्विजोत्तमः ॥
अनमित्रो नचामित्रो मैत्रश्चात्मविदेव च ।
स्नातको जाप्यनिरतः सदा पुष्पबलिप्रियः(१) ॥
ऋजुर्म्मृदुः क्षमी दान्तः सत्यव्रतपरः शुचिः ।
वेदज्ञः सर्व्वशास्त्रज्ञ उपवासपरायणः ॥
गृहस्थो ब्रह्मचारी च चतुर्व्वेदविदेव च ।
एते द्विजातयः पुण्याः पाङ्क्तेयाः संप्रकीर्त्तिताः ।
नियतं तारयन्त्येव हव्यकव्ये च योजिताः ॥

'ऋषीकः' ऋषेः किञ्चिदूनगुणः । "ऋषेः किञ्चिद्गुणैर्न्यून

---

(१) पुष्पफलप्रिय इति ख॰ ।

ऋषीक इति कीर्त्तितः" इति सुमन्तुस्मरणात् । 'द्वादशवार्षिकः' द्वादशवार्षिकवेदव्रतचारी । 'सहस्रदः' गोसहस्रद इति मेधातिथिः । 'विमुक्तः सर्व्वतः' इत्यत्र ऋणादिति शेषः । 'अनमित्रः' शत्रुरहितः । 'न चामित्रः' न कस्यापि शत्रुः । 'मैत्रः' मैत्रीरतः । 'घृणी' दयालुः ।

इति पाङ्क्तेयाः ।

अथ पङ्क्तिपावनाः ।

आपस्तम्बः ।

अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः ।
तान्निबोधत कार्त्स्न्येन द्विजाग्र्यान् पङ्क्तिपावनान् ॥

'अपाङ्क्त्यः वक्ष्यमाणलक्षणैरपाङ्क्तेयैः' 'उपहता' दूषिता, 'पङ्क्तिः' परिषत्, 'यैः' ब्राह्मणैः 'पाव्यते' निर्दोषा क्रियते, तान् 'कार्त्स्न्येन,' वक्ष्यमाणान् 'निबोधत' शृणुत । अर्थवादरूपाण्येतानि पदानि । यथा ह्येकपङ्क्त्यां भुञ्जानो दुष्टोऽन्यानदुष्टानपि दूषयति एवं पङ्क्तिपावनः स्वगुणातिशयादन्यकृतमपि दोषमपनुदतीत्यस्यार्थः । न चानेनापाङ्क्तेयानां भोजनमनुज्ञायते । किं तर्हि पङ्क्तिपावनस्तावदवश्यमन्वेषितव्यः ।

अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च ।
श्रोत्रियान्वयजाश्चैव विज्ञेयाः पङ्क्तिपावनाः ॥

'अग्र्याः' उत्तमाः । 'सर्व्वेषु' चतुर्ष्वपि, 'वेदेषु' सर्व्वसंशयव्युदासेन सम्प्रदायतः स्वीकृतसर्व्ववेदा इत्यर्थः । प्रोच्यते व्याख्यायते वेदार्थो यस्तानि 'प्रवचनान्यङ्गानि षडङ्गो वेदो यैरभ्यस्तोऽभ्यस्यते वा त

इत्यर्थः । 'श्रोत्रियान्वयजाः' पितृ-पितामहादयो येषां तादृशा एवेत्यर्थः ।

ननु विद्वद्भ्यो दानमुक्तं न चेह विद्वत्तोपात्ता न च तया विना पंक्ति-पावनत्वोपपत्तिः । गुणविशेषापेक्षं हि पंक्तिपावनत्वं न गुणापचये युक्तं । उच्यते ।

विद्वदभावे केवलाय श्रोत्रियाय दानार्थमेतत् । असति विदुषि श्रोत्रियाय दानं गौणमपि मुख्यमेवेत्युक्तं भवति ।

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ।
ब्रह्मदेयानुसन्तानो ज्येष्ठसामग एव च ॥

त्रिणाचिकेताख्यो वेदभागोऽध्वर्यूणां पीतोदका जग्धतृणा इत्यादिः तदध्ययनसम्बन्धात् पुरुषोऽप्यत्र 'त्रिणाचिकेतः', उच्यते । अन्ये तु त्रिणाचिकेतमधीयानानां व्रतमाम्नातं तद्येन चीर्णं सः,'त्रिणाचिकेतः'। अत्रापि लक्षणयैव पुरुष उच्यते । न चैवं मन्तव्यं तावन्मात्रेण पङ्क्ति-पावनत्वं । किं तर्हि, सति श्रोत्रियत्वादिगुणयोगे अधिकोऽयं गुणो द्रष्टव्यः। पञ्चाग्निविद्या नाम च्छान्दोग्योपनिषदिति तद्वेदनसम्बन्धात् पुरुषोऽपि 'पञ्चाग्निः'। अन्ये तु यस्य त्रयः त्रेताग्नयः सभ्यावसथ्यावपि द्वौ स पञ्चाग्निरित्याहुः। 'त्रिसुपर्णः' मन्त्रः, तैत्तिरीयके वाक्वृचे वा ये ब्राह्मणास्त्रिसुपर्णं पठन्तीत्यादि पठ्यते त्रिसुपर्णाख्यं व्रतञ्च । षडङ्गं वेदं वेत्तीति 'षडङ्गवित्'। 'ब्रह्मदेयानुसन्तानः' ब्राह्मणाय दानेन या दत्ता तस्या अनुसन्तानस्तया जातः । 'ज्येष्ठसामगः' आज्यदोहानि आरण्यकसामानि सन्ति ज्येष्ठसामाख्यं व्रतञ्च । यद्व्रताचरणेन यस्तदधीते स एवमुच्यते ।

वेदार्थवित् प्रवक्ता च ब्रह्मचारी सहस्रदः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः ॥

षडङ्गवित्त्वस्योक्तत्वात्तदङ्गैर्विना स्वयमेवातिप्राज्ञतया यो वेदार्थं वेत्ति सोऽत्र 'वेदार्थवित्', अभिप्रेतः। 'प्रवक्ता' वेदस्याध्यापको व्याख्याता वा। 'ब्रह्मचारी' ब्रह्मचर्य्याश्रमवान्। ब्रह्मचारिग्रहणं यौवनोपलक्षणार्थमित्यन्ये। अतएव श्रोत्रियो ब्रह्मविद्युवेति याज्ञवल्क्येनोक्तं। युवभ्यो दानं प्रथमं पितृवयस इत्येके इति गौतमीयेप्युक्तं।

पितृवयस इति। पितृपितामहप्रपितामहैस्तुल्यवयस्कान् तत्तत्स्थानीयान् ब्राह्मणान्निमन्त्रयेदित्यर्थः। सहस्रशब्दस्य बह्वर्थवाचित्वात् 'सहस्रदः' बहुप्रदः। 'शतायुः' वृद्धवयाः, स हि परिपक्वकपोलतया पाचततामश्नुते। शतमित्यत्र प्रसिद्धिवशाद्वर्षाणि संख्येयतयावगम्यन्ते। आह यमः।

वेदविद्याव्रतस्नाता ब्राह्मणाः पङ्क्तिपावनाः।
व्रतचर्य्यासु निरता ये कृशाः कृशवृत्तयः ॥
अत्युत्क्रान्तास्वधर्म्मेभ्यस्ते द्विजाः पङ्क्तिपावनाः।
सत्रिणो नियमस्थाश्च ये विप्राः श्रुतिसम्मताः ॥

अत्र मन्त्रिण इति वा पाठः। तस्मिन् पक्षे मन्त्रिणो गायत्र्यादिमन्त्रजपनिरताः।

प्राणिहिंसानिवृत्ताश्च ते द्विजाः पङ्क्तिपावनाः।
अग्निहोत्ररताः शान्ताः क्षमावन्तोऽनसूयकाः।
ये प्रतिग्रहनिःस्नेहास्ते द्विजाः पङ्क्तिपावनाः॥
सत्रिणो नियमस्थाश्च ये विप्राः श्रुतिसम्मताः।

मङ्गल्याचारयुक्ताश्च ते विप्राः पङ्क्तिपावनाः ॥
एते वै भूतले देवाः पूर्व्वं देवैर्व्विनिर्म्मिताः ।
यत् किञ्चित् पितृदेवत्वमेभ्यो दत्तं तदक्षयं ॥

तथा ।

विद्वांसः सुव्रताः शान्ता ब्राह्मणाः पङ्क्तिपावनाः ।
तैर्भुक्तं व्रजते देवांस्तैर्भुक्तं व्रजते पितृन् ।

आह शङ्खः ।

षड़ङ्गवित्त्रिसौपर्णी बह्वृचो ज्येष्ठसामगः ।
त्रिणाचिकेतः पञ्चाग्निर्ब्राह्मणाः पङ्क्तिपावनाः ॥
ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिर्यश्च ब्राह्मणः पङ्क्तिपावनाः ॥
यजुषां पारगो यश्च साम्नां यश्चातिपारगः ।
अथर्व्वसिरसोऽध्येता ब्राह्मणः पङ्क्तिपावनाः ॥
नित्यं योगपरो विद्वान् समलोष्टाश्मकाञ्चनः ।
ध्यानशीलो यतिर्व्विद्वान् ब्राह्मणः पङ्क्तिपावनाः ॥

देवलः ।

अथान्यांश्च प्रवक्ष्यामि(१) ब्राह्मणान् पङ्क्तिपावनान् ।
समर्थान् हव्यकव्येषु स्वगुणैरभिपूजितान् ॥
वेदवेदाङ्गनिष्णाता विशुद्धान्वययोनयः ।
स्वकर्म्मादुःस्थिता विप्राः स्वपङ्क्तिं पावयन्ति हि ॥
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षड़ङ्गवित् ।

(१) अथान्यान् संप्रवक्ष्यामीति ग० ।

छन्दोगः सोमयाजी च ब्राह्मणाः पङ्क्तिपावनाः ॥
ज्येष्ठाश्रमनिविष्टश्च शतायुर्ज्यैष्ठसामगः ।
अग्निवित् सोमपाश्चैते ब्राह्मणाः पङ्क्तिपावनाः ॥
ऋग्यजुःसामधर्म्मज्ञाः स्नातकाश्चाग्निहोत्रिणः ।
ब्रह्मदेयानुसन्ताना विज्ञेयाः पङ्क्तिपावनाः ॥

हारीतः ।

दशोभयतः श्रोत्रियास्त्रिणाचिकेतस्त्रिमधुस्त्रिसौपर्णस्त्रिशीर्षा ज्येष्ठसामगः पञ्चाग्निः षड़ङ्गविद्रुद्रजाप्यूर्द्धरेता ऋतुकालाभिगामी तत्त्वविच्चेति पङ्क्तिपावना भवन्ति ।

अथाप्यत्रोदाहरन्ति ।

पचनः पाचनस्त्रेता यस्य पञ्चाग्नयो गृहे ।
सायं प्रातः प्रदीप्यन्ते स विप्रः पङ्क्तिपावनः ॥
सहस्रसम्मितं प्राज्ञः स्नातकं पूर्व्ववद्गुणैः ।
पञ्चाग्न्यादिगुणैर्युक्तः शतसाहस्र उच्यते ॥
अनूचां यदि वा कृत्स्नां पङ्क्तिं योजनमायतां ।
पुनाति वेदविद्विप्रो नियुक्तः पङ्क्तिमूर्द्धनि ॥

'दशोभयतः श्रोत्रियाः' इत्यनेन याज्ञवल्क्याद्युक्ता मातृतः पितृतोऽपि दशपुरुषशुद्धिरभिहिता। रुद्रशिरो वैश्वानरशिरोऽथर्व्वशिरश्चेति त्रयाणां शीर्षाणामध्येता 'त्रिशीर्षा'। 'रुद्रजापी' नमस्ते रुद्र मन्यव इत्यादि रुद्रध्यानजपपरः। ऊर्द्धमेव रेतो यस्य स 'ऊर्द्धरेताः'। स च नैष्ठिकब्रह्मचारी। गृहस्थे तु नित्यमूर्द्धरेतस्त्वस्यायुक्तत्वात्। ऋतुकाल एव गच्छतीति 'ऋतुकालाभिगामी'। स च धर्म्मपत्नीषु, यः

सदेति व्यासवचनात्। 'तत्त्ववित्' आत्मतत्त्वज्ञः, स च विनापि चिद्-ण्डग्रहणात्, गृहस्थाश्रमादावप्यात्मज्ञानाभ्यासस्योक्तत्वात्। पञ्चयज्ञाद्यर्थमन्नं पचतीति 'पचनः' आवसथ्यः। पाचयतीति 'पाचनः' सभ्यः। नियतपक्तृप्रत्यासत्तिलक्षणधर्मयोगादौपचारिकं प्रयोजकत्वं। गार्हपत्य आहवनीयो दक्षिणाग्निरित्यग्नित्रयं 'त्रेता'। एते पञ्चाग्नयो यस्य गृहे दीप्यन्ते। वेदव्रताचरणपूर्व्वकमर्थज्ञानपर्य्यन्तं गृहीतवेदः 'स्नातकः,' तमेतं शमदमादिभिर्गुणैरुपेतं सहस्रसङ्ख्यकभोक्तृद्विजपरिकल्पितपङ्क्तिपावनत्वात् सहस्रसम्मितमित्याहुः। भ्रूणहत्यां वा एते घ्नन्ति ये ब्राह्मणास्त्रिसुपर्णं पठन्ति आसहस्रात् पङ्क्तिं पुनन्तीति। स एव पञ्चाग्नित्वादिगुणैरुपेतः 'शतसाहस्रः', लक्षपरिमितपङ्क्तिपावन इत्यर्थः। 'अनूचां' वेदरहितानां, समन्ताद्योजनपरिमितदेशव्यापिनीं पङ्क्तिं वेदरहस्यविद्ब्रह्मवित् पुनाति।

आह गौतमः।

पङ्क्तिपावनाः। षडङ्गवित् ज्येष्ठसामगः त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निः स्नातकोमन्त्रविद्ब्राह्मणविद्धर्मज्ञो ब्रह्मदेयानुसन्तान इति।

आह विष्णुस्त्वेवं।

यथा पित्र्येषु कर्म्मस्विति पङ्क्तिपावना एवं दैवेष्वपि।

वसिष्ठः।

त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णश्चतुर्म्मेधो वाजसनेयी षड़ङ्गवित् ब्रह्मदेयानुसन्तानः छन्दोगो ज्येष्ठसामगो मन्त्रब्राह्मणविद् यश्च धर्म्ममधीते यस्य च दशपुरुषं मातृपितृवंशः श्रोत्रियो विज्ञायते विद्वांसः स्नातकास्त्वेते पङ्क्तिपावना भवन्ति।

'चतुर्मेधी' चातुर्मास्ययाजी। तत्र हि चत्वारो मेधा भवन्ति। ज्योतिष्टोमयाजी वा। एवंरूपो वाजसनेयीति सम्बन्धः। विद्वांस इति बहुवचनं वेदस्यास्यानेकरूपत्वार्थं।

आपस्तम्बः।

त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतः पञ्चाग्निः छन्दोगो ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्र इत्येते श्राद्धे भुञ्जानाः पङ्क्तिपावना भवन्ति।

बौधायनः।

त्रिमधुस्त्रिणाचिकेतस्त्रिसुपर्णः पञ्चाग्निः षडङ्गवित्त्रिशीर्षको ज्येष्ठसामग इति पङ्क्तिपावनाः।

पैठीनसिः।

अथातः पङ्क्तिपावना भवन्ति त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णश्चीर्णव्रतश्छन्दोगो ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रो ब्रह्मदेयानुसन्तानः सहस्रदो रुद्राध्यायी चतुर्वेदषडङ्गविदथर्वशिरोऽध्यायी पञ्चाग्निर्वेदजापी चेति पङ्क्तिपावनाः। तेषामेकैकः पुनाति पङ्क्तिं नियुक्तो मूर्द्धनि सहस्रैरयाङ्क्यतां। 'रुद्राध्यायी' शतरुद्रीयजपशीलः।

उशनाः।

तत्र ब्राह्मणो वेदविद्याव्रतस्नातकः पञ्चपुरुषपारम्पर्य्यविखण्डितचारित्रमर्य्यादस्त्रिसुपर्णोऽङ्गविज्ज्येष्ठसामगः शतवर्षालुप्तधर्म्माध्ययनः मन्त्रप्रभृतिभाष्यप्रवचनपात्रपारगो ऋतुकालाभिगामी छन्दसा शुद्धदशपुरुषः स्नातक इति पङ्क्तिपावनाः।

अत्र विष्णुः।

अथ पङ्क्तिपावनाः त्रिणाचिकेतः पञ्चाग्निर्ज्येष्ठसामगो वेदपार-

गो वेदाङ्गस्याप्येकस्य पारगः पुराणेतिहासव्याकरणपारगः धर्म्मशास्त्रैकस्यापि पारगः तीर्थपूतो यज्ञपूतस्तपःपूतः सत्यपूतो दानपूतो मन्त्रपूतो गायत्रीजपनिरतो ब्रह्मदेयानुसन्तानस्त्रिसुपर्णो जामाता दौहित्रश्चेति पात्रं विशेषेण वयोन इति ।

ब्रह्मदेया ब्राह्मविवाहोढ़ा एव सन्तानो यस्य असौ 'ब्रह्मदेयानुसन्तानः' ।

ब्रह्मदेयानुसन्तानो ब्रह्मदेयाप्रदायकः ।
ब्रह्मदेयापतिश्चैव ब्राह्मणाः पङ्क्तिपावनाः ॥

ब्रह्माण्डपुराणे ।

षड़ङ्गवित् ज्ञानयोगी सर्व्वतन्त्रस्तथैव च ।
यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः ॥

सर्व्वतन्त्रशालीनाख्यो गृहस्थविशेषः । यायावरोऽपि गृहस्थविशेषः ।

ये भाष्ये वैदिके केचिद् ये च व्याकरणे रताः ।
अधीयानाः पुराणञ्च धर्म्मशास्त्राण्यथापि वा ॥
चतुर्दशानां विद्यानामेकस्या अपि पारगः ।
श्राद्धकल्पं पठेद् यश्च सर्व्वे ते पङ्क्तिपावनाः ॥

गार्ग्यः ।

दातुं भोक्तुञ्च जानन्ति ये विप्राः शंसितव्रताः ।
संस्कारकर्म्मविज्ञानसम्पन्नाः पङ्क्तिपावनाः ॥

कूर्म्मपुराणे ।

महादेवार्चनरतो महादेवपरायणः ।
वैष्णवो वाथ यो नित्यं स विप्रः पङ्क्तिपावनः ॥

आह वशिष्ठः।

अथाप्युदाहरन्ति।

अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः।

अदूष्यन्तं यमः प्राह पङ्क्तिपावन एव सः॥

मन्त्रविद्ग्रहणं गुणप्रकर्षोपलक्षणार्थं। तस्मिन् सति शरीरगतै र्दोषैर्युक्तोऽपि न दूषयितव्यः। जन्मान्तरीयदुःखानुभवेन क्षीणप्रायदोषचिह्नसम्बन्धित्वात्। यमग्रहणं स्तुत्यर्थं। स हि कर्म्मविपाकाभिज्ञ इति। पङ्क्तिपावन एवासौ सम्प्रत्ययनपराधित्वादिति।

इति पङ्क्तिपावनाः।

अथ पङ्क्तिपावनपावनाः।

हृद्धमनुः।

यस्य व्याकुरुते वाच यस्य मीमांसतेऽध्वरं।

यस्य वेत्त्यात्मकैवल्यं पङ्क्तिपावनपावनाः॥

यः पाणिनिप्रभृतिप्रणीतशब्दानुशासनानुसारेण प्रकृतिप्रत्ययविभागेन शब्दान् व्युत्पादयति, यस्य मीमांसाशास्त्रविचारपरिणततया अध्वरं यज्ञकर्म्म मीमांसते विविच्य प्रतिपादयति, यस्य आत्मकैवल्यं ब्रह्माद्वैतं वेत्ति साक्षात्कुरुते, एते पङ्क्तिपावनेभ्योऽपि पावनाः, अतिशयेन पुण्यतमा इत्यर्थः। अतः सर्व्वेभ्योऽपि पूर्व्वप्रतिपादितेभ्यः प्रथमं प्रयत्नादेते गवेषणीया इत्यवगन्तव्यम्।

मत्स्यपुराणे।

यस्य व्याकुरुते वाचं यस्य मीमांसतेऽध्वरं।

सामस्वरविधिर्यस्य पङ्क्तिपावनपावनाः॥

ब्रह्मवैवर्त्ते ।

वेदवेदाङ्गविद्‌यज्वा शान्तो दान्तः क्षमान्वितः ।
वीतस्पृहस्तपस्वी च पङ्क्तिपावनपावनाः ॥
धीमानलोलुपः शान्तः सन्तुष्टो येन केनचित् ।
समदृष्टिः सत्यवादी पङ्क्तिपावनपावनाः ॥
समः शत्रौ च मित्रे च समलोष्टाश्मकाञ्चनः ।
न रज्यते न च द्वेष्टि पङ्क्तिपावनपावनाः ॥

गरुड़पुराणे ।

शाङ्ख्यशास्त्रार्थनिपुणः(१) योगशास्त्रार्थतत्त्ववित् ।
वेदान्तनिष्ठबुद्धिश्च पङ्क्तिपावनपावनाः ॥
प्रियवादी शुचिर्मानी सर्व्वभूतहिते रतः ।
एकान्तशीलो ध्यानी च पङ्क्तिपावनपावनाः ॥
यमैश्च नियमैः पूतः प्रत्याहारपरायणः ।
प्रियाप्रियाभ्यामस्पृष्टः पङ्क्तिपावनपावनाः ॥
प्राणायामपरो धीरो मैत्रः करुण एव च ।
अध्यात्मज्ञानपूतात्मा पङ्क्तिपावनपावनाः ॥

सौरपुराणे ।

यो न निन्दति न द्वेष्टि न शोचति न काङ्क्षति ।
आत्मारामः पूर्णकामः पङ्क्तिपावनपावनाः ॥
यस्तु सर्व्वाणि भूतानि आत्मन्येवानपश्यति ।
सर्व्वभूतेषु चात्मानं स च पावनपावनः ॥

---

(१) शाङ्ख्यशास्त्रेऽतिनिपुणा इति ग० ।

अशनायापिपासाभ्यां शीतोष्णादिभिरेव च ।
अस्पृष्टः शोकमोहाभ्यां पङ्क्तिपावनपावनाः ॥
ओमित्येकाक्षरं ब्रह्म व्याहरत्यनिशं शुचिः ।
आत्मैकतानधीर्य्योऽसौ पङ्क्तिपावनपावनः ॥
यतेन्द्रियस्तपोनिष्ठो निराशीरपरिग्रहः ।
ज्ञानविज्ञानचित्तात्मा पङ्क्तिपावनपावनाः ॥

इति पङ्क्तिपावनपावनाः ।

अथ योगिनां श्राद्धे नियोग उच्यते ।

तत्राह वृद्धशातातपः ।

योगिनो भोजयेन्नित्यं दृष्टतत्त्वान् मनीषिणः ।
तेषान्तु दत्तमक्षय्यं भवतीति न संशयः ॥

'योगिनः' अष्टाङ्गयोगयुक्तान्। 'तत्त्वानि' महदादीनि, देशकालकरणावस्थासत्तास्वरूपेण विशिष्टानि शास्त्रतः प्रत्यक्षतश्च यैर्दृष्टानि तान्। अथवा 'तत्त्वं' आरोपितसंशयानध्यवसतोऽस्य दृष्टात्मस्वभावः, स वेदान्तवाक्यविचारसमुद्बोधैः उदर्कनिश्चयालोकनसमुत्पन्नजितान्तःकरणजन्यसाक्षात्कारगोचरीकृतो यैस्तान्। अतएव मनीषिणः हेयोपादेयविवेकपूर्व्वकं हेयाद्विषयपञ्चकादुपादेयात्मतत्त्वलाभोपायनिषण्णास्तान्। भोजयेदित्यविशेषतोऽभिधानाद्दैवपित्र्यमानुष्येषु कर्म्मस्विति लभ्यते, प्रकरणाद्वा पित्र्येष्विति। नित्यमिति नियमेन। नात्र जीवनवतोऽहरहर्य्योगित्वनिमित्तं भोजनं विधीयते। किन्तु निमित्तान्तरादेव प्राप्तेषु देवपित्र्यादिषु भोजनात्मकेषु कर्म्मसूपस्थितेषु भोजनीयानां योगिनां च लाभे सति योगिनोऽवश्यं भोजनीया यथेष्टमन्ये

इत्येष नित्यमित्यस्यार्थः । आदरार्थो वा नित्यशब्दः । फलाधिक्यार्थस्त्वादरः । आधिक्यमाह तेषान्तु दत्तमक्षय्यं भवतीति निश्चय एव न संशय इति ।

ब्रह्मवैवर्त्तेऽपि योगिप्रशंसापूर्व्वकं तद्भक्तस्य फलगौरवं दर्शितं ।

ऋचोहि यो वेद स वेद वेदान्
यजूंषि यो वेद स वेद यज्ञान् ।
सामानि यो वेद स वेद ब्रह्म
योगान् हि यो वेद स वेद सर्व्वं ॥

स खलु वेदान् वेद यो ऋचो वेद स एव भुङ्क्ते य एव घृतेन भुङ्क्ते इति च । एषा श्रुतिः । एवमुत्तरत्रापि । अथ ऋग्भिः श्राद्धोक्तानां यः ऋचां वेत्ता स सर्व्ववेदवेत्तैव भवतीति श्रुतिः । 'यजूंषि' सन्निपत्योपकारकारादुपकारकान्तरवर्गसहितदर्शपूर्णमासादियज्ञविधायकवाक्यरूपाणि स्मारकाणि च मन्त्ररूपाणि, 'यो वेद स यज्ञान् वेद' । 'सामानि' ज्येष्ठसामादीनि ऋगाधारगीतिरूपाणि, तानि यो वेद असौ परब्रह्मज्ञानोपायभूतं शब्दब्रह्म वेद । विशुद्धमनोजन्यसाक्षात्कारत्वान्मानस आत्मा यस्तं 'वेद', स सर्व्वं 'वेद' नास्य किञ्चिद्वेदितव्यमवशिष्यत इत्यर्थः ।

तथा ।

सर्व्वं योगीश्वरैर्व्याप्तं त्रैलोक्यं हि निरन्तरं ।
यस्मात् पश्यन्ति ते सर्व्वं यत्किञ्चिज्जगति स्थितं ॥
व्यक्ताव्यक्तं वशीकृत्य सत्त्वञ्चापि ततः परं ।
सच्चासच्चोभयं दृष्टं सर्व्वं सत्त्वं महात्मना ॥

सर्व्वज्ञज्ञानसृष्टानि मोक्षादीनि महात्मनां ।
तस्मात् तेषां सदा भक्तः प्राप्नोत्युन्मेषवच्छुभं ॥

त्रयाणां लोकानां समाहारः 'त्रैलोक्यं', 'तत् सर्व्वं' योगीश्वरैः' अविचतयोगतया योगिश्वैश्वर्य्यं महिमानं प्राप्तैः, 'निरन्तरं सर्व्वकालं' 'व्याप्तं' स्वेन रूपेण सह सम्बन्धं नीतं। व्याप्त्यनुमापकं लिङ्गमाह। 'यस्मात् पश्यन्ति ते सर्व्वं', इति। 'सर्व्वं' वेदजातं, 'पश्यन्ति' साक्षात्कुर्व्वन्ति। तथा च पातञ्जलं सूत्रं। "भुवनज्ञानं सूर्य्यसंयमात्" इति। 'व्यक्तं' सर्व्वलोकप्रतीतियोग्यं स्थूलं वस्तु, कार्य्यमित्यर्थः। 'अव्यक्तं' सूक्ष्मं, कारणमित्यर्थः। अथवा 'व्यक्तं' गुणकार्य्यं क्षित्यादिः, 'अव्यक्तं' प्रकृतिः। 'वशीकृत्य' सन्त इति शेषः। 'सत्त्वं' सत्त्वप्रधाना बुद्धिरन्तः-करणं वा। तस्मात् परं परमात्मानञ्च पश्यन्ति। "मनसस्तु परा बुद्धिर्य्यो बुद्धेः परतस्तु सः" इति भगवद्वचनात्। सत्प्रयोगगोचरं 'सत्'। तद्विपरीतं 'असत्'। 'उभयात्मकं' सदसत्। महता आत्मना भगवता ब्रह्मणेत्यर्थः। 'सर्व्वज्ञः' ईश्वरः, तद्विषयं ज्ञानं 'सर्व्वज्ञ-ज्ञानं'। यतस्तेषां महात्मनां सर्व्वज्ञज्ञानेन 'सृष्टानि मोक्षादीनि'। यत एवं श्रिष्टास्ते अतस्तेषां 'भक्तः' शुश्रूषादिकर्त्ता, 'उन्मेषवत्' उत्त-रोत्तरमुपचीयमानं, 'शुभं' बहुविधं फलं, 'प्राप्नोति'।

तथा ।

क्रियया गुरुपूजाभिर्य्योगं कुर्व्वन्ति योगिनः ।
तेन चाप्याययन्ते ते पितरो योगवर्द्धनात् ।
आप्यायिताः पुनः सोमं पितरो योगभूषिताः ।
आप्याययन्ति योगेन त्रैलोक्यं येन जीवति ॥

पितॄणां हि बलं योगो योगात्सोमः प्रवर्त्तते ।
तस्माच्छ्राद्धानि देयानि योगिनां यत्नतः सदा ॥

'क्रियया' वर्णाश्रमाधिकारविहितेनाग्निहोत्रादिकर्म्मणा, 'गुरुपूजाभिः' परापरगुरुभक्तिभिश्च, विशिष्टं योगिनो योगमष्टाङ्गं कुर्व्वन्ति। तद्योगजन्येन चापूर्व्वेण स्वपितृपितामहादीनग्निष्वात्तादींश्च 'आप्याययन्ते' प्रीणयन्ति। ते चाप्यायिताः 'सोमं' चन्द्रं आप्याययन्ति। येन ह्याप्यायितेन सता चन्द्रेण त्रैलोक्यमाप्याय्यमानं 'जीवति' चिरमनुवर्त्तते। अस्यामाप्यायनपरम्परायां हेतुरुक्तः पितॄणां हि बलमित्यादिना। अतो योगिनां विश्वजीवनोपयोगियोगानुष्ठानवत्त्वेन सर्व्वेभ्योऽपि वैशिष्ठ्यादभ्यर्थनादिक्लेशमयेनातिप्रयत्नेनापि तानामन्त्र्य सत्कृत्य च तेभ्यः श्राद्धानि देयानि।

तथा।

अश्वमेधसहस्राच्च राजसूयशतादपि ।
पुण्डरीकसहस्राच्च योगिभुक्तं विशिष्यते ॥

'अश्वमेधादयः पुण्डरीकान्ताः क्रतवः ।

सोमाध्वरः पितृगणो योगाध्वरस्य चन्द्रमाः ।
श्राद्धे योगिनियोगस्तु तस्मात्कार्य्यो विजानता ॥
तस्मात् सर्व्वं परिच्छिन्नं विश्वमेतदियत्तया ।
अविद्यान्तर्गतं योगे नचेयत्ताप्रमा मता ॥
तस्मादनन्तफलदं प्रदत्तं योगिनां हविः ।
कारणानुगतं कार्य्यमिति त्वं मान्यथा कृथाः ॥
ज्ञानी यस्य गृहेऽश्नाति जलं पिबति वा क्वचित् ।

कृतकृत्यो भवेदेष यजमानो न संशयः॥

'नियोगः' निमन्त्रणं। अविद्यान्तर्गतमेतद्विश्वं सर्व्वमेव इयत्तया 'परिच्छिन्नं' कलितं। योगे तु 'इयत्ताप्रमा' परिमाणपरिकलना, नास्ति। अतोऽपरिमितयोगविशिष्टेभ्यः प्रदत्तं हविः 'अनन्तफलदं' अपरिमितफलदं, एव भवति। अत्र हेतुः। कारणानुगतं कार्य्यमिति। कारणधर्म्मानुविधायिनो हि कार्य्यधर्म्मा दृष्टाः। अतोऽपरिमितात्कारणादपरिमितमेव कार्य्यं भवितुमुचितं। इत्येतत् 'मान्यथा कृथाः' मान्यथामंस्था इत्यर्थः।

छागलेयः।

मूर्त्तं ब्रह्म हरिः साक्षाद्देत्यारिर्य्योगविन्मतः।
अतो योगविदो भोज्याः श्राद्धेषु पितृतृप्तये॥

वृद्धशातातपः।

ज्ञानी यस्य गृहेऽश्नाति उदकं वा पिबेद्यदि।
कृतन्तेनेह सत्कृत्यं तारितञ्च कुलत्रयं॥

ब्रह्मपुराणे।

षड़ङ्गवित् ज्ञानयोगी योगतत्त्वज्ञ एव च।
अयाचिताशी विप्रो यः श्राद्धकर्म्मणि भोजयेत्॥

समाधिशब्दवाच्यशुद्धात्मपरामर्शरूपयोगभूमिकानिषण्णो ज्ञानयोगीत्युच्यते।

ब्रह्मवैवर्त्ते।

बहुच्छिद्रः पुरा प्रोक्तः पैत्रो यज्ञो महर्षिभिः।
निष्पृत्यहस्य निश्छिद्रो जायते योगरक्षया॥

'निष्प्रत्यूहः' यातुधानादिकृतोपघातरहितः। 'निश्छिद्रः' न्यूनातिरिक्तादिदोषजनितफलवैकल्यविवर्जितः ।

मार्कण्डेयपुराणे ।

योगिनश्च तदा श्राद्धे भोजनीया विपश्चिता ।
योगाधारा हि पितरस्तस्मात्तान् पूजयेत् सदा ॥

तदेतदमावास्याष्टकाकुतपापराह्णादिकाले। सदेति सर्व्वेषु श्राद्धप्रयोगेषु ।

तथा ।

ब्राह्मणानां सहस्रस्य योगी त्वग्रासनी यदि ।
यजमानञ्च भोक्तृंश्च नौरिवाम्भसि तारयेत् ।

ब्राह्मणानां सहस्रस्य पङ्क्तावग्रे आरम्भे स्थितमासनं यस्यासौ 'अग्रासनी' । तारयेत् संसृतिमहार्णवादितिशेषः ।

तथा ।

पितृगाथास्तथैवात्र गीयन्ते ब्रह्मवादिभिः ।
या गीताः पितृभिः पूर्व्वमैलस्यासन्महीपतेः ॥
कदा नः सन्ततावग्र्यः कस्यचिद्भविता सुतः।
यो योगिभुक्तशेषान्नात् भुवि पिण्डान् प्रदास्यति ॥

'ऐलस्य महीपतेः' पुरूरवसः, पुरस्तात् पितृभिर्या 'गीताः' कीर्त्तिताः आसन् भुक्तशेषादन्नात्कियदप्युद्धृत्य 'नः' अस्मभ्यं, पिण्डान् प्रदास्यतीति ।

गाथान्तरमाह आपस्तम्बः ।

अपि स्यान्न कुले जातो भोजयेद् यस्तु योगिनं।

विप्रं श्राद्धे प्रयत्नेन तेन तृप्यामहे वयं ॥

इति योगिनां श्राद्धे नियोगः ।

अथ योगिनां सर्व्वोत्कृष्टत्वमुच्यते ।

पद्मपुराणे ।

साङ्गान् यस्तुरो वेदान् योऽधीते स कृतार्थवत् ।
जन्मवान् कर्म्मसंशुद्धः स श्राद्धे प्रयतो मतः ।
तादृशादयुताच्छ्रेयानेको योगसमाश्रयः ॥

ब्रह्मवैवर्त्ते ।

सहस्रशस्तु विप्रान् वै भोजयेद् यान् यथागतान् ।
एकस्तान् मन्त्रवित्प्रीतः सर्व्वानर्हति धर्म्मतः ॥
एतानेव च धर्म्मज्ञान् भोजयेद् यः सहस्रशः ।
एकस्तान् स्नातकः प्रीतः सर्व्वानर्हति शृण्वतः ॥
सङ्कल्पिनां सहस्रेण स्नातकानां शतेन च ।
योगाचार्य्येण यद्भुक्तं त्रायते महतो भयात् ॥
गृहस्थानां सहस्राच्च वानप्रस्थशतादपि ।
ब्रह्मचारिसहस्राच्च योगी त्वेको विशिष्यते ॥
नास्तिको वा विधर्म्मा वा सङ्कीर्णस्तस्करोऽपि वा ।
अत्यन्तं तारयेन्नूनं योगीत्याह प्रजापतिः ॥
यस्तिष्ठेदेकपादेन वायुभक्षः शतं समाः ।
ध्यानयोगी परस्तस्मादिति ब्रह्मानुशासनं ॥

'यथागतान्' यथाप्राप्तान्, स्वाध्यायाध्ययनतदर्थज्ञानादिशून्यानितियावत्। तानेतान् सहस्रशस्तु भोजितानेक एव स्वाध्यायतदर्थविद्-

ब्राह्मणो भोजितः सन्नर्हति । तावत्सङ्ख्यकब्राह्मणभोजनोत्पाद्यं सुकृतं जनयितुं समर्थ इत्यर्थः । 'स्नातकः प्रीतः' भोजनेनेति शेषः । 'सङ्कल्पिनः' नानाव्रतानुष्ठानशीलाः । योगाचार्य्येण चैकेन तत्तुल्यतया महतः पापभयाद्भोजयितारं 'त्रायते' रक्षति ।

कूर्म्मपुराणे ।

भोजयेद्योगिनं शान्तं तत्त्वज्ञानरतं यतिं ।
अलाभे नैष्ठिकं दान्तमुपकुर्व्वाणकं तथा ॥
तस्मात् यत्नेन योगीन्द्रमीश्वरज्ञानतत्परं ।
भोजयेद्धव्यकव्येषु अलाभादितरान् द्विजान् ॥

वायुपुराणे ।

गृहस्थानां सहस्रेण वानप्रस्थशतेन च ।
ब्रह्मचारिसहस्रेण योगी त्वेको विशिष्यते ॥
नास्तिको वा विकर्म्मा वा सङ्कीर्णस्तस्करोऽपि वा ।
नान्यत्तु कारणं दाने योगिष्वाह प्रजापतिः ॥
पितरस्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः ।
पुत्रो वाप्यथवा पौत्रो ध्यानिनं यस्तु भोजयेत् ॥

आदित्यश्च उशनाः ।

यं कश्चिदपि यो वेद योगधर्म्मसमाश्रितः ।
सम्यग्वर्णाश्रमास्तेभ्यस्तत्पात्रं परमं मतं ॥

ये सम्यग्वर्णाश्रमाचाराः, 'तेभ्यः' 'तत्' पूर्व्वार्द्धेनोक्तं, 'परमं पात्रं मतं' इत्यर्थः । एतद्योगिनः प्रशंसा शातातपेन दृष्टत्वानिति विशेषितत्वात् ।

ब्रह्मवैवर्त्ते च "ये तु वृत्ते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा" इति वृत्तस्थानामेव ज्ञानिनां ध्यानिनां भोजनीयत्वाभिधानात् आत्मादितत्त्वपरिस्थितिः 'ज्ञानं' मूर्त्तामूर्त्तब्रह्मानुचिन्तनं 'ध्यानं'। महाभारते भगवद्गीतासु।

तपस्विभ्योऽधिको योगी ज्ञानिभ्यश्चाधिको मतः।
कर्म्मिभ्यश्चाधिको योगी तस्मात् योगी भवार्जुनेति॥

इति योगिनां सर्व्वोत्कृष्टत्वनिरूपणं।

अथान्यच्च योगिनोऽतिक्रमदोषमाह।

छागलेयः।

योगिनं समतिक्रम्य गृहस्थं यदि पूजयेत्।
न तत्फलमवाप्नोति सर्व्वं गोत्रं प्रतापयेत्॥

'गृहस्थं' अयोगिनम्। तस्य कर्म्मणः फलं न लभते। तथा 'सर्व्वं गोत्रं' सर्व्वानपि स्वगोत्रोद्भवान् पूर्व्वपुरुषान्, 'प्रतापयेत्' योग्यतिक्रमजनितप्रत्यवायेन दुःखिनः कुर्य्यादित्यर्थः।

तथा।

योगिनं समतिक्रम्य भोजयन्ति परस्परं।
दाता भोक्ता च नरकं गच्छतः सह बान्धवैः॥

अत्र दातृभोक्त्रोरुभयोरपि नरकगमनं, द्वयोरपि योग्यतिक्रमाभिप्राये सतीति वेदितव्यं। अत आह परस्परं भोजयन्तीति। अयमिदानीं भोजितः सन् स्वगृहे मां भोजयिष्यति किं योगिनेत्यभिप्रायवान् योगिनं दाता भोजयति। भोक्तापि तथैवानुसन्दधानो भुङ्क्ते इति। द्वयोरपि योग्यतिक्रमाभिप्रायः। यदा तु दातुरेवा-

तिक्रमोऽभिप्रेतस्तदा न भोक्तुः प्रत्यवायः। अभिप्रायमन्तरेण प्रमादकृते व्यतिक्रमे श्राद्धवैकल्यमात्रं, न तदा कस्यापि निरयपात इति। वृद्धशातातपोऽपि।

योगिनं समतिक्रम्य गृहस्थं यदि भोजयेत्।
न तत् फलमाप्नोति स्वर्गस्थमपि पातयेत्॥

यो गृह एव तिष्ठति न योगेऽसौ अत्र 'गृहस्थः'। 'स्वर्गस्थं', स्वपितृवर्गमिति शेषः।

योगिनन्तु व्यतिक्रम्य पूजयन्ति परस्परं।
भोक्तारस्तु सदातारो नरके स्युः सबान्धवा इति॥

इति योगिनोऽतिक्रमे दोषनिरूपणं।

अथ गृहस्थादीनां योगित्वमुच्यते।

तत्र योगो नाम मुख्यया वृत्त्या जीवपरमात्मनोरेकीभावलक्षणः सम्बन्धः। स यद्यपि नैसर्गिकत्वेन सर्व्वत्रेत्रज्ञसाधारणस्तथाप्यनाद्यविद्याकृतभेदाभासतिरस्कृतः सन् संसृतिमताञ्जीवानां, किन्तु मुक्तानामेवास्ति। अस्य चोपाय आत्मतत्त्वज्ञानं। तदुपायश्च यमादिसमाध्यन्तोऽष्टाङ्गोऽपि योगः। युज्यतेऽनेन जीवः परमात्मना सहेति करणव्युत्पत्तिमाश्रित्य मुख्यया वा वृत्त्या स योगः। तद्वन्तो गृहस्थादयोऽपि श्रुतिसामर्थ्यात् योगिनः। न चैतद्वक्तव्यं। मोक्षोपायत्वात् योगस्य, मुमुक्षोरेव योगसम्बन्धो न गृहस्थस्येति। मैवं। यतो बहुतरदोषदूषितविषयरसविरज्यमानमनसो गृहस्थस्यापि सर्व्वपुरुषार्थातिशायिनि मोक्षे कामनोपपद्यते। सत्याञ्च तस्यान्तदुपायानुष्ठानसमर्थस्य विदुषो निर्व्यूढाधिकारतया युक्तमेव योगानुष्ठानं। सम्यगनुष्ठितयोगस्य च मोक्ष इति। न च

स्वाश्रमकर्म्मानुष्ठानावरुद्धकालस्य गृहस्थस्य योगाभ्यासानवकाश इति वाच्यं। भिक्षोरिव नियतकालकर्म्मानुष्ठानान्तरालेषु तस्याप्यवकाश-सम्भवात्। न च तुरीयाश्रमसध्रीचीनस्यैव योगस्य मोक्षसाधनत्वात् गृहस्थस्यानर्थकं योगानुष्ठानं। यतः स्मरन्ति।

न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यत इति॥

श्रूयते च गृहस्थानामेव जनक-जावाल-वामदेव-प्रह्लादप्रभृतीनां योगाभ्यासान्मोक्ष इति। अत्र च तत्त्वज्ञाननिष्ठ इत्यात्मतत्त्वज्ञाननिष्ठ इत्यवगन्तव्यं। अनेन चार्थादात्मतत्त्वज्ञानोपायभूतो यमादिः समाध्यन्तोऽष्टाङ्गोऽपि गृहस्थस्योक्तो भवति।

तथा च कूर्म्मपुराणे।

गृहस्था नैष्ठिकाः शान्ता वनस्था यतयोऽपि वा।
योगिनः पर्य्युपासन्ते परमात्मानमात्मनीति॥

अतो गृहस्थादयोऽपि योगिनः। एवं च सति स्वाध्यायादिगुण-सम्पदा तुल्येषु गृहस्थादिष्वपि मध्ये ये योगिनस्तत्पुरःसरेभ्यः श्राद्धानि देयानीति।

अथ यतेरत्यन्तविशिष्टतया श्राद्धनियोग उच्यते।

तत्र आह मनुः।

ज्ञाननिष्ठा द्विजाः केचित् तपोनिष्ठास्तथापरे।
तपःस्वाध्यायनिष्ठाश्च कर्म्मनिष्ठास्तथैव च॥
ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः।
हव्यकव्यानि देयानि(१) सर्व्वेष्वेव चतुर्ष्वपि॥

---

(१) हव्यानि च यथान्यायं इति क०।

'ज्ञाननिष्ठः' परिव्राजकः। तस्य ह्यात्मतत्त्वज्ञाने निष्ठा प्रकर्षो भवति। 'तपोनिष्ठः' वानप्रस्थः। स हि तापस इत्याख्यायते। ग्रीष्मे पञ्चतपास्तु स्यादिति तपोविधानात्। 'तपःस्वाध्यायनिष्ठाः' ब्रह्मचारिणः। 'कर्म्मनिष्ठाः' गृहस्थाः। एषामपि 'कव्यानि' पितॄनुद्दिश्य दीयमानान्यन्नानि, 'ज्ञाननिष्ठेषु प्रतिष्ठाप्यानि' तेभ्यो देयानीत्यर्थः। प्रयत्नवचनात्तदभावे अन्येभ्योऽपि देयानि। हव्यानि चतुर्ष्वपि प्रतिष्ठाप्यानि। 'यथान्यायं' शास्त्रोक्तेन विधिना।

वार्हस्पत्यसंहितायां।

ज्ञाननिष्ठा हि यतयस्तपोनिष्ठा वनाश्रयाः(१)।
कर्म्मनिष्ठा हि गृहिण आद्याः स्वाध्यायनिष्ठिताः॥

'आद्याः' ब्रह्मचारिणः।

ज्ञाननिष्ठेषु कव्यानि प्रतिपाद्यानि यत्नतः।
हव्यकव्यानि देयानि सर्व्वेष्वेव चतुर्ष्वपीति॥

यमस्मृति-कूर्म्मपुराणयोः।

प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः।
फलं वेदविदान्तस्य सहस्रादतिरिच्यते॥
तस्मादग्रासने भोज्यो यजता संयतो यतिः।
श्रोत्रियो ब्रह्मचारी वा यत्नस्तेन न लुप्यते॥

यतेरनग्रभोजने दोषमाह यमः।

यस्य वै यजमानस्य नाग्रे भुङ्क्ते यतिस्तथा।

---

(१) वनाश्रमा इति ग०।

अनिष्टमद्भुतं तस्य हरते रक्षसाङ्कुशः ॥

'अद्भुतमनिष्टं' पुत्रकलत्रादिनाशरूपं, तस्य सम्बन्धितया रक्षसा-ङ्कुशः 'हरते' उपाहरतीत्यर्थः ।

ब्रह्मवैवर्त्ते ।

यानि श्राद्धानि योगीन्द्रा यतयो ब्रह्मनिष्ठिताः ।
अलङ्कुर्व्वन्ति तान्येव पितॄणां तृप्तये ध्रुवं ॥
पञ्चविंशतितत्त्वज्ञान् पञ्चतन्त्राश्रमे रतान् ।
यतीनाहुः स्वधा-स्वाहायोग्यान् पात्रतया बुधाः ॥
रागद्वेषविनिर्मुक्तानाप्तान् ये योगिनो यतीन् ।
भोजयन्ति फलं तेषामनन्तं[१] तत्प्रदायिनां ॥
ज्ञाननिष्ठेषु कव्यानि प्रतिष्ठाप्यानि यत्नतः ।
हव्यानि च यथान्यायं न मिथ्याहङ्कृतात्मसु ॥
योगाचार्य्यं यतिं सम्यग्यः पूजयति भक्तितः ।
स फलं समवाप्नोति कारणानुगतं बुधः ॥
मूर्त्तं ब्रह्म हरिः साक्षाद्दैत्यारिर्य्योगवित्तमः[२] ।
अहं नारायणो ब्रह्मा यतिदेहसमाश्रयः ॥
ध्यानेन सततं युक्तं सर्व्वसङ्गविवर्जितं ।
दैवे कार्य्ये[३] च पित्र्ये च पूजयद्धर्मरेतसं ॥

छागलेयः ।

---

(१) तेषामलभ्यमिति ख० ।
(२) दैत्यारिर्य्योगविन्मत इति ख० ।
(३) देवकार्य्ये इति ग० ।

गन्धमाल्यफलैश्चैव[1] भोजनैः चीरसंस्कृतैः ।
पूजयेच्च[2] यतिं श्राद्धे पितॄणां तुष्टिकारकं ॥
ब्रह्मचारी यतिश्चैव पूजनीयौ हि नित्यशः ।
तत्कृतं सुकृतं यत् स्यात् तस्मात् षड्भागमाप्नुयात् ॥
जाप्यं योगस्य यज्ञस्य यतस्तस्मिंस्त्रयं स्थितं ।
तस्य प्रणामः पूजा च दत्तं भवति चाक्षयं ॥
गृहस्थस्याश्रमं गच्छेद् ब्रह्मचारी यतिस्तथा ।
खाद्यं पानं फलं पुष्पमात्मानं परिवेदयेत् ॥
सततं योगयुक्तानां वीतरागतपस्विनां ।
सर्व्वारम्भनिवृत्तानां यतीनां दत्तमक्षयं ॥
यतये वीतरागाय दत्तमन्नं सुपूजितं ।
न चीयते श्रद्धया वै कल्पकोटिशतैरपि ॥

अत्र यतेः सर्व्वोत्तमाश्रमाश्रयत्वेन ज्ञानध्यानधुरीणत्वेन च भोजनीयेषु मुख्यतया सम्पादनं कर्त्तव्यं ।

तथा च वायुपुराणे ।

यतिस्तु सर्व्वविप्राणां सर्व्वेषामग्रभुग्भवेत् ।
इतिहासपञ्चमान् वेदान् यः पठेत द्विजोत्तमः ॥
अनन्तरं यतेः सोऽयं नियोक्तव्यो विजानता ।
त्रिवेदोऽनन्तरस्तस्मात् द्विवेदस्तदनन्तरः ॥
एकवेदस्ततः पश्चात् नित्याध्यायी ततःपरं ।

---

(१) गन्धमाल्योपलेपैश्चेति क० ।
(२) यः पूजयेदिति ख० ।

'सर्व्वविप्राणां' ब्रह्मचारिगृहस्थवानप्रस्थानां, 'सर्व्वेषां' त्रिमधुत्रि-सुपर्णत्रिणाचिकेतादीनां। अग्र्यः मुख्यः भोक्ता यः तस्माद्धि 'अग्रभुक्', न तु पूर्व्वकालभोजी। योद्विजसत्तमः सेतिहासांश्चतुरोवेदानधीते सोऽयं यतेरनन्तरं पश्चान्नियोजनीयः। एवं त्रिवेदादीनां पौर्व्वापर्य्यं। 'नित्याध्यायी' अधीयमानवेदः।

नागरखण्डे।

आमन्त्रयेद्यतीन् पूर्व्वं स्नातकान् वा त्रिकर्म्मिणः।
तदभावे गृहस्थांश्च ब्रह्मज्ञानपरायणान्॥

याजनाध्यापनदानानि त्रीण्येव कर्म्माणि येषां ते 'त्रिकर्म्मिणः'। 'स्नातकाः' वानप्रस्था इत्यर्थः।

आह वसिष्ठः।

पितृभ्योदद्यात् पूर्व्वेद्युर्ब्राह्मणान् सन्निपात्य यतीन् गृहस्थान् साधून् परिणतवयस इति॥

'सन्निपात्य' निमन्त्रणेन श्राद्धक्रियासम्बन्धमापाद्य।

नारदस्मृतौ।

यो वै यतीननादृत्य[१] भोजयेदितरान् द्विजान्।
विजानन् वसतो ग्रामे हव्यमाप्नोति राक्षसान्॥

यः स्वग्रामे वसतो यतीन् जानन्नपिताननादृत्यान्यान् गृहस्था-दीनेव श्राद्धे भोजयेत् तस्य तत्सकलं श्राद्धभोजनीयमन्नं राक्षसानेव तर्पयति न पितृनिति। अनेन स्वग्रामे वसतो यतेः श्राद्धे निमन्त्रणी-

(१) यतीननामन्त्र्येति ग०।

यत्वमुक्तं । अनिमन्त्रितस्यापि श्राद्धकाले भिक्षार्थमागतस्य यतेर्भोजनीयत्वमुक्तं ।

ब्रह्म-मार्कण्डेयपुराणयोः ।

भिक्षार्थमागतांश्चापि काले संयमिनो यतीन् ।
भोजयेत् प्रणिपाताद्यैः प्रसाद्य यतमानसः ॥

अत्र निमन्त्रितस्य यतेर्निमन्त्रणादेव द्वारदेशगतस्य चातिथित्वेनैव निमन्त्रित-ब्राह्मण-पङ्क्तिभोजनीयत्वे सिद्धे तद्ग्रामस्थस्यैव तु प्रमादादनिमन्त्रितस्य श्राद्धकालेऽप्युपस्थितस्य यतेः श्राद्धे भोजनीयत्वार्थमिदं वचनं। बहुवचनन्तु बहूनामपि प्राप्त्यर्थं यतिभेदसंग्रहार्थं वा। यतेरुपवेशने स्थानविशेष उक्तः ।

वार्हस्पत्यसंहितायां ।

श्राद्धकाले यतिं प्राप्तं पितृस्थाने तु भोजयेत् ।
परिवेषयेत् तत्प्रथमं यदि वा पार्श्वतः स्थितं ॥

'पितृस्थाने भोजयेत्' इति प्रमीतोद्देशेन त्यज्यमानान्नं भोजितं कुर्य्यादित्यर्थः(१) । 'परिवेशयेत् तत् प्रथमं' इति मुख्यं पित्र्यं कुर्य्यादित्यर्थः ।

पक्षान्तरमाह 'यदि वा पार्श्वतः स्थितं' इति निमन्त्रितब्राह्मण-पङ्क्तावतिथिवद्वा भोजयेत् ।

अत्रेयं व्यवस्था। ब्राह्मणेषु पितृपितामहादिकल्पनातः पूर्व्वमागतं यतिं पितृस्थाने भोजयेत् । पश्चादागतं तु पूर्व्वानुष्ठितपदार्थक्रमस-

---

(१) सम्मानेनात्र भोजनं कुर्य्यादित्यर्थः इति क्वाचित्कलिखितपुस्तकपाठः । परन्त्वयं न समीचीनः ।

कृत्याद्यविरोधाय श्राद्धीयद्विजसन्निधावतिथिवत् भोजयेदिति। श्राद्धकालात् पूर्व्वमपि प्राप्तं सम्यक्संप्रार्थनेन श्राद्धकालं यावदवस्थाप्य भोजयेत्।

श्राद्धकालागतस्य यतेः ब्रह्मचारिणस्य श्राद्धीयत्वेनातिथित्वेन वा भोजनीयत्वमाह यमः।

भिक्षुको[१] ब्रह्मचारी वा भोजनार्थमुपस्थितः।
उपविष्टेष्वनुप्राप्तः काममन्नमपि भोजयेत्॥

भोजने फलविशेषं कारणञ्चाह छागलेयः।

भोजयेच्छ्राद्धकालेऽपि यतिं सब्रह्मचारिणं।
विप्रानुद्धरते पापात् पितृमातृगणानपि॥
भुञ्जते यत्र तत्रापि यतयो ब्रह्मचारिणः।
तृप्यन्ति पितरो देवाः स याति परमाङ्गतिं॥
तारयन्ति च दातारं पुत्रान् दारान् पितॄंस्तथा।
तस्मात्सर्व्वप्रयत्नेन अर्चयेदाश्रमागतं॥
ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभौ।
पचमानाः पचन्त्येते नापचः पचते पुनः॥

ब्रह्मचार्य्यादिभ्यो यतेर्विशेषमाह स एव।

ब्रह्मचारिसहस्रैस्तु वानप्रस्थशतैरपि।
गृहस्थानां सहस्रैस्तु यतिरेको विशिष्यते॥

तदेवं सति सम्भवे श्राद्धे यतयो भोजनीयाः। तेषामलाभे ब्रह्मचार्य्यादयः।

(१) भिक्षुर्वा इति ख०।

तथा च ब्रह्मववर्त्ते ।

अलाभे यतिभिक्षूणां वनस्थमपि पूजयेत् ।
तदलाभेष्युदासीनं नैष्ठिकं संयतेन्द्रियं ॥

'उदासीनः' दातुरसम्बन्धी ।

आह शातातपः । यतीन् भोजयेदिति ।

तत्र विशेष उक्तः ।

ब्रह्मवैवर्त्ते ।

मुण्डान् जटिलकाषायान् श्राद्धकाले विवर्ज्जयेत् ।
शिखिभ्यो धातुरक्तेभ्यस्त्रिदण्डिभ्यः प्रदापयेत् ॥
ते हि व्रतस्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा ।
देवभक्ता महात्मानः पुनीयुर्दर्शनादपि ॥

'मुण्डाः' शिखया सह मुण्डितमस्तकाः । 'जटिलाः' शैवपाशुपतकालमुखादयः । 'काषायाः' आश्वत्थादिकषायरक्तवसनाः ।

बौधायनः ।

एतान् श्राद्धकाले विशेषेण वर्ज्जयेत् । ये तु शिखावन्तो गैरिकरक्तवसनाः त्रिदण्डाश्च तेभ्यः प्रयत्नेन दद्यात् । एतेन सर्व्वाण्यपि योगिवचनान्येतल्लक्षणान्वितयतिविषयाण्येवेति विज्ञायते ।

ननु भैक्षेण वर्त्तते नित्यं नैकान्नाशी भवेद्व्रती । भैक्षेण व्रतिनां वृत्तिरुपवाससमा स्मृतेति मनुना ब्रह्मचारिणामेकप्रदत्तान्नभोजननिषेधात् अष्टौ भिक्षाः समादाय दश द्वादश वा यतिः । अखिलाः शोषयेत्तास्तु ततोऽश्नीयाद्द्विजोत्तम इति सम्वर्त्तेन यतेर्भिक्षाकदम्बकभोजनविधानात्तयोः कथं श्राद्धे भोजनं ।

अत्र ब्रूमः । भिक्षार्थभ्रमणाशक्तावनेकान्नलाभासम्भवे परानुग्रहार्थं च यतेरेकान्नभोजनाभ्यनुज्ञादर्शनात् ।

तदाह कार्ष्णाजिनिः ।

अशक्तोऽनुग्रहार्थं वा यतिरेकान्नभुग्भवेत् । —

वसिष्ठोऽपि ।

ब्राह्मणकुले वा यल्लभेत तद्भुञ्जीतेति ।

ब्रह्मचारिणस्त्वेकान्नभोजनमनुजज्ञे याज्ञवल्क्यः ।

ब्रह्मचर्य्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन् ॥

ब्रह्मचार्य्यनापद्येकस्यान्नं नाश्नीयात् । ब्रह्मचारी ब्राह्मणश्चेत्तदार्थितः सन्नेकान्नमनापद्यपि श्राद्धे भुञ्जीत । तदा व्रतपीड़ाकरं मधुमांसादिवर्ज्जयित्वाश्नीयात् ।

मनुरपि ।

व्रतवद्देवदेवत्ये पित्र्ये कर्म्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयाद्व्रतन्तस्य न लुप्यते ।

'देवदेवत्ये' दैविके कर्म्मणि, अभ्यर्थितो ब्रह्मचारी भुङ्क्ते । भुञ्जीत कथं । 'व्रतवत्' व्रतयुक्तं, व्रताविरोधेन मधुमांसवर्जमित्यर्थः । 'पित्र्ये' पितृदेवत्येऽपि कर्म्मणि, भुञ्जीत । 'ऋषिवत्' मधुमांसवर्जमित्यर्थः । 'कामं' इच्छया । एवमस्य ब्रह्मचारिव्रतं न लुप्यते । अन्यथा लुप्यत इत्यर्थः । अतः सद्भिरभ्यर्थ्यमानस्य तदनुग्रहमिच्छतो यतेः श्राद्धे भुञ्जानस्य न प्रत्यवायो भवति । अथ वैकान्नभोजनजनितं स्वल्पतमं प्रत्यवायं प्रायश्चित्तरूपेण वर्त्तमानैः प्राणायामादिभिर्य्योगाङ्गै-

नाशयति। ननु तथापि श्राद्धे भोज्यत्वेन मुख्यतया मधुमांस-विधानात् कथं यतेर्भोजनमुपपद्यते। उच्यते। मधुमांसनियमा-भावात्। तन्नियमे हि तदन्तरेण मुन्यन्नादिमात्रेण श्राद्धं न सिध्येत्। न चैतदिष्टं। न चास्ति श्राद्धे यतिनियमः। तन्नियमे हि यतिम-न्तरेण श्रोत्रियैस्त्रिणाचिकेतादिभिर्गृहस्थैः श्राद्धं न सिद्ध्येत्। न चैतदपीष्टं। अतो मधुमांसवर्जिते श्राद्धप्रयोगे यतेर्भोजनं, यतिव-र्जिते च प्रयोगे मधुमांसोपकल्पनमिति न किञ्चिदनुपपन्नं। मधुमांसस्य यतेश्च नित्यवद्विधेरुभयावकाशार्थमगत्या पाक्षिकत्वमा-श्रीयते। अथ कस्मान्मधुमांसवत्यपि श्राद्धप्रयोगे मध्वादिवर्जितं यतेर्भोजनं नाभ्युपगम्यते। निर्व्वाप-पाकयोः सर्व्वपित्रर्थत्वाविरोधा-च्चेति ब्रूमः।

अथ कस्माच्छ्राद्धे यतेर्न मधुमांसभोजनं। न यतिर्मधुमांसमश्नी-यादिति निषेधादिति चेत्। तन्न। निषेधस्य पुरुषार्थत्वात् क्रत्वर्थ-भोजनबाधे सामर्थ्याभावात्। हिंसानिषेधस्येव यज्ञीयहिंसाबाधे। ननु पुरुषार्थस्यापि गोदोहनस्य क्रत्वर्थचमसबाधकत्वं दृष्टं। सत्यं। यत् क्रत्वर्थपदार्थसाध्यकार्य्यनिष्पादकं पुरुषार्थं तत्र तद्व्यवतिष्ठते। न चेह क्रत्वर्थमधुमांसभोजनकार्य्यं पुरुषार्थं भोजनं निष्पादयितु-मीष्टे। क्रतुना क्रत्वीयेन वा पदार्थेन सहास्य सम्बन्धाभावात्। गोदोहनस्य तु पुरुषार्थस्यापि क्रत्वीयेन प्रणयनेन सहाश्रयाश्रयि-भावलक्षणस्य सम्बन्धस्य विद्यमानत्वात्। अथ कस्मान्न यतिर्मधुमांस-मश्नीयादित्येष निषेधः क्रत्वर्थस्य श्राद्धभोजनस्येव न स्यात्। ब्रूमः। शास्त्रप्राप्तनिषेधत्वापत्तौ दुष्टं विकल्पमापादयेत् रागप्राप्तं

च मधुमांसभोजनं यतेरनर्गलमापद्यते। उभयनिषेधोऽस्त्विति चेत्। एवं तर्ह्येकत्र विध्यन्तरसापेक्षोऽन्यत्र निरपेक्ष इति वैषम्येण पौडैव। एक एव चायं क्रत्वर्थः पुरुषार्थश्चेति विप्रतिषिध्यते। अतोरागप्राप्तस्य मधुमांसभोजनस्य पुरुषार्थो निषेधो न विधिप्राप्तस्य क्रतूपकारकस्य भोजनस्य निवर्त्तकः। अतः श्राद्धे यतेर्मधुमांसभोजनं न दुष्यतीति। अत्रोच्यते। भोजयेदिति श्राद्धाधिकारिकर्तृकं प्रयोजकव्यापारात्मकं मधुमांसभोजनं विहितं। न तु श्राद्धनियोज्ययतिव्यापारात्मकमपीति कथं न निषेधः। प्रयोजकव्यापारविधिनार्थाक्षिप्तं तद्विहितमेवेति चेत्। तर्हि मेषीमुभयतोमुखीं वा दद्यादित्येतद्विधाक्षिप्तः प्रतिग्रहोऽपि विहित एवेति न दुष्येत। किञ्चेदं भोजनं यदि सर्व्वस्य श्रोत्रिया-देर्विहितं तर्हि केनचिदेकेनाप्यभुक्ते श्राद्धवैगुण्यमापद्येत।

अथ निमन्त्रितस्य विहितं तर्हि किमर्थं मधुमांसभक्षणं दूषणीयं। यतिं श्राद्धकर्म्मणि निमन्त्रयेत् स्वाधिकारविधिसिद्ध्यर्थं प्रतिग्रहवदिति चेत्। यतिः तर्हि किमर्थं निमन्त्रणमभ्युपगच्छेत्। निमन्त्रयितुरनुग्रहार्थमिति चेत्[१]। न हि कश्चिदात्मानमेतावति पातकपङ्के निमज्जयन्तं परानुग्रहलेशमिच्छति, इति विदालोच्यते। अतो रागत एव यतेर्निमन्त्रणग्रहणमवसीयते। तथा च निषेधानु-प्रवेशान्न श्राद्धेऽपि मधुमांसभोजनं। अथानिन्दितेनामन्त्रितो नापक्रामेदिति निषेधात् निमन्त्रणमङ्गीकरोति, अङ्गीकृतनिमन्त्रणस्य भुञ्जीरंस्तेऽपि वाग्यता इति भोजनविधानात् परिवेषितपरित्याग-प्रतिषेधाच्च निमन्त्रणाङ्गीकरणपूर्व्वकं विहितमेव यतेः श्राद्धीयमधु-

---

(१) निमन्त्रयितारमनुग्रहीतुमितिचेदिति ग०।

मांसभोजनमिति । अत्र ब्रूमः । अपक्रमणे प्रत्यवायमात्रं मधुमांस-भक्षणे त्वाश्रमभ्रंश एव भवेत् । ततोऽपक्रमणस्यैव न्याय्यत्वात् । न वापक्रमणे प्रत्यवायोऽपि यत्याश्रमधर्म्मविरुद्धत्वादनपक्रमणादिविधीनां यतिव्यतिरिक्तविषयत्वात् । तदेवमेतत् सिद्धं मधुमांसविवर्ज्जिते श्राद्धप्रयोगे यतेर्नियोगः, यतिनियोगवर्ज्जिते च प्रयोगे मधुमांसो-पकल्पनमिति ।

इति यतेः श्राद्धे नियोगः ।

अथातिथेः श्राद्धपङ्क्तौ भोजनीयत्वं वक्तुमतिथिस्वरूपं तावदुच्यते । अत्र मार्कण्डेयपुराणे ।

अज्ञातकुलनामानं तत्कालसमुपस्थितं ।
बुभुक्षुमागतं श्रान्तं याचमानमकिञ्चनं ।
ब्राह्मणं प्राहुरतिथिं स पूज्यः शक्तितो बुधैः ॥

भविष्यत्पुराणे ।

अचिन्त्यमानो नाहूतो वैश्वदेवमुपागतः ।
अतिथिं तं विजानीयात् न पुनः पूर्व्वमागतं ।
अचिन्तितागतो यस्मात् तस्मादतिथिरुच्यते ॥

शातातपोऽप्याह ।

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव च ।
प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसंक्रमः ॥

मनुरपि ।

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥

ब्राह्मणग्रहणं क्षत्रियादेर्व्युदासार्थं ।

तदप्याह मनुरेव ।

न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव चेति ॥

आह यमः ।

तिथिपर्व्वोत्सवाः सर्व्वे त्यक्ता येन महात्मना ।
सोऽतिथिः सर्व्वभूतानां शेषानभ्यागतान् विदुः ॥
व्रती यतिर्व्वैकरात्रं निवसन्नुच्यतेऽतिथिः ।
यस्मादनित्यं वसति तस्मात्तमतिथिं विदुः ॥

'तिथिः' दीपालिका प्रतिपदादिः । 'पर्व्वाणि' अमावास्यादीनि । 'उत्सवाः' विवाहादयः । एतान्यन्नविशेषप्राप्तिहेतुभूतानि येन यतिधर्म्मप्रवणेन सता त्यक्तानि सोऽतिथिरित्यर्थः । 'व्रती' ब्रह्मचारी, 'यतिः' परिव्राजकः, अनयोरेव विधिधर्म्मकयोरतिथिसंज्ञकत्वं, न पुनर्गृहस्थवनस्थयोः । तयोरभ्यागतसंज्ञकत्वमुक्तं

वायुपुराणे ।

वालखिल्यो यतिश्चैव विज्ञेयो ह्यतिथिः सदा ।
अभ्यागतः पचानः स्यादतिथिः स्यादपाचक इति ॥

'वालखिल्यः' ब्रह्मचारी । 'पचानः' पचमानः, पक्ता गृहस्थो वानप्रस्थश्चेत्यर्थः । द्विविधश्चातिथिः मध्याह्नागतः सायमागतश्च ।

तत्र मध्याह्नागतः ।

आदित्यपुराणे ।

मध्याह्नसमये चैव वैश्वदेवे कृतेऽपि च ।

अतिथिश्चैव सम्प्राप्तं पांशुपादं अमातुरं।

तं पूजयेत यत्नेन सोऽतिथिर्ब्राह्मणः सदा इति ॥

सायमागतस्तु सूर्य्योढशब्दवाच्यः ।

तमाह प्रचेताः ।

यः सायं वैश्वदेवान्ते सायं वा गृहमागतः ।

देववत् पूजनीयोऽसौ सूर्य्योढः सोऽतिथिः स्मृतः ॥

सायन्तनो वैश्वदेवः । नचैवं मन्तव्यं माध्याह्निकसायन्तनवैश्वदेवकाल एवागतोऽतिथिः नान्यकालागत इति ।

यतोमनुराह ।

अप्रणोद्योऽतिथिः सायं सूर्य्योढो गृहमेधिना ।

काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेदिति ॥

आह याज्ञवल्क्यः ।

अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः ।

सायमागतोऽतिथिरन्नाभावे वाग्भूतृणोदकदानतोऽपि संपूजनीयः । न पुनः प्रत्याख्येयः ।

अचिन्तितागतत्वादिलक्षणकस्यास्य श्राद्धकालोपस्थितस्य नामान्तरमप्युक्तं पैठीनसिना ।

कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ।

श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ॥

कुतोऽप्यविज्ञायमानाद्देशादागतः पुनाति श्राद्धमित्यतिथिरेव कुतपसंज्ञयोच्यते ।

समानग्रामवासिनोऽचिन्तितागतस्याप्यतिथिसंज्ञकत्वं नास्तीत्युक्तं ।

विष्णुधर्म्मोत्तरे ।

नैकग्रामीणमतिथिं विद्यान्नाब्राह्मणं तथा ।

मार्कण्डेयपुराणे ।

न मित्रमतिथिं कुर्य्यान्नैकग्रामनिवासिनं ।

आदित्यपुराणे ।

नैकग्रामीणमतिथिं कथयन्ति मनीषिणः ।

यत्तु वायुपुराणे ।

न घोरो नापि सङ्कीर्णो नाविद्यो नाविशेषवित् ।
नावसन् न सन्दधानो न सेवनपरोऽतिथिरिति ॥

तदतिथिवहुत्वे शक्त्यभावे च द्रष्टव्यं ।

यदाह शङ्खः ।

यदि वहूनां न शक्नुयादेकस्मै शीलवते दद्यात् प्रथममुपागतः स्याच्छ्रोत्रियस्तस्मा इति । तदेवमविज्ञातगोत्रनामा ग्रामान्तरतोऽकस्माद्वैश्वदेवादिकाले मैत्र्यादिसम्बन्धरहितः समागतो ब्राह्मणोऽतिथिरिति लक्षणमुक्तं वेदितव्यं ।

इत्यतिथिस्वरूपनिरूपणं ।

अथातिथिप्रशंसा ।

शिवधर्म्मोत्तरे ।

अनुग्रहाय लोकानां श्राद्धसंप्रेक्षणाय च ।
चरन्त्यतिथिरूपेण देवा योगाश्च भूतले ॥

'योगाः' योगिनः ।

आदित्यपुराणे ।

तस्मात् गृहाश्रमस्थस्य नान्यद्दैवतमुच्यते ।
ऋतेऽतिथेर्महाभागे सत्यमेतद्विचारय ॥

विष्णुपुराणे ।

धाता प्रजापतिः शक्रो वह्निर्व्वसुगणो यमः ।
प्रविश्यातिथिमेते वै भुञ्जतेऽन्नं नरेश्वर ॥

विष्णुधर्म्मोत्तरे ।

देवा ब्राह्मणरूपेण चरन्ति पृथिवीमिमां ।
तस्मात् संप्राप्तमतिथिं प्रयत्नेन तु पूजयेत् ॥

प्रभासखण्डे ।

नातिथेः परमो बन्धुर्विद्यते गृहमेधिनां ।
गृहानुपेत्य कृपया सन्तारयति यः कुलं ॥
सिद्धाश्चरन्ति पृथिवीं कौतुकेन यदृच्छया ।
अनुगृह्णन्ति सततं धर्म्मिष्ठा गृहमेधिनः ॥
अतिथीनां हि रूपेण गृहाङ्गणमुपागताः ।
तस्मादतिथयो मान्याः सर्व्वेषां सर्व्वदा नृप ॥

नारदीयपुराणे ।

पुनन्ति गृहिणाङ्गेहान् यदीयाः पादपांशवः ।
क्षालयत्यखिलं पापं यत्पादक्षालनोदकं ॥
सत्कृतिः प्रणतिर्य्येषां यज्ञादपि विशिष्यते ।
येषामन्नोदकं दत्तं तारयत्यखिलं कुलं ॥
अतिथिभ्यः परन्तेभ्यः किमस्ति भुवनत्रये ।

देवानामभिवन्द्याः स्युर्दूरादतिथयः शुभाः ।
किं पुनः कर्म्मनिष्ठानां गृहस्थानां महामते ॥

कार्ष्णाजिनिः ।

तिला रक्षन्ति त्वसुरात् दर्भा रक्षन्ति राक्षसात् ।
अपङ्क्तयात् श्रोत्रियो रक्षेदतिथिः सर्व्वरक्षकः ॥

इति अतिथिप्रशंसा ।

अथातिथिपरीक्षानिषेधः ।

तत्र मार्कण्डेयपुराणे ।

न पृच्छेद्गोत्रचरणं स्वाध्यायञ्चापि पण्डितः ।
शोभनाशोभनाकारं तं मन्येत प्रजापतिं ॥

विष्णुपुराणेऽपि ।

स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलं ।
हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ॥

विष्णुधर्म्मोत्तरे ।

रूपान्वितं विरूपं वा मलिनं मलिनाम्बरं ।
योगीन्द्रशङ्कया नित्यमतिथिं न विचारयेत् ॥

वायुपुराणेऽपि ।

अविज्ञातं द्विजं श्राद्धे न परीक्षेत् सदा बुधः ।
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमां ॥
उर्व्वीं सागरपर्य्यन्तां देवा योगीश्वरास्तथा ।
नानारूपाश्चरन्त्येते प्रजाधर्म्मेण लीलया ॥

नारसिंहपुराणे ।

न परीक्षेत चरितं न विद्यां न कुलं तथा ।
न शीलं न च देशादीनतिथेरागतस्य हि ॥
कुरूपं वा सुरूपं वा कुचेलं वा सुवाससं ।
विद्यावन्तमविद्यं वा सगुणं वाथ निर्गुणं ॥
मन्येत विष्णुमेवैतं साक्षान्नारायणं हरिं ।
अतिथिं समनुप्राप्तं विचिकित्सेन्न कर्हिचित् ।

वायुपुराणे ।

अतिथिं ह्यागतं दृष्ट्वा देव्यं बन्धुमिवागतं ।
यादृशन्तादृशं वापि विचिकित्सेन्न जातुचित् ॥
न हि विद्यादयस्तस्मिन् पूज्यताहेतवः स्मृताः ।
केवलेनातिथित्वेन स भवेत् पङ्क्तिपावनः ॥
अनुग्रहार्थिलोकानां महात्मानो महीमिमां ।
चरन्त्यतिथयो भूत्वा न विचार्यास्ततस्तु ते ॥
गुणागुणविचारेण भवन्त्येतेऽवमानिताः ।
निर्दहन्त्याशु गृहिणं तादृशेष्ववमानना ।
अतोऽतिथेर्न कर्त्तव्या कापि चर्य्या कदाचन ॥

इत्यतिथिपरीक्षानिषेधः ।

अथातिथिपूजाविधिः ।

तत्र मनुः ।

सम्प्राप्ताय त्वतिथये प्रदद्यादासनोदके ।
अन्नञ्चैव यथाशक्ति सत्कृत्य विधिपूर्व्वकं ॥

हारीतोऽप्याह ।

तस्य स्वागतमर्घ्यं पाद्यमाचमनीयमासनं प्रदद्यादिति ।

पराशरोऽपि ।

अतिथिं तत्र सम्प्राप्तं पूजयेत् स्वागतादिना ।
तथासनप्रदानेन पादप्रक्षालनेन च ॥
श्रद्धया च तथान्नेन प्रियप्रश्नादरेण च ।
गच्छतश्चानुयानेन प्रीतिमुत्पादयेत् गृही ॥

यमस्मृतौ ।

चक्षुर्दद्यान्मनोदद्याद्वाचन्दद्याच्च सूनृतां ।
उत्थाय चासनं दद्यात् स धर्म्मः पञ्चलक्षणः ॥

उत्थायेति श्रोत्रियातिथिविषयं।

अतएवापस्तम्बः ।

ब्राह्मणायानधीयानायासनमन्नमुदकमिति देयं । न प्रत्युत्तिष्ठेद-भिवादनीये चोत्तिष्ठेदभिवादयेदिति ।

आदित्यपुराणे ।

चक्षुर्दद्यान्मनोदद्यात् वाचन्दद्याच्च सूनृतां ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥
पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयं ।
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः ॥
येन येन च तुष्येत नित्यमेव यथातिथिः ।
अथात्मनः प्रदानेन तत्तत्कुर्य्याद्विचक्षणः ॥

शिवधर्म्मोत्तरे ।

तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः ।

स्वागतासनपाद्यार्घ्यस्नानान्नशयनादिभिः ॥

वायुपुराणे ।

तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः ।
पूजयेच्चार्घ्यपाद्येन पादाभ्यञ्जनभोजनैः ॥
पिपासिताय श्रान्ताय संस्नाताय बुभुक्षिने ।
तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥
न वक्तव्यं सदा विप्रे क्षुधिते नास्ति किञ्चन ।
तस्मै सत्कृत्य योदद्यादपूर्व्वोयज्ञ उच्यते ॥

हीनोत्तमातिथिसमवाये पूजाप्रकारमाह मनुः ।

आसनावसथौ शय्यामनुव्रज्यामुपासनाम् ।
उत्तमेषूत्तमं कुर्य्याद्धीने हीनं समे सममिति ॥

एकपङ्क्त्युपविष्टानामेषाम्भोजने तु वैषम्यं निराकरोति हारीतः ।

विद्यातपोधिकानाञ्च प्रथमासनमुच्यते ।
पङ्क्तौ सहस्थितानान्तु भोजनादि समं स्मृतमिति ॥

वैषम्ये दोषमाह वसिष्ठः ।

यद्येकपङ्क्तौ विषमन्ददाति
स्नेहाद्भयाद्वा यदि वार्थहेतोः ।
वेदेषु दृष्टां ऋषिभिश्च गीतां
तां ब्रह्महत्यां मुनयो वदन्ति ॥

'विषमं' एकस्योत्तममन्यस्य हीनमित्यर्थः ।

इत्यतिथिपूजाविधिः ।

अथातिथिपूजाफलं ।

तत्राह मनुः।

अतिथिं पूजयेद्यस्तु श्रान्तं वा दृष्टमागतं।
सवत्सं गोशतं तेन दत्तं स्यादिति मे मतिः॥

विष्णुरपि।

स्वाध्यायेनाग्निहोत्रेण यज्ञेन तपसा तथा।
नावाप्नोति गृही लोकान् यथा त्वतिथिपूजनात॥

आदित्यपुराणे।

अतिथिः पूजितो यस्तु ध्यायते मनसा शुभं।
तन्नु क्रतुशतेनापि फलमाहुर्मनीषिणः॥

महाभारते।

अन्नं हि दत्वातिथये[१] ब्राह्मणाय यथाविधि।
प्रदाता सुखमाप्नोति देवैश्चापि प्रपूज्यते॥

शिवरहस्ये।

नित्यं ददाति यश्चान्नमतिथिभ्यः सुसंस्कृतं[२]।
स याति ब्रह्मसालोक्यमेवमाह पराशरः॥

अत्र महाभारतेऽतिथिधर्म्मेण वा जयलुब्धकायाविद्यमानान्नतया स्वशरीरायोग्यश्चातिथ्यं चिकीर्षतः कपोतकस्य वाक्यं।

देवतानामृषीणाञ्च संवादेषु पुनः पुनः।
श्रुतपूर्व्वो मया धर्म्मो महानतिथिपूजने॥
सुदूरादाशया प्राप्तः क्षुत्तृषाश्रमकर्शितः।

---

(१) अन्नं दत्त्वा त्वतिथये इति ग०।
(२) अतिथिभ्यश्च संस्कृतमिति ख०।

यः पूज्यतेऽतिथिः सम्यक् स तपः क्रतुरेव सः ॥

विष्णुधर्म्मोत्तरे ।

सततमिह नरोयः पूजनञ्चातिथीनां
जलतृणमृदुवाद्यैः सारवद्भिर्विदध्यात् ।
सुरसमितिषु पूज्यो देवतानां सदा स्याद्
भवति च नरलोके जायमानः समृद्धः ॥

इत्यतिथिपूजाफलं ।

अथातिथ्यमकुर्व्वतोदोषः कथ्यते ।

तत्र व्यासः ।

पथि श्रान्तमविज्ञातमतिथिं क्षुत्पिपासिनं ।
यो न पूजयते भक्त्या तमाहुर्ब्रह्मघातकं ॥

अयञ्च ब्रह्महत्यातुल्यः प्रत्यवायः सत्यां शक्तावत्यन्तपात्रीभूतस्यातिथेरतिक्रमे विज्ञेयः ।

तथा आदित्यपुराणे ।

पात्रन्त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
आदत्ते सुकृतं तस्य पातकञ्च प्रयच्छति ॥

विष्णुधर्म्मोत्तरे ।

वैश्वदेवे तु सम्प्राप्ते न कञ्चिदवमानयेत् ।
आदाय सुकृतं याति भग्नाशस्त्वतिथिर्गतः ॥

मार्कण्डेयपुराणे ।

अतिथिर्य्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स दत्त्वा दुष्कृतं तस्य पुण्यमादाय गच्छति ॥

'तस्य' गृहमेधिनः, स्वकीयं दुष्कृतं दत्त्वा तदीयं पुण्यमादाय गच्छति ।

देवलोऽपि ।

अतिथिर्गृहमभ्येत्य यस्य प्रतिनिवर्त्तते ।
असंस्कृतनिराशस्य स सद्यो हन्ति तत्कुलं ॥

आह मनुः ।

आसनाशनशय्याभिरद्भिर्मूलफलेन वा ।
नास्य कश्चिद्वसेद्गेहे शक्तितोऽनर्चितोऽतिथिः ॥

मनु-विष्णु-शातातपाः ।

येषामनश्नन्नतिथिर्विप्राणां व्रजते गृहात् ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वं प्रतिपेदिरे ॥
यस्य चैव गृहे विप्रो वसेत्कश्चिदभोजितः ।
न तस्य पितरो देवाः हव्यं कव्यञ्च भुञ्जते ॥
अतिथिर्य्यस्य वै ग्रामे भिक्षमाणः प्रयत्नतः ।
स चेन्निरसितस्तत्र ब्रह्महत्या विधीयते ॥
अपि शाकम्पचानस्य शिलोञ्छेनापि जीवतः ।
स्वदेशे परदेशे वा नातिथिर्विमना भवेत् ॥

विष्णुपुराणे ।

देवातिथौ तु विमुखे गते यत्पातकं नृप ।
तदेवाष्टगुणं पुंसां सूर्य्योढ़े विमुखे गते ॥

इत्यातिथ्यमकुर्व्वतो दोषनिरूपणं ।

अथ श्राद्धकालागतस्यातिथेः श्राद्धपङ्क्तौ भोजनीयत्वमुच्यते ।

तत्राह मनुः ।

ब्राह्मणं भिक्षुकं वापि भोजनार्थमुपस्थितं ।
ब्राह्मणैरभ्यनुज्ञातः शक्तितः प्रतिपूजयेत् ॥

तत्कालागतं भिक्षुकं ब्राह्मणं भोजयेत् ब्राह्मणानुमतेन ।

यमोऽपि ।

भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ।
उपविष्टेष्वनुप्राप्तः काममन्नमपि भोजयेत् ॥

वाराहपुराणे ।

काले तत्रातिथिं प्राप्तमन्नकामं द्विजोत्तमं ।
ब्राह्मणैरभ्यनुज्ञातः काममन्नमपि भोजयेत् ॥
योगिनो विविधैः रूपैर्भवन्तीत्युपकारिणः ।
भ्रमन्तः पृथिवीमेतामविज्ञातस्वरूपिणः ॥
तस्मादभ्यर्चयेत् प्राप्तं श्राद्धकालेऽतिथिं बुधः ।
श्राद्धक्रियाफलं हन्ति द्विजेन्द्रोऽपूजितोऽतिथिः ॥

अस्याभोजने दोषमाह शातातपः ।

अतिथिर्यस्य नाश्नाति तच्छ्राद्धं न प्रशस्यते ।
श्रुतवृत्तविहीनैश्च भुक्तमश्रोत्रियैश्च यत् ॥

एवंविधश्राद्धकर्त्तुः प्रत्यवायो भवतीत्युक्तं ।

वायुपुराणे ।

यस्तु श्राद्धेऽतिथिं प्राप्तं दैवे वाप्यवमन्यते ।
तं वै देवा निरस्यन्ति हतो यद्वत् परावसुः ॥
सर्व्वस्वेनापि तस्माद्धि पूजयेदतिथिं बुधः ।

वानप्रस्थगृहस्थौ च सतामभ्यागतौ तथा।
कालागतो यतिर्ब्रह्मचारी वातिथिसंज्ञकः॥

तमवश्यं श्राद्धे पूजयेत्। यतस्तस्यापूजितारं श्राद्धकर्त्तारं देवाः स्वर्गाल्लोकात् 'निरस्यन्ति' अपनुदन्ति। यथा होता होतृषदन उपविश्य निरस्तः परावसुरितिमन्त्रेणासुरविशेषं परावसुन्निरस्यति। अवज्ञातातिथिके श्राद्धे भोक्तृणामपि प्रत्यवायं छागलेय-वृद्धशातातपावाहतुः।

आतिथ्यरहिते श्राद्धे भुञ्जते येऽबुधा द्विजाः।
वृथा तेनान्नपाकेन काकयोनिं व्रजन्ति ते॥

लोभात् प्रमादाद्वा कथञ्चिदतिथिमवजानन्तं यजमानमतिथिधर्मोपदेशेन तत्स्वीकारमकारयतां ब्राह्मणानामयं प्रत्यवायः। एतत्त्वतिथिभोजनमतिथिलक्षणलक्षित आगते सति द्रष्टव्यं, न पुनरतिथिवर्ज्जितश्राद्धकरणे दोषश्रवणादनुपस्थितेऽपि तस्मिन् कथमप्यतिथित्वेन परिकल्प्याप्यनुष्ठेयं। स्वयं परिकल्पितस्य तल्लक्षणत्वेनातिथित्वाभावात्।

अतिथित्वरहितानान्तु क्षत्रियादीनां दूरदेशतत्कालागतत्वादिनातिथिसमानधर्म्मेण ब्राह्मणभोजनानन्तरं भोजनीयत्वमाह मनुः।

यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत्।
भुक्तवत्सु च विप्रेषु कामन्तमपि भोजयेत्॥

अत्र कामशब्दग्रहणात् भोजनं तेषामनावश्यकमिति गम्यते। यत्तु "अतिथित्वे तु वर्णानां देयं शक्त्यानुपूर्व्वशः" इति विष्णुपुराणे अतिथिधर्म्मेण सहागतानां ब्राह्मणक्षत्रियवैश्यानां ब्राह्मणक्रमेणैक पङ्क्तावेवोपवेशनं कारयित्वा भोजनं दातव्यमिति प्रतिभाति तच्छ्राद्धव्यतिरिक्तविषयमेवेति वेदितव्यं। अब्राह्मणानां श्राद्धेऽन्वयाभावात्।

यच्च पुराणे, “शेषान् वित्तानुसारेण भोजयेदन्यवेश्मनि” इति वेश्मान्तरं निमन्त्रितान्यब्राह्मणभोजनविधानतिथेः श्राद्धीयपङ्क्तिभोजनेन सह विरुद्धमिव प्रतिभाति तदपि तद्वेश्मन्यत्रकाशलाभासम्भवविषयं अतिथिव्यतिरिक्तश्राद्धोत्तरकालभोजनीयब्राह्मणविषयं वा द्रष्टव्यं । तदाप्याद्यो यः सोऽयं श्राद्धीयब्राह्मणोच्छिष्टान्तोपकरणपच एव । पचान्तरे तु वेश्मन्येवेति । अतिथिलक्षणरहितमेवालीकातिथिभावमाविष्कृत्य भोजनयाचनेन प्रकारान्तरेण श्राद्धे विघ्नकर्त्तारं प्रत्याह हारीतः ।

चतुर्णां दुष्कृतं हन्ति ब्राह्मणोविघ्नकारकः ।
अनस्यान्नपतेः पङ्क्तेर्भोजनाकाङ्क्षिणां तथा ॥

‘भोजनाकाङ्क्षिणां’ शेषान्नभोजनीयानां, श्राद्धे वा श्राद्धार्थपाकतर्पणीयानां पितृणामित्यर्थः ।

इत्यतिथेः श्राद्धपङ्क्तौ भोजनीयत्वनिरूपणं ।

अथैवमुक्तलक्षणानां ब्राह्मणानामसम्भवे न्यूनगुणैरपि श्राद्धं निर्व्वर्त्तयितुमनुकल्पोऽभिधीयते । तत्र स्थानोत्कृष्टादीनुत्कृष्टतमान् द्विजानभिधायाह मनुः ।

एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ।
अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥

‘एषः’ अनन्तरोक्तः, ‘प्रथमः’ मुख्यः, ‘कल्पः’ विधिः, ‘हव्यकव्ययोः प्रदाने’ ‘अयं’ तु वक्ष्यमाणः, ‘अनुकल्पः’ अनु पश्चात्कल्पनं इत्यनुकल्पः, मुख्याभावेऽनुष्ठीयत इत्यर्थः । पूर्व्वमुत्कृष्टतमाय देयमित्युक्तं । अतःपरं तदभावे उत्कृष्टतराय, तस्याप्यभावे उत्कृष्टाय, तस्याप्यभावे किञ्चि-

56

दुत्कृष्टाय देयमिति वक्ष्यति। तथा पूर्व्वमसम्बन्धिने देयमित्युक्तं। तदभावे सम्बन्धिभ्यो देयमित्यतःपरं वक्ष्यति। स चायमनुकल्पः सद्भिरनुष्ठित इति प्रशंसा।

ब्रह्माण्डपुराणे।

अलाभे सति भिक्षूणां भोजयेद्ध्यानिनः शुभान्।
असम्भवे तु तेषां वै नैष्ठिकान् ब्रह्मचारिणः।
तदभावेप्युदासीनं गृहस्थमपि भोजयेत्॥

'भिक्षवः' त्रिदण्डा यतयः, ध्यानिनो वानप्रस्थाः 'उदासीनः' दातुरसम्बन्धी मित्रारिभावशून्यो वा। प्रथमन्तावत् सर्व्वोत्कृष्टत्वेन भिक्षव एव ग्राह्या इति पूर्व्वमेव प्रतिपादितं। तदलाभे वानप्रस्थाः। तेषामप्यसम्भवे वेदपारगा नैष्ठिकब्रह्मचारिणः। तेषामप्यभावे पङ्क्तिपावनत्वादिगुणयुक्तगृहस्थाः।

ब्रह्मवैवर्त्ते।

योगिनः प्रथमं पूज्याः श्राद्धेषु प्रयतात्मभिः।
तदभावे वेदविदः पाठमात्रास्ततःपरं।
विनियोज्या महानेष पात्रसाध्यो विधिर्म्मतः॥

गृहस्थानामपि मध्ये 'योगिनः' ब्रह्मविदः, मुख्याः। तदभावे 'वेदविदः' वेदार्थज्ञाः। तेषामप्यभावे 'पाठमात्राः' वेदस्य पाठमात्रं ये कुर्व्वन्ति।

निरुक्तकारोऽपि वेदविदां प्रशंसामाह।

स्थाणुरयम्भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं।
योऽर्थज्ञः सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा॥

कूर्म्मपुराणे ।

स्थाणुर्भारहरो विप्रः पठन्नर्थं[१] न वेत्ति यः ।
स कथं पात्रतामेति कथमर्हति केतनं ॥
अतोविद्वत्तमायैव हव्यकव्यानि दापयेत् ।
अधीतमात्रवेदन्तु तदभावे नियोजयेत् ॥

श्रोत्रियत्वं श्रोत्रियपुत्रत्वञ्चेति मिलितमुभयं श्रैष्ठ्यहेतुतया पूर्व्वमुक्तं। इदानीमन्यतरापाये किन्न्याय्यमितिसंशये मनुराह ।

अश्रोत्रियः पिता यस्य पुत्रः स्याद्वेदपारगः ।
अश्रोत्रियो वा पुत्रः स्यात् पिता स्याद्वेदपारगः ॥
ज्यायांसमनयोर्विद्याद् यस्य स्याच्छ्रोत्रियः पिता ।
मन्त्रसम्पूजनार्थन्तु सत्कारमितरोऽर्हति ॥

एकस्य तु पिता अपठः, स्वयन्तु साङ्गवेदाध्यायी । इतरस्य तु पिता वेदपारगः, स्वयन्तु अपठः । तयोः कः श्रेयानिति संशयस्य सिद्धान्तमाह । अनयोर्द्वयोर्मध्ये यस्य पिता श्रोत्रियस्तं 'ज्यायांसं' श्राद्धयोग्यं, विद्यात् । 'इतरः' स्वयमेव यः श्रोत्रियः, सोऽपि 'मन्त्र-संपूजनार्थं' तेन ये मन्त्रा अधीताः तत्सम्माननार्थं, पूर्व्वाभावे 'सत्कारं' श्राद्धे भोजनीयत्वम् अर्हति । यस्तु श्रोत्रियगोत्रप्रसूतोऽपि वृत्तहीनो न तस्य विहिताक्रियया कुलमात्रेण श्रैष्ठ्यं ।

तदुक्तमग्निपुराणे ।

किं कुलेन विशालेन वृत्तहीनस्य देहिनः ।

---

(१) पठनार्थमिति ख० ।

क्रमयः किं न जायन्ते कुसुमेषु सुगन्धिषु॥

जातूकर्णोऽपि।

अपि विद्याकुलैर्युक्तान् वृत्तहीनान् द्विजाधमान्।

अनर्हान् हव्यकव्येषु वाङ्मात्रेणापि नार्चयेत्॥

यस्य तु कुले कश्चिद्गरीयान् गुणो न विज्ञायते न च कश्चिद्दोषोऽपि श्रूयते स्वयञ्च विद्यावृत्तसम्पन्नः सोऽपि विख्यातवंशस्य विद्वत्तमस्याभावे ग्राह्यः।

आह मनुः।

किं ब्राह्मणस्य पितरं किंवा पृच्छसि मातरं।

श्रुतञ्चेदस्ति वेद्यं वा तत् मातापितरौ स्मृतौ॥

प्रश्नवचनादेव सम्बन्धकुलदोषापरिज्ञानमवगम्यते। 'श्रुतं' शास्त्रं, 'वेद्यं' शास्त्रावबोध्यं कर्म्म, वानुष्ठेयतया यद्यस्ति तर्हि तावेव मातापितरौ किमस्य मातापितृविज्ञानेनेति। विद्यावृत्तयोर्वृत्तं ज्याय इत्याह मनुः।

गायत्रीसारमात्रोऽपि वरं विप्रः सुयन्त्रितः।

नायन्त्रितश्चतुर्व्वेदी सर्व्वाशी सर्व्वविक्रयी॥

अल्पतरविद्योऽपि स्वानुष्ठाननिष्ठः श्रेष्ठः, बहुतरविद्यो यथेष्टचेष्टो नेति वाक्यार्थः।

मत्स्यपुराणे।

सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ।

भैक्षवृत्तिक्रियार्तांश्च स राजन् केतनक्षमः॥

केतने निमन्त्रणे क्षमो योग्यः 'केतनक्षमः'।

स्कन्दपुराणे ।

सदाचारपरा नित्यं स्वल्पविद्या अपि द्विजाः ।
पितॄणान्तेऽपि कुर्व्वन्ति तृप्तिं भुक्ताः कुलोद्भवाः ॥
कुलाचारसमोपेतान् तस्माच्छ्राद्धे नियोजयेत् ।
ब्राह्मणान् नृपशार्दूल मन्दविद्याधरानपि ॥

ये स्वल्पदोषा अपि बहुगुणाः, ये च निर्व्विद्या अपि स्वानुष्ठानशीलाः, ये च सदोषा अपि प्रायश्चित्तपूतात्मानस्तेषामपि सर्व्वगुणसम्पन्नपात्रालाभेऽनुग्रह उक्तो महाभारते ।

श्राद्धे ये च विनिर्दिष्टाः[१] ब्राह्मणा भरतर्षभ ।
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहात्पुनः ॥
चीर्णव्रता गुणैर्युक्ता भवेयुर्ये च कर्षुकाः ।
सावित्रीज्ञाः[२] क्रियावन्तस्ते राजन् केतनक्षमाः ॥
क्षत्रधर्म्मिणमप्याजौ केतयेत् कुलजं द्विजं ।
नत्वेव वणिजन्तात श्राद्धेषु परिकल्पयेत् ॥
अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् ।
अस्तेयश्चातिभीरुश्च स राजन् केतनक्षमः ॥
सावित्रीं जपते यश्च द्विकालं भरतर्षभ ।
भिक्षावृत्तिः क्रियावांश्च स राजन् केतनक्षमः ॥
उदितास्तमिते होमी नित्यं कर्म्मपरायणः ।
अहिंस्रस्त्वाल्पदोषश्च[३] स राजन् केतनक्षमः ॥

---

(१) देवे च निर्द्दिष्टा इति ग० ।
() सविज्ञाना इति क० ।
(३) अहिंस्रस्त्वाल्पकोपश्चेति ख० ।

गृहस्थवृत्तिर्यश्चापि ब्राह्मणो भरतर्षभ ।
संवृत्तिः शूद्रवृत्तिश्च स राजन् केतनक्षमः ॥
अव्रती कितवः स्तेनः प्राणविक्रय्यथो वणिक् ।
पश्चाच्चेत् पीतवान् सोमं सोऽपि केतनमर्हति ॥
अर्जयित्वा धनं पूर्व्वं दारुणैः कृषिकर्म्मभिः ।
पश्चात्तपो निषेवेत स राजन् केतनक्षमः ॥
अर्जयित्वा धनं पूर्व्वं दारुणैः कृषिकर्म्मभिः ।
भवेत्सर्व्वातिथिः पश्चात् स राजन् केतनक्षमः ।

असम्बन्धिनां श्राद्धे भोजनीयत्वमभिधाय गारुड़पुराणे ।

उदासीनेष्वलब्धेषु भोज्याः सम्बन्धिनोऽपि हि ।
मातुलः श्यालयाज्यर्त्विक्शिष्याचार्य्यादयोऽपि च ॥

'मातुलः' मातुर्भ्राता। 'श्यालः' पत्नीभ्राता। 'याज्यः' यस्यार्त्विज्यं क्रियते। 'ऋत्विक्' याजकः। 'शिष्यः' अध्याप्यः। 'आचार्य्यः' वेदाध्यापकः।

आपस्तम्बः।

भोजयेद् ब्राह्मणान् ब्रह्मविदो योनिगोत्रमन्त्रान्तेवास्यसम्बन्धान् गुणहान्या तु परेषां समुदेतः सोदर्य्योऽपि भोजयितव्यः एतेनान्तेवासिनो व्याख्याताः। 'ब्रह्मविदः' वेदार्थज्ञान् अध्यात्मज्ञाननिष्ठान् वा, योन्यादिसम्बन्धरहितान् ब्राह्मणान् भोजयेत्। 'परेषां' योन्यादिसम्बन्धरहितानां, यदि वृत्तविद्यादिगुणहानिः तदा 'समुदेतः' सकलगुणोपेतः, सोदर्य्योऽपि भोजयितव्यः। किमङ्ग पुनः व्यवहितसम्बन्धाः श्याल-श्वशुर-जामातृ-मातुलादयः। 'एतेन' समुदितेन

सोदर्य्येण, 'अन्तेवासिनः' समीपवासिनः, व्याख्याताः । तेन भोजयेदित्यनुवृत्तौ गौतमः ।

शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्योगुणवतः ।

चशब्दाद्याज्याद्यांश्च द्वितीयचशब्दात्समानार्षेयांश्च । 'ऊर्द्धं त्रिभ्यः' इति मुख्यास्त्रयस्तावदसम्बन्धिन एव निमन्त्रणीयाः । असम्बन्धिभ्यस्त्रिभ्य ऊर्द्धं पङ्क्तिपावनगुणयुक्तं शिष्यादिकं भोजयेदित्यर्थः । अन्येत्वेवं व्याचक्षते । सगोत्रेषु मध्ये त्रिभ्यः पुरुषेभ्य ऊर्द्धं गुणवान् भोजनीय इति ।

अत्र वसिष्ठः ।

शिष्यानपि गुणवतो भोजयेत् ।

'गुणवतः' गुणप्रकर्षवतः । अपिशब्दादन्तेवासिनोऽपि ।

मनुकूर्म्मपुराणयोः ।

मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुं ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यांश्च भोजयेत् ॥

'मातामहः' मातुः पिता । 'स्वस्रीयः' भगिन्याः पुत्रः । 'गुरुः' उपाध्यायः । विशः प्रजाया दुहितुः पतिरिति व्युत्पत्या 'विट्पतिः' जामाता । अतिथिर्व्वा विट्पतिः । स हि गृहाभ्यागतः सन् सर्व्वासां विशां लोकनिष्ठ इति मेधातिथिः । श्राद्धीयद्विजसन्निधावतिथिर्भोजनीय इत्युक्तं । यदि तु श्राद्धे भोक्तारः प्रकृष्टगुणा न स्युः श्राद्धे एवासौ भोजनीय इत्यनुकल्पत्वं ।

बन्धुमातुलश्यालादिरसगोत्रस्तथा गुणी ।
कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिं ।

द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलं ॥

'अभिरूपमपि' विद्वांसमपीत्यर्थः। काममित्यभिधानादनुकल्पो-ऽयमिति गम्यते।

श्राद्धसम्पद इत्यनुवर्त्तमाने याज्ञवल्क्यः।

स्वस्रीयर्त्विक्जामातृयाज्यश्वशुरमातुलाः।

त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः॥

वायुपुराणे।

मातापितृपरश्चैव स्वस्रीयः सामवेदवित्।

ऋत्विक्पुरोहिताचार्य्यमुपाध्यायञ्च भोजयेत्॥

मातुलः श्वशुरः श्यालः सम्बन्धी द्रोणपाठकः।

एते श्राद्धे नियोक्तव्या ब्राह्मणा वेदपारगाः॥

मत्स्यपुराणे।

भोजयेच्चापि दौहित्रं यत्नतः श्वशुरं गुरुं।

विट्पतिमातुलबन्धुमृत्विगाचार्य्यश्यालकान्॥

गुरुरत्र शिल्पादिशास्त्रोपाध्यायः।

प्रभासखण्डे।

दौहित्रर्त्विग्जामातृस्वस्रीयाः श्वशुरस्तथा।

मातापितृपरा भोज्याः शिष्यसम्बन्धिबान्धवाः॥

त्रिणाचिकेतादीनभिधायोक्तं विष्णुपुराणे।

ऋत्विक्स्वस्रीयदौहित्रा जामातृश्वशुरास्तथा।

मातुलोऽथ तपोनिष्ठः पितृमातृस्वसुः पतिः॥

शिष्याः सम्बन्धिनश्चैव मातापितृरतस्त्र यः।

एतान्नियोजयेच्छ्राद्धे पूर्व्वोक्तान् प्रथमं नृप ।
ब्राह्मणान् पितृतुष्ट्यर्थमनुकल्पेष्वनन्तरान् ॥

पूर्व्वोक्तांस्त्रिणाचिकेतादीन् प्रथमं नियोजयेत् । एतान् ऋत्विगादीन् तदनन्तराननुकल्पेषु नियोजयेत् ।

अत्र श्राद्धधरेणोक्तं ।

कुष्ठकुणित्वादिदोषरहिताः सन्ध्योपासनमात्रगुणा एते मातुलादयोऽनुकल्पतया नियोज्याः । यदि तु विद्वांस एते भवन्ति तदा मुख्यकल्पत्वेनैवेति । तदेतस्याः कल्पनायाः किं मूलमिति न विद्मः । वयन्तु ब्रूमः । उत्कृष्टगुणोदासीनाभावे प्रतिनिधीयन्ते खल्वेते । प्रतिनिधिस्तु प्रथमन्तावत् सुसदृश एवेति तदलाभे असदृश एवेति । उत्कृष्टगुणोदासीनानामुत्कृष्टगुणा एव मातुलादयः सुसदृशा इति प्रथमतः प्रतिनिधीयन्ते(१) । तदभावे मध्यमगुणाः । तेषामप्यभावे हीनगुणा इति । एवं सति गुणवत्तरत्ववेदपारगत्वादीनि तद्विशेषणान्यपि समञ्जसानि स्युः ।

ननु यद्येते प्रतिनिधयस्तर्हि मुख्याभावे सादृश्यात् स्वयमेव प्राप्स्यन्ति इत्यनुकल्पवचनानामानर्थक्यमेव(२) स्यात् । न । पूतिकवचनवन्नियमार्थत्वोपपत्तेः । यथा सोमाभावे बहुषु सुसदृशेषु प्राप्तेषु वचनेन नियमः क्रियते, पूतिका एवाभिषोतव्या इति । एवमिहापि नियमार्थानि वचनानि भविष्यन्ति । तदुक्तं जैमिनिना "नियमार्थः क्वचिद्विधिः" इति । नियमश्चैवं अत्र यथैवोत्कृष्टगुणानामुदासीना-

---

(१) प्रथमतो विधीयन्ते इति ख० ।
(२) इत्यनुकल्पवचनमनर्थमेव इति ग० ।

नामभावे प्रथमं गुणोत्कर्षसादृश्यादुत्कृष्टगुणा मातुलादयः प्राप्ताः। एवमौदासीन्यसादृश्येन मध्यमगुणा उदासीनाः प्राप्ताः तत्र नियम्यते मातुलादय एव ग्राह्या इति। एवं च सति वक्ष्यमाणानि सम्बन्धिनमतिक्रम्य[१]वचनान्यपि नियमार्थानि स्युः। मुख्यब्राह्मणाभावे मातुलादीनतिक्रम्यान्ये न ग्राह्या इति। तत्र श्वशुरानपीति। किं पुनर्न्यायेनार्थवादत्वेन नेयं। अमूर्खानिति तु पाठे सर्व्वमनवद्यमेव। अथवा शेषमन्नमिष्टैः सह भुज्यतामिति ब्राह्मणाभ्यनुज्ञातश्राद्धोपयुक्तशेषान्नप्रतिपत्त्यर्थं यदिष्टभोजनं तद्विषयाणि मूर्खानतिक्रमवचनानि।

आह गार्ग्यः।

नैकगोत्रे हविर्दद्यात्समानप्रवरे तथा।
न चाज्ञातकुले दद्यात् यथा कन्या तथा हविः॥
अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत्।
असमप्रवराभावे समानप्रवरानपि॥

कूर्म्मपुराणे।

अभावे ह्यन्यगोत्राणां सगोत्रानपि भोजयेत्।

अत्र सगोत्रशब्देन यथैकगोत्राः असम्बन्धिनोऽनुज्ञायन्ते तथा सपिण्डसमानोदकाद्याः सम्बन्धिनोऽप्यनुज्ञायन्त इति गम्यते। तत्र विशेषमाहात्रिः।

षड्भ्यस्तु पुरुषेभ्योऽर्व्वाक् न श्राद्धीयास्तु गोत्रिणः।
भ्यस्तु परतो भोज्या श्राद्धे स्वगोत्रजा अपि॥

ये षड्भ्यः परे न भवन्ति त इहार्व्वाक्शब्देन गृह्यन्ते।

---

(१) सम्बन्धानतिक्रम्येति ख०।

ततश्च गोत्रे षट्पुरुषाः श्राद्धे न भोजनीया इति तद्वचनार्थः। गुणवतां तेषामभावे श्रुताध्ययनसम्पन्नाः सप्तमादयोऽपि भोजनीयाः। अत्र पङ्क्तिपावनानन्तरं बौधायनः।

तदभावे रहस्यविदृचो यजूंषि सामानीति श्राद्धस्य महिमा तस्मादेवंविद्यं सपिण्डमप्याशयेदिति।

'रहस्यवित्' वेदान्तार्थवित्। यस्मादृग्यजुःसामानि श्राद्धस्य 'महिमा' महत्त्वापादकानि, तस्मात् 'एवंविद्यं' ऋग्यजुःसामविदं, सपिण्डमपि भोजयेत्। तथायं सपिण्डशब्दः सप्तपुरुषमात्रविषयः। त्रिभ्य ऊर्द्धं सपिण्डानां भोजनीयत्वदर्शनात्। तदुक्तं गौतमेन।

भोजयेदूर्ध्वं त्रिभ्योगुणवन्तमिति। चतुर्थादर्व्वाञ्चस्तु न भोजनीया एव।

तदाह सुमन्तुः।

पिता पितामहश्चैव श्राद्धेषु प्रपितामहः।
पितुः पितृव्यः स्वस्रीयो न भोज्याश्च सुतादयः॥

पितुः सुतादय इति सम्बन्धः। अत्र पितृपितामहादीनामुद्दिश्यमानाधिष्ठानभूतत्वेन श्राद्धभोजनं निषिध्यते। न पुनरन्याधिष्ठानीभूतत्वेनापि पृथक् श्राद्धादिषु। "विप्रवद्वापि तं श्राद्धे स्वकं पितरमाशयेत्। पितामहो वा तत् साक्षात् भुञ्जीत श्राद्धमर्च्चित इत्यादिभिस्तेषां श्राद्धे भोजनीयत्वदर्शनात्। अत्रिस्तु पित्रादीनां गुणवत्तराणां वैश्वदेवे नियोज्यत्वमुक्तवान्।

पिता पितामहो भ्राता पुत्रो वाथ सपिण्डकः।
न परस्परमर्हाः स्युः न श्राद्धे ऋत्विजस्तथा॥

ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणाः स्मृताः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥

अतो यदापस्तम्बेन समुदेतस्य सोदर्य्यस्य भोजनीयत्वमुक्तं तदपि वैश्वदेवे इति मन्तव्यं। सगुणानामनुकल्पानामलाभे निर्गुणानामनुकल्पतया स्वीकारमाह वशिष्ठः ।

आनृशंस्यं परो धर्म्मो याचते यत् प्रदीयते ।
अयाचतः सीदमानान् सर्व्वोपायैर्निमन्त्रयेत् ॥

आनृशंस्यं पर उत्कृष्टो धर्म्मस्तेन सगुणानामभावेऽपि निर्गुणायापि याचते यत् प्रदीयते तदप्यनुकल्पो भवति अयाचतः सीदमानान् अयाचनशीलान् कुत एव कारणात् सीदतो निर्गुणानपि सगुणानामलाभे मन्त्रयेत् । सर्व्वोपायैरिति यादृशैस्ते निमन्त्रणमभ्युपगच्छन्ति तादृशैरुपायैरित्यादरेण निमन्त्रणं तदयाचनेन सीदतामलाभे याचमानाय प्रदानमिति दर्शयति। एवंविधेषु विप्रेषु सदाचारविकल्पदर्शनेऽपि निन्दा न कार्य्येत्याह स एव ।

युगे युगे तु ये धर्म्मास्तेषु धर्म्मेषु ये द्विजाः ।
तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः ॥

'युगे युगे तु ये धर्म्माः' युगानुरूपरागद्वेषादितारतम्यनिबद्धा ये ये असत्यभाषणादयो दुःस्वभावाः, 'तेषु धर्म्मेषु ये द्विजाः' तेषु दुःस्वभावेषु वर्त्तमाना ये द्विजाः, युगानुरूपविप्रेष्वपि यथासम्भवं श्रेष्ठा एव ग्राह्याः । प्रथमकल्पशक्तस्य तु अनुकल्पानुष्ठातुर्दोषमाह मनुः।

प्रभुः प्रथमकल्पस्य योऽनुकल्पे तु वर्त्तते ।
न साम्परायिकं तस्य दुर्म्मतेर्विद्यते फलं ॥

'प्रभुः' सम्पादने समर्थः। 'सम्परायः' उत्तरकालः। सम्पराय-शब्दस्य तद्वाचकताया अमरसिंहेनाभिहितत्वात्। एवं वायमर्थः। 'सम्पराये' भविष्यकाले भवं स्वर्गादिकं फलं न विद्यते इति।

इत्यनुकल्पनिरूपणं।

अथ सन्निहितब्राह्मणानतिक्रमः।

तत्र शातातप-पराशरस्मृत्योः।

सन्निकृष्टमधीयानं ब्राह्मणं यस्त्वतिक्रमेत्।
भोजने चैव दाने च दहत्यासप्तमं कुलं॥

अत्रैकग्रामनिवासिनां तुल्यगुणानां द्विजानां मध्ये स्वेच्छया आहूपर्य्याप्तेषु गृह्यमाणेषु दैवात् केषाञ्चिदतिक्रमोभवन्नपि न दोषाय भवतीति। बुद्ध्या सन्निकृष्टं ब्राह्मणं नातिक्रामेत् तं परित्यज्यान्यं नोपाददीतेत्यर्थः। यस्मादतिक्रामन् 'आसप्तमं' स्वप्रभृति सप्तमपुरुषपर्य्यन्तं स्वकुलं, 'दहति' निरयाग्निना भस्मीकरोति।

षड्त्रिंशन्मते।

सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दानेषु दहेत् त्रिपुरुषं कुलं॥

'त्रिपुरुषं' त्रिपुरुषपर्य्यन्तं। अधीतवेदस्य सन्निकृष्टस्यातिक्रमे योदोष उक्तः सोऽन्यस्यातिक्रमे नास्तीत्यर्थात् सिद्धमपि व्यास-वशिष्ठ-शातातपैर्हेतूपन्यासेन दृढ़ीकृतं।

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते॥

'वेदविवर्जिते' वेदाध्ययनरहिते विप्रेऽतिक्रान्ते अनुपात्ते सति तस्य

तदतिक्रमकृतप्रकृतप्रयोजनहानिप्रत्यवायादिरूपो न कश्चिद्दोषो जायते । यस्मान्नासौ हविःप्रतिष्ठापनयोग्यः । यथा वह्निं विहाय भस्मनि हविः प्रक्षेपयोग्यं न भवतीति दृष्टान्तः ।

भविष्यत्पुराणे ।

व्यतिक्रान्ते न दोषोऽस्ति निर्गुणं प्रति कर्हिचित् ।

द्विविधोऽत्र सन्निकृष्टः समीपगृहवासी शरीरसम्बन्धी मातुलादिश्च । ननु द्विविधस्यापि सन्निकृष्टस्यातिक्रमो निषेद्धुं न शक्यते । यस्मादसन्निकृष्टापेक्षयोत्तमस्य प्रथमकल्पत्वादेवानतिक्रमसिद्धेः समस्य तु सन्निहितातिक्रमे कारणाभावादितिन्यायादतिक्रमाप्राप्तेः । न चेयं प्राप्तिरिति वाच्यं । यत्र लाघवेन निमन्त्रितत्वात्तस्य हीनस्य त्वतिक्रमोनिषिध्यमानः सर्व्वानपि योग्यायोग्यविधिनिषेधान् बाधेत । तस्मादतिक्रमस्य निषेधोऽनुपपन्नः । अस्तु तर्हि नोद्यदादित्यवत्पर्य्युदासोऽयं व्यतिक्रमादन्यत् कर्त्तव्यमिति. किं तदन्यत् निमन्त्रणं, नैतदेवं, निषेधपक्षोक्तविकल्पदूषणैरेव निरस्तत्वात् । अतो न पर्य्युदासोऽपि सम्बन्धिषु व्यतिक्रमनिषेधस्य सम्बन्धिनिषेधानुकल्पविधिभ्यां विरोधस्यापरोदोषः । अतोऽतिक्रमनिषेधसम्बन्धिनिषेधानुकल्पविधीनामविरोधेन वक्तव्यो विषयविभागः । उच्यते । यदा सर्व्वोत्तमगुण उदासीनो न लभ्यते तदानुकल्पविधिस्तदानीमेव मध्यमगुणोदासीनग्रहणे प्राप्ते उत्तमगुणा वा मध्यमगुणा वा सम्बन्धिनः पूर्व्वं गृहीतव्याः । हीनगुणेषु तु उदासीनेषु मध्यमगुणा वा हीनगुणा वा सम्बन्धिन एव ग्राह्याः । सोऽयमतिक्रमनिषेधस्य विषयः । उक्तमधीयानस्य सन्निहितस्यातिक्रमो न कर्त्तव्यः अनधीयानस्य च कर्त्तव्य इति ।

इदानीमनधीयानस्यापि सन्निहितस्यातिक्रमो न कर्त्तव्य इत्युच्यते।

भविष्यत्पुराणे ।

अरुण उवाच ।

एवमेतज्जगन्नाथ देवदेव जगत्पते ।
किन्तु यन्मे पुरा देव श्रुतं वाक्यं महात्मनः ॥
गदतो नारदस्येह शृणु त्वं ग्रहनायक ।
गदतो मे सुरश्रेष्ठ धर्म्ममर्थं सुखावहं ॥
सन्निकृष्टं द्विजं यस्तु शुक्लजातिं प्रियम्वदं ।
मूर्खं वा पण्डितं वापि वृत्तहीनमथापि वा ॥
नातिक्रमेन्नरोविद्वान् दारिद्र्याभिहतं तथा ।
सप्तपूर्व्वान् सप्तपरान् पुरुषानात्मना सह ॥
अतिक्रम्य द्विजो घोरे नरके पातयेत् खग ।
तस्मान्नातिक्रमेत् प्राज्ञो ब्राह्मणान् प्रातिवेश्मकान् ॥
सम्बन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा ।
भागिनेयं विशेषेण तथा सम्बन्धिनः खग(१) ॥
नातिक्रमेन्नरस्त्वेतान् सुस्थितानपि गोपते ।
अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत् ॥

प्रभासखण्डे ।

सम्बन्धिनस्तथा सर्व्वान् दौहित्रं विट्पतिं तथा ।
भागिनेयं विशेषेण तथा बन्धुगणानपि ॥
नातिक्रमेन्नरस्त्वेतान् मूर्खानपि वरानन इति ।

---

(१) बन्धून् खगाधिप इ ग० ।

महाभारते ।

गायत्रीमात्रसारोऽपि ब्राह्मणः पूजितः खग ।
गृहासन्नो विशेषेण न भवेत्पतितः स चेत् ॥

यस्मिन् ब्राह्मणे गायत्रीमात्रमेव सर्व्वविद्यासारभूतं ब्राह्मण्यसारभूतं वास्ति सोऽप्यनुकल्पत्वेन श्राद्धादौ पूज्यतां प्राप्नोत्येव। यदि नामैवं-विधो भूत्वा स्वगृहप्रत्यासन्नगृहवासी भवेत्तदासौ प्रत्यासन्नत्वेन विशेषतः पूज्यतां लभते । विशेषेणेति वचनं तस्यानतिक्रमं सूचयति ।

अयन्तु भविष्यत्पुराणाद्युक्तो निर्गुणसन्निहितब्राह्मणानतिक्रमो गुण-युक्तासन्निहितब्राह्मणालाभ एव लाभे व्यतिक्रम एव ।

तथा च महाभारते ।

यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः ।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधौ ॥

'अधिकः' वेदाध्ययनवृत्तादिगुणसम्पदा ।

अधिकग्रहणाद्यदि तु समस्तदा सन्निहितातिक्रमो न कर्त्तव्य इति गम्यते ।

निशम्याथ गुणोपेतं ब्राह्मणं साधुसम्मदं ।
दूराद्गत्वा च सत्कृत्य यत्नतस्तापि पूजयेदिति ॥

सन्निहितं वेदाध्ययनवृत्तादिगुणरहितं ब्राह्मणमतिक्रम्य गुणयुक्तं दूरमपि स्थितं श्राद्धादिरूपे कर्म्मणि भोजयेदित्यर्थः ।

बौधायनोऽप्याह ।

यस्य त्वेकगृहे मूर्खो दूरे वापि बहुश्रुतः ।
बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

षट्त्रिंशन्मतेऽपि ।

यस्य लेकगृहे मूर्खो दूरतस्य गुणान्वितः ।
गुणान्विताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥

'व्यतिक्रमो नास्ति' व्यतिक्रमदोषो नास्तीत्यर्थः । 'एकगृहे' इत्यनेन चैतत् सूच्यते एवंविधे विषये अत्यन्तसन्निधिरप्यतिक्रमप्रयोजको न भवतीति । यत्तु दूरस्थे गुणाढ्ये सत्यपि सन्निहितस्य निर्गुणस्यातिक्रमो न कर्त्तव्य इत्युक्तं भविष्यत्पुराणे ।

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतिताद्दृते ।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥
तस्मात् संपूजयेदेनं गुणं तस्य न चिन्तयेत् ।
केवलं चिन्तयेज्जातिं(१) गुणान् वा विततान् खग ।
तस्मादामन्त्रयेत् पूर्व्वमासन्नं ब्राह्मणं बुधः ॥

तत् पूर्व्वोक्तबहुतरवाक्यविरोधायानतिक्रमणमध्ये सन्निहितानतिक्रमदर्शनार्थं, न तु दूरस्थगुणाद्यलाभेऽप्यनतिक्रमार्थमिति व्याख्येयं । अथवायं मूर्खानतिक्रम्य गृहप्रत्यासन्न-तत्समानाधिकरण-शरीरप्रत्यासन्नत्वविशिष्ट-ब्राह्मणविषयो वर्णनीयः । दैवविषयत्वेन वा वर्णनीयः । तत्र हि परीक्षानिषेधमुखेन गुणिनो गृहस्थस्य वक्ष्यमाणत्वात् । ईदृशी वा वचनानां व्यवस्था । यः सम्बन्धनिषेधः स पित्र्ये, यस्तानुकल्पत्वेन विधिः स वैश्वदेविके ।

तदाहात्रिः ।

---

(१) तथा न चिन्तयेज्जातिमिति ग० ।

पिता पितामहोभ्राता पुत्रो वाथ सपिण्डकः।
न परस्परमर्हाः स्युः न श्राद्धे ऋत्विजस्तथा॥
ऋत्विकपुत्रादयोऽप्येते सकुल्या ब्राह्मणा द्विजाः।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तरा इति॥

अथवा यः सम्बन्धानतिक्रमः स श्राद्धादन्यस्मिन् दैवे मानुषे वा कस्मिंश्चिदभ्युदयादिकालिके भोजने अथवा श्राद्धप्रयोगोत्तरकालिके शेषान्नप्रतिपत्तिभोजन इति सर्व्वमनवद्यं।

इति सन्निहितब्राह्मणानतिक्रमः।

अथ वर्ज्या ब्राह्मणाः।

ब्रह्मपुराणे।

इदानीं सम्प्रवक्ष्यामि वर्जनीयान् द्विजाधमान्।

महाभारते।

अत ऊर्द्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु।

'विसर्गः' विसर्जनं त्याग इति यावत्।

अत्र ग्राह्यब्राह्मणलक्षणाभिधानेनैव तदन्येषामर्थादग्रहणे सिद्धेऽपि यद्वर्जनार्थं दोषाभिधानं तत् पूर्व्वोक्तानां गुणवतामलाभे कदाचिदेतद्दोषरहितानां ग्रहणार्थं। दोषवतां ग्रहणे इन्द्रं सिद्धमपि प्रकृतकर्म्मविनाशं स्पष्टमाह सत्यव्रतः।

विधिहीने फलं किञ्चित् दुर्ब्राह्मणसुते न च।
दुर्ब्राह्मणे प्रदत्तञ्चेन्नेह नामुत्र तद्भवेत्॥

विधिना यथोक्तद्रव्यैः पुत्रेण गुणवन्तो ब्राह्मणा भोजनीया इत्याम्नातं। तत्र विधिहीनं यथोक्तद्रव्यादिहीनमपुत्रेणापि क्रियमाणं

श्राद्धं किञ्चित् फलं ददात्येव । वक्ष्यमाणे दोषदूषिते दुर्ब्राह्मणे तु भोजिते सर्व्वथा श्राद्ध विनश्यतीत्यर्थः ।

यमः ।

ऊषरे तु यथेहोप्तं वीजमाशु विनश्यति ।
तथा दत्तमनर्हेभ्यो हव्यं कव्यञ्च नश्यति ॥

'ऊषरं' क्षारमृत्तिकोद्देशः ।

महाभारते ।

यथोषरे वीजमुप्तं न रोहेन्न वास्योप्ता च प्राप्नुयाद्वीजभागं ।
एवं श्राद्धं भुक्तमनर्हमाणेन चेह नामुत्र फलं ददाति ॥

व्यासशातातपौ ।

प्रस्तरे वापितं वीजं भिन्नभाण्डे च दोहनं ।
भस्मन्यपि हुतं हव्यं तद्वद्दानमसाधुषु ॥

मनुः ।

अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हानभिज्ञानात् सोऽपि धर्म्माच्च हीयते ॥

दोषवतां ग्रहणे न केवलं प्रकृतकर्म्मविनाशः किन्तु प्रत्यवायोऽपि भवतीत्येतत् ज्ञापनमपि दोषाभिधानस्य प्रयोजनं । प्रत्यवायश्च दर्शितो वायुपुराणे ।

न श्राद्धे भोजनीयाः स्यु र्निन्दिता ब्राह्मणाधमाः ।
यैर्भुक्तं नश्यति श्राद्धं पितॄन् दातॄंश्च पातयेत् ॥

'पातयेत्' प्रत्यवायेन संयोजयेत् ।

ब्रह्मपुराणे ।

असतां प्रग्रहो यत्र सताञ्चैवावमाननं।
दण्डो दैवकृतस्तत्र सद्यः पतति दारुणः।

दक्षः।

विधिहीने तथा पात्रे यो ददाति प्रतिग्रहं।
न केवलं हि तद्याति शेषमप्यस्य नश्यति॥

विष्णुः।

यथा प्लवेनौपलेन निमज्जत्युदके नरः।
दातृप्रतिग्रहीतारौ तथैवान्यो निमज्जतः।

तथाह वशिष्ठः।

विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते।
तान्यनावृष्टिमृच्छन्ति महद्वा जायते भयं॥

'ऋच्छन्ति' प्राप्नुवन्ति।

कथञ्चिद्गुणहीना अपि दोषवन्तः पङ्क्तिपावनमिश्रिततयोपवेशिता नानर्थवहाः। "अपाङ्क्त्योपहता पङ्क्तिः पाव्यते यैर्द्विजोत्तमैः" इति मनुनाभिहितत्वात्। अतएव सुमन्तुना कथञ्चिद्गृह्यमाणानां दोषवतां पङ्क्तिपावनमिश्रणमुक्तं।

काणाः कुण्डाश्च मण्डाश्चाप्यचर्म्माणः कचैर्व्विना।
सर्व्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः॥

'काणाः' एकाक्षाः। 'कुण्डाः' चङ्क्रमणाक्षमचरणाः। 'मण्डाः' वक्रजङ्घाः। 'अचर्म्माणः' दुश्चर्म्माणः। 'कचैर्व्विना' खलतय इत्यर्थः।

काश्यपेन तु मिश्रणे विशेष उक्तः।

काणादीन् भोजयेद्दैवे श्राद्धे दाने तु वर्जयेत् ।

श्राद्धे प्रसक्तौ वैश्वदेविके भोजयेत् । दाने तु वर्जयेत् । पङ्क्ति-पावनामिश्रितेषु प्रमादाद्दोषवत्सु भोजितेषु दोषतारतम्यवशादेनसि "गुरूणि गुरूणि लघुनि लघूनीति" वचनात् यथायथं प्रायश्चित्तं विधेयं । एतच्च वीचाम्भो न च ते काणा इत्येतन्मनुश्लोकाभिप्रायं वर्णयता मेधातिथिना समुन्नेदितं । अयोग्यस्य श्राद्धे भोक्तुरपि प्रत्यवायमाहुः यम-मनु-शातातपाः ।

यावतो ग्रसते पिण्डान् हव्यकव्येष्वमन्त्रवित् ।
तावतो ग्रसते प्रेत्य दीप्तान् ऋष्टीनयोगुडान् ॥

'पिण्डान्' ग्रासान् । 'अमन्त्रवित्' वेदरहितः । 'दीप्तान्' अग्निसन्तप्तान् । 'ऋष्टिः' आयुधविशेषः । 'अयोगुडाः' अयोगोलकाः । यमः ।

देवतानां पितॄणाञ्च हव्यकव्यविनाशकः ।
विप्रोऽधर्म्मपरोमूर्खो न लोकान् प्राप्नुयात् क्वचित् ॥

तदेतत् सर्व्वमभिप्रेत्य याज्ञवल्क्येनोक्तं ।

गोभूतिलहिरण्यादि पात्रे दातव्यमर्च्चितं ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेयइच्छता ॥

वर्ज्या निरूप्यन्त इति प्रतिज्ञातं । तत्र मित्रादयस्तावत् मनुः ।

न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ।
नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजं ॥

सत्यामेव श्रोत्रियत्वादिपूर्व्वगुणसम्पदि मैत्र्यानिमित्तेन प्रतिषेधोऽयं । मनोवाक्कायैरनुकूलैकप्रवृत्तिः 'मित्रं' ।

'संग्रहः' चित्तानुरञ्जनं। 'अरिः' शत्रुः। यो रागद्वेषयोरद्वेषस्तं भोजयेत्।

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च।
तस्य प्रेत्य फलं नास्ति श्राद्धेषु च हविःषु च॥

पूर्व्वस्य प्रतिषेधस्यार्थवादोऽयं। मित्रशब्दो भावप्रधानः मैत्री-प्रधानानीत्यर्थः। 'हवींषि' हव्यानि। प्रेत्येति परलोकवाचकमव्ययं असमानकर्तृकत्वेन क्यप्प्रत्ययानुपपत्तेः।

यः सङ्गतानि कुरुते मोहात् श्राद्धानि मानवः।
स स्वर्गात् च्यवते लोकात् श्राद्धमित्रं द्विजाधमः॥

'सङ्गतानि' सख्यानि। 'मोहात्' शास्त्रार्थमजानन्। 'स्वर्गाच्यवते' स्वर्गेण न सम्बध्यत इत्यर्थः। श्राद्धं मित्रं मित्रलाभहेतुर्यस्य। द्विजग्रहणं प्रदर्शनार्थं, शूद्रेणापि मित्रीभूता ब्राह्मणा न ग्राह्या इति मेधातिथिना बहु प्रपञ्चितं।

सम्भोजनी याभिहिता पैशाची दक्षिणा द्विजैः।
इहैवास्ते तु सा लोके गौरवे चैकवेश्मनि॥

सम्भोजनी या सहभोजनी। मैत्र्या हि सहभोजनी प्रवर्त्तते।

पिशाचानामयं धर्म्मो यच्छ्राद्धे मित्रसंग्रहः।
सा दक्षिणा इहैवास्ते मित्रार्जनफला हि सा।

मित्रार्जनमात्रफला भवतीत्यर्थः।

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च।
पितृषु देवयज्ञेषु दाता स्वर्गं न गच्छति॥
श्राद्धेन यः कुरुते सङ्गतानि

न देवयानेन पथा स याति ।
विनिर्मुक्तं पिप्पलं बन्धतो वा
स्वर्गाल्लोकाद्भ्रश्यति श्राद्धमित्रः ॥

देवयानशब्दः पितृयाणस्याप्युपलक्षणं। वाशब्द उपमार्थः। 'पिप्पलं' पिप्पलफलं।

हारीतः ।

श्राद्धेन यः कुरुते सङ्गतानि
न देवयानेन पथा स याति ।
वृन्ताच्युतं पिप्पलं बन्धनाद्वा
लोकात् स्वर्गात् च्यवते श्राद्धमित्रः ॥

यमापस्तम्बौ ।

सम्भोजनी नाम पिशाचभिक्षा
नैषा पितॄन् गच्छति नोत देवान् ।
इहैव सा भ्रमति क्षीणपुण्या
शालान्तरे गौरिव नष्टवत्सा ॥

श्राद्धमधिकृत्य गौतमः ।

न च तेन मित्रकर्म्म कुर्य्यात् ।

वार्हस्पत्यसंहितायां ।

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
तस्य प्रेत्य फलं नैव स्यादित्यन्योन्यभोजनात् ॥

महाभारते ।

यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।

न प्रीणाति पितॄन् देवान् न स्वर्गं स च गच्छति ॥

यस्तु श्राद्धैः कुरुते सङ्गतानि
न देवयानेन पथा स याति ।
स वै मुक्तं पिप्पलं बन्धनाद्वा
स्वर्गाल्लोकाच्च्यवते श्राद्धमित्रः ॥
तस्मान्मित्रं श्राद्धकृन्नाद्रियेत
दद्यान्मित्रेभ्यः संग्रहार्थं धनानि ।
यं मन्यते नैव शत्रुं न मित्रं
तं मध्यस्थं भोजयेत् श्राद्धकल्पे ॥

उत्कृष्टगुणोदासीनाभावे कदाचिदुत्कृष्टगुणं मित्रं ग्राह्यं। शत्रुस्त्व-नुकल्पतयापि न ग्राह्य इत्याह मनुः ।

कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिं।
द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलं ॥

'अभिरूपं' योग्यं ।

सम्भवत्युदासीने मित्रं न ग्राह्यमेवेत्युक्तं बार्हस्पत्यसंहितायां ।

उदासीनमतिक्रम्य यः श्राद्धे मित्रमाशयेत् ।
परस्परस्य दानाद्धि तस्य नामुत्र तत्फलं ॥

वायुपुराणे ।

न भोजयेदेकगोत्रान् समानप्रवरांस्तथा ।
एतेभ्यो हि हविर्दत्तं भुञ्जते न पितामहाः ॥

कूर्मपुराणे ।

न श्राद्धे भोजयेद्विप्रान् सगोत्रान् ब्राह्मणान् क्वचित् ।

सगोत्रैर्हि हविर्भुक्तमिहैव परिवर्त्तते ॥

ब्रह्माण्डपुराणे ।

न भोज्या योनिसम्बन्धा गोत्रसम्बन्धिनस्तथा ।
मन्त्रान्तेवासिसम्बन्धाः श्राद्धे विप्राः कदाचन ॥

ब्रह्मवैवर्त्ते ।

शिष्याश्च ऋत्विजो याज्याः सुहृदः शत्रवस्तथा ।
श्राद्धेषु श्वसुरः श्यालो न भोज्या मातुलादयः ॥

इति मित्रादयः ।

अथानधीयानादयः ।

तत्र मनु-व्यास-यमाः ।

ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥

यथा स्तेनादयः पङ्क्तिदूषकाः, एवमनधीयानस्तत्कल्पदोष इत्येवमर्थं पुनर्वचनं । यथा तृणाग्निर्न शक्नोति हवींषि पक्तुं कृतमात्रे च हविषि 'शाम्यति' क्षीणशक्तिर्भवति, एवमनधीयानोमूर्खः ।

यथेरिणे बीजमुप्त्वा न वप्ता लभते फलं ।
तथानृचे हविर्दत्त्वा न दाता लभते फलं ॥

'इरिणं' ऊषरं । 'अनृचे' वेदरहिते ।

शातातपः ।

नाविद्वत्सु प्रदेयन्तु हव्यं वा कव्यमेव च ।

महाभारते ।

यथा प्रशान्ते ज्वलने जुहोति
तन्नैव देवाश्च पितृनुपैति ।
तथा दत्तं नृत्यते गायते च
याश्चानृचे दक्षिणामावृणेढ़ि ॥
उभौ हिनस्ति न भुनक्ति चैषा
या चानृचे दक्षिणा दीयते वै ।
अथायनीगर्त्तमेषा पतन्ती
तेषां प्रेतान् पातयेद्देवयानात् ॥

'उभौ' दातृ-भोक्तारौ । 'न भुनक्ति' न पालयति । 'अयनी' पापगतिः ।

कूर्म्मपुराणे ।

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषं ।
स वै दुर्ब्राह्मणो नार्हः श्राद्धादिषु कदाचन ।

व्यासः ।

सन्ध्याहीने व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतं ॥

विष्णुः ।

न वार्य्यपि प्रयच्छेत बिडालव्रतिके द्विजे ।
न वकव्रतिने पापे नावेदविदि धर्म्मवित् ॥
त्रिष्वप्येतेषु यद्दत्तं विधिनोपार्जितं धनं ।
दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥

यमः ।

अव्रतानाममन्त्राणां जातिमात्रोपजीविनां ।
नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलां ॥

तथा ।

राजधानी यथा शून्या यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे ॥

वायुपुराणे ।

प्राह वेदान् वेदभृतो वेदाद्यश्चोपजीवति ।
उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ॥

वेदप्राप्तये दत्तवेतनः 'वेदभृतः' । 'वेदोपजीवनं' घटिकाध्ययनादिद्रव्यग्रहणं ।

महाभारते ।

अनुयोक्ता च यो विप्रो योऽनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥
यस्मादेशपूर्व्वकं हि स्वाध्यायमात्मनोऽब्रवीत् ।
वेदविक्रयिणो ह्येते नैतान् श्राद्धेषु भोजयेत् ॥

अमुं वर्गममुमध्यायं पठेत्यादिष्टाः सन्तो येऽधीयते ते दत्तानुयोगाः ।

ये कुर्व्वन्ति यदश्नन्ति जुह्वते ददते च यत् ।
विधिवत्तेन पापेन महच्छ्वभ्रं पतन्ति ते ॥
अभोजनीयास्ते सद्भिस्ते चाभोज्यास्तथा स्मृताः ।
तेभ्यो दाता च भोक्ता च महादोषानवाप्नुयात् ॥
स्वकर्मकुलशुद्धानां सत्यस्थानां महात्मनां ।

संमत्त्वव्यवहार्य्यास्ते[1] स्त्रीशूद्रकृतनिश्चयाः ॥
असंस्कृताध्यापकाश्च भृतकाध्यापकाश्च ये ।
तमोविशन्ति ते घोरमिति वैवस्वतोऽब्रवीत् ॥

सौरपुराणे ।

वेदान् ये निगदन्तीह लोभान्मोहात् फलार्थिनः ।
ब्रह्मविक्रयिणस्ते वै श्राद्धकर्मणि वर्जिताः ॥

यमः ।

न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः ।
शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥

इत्यनधीयानादयः ।

अथ शरीरदोषिणः ।

तत्र वसिष्ठः ।

भोजयेद्दुर्नग्न-शुक्ल-विक्लव-श्यावदन्त-कुनखि-वर्जं ।

'द्विर्नग्नः' दुश्चर्मा खलतिरित्यपरे। 'शुक्लः' श्वित्री । 'विक्लवः' कुष्ठी । 'श्यावदन्तः' स्वभावत एव कृष्णदन्तः । 'कुनखी' कुत्सितनखः ।

शङ्खलिखितौ ।

न वै दुष्टान भोजयेत् । दुश्चर्म-कुनखि-कुष्ठि-श्वित्रि-श्यावदन्ता ये चान्ये हीनातिरिक्ताङ्गास्तानपि वर्जयेत् ।

'दुश्चर्मा' गजचर्मरोगी । कुष्ठी प्रसिद्धः । 'श्वित्री' श्वेतकुष्ठवान् । 'हीनं' परिमाणतः सङ्ख्यया वा न्यूनं, 'अङ्गं' अवयवो यस्य स

---

(१) सदस्यव्यवहार्य्यास्ते इति ग० ।

'हीनाङ्गः' । एवमतिरिक्ताङ्गः । हीनत्वं चाङ्गानां स्वभावतः छेदादिना वापि भवति। तच्चोभयमपि संगृह्यते । आमन्त्रयेदित्युक्तौ कात्यायनः ।

द्विर्नग्न-शुक्ल-विक्लव-श्यावदन्त-विद्धप्रजनन-व्याधित-व्यङ्ग श्वित्रि-कुनखि-वर्जं ।

'विद्धप्रजननः' विद्धशिश्नः । 'व्याधितः' दुश्चिकित्स्यरोगः, देवलोक्तपापरोगवान्वा । 'व्यङ्गः' हीनाङ्गः ।

ब्रह्मपुराणे ।

भोक्तुं श्राद्धे न चार्हन्ति दैवोपहतचेतसः ।
षण्डोमूकश्च कुनखी खल्वाटोदन्तरोगवान् ॥
श्यावदन्तः पूतिनासः छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गलरोगी च गड़ुमान् स्फुटिताङ्गश्च सज्वरः ।
खञ्जतूवरमण्डाश्च ये चान्ये हीनरूपिणः ॥

'षण्डः' षोढा पूर्व्वोक्तलक्षणः । 'मूकः' वाग्रहितः । 'खल्वाटः' केशरहितः । 'पूतिनासः' पूतिवन्नासाच्छिरोगी । 'गलरोगी' गलगण्डादिकण्ठरोगवान् । 'गड़ुमान्' कुब्जः । 'खञ्जः' कुण्टः । 'यौवनेऽप्यजातश्मश्रुः 'तूपरः' ।

स्कन्दपुराणे ।

काणाः कुण्डाश्च मण्डाश्च खल्वाटाः श्यावदन्तकाः ।
कुनखाः कुष्ठिनश्चैव द्विर्नग्ना विद्धमेहनाः ॥
काणाः कुण्डाश्च मण्डाश्च मूकान्धबधिरा जड़ाः ।
अतिदीर्घा अतिह्रस्वा अतिस्थूला भृशं कृशाः ॥

निर्लोमानोऽतिलोमानो गौराः कृष्णा अतीव ये।
एतान्विवर्जयेत् प्राज्ञः श्राद्धेषु श्रोत्रियानपि॥
'जड़ाः' मूकमनसः।

शालङ्कायनः।

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च।
दग्धकर्णैश्च यद्भुक्तं तद्वै रक्षांसि गच्छति॥

लम्बकर्णलक्षणमाह गोभिलः।

अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च।
वर्जनीयाः प्रयत्नेन ब्राह्मणाः श्राद्धकर्म्मणि॥

हारीतः।

हनुस्थलादधः कर्णौ लम्बौ तु परिकीर्त्तितौ।
द्व्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत्॥

इति शरीरदोषिणः।

अथ निन्दिताचाराः।

व्यास-शातातपौ।

ऊषरे वापितं वीजं यच्च भस्मनि हूयते।
क्रियाहीनेषु यद्दत्तं तस्य नाशो विधीयते॥

'क्रियाहीनाः' विहितानुष्ठानशून्याः।

भविष्यत्पुराणे।

नाब्राह्मणाय दातव्यं न देयं ब्राह्मणेऽक्रिये।
न ब्राह्मणब्रुवे चैव न च दुर्ब्राह्मणे धनं॥

अब्राह्मणादीनां लक्षणान्युक्तानि संज्ञाप्रकरणे।

हारीतः ।

विक्रयी शंसते पण्यं क्रयी निन्दति तद्गुणान् ।
व्याज्योपायश्च कितवमश्राद्धेयं प्रजापतिः ।

'व्याजः' छलं, 'कितवः' धूर्त्तः ।

यमः ।

नाश्नन्ति पिशुने देवा नाश्नन्त्यनृतवादिनि ।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे ॥
न खरैरुपयातस्य न रक्तान्तरवाससः ।
द्व्यङ्गुलातीतकर्णस्य भुञ्जते पितरो हविः ॥

'पिशुनः' परदोषप्रकाशकः । 'भार्य्याजितः' भार्य्यापरतन्त्रः । 'उपपतिः' नित्यजारः । रक्तमान्तरं वासः परिधानवस्त्रं यस्य स रक्तान्तरवासाः । वेधस्थाने तालपत्रादिप्रवेशेन यस्य कर्णपाशावङ्गुलद्वयादधिकं प्रवृद्धौ स 'द्व्यङ्गुलातीतकर्णः' ।

आपस्तम्बः ।

नीलीकर्षणकर्त्ता तु नीलीवस्त्रानुधारकः ।
किञ्चिन्न तस्य दातव्यं चाण्डालसदृशो हि सः ॥

यः क्षेत्रे नीलीवीजानि निवपति स 'नीलीकर्षणकर्त्ता' ।

मनुः ।

अव्रतैर्यद्द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा ।
अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते ॥

हारीतः ।

आमपात्रे पयो यद्वद्भस्मन्येव हुतं यथा ।

त्तुद्रकर्म्मण्यवृत्तस्थे तद्वद्वित्तं प्रणश्यति ॥

यमः ।

मोहाद्दत्तानि नश्यन्ति कव्यानि च हवींषि च ।
विप्रेभ्यो भस्मभूतेभ्यो वीजानि च तथोषरे ॥

शान्ते यथाग्नौ घृतमाजुहोति
तदेव देवान्नपितॄनुपैति ।
तथा दत्तं नृत्यते गायते च
याश्चानृचे दक्षिणां वै ददाति ॥
कामं विप्रं वृत्तवन्तं नियुञ्ज्या-
न्न त्वेवमन्येभ्यस्तथा प्रदेयं ।
क्रोशत्यन्नमनृचे दीयमानं
तस्मै दत्तं यातुधाना हरन्ति ॥

तस्मात् तुल्यविशिष्टेभ्यो दानं दद्यात् प्रयत्नतः ।
विद्यातपःसमृद्धा हि तारयन्ति द्विजातयः ॥
अविवाहिकजातस्य हविर्दद्याच्च यो नरः ।
न तस्य पितरो देवाः प्रतिगृह्णन्ति तद्धविः ॥
दैवे वा यदि वा पैत्रे यत्र भुङ्क्ते तु मद्यपः ।
देवानाञ्च पितॄणाञ्च(१) दातुस्तन्नोपतिष्ठते ॥
मद्यपाय न दातव्यं दैवे पित्र्ये तथा हविः ।
तस्मै नश्यति तद्दत्तं यथा भस्मनि वै हुतं ॥
दातुस्तु छिद्यते हस्तो भोक्तुर्जिह्वा च भिद्यते ।

(१) देवतानां पितॄणाञ्चेति ग० ।

ज्वलितान् ग्रसते ग्रासान् श्राद्धन्तदनृतं भवेत् ।
मद्यपस्य निषादस्य यत्र भुङ्क्ते द्विजाधमः ॥
न तत्र भुञ्जते देवा न पिवन्ति हविस्तथा ।
वृषलीपतिभुक्तानि श्राद्धानि च हवींषि च ॥
न प्रीणन्ति पितृन् देवान् दाता स्वर्गं न गच्छति ।

हारीतः ।

वृषलीपतिभुक्तानि श्राद्धानि च हवींषि च ।
देवानां नोपतिष्ठन्ति दाता स्वर्गं न गच्छति ॥

यमः ।

ये ह्यपेताः स्वकर्म्मभ्यः स्तेनास्ते परिकीर्त्तिताः ।
कव्यं ददाति यस्तेभ्य स्तस्य तत् प्रेत्य नश्यति ॥
ज्ञानपूर्व्वन्तु यो तेभ्यः प्रयच्छन्त्यल्पमेधसः ।
पुरीषं भुञ्जते सर्व्वे शतवर्षाणि सुव्रत ॥
तस्माद्धि दातुकामेन दैवं श्राद्धञ्च सर्व्वशः ।
प्रशान्तेभ्यः प्रदातव्यं नाशान्तेभ्यः कदाचन ॥
नष्टं देवलके दत्तमप्रतिष्ठन्तु वार्द्धुषे ।
यत्तु वाणिज्यके दत्तं नेह नामुत्र तद्भवेत् ॥
भस्मनीव हुतं हव्यं दत्तं पौनर्भवे द्विजे ।
सोमविक्रयिणे विष्ठा भिषजे पूयशोणितं ।
श्लेष्मा तु पतिते चैव कृतघ्ने विषमुच्यते ॥
इतरेषु त्वपाङ्क्तेषु यथोद्दिष्टेष्वसाधुषु ।
मेदस्त्वङ्मांसमज्जादि भवति प्रतियाचितं ॥

वायुपुराणे ।

यथा दारांश्च योगच्छेत् याजयेच्चावृतोऽध्वरे ।
नार्हत्यसावपि श्राद्धं द्विजो यश्चैव नास्तिकः ॥
आत्मार्थं यः पचेदन्नं न देवातिथिकारणात् ।
नार्हत्यसावपि श्राद्धं पतितो ब्रह्मराक्षसः ॥
सदा रक्ताम्बरा ये च परिवादरताश्च ये ।
अर्थकामरता ये च न तान् श्राद्धेषु भोजयेत् ॥

महाभारते ।

अधीयानः पण्डितं मन्यमानो
योविद्यया हन्ति यशः परेषां ।
ब्रह्मन् स आचरति ब्रह्महत्यां
लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥
सर्व्वे च वेदाः सह षड्भिरङ्गैः
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्व्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नरस्य राजन् ॥
आकर्षणं शत्रुनिवर्हणं च
कृषिर्व्वाणिज्यं पशुपालनञ्च ।
शुश्रूषणञ्चाप्यगुरोरर्हेतोः
कार्य्यं नैतद्विद्यते(१) ब्राह्मणस्य ॥
एते द्विजा निन्दितमाचरन्तः

(१) क्रियते इति ख० ।

पित्र्ये च दैवे च विवर्जनीयाः ।
तान् निन्दितान् मोहवशेन गृह्णन्
महात्मना मज्जयते पितृंश्च ॥

इति निन्दिताचाराः ।

अथाश्रमवाह्याः ।

कार्ष्णाजिनिः ।

चत्वार आश्रमाः पुण्याः श्राद्धे दैवे[१] तथैव च ।
चतुराश्रमवाह्ये तु श्राद्धं नैव प्रदापयेत् ॥

प्रचेताः ।

आश्रमाद् ये वहिर्भूता द्विजरूपेण राक्षसाः ।
तेभ्यो हव्यं न दातव्यं न हि भस्मनि हूयते ॥

देवलः ।

चतुराश्रमवाह्याय दत्तं भवति निष्फलं ।

वायुपुराणे ।

यस्तिष्ठेद् वायुभक्षस्तु चतुराश्रमवाह्यतः ।
अयतिर्मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ॥

'अयतिः' असंयतेन्द्रियः ।

उग्रेण तपसा युक्तः श्रोत्रियोऽपि बहुश्रुतः ।
अनाश्रमे तपस्तेपे तं विप्रं न निमन्त्रयेत् ॥
औपपत्तिस्तथा शाक्यो नास्तिको वेदनिन्दकः ।
ध्यानिनं ये च निन्दन्ति सर्व्वे ते पङ्क्तिदूषकाः ॥

(१) दाने इति ग० ।

'औपपत्तिः' उपपत्तिवादी शुष्कतर्कः शाक्यसाहचर्य्यात्।

वृथामुण्डाश्च जटिलाः सर्व्वे कार्पटिकास्तथा।
निर्घृणान् भिन्नवृत्तांश्च[१] सर्व्वभित्तांश्च वर्ज्जयेत्॥

मुण्डजटिलकाषायान् श्राद्धे यत्नेन वर्ज्जयेत्।

कूर्म्मपुराणे।

वुद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदोजिनाः।
कार्पाटिकाः[२] पाशुपताः पाषण्डा ये च तद्विधाः॥
यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः।
न तस्य यद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदं॥
अनाश्रमी यो द्विजः स्यादाश्रमी वा निरर्थकः।
मिथ्याश्रमाश्च ये विप्रा विज्ञेयाः पङ्क्तिदूषकाः॥

आदित्यपुराणे।

अनाश्रमी तु यो विप्रो जटी मुण्डी वृथा च यः।
वृथाकर्म्मपरित्यागः श्राद्धे तं दूरतस्त्यजेत्॥

नन्दिपुराणे।

ब्रह्मज्ञानापदेशेन ये कुर्व्वन्त्यशुभं महत्।
सर्व्वकर्म्मसु वर्ज्यास्ते चाण्डाला द्विजरूपिणः॥
सर्व्वावस्था द्विजा ये ते ब्रह्मविद्यापदेशतः।
देशान्निर्व्वासनीयास्ते राज्ञा वै धर्म्मचारिणा[३]॥

पद्मपुराणे।

---

(१) निर्घृनान् विरतांश्चैव इति ग०।
(२) कापालिका इति ख०।
(३) सङ्करकारिणा इति ख०।

मिथ्यासङ्कल्पिनः सर्व्वे दुर्वृत्ता वा द्विजातयः ।
मिथ्यातत्त्वविदो वर्ज्या दाम्भिकाः सर्व्वकर्म्मसु ॥
ब्रह्मोपदेशं कुर्व्वन्ति जनानामर्थलिप्सया ।
स्वयं मूढास्तु मूढानां धूर्त्ता वै विप्रलम्भकाः ॥
ब्रह्मविक्रयिणः पापान् प्रीत्यावापि न पूजयेत् ।
वर्णाश्रमविरुद्धानां कर्म्मणां ये तु सेवकाः ॥
मुण्डान् जटिलकाषायांस्तांस्तु श्राद्धे विवर्जयेत् ।

कालिकापुराणे ।

अनाश्रमी तु यो विप्रो जटी मुण्डी वृथा च यः ।
वृथाकाषायधारी यः श्राद्धे तं दूरतस्त्यजेत् ॥
ये सन्यासापदेशेन दुरात्मानो जड़ाधमाः ।
परित्यजन्ति कर्म्माणि तेऽपि वर्ज्याः प्रयत्नतः ॥
अदृष्टतत्त्वा अपि ये कर्म्ममार्गाद्वहिः स्थिताः ।
पतितास्ते न सन्देहः सन्त्याज्याः सर्व्वकर्म्मसु ॥

विष्णुपुराणे ।

पुंसां जटाधरणमुण्डवतां वृथैव
मद्याशिनामखिलशौचविवर्जितानां ।
तोयप्रदानपितृपिण्डबहिष्कृतानां
सम्भाषणादपि नरो नरकं प्रयाति ॥

इत्याश्रमवाह्याः ।

अथ केतनानर्हाः ।

तत्र महाभारते ।

यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च ।
दैवे वाप्यथवा पित्र्ये राजन्नार्हन्ति केतनं ॥

'पतिताः' पातित्यहेतुपातकवन्तः । 'उन्मत्ताः' उन्मादरोगिणः ।

श्वित्री कुष्ठी च क्लीवश्च तथा पक्षहतश्च यः ।
अपस्मारी च यश्चान्धोराजन्नार्हति केतनं ॥

'क्लीवः' नपुंसकः । पक्षाघातरोगेण कर्म्माक्षमदेहार्द्धः 'पक्षहतः' ।

चिकित्सका देवलकाः वृथानियमधारिणः ।
सोमविक्रयिणश्चैव राजन्नार्हन्ति केतनं ॥

'देवलकाः' मूल्येन देवपूजकाः । 'वृथानियमधारिणः' दाम्भिकाः । 'सोमविक्रयिणः' सोमलताविक्रेतारः ।

गायका नर्त्तकाश्चैव प्लवका वादकास्तथा ।
कथका बोधकाश्चैव राजन्नार्हन्ति केतनं ॥

'प्लवकाः' नाटिकाः । 'बोधकाः' वैतालिकाः ।

होतारो वृषलानां ये वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च श्राद्धे नार्हन्ति केतनं ॥

ये शूद्रान् व्याकरणादिशास्त्रमध्यापयन्ति ते वृषलाध्यापकाः । एवं वृषलशिष्याः ।

येन कामात् कृतः पूर्व्वं वर्णान्तरपरिग्रहः ।
ब्राह्मणः सर्व्वविद्योऽपि राजन्नार्हति केतनं ॥

येन ब्राह्मणादिकुमारीरपरिणीय मुख्यतया वर्णान्तरपरिग्रहः कृतः ।

अनग्नयश्च ये विप्रा मृतनिर्य्यातकाश्च ये ।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनं ॥

'अनग्नयः' अनाहिताग्नयः । मूल्येन प्रेतनिर्हारकाः 'मृतनिर्य्यातकाः'। 'स्तेनाः' चौराः ।

अपरिज्ञातपूर्व्वाश्च गणपूर्व्वाश्च भारत ।
पुत्त्रिकापुत्त्रपूर्व्वाश्च श्राद्धे नार्हन्ति केतनं ॥

अपरिज्ञाताः पूर्व्वे पूर्व्वजा येषान्ते 'अपरिज्ञातपूर्व्वाः' । गणेषु सङ्घेषु पूर्व्वा मुख्याः 'गणपूर्व्वाः' । 'पुत्त्रिकापुत्त्रपूर्व्वाः' पुत्त्रिकापुत्त्रसन्तानीयाः ।

ऋणकर्त्ता च यो राजन् यश्च वार्द्धुषिको द्विजः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनं ॥

योऽनावश्यकव्ययार्थं ऋणं कुरुते सः 'ऋणकर्त्ता' । 'वार्द्धुषिकः' धान्यवृद्धिजीवी । 'प्राणविक्रयवृत्तिः' सेवकः ।

त्रिपूर्व्वः काण्डपृष्ठश्च यवनो भरतर्षभ ।
अक्रियो ब्राह्मणश्चैव श्राद्धे नार्हन्ति केतनं ॥

'त्रिपूर्व्वः' त्रिजातः । 'काण्डपृष्ठः' पूर्व्वोक्तलक्षणः । 'यवनः' यवनदेशोत्पन्नः ।

इति केतनानर्हाः ।

अथापाङ्क्त्याः ।

आह्वेशनाः ।

अथापाङ्क्त्या भवन्ति । तथा जड-बधिरान्ध-श्वित्रि-कुष्ठि-कुणि-श्यावदन्त-वार्द्धुषिक-देवलक-वणिक्षण्ढगणाभ्यन्तर-चिकित्सक-पौन-

र्भव-काण-शिल्पोपजीवि-पतित-सम्प्रयोक्तृ-कितवानृत-दाम्भिक-परपरिभाविताद्याः ।

विधिनिषेधप्रतिपत्तिमूढः 'जडः' । श्रोत्रेन्द्रियविकल्पः 'वधिरः' । अचक्षुः 'अन्धः' । श्वेतकुष्ठवान् 'श्वित्री' । 'कुष्ठी' प्रसिद्धः । कुत्सितहस्तः 'कुणिः' । स्वभावतः कृष्णदशनः 'श्यावदन्तः' । सत्यन्यस्मिन् जीविकोपाये धान्यवृद्धिजीवनः 'वार्द्धुषिकः' । मूल्येन देवतापूजको देवद्रव्यभोक्ता वा 'देवलकः' । क्रयविक्रयव्यवहारोपजीवी 'वणिक्' । 'षण्ढः' षोढा संज्ञाप्रकरणे कृतलक्षणः।'गणः' सङ्घः,ये सदैकया क्रियया जीवन्ति तेऽत्र गणशब्दवाच्याः,तदन्तर्गतश्चातुर्व्विद्योऽपि ब्राह्मणः 'गणाभ्यन्तरः'। धनार्थं रुजां प्रतिकर्त्ता 'चिकित्सकः' । धर्म्मार्थिनस्तु तस्य प्रशस्तत्वादिति मेधातिथिः । पुनःपरिणीता 'पुनर्भूः',तस्या अपत्यं पौनर्भवः' । एकेनाक्ष्णा विकलः 'काणः' । तिर्य्यक्प्रेक्षी वा 'काणः' । गृहप्रासादादिनिर्म्माणवृत्तिः 'शिल्पोपजीवी' । महापातकिसंसर्गदूषितः 'पतितः' ।'सम्प्रयोक्ता' द्यूतकारी । छद्मप्रयोक्ता 'कितवः' । असत्यवदनशीलः 'अनृतः'। लोकप्रीत्यर्थं छद्मना धर्म्मानुष्ठाता 'दाम्भिकः'। गुरुतरपातकाभियोगेन परैः परिभवं प्रापितः 'परपरिभावितः' ।

आह मनुः ।

ये स्तेनाः पतिताः क्लीवा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥
जटिलञ्चानधीयानं दुर्व्वलं कितवं तथा ।
याजयन्ति च ये पूगान् तांश्च श्राद्धे न भोजयेत् ॥
चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।

विपणेन च जीवन्तः[१] वर्ज्यास्ते हव्यकव्ययोः ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषी तथा ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापको यश्च भृतकाध्यापितश्च यः[२] ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥
अकारणात् परित्यक्ता माता पित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
आगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च कितवो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥
धनुःशराणां कर्त्ता च यश्चाग्रेदिधिषूपतिः ।
मित्रध्रुक् द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्वेदनिन्दक एव च ॥
हस्तिगोश्वोष्ट्रदमको नक्षत्रैर्य्यश्च जीवति ।

---

(१) जीवन्तीति ग० ।
(२) भृतकाध्यापितस्तथेति ख० ।

पक्षिणां पोषकोयश्च[१] युद्धाचार्य्यस्तथैव च ॥
स्रोतसां भेदकोयश्च[२] तेषाञ्चावरणे रतः ।
गृहसंवेशको दूतो वृक्षारोपक एव च ॥
श्वक्रीडी श्येनजीवी च कन्यादूषक एव च ।
हिंस्रो वृषलवृत्तिश्च गणानाञ्चैव याजकः ॥
आचारहीनः क्लीवश्च नित्ययाचनकस्तथा ।
कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च ॥
औरभ्रिको माहिषिकः परपूर्व्वापतिस्तथा ।
प्रेतनिर्य्यापकश्चैव[३] वर्ज्जनीयाः प्रयत्नतः ॥
एतान् विगर्हिताचारानपाङ्क्तेयान् द्विजाधमान् ।
द्विजातिप्रवरोविद्वान् उभयत्र विवर्ज्जयेत् ॥

'स्तेनाः' ब्राह्मणव्यतिरिक्तद्रव्यापहर्त्तारः । इतरेषान्तु पतितपदेनैवाभिधानात् । 'पतिताः' महापातकिनः । 'क्लीवः' नपुंसकः, "मा क्लैव्यं गच्छ कौन्तेय" इति लिङ्गदर्शनात् । "सत्वशून्यः क्लीवः" इति हरिहरः । नास्ति दत्तं नास्ति हुतं नास्ति परलोक इति ये स्थितप्रज्ञाः तेषां 'वृत्तिः' आचारोऽश्रद्दधानता 'नास्तिकवृत्तिः' सा वृत्तिर्य्येषां ते 'नास्तिकवृत्तयः'। उत्तरपदलोपी समासः । अथवा नास्तिक्यं वृत्तिः जीवनं येषान्त एवमुच्यन्ते । मनुग्रहणं प्रतिषेधादरार्थं । जटिलो ब्रह्मचारीति मेधातिथिः । स चानधीयानोऽप्रारब्धाध्ययनोऽत्र निषिध्यते । प्रारब्धाध्ययनस्य तु ब्रह्मचारिणो विहितत्वात् । न च सर्व्वथाध्य-

(१) पालकोयश्चेति ख० ।
(२) भेदकश्चैवेति क० ।
(३) प्रेतनिर्हारकश्चैवेति ग० ।

यनसम्बन्धस्य प्राप्तिरेव नास्ति तत्कथं प्रतिषेध इति वाच्यं। अतस्यमपि दौहित्रमित्यादिना प्राप्तिसम्भवात्। 'दुर्व्वालः' लोहितकेशः, खलतिर्व्वा दुर्व्वल इत्यन्ये पठन्ति। 'दुर्व्वलः' विकोशध्वजः, भोक्तु-मक्षमो वा। 'पूगान्' सङ्घातान्, याजयन्ति। मांसविक्रयिणः प्रसिद्धाः। 'विपणेन' लवणादिना प्रतिषिद्धेन पणेन। ग्रामस्य राज्ञो वा 'प्रेष्यः' आज्ञाकरः। 'कुनखी' कुत्सितनखः। सर्व्वकार्य्येषु यो गुरोः प्रतिषेधेन प्रातिकूल्ये वर्त्ततेऽसौ 'गुरोः प्रतिरोद्धा'। 'त्यक्ताग्निः' त्रेता-वसथ्ययोरन्यतरस्यापि परित्यक्ता। 'यक्ष्मी' राजयक्ष्मगृहीतः। आजी-वनार्थं यः पशून् रक्षति स 'पशुपालः'। सत्यधिकारे महायज्ञानु-ष्ठानरहितः 'निराकृतिः', विस्मृतवेदो वा। दुराकृतिरित्यन्ये। ब्राह्मणानां वेदस्य वा द्वेष्टा 'ब्रह्मद्विट्'। परिवेत्तृपरिवित्ती, पूर्व्वोक्त-लक्षणौ। चारणनर्त्तकगायनादयः 'कुशीलवाः'। 'अवकीर्णी' विप्लुत-ब्रह्मचर्य्यः। 'वृषली' शूद्रा, तस्याः पतिः। अदूत्न्यायं वात्र मन्यन्ते, वृषल्या एव पतिः। 'उपपतिः' जायाजारः। स चोपेक्ष्यमा-णोऽस्य गृह एव वसति। इयता धनेनेदं करोमीति वचनव्यवस्थया वेतनग्राही 'भृतकः' भृतकश्चासावध्यापकश्च 'भृतकाध्यापकः'। एवं भृतकेनाध्यापितः 'भृतकाध्यापितः'। व्याकरणादिविद्यासु शूद्रस्य शिष्यः 'शूद्रशिष्यः'। 'गुरुः' शूद्रस्यैव। अत्रोपसर्जनीभूतस्यापि शूद्रस्य सम्बन्धः। विगर्हिताचारत्वस्य सर्व्वशेषत्वात् शूद्रस्यैव च गुरुत्वं गर्हितं नान्यत्। वाचा दुष्टः 'वाग्दुष्टः' परुषानृतभाषी अभिशस्तो वा। कुण्डगोलकावुक्तलक्षणौ। गुरुरत्राचार्य्यः। असति ब्रह्महत्यादिदोष-परित्यागकारणे यो मातरं पितरमाचार्य्यं च परित्यजति। परि-

त्यागस्य शुश्रूषाद्यकरणं। 'गुरुत्यागः' तस्मिन्नध्यापनसमर्थेऽध्यापयति तत्त्यागेनान्यत्राध्ययनं। ब्राह्मैः याजनाध्यापनादिभिः, 'यौनैः कन्यादानादिभिः सम्बन्धैः, यः पतितैः सह संसर्गं गतः, संवत्सरेण पतति पतितेन सहाचरन्निति। पतितपदेनैव लब्धेऽपि संसर्गिणि वत्सरादर्व्वागपि प्रतिषेधार्थमिदं। 'आगारदाही' गृहादिदाहकः। कृत्रिमाकृत्रिमविषप्रदाता 'गरदः'। कुण्डगोलकयोरन्नमश्नाति सः 'कुण्डाशी'। 'कुण्डं' आढ़कः, तत्परिमाणान्नभोक्ता वा 'कुण्डाशी'। 'सोमं' लताविशेषं यागार्थमौषधार्थं वा योविक्रीणाति सः 'सोमविक्रयी' सोमसाधनकयागविक्रेता वा। समुद्रं उदधिं याति प्रवहणादिभिर्लङ्घयति 'समुद्रयायी'। 'वन्दी' स्तुतिपाठकः। तिलादीनां पेष्टा 'तैलकः'। साक्षित्वेऽनृतवादी 'कूटकारकः', 'कूटानां' नाणकादीनां कर्त्ता वा। पित्रा सह भागादिनिमित्तं पूर्व्वोत्तरपक्षभङ्ग्या योविवदते विरुद्धं लपते। 'कितवः' कलितप्रेक्षी अर्धद्धदृष्टिः। कातर इत्यन्ये पठन्ति। स एव शुकपक्षसदृशतारकः। 'मद्यपः' सुराव्यतिरिक्तस्यारिष्टस्य। 'पापरोगी' कुष्ठी। 'अभिशस्तः' पातकोपपातकयोः। 'दाम्भिकः' लोके प्रसिद्धः। असत्यपि तत्कारितानिश्चये। 'रसविक्रयी' विषस्य विक्रेतेति मेधातिथिः। मधुरादिरसाधिष्ठानानां गुडलवणक्षौद्रतक्रप्रभृतीनां विक्रेतेति शङ्खधरः। 'रसः' पारद इत्यपरे। अग्रेदिधिषूपतिरित्यत्र दिधिषूशब्दस्य अग्रेपदेन पतिपदेन च पृथक्सम्बन्धः। ततोऽग्रेदिधिषूरेकः दिधिषूपतिरन्यः। समासान्तर्गतस्याप्येकशब्दस्य द्वाभ्यां भिन्नप्रस्थानाभ्यामभिसम्बन्धः स्मृतिशास्त्रत्वादुपपद्यत इति समाहितं मेधातिथिना। मृतस्य भ्रातुर्भार्य्यायां धर्म्मेण नियुक्तायामपि योऽनुरागवशा-

दालिङ्गनचुम्बनादीनि कुर्य्यादसकृद् वा प्रवर्त्तते स 'दिधिषूपतिः'। जीवतस्तावत् भ्रातुर्भार्य्यायामनुरक्तः 'अग्रेदिधिषूः'। अथवा विवाहार्हायां ज्येष्ठायामनूढायां या कनीयसी परिणीयते सा 'अग्रेदिधिषूः', तस्याः पतिः 'अग्रेदिधिषूपतिः'। मित्रान् द्रुह्यतीति 'मित्रध्रुक्', मित्रकार्य्योपघातक इत्यर्थः। द्यूतं वृत्तिर्जीविका यस्य सः 'द्यूतवृत्तिः'। यो द्यूतकारान्नियोज्य तेभ्योऽन्नं लभते सोऽत्राभिधीयत इति स्वयन्देविलात् कितवेन सहापौनरुक्त्यं। पुत्रः 'आचार्य्यः' अध्यापको यस्य सः 'पुत्राचार्य्यः'। मूर्खस्याचार्य्यत्वस्य पुत्रे सम्भवात्। 'भ्रामरी' अपस्मारी। 'गण्डमाली' प्रसिद्धः। परमर्मप्रकाशकः 'पिशुनः'। वातादिदोषेण पिशाचादिगृहीतत्वेन वा अनवस्थितचित्तः 'उन्मत्तः'। हस्त्यादीनां दमनः गतिशिक्षयिता 'हस्तिगोश्वोष्ट्रदमनः'। नक्षत्रग्रहणं ज्योतिःशास्त्रोपलक्षणार्थं। 'पक्षिणां' श्येनादीनां, आखेटकार्थं पोषयिता। धनुर्व्वेदोपदेष्टा 'युद्धाचार्य्यः'। यो व्रीह्यादिसेचनार्थं स्रोतांसि भिनत्ति अनेकधा नयति। यश्चिररुद्धप्रवृद्धानां स्रोतसाङ्गतिबन्धार्थं सेतुबन्धेनावरणं करोति। 'गृहसंवेशकः' वास्तुविद्योपजीवी स्थपतिसूत्रधारादिः। यः सन्धिविग्रहादिषु प्रेष्यते सः 'दूतः'। यो मूल्येन वृक्षान् रोपयति स 'वृक्षारोपकः'। श्वभिः शुनकैः क्रीड़ति 'श्वक्रीड़ी'। श्येनानां क्रयेण जीवति 'श्येनजीवी'। यः सता असता वा दोषेण कन्यान्निन्दति सः 'कन्यादूषकः', यो मिथुनसम्प्रयोगेण कन्यामकन्यां करोति सोऽपि कन्यादूषकः। 'हिंस्रः' स्वभावत एव प्राणिघातनिरतः(१)। वृषलेभ्यः शूद्रेभ्यः सेवादिना वृत्ति-

(१) प्राणिद्रोहनिरत इति ग० ।

जीवनं यस्याऽसौ 'वृषलवृत्तिः'। गणानां देवताविशेषाणां याजकः। गणयागाः प्रसिद्धा इति मेधातिथिः। आचारः गृहाभ्यागतानां पूजासत्कारादिः, तेन वर्जितः 'आचारहीनः'। कर्त्तव्येषु भग्नोत्साहः 'क्लीवः'। सदैव याचनया लोकानुद्वेजयति सः 'नित्ययाचनकः। निन्दादिभ्यः स्वार्थे कप्। 'कृषिजीवी' यः प्रतिसिद्धया कृष्या जीवति, सा चानापदि प्रतिषिद्धा आपद्यपि स्वयं क्रियमाणा अन्यतः कार्य्यमाणापि यथोक्तविधिविरहिता प्रतिसिद्धा। कृषिविधिस्तु "राज्ञो दत्त्वा च षड्भागं देवतानाञ्च विंशकं। त्रिषड्भागञ्च विप्राणां कृषिं कृत्वा न दोषभाक्" इत्यादिः स्मृतिकारैः प्रतिपादितः। दोषवशात् स्थूलैकपादः 'श्लीपदी'। यस्य प्रत्यक्षेण दोषो न लक्ष्यते सद्भिश्च निन्द्यमानो दृश्यतेऽसौ 'सद्भिर्निन्दितः'। उरभ्राः मेषाः पण्यं यस्य स 'औरभ्रिकः'। एवं माहिषिकः। परः पूर्व्वो यस्याः सा 'परपूर्व्वा' स्वैरिण्यादिः, तस्याः पतिः 'परपूर्व्वापतिः'। यो मूल्येन प्रेतान्निर्य्यापयति वहति स 'प्रेतनिर्य्यापकः'। 'विगर्हिताचाराः' निन्दिताचाराः। 'अपाङ्क्तेयाः' पङ्क्त्यनर्हाः। 'उभयत्र' दैवे पित्र्ये च कर्म्मणि।

अत्राह सुमन्तुः।

तस्कर-कितवाजपाल-गण-गणिका-शूद्रप्रेष्यागम्यागामि-परिवेत्तृ-परिवित्ति-पर्य्याहित-पर्य्याधातृ-पौनर्भवान्ध-वधिर-चारण-क्लीवावकीर्णिवार्द्धुषिक-गरदायि-कूटसाक्षि-नास्तिक-वृषलीपत्युपकृतादोत्सृष्टाग्नि-सोमविक्रय्यविक्रेयविक्रेतृ-पौस्तिक-कथक-कुण्डाशि-कुण्डगोलकयन्त्रकार-काण्डपृष्ठ-दुश्चर्म-चण्ड-विद्धशिश्न-देवलक-षण्डारूढप-

तित-प्रायोत्थित--कुनखि-किलाश्वि-श्यावदन्त-वणिक्-शिल्पवादित्रनृत्यगीततालोपजीवि-मूल्यसांवत्सरिक-महापथिकाश्मकुट्टक-हीनातिरिक्ताङ्गा विरागवाससश्चापाङ्क्तेयाः । 'तस्करः' चौरः । आजीवनार्थमजाः पालयति 'अजपालः' । 'गणः' सङ्घः । 'गणिका' वेश्या । शूद्रः प्रसिद्धः । एतेषां 'प्रेष्यः' । शूद्रसेवकप्रतिषेधान्महापदि वर्णान्तरसेवकस्य दोषान्तररहितस्यानुज्ञावगम्यते ।

यदाह प्रचेताः ।

महदापद्गतो विप्रः क्षत्रसेवां समाश्रयेत् ।
शूद्रसेवा न कर्त्तव्या प्राणैः कण्ठगतैरपि ॥

अगम्याः परस्त्रियोगच्छतीति 'अगम्यागामी' । ज्येष्ठे भ्रातर्य्यकृताग्न्याधाने यदि कनीयानग्न्याहितः स्यात्तदासौ पर्य्याधत्तेत्युच्यते ज्येष्ठस्तु पर्य्याहित इति। एतच्च प्राग्विस्तरेण निर्णीतं। चारणोऽत्र नग्नाचार्य्यः इतस्ततः कीर्त्तिप्रचारणात् । नर्त्तकविशेषस्य तु चारणस्य नृत्योपजीविशब्देन वक्ष्यमाणत्वात् । कूटमलीकं साक्ष्यङ्करोतीति 'कूटसाक्षी' । पञ्चयज्ञानविधाय यो भुङ्क्ते सः 'उपकृताद:' । 'उत्सृष्टाग्निः' परित्यक्ताग्निः । अविक्रेयं तिलयवादि विक्रीणाति 'अविक्रेयविक्रेता' । पुस्तकलेखनकर्म्मणा जीवति इति 'पौस्तिकः', पुस्तकविक्रेता वा मूल्येन पुस्तकलेखको वा । विटजनरञ्जनाय बृहत्कथादिकथानां कथयिता 'कथकः' । आखेटनार्थं दुर्गादिषु सङ्ग्रामार्थं वा यन्त्रनिर्म्माता 'यन्त्रकारः' । शस्त्रोपजीवी 'काण्डपृष्ठः' । काण्डपृष्ठः शस्त्रजीवीतिनामानुशासनस्मरणात् । अन्ये तु काण्डस्पृष्ट इति पठन्ति। तस्य लक्षणमुक्तं प्राक् । 'दुश्चर्म्मा' दुश्चिकित्स्यत्वग्रोगी।

'चण्डः' छिन्नमेहनचर्म्मा, चण्डि वल्कापनयन इति चौरादिकोधातुः, चण्डयतीति चण्डः। विट्ठशिश्नोद्रविडेषु प्रसिद्धः। तत्र हि शिश्नवृषणाधःशिरायां छिद्रं विधाय विटाः सुवर्णघटिकाघटितं मुक्ताफलादि विरचयन्ति। त्रिदण्डादिव्रतमारुह्य तस्मात् परिभ्रष्टः 'आरूढपतितः'। सन्यासपूर्व्वकं मरणान्तिकमनशनं 'प्रायः'। "सन्यासवत्यनशने पुमान् प्रायः" इति त्रिकाण्डस्मरणात्। प्रायं परित्यज्योत्थितः। 'किलाशी' सिध्मरोगी। 'वादित्रं' आतोद्यं। 'नृत्यं' नर्त्तनं। 'गीतं' गानं। 'तालः' चञ्चत्पुटादिः, एतद्विद्याप्रावीण्येन यो जीवति। धनलिप्सया नक्षत्राद्यादेशकः 'मूल्यसांवत्सरिकः'। उक्तञ्च मनुना। "तिथिं परस्य न ब्रूयान्नक्षत्राणि न निर्द्दिशेत्" इति। 'महापथिकः' समुद्रपथचारी नित्याध्वगो वा। 'अश्मकुट्टकः' प्रासादादिनिर्म्माणाय पाषाणतक्षकः। 'हीनाङ्गाः' खञ्जादयः। 'अधिकाङ्गाः' षडङ्गुलिप्रभृतयः। विविधमाञ्जिष्ठादिरागयुक्तवाससः 'विरागवाससः', त्रिदण्डग्रहणं विना लोकवञ्चनार्थं गैरिकादिरक्तवाससो वा।

आह च यमः।

अपाङ्क्तेया द्विजास्त्वन्ये तान्मे निगदतः शृणु।
येभ्यो दत्तं न देवानां न पितॄणाञ्च कर्म्मकृत्॥
काणाः कुब्जाश्च षण्डाश्च कृतघ्ना गुरुतल्पगाः।
ब्रह्मघ्नाश्च सुरापाश्च स्तेना गोघ्नाश्चिकित्सकाः॥
राष्ट्रकामास्तथोन्मत्ताः पशुविक्रयिणश्च ये।
ग्रामकूटास्तुलाकूटाः शिल्पिनो ग्रामयाचकाः॥
वृषलीभिः प्रपीताश्च श्रेणीराजन्ययाजकाः।

राजभृत्यान्धवधिरमूकखल्वाटपङ्गवः ॥
कलोपजीविनश्चैव ब्रह्मविक्रयिणश्च ये ।
दण्डध्वजाश्च ये विप्रा ग्रामकृत्यकराश्च ये ॥
आगारदाहिनश्चैव गरदा वनदाहकाः ।
कुण्डाशिनो देवलकाः परदाराभिमर्षकाः ॥
श्यावदन्ताः कुनखिनः शिल्पिनः कुष्ठिनश्च ये ।
वणिजो मधुहन्तारो हस्त्यश्वदमका द्विजाः ॥
कन्यानां दूषकाश्चैव ब्राह्मणानाञ्च दूषकाः ।
सूचकाः पोषकाश्चैव कितवाश्च कुशीलवाः ॥
समयानाञ्च भेत्तारः प्रदाने ये च वारकाः ।
आजाविका माहिषिकाः सर्व्वविक्रयिणश्च ये ॥
वैष्णवीषु च ये सक्ताः शलाकादाहिनश्च ये ।
धनुःकर्त्ता धूतवृत्तिर्मित्रध्रुक् शठ एव च ॥
इषुकर्त्ता तथा वर्ज्यो यश्चाग्रेदिधिषूपतिः ।
पाण्डुरोगी गण्डमाली यक्ष्मी च भ्रामरी तथा ॥
पिशुनः कूटसाक्षी च दीर्घरोगी वृथाश्रमी ।
प्रव्रज्योपनिवृत्तश्च वृथाप्रव्रजितश्च यः ॥
यस्तु प्रव्रजिताज्जातः प्रव्रज्यावसितश्च यः ।
तावुभौ ब्रह्मचण्डालावाह वैवस्वतो यमः ॥
राज्ञः प्रेष्यकरो यश्च ग्रामस्य नगरस्य च ।
समुद्रयायी वार्त्ताशी केशविक्रयिणश्च ये ॥
अवकीर्णी च वीरघ्नो गुरुघ्नः पितृदूषकः ।

गोविक्रयी च दुर्बालः पूगानाञ्चैव याजकः ॥
मद्यपश्च कदर्य्यश्च सह पित्रा विवादकृत् ।
दाण्डिको बन्धुकीभर्त्ता त्यक्तात्मा दारदूषकः ॥
सद्भिश्च निन्दिताचारः(१) स्वकर्म्मपरिवर्ज्जितः ।
परिवित्तिः परिवेत्ता भृत्याचार्य्यो निराकृतिः ॥
शूद्राचार्य्यः सुताचार्य्यः शूद्रशिष्यश्च नास्तिकः ।
दुष्टस्तु दारकाचार्य्यो मानकृत्तैलिकस्तथा ॥
चौरा वार्द्धुषिका दुष्टाः परस्वानाञ्च नाशकाः ।
चतुराश्रमवाह्याश्च ये चान्ये पङ्क्तिदूषकाः ।
इत्येतैर्लक्षणैर्युक्तांस्तान् द्विजान् न नियोजयेत् ॥

'गुरुतल्पगः' गुरुभार्य्यागामी । पौरोहित्यार्थं यज्ञार्थं वा राष्ट्रं वशीकर्तुं कामयते सः 'राष्ट्रकामः' । ग्रामं कूटयति छलयतीति 'ग्रामकूटकः'। बहुभिरलीकव्यवहारैर्ग्रामद्रव्यं भक्षयतीत्यर्थः। अलीक-तुलाव्यवहारेण वञ्चयिता 'तुलाकूटः' । वृषल्या प्रणीतोऽसकृच्चुम्बितः 'वृषलीप्रणीतः'।'श्रेण्यः' सुवर्णकाराद्याः प्रकृतयः, तासां याजकः 'श्रेणी-याजकः'। कलया सुवर्णवृद्ध्या जीवतीति 'कलोपजीवी'। चतुःषष्टि-कलोपजीवी वा। ब्रह्मणो वेदस्य पुत्रस्य वा विक्रेता 'ब्रह्मविक्रयी'। जीविकार्थं ब्रह्मविद्योपदेष्टा वा। यो महापराधी राज्ञा च पदाद्यङ्कनेन कृतदण्डः सः 'दण्डध्वजः' उच्यते । मधुग्रहणाय मधुमक्षिकोपघाती 'मधुहन्ता' । 'सूचकः' परदोषज्ञानोपायप्रयोक्ता। अन्येन प्रकाशितं परदोषं पुष्णाति सम्बद्धवचनेन दृढयति । राजादिकृता व्यवस्थाः

---

(१) निन्दितश्चौर इति ख० ।

'समयाः' । अजाविकेन जीवन्तीति 'आजाविकाः' । एवं माहिषिकाः । व्यभिचारिणीपुत्रा वा । 'वैष्णवीषु' इन्द्रजालादिमायासु, 'सक्ताः' निषण्णमतयः । 'शलाका' शस्त्रं, 'दाहः' अग्निकर्म, ताभ्यां ये भैषज्यमाचरन्ति ते 'शलाकादाहिनः'। अपकारशीलः 'शठः'। 'इषुकर्त्ता' शराणां कर्त्ता । यः शास्त्राविहितेष्वाश्रमेषु वर्त्तते स 'वृथाश्रमी'। प्रव्रज्यां विधास्यामीति सङ्कल्प्य प्रव्रज्यां न कुरुते स 'प्रव्रज्योपनिवृत्तः'। यस्तु वैराग्यादिकमन्तरेणैव प्रव्रजति सः 'वृथाप्रव्रजितः'। प्रव्रजितेनोत्पादितः 'प्रव्रजिताज्जातः'। विधिवत्प्रव्रज्यां स्वीकृत्य ततः परिभ्रष्टः 'प्रव्रज्यावसितः'। वार्त्तया कृषिवाणिज्यादिरूपया वैश्यवृत्त्या यो जीवति सः 'वार्त्ताशी'। यो वा निगूढप्रचारेण सकललोकवृत्तान्तमधिगम्य राज्ञे निवेदयति सोऽपि वार्त्ताजीवनाद्वार्त्ताशी पुरुष इति लोके प्रसिद्धः । वान्ताशीति वा पाठः । तल्लक्षणमुक्तं संज्ञाप्रकरणे । 'केशविक्रयी' चामरादिविक्रेता । 'वीरघ्नः' बालहन्ता । अवीरामिव मामयमित्यस्याः श्रुतेरबालामिव मामयमिति नैरुक्तिव्याख्यानात् । 'पूगयाजकः' समानजातीयानामपि समानव्यवसायानां समूहः पूगस्तस्य याजयिता 'पूगयाजकः'। कदर्य्यलक्षणमुक्तं। अपराधप्रयोज्यदण्डाधिकृतः 'दाण्डिकः'। 'बन्धुकीभर्त्ता' पुंश्चलीपतिः। 'त्यक्तात्मा' कृतात्मघातोद्यमः। सुखसुखादिना पुरुषान्तरसंयोजनेन वा कुलस्त्रीणां दूषयिता 'दारदूषकः'। वनितान्तरानुरक्ततया पूर्वदाराणां मिथ्याभियोक्ता वा 'दारदूषकः'। भृतकाध्यापको भृतकाध्यापितो वा 'भृत्याचार्य्यः'। एवं शूद्राचार्य्यः। शिशूनामक्षरपाठको 'दारकाचार्य्यः' । धान्यभूम्यादिमानव्यवसायेन यो जीवति स 'मानकृत्' । एषु किञ्चिद्व्याख्यातं किञ्चित्सुबोधं ।

शङ्खलिखितौ ।

अनृक् तस्करो राजभृत्यो वृक्षारोपकवृत्तिर्गरदोऽग्निदः श्वागणिकः शूद्रोपाध्यायो वन्दी घाण्टिको देवलः पुरोहितो नक्षत्रादेशवृत्ति-र्ब्रह्मपुरुषो मद्यपो ब्रह्मविक्रयी कितवः कूटकारको मानुषपशुविक्र-यिणश्चेत्यपाङ्क्तेयाः ।

अनधीतवेदः 'अनृक्' । श्वगणैः चरतीति 'श्वागणिकः' । यः क्षुद्र-घण्टिकादिनिबन्धनपुरःसरेण नृत्यगीतादिना जीवति स 'घाण्टिकः' । यो वा महतीं घण्टां वादयन्नेव प्रतिगृहं भिक्षते सोऽपि 'घाण्टिकः' । गूर्जरदेशे घण्टाल इति प्रसिद्धः । यो जीवन्मुक्तवेषेण लोकं प्रता-रयन् द्रव्यमर्जयति स 'ब्रह्मपुरुषः' ।

पैठीनसिः ।

कुनखि-किलाशि-श्यावदन्ताः पित्रा विवदमानश्च यश्च स्त्रीजितः कुष्ठी क्लीबः कितवोदुर्व्वारो दुश्चर्म्मा सुरागर्भो विद्धप्रजननः पतितः पिशुनः सोमविक्रयी यज्ञवेदविक्रयी वाणिजको ग्रामयाजी मि-थ्याभिशस्तो वृषल्यामभिजातः परिवित्तिः परिविन्दानो दिधिषू-पतिः पुनर्भूपुत्रः गोलककुण्डाजाविकाश्चौरः काण्डपृष्ठः सेवकश्चेत्य-पाङ्क्तेयाः । श्राद्धे चैतान्न भोजयेन्न यज्ञकर्मणि ।

यस्य गृहे प्राधान्येन भार्य्यैव सर्व्वव्यवहारान् विधत्ते स च भीतः सन् तत्पारतन्त्र्येण वर्त्तते स 'स्त्रीजितः' ।

उक्तञ्च यमेन ।

नाश्नन्ति पितरो देवे नाश्नन्त्यनृतवादिनि ।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे इति ॥

सुरापस्त्रीगर्भसम्भूतः 'सुरागर्भः' कृतप्रायश्चित्तेन सुरापेण जनितो वा । तीर्थयात्राद्यर्ज्जितधर्मविक्रेता 'तीर्थविक्रयी' ।

शातातपः ।

अग्निष्टोमादिभिर्यज्ञैर्ये यजन्त्यल्पदक्षिणैः ।
तेषामन्नं न भोक्तव्यमपाङ्क्तेयाः प्रकीर्त्तिताः ॥

देवलः ।

देवकोशोपजीवी च नाम्ना देवलको भवेत् ।
अपाङ्क्तेयः स विज्ञेयः सर्वकर्मसु सर्वदा ॥

मनुः ।

अव्रतैर्यत् द्विजैर्भुक्तं परिवेत्त्रादिभिस्तथा ।
अपाङ्क्तेयैर्यदन्यैश्च तद्वै रक्षांसि भुञ्जते ॥

यमः ।

अपाङ्क्तेयो दहत्याशु यावत्समनुपश्यति ।
भ्रश्यते तत्फलं तेभ्यो दानञ्चापि विनश्यति ॥

भ्रश्यते तत्फलमिति काम्यस्य भ्रंशः । दानञ्चापि विनश्यतीति नित्यकर्मभ्रंशः ।

इत्यपाङ्क्तेयाः ।

अथ पङ्क्तिदूषकाः ।

शङ्खः ।

ब्राह्मणा ये विकर्मस्था वैडालव्रतिकाः शठाः ।
हीनाङ्गा ह्यधिकाङ्गाश्च विज्ञेयाः पङ्क्तिदूषकाः ॥
कुनखी श्यावदन्तश्च दुश्चर्मा वृषलीपतिः ।

कुष्ठी च राजयक्ष्मी च ब्राह्मणाः पङ्क्तिदूषकाः ॥
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥
अनध्यायेष्वधीयानाः शौचाचारविवर्ज्जिताः ।
शूद्रान्नरसपुष्टाङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥

अविहितप्रतिषिद्धकर्मानुष्ठातारो 'विकर्मस्थाः' । विस्मृतवेदास्त्यक्ताग्नयश्च 'वेदाग्न्युत्सादिनः' शूद्रदत्तस्यान्नस्य भोक्तारः 'शूद्रान्नरसपुष्टाङ्गाः' ।

हारीतः ।

चिकित्सक-वृषलप्रेष्य-कारुक-कितव-स्वक्रीडक-शकुनिजीव-मीनघातकावेष्टिक--पौंस्वल-वार्द्धुषिकाहितुण्डिक-प्रत्यवसित--भृतकाध्यापकाध्यापित-तैलिक-सूचक-नियामक-कुशीलवादीन् दैवे पित्र्ये च विवर्ज्जयेत् । नास्तिक-क्लीव-कदर्याक्रोडिनोऽनृतवादिनो जपहोमसन्ध्याशौचविवर्ज्जिताः सौव-यौन-सौवसङ्कर-सङ्कीर्णापुण्याब्राह्मणवृत्तिप्लवबन्धोपजीव-वृषलीपति-शूद्र-ग्रामयाचक-तस्कागारदाहिगरद-सोमविक्रयि-गायन-नर्त्तक-धनुःशरयोजका-ण्डगोघ्नौ नराशंसप्रघाण्टिक-नक्षत्रजीवि-महाब्धिगामि-दीर्घरोगि-महापथिकाः पतिताः पतितपुरोहितास्वानिवर्त्तमानाः पङ्क्तिदूषकाः । 'कारुकः' शिल्पी, शकुनिभिः श्येनादिभिर्ज्जीवतीति 'शकुनिजीवः' । मरणफलकङ्गीवावेष्टनं 'आवेष्टः' । आवेष्टेन पशुसंज्ञपनार्थं यो यज्ञे परिक्रीयते स 'आवेष्टिकः' । सङ्गृहीतपुंश्चलीशुल्केन यो जीवति स 'पौंस्वलः' । अहितुण्डेन दीव्यतीति 'आहितुण्डिकः' सर्पक्रीडीत्यर्थः । आश्रमा-

त्यरिच्युतः 'प्रत्यवसितः' । तैलविक्रयादिना जीवति सः 'तैलिकः' । पोतवाहकः 'नियामकः' । प्रपणस्य नेतेति यावत् । मृगयाशीलः 'आक्रीड़ी' । स्वं धनं स्वस्यायं 'सौवः' सचासौ सङ्करश्च 'सौवसङ्करः' वृत्तिसङ्कर इत्यर्थः । नृशंस एव 'नराशंसः' यो नरानाशंसति स्तौति सोऽपि 'नराशंसः' । 'महाब्धिगामी' द्वीपान्तरगन्ता । मुमूर्षुतया प्रस्थितः 'महापथिकः' । महापथात् दूरदेशान्तरादागतो वा स चाज्ञातकुलशीलत्वात्प्रतिषिध्यते । 'अनिवर्त्तमानाः' प्रायश्चित्तमकुर्वाणाः ।

विष्णुरपि ।

हीनाधिकाङ्गान् विवर्ज्जयेद्विकर्मस्थांश्च वैडालव्रतिकान् वृथालिङ्गिनो नक्षत्रजीविनो देवलकांश्चिकित्सकांश्चानूढपुत्रान् बहुयाजिनो ग्रामयाजिनः शूद्रयाजिनो व्रात्यांस्तद्याजिनः पर्वकारान् सूचकान् भृतकाध्यापकान् भृतकाध्यापितान् शूद्रान्नपुष्टान् पतितसंयुक्ताननधीयानान् सन्ध्योपासनभ्रष्टान् राजसेवकानुग्रान् पित्रा विवदमानान् पितृगुर्वग्निस्वाध्यायत्यागिनश्चेति श्राद्धे वर्जयेत् ।

ब्राह्मणाय सदा ह्येते कथिताः पङ्क्तिदूषकाः ।
एतान्विवर्ज्जयेद्यत्नात् श्राद्धकर्मणि पण्डितः ॥

'व्रात्याः' पतितसावित्रीकाः । 'पर्व्वकाराः' काण्डकाराः । उग्रश्चण्डोऽतिकोपनः इति यावत् ।

आपस्तम्बः ।

श्वित्री शिपिविष्टः परतल्पगाम्युपपुत्रः शूद्रोत्पन्नो ब्राह्मण्यामिति ।

यो विशुद्धजातीयायामपि ब्राह्मण्यां शूद्राच्छूद्रसमानात् ब्राह्मणादुत्पन्नः । शूद्रसमस्य लक्षणमुक्तं संज्ञाप्रकरणे ।

देवलः ।

गोभर्तृविश्वस्तान्नद-प्रव्रजितबन्धुमित्रघातकाः । मातृपितृपुत्रदाराग्निहोत्रत्यागिनो यज्ञापहन्ता वृषलीपतिः सोमविक्रयी व्रात्यो निःक्रियश्चेति पतिताः जारोपपतिः कुण्डगोलभर्त्ता दिधिषूपतिः । मूढभृतकाध्यापकायाज्ययाजकब्रह्मधर्मदुष्टद्रव्यविक्रयि-कदर्यवर्णसम्भेदकानार्यभ्रष्टशौचाधन्यदेवलकवार्द्धुषिकगोत्रभित्परिवित्ति-परिवेत्तृ-कृष्णपृष्ठ-काण्डपृष्ठ-निराकृत्यवकीर्णि-स्वेच्छावरेटकरणागारदाहिनः षड्विधाः क्लीबाश्चेत्युपपत्त्यनपत्यकूटोपसाक्षि-पुष्टोपघाति-स्त्रीजित-सेतुभेदक-तालावचरण-खड्गोपजीविधर्मपाठका नित्ययाचक-प्रायश्चित्तवृत्ति-धूर्त्तसाधनिकमृगयुकितव-नास्तिक-पिशुन-शवरवणिग्बन्दि-पौनर्भवात्मम्भरि-शुल्कि-समुद्रयायि-कृत्याभिचारशील-तैलिक-शास्त्रिक-वैद्यभृतक-कन्यादूषक-भ्रूणघ्न-क्रूर-कुहक-मित्रध्रुक्-दत्तापव्ययि-समयभेदक-वाग्दण्डपरुषाशक्तशिल्पिक-हस्त्यारोहाश्च बन्धकाश्चेति पातनीयकाः अष्टाभिः पापरोगैरभिभूता विकलेन्द्रिया हीनाङ्गा अधिकाङ्गाश्चेति पङ्क्तिदूषकाः । उन्मादस्त्वग्दोषो राजयक्ष्मा श्वासमधुमेहोभगन्दरमश्मरीत्यष्टौ महारोगाः । जडान्ध-काण-बधिर-कुणिः इति विकलेन्द्रियः । उभयभागक्लेदा दुष्टव्रणाः पापिष्ठतमाश्चेति ।

एते पञ्चविधाः प्रोक्ता वर्ज्जनीया नराधमाः ।
स्वसंज्ञालक्षणास्ते स्युर्विशेषश्चात्र दृश्यते ॥

तथा ।

एते दुर्ब्राह्मणाः सर्व्वे क्रमशः समुदाहृताः ।
कर्मणा योनितश्चैव देहदोषैश्च कुत्सिताः ॥
एतेषां कर्मदोषेण पतिता ये नराधमाः ।
यान्ति ते निरयान् घोरान् त्यक्ताः सद्भिरिहैव च ॥
योनिदोषेण ये दुष्टा ये च दोषैः शरीरजैः।
इहैव वर्ज्जनं तेषां भवेदनपराधिनां ॥
कृतघ्नः पिशुनः क्रूरो नास्तिकः कुहकः शठः ।
मित्रध्रुक् चेति सर्व्वेषां विशेषान्निरयालयाः ॥
सर्वे पुनरभोज्याः स्युरदानार्हाश्च कर्मसु ।
ब्रह्मभावान्निरस्ताश्च पापदोषवशानुगाः ॥

घातकशब्दो नवादिभिः सप्तभिः प्रत्येकं सम्बध्यते । मात्रादिभिश्च पञ्चभिस्त्यागिशब्दः । तत्र मातापितरौ वृद्धौ पुत्रः शिशुः दाराः साधव इति ज्ञेयम् ॥

'यज्ञापहन्ता' यज्ञविघ्नकारी, नित्यनैमित्तिकयोरकर्त्ता 'निष्क्रियः'। 'गोलस्य' वैधवेयस्य, 'भर्त्ता' पुत्रत्वेन स्वीकर्त्ता, 'गोलभर्त्ता'। मूढवर्णसम्भेदकस्तु 'अन्यगोत्रभित्'। कृष्णपृष्ठमूच्छावरेटकरणानां लक्षणानि संज्ञाप्रकरणे द्रष्टव्यानि । ब्रह्मैव धर्मोयस्य स 'ब्रह्मधर्म्मा' ब्रह्मवित्त्वव्याजेन सकलधर्मत्यागीत्यर्थः । 'अनार्य्यः' अशिष्टः । 'निकृतः' कद्मप्रयोगपरः । पृष्ठोपघाती 'पृष्ठघातकः', परोक्षे घातोपायप्रयोक्तेत्यर्थः, चमरीपुच्छच्छेत्ता वा बलीवर्दपुच्छोत्पाटनेन वाणिज्यादिकर्त्ता वा । 'तालावचरणः' तालवादकः, चरतेर्भक्षणार्थत्वात्तालफलस्य तालनि-

र्यासस्य भक्षयिता वा। श्रुतिस्मृत्यविहितानां धर्माणामध्येता 'धर्मपाठकः'। प्रायश्चित्तोपदेशलब्धेन प्रायश्चित्तप्रत्याम्नायभूतेन वा परप्रायश्चित्ताचरणलब्धेन वा द्रव्येण वृत्तिर्जीवनं यस्यासौ 'प्रायश्चित्तवृत्तिः'। 'धूर्त्तः' वञ्चकः। तुरगादिसाधनेष्वधिकृतः 'साधनिकः'। 'मृगयुः' पापर्द्धिव्यसनी। देवपित्रादिभ्योऽप्रदाय निजोदरभरणमात्रपरायणः 'आत्मम्भरिः'। 'भ्रूणघ्नः' गर्भघाती। 'कुहकः' दाम्भिकः। 'दत्तापव्ययी' परैर्दत्तस्य धनस्यासद्व्ययकर्त्ता।

यमः।

अपङ्क्तिपावनः पङ्क्त्या यावत्समनुपश्यति।
भ्रश्यते तत्फलं तस्माद्दर्शनात्तस्य दुर्मतेः॥

तथा।

यावतो ब्राह्मणान् पङ्क्त्या वीक्षते शूद्रयाजकः।
निरर्थकन्तु तत्सर्वं दातुर्दानं न संशयः॥

मनुः।

यावतः संस्पृशेदङ्गैः ब्राह्मणान् शूद्रयाजकः।
तावतां न भवेद्दातुः फलं दानस्य पौर्त्तिकम्॥

अङ्गस्पर्शोऽत्राविवक्षितः वीक्षत इति यमेनाभिधानात्। पूर्त्ते भवं 'पौर्त्तिकं' वहिर्वेदिदानोद्भवं फलं।

तथा।

अपाङ्क्त्यो यावतः पङ्क्त्यो भुञ्जानाननुपश्यति।
तावतां न फलं तेषां दाता प्राप्नोति बालिशः॥

'बालिशः' मूर्खः।

वीक्ष्यान्धो नवतेः काणः षष्टेः श्वित्री शतस्य तु ।
पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥

अन्धस्य दर्शनाभावात्तत्सन्निधानमनेन लक्ष्यते । अतो यावान् देशश्चक्षुस्ततो दृष्टिगोचरस्तावतो देशादनावृतादन्धो नोपासनीय इत्यर्थः । तत्र 'पापरोगी' कुष्ठी ।

यमः ।

षष्टिं काणः शतं षण्ढः श्वित्री यदनुपश्यति ।
शतञ्च पाण्डुरोगी च सहस्रं पतितस्तथा ॥

दूषयतीति शेषः । सङ्ख्याभेदो दोषतारतम्येन प्रायश्चित्तभेदार्थः ।

महाभारते ।

पङ्क्तिदूष्यास्तु ये राजन् कीर्त्तयिष्यामि तान् शृणु ।
कितवो भ्रूणहा यक्ष्मी परिवेत्ता निराकृतिः ॥
ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्वविक्रयी ।
आगारदाही गरदः कुण्डाशी सोमविक्रयी ॥
सामुद्रिको राजभृतस्तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।
पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ॥
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ।
परिवित्तिश्च योऽपि स्यात् दुश्चर्मा गुरुतल्पगः ॥
कुशीलवो देवलको नक्षत्रैर्यश्च जीवति ।
एतानिह विजानीयात् ब्राह्मणान् पङ्क्तिदूषकान् ॥

ब्रह्मपुराणे ।

मित्रध्रुक् कुनखी क्लीवः क्षयी श्वित्री वणिक्पथः ।
श्यावदन्तोऽथ खल्वाटः काणोऽन्धो बधिरो जडः ॥
मूकः पङ्गुः कुणिः षण्डो दुश्चर्मा व्यङ्ग-केकरौ ।
कुष्ठी रक्तेक्षणः कुब्जो वामनो विकटोऽलसः ॥
मित्रशत्रुर्दुष्कुलीनः पशुपालो निराकृतिः ।
परिवित्तिः परिवेत्ता परिवेदनिकासुतः ॥
वृषलीपतितत्पुत्रः[(१)] श्राद्धश्राद्धस्य भुग्द्विजः ।
वृषलीपुत्रसंस्कर्त्ता अनूचो दिधिषूपतिः ॥
भृतकाध्यापको यस्य भृतकाध्यापितश्च यः ।
शूद्रीसुतेभपोष्टा च मृगयुः सोमविक्रयी ॥
अभिशस्तस्तथा स्तेनः पतितो वार्द्धुषिः शठः ।
पिशुनो वेदसन्त्यागी दाराग्नित्यागनिष्ठुरः ॥
राज्ञः पुरोहितो भृत्यो विद्याहीनोऽथ मत्सरी ।
दिधिषुः किङ्करः क्रूरो मूढो देवलकस्तथा ॥
नक्षत्रसूचकश्चैव पर्वकारश्च गर्हितः ।
अयाज्ययाजकः षण्डो गर्हितोऽन्ये च येऽधमाः ;
न ते श्राद्धे नियोक्तव्या दुष्टं स्यात्पङ्क्तिदूषकाः ॥

कूर्मपुराणे ।

दुश्चर्मा कुनखी कुष्ठी श्वित्री च श्यावदन्तकः ।
मद्यपो वृषलीसक्तो भ्रूणहा दिधिषूपतिः ॥

---

(१) वृषलीपतितत्सूनुरिति ख० ।

आगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः ।
परिवेत्ता च हिंस्रश्चैव परिवित्तिर्निराकृतिः ॥
पौनर्भवः कुसीदश्च तथा नक्षत्रसूचकः ।
गीतवादित्रशूरश्च व्याधितः काण एव च ॥
हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च ।
अन्नदूषी कुण्डगोलावभिशस्तश्च देवलः ॥
मित्रध्रुक् पिशुनश्चैव नित्यं भार्यानुवर्त्तितः ।
मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च ॥
गोत्रध्रुक् भ्रष्टशौचश्च काण्डपृष्ठस्तथैव च ।
अनपत्यः कूटसाक्षी याचकोरङ्गजीवकः ॥
समुद्रयायी कृतहा तथा समयभेदकः ।
वेदनिन्दारतश्चैव विशेषात्पङ्क्तिदूषकाः ॥
सर्वे पुनरभोज्यान्नास्तथानर्हाश्च कर्मसु ।
ब्रह्माचाराभिशस्ताश्च वर्जनीयाः प्रयत्नतः ॥
शूद्रान्नरसपुष्टाङ्गः सन्ध्योपासनवर्जितः ।
महायज्ञविहीनश्च ब्राह्मणाः पङ्क्तिदूषकाः ॥
अधीननाशनश्चैव(१) स्नानमौनविवर्जितः ।
तामसो राजसश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥

इति पङ्क्तिदूषकाः

अथ प्रकीर्णकाः ।

तत्र गौतमः ।

---

(१) अधीतनाशनश्चैवेति ख० ।

न भोजयेत् स्तेन-क्लीव-पतित-तद्वृत्ति-नास्तिक-वीरहाग्रेदिधिषू-दिधिषूपति-स्त्रीग्रामयाजकाजपालोत्सृष्टाग्नि-मद्यपकुचर-कूटसाक्षि-प्रातिहा-कानुपपतिर्यस्य(१) च स-कुण्डाशिसोमविक्रय्यगारदाहि-गरदा-वकीर्णि-गणप्रेष्यागम्यागामि-हिंस्र-परिवित्ति-परिवेत्तृ-पर्याहित-पर्या-धातृ-त्यक्तात्मदुर्बलि-कुनखि-श्यावदन्त-पौनर्भव-कितवाजाप-राजप्रेष्य प्राति-रूपिक-शूद्रापति-निराकृति-विलासि-कुसीदि-वणिक्-शिल्प-जीवि-ज्याशील-वादित्र तालनृत्यगीतशीलान् पित्रा चाकामेन विभक्तां-श्चिष्यांस्रैकसगोत्रांश्च ।

तेभ्यः पतितेभ्यो वृत्तिर्यस्य सः 'तद्वृत्तिः'। 'वीरहा' राज-हन्ता । स्त्रीणां ग्रामस्य याजकः 'स्त्रीग्रामयाजकः' । प्रतिहार एव 'प्रातिहारिकः' ऐन्द्रजालिको वा । 'उपपतिर्यस्य' इति । यस्य भार्या नित्यं व्यभिचारिणीत्यर्थः । 'त्यक्तात्मा' प्राणत्यागे कृतप्रयत्नः । 'अजापः' गायत्र्यादिजपरहितः । 'प्रातिरूपिकः' द्रव्याणां कूटप्रति-कृतिकर्त्ता । 'ज्याशीलः' आयुधाभ्यासरतः । ये चानिच्छतोऽपि पितु-र्गृहाद्भागं गृहीतवन्तः ।

याज्ञवल्क्यः ।

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
भृतकाध्यापकः क्लीवः कन्यादूष्यभिशस्तकः ॥
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः ।
मातापित्रोः गुरोस्त्यागी कुण्डाशी वृषलात्मजः ।
परपूर्वापतिस्तेनः कर्मदुष्टाश्च निन्दिताः ॥

---

(१) समुपपतिर्यस्येति पाठान्तरं ।

कश्यपः ।

दारर्ग्निभ्रूणहन्तृंश्च व्यङ्गान्नक्षत्रसूचकान् ।
वर्जयेद्ब्राह्मणानेतान् सर्वकर्मसु यत्नतः ॥

नागरखण्डे ।

अनर्हा ये च निर्दिष्टास्तानेतान् शृणु वच्मि ते ।
हीनाङ्गानधिकाङ्गांश्च सर्वभक्षान्निराकृतीन् ॥
श्यावदन्तान् वृथावेदान् वेदविक्रयकारकान् ।
वेदविप्लावकान् वापि वेदशास्त्रविवर्जितान् ॥
कुनखान् रोगसंयुक्तान् दुर्नग्नान् परहिंसकान् ।
जनापवादसंयुक्तान् नास्तिकाननृतानपि ॥
वार्द्धुषिकान् विकर्मस्थान् शौचाचारविवर्जितान् ।
अतिदीर्घान् कृशान् वापि स्थूलानप्यतिलोमशान् ॥
निर्लोमान् वर्जयेच्छ्राद्धे य इच्छेत् पितृतर्पणं ।
परदाररतश्चैव तथा यो वृषलीपतिः ॥
शठोमलिम्लुचोलोभी(१) राजभृत्कूल्यवृत्तयः ।
सगोत्रायाश्च सम्भूतस्तथैकप्रवरासु च ।
कनिष्ठः प्राकृताधानः कृतोद्वाहस्त्वपङ्क्तयः ॥

तथा ।

प्रागदीक्षितोयः कनिष्ठः सन्त्यज्याग्रजसंयुजं ।
मातापितृपरित्यागी तथा च गुरुतल्पगः ॥
निर्दोषां यस्त्यजेत्पत्नीं कृतोद्वाहश्च कर्षकः ।

(१) दम्भीति ख० ।

शिल्पजीवी प्रमादी च पण्यजीवी धृतायुधः ।
एतान् विवर्जयेच्छ्राद्धे येषां न ज्ञायते कुलं ॥

वायुपुराणे ।

वर्जनीयांस्तु वक्ष्यामि गदतो मे निबोधत ।
कितवो मद्यपो यक्ष्मी पशुपालो निराकृतिः ॥
ग्रामप्रेष्यो वार्द्धुषिको गायनो वणिजस्तथा ।
आगारदाही गरदः कुण्डाशी सोमविक्रयी ॥
समुद्रयायी दुश्चर्मा तैलिकः कूटकारकः ।
पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ।
सूचकः पापकारी च यश्च मित्रेषु द्रुह्यति ॥
गणयाचनकश्चैव नास्तिको वेदवर्जितः ।
उन्मत्तः पाषण्डशठो भ्रूणहा गुरुतल्पगः ॥
भिषक्जीवी प्रेषणिकः परस्त्रीं यस्तु गच्छति ।
विक्रीणाति च यो ब्रह्म व्रतानि च तपांसि च ॥
नष्टं स्यान्नास्तिके दत्तं नेह नामुत्र तद्भवेत् ।
निक्षेपहारिणे चैव कितवे वेदनिन्दके ॥
तथा वाणिजके चैव कारुके धर्मवर्जिते ।
भस्मनीव हुतं द्रव्यं दत्तं पौनर्भवे द्विजे ॥

मत्स्यपुराणे ।

एते भोज्याः प्रयत्नेन वर्जनीयान्निबोध मे ।
पतिताभिशस्त-क्लीवान्ध-पिशुन-व्यङ्ग-रोगिणः ॥

कुनखी श्यावदन्तः श्वित्रि-कुण्ड-गोल-जटाधरान् ।
परिवित्तिर्विमुक्तात्मा मत्तोन्मत्तवकव्रताः ॥
विडालव्रत-वृत्तिघ्न-दम्भि-देवलकादयः ।
कृतघ्ना नास्तिकास्तद्वन्म्लेच्छदेशनिवासिनः ॥
त्रिशङ्कुकरवीरान्ध्राः चीनद्रविडकुङ्कणाः ।
एतांस्तु वर्जयेत् सर्वान् श्राद्धकालेषु धर्मवित् ॥

सौरपुराणे ।

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान् गूर्जरांस्तथा ।
आभीरान् कौङ्कणांश्चैव द्राविडान् दक्षिणापथान् ।
आवन्त्यान् मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ॥

इति प्रकीर्णकाः ।

अथ ब्राह्मणानां हानोपादानहेतुभूतदोषगुणपरिज्ञानार्थं परीक्षोच्यते तत्र महाभारते ।

श्राद्धेषु च महाराज परीक्षेद् ब्राह्मणान् बुधः ।
कुलशीलवयोरूपैर्विद्यया विनयेन च ॥

कुलादिग्रहणं श्राद्धभोजनयोग्यतामात्रोपलक्षणार्थं ।

ब्रह्मवैवर्त्ते ।

तस्मात् परीक्षिते देयं पात्रभूते द्विजन्मनि ।
कष्टः श्राद्धविधिर्नित्यं जायतेऽसौ बहुच्छलः ॥

यतोऽयं श्राद्धविधिः 'बहुच्छलः' केनाप्यल्पतमेनापि दोषेण पराङ्मुखो भवितुमिच्छति, अतः षण्डपाषण्डवार्द्धुषिकदेवलवैडालव्रतिकत्वादिदोषनिराकरण-पूर्व्वकं वेदविद्याव्रतशीलादिमत्त्वेन पात्र-

तया परीक्षिते द्विजन्मनि श्राद्धन्देयं। तथायं विधिर्देशकालक्रिया-द्रव्यकर्तृभोक्तृगनमल्पमपि दोषमवाप्य नश्यति। तथा छलग्राहि-श्राद्धविघ्नकर्तृरक्षःसञ्चारदारभूतदुर्निवारानेकसूक्ष्मच्छिद्रवान्। अतः कष्टानुष्ठानः। अतः स पङ्क्तिपावनैस्त्रिणाचिकेतादिविशेषणयुक्तैर्योगनिष्ठैश्च निश्छिद्रः क्रियते।

तदुक्तं।

बहुच्छिद्रः पुरा प्रोक्तः पैत्रो यज्ञो महर्षिभिः।
निष्प्रत्यूहस्य निश्छिद्रो जायते योगिरक्षयेति॥

अतः पङ्क्तिपावनार्थं ब्राह्मणं परीक्षेत।

अत्र परीक्षायां मनुशातातपाभ्याङ्गुणोपदेशः क्रियते।

दूरादेव परीक्षेत ब्राह्मणं वेदपारगं।
तीर्थन्तद्धव्यकव्यानां प्रदाने सोऽतिथिः स्मृतः॥

परीक्षेत दूरादिति श्राद्धकालात् पूर्वं दूरतरे काले परीक्षेत, तत्काले हि परीक्षा क्रियमाणा ब्राह्मणस्य खेदं जनयेत्। अथवा न स्वयं साक्षात्परीक्षां कुर्वीत। किन्तु पुरुषान्तरेण कारयेत्। यथा मामयमस्मै कार्याय परीक्षत इत्येवं ब्राह्मणो नोपलक्षयेत्। अथवा दूरान्मातृतः पितृतश्च दशपुरुषं त्रिपुरुषं वा वेदपारगत्वं परीक्षेत। अथ पितृवंशे मातृवंशे च दश त्रयो वा पुरुषा वेदपारगत्वेन विख्याताः स्वयं च वेदपारग इत्येवंविधा परीक्षा श्राद्धेऽवश्यं विधेयेत्यर्थः। अतएव दशोभयतः श्रोत्रिया इति हारीतव्यासाभ्यामुक्तं।

मातापित्रोर्यस्य वंश्याः श्रोत्रिया दश पूरुषाः।
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा॥

शङ्खलिखितावप्याहतुः ।

यस्य दशपुरुषाः मातृपितृवंश्याः श्रोत्रिया ज्ञायन्ते विद्वांसः स्नातकाश्चेति पङ्क्तिपावना भवन्तीति ।

दशपुरुषानवगतौ पुरुषत्रयपरीक्षापि च्छागलेयेनोक्ता ।

सर्व्वलक्षणसंयुक्तं विद्याशीलं गुणान्वितं ।
पुरुषत्रयविख्यातं सर्व्वं श्राद्धे प्रकल्पयेदिति ॥

वेदविहितकर्म्मवेदनं 'वेदः', तस्य पारः समाप्तिस्तं गच्छति स 'वेदपारगः' इति मेधातिथिः । अतो मन्त्रसंहिताब्राह्मणमात्राध्यायी श्रोत्रियशब्दवाच्यो वेदपारगः । वेदपारगग्रहणं पङ्क्तिपावनगुणानामुपलक्षणार्थं । तीर्थं तद्धव्यकव्यानामिति 'तीर्थं' तीर्थमिव । यथा तीर्थेनावतरणमार्गेणोदकार्थिनोगच्छन्त उदकं लभन्ते, एवं तादृग्विधब्राह्मणगतानि हव्यकव्यानि पितॄन् प्राप्नुवन्तीत्यर्थः । प्रदाने सोऽतिथिःरिति प्रसङ्गादिदमुच्यते । स एवंविधोब्राह्मणोन्यस्मिन्नधिप्रकृष्टे गोभूमितिलहिरण्यादिदानेऽतिथिर्भवति । यथातिथये स्वयमुपस्थिताय निर्व्विचिकित्सतया दत्तमन्नं महाफलमेवमीदृशाय ब्राह्मणाय हव्यकव्ये निर्व्विकल्पे दत्ते महाफले भवत इत्यर्थः ।

ब्रह्माण्डपुराणे ।

दूरादेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
इष्टान् वा यदि वानिष्टांस्तांस्तु तत्कालमानयेत् ॥

'इष्टान्' मित्राणि, 'अनिष्टान्' शत्रून् । पूर्व्वमेव दूरतरकाले परीक्षितानां तेषामानयनं तत्काले कर्म्मकाले कर्त्तव्यम् ।

यमस्मृतौ ।

दूरादेव परीक्षेत ब्राह्मणांश्चरितव्रतान् ।
स्थविरान् तपस्विनो दान्तानिष्टान्वा यदि वेतरान् ॥

तथा ।

पूर्व्वमेव परीक्षेत ब्राह्मणान् वेदपारगान् ।
शरीरप्रभवैर्दोषैर्विशुद्धांश्चरितव्रतान् ॥

'पूर्व्वं' श्राद्धदिनात् प्रागेव । 'शरीरदोषाः' काणत्वकुणित्वादयः । 'व्रतानि' ब्रह्मचर्य्यादीनि ।

यदाह देवलः ।

ब्रह्मचर्यं सत्यवचनं मधुमांसविवर्जनम् मौनमयाचनमृतुकालाभिगमनमेवमादीनि व्रतानीति ।

आह उशनाः ।

तत्रादित एवं पात्रपरीक्षा कार्या पात्रमिति शोभनस्याख्या भवति ।

ननु ब्राह्मणपरीक्षानिषेधपराण्यपि वचनानि दृश्यन्ते भविष्यत्पुराणे ।

आदित्य उवाच ।

एवमेव न सन्देहो यथा वदसि खेचर ।
ममाप्येतन्मतं वीर ब्राह्मणं न परीक्षयेत् ॥
सर्व्वदेवमयं विप्रं सर्व्वलोकमयं तथा ।
तस्मात् संपूजयेदेव न गुणं तस्य चिन्तयेत् ॥
केवलं चिन्तयेज्जातिं न गुणान् विनतात्मज ।

आह विश्वामित्रः ।

न ब्राह्मणं परीक्षेत कदाचिदपि बुद्धिमान्।
दातॄन् परीक्ष्य दत्तानि नयन्ति नरकं ध्रुवं॥
परीक्षामनुमन्येत यः प्रतिग्रहलिप्सया।
निरये कर्म्मचण्डालः पच्यतेऽसौ द्विजाधमः॥

यो दातृभिः क्रियमाणामात्मनः परीक्षां प्रतिग्रहीतानुजानीते, परीक्षध्वं मां गुणवानस्मि चेत्ततो यदभिरुचितं तत् प्रदीयतामिति। असौ कर्म्मचण्डालो नरके पच्यते ध्रुवं। तदेवं परीक्षाकर्त्तनुमन्त्रो-र्दातृप्रतिग्रहीत्रोः प्रत्यवायश्रवणं परीक्षाविधेर्विरुद्धमिति। नैष दोषः। निषेधवाक्यानां साक्षात्परीक्षणविषयत्वात्। कस्मिन् देशे जातोऽसि कीदृशन्ते कुलं किमधीषे किं श्रुतवान् असीत्येवं प्रश्नप्रतिवच-नाभ्यां यत्परीक्षणं तदेभिः प्रतिषिध्यते।

तदाह गोभिलः।

कीदृशस्त्वमिति ब्रूयात् किं वेत्सीत्यपि योद्विजः।
संवत्सरायुतं सास्रमन्धे तमसि मज्जति॥

आह गौतमः।

दाता तु यो द्विजं पृच्छेदधीतञ्च श्रुतं कुलं।
यश्च तस्मै प्रतिब्रूते तावुभावपि नारकौ॥

वृहस्पतिः।

अधीतेस्मिन्निदं दास्ये इत्युक्ते यस्तु दुर्म्मतिः।
पठेत् शास्त्राणि वेदं वा स प्रेत्य श्वाभिजायते॥

ब्रह्माण्डपुराणे।

नानुयोगोऽस्ति वेदानां योनुयुङ्क्ते स पापकृत्।

भोक्ता वेदफलाद्भ्रस्येद्दाता दानफलात्तथा ॥

भविष्यत्पुराणे।

अनुयोगेन योदद्याद्ब्राह्मणाय प्रतिग्रहं।
स पूर्व्वं नरकं याति ब्राह्मणस्तदनन्तरं ॥

अध्ययनादिविषयः प्रश्नः 'अनुयोगः'।

वेदाक्षराणि यावन्ति नियुञ्ज्यादर्थकारणात्।
तावतीर्भ्रूणहत्या वै वेदविक्रयमाप्नुयात् ॥

साक्षात्परीक्षणमन्तरेण प्रकारान्तरेण तु परीक्षायां न कश्चिद्दोषः। गुणवते दानविधानात्। गुणवत्तायाश्च परीक्षया विना दुर्ज्ञेयत्वात्।

यत्तु विष्णुधर्म्मोत्तरे।

अन्नदाने न कर्त्तव्यं पात्रावेक्षणमण्वपि।
अन्नं सर्व्वत्र दातव्यं धर्मकामेन वै द्विज ॥
सदोषेऽपि तु निर्दोषं सगुणेऽतिगुणावहं।
तस्मात् सर्व्वप्रयत्नेन देयमन्नं सदैव तु।
पित्र्ये कर्म्मणि तु प्राज्ञः परीक्षेत प्रयत्नतः ॥

एतत्तु श्राद्धव्यतिरिक्तान्नदानविषयं। श्राद्धे परीक्षाया विहितत्वात्।

तदाह मनुः।

न ब्राह्मणं परीक्षेत दैवे कर्म्मणि धर्म्मवित्।
पित्र्ये कर्म्मणि तु प्राज्ञः परीक्षेत प्रयत्नतः ॥

शङ्खः।

ब्राह्मणान्न परीक्षेत दैवे कर्मण्यतन्द्रितः ।
पित्र्ये कर्मणि संप्राप्ते युक्तमाहुः परीक्षणं ॥

अत्र ब्राह्मणपरीक्षायां शङ्खलिखितौ ।

श्राद्धे परीक्षा न दैवे ।

विष्णुः । दैवे कर्मणि ब्राह्मणं न परीक्षेत यत्नात् परीक्षेत पित्र्ये ।

अत्र ब्राह्मणपरीक्षायां गौतमः ।

हविःषु चैवं दुर्व्वालादीन् श्राद्ध एवैके ।

'हविःषु' दैवकर्मसु । बहुवचनं व्याप्त्यर्थं । केवलं पित्र्याङ्गभूते दैवेऽन्येष्वपि दैवेषु श्रोत्रिया भोजनीयाः स्तेनादयो वर्ज्याः । दुर्व्वालादारभ्य येऽनुक्रान्तास्ते तु श्राद्धएव वर्ज्याः न दैव इत्येकेषां मतं ।

वायुपुराणे ।

न ब्राह्मणान् परीक्षेत सदा दैवे तु मानवः ।
दैवे कर्मणि पित्र्ये तु श्रूयते वै परीक्षणं ॥

महाभारते ।

ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्याय्यमाहुः परीक्षणं ।
देवताः पूजयन्तीह दैवेनैवेह तेजसा ॥

दैवेन तेजसा संरक्ष्यमाणाः सन्तः पूजयितारो देवताः पूजयन्ति । न तत्तत्कर्मप्रत्यूहनिवारणाय पङ्क्तिपावनादीन् गोघृतमिवापेक्षन्ते । अतोदेवताभ्य उपहृत्य परिकल्प्य सर्व्वेभ्यो ब्राह्मणेभ्यो दद्यात् । न तत्रात्यन्तगुणदोषपरीक्षां कुर्वीतेत्यर्थः । अत्रेदमनुयुज्यते केन पुनः-प्राप्ता सती दैवेऽन्नदाने परीक्षा निषिध्यते । गुणवद्विधिर्दोषवत्प्रति-

षेधाभ्यां प्राप्ता सतीति ब्रूमः । तथा हि तस्य परीक्ष्यमाणो ब्राह्मणो गुणवत्त्वेन दोषवत्त्वेन वा ज्ञायते । नचाज्ञात एवोपादातुं हातुं वा शक्यते । तथाच गुणदोषवद्विधिप्रतिषेधावतारार्थकौ स्याताम् । अतस्ताभ्यामेवार्थात् परीक्षा प्रापितेति । कथं तर्हि परीक्षानिषेधापादितं गुणदोषवत्विधिप्रतिषेधानर्थक्यं परिहर्त्तव्यं । अथ गुणदोषवद्ब्राह्मणविधिप्रतिषेधयोः पितृकान्नदानकविषयत्वं ज्ञापयितुमयम् परीक्षाया नित्यानुवादो न प्रतिषेधः । निषेधे वा सामान्यशास्त्ररूपयोर्विधिप्रतिषेधयोः पित्र्य एवान्नदाने उपसंहारायेति मतं । तन्न । विशेषत एव दैवेऽन्नदाने गुणदोषवद्ब्राह्मणविधिप्रतिषेधयोर्दर्शनात् । तथा हि ।

श्रोत्रियायैव देयानि कव्यानि च हवींषि च इति ।

तथा ।

ये स्तेनाः पतिताः क्लीवा ये च नास्तिकवृत्तयः ।
तान् हव्यकव्ययोर्विप्राननर्हान्मनुरब्रवीत् ॥

तत्र हव्यशब्देन दैवमुक्तं । अतस्तायुक्तौ दैवेऽन्नदाने परीक्षानिषेधः । अत्र तावत् शङ्खधरानुमतं समाधानं ब्रूमः । मुख्यकल्पिकानुकल्पिकेषु ब्राह्मणेषु मिलितेषु ये मुख्यास्ते प्रधानभूते पित्र्ये नियोक्तव्याः । येऽन्ये दोषरहिता नातीव गुणवत्तरास्ते वैश्वदैविक इत्येवंविधा न परीक्षेति दैवे कर्म्मणीत्यस्याशय इति । स्वाभिमतं पुनरिदं । श्रोत्रियायैवेत्यादिना योऽयं गुणवन्नियमः, ये स्तेनेत्यादिना यश्च दोषवत्प्रतिषेधस्तयो श्राद्धसम्बन्धिन्येव हव्ये प्रकरणेन व्यवस्थापितत्वाच्छ्राद्धाङ्गभूतवैश्वदेविकव्यतिरिक्तानि देवतोद्देशत्यज्यमानहविर्भाज-

नीयब्राह्मणकान्यन्यानि दैवानि कर्म्माणि दैवे कर्म्मणि न परीक्षेत्यस्य विषय इति ।

यत्तु स्कन्दपुराणे ।

सौरणेन श्राद्धे भोजनीयस्यापरीक्षणीयत्वमुक्तं परीक्ष्य श्राद्धं दातव्यमित्येवं वैदिकी श्रुतिः ।

परीक्षणाच्च रम्भोरु आर्जवङ्गुणवत्तरं ।
अपरीक्ष्य तु योदद्याच्छ्राद्धमार्जवमास्थितः ।
तस्य तुष्यन्ति पितरो देवताश्च न संशय इति ॥

तदप्यनयैव व्यवस्थया समाधेयं । अथवा तत्तीर्थश्राद्धविषयमतिथिविषयञ्च व्याख्येयम् ।

तथा च पद्मपुराणे ।

तीर्थेषु ब्राह्मणान्नैव परीक्षेत कथञ्चन ।
अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनादिति ॥

अतिथिपरीक्षानिषेधस्तु ब्रह्मवैवर्त्ते ।

अविज्ञातं द्विजं श्राद्धेष्वतिथित्वे नियोजयेत् ॥

अतिथिव्यतिरिक्तस्य च ब्राह्मणस्य परीक्षाकर्त्तव्येति ।

परीक्षाप्रकारस्तु वृद्धमनुस्मृति-मत्स्यपुराणयोर्दर्शितः ।

शीलं संवसनात् ज्ञेयं शौचं संव्यवहारतः ।
प्रज्ञा संकथनात् ज्ञेया त्रिभिः पात्रं परीक्षते ॥

चिरकालमतिसन्निहितदेशे वासः 'संवसनं' । तत्त्वार्थनिर्द्धारणार्थं सुहृद्भावे शास्त्रचर्चा 'सङ्कथनं'। 'प्रज्ञा' मेधा प्रकृष्टं ज्ञानं वा ।

परीक्ष्यगुणवत्त्वेन निर्द्धारितानां ब्राह्मणानां श्राद्धे स्वीकारमाह जातूकर्ण्यः।

तस्मात्परीक्ष्य युञ्जीत श्राद्धे वेदार्थवित्तमान्।
आनन्त्यं स्वल्पमप्येति प्रदत्तं सुपरीक्षिते॥

दोषवत्त्वेन निर्द्धारितत्यागस्तु ब्रह्मवैवर्त्त उक्तः।

यस्मिन् दोषाः प्रदृश्येयुः सद्भिर्वा वर्जितस्तु यः।
जातीयाद्वापि संवासाद्वर्जनीयाः प्रयत्नतः॥

आह देवलः।

ब्राह्मणेष्वप्यपाङ्क्तेयान् सर्वान् काम्येषु वर्जयेत्।
परीक्ष्य बहुधा विप्रानाहरेत् पङ्क्तिपावनान्॥

इति ब्राह्मणपरीक्षा।

इति श्रीमहाराजाधिराजश्रीमहादेवीयसकलश्रीकरणाधिपति-
पण्डितश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे
श्राद्धकल्पे ब्राह्मणनिरूपणं नाम षष्ठो-
ऽध्यायः समाप्तः॥०॥



# अथ सप्तमोऽध्यायः ।

अपासनीयनिरूपणप्रकरणम् ।

पुण्यानां परमाकरेण करुणाकल्लोलिनीभृभृता
तत्त्वातत्त्वविचारचारुनिधिना प्रज्ञाप्रभाभास्वता ।
नर्मालापसुधार्णवेन सुधिया हेमाद्रिणा वर्ण्यते
श्राद्धासन्नभुवोपनेयमधुना दुष्प्राणिजातन्त्विह ॥

अथ वर्जनीयब्राह्मणप्रसङ्गादन्यान्यपि श्राद्धादपासनीयान्युच्यन्ते । तत्र देवलः ।

हीनाङ्गः पतितः कुष्ठी व्रणी पुक्कस-नास्तिकौ ।
कुक्कुटः शूकरः श्वानो वर्ज्याः श्राद्धेषु दूरतः ॥
वीभत्सुमशुचिं नग्नं मत्तं धूर्त्तं रजस्वलां ।
नीलकाषायवसनं छिन्नकर्णञ्च वर्जयेत् ॥
शस्त्रं कालायसं सीसं मलिनाम्बरवाससं ।
अन्नं पर्युषितञ्चापि श्राद्धेषु परिवर्जयेत् ॥

'पुक्कसः' म्लेच्छविशेषः । 'नास्तिकः' परलोकचासशून्यः । 'शूकरः' विड्वराहः । 'वीभत्सुः' जुगुप्सितः । 'अशुचिः' शुचिरहितः । 'नग्नः' संज्ञाप्रकरणोक्तलक्षणः । 'छिन्नकर्णः' सन्धितकर्णः । इतरस्य हीनाङ्गत्वेनैवोक्तत्वात् । 'शस्त्रं' खड्गचुरिकादि । 'कालायसं' लोहं । 'सीसं' नागाख्योधातुः । मलिने अम्बरवाससी अन्तरीयोत्तरीये यस्यासौ 'मलिनाम्बरवासाः' । कालायसादिवत् पर्युषितमन्नमपि श्राद्धदेशासन्निहितं कार्य्यम् ।

विष्णुः ।

न हीनाधिकाङ्गाः श्राद्धं पश्येयुर्न शूद्रा न पतिता न महारोगिणः ।

आपस्तम्बः ।

श्वभिरपपात्रैश्च श्राद्धस्य दर्शनं परिरक्षेत ।

'अपपात्रैः' अपभ्रष्टपात्रगुणैः । 'परिरक्षेत' निवारयेत् ।

उशनाः ।

विड्वराह-मार्जार-कुक्कुट-नकुल-शूद्र-रजस्वला-शूद्रीभर्त्तारश्च दूरमपनेतव्याः ।

श्राद्धप्रदेशादिति शेषः । 'शूद्रीभर्त्ता' अविद्यमानसजातीयभार्य्यो ब्राह्मणादिरित्यर्थः ।

मनुः ।

> चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।
> रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान् ॥

ईक्षणेन सन्निधिरत्र लक्ष्यते ।

> होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितं ।
> दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथं ॥

'होमे' अग्निहोत्रादौ शान्त्यादिहोमे वा । 'प्रदाने' गो-भू-हिरण्यादि-विषयेऽभ्युदयार्थे । 'भोज्ये' अदृष्टार्थे ब्राह्मणभोजने । 'दैवे हविषि' दर्शपूर्णमासादौ । 'पित्र्ये' श्राद्धे । 'एभिः' चाण्डालादिभिर्यद्वीक्षितं तदयथातथं गच्छतीति, यदर्थं क्रियते तद्विपरीतमेव साधयतीत्यर्थः । यद्यपि श्राद्धप्रकरणं तथापि वाक्यादन्यत्रापि

होमादावयं प्रतिषेधः। अन्ये तु श्राद्धसम्बन्धिष्वेव होमादिष्वयं प्रतिषेध इत्याहुः। ते चैवं व्याचक्षते। 'होमे' अग्नौकरणहोमदेशे। 'प्रदाने' पिण्डप्रदानाद्यन्नत्यागदेशे। 'भोज्ये' भोज्योपकल्पनदेशे महानसादौ। चशब्दादन्यस्मिन्नपि स्थाने यदन्नादिकं चाण्डालादिभिरभिवीक्षितं तदयथातथं गच्छति तेन श्राद्धदेशादेते दूरतोपनेया इत्यभिप्रायः।

घ्राणेन शूकरो हन्ति पक्षवातेन कुक्कुटः।
श्वा तु दृष्टिनिपातेन स्पर्शेनावरवर्णजः॥

'अवरवर्णजः' शूद्रः। तस्य च द्विजातिश्राद्धे श्राद्धोपकरणस्पर्शनिषेधोऽयं नात्मीये।

खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्ततः॥

'प्रेष्यः' परिचारकः। अपिशब्दादन्योऽपि यदृच्छासन्निहितो बान्धवादिरपनेयः।

यमः।

कुक्कुटोविड्वराहश्च काकश्चापि विड़ालकः।
वृषलीपतिश्च वृषलः षण्ढोनारी रजस्वला।
एतानि श्राद्धकाले तु परिवर्ज्यानि नित्यशः॥
कुक्कुटः पक्षवातेन हन्ति श्राद्धमसंवृतं।
घ्राणेन विड्वराहश्च वायसश्च रुतेन तु॥
श्वा तु दृष्टिनिपातेन मार्ज्जारः श्रवणेन तु।
वृषलीपतिश्च दानेन चक्षुर्भ्यां वृषलस्तथा।

छायया हन्ति वै षण्ढः स्पर्शेन तु रजस्वला ॥
खञ्जः काणः कुणिः खित्री दातुः प्रेष्यकरो भवेत् ।
ऊनाङ्गोवातिरिक्ताङ्गस्तमाशु निनयेत्ततः ॥

'विड़ालः' मार्ज्जारः। 'वृषलः' संज्ञाप्रकरणोक्तः, शूद्रोवा। 'असंवृतं' अनावृतप्रदेशं। 'श्रवणेन' शब्दश्रवणेन। 'दानेन' पात्रीकृतः सन्नित्यर्थः।
हारीतः ।

दैवे वा यदि वा पित्र्ये सुराप्यायतनं स्पृशेत् ।
रजस्वला पुंश्चली च निवापे समुपस्थिते ॥

'निवापः' पितृकर्म। समुपस्थितशब्दात् पाकोपक्रमात् प्रभृतीतिविज्ञेयं। तदाह व्याघ्रपात्।

मद्यपः स्वैरिणी या च परपूर्वापतिस्तथा ।
नैव श्राद्धेभिवीक्षेरन्नावापात् प्रभृतिक्रमात् ॥

'आवापः' पाकं कर्तुं तण्डुलादीनां पिठरादौ प्रक्षेपः, तत्प्रभृति-भोजननिष्पत्तिपर्य्यन्तं, क्वचित् पाकस्थाने भोजनस्थानेऽन्यत्र वा स्थितान् भोज्यपदार्थान् भुञ्जानांश्च विप्रांश्छ्राद्धकर्मणि यथा मद्यपादयोनाभिवीक्षेरन् तथा दूरत एवापासनीया इत्यर्थः। मद्यपादिग्रहणमप्रशस्तानामुपलक्षणार्थं ।
आह गौतमः ।

श्व-चण्डाल-पतितावेक्षणे दुष्टं तस्मात् परिवृते दद्यात्तिलैर्वावकिरेत् पङ्क्तिपावनो वा शमयेत् ।

श्वादीनामवेक्षणे 'दुष्ट' दोषवद्भवति। अतः कारणात् 'परिवृते' प्रच्छन्ने, श्राद्धं कुर्यात्। तथा न कृतं चेत्तर्हि समन्तात् तिलानव-

किरेत्। पङ्क्तिपावनो वा पङ्क्तिमूर्द्धनि निवेशितस्तं सर्वमपि दोषं शमयेत्।

बृहस्पतिरप्याह।

श्वपाकषण्ढपतितश्वानंशूकरकुक्कुटात्।
रजस्वलायाश्चण्डालात् श्राद्धे कुर्य्याच्च रक्षणं॥
परिश्रितेषु दद्याद्वा तिलैर्वा विकिरेन्महीं।
निनयेद्वोपविष्टस्तु तं दोषं पङ्क्तिपावनः॥

'श्वपाकः' निषादः। 'षण्ढः' नपुंसकः। 'रक्षणं कुर्य्यात्' इति यथा-श्वपाकदृष्ट्युपघातो न स्यात् तथा कुर्य्यादित्यर्थः। 'परिश्रितेषु' परिवृतेषु। महीमित्युपलक्षणं, यावन्तः पदार्थाः श्वपाकादिभिर्दृष्टास्तावन्तः कृष्णतिलैरवकीर्णाः। पङ्क्तिपावनोवा दोषं 'निनयेत्' अपहरेत्।

दूरस्थानपि निषिद्धदर्शनान् श्राद्धकर्त्ता यथा न पश्येत् तथा श्राद्धदेशः परिवृतोविधेय इत्याह विष्णुः।

संवृते च श्राद्धं कुर्य्यान्न रजस्वलां पश्येन्न श्वानं न विड्वराहं न ग्रामकुक्कुटं प्रयत्नात् श्राद्धमजस्य दर्शयेत्।

'श्राद्धं' श्राद्धार्थान् पदार्थान्। 'अजः' कृष्णच्छागः। तद्दर्शनेन हि दुष्टदृष्टिदूषिताः पदार्थाः पूता भवन्तीति कृत्वा तस्य प्रयत्नेन दर्शयेत्।

ब्रह्माण्डपराणे।

नग्नादयो न पश्येयुः श्राद्धमेतत् कदाचन।
गच्छन्त्येतैस्तु दृष्टानि न पितॄन्न पितामहान्॥

एतैर्दृष्टानि हवींषीतिशेषः। 'नग्नाः' वेदपरित्यागिनः।

आदिशब्देन तत्प्रकारा वैदिककर्मानुष्ठानत्यागिनो गृह्यन्ते। तथा च तत्रैवोक्तम्।

सर्वेषामेव भूतानां त्रयी संवरणं यतः।
ये वै त्यजन्ति तां मोहात् ते वै नग्ना इति स्मृताः॥

'त्रयी' वेदः, 'संवरणं' प्रावरणं यथा प्रवरणं शीतवातादिभ्यः पुरुषां स्त्रायते एवं त्रय्यपि स्वधर्माननुष्ठापयन्ती दुःखेभ्यः त्रायत इति प्रावरणसादृश्यं।

बौद्ध-श्रावक-निर्ग्रन्थ-शाक्त-जीवक-कापिलान्।
ये धर्माननुवर्त्तन्ते ते वै नग्नादयो जनाः॥

'बौद्धाः' सौगताः। 'श्रावकाः' श्वेतपटाः। 'निर्ग्रन्थाः' जैनाः। 'शाक्ताः' कौलाः। 'जीवकाः' वार्हस्पत्याः चार्वाका इति यावत्। 'कपिलः' लोकायतिकदेशीयः, तेन प्रणीताः 'कापिलाः'।

वायुपुराणे।

वृथाजटी वृथामुण्डी वृथानग्नश्च यो नरः।
महापातकिनो ये च ते वै नग्नादयो नराः॥

ब्रह्मवैवर्त्ते।

शम्भुरुवाच।

नग्नादीन् भगवन् सम्यक् ममाद्य परिपृच्छतः।
आचक्ष्व सर्वथा सर्वान् विस्तरेण यथातथं॥
एवमुक्तो महातेजा बृहस्पतिरुवाच तं।
पुरा देवासुरे युद्धे निर्जितेष्वसुरेष्वथ।
पाषण्डाधिकृताः सर्व्वे ह्येते सृष्टाः स्वयम्भुवा॥

तपश्चरत्सु सर्व्वेषु असुरेषु च पार्थिव ॥

विष्णुः ।

सुदुस्तरां महामायामास्थाय सुरनोदितः ।
मोहयामास योगात्मा तृतो विज्ञाय तान् विभुः ॥
स मूढ़ान् बुद्धरूपेण तानुवाच महामनाः ।
शक्या जेतुं सुराः सर्व्वे युष्माभिरिति दर्शनैः ॥
बौद्धं धर्म्मं समास्थाय शाक्यास्तेनबभूविरे ।
तानुवाचार्हतेमन्ते यूयं भूत्वा च तद्विधाः ।
ज्ञानेन सहितं धर्मं तेनार्हन्त इति स्मृताः ॥
बुद्ध-श्रावक-निर्ग्रन्थाः सिद्धपुत्रास्तथैव च ।
एते च सर्व्वे चार्हन्तो विज्ञेया दुष्टचारिणः ॥
चयोक्लेशं समुत्सृज्य जीवतेत्यब्रवीत्तु यान् ।
जीवका नाम ते जाताः सर्व्वधर्म्मबहिष्कृताः ॥
यान् भूत्वा दिव्यवद्योम्नि धर्म्मान् वै प्रत्यपादयत् ।
कापिलास्तेऽपि संप्रोक्ताः कपिलो हि दिवाकरः ॥
चरध्वन्तानुवाचेदं मच्छासनमतिद्युति ।
चरकास्तेऽपि विज्ञेया अधर्म्मचरणाः शठाः ॥
दीर्घं चिरमिति प्रोक्तं सूक्ष्मं वा धर्म्मरूपकम् ।
धर्म्मञ्चरध्वमित्युक्ता यस्मात्ते दीर्घचक्षुषः ।
चीराणि चैव नीलानि बिभ्राणाश्चीरकास्ततः ॥
एष चोचति संबुद्धो धर्म्मस्तं श्रयतेतियत् ।
उवाच मायया विष्णुस्तेहि चौचाः प्रकीर्त्तिताः ॥

स त्वं सर्व्वेषु भूतेषु भगवानिति चाब्रवीत् ।
सात्वतास्तेऽपि विज्ञेया उक्ता भागवताश्च ये ॥
विड्भक्ताश्चैव ये केचित् कपालकृतभूषणाः ।
शैवाः पाशुपताश्चान्ये पाञ्चरात्रास्तथापरे ॥
तथान्ये च दुरात्मानः सर्वेऽप्यासुरदैवताः ।
शब्देन च त्रयीधर्म्मपालनाज्जगतां स्मृताः ॥
तं षण्डयन्ति यस्मात्ते पाषण्डास्तेन हेतुना ।
ततस्ते कर्म्मणा बद्धा इह सम्यगव्यवस्थिताः ॥
असुरेभ्यः पुनर्जाता भावितास्तेन कर्म्मणा ।
निरयं प्राप्य तैरेव कर्म्मभिर्भाविताः पुनः ॥
बौद्ध-श्रावक-निर्ग्रन्थाः शाक्या जीवकपालिकाः ।
चरकाश्चीरकाश्चैवाः सिद्धपुत्राः ससात्वताः ॥
नैरात्म्यवादिनश्चैव श्रयज्ञा नास्तिवादिनः ।
वर्त्तमानाः स्वधर्म्मेषु जायन्ते च पुनः पुनः ॥
वृथाजटी वृथामुण्डी वृथानग्नाश्च ये नराः ।
एतेऽन्ये च त्रयीवाह्याः सर्व्वे नग्नादयो जनाः ॥

वायुपुराणे ।

वैदिकैश्चापि ये मन्त्रैर्दीक्षिता विधिवद्द्विजाः ।
यज्ञेष्वधिकृता नित्यमाश्रमास्ते न संशयः ॥
अमन्त्रसंस्कृता ये तु यज्ञेभ्यस्र बहिष्कृताः ।
पाषण्डांस्तांस्तदा ब्रह्मा उवाचाधस्वरांस्तथा ॥
कुलधूमा निस्नामाश्च व्याधा मुष्टिकलङ्कनाः ।

कुकर्म्मसंसक्ता ये च कुपथाः परिकीर्त्तिताः ॥
पूजयिष्यन्ति वः सर्व्वा म्लेच्छा दुर्मतयश्च ये ।
एतस्मात् कारणादेते निन्द्या नग्नादयः स्मृताः ॥
एभिः संस्पृष्टं दृष्टं वै श्राद्धं गच्छति दानवान् ।
ब्रह्मघ्नांश्च कृतघ्नांश्च नास्तिकान् गुरुतल्पगान् ॥
दस्यांश्चैव नृशंसांश्च दर्शनेन विवर्जयेत् ।
ये चान्ये पापकर्म्माणः सर्व्वांस्तानपि वर्जयेत् ॥
देवतानामृषीणाञ्च पापवादरताश्च ये ।
असुरान् यातुधानांश्च दृष्टमेभिर्व्रजत्यधः ॥
अपुमानपविद्धश्च कुक्कुटो ग्रामशूकरः ।
श्वा चैव हन्ति श्राद्धानि दर्शनादेव सर्व्वशः ॥
नष्टं सूतकिभिर्दृष्टं दीर्घरोगिभिरेव च ।
पतितैर्मलिनैश्चैव न द्रष्टव्यं कथञ्चन ॥

नागरखण्डे ।

शरटोलूखलोत्थे च यत्र शब्दे व्यवस्थितम् ।
पुरूपस्य वा विशेषेण तच्छ्राद्धं व्यर्थतां व्रजेत् ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलश्रीकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे अपासनीयनिरूपणं नाम सप्तमोऽध्यायः समाप्तः ॥०॥

## अथाष्टमोऽध्यायः ।

प्रक्षेप्यद्रव्यनिरूपणप्रकरणम् ।

यन्मूर्त्तिमालोक्य तमः प्रशस्तं
जहाति लोकः सह शोकवेगैः ।
योग्यान्ययोग्यानि च सोऽभिधत्ते
द्रव्याणि हेमाद्रिरिहाखिलानि ॥

अथ श्राद्धाय हविःप्रक्षेपाधिकरणेषु निरूपितेषु प्रक्षेप्यजिज्ञासायां द्रव्याणि निरूप्यन्ते । तानि च स्वभूतानि पितृपितामहाद्युद्देशेन त्यक्ता प्रक्षेप्याणि । स्वभावश्च तेषां लोकसिद्धैरेवोपायैः । ते चोपाया धर्म्योपायार्जितस्य द्रव्यस्य विधिरुच्यते ।

तथा च आपस्तम्बः प्रशस्तानि द्रव्याणि अनुक्रम्याह ।

एतैस्तीव्रतरा पितॄणां प्रीतिस्तृप्तिर्द्राघीयांसञ्च कालं तथा धर्मानुहृतेन द्रव्येण तीर्थप्रतिपन्नेन ।

'प्रीतिः' परितोषातिशयः । 'तृप्तिः' आर्त्तिनिवृत्तिः । 'द्राघीयांसं' दीर्घतरं । 'धर्मानुहृतेन' धर्म्योपायार्जितेन । 'तीर्थप्रतिपन्नेन' सत्पात्रप्रतिपादितेन ।

शङ्खलिखितावपि ।

धर्मेण वित्तमादाय पितृभ्यो दद्यात् ।

अत्र पञ्चमहायज्ञानुद्दिश्य सुमन्तुः ।

अनुतिष्ठेन्न्यायागतेन द्रव्येणेत्याह बुधः । न्यायागतेन द्रव्येण कर्म्माणि कुर्य्यादिति ।

अतो धर्म्म्यैरेवोपायैरर्जितानि धान्य-शाक-फल-मूल-पयःप्रभृतीनि श्राद्धे देयानि। धर्म्म्याश्च द्रव्यार्जनोपायाः स्मृतिषु दर्शिताः तत्राह मनुः ।

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥

'वित्तागमाः' द्रव्यार्जणोपायाः। 'धर्म्याः' पुरुषार्थत्वपक्षे प्रत्यवायानुत्पादकाः, वक्ष्यमाणप्रकारेण क्रत्वर्थत्वे तु क्रियमाणाय धर्माय हिताः साद्गुण्यहेतवः। तत्र स्वामिसम्बन्धेनैव निमित्तेन यदन्यदीयं द्रव्यमन्यस्य स्वम्भवति सः 'दायः'। अत्र स्वामिसम्बन्ध एवोपायत्वेनोक्तः। अनन्यपरिग्रहीतस्य जलतृणकाष्ठादेर्निध्यादेर्वाधिगमः 'लाभः'। द्रव्यविनिमयः 'क्रयः'। शत्रुपराभवः 'जयः'। वृद्ध्यर्थं परस्य द्रव्यसमर्पणं 'प्रयोगः'। कर्मणा आर्त्विज्याध्यापन-पौरोहित्यादिना शिल्पेन शुश्रूषया वा सम्बन्धः 'कर्मयोगः'। दीयमानद्रव्यस्वीकारः 'प्रतिग्रहः'। सन् साधुरनिषिद्धः प्रतिग्रहः 'सत्प्रतिग्रहः'। अत्र दायादिष्वपि सत्त्वमनुसन्धेयं। एतेषु च दाय-लाभ-क्रयाः साधारणाः। जयः क्षत्रियस्यैव, स च दण्डाकरकरादीनामुपलक्षणं। प्रयोगो वैश्यस्यैव, स च कृषिवाणिज्यादेरुपलक्षणं। आर्त्विज्याध्यापनपौरोहित्यलक्षणः कर्मयोगः प्रतिग्रहश्च ब्राह्मणस्यैव। शिल्पलक्षणः कर्मयोगः कारुकाणामेव। शुश्रूषालक्षणस्तु शूद्रादेरेवेति ।

तथा च गौतमः ।

स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्व्विष्टं वैश्यशूद्रयोरिति ।

यद्ग्रहणं स्वामिजीवनेन प्रतिसम्बन्धेन क्रियते स दायः 'रिक्थम्' । यथा पुत्राणां पौत्राणां च पितृधनं पैतामहं च धनं । स्वामिजीवनप्रतिबद्धग्रहणको दायः 'संविभागः', यथा भ्रात्रादीनां विभक्तभ्रात्रादिद्रव्यं । अनन्यप्रतिगृहीतस्य जलतृणकाष्ठादेः स्वीकारः 'परिग्रहः' । निध्यादेः प्राप्तिः 'अधिगमः' । एतेषु निमित्तेषु सत्सु 'स्वामी' भवति । 'अधिकम्' असाधारणं । 'लब्धं' प्रतिग्रहाध्यापनयाजनैः प्राप्तं । 'विजितं' विजयदण्डादिलब्धं, क्षत्रियस्याधिकं । वैश्यशूद्रयोर्निर्विष्टमधिकं । तत्र वैश्यस्य कृषिगोरक्षादिलब्धं 'निर्विष्टम्' । शूद्रस्य द्विजशुश्रूषादौ भृतिरूपेण लब्धं 'निर्विष्टम्' । एवमनुलोमजानां प्रतिलोमजानां च लोकप्रसिद्धेषु स्वस्वहेतुषु यद्यदसाधारणमुक्तं सूतानामश्वसारथ्यमित्यादि तत्तत्सर्वं निर्विष्टशब्देनोच्यते । सर्वस्यापि भृतिरूपत्वात् । निर्वेशो भृतिभोगयोरित्यभिधानकोशानुशासनात् ।

अत्रार्जनीयत्वेन धनं प्रकृत्याह नारदः ।

तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च ।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पुनः ॥

एकैकस्य शुक्लादेः सप्त सप्त भेदा भवन्तीत्यर्थः ।

श्रुतशौर्य्यतपःकन्यायाज्यशिष्याऽन्वयागतं ।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥

आगतशब्दः श्रुतादिभिः प्रत्येकं सम्बध्यते । श्रुतेन विद्यया निमित्तेन यः प्रतिग्रहस्तेन यत् प्राप्तम्, शौर्य्येण निमित्तेन यद्विजितं भृतिरूपेण वा लब्धं । तपसा निमित्तेन प्रतिग्रहेण यल्लब्धं । अत्र

प्रतिग्रहस्य शुक्लत्वे दातृप्रतिग्राह्यशुद्धिरपि कारणत्वेनानुसन्धेया। 'कन्यागतं' कन्याप्रतिग्रहकाले श्वशुरादिभ्यो यल्लब्धम्। 'शिष्यागतं' शिष्यादध्याप्यादध्यापनेन निमित्तेन यत् प्राप्तं गुरुदक्षिणादि। 'अन्वयागतं' दायप्राप्तं। अत्र यथाधिकारं शुक्लत्वमनुसन्धेयं। 'उदयोऽपि तद्विधः' इति तद्वनविहितकर्मजं फलमपि शुक्लं। 'शुक्लं' दुःखासंभिन्नमित्यर्थः।

कुसीद-कृषिवाणिज्य-शिल्पशुल्कानुवृत्तितः।
कृतोपकारादाप्तञ्च शबलं समुदाहृतं॥

न्याय्योपचयार्थं द्रव्यप्रयोगः 'कुसीदं'। 'कृषिः' लाङ्गलकर्म। क्रयविक्रयव्यवहारेण धनवर्द्धनं 'वाणिज्यं'। अत्र कुसीदादीनि वैश्यव्यतिरिक्तेनापदि क्रियमाणानि द्रव्यस्य शबलत्वकारणानि। अनापदि तु कृष्णत्वकारणान्येव। वैश्यस्य तु सदा शुक्लान्येव। 'शिल्पं' कारुकर्म। तदप्यन्यदीयमन्येनानुष्ठितं शबलत्वहेतुः। 'शुल्कं' वणिजादेः यः करः। तच्च राजव्यतिरिक्तानां शबलं। 'अनुवृत्तिः' द्विजातिशुश्रूषा, तदर्जितं धनं शूद्रव्यतिरिक्तस्य शबलं। कृतोपकाररूपेण यद्गृहीतं तत् सर्वेषां शबलं। शबलत्वञ्च किञ्चित्प्रत्यवायकरत्वं। एतद्वनविहितस्य कर्म्मणः फलमपि 'शबलं' दुःखानुविद्धं।

पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः।
व्याजेनोपार्ज्जितं यत् तत् सर्वेषां कृष्णमुच्यते॥

योऽहि राजादिपार्श्वे वर्त्तमानः कस्यापि स्वतः सम्भावितमुपकारं कथञ्चिदुपलभ्य तं प्रतिब्रूते तवेमञ्चेदुपकारं कारयामि तदा त्वयेदं मम देयमित्येवं धनमर्जयति स 'पार्श्विकः'। एवं विपत्प्रशमनप्रदर्श-

नेनापि धनार्जयिता 'पार्श्विकः'। यश्चोत्तमवर्णादित्तमादाय प्रत्यर्पणा-निष्कुस्तत् पुरतो नावतिष्ठते सोऽपि 'पार्श्विकः'। तेनैवं यदुपार्जितं धनं तत्कृष्णम्। 'द्यूतं' अक्षदेवनादि। तदर्जितं धनं क्षत्रियव्यतिरिक्तानां कृष्णम्। 'चौर्य्यं' प्रच्छन्नापहारः। 'आर्त्तिः' परपीड़ा। 'प्रतिरूपकं' परवञ्चनार्थं मणिसुवर्णादेः प्रतिकृतिकरणं। 'साहसं' स्वप्राणव्ययाङ्गीकारेण पश्यतोहरत्वं। 'व्याजः' दम्भेन तपःप्रभृति। एतैरुपार्जितं धनं सर्वेषां 'कृष्णं' दुःखप्रायफलं।

तेन क्रयो विक्रयश्च दानं ग्रहणमेव च।
विविधाश्च प्रवर्त्तन्ते क्रियाः सम्भोग एव च॥
यथाविधेन द्रव्येण यत्किञ्चित् कुरुते नरः।
तथाविधमवाप्नोति तत्फलं प्रेत्य चेह च॥

'यथाविधेन' शुक्लेन शबलेन कृष्णेन च द्रव्येण, 'यत्किञ्चित्' पारलौकिकं दानादिकमैहिकञ्च शान्तिकपौष्टिकादि 'कुरुते', तस्य फलं तथाविधं भवति। शुक्लेन शुक्लं दुःखरहितं। शबलेन शबलं मिश्रं सुखदुःखं। कृष्णेन कृष्णं बहुदुःखहेतुस्वल्पसुखम्।

पद्मपुराणे।

शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत्।
शबलं मध्यमफलं कृष्णं हीनफलं धनं॥

ब्रह्मप्रोक्ते।

शुक्लवित्तेन योधर्म्मं प्रकुर्य्याच्छ्रद्धयान्वितः।
तदर्थं पात्रमासाद्य देवत्वेन तदश्नुते॥
राजसेन च भावेन वित्तेन शबलेन च।

प्रदद्याद्दानमर्थिभ्यो मानुषत्वे तदश्नुते ॥
तमोवृत्तस्तु यो दद्यात् कृष्णं वित्तं तु मानवः ।
तिर्य्यक्त्वे तत् फलं प्रेत्य समश्नाति नराधमः ॥

नारदः ।

तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयात् स्मृतं ॥

तदेवं शुक्लादिभेदेन त्रिविधं धनं प्रत्येकवर्णचतुष्टयाश्रयणादाश्रयभेदेन द्वादशविधं भवति ।

तस्यैव प्रकारान्तरेण द्वादशभेदानाह ।

साधारणं स्यात् त्रिविधम् ।

असाधारणं तु त्रिषु वर्णेषु प्रतिवर्णं त्रैविध्यान्नवविधमित्युभयं मिलित्वा द्वादशविधं शूद्राश्रितस्यासाधारणधनभेदस्य पृथग्वक्ष्यमाणत्वात्।

क्रमागतं प्रीतिदायः प्राप्तञ्च सह भार्य्यया।
अविशेषेण सर्व्वेषां वर्णानां त्रिविधं धनं ॥

'प्रीतिदायः' प्रीतिदानेन लब्धम्।

वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणं ।
प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनं ।
युद्धोपलब्धं कराच्च दण्डाच्च व्यवहारतः ॥

'कारात्' करग्रहणात् । 'व्यवहारतः' न्यायेन।

वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणं।
कृषिगोरक्षवाणिज्यैः शूद्रस्त्वेभ्यस्त्वनुग्रहात् ॥

शूद्रस्य पुनः 'एभ्यः' द्विजातिभ्यः, 'अनुग्रहात्' शुश्रूषाजनितमनःप्रसादात्, यल्लब्धं तदसाधारणम्।

सर्व्वेषामेव वर्णानामेवं धर्म्यो धनागमः।
विपर्य्ययादधर्म्यः स्यान्नचेदापद्गरीयसी॥

तदेवं स्त्रीपुंसयोरविशेषेण धर्म्या द्रव्यार्जनोपाया उक्ताः।

अथ स्त्रीणामेवोच्यन्ते।

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि।
भ्रातृ-मातृ-पितृप्राप्तं षड्विधं स्त्रीधनं स्मृतं॥

अध्यग्न्यादिधनस्वरूपं तु कात्यायनेनाभिहितं।

विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितं॥
यत्पुनर्लभते नारी दीयमाना पितुर्गृहात्।
अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतं॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते॥
ऊढ़या कन्यया वापि पत्युः पितृगृहेऽपि वा।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतं॥

किञ्च,—

बन्धुदत्तं तथाशुल्कमन्वाधेयकमेव च।

कन्याया मातृबन्धुभिः पितृबन्धुभिश्च दत्तं 'बन्धुदत्तं'। यद्गृहीत्वा परिणीयते तच्छुल्कं। परिणयनादनु पश्चाद्यद्दीयते तत् 'अन्वाधेयकं'। उक्तञ्च कात्यायनेन,—

विवाहात्परतो यच्च लब्धं भ्रातृकुलात् स्त्रिया ।
अन्वाधेयन्तु तद्द्रव्यं लब्धं भर्तृकुलात्तथा ॥

याज्ञवल्क्यः ।

पितृ-मातृ-पति-भ्रातृ-दत्तमध्यग्न्युपागतं ।
आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितं ॥

पित्रादिभिर्यद्दत्तं यच्च विवाहकालेऽग्निसमक्षं मातुलादिभिर्दत्तं । 'आधिवेदनिकं' अधिवेदननिमित्तं । "अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्" इत्यादिवक्ष्यमाणं पत्नीदुहितरश्चेत्यादिना प्राप्तं ।

भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकमिति ।

भगिनीशुल्कं सोदर्याणामूर्द्ध्वं मातुरिति ।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयादिति ।
मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति ।
जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥
यास्तासां स्युर्दुहितरस्तासामपि यथार्थतः ।
मातामह्या धनात् किञ्चित् प्रदेयं प्रीतिपूर्वकमिति ॥
मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव स इति ।

स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति पत्नी हि पारिणय्यस्येष्ट इत्यादिभिः प्राप्तं स्त्रीधनं स्त्रीणां धर्म्यं । तदेवं धर्म्योपायार्जितस्य द्रव्यस्य श्राद्धादौ विधिर्दर्शितः ।

इति धर्म्योपायार्जितद्रव्यविधिः ।

अथाधर्म्योपायार्जितस्य प्रतिषेधः प्रदर्श्यते ।

आह वृद्धशातातपः ।

द्रव्येणान्यायलब्धेन यः करोत्यूर्द्ध्वदैहिकं ।
न स तत् फलमाप्नोति तस्यार्थस्य दुरागमात् ॥

'ऊर्द्ध्वदैहिकं' श्राद्धादि ।

देवलोऽप्याह ।

अन्यायाधिगतां दत्वा सकलां पृथिवीमपि ।
श्रद्धावर्जमपाचाय न काञ्चिद्भूतिमाप्नुयात् ॥

'भूतिः' फलं ।

वह्निपुराणे ।

अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः ।
धर्म्माभिकाङ्क्षी यजते न धर्म्मफलमश्नुते ॥
धर्म्मवैतण्डिको यस्तु पापात्मा पुरुषस्तथा ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारणं ॥
पापेन कर्म्मणा विप्रो धर्म्मलुब्धो निरंशकः ।
रागमोहान्वितः शान्तः कलुषां योनिमाप्नुयात् ॥
एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च ।
स पापकर्मणा तेन न सिद्ध्यति दुरागमात् ॥
एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः ।
आरभ्यन्ते क्रिया यास्तु पिशाचास्तत्र दैवतं ॥

आह शातातपः ।

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्जितं धनं ।
न देयं पितृदेवेभ्यो यच्च क्लीवादुपार्जितं ॥

'वेदविक्रयजं' वेदविक्रयलब्धं। वेदविक्रयश्च षड्विधः, स चोक्तो भविष्यत्पुराणे ।

प्रख्यापनञ्च व्याख्यानं प्रश्नपूर्व्वः प्रतिग्रहः ।
याजनाध्यापने वादः षड्विधो वेदविक्रय इति ॥

ईदृशोऽहं वेदवेदाङ्गेष्वधीतीति धनार्थं तत्र तत्राध्ययनप्रकाशनं 'प्रख्यापनं'। अर्थलिप्सया वेदार्थविवरणं 'व्याख्यानं'। ख्यातिलाभपूजार्थं श्रोत्रियपराजयपर्य्यवसानो वेदतदर्थसम्बन्धी विवादः 'वादः'। स्त्रीव्यापारोपजीवनेनार्जितं स्त्रीष्वर्जितं स्त्रीविक्रयार्जितं वा। 'क्लीवः' षण्डः। व्यासः ।

वेदविक्रयजं नेष्टं स्त्रिया यच्चार्जितं धनं ।
न देयं पितृदेवेभ्यो यच्च क्लीवादुपार्जितं ॥

स्त्रिया स्वातन्त्र्येण कुसीदसेवाद्युपायैर्यदर्जितं तत्पत्या नादेयं । मार्कण्डेयपुराणे ।

यच्चोत्कोचादिना प्राप्तं पतिताद्यदुपार्जितं ।
अन्यायकन्याशुल्कोत्थं द्रव्यं चात्र विगर्हितं ॥
पित्रर्थं मे प्रयच्छस्वेत्युक्ता यच्चाप्युपार्जितं ।
वर्जनीयं सदा सद्भिस्तत्तद्वै श्राद्धकर्मणि ॥

कार्य्यप्रतिबन्धनिवृत्त्यर्थमापत्प्रतीकारार्थं वा राजाधिकृतेभ्यो यद्दीयते स 'उत्कोचः' तेन रूपेण यत्प्राप्तम् । गोमिथुनाधिककन्याशुल्कसम्भूतं 'अन्यायकन्याशुल्कोत्थं' । तथा श्राद्धक्रियाप्रयोजनत्वेनाभिधाय यद्याचितं तत्सर्वप्रकारं द्रव्यं श्राद्धकर्मणि वर्जयेदिति । रेवाखण्डे ।

देवद्रव्यं गुरुद्रव्यं द्रव्यं चण्डेश्वरस्य च ।
त्रिविधं पतनं दृष्टं दानलङ्घनभक्षणात् ॥

मत्स्यपुराणे ।

हस्त्यश्वौ गामनड्वाहं मणिमुक्तादिकाञ्चनं ।
परोक्षं हरते यस्तु पश्चाद्दानं प्रयच्छति ॥
न ते गच्छन्ति वै स्वर्गं दातारो यत्र भोगिनः ।
अनेन कर्मणा युक्ताः पच्यन्ते नरकेऽधमाः ॥
अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलं ॥

तथा ।

परिभुक्तमविज्ञातमपर्य्याप्तमसंस्कृतं ।
यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते ॥

'परिभुक्तं' परिगृहीतोपयोगं वस्त्रादि, 'अपर्य्याप्तं' स्वकार्य्याक्षमं जरद्गवादि ।

इत्यधर्मोपार्जितद्रव्यप्रतिषेधः ।

तदेवं धर्म्यैरुपायैरर्जितेन श्राद्धादीनि कर्त्तव्यानि । न तु यत्किञ्चिदुपायार्जितेनेति । ननु लिप्सासूत्रेऽर्जननियमानां पुरुषार्थतोक्ता । एतैस्तु पुरुषदर्शितैर्वचनैः सा समुच्छ्रियते । नान्यायेनार्जननियमानां पुरुषार्थतोक्ता वचनैस्तु नियमार्जितस्य धनस्य क्रत्वर्थतोऽच्यते । इति धनार्जनाधिकरणस्य वचनानाञ्च विषयभेदाद्विरोधाभावे कथं वचनैरर्जननियमानां पुरुषार्थता समुच्छ्रियते । नियमार्जितस्य क्रत्वर्थत्वं प्रतिपादयद्भिर्वचनैरर्थान्नियमानामपि क्रत्वर्थता-

पादिता तथा धनार्जनाधिकरणोक्तेन न्यायेन नियमानां पुरुषार्थत्वं कुर्वता तैरर्जितस्य धनस्यापि पुरुषार्थत्वमापादितमिति न्यायस्य वचनानां चैकविषयत्वमेवेति चेत्। तन्न। पुरुषार्थैरेव नियमैरर्जितस्य धनस्य क्रत्वर्थत्वाविरोधात्। नन्वर्ज्यमानस्य पुरुषार्थतामनापाद्य कथं नियमाः पुरुषार्था भवेयुः। अत्र ब्रूमः। अदृष्टमपि पुरुषोपकारं निवर्त्तयन्तो नियमाः पुरुषार्था भवन्ति। कथं पुनः पुरुषोपयोगिनि धनस्वत्त्वे दृष्टे सम्भवत्यदृष्टकल्पना। उच्यते। पुरुषोपकारिणो धन-स्वत्त्वस्य नियममन्तरेणोपायमात्रादेव सिद्धेर्नियमस्यादृष्टमात्रैक-फलत्वात्। तस्माद् दृष्टद्वारा पुरुषार्था भवद्भिः प्रतिग्रहादिनियमै-रर्ज्यमानं धनं पुरुषक्रतूभयार्थतोदासीनेन रूपेण पुरुषसम्बन्धं लभते। पुरुषापेक्षितलौकिकवैदिकक्रियामात्रार्थतारूपेण वा। तत्रोदासी-नेन रूपेण पुरुषसम्बन्धं प्राप्तस्य क्रतूपयोगयोग्यता वचनेनोच्यते। यदा तु क्रियामात्रार्थतारूपेण तदा नियमानियमप्रकारार्जितस्यापि क्रतूपयोगयोग्यत्वे प्रसक्ते नियमान्यप्रकारार्जितस्य क्रतूपयोगयोग्य-त्वाभावो वचनेनोच्यत इति न कश्चिद्विरोधः।

अस्तु वा धनस्य पुरुषार्थैकरूपता, तथापि पुरुषार्थस्यैव सतोऽर्थात् क्रतूपकारकतास्तु। उपकारकत्वे योग्यतामात्रं तु वचनैरुच्यते। न क्रत्वर्थतेति न विरोधः। असत्प्रतिग्रहाद्यर्जितस्य योग्यताभाव-स्तन्निषेधवचनैरिति। अथवा लिप्सासूत्रे प्रतिग्रहादिनियमवाक्ये साम-र्थ्योपनीयमाना पुरुषार्थतोक्ता न पुनर्वचनान्तरोपकल्प्यमाना क्रत्व-र्थता निराकृता।

नन्वेवं सति नियमार्जितेनैव क्रतवः कर्त्तव्याः, तयाविधेनैव च

स्वार्थः साधनीयः, ततश्चार्जननियमानां महता प्रबन्धेन पुरुषार्थताप्रतिपादनं किमर्थं । न्यायव्युत्पत्तिमात्रार्थमिति ब्रूमः । अथवा नियमातिक्रमे प्रायश्चित्तप्राप्त्यर्थम् । अथवा धनान्तरालाभे नियमातिक्रमार्जितेनापि धनेन नित्यनैमित्तिकक्रतुसिद्धिः सम्भवतीति प्रतिपादनार्थमित्यनवद्यम् ।

इति धनार्जनाधिकरणविरोधपरिहारः ।

अथ व्रीह्यादिद्रव्योत्पत्तिः ।

मार्कण्डेयपुराणे भूरियं पुरा कदाचिदोषधीरभ्रसतेति प्रतिपाद्योक्तं ।

ग्रस्तासु च पुनस्तासु विभ्रान्तास्ताः पुनः प्रजाः ।
ब्रह्माणं शरणं जग्मुः क्षुधार्त्ताः परमेष्ठिनं ॥
स चापि तत्त्वतो ज्ञात्वा तदा ग्रस्तां वसुन्धरां ।
वत्सं कृत्वा सुमेरुन्तु दुदोह भगवान् विभुः ॥
दुग्धेयं गौस्तदा तेन सस्यानि पृथिवीतले ।
जज्ञिरे तानि बीजानि ग्राम्यारण्यास्तु ताः पुरा ॥
ओषध्यः फलपाकान्ताः गणाः सप्तदश स्मृताः ।
व्रीहयश्च यवाश्चैव गोधूमाश्चाणवस्तिलाः ॥
प्रियङ्गवो ह्युदाराश्च कोरदूषाः सचीनकाः ।
माषा मुद्गा मसूराश्च निष्पावाः सकुलत्थकाः ॥
आढक्यश्चणकाश्चैव गणाः सप्तदश स्मृताः ।
इत्येता अभवन् ग्राम्यास्तथारण्याश्च जज्ञिरे(१) ॥

(१) इत्येता ओषधीनान्तु ग्राम्याणां जातयः पुरा इति ग० ।

ओषध्यो यज्ञियाश्चैव ग्राम्यारण्याश्चतुर्दश ।
व्रीहयश्च यवाश्चैव गोधूमाश्चाणवस्तिलाः ॥
प्रियङ्गुसहिता ह्येते सप्तमास्तु कुलत्थकाः ।
श्यामाकास्त्वथ नीवारा जर्त्तिलाः सगवेधुकाः ॥
कुरुविन्दा मर्कटकास्तथा वेणुयवाश्च ये ।
ग्राम्यारण्याः स्मृता ह्येता ओषध्यश्च चतुर्दश ॥

फलपाकेन अन्तो नाशो यासान्ताः' फलपाकान्ताः'। 'व्रीहयः' षष्टिकाः। सितगौरमहाव्रीहि-कृष्णव्रीहि-जतुमुख-कुक्कुण्डक-लावक-परापतक-सूकर-कोद्दाल-कोजाल—चीनशार-वर्दुर-गन्धन-कुरुविन्द-पाटलादयः। 'अणवः' वरयिकाः। 'प्रियङ्गुः' कङ्गुः, उदारचीनः। 'कुरु-विन्दाः' व्रीहिविशेषाः। 'कोरदूषकः' कोद्रवः। 'नीवाराः' अरण्य-व्रीहयः। 'जर्त्तिलाः' कृष्णतिलाः। 'गवेधुकाः' कुसुम्भबीजसदृशाः। 'मर्कटकः' तृणधान्यविशेषः। 'वेणुयवाः' वंशबीजानि, 'यज्ञियाः' यज्ञार्हाः।

ब्रह्मवैवर्त्ते ।

त्वष्ट्रा वै यजमानेन वार्य्यमाणो महात्मना ।
पपौ शचीपतिः सोमं पृथिव्यां विप्रुषोऽपतन् ॥
श्यामाकास्तु ततो जाताः पित्रर्थमपि पूजिताः ।
गोधूमाश्च यवाश्चैव समुद्गा रक्तशालयः ॥
एते सोमात् समुद्भूताः पितॄणाममृतं ततः ।
तस्मात् प्रयत्नतो देया एते श्राद्धेषु वंशजैः ॥

वायुपुराणे ।

लब्ध्वा वै वार्य्यमाणस्य शचीशस्य महात्मनः ।
शक्रस्य पिवतः सोमः पृथिव्यामपतत्पुरा ॥
श्यामाकास्तत उत्पन्नाः पित्रर्थमभिपूजिताः ।
विप्रुषस्तस्य कतिचित् पृथिव्यामपतन् पुरा ॥
लिप्सिताः शीतला हृद्या मधुरास्तत इक्षवः ।
श्यामाकैरिक्षुभिश्चैव पितॄणां सार्वकामिकं ।
कुर्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥
श्यामाका हस्तिनामाना विद्धि तान् यज्ञनिश्रितान् ।
यस्मात्ते देवसृष्टास्तु तस्मात्ते यज्ञियाः स्मृताः ॥

मत्स्यपुराणे ।

अमृतं पिवतो वक्त्रात् सूर्य्यस्यामृतविन्दवः ।
निपेतुर्ये तण्डुलादिशालिमुद्गेक्षवः स्मृताः ॥
शर्करापरतस्तस्मादिक्षुसारोऽमृतात्मवान् ।
दृष्टा रवेरतः पुण्या शर्करा हव्य-कव्ययोः ॥

'शालयः' रक्तशालि-महाशालि-कलम-तूर्णक-शकुनाहृ-सारामुख-दीर्घशूक-रोध्रशूक-सुगन्ध-पतङ्ग-तपनीयादयः । 'मुद्गाः' शिम्बिधान्य-विशेषः । 'इक्षवः' पौण्ड्रक-वांशिक-कर्म्मार-नेपालशात-शातपर्वकादयः । 'शर्करा' इक्षुविकारविशेषः । मत्स्यण्डिका-खण्डसितादयो यद्भेदः ।

नागरखण्डे ।

सृष्टिं प्रकुर्वता पूर्व्वं पशवो लोककारिणा ।
खड्ग-वाध्रीण-शार्दूलाः पूर्वं सृष्टास्ततोऽपरे ॥
यो यथा प्रथमं सृष्टः स तथा मेध्यतां गतः ।

यथैते प्रथमं सृष्टाः पशवोऽत्र नराधिप ॥
शस्यानि सृजता तद्वत्तिलाः पूर्वं विनिर्मिताः ।
ततो यवा व्रीहयश्च ततश्चैव प्रियङ्गवः ॥
गोधूमाश्च मसूराश्च माषा मुद्गास्तथाणवः ।
नीवाराश्चापि श्यामाका एवं सृष्टा यथाक्रमं ॥
यदा पुष्पलताः सृष्टास्तदा प्राक् शतपत्रिका ।
सृष्टा तेन च पुण्या सा श्राद्धकर्मणि सर्वदा ॥
शाकानि सृजता पूर्वं कालशाकः स्वयम्भुवा ।
असृज्यत ततः श्राद्धे स स्यादक्षयकारकः ॥
धातूंश्च सृजता पूर्वं रूप्यं सृष्टं स्वयम्भुवा ।
तेन तद्विहितं श्राद्धे दक्षिणार्थं द्विजोत्तमाः ॥
राजतानि च पात्राणि पितॄणां प्रीतये ततः ।
रसांश्च सृजता पूर्व्वं मधु सृष्टं स्वयम्भुवा ॥
तेन तच्छस्यते श्राद्धे पितॄणां तुष्टिदायकम् ।
यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि ॥
मिष्टान्नैरपि संयुक्तं पितॄणान्नैव तृप्तये ।
अणुमात्रमपि श्राद्धे यदि न स्यात्त माक्षिकं ॥
नामापि कीर्त्तनीयं स्यात् पितॄणां प्रीतये ततः ।
वीरुधः सृजता तेन दर्भाः सृष्टाः पुरा नृप ॥
तेन ते मेध्यतां प्राप्ता विशेषात् श्राद्धकर्मणि ।
पात्राणि सृजता तेन विधिना नृपसत्तम ॥
योगिनः प्रथमं सृष्टाः श्राद्धार्हास्तेन ते स्मृताः ।

पशून् वै सृजता तेन पूर्वं गावो विनिर्म्मिताः ॥
तेन तासां पयः शस्तं श्राद्धे सर्पिर्विशेषतः ।
प्रजा वै सृजता तेन पूर्वं सृष्टा द्विजोत्तमाः ।
तेन तैस्तर्पितैः श्राद्धे पितृतृप्तिः प्रजायते ॥
देवांश्च सृजता तेन विश्वेदेवाः पुरा कृताः ।
तेन ते प्रथमं पूज्याः प्रवृत्ते श्राद्धकर्मणि ॥
एतैर्मुख्यतमैः सृष्टैः पुरा श्राद्धं विनिर्मितं ।
स्वयं पितामहेनैव ततो देवा विनिर्म्मिताः॥
तेन ते पूर्वलोकेषु गताः ख्यातिं परां नृप ।
एतत् श्राद्धस्य सर्वस्वं मया ते परिकीर्त्तितं ॥
पितृणां परमं गुह्यं दत्तस्याक्षयकारकं ।
यश्चैतत्कीर्त्तयेत् श्राद्धे क्रियमाणे नृपोत्तम ।
विप्राणां भोक्तुकामानां तच्छ्राद्धं चाक्षयं भवेत् ॥
यश्चैतच्छृणुयाद्राजन् सम्यक्श्रद्धासमन्वितः ।
विहितस्य भवेत्पुण्यं श्राद्धस्य तदवाप्नुयात् ॥

इति व्रीह्यादिद्रव्योत्पत्तिः ।

अथ ग्राह्याणि धान्यानि निरूप्यन्ते ।

मनुः ।

हविर्यच्चिररात्राय यच्चानन्त्याय कल्प्यते ।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः ॥

चिररात्रशब्दो दीर्घकालवचनः । यच्चानन्त्याय केनचिद्धविषा

दीर्घकाला तृप्तिर्जायते, केनचिदनन्तेव तदुभयं ब्रवीमीति प्रणिधानार्थमुच्यते । कल्पते प्रीतय इत्यध्याहार्य्यम् ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणां ॥

तिलादिग्रहणं नेतरधान्यपरिसङ्ख्यानार्थम् । किन्तु पात्राणां फलविशेषप्रदर्शनार्थम् ।

कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥

'कालशाकं' कालिकाशाकं । 'महाशल्काः' शल्यका उच्यन्ते । अन्ये तु मत्स्यान् शल्कानाहुः । 'खड्गः' गण्डकः । 'लोहः' कृष्णच्छागः सर्व्वरक्तो वा । 'कृष्णच्छागस्तथा रक्त आनन्त्यायैव कल्प्यते' इति स्मरणात् । लोहशब्दो वर्णलक्षणतया तद्गुणयुक्ते छागे वर्त्तते । 'कृष्णायसे च ताम्रे च लोहशब्दः प्रयुज्यते' इत्यभिधानात् । यद्यपि चैष वर्णो मेषादिष्वपि सम्भवति तथापि स्मृत्यन्तरप्रसिद्धः छाग एव गृह्यत इति । अन्ये तु शकुनिर्लोहपृष्ठनामा देवदत्तो दत्त इतिवदुच्यत इत्याहुः । 'मधु' माक्षिकं । 'मुनयः' वानप्रस्थाः, तेषां 'अन्नानि' नीवारादीनि ।

तथा ।

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतं ।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥

'पयः' क्षीरं, अस्य विकारा अपि दध्यादयो गृह्यन्ते । स्मृतिसदाचारानुसारात् । 'सोमः' ओषधीविशेषः । 'अनुपस्कृतं' अविकृतं ।

अप्रशस्तविकाररहितं, अप्रतिषिद्धञ्च । 'अक्षारलवणं' क्षारमृत्तिका-कृतलवणादन्यल्लवणं। क्षारञ्च लवणञ्चेति द्वन्द्वगर्भे हि नञ्समासे वृत्तिद्वयमाश्रयणीयं प्रतिपदञ्च नञ्सम्बन्ध इत्येतद्गौरवं स्यात्। 'प्रकृत्या हविः' इत्येत् अनाश्रितविशेषासु हविष्येण वर्त्तते, हविषा प्रातराशं भुङ्क्ते इत्याद्यासु सामान्यचोदनासु विज्ञेयं ।

आह प्रचेताः ।

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्यु र्नवशालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ।
कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्मणि ॥

'श्वेताः' शिरशूकाः, महायवा व्रीहियवाश्च यवविशेषाः । 'मधूलिकाः' यावनालविशेषः । अस्यैव विशेषणं कृष्णाः श्वेताश्च लोहाश्चेति । 'लोहाः' लोहिताः । शालिविशेषा वा 'मधूलिकाः' ।

अत्रिरपि ।

अगोधूमञ्च यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

ब्रह्मपुराणे ।

यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा
सन्तर्पयेत् पितॄन् मुद्गैः श्यामाकैः सर्षपद्रवैः ।
नीवारैश्च तथा माषैः प्रियङ्गुभिरथार्चयेत् ॥

'चणकः' हरिमन्थकः, महाराष्ट्रदेशेऽश्वाहारत्वेन प्रसिद्धः । 'सर्षपाः' गौरसर्षपाः ।

मार्कण्डेयपुराणे ।

राजश्यामाकश्यामाकौ तद्वच्चैव प्रशान्तिका ।

नीवाराः पौष्कराश्चैव षण्मासं पितृतृप्तये ॥
यवमाषौ सगोधूमौ तिलमुद्गाः ससर्षपाः ।
प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥

'प्रशान्तिका' मध्यदेशे प्रसिद्धोधान्यविशेषः । 'पौष्कराः' पद्मबीजानि । 'निष्पावाः' वल्लाः ।

ब्रह्मवैवर्त्ते ।

प्रशान्तिका प्रियङ्गुश्च ग्राह्या स्याच्छ्राद्धकर्मणि ।
एतान्यपि समानानि श्यामाकानाङ्गुणैस्तु तैः ॥

कूर्म्मपुराणे ।

व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा ।
श्यामाकैश्चणकैः शाकैर्नीवारैश्च प्रियङ्गुभिः ।
गोधूमैश्च तिलैर्मुद्गैर्मासम्प्रीणयते पितॄन् ॥

व्यासः ।

हवींषि श्राद्धकाले तु यानि श्राद्धविदो विदुः ।
तानि मे शृणु काम्यानि फलञ्चैषां युधिष्ठिर ॥
वर्द्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् ।
सर्व्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ॥

'वर्द्धमानतिलं' तिलबहुलं ।

विष्णुधर्म्मोत्तरे ।

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥

'सतीनाः' कलायाः ।

कलायस्तु सतीनक इत्यभिधानात् ।

इति ग्राह्याणि धान्यानि ।

अथ वर्ज्यानि धान्यानि ।

तत्र वायुपुराणे ।

अकृताग्रयणं धान्यजातं वै परिपाटलाः ।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥

नवान्ननिष्पत्तावाहिताग्नेरिष्टिविशेषः 'आग्रयणं' । अनाहिताग्नेस्तु नवान्नेन 'आग्रयणं' ।

तदुक्तं वायुपुराणे ।

श्यामाकैरिक्षुभिश्चैव पितॄणां सार्व्वकामिकं ।
कुर्य्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयादिति ॥

'धान्यजातं' विहितं धान्यमात्रं । 'परिपाटलाः' प्रादेशमात्राः । शिम्बिसम्बन्धि-नीलसान्द्रापरनामधेयाः 'राजमाषाः' । 'अणवः' व्याख्याताः । 'मसूरः' मङ्गल्यकाख्यश्चिपिटाकृतिः शिम्बिधान्यविशेषः ।

षट्त्रिंशन्मते ।

कृष्णधान्यानि सर्व्वाणि वर्जयेच्छ्राद्धकर्मणि ।
न वर्जयेत्तिलांश्चैव मुद्गान् माषांस्तथैव च ॥

अत्र तिलमुद्गमाषाणामवर्जनमुच्यमानं न तज्जातिमात्रेण सम्बध्यते, किन्तु कृष्णवर्णत्वेनैव । प्रसक्ते हि वर्जने तन्निषेधो वक्तव्यः । वर्जनप्रसक्तिश्च कृष्णानामेव । कृष्णधान्यवर्जनेन सहैकवाक्यतापन्नत्वाच्चार्थस्य प्रतिप्रसवस्य कृष्णैकविषयत्वं । कृष्णेतराणान्तु तिलमुद्गमाषाणां न

विधिर्न निषेधः। यत्तु स्मृतिचन्द्रिकाकारेण भरद्वाजवचने मुद्गमाषयोः सामान्यतोनिषेधोदर्शितः,'मुद्गाढ़कीमाषवर्जं विदलानि दद्यात्"इति। स तु नञभाव-भ्रान्तिमूलकः। अन्यथा सर्व्वस्मृतिपुराणनिषिद्धानां कुलत्थमसूरादीनां ग्राह्यत्वमापद्येत। दृश्यते च महार्णवादिषु नञ्युक्त एव पाठः, "मुद्गाढ़कीमाषवर्जं विदलानि न दद्यात्" इति'।

'आढ़की' तुवरीशब्दवाच्यः शिम्बिधान्यविशेषः। 'मुद्गमाषौ' प्रसिद्धौ। भ्रमत्पाषाणयन्त्रगर्भसंभृतानि धान्यानि प्रायशो द्विधा-भिद्यन्ते, तानि विदलानि मसूरप्रभृतीनि। अस्मिंश्च ग्राह्यवर्ज्यधान्य-प्रकरणे श्वणकाढ़कीनिष्पावादीनां विधिर्दृश्यते स कृष्णेतरविषयः। यस्तु निषेधः स कृष्णविषय इति पूर्व्वप्रदर्शितकृष्णधान्यवर्जनवचन-वशाद्व्यवस्थापनीयं। विहितप्रतिषिद्धन्यायाद्विकल्पो वा वक्तव्यः।

आह सुमन्तुः।

"बीजपूरकमाषञ्च न श्राद्धे दद्यात्" इति। 'बीजपूरकं' मातुलुङ्गं।

महार्णवे हारितवचनपाठः।

"पालङ्क्या-नालिका-पोतीक-शिग्रु-लसुक-वार्त्ताक-भूस्तृण-माष-मसूर-कृतलवणानि च श्राद्धे न दद्यात्"।

शार्ङ्गधरे पाठान्तरं। "पालङ्क्या-पोतका-नालिका-लसुक-निष्पा-व-मसूर-चणकादि श्राद्धे न दद्यात्" इति।

पालङ्क्यादीनां व्याख्यानं शाकप्रकरणे करिष्यते। 'कृतलवणं' क्षारमृत्तिकया कृतं लवणं। अत्र माषाः कृष्णमाषेतरे राज-माषशब्दवाच्याः। ते हि "वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथैव च" इत्यादिवचनैर्निषिद्धाः।

ननु ये राजमाषशब्दवाच्यास्ते कथं केवलमाषशब्देन प्रत्येतव्याः, न हि द्विजराजशब्दाभिधेयं केवलेन द्विजशब्देन प्रत्याययितुं शक्यते। विशेषेषु सामान्यस्य विद्यमानत्वात् सामान्यशब्देन तत्-प्रत्ययो न विरुध्यते। यथा शालिशब्देन लोहितशालि-महाशालि-प्रत्ययः। यत्र तु तद्विशेषावच्छेद्यसामान्यवाचकत्वाभावो न तत्र तेन यथा प्रत्ययः। अपि च वाचकशब्दैकदेशा अपि वाचका दृश्यन्ते। यथा मातुलुङ्गो लुङ्ग इति।

चतुर्विंशतिमते।

कोद्रवा राजमाषाश्च कुलत्था वरकास्तथा।
निष्पावाश्च विशेषेण पञ्चैतांस्तु विवर्जयेत्।
यावनालानपि तथा वर्जयन्ति विपश्चितः॥

'कुलत्थाः' मुद्गवत्सूपयूषाद्यनेकोपकारकारित्वेन शिम्बिधान्य-विशेषरूपाः प्रसिद्धाः। ते च श्वेताः कृष्णाश्च द्विविधा अपि वर्ज-नीयाः। कृष्णमुद्गादिवत् प्रतिप्रसवाभावात्। 'वरकाः' वनमुद्गाः। 'यावनालाः' जोन्धलाः। ते च मधूलिकाख्यजोन्धलव्यतिरिक्ता एव वर्ज्याः। मधूलिकाशब्दं शालिभेदवचनं वा वर्णयन्ति। तन्मते सर्व एव यावनालाः वर्जनीयाः।

आह निगमः।

यावनालानपि तथा वर्जयन्ति विपश्चितः।
तैलमप्यापदि प्राज्ञाः संप्रयच्छन्ति याज्ञिकाः॥

तैलमपि विपश्चितो वर्जयन्तीत्यन्वयः। आपदि तूभयोरप्यभ्य-नुज्ञानार्थमाह। "आपदि प्राज्ञाः संप्रयच्छन्ति याज्ञिकाः"। इति तस्मा-

दन्यवस्त्वभावे आभ्यामपि श्राद्धं कर्त्तव्यमेवेत्यत्र तात्पर्य्यं । न प्राप्तस्य विलोपोऽस्ति पैतृकस्य विशेषत इति वचनात् ।

षट्त्रिंशन्मते ।

वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथैव च ।
विप्रुषीका मसूराश्च श्राद्धकर्म्मणि गर्हिताः ॥

'मर्कटकाः' लङ्काः । 'विप्रुषीकाः' शालिभेदाः ।

कात्यायनः ।

श्राद्धे न देयाः पालङ्क्या निष्पावाः सहकोद्रवाः ।
मसूर-चार-वार्त्ताक-कुलत्थ-शण-शिग्रवः ॥

'चारः' यवक्षारादिः । 'वार्त्ताकं' कण्टकारिकाफलात् किञ्चिदधिकपरिमाणं तदाकृतिक्षुद्रवार्त्ताकीसंज्ञकवृहतीफलं । 'शणः' धान्यविशेषः । अस्य स्वयंजातस्य सर्वदा प्रतिषिद्धत्वादत्र प्राप्त्यसम्भवेऽपि कृष्यादिजातस्य प्राप्तिसम्भवात् । शिग्रोरपि रक्तपुष्पस्य सर्वदा निषिद्धत्वेनात्र प्राप्त्यभावेऽपि श्वेतपुष्पस्य पत्रशाकत्वेन प्राप्तिरस्तीति प्रतिषेधोऽर्थवान् । अथवा पुरुषार्थे प्रतिषेधे कृतेऽपि श्राद्धवैगुण्यपरिहारार्थं पुनःप्रतिषेधः ।

आह मरीचिः ।

कुलत्थाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः ।
कटुकानि च सर्वाणि विरसानि तथैव च ॥

'कटुकानि' पिप्पल्यादीनि ।

वर्जयेदित्यनुवृत्तौ विष्णुस्मृतिः ।

राजमाष-मसूर-पर्युषितकृतलवणानि च ।

'पर्युषितम्' मोदकादिवर्ज्यं ।

शङ्खः ।

राजमाषान्मसूरांश्च कोद्रवान् कोरदूषकान् ।
लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥

अत्र 'कोरदूषकः' वनकोद्रवः ।

महाभारते ।

अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।

'कोद्रवाः' कोरदूषकाः । 'पुलकाः' कोद्रवाद्यपेक्षया सूक्ष्माणि धान्यानि। स्यात् पुलाकः सूक्ष्मधान्य इत्यनुशासनात्। मध्याक्षरदीर्घाभावः पुराणे छान्दसः ।

पद्मपुराणे ।

दारुणाश्च प्रवक्ष्यामि श्राद्धे वर्ज्यानि नित्यशः ।
मसूर-शण-निष्पाव-राजमाष-कुलत्थकाः ॥
कोद्रवोद्दाल-वरक-कुसुम्भ-मधुकातसी ।
एतानि नैव देयानि पितॄणां प्रियमिच्छता ॥

'मधुकं' ज्येष्ठीमधु । तच्छाकत्वेन शाकसंस्कारकद्रव्यत्वेन वा प्रसज्यमानं निषिध्यते । 'अतसी' उमासंज्ञिका तैलप्रकृतिभूतानामतिमसृणानां चिपिटाकृतीनां बीजानामुत्पादिका ओषधिः । सा शाकत्वेन तैलप्रकृतित्वेन वा प्रसक्ता सती निषिध्यते ।

मत्स्यपुराणे ।

द्वेष्याणि संप्रवक्ष्यामि श्राद्धे वर्ज्यानि यानि च।
मसूर-शण-निष्पाव-राजमाष-कुसुम्भिकाः ।

कोद्रवोद्दाल-वरक-कपित्थ-मधुकातसी ॥

'कपित्थं' दधित्थं फलं ।

विष्णुपुराणे ।

श्राद्धे न देयाः पालङ्क्यास्तथा निष्पाव-कोद्रवाः ।

मसूर-चार-वार्त्ताक-कुलत्थ-शण-शिग्रवः ॥

ब्रह्माण्डपुराणे ।

सर्व्वश्राद्धेऽञ्जनं पुष्पं कुसुम्भं राजसर्षपाः ।

तोवरी राजमाषञ्च कोद्रवं कोरदूषकं ।

वर्ज्यञ्चापक्रियं सर्व्वं निम्बि यत्नाहृतं जलं ॥

'अञ्जनं पुष्पं' अञ्जनद्रुमकुसुमं । 'तोवरी' तुवरी । 'अपक्रियं' अपगतस्वोचितक्रियं । अपक्रियं चान्नं यथोचितक्रियाराहित्येन विनष्ट-प्रशस्तरसगन्धवर्णमिति यावत् ।

मार्कण्डेयपुराणे ।

वर्ज्याश्चाभिषवा नित्यं शतपुष्पं गवेधुकं ।

'अभिषवाः' सन्धानानि । 'शतपुष्पं' निम्बिः ।

ब्रह्मपुराणे ।

राजमाषानणूंश्चैव मसूरान् कोरदूषकान् ।

विप्रुषान् मर्कटांश्चोरान् कोद्रवांश्चापि वर्जयेत् ॥

'चोरः' चोरकः ।

मार्कण्डेयपुराणे ।

वर्ज्या मर्कटकाः श्राद्धे राजमाषास्तथाणवः ।

विप्रूषिका मसूराश्च श्राद्धकर्म्मणि गर्हिताः ॥

कूर्मपुराणे।

आढ़कीं कोविदारांश्च पालङ्क्यां मरिचं तथा।
वर्जयेत् सर्व्वयत्नेन श्राद्धकाले द्विजोत्तमः॥

'कोविदारः' काञ्चनपुष्पं। मरिचान्यार्द्राणि स्वतन्त्रशाकतया प्राप्तानि प्रतिषिध्यन्ते न तु शाकसंस्कारकद्रव्यत्वेन शुष्काणि।

ब्रह्मवैवर्त्ते।

राजमाषास्तथैवान्ये वर्ज्याः सद्भिः प्रयत्नतः।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनं।
वर्ज्याश्चातियवा नित्यं तथा दुरालभा यवा॥

'अतियवाः' शालिभेदाः। 'श्रीनिकेतनं' रक्तविल्वं।

देवलः।

न वीजान्युपयुञ्जीत रोगापत्तिमृते वुधः।
फलान्येषामनन्तानि वीजानां हि विनाशयेत्॥

'रोगापत्तिमृते' रोगाद्यापदं विना 'नोपयुञ्जीत' न नियुञ्ज्यात्। उपयुञ्जानो हि तज्जन्यां भूयसीं शस्यसमृद्धिं नाशयेत्।

इति वर्ज्यानि धान्यानि।

अथ ग्राह्यानि फलमूलानि।

तत्र आह शङ्खः।

आम्रान् पालेवतानिक्षून्मृद्वीका-भव्य-दाड़िमान्।
विदार्य्यांश्च भरण्डांश्च श्राद्धकाले प्रदापयेत्।
दद्यात् श्राद्धे प्रयत्नेन शृङ्गाट-विस-केवुकान्॥

'आम्राः' चूतफलानि। 'पालेवतं' जम्बीराकारं फलं काश्मीरेषु

प्रसिद्धं। 'मृद्वीका' द्राक्षा। 'भव्यं' कर्मरङ्गं। 'विदार्यान्' भूकुष्माण्डीकन्दान्। कृष्णकूष्माण्ड्याः फलानि वा। 'भरुण्डाः' काश्मीरदेशे प्रसिद्धाः। 'शृङ्गाटकं' जलजं त्रिकटं। "शृङ्गाटोजलकन्दः स्यात् त्रिकोणस्त्रिकटस्त्रिकः" इति मदननिघण्टः। 'बिसं' पद्मिनीमूलं। 'केवुकं' आर्द्रकसदृशः कन्दः महाराष्ट्रदेशे प्रसिद्धः। केवुकस्य विषेधस्त्वारण्यककेवुकविषयो वर्णनीयः।

ब्रह्मपुराणे।

आम्रमाम्रातकं विल्वं दाड़िमं बीजपूरकं।
चीणाकं लकुचं जम्बु भव्यं भूतं तथारुकं॥
प्राचीनामलकं चीरं नारिकेलं परूषकं।
नारङ्गञ्च सखर्जूरं द्राक्षा नीलकपित्थकं॥
पटोलञ्च प्रियालञ्च कर्कन्धुवदराणि च।
वैकङ्कतं वत्सकञ्च एर्वारुर्व्वारुकानि च।
एतानि फलजातीनि श्राद्धे देयानि यत्नतः॥

'आम्रातकं' कपीतस्य फलं। 'विल्वं' बालश्रीफलं। 'चीणाकं' अतिदीर्घाकारमेर्वारुकसदृशं। 'लकुचं' लिकुचस्य फलं एलावनेषु प्रसिद्धं। 'जम्बु' राजजम्बूफलं। 'भूतं' बहिःकेसरावृतं फलं कर्णाटदेशे प्रसिद्धं। 'आरुकं' आरण्यैर्व्वारुकं। 'प्राचीनामलकं' पानीयामलकं। 'चीरं' राजादनफलं। 'नारिकेलं' प्रसिद्धं। 'परूषकं' कुङ्कणे प्रसिद्धं। नारङ्गादीनि प्रसिद्धानि। 'नीलकपित्थकं' हरितवर्णं दधित्यस्य फलं। 'पटोलं' स्वादुपटोलीफलं। 'प्रियालं' चारवृक्षस्य फलं। 'कर्कन्धुः' आरण्यबदरीफलं। 'वैकङ्कतं' स्रुवद्रुमस्य

फलं। 'वत्सकं' कुटजस्य फलं। 'एर्वारुः' स्वादुकर्कटी। 'वारुकानि' वारुकीफलानि। 'फलजातीनि' फललजातियुक्तानीत्यर्थः। यत्नत इति वचनमेषामन्येभ्योविशिष्टतां गमयन्ति न त्वन्यनिवृत्त्यर्थं। अत एषामलाभेऽपि भोज्यवैचित्र्यार्थमन्येषामपि फलानां नित्यनिषेधवचनैरनिषिद्धानां श्राद्धे देयत्वमभ्यनुज्ञातं भवति।

तथा।

कालशाकं तन्दुलीयं वास्तुकं मूलकं तथा।
शाकमारण्यकञ्चैव दद्यात् पुष्पाण्यमूनि च॥

'तन्दुलीयः' अल्पमारिषः। 'वास्तुकं' कण्टवास्तुकं। मूलकशब्देन दीर्घमूलकं ग्राह्यं। पिण्डमूलकस्य निषिद्धत्वात्। 'आरण्यकशाकानि' फञ्जीचुञ्चुप्रभृतीनि। अमूनीति वक्ष्यमाणाभिप्रायेण।

तथा।

दाड़िमं मागधी चैव नागरार्द्रकतिन्तिड़ीः।
आम्रातकं जीरकञ्च कुम्बरञ्च नियोजयेत्[१]॥

'मागधी' पिप्पली। 'नागरं' शुण्ठी। 'आर्द्रकं' शृङ्गवेरं। 'तिन्तिड़ी' चिञ्चा। 'जीरकं' गौरजीरकं। 'कुम्बरं' कुस्तुम्बरं।

कूर्मपुराणे।

विल्वामलकमृद्वीकपनसाम्रातदाड़िमं।
भव्यं पारावताक्षोटखर्जूराम्रफलानि च॥
कसेरुः कोविदारश्च तालकन्दस्तथा विसं।
तमालं शतकन्दश्च मध्वालुः शीतकन्दली॥

(१) कुम्बरं प्रतियोजयेदिति ग०।

कालेयं कालशाकञ्च सुनिषण्णः सुवर्चला ।
मांसं शाकं दधि क्षीरं चुञ्चुर्वेत्राङ्कुरस्तथा ॥
कट्फलं कौङ्कणी द्राक्षा लकुचम्मोचमेव च ।
उष्ट्रग्रीवं कचोरञ्च तिन्दुकं मधुसाह्वयं ॥
वैकङ्कतं नारिकेलं शृङ्गाटकपरूषकं ।
पिप्पली मरिचञ्चैव पटोलं बृहतीफलं ॥
सुगन्धगन्धि सिञ्चन्ती कलायाः सर्व्व एव च ।
एवमादीनि चान्यानि स्वादूनि मधुराणि च ।
नागरञ्चात्र वै देयं दीर्घमूलकमेव च ॥

'आमलकं' धात्रीफलं। 'पनसं' कण्टकिफलस्य फलं। 'पारावतं' पालेवतं। 'आखोटं' द्वीपान्तरीयपीलुफलं 'आखरोट'इति प्रसिद्धं। 'कसेरुः' पल्वलेषु रोमशः कन्दः सेरुनाम्ना प्रसिद्धः। 'कोविदारं' काञ्चनारस्य तत्सदृशस्य वा वृक्षविशेषस्य कोमलावस्थं फलं पुष्पं वा। कोविदारस्य निषेधोऽपि वच्यते, अतो विकल्पः। 'तालकन्दः' भूम्यन्तर्निहिततालफलप्रभवमारब्धफलाकारं पाण्ड्यदेशादौ प्रसिद्धं मूलं। तालमूलीकन्दो वा 'तालकन्दः'। 'तमालं' तापिञ्छं। 'शतकन्दं' शतावरी। 'मध्वालुः' दीर्घरोमा मधुरैकरसः कन्दविशेषः मोहालुरिति प्रसिद्धः। 'शीतकन्दली' शीतकन्दः, शालूकमिति यावत्। 'कालेयं' करालाख्यं शाकमिति गोविन्दराजः। 'सुनिषण्णः' चाङ्गेरिसदृशो जलप्रभवः शाकविशेषः। सुणसुणेति प्रसिद्धः। 'सुवर्चला' आदित्यभक्ता। 'चुञ्चुः' चुचुरिति प्रसिद्धः। 'कट्फलं' कट्फलाख्यस्य वृक्षस्य फलं। 'कौङ्कणी द्राक्षा' कुङ्कणदेशप्रभवा। उपलक्षण-

श्चैतत् स्वादुरसाया द्राक्षायाः । 'मोचं' कदलीफलं। 'उष्ट्रग्रीवं' उष्ट्रग्रीवाकृतिफलमुत्तरापथे प्रसिद्धं। 'तिन्दुकं' शीतिसारकस्य फलं। 'मधुसाह्वयं' ज्येष्ठीमधु। 'वृहतीफलं' कण्टकारिकाफलं। 'सुगन्धगन्धि' कर्पूरकचोरकः। पिण्डालुकसदृशः चौरितपर्णः शेधौति लाटदेशे प्रसिद्धः। कन्दविशेष इत्यपरे। 'सिञ्चन्ती' रुदन्ती। 'दीर्घमूलकं' पिण्डकादन्यन्मूलकं।

वायुपुराणे।

विल्वामलकमृद्वीकमित्यादिकूर्मपुराणसदृशं पठित्वैतावान् विशेषोदर्शितः।

अगस्त्यस्य शिखास्ताम्राः कषायाः सर्व एव च।
सुगन्धि मत्स्यं मांसञ्च कलायाः सर्व एव च॥

'अगस्त्यः' मुनिद्रुमः, तस्य 'शिखाः' किशलयानि। 'ताम्राः' लोहिताः। 'कषायाः' कषायरसाः। अन्याः अपि चूतादिवृक्षाणां शिखाः।

प्रभासखण्डे।

विल्वामलकमृद्वीकं द्राक्षा चाम्रातदाड़िमं।
भव्यं पारेवतञ्चैव खर्जूराम्रफलानि च॥
कसेरुका वदर्य्यश्च तालकन्दस्तथा विसं।
तमालं शतकन्दश्च मध्वालुः शीतकन्दली॥
कालेयं कालशाकञ्च मुद्गान्नञ्च सुवर्च्चलं।
मांसं शाकं दधि चीरं चोरं वेत्राङ्कुरास्तथा॥
कट्फलं कतकं द्राक्षा लकुचं मोचमेव च।
प्रियालामलचुक्रीकास्तिन्दुकं मधुसाह्वयं॥

विकङ्कतं नारिकेलं शृङ्गाटकपरूषकं।
पिप्पली मरिचञ्चैव पटोलं वृहतीफलं ॥
आरामस्य तु सीमन्ताः कलायाः सर्व एव तु ।
एवमादीनि चान्यानि प्रशस्तानि श्राद्धकर्मणि ॥

'कतकं' जलप्रसादनं। 'चुक्रीका' चाङ्गेरी चिञ्चा वा। 'आरामस्य' उद्यानस्य 'सीमन्ताः' नवपल्लवानि ।

इति ग्राह्याणि फलमूलादीनि ।

अथ वर्ज्यानि फलमूलादीनि ।

वायुपुराणे ।

वर्जनीयानि वक्ष्यामि श्राद्धकर्मणि नित्यशः ।
लशुनं गृञ्जनञ्चैव पलाण्डुं पिण्डमूलकं ॥
कलम्बा यानि चान्यानि हीनानि रसगन्धतः ।
श्राद्धकर्मणि वर्ज्यानि कारणञ्चात्र वक्ष्यते ॥
पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः ।
ब्राह्मणेभ्यो विस्फुरन्तः पतितास्तोयबिन्दवः ॥
तत एतानि जातानि वर्ज्यानि श्राद्धकर्मणि ।
पिप्पली मरिचञ्चैव पटोलं वृहतीफलं॥
वांशं करीरं सुरसमर्जकं भूतृणानि च ।
अवेदोक्ताश्च निर्यासा लवणान्यूषराणि च॥
श्राद्धकर्मणि वर्ज्यानि याश्च नार्य्यो रजस्वलाः।

'लशुन-गृञ्जन-पलाण्डवः' पलाण्डुभेदाः। एतच्च भेदत्रयं सर्वेषामपि पलाण्डुभेदानामुपलक्षणार्थं। ते च भेदाः सुश्रुते दर्शिताः ।

लशुनं दीर्घपत्रश्च पिच्छगन्धा महौषधं।

करणश्च पलाण्डुश्च लतार्कश्च परारिका।

गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातय इति।

पलाण्डुशब्दश्चैतद्विशेषदशकव्यापके सामान्ये वर्त्तते। विशेषे चैकस्मिन् उभयत्र प्रयोगात्। तत्र हरिद्रक्तवर्णः 'गृञ्जनः'। श्वेतकन्दः 'पलाण्डुः'। लशुनादीनां तु भेदका धर्मा वैद्यकादौ द्रष्टव्याः। पिण्डाकृतिमूलं 'पिण्डमूलकं'। 'कलम्बा' वेणुपत्राकृतिपत्रो जलजः शाकभेदः कटुफला तुम्बी वा। पिप्पल्यः आर्द्राः स्वतन्त्रशाकतया प्रतिषिध्यन्ते। शुष्काणां तु संस्कारकत्वेनाभिमतत्वात्। पटोलं आरण्यपटोलस्य फलं न लता। लतायां हि पटोलस्तिक्तकः कटुरिति पटोलशब्दस्य लिङ्गानुशासने पुंलिङ्गतया प्रयोगात्। 'वृहतीफलं' क्षुद्रवार्त्ताकीफलं। 'वांशः करीरः' वंशाङ्कुरः। 'सुरसं' निर्गुण्डीपत्रं। 'अर्जकं' श्वेतकुठेरकपत्रं। 'भूस्तृणः' भूतीकसंज्ञकः शाकविशेषः। स च काश्मीरेषु प्रसिद्ध इत्येके। कलम्बीकेत्यपरे। स्मृतिचन्द्रिकाकारेण त्वेवमुपलक्षितः। यस्य नाले ग्रन्थिस्थाने परिमण्डलावयवा भवन्ति स भूस्तृण इति। अस्य च मालातृणकभूस्तृणौ इत्यभिधानकोशे वक्ष्यमाणासु च स्मृतिषु सुडागमसहितस्यैव प्रयोगो दृश्यते। अनस्तद्रहितस्यात्र प्रयोगः छान्दसः।

'अवेदोक्ताश्च निर्यासा' इति। वेदे भक्ष्यत्वेनाभ्यनुज्ञातेभ्योऽन्ये वृक्षनिर्यासा लोहितवर्णा व्रश्चनप्रभवाश्च निर्यासा इति यावत्।

अथो खलु य एव लोहितो यो वा व्रश्चनान्निर्वेषति तस्य नाश्यं काममन्यस्येति तैत्तिरीयश्रुतेः। 'व्रश्चनं' छेदः। तस्माल्लोहित-

वर्णादन्योऽपि वृक्षादीनां रसोनिर्याति, योवा व्रश्चनमन्तरेण लोहितवर्णो निर्याति तस्य रसस्यैकदेशोऽपि न भक्षणीयः। अन्यस्य तु कामं यथेष्टं भक्षणीयः। लवणानि क्षारमृत्तिकाकृतानि कृष्णानि विटसंज्ञकानि प्रत्यक्षाणि चात्र निषिध्यन्ते। स्मृत्यन्तरेष्वेतेषामेव निषिद्धत्वात्। तत्र प्रत्यक्षाणां निषेधं विष्णुराह।

न प्रत्यक्षं लवणं दद्यादिति।

कृष्णकृत्रिमविटानां तु निषेधः पुरस्ताद्दर्शयिष्यते। अतो न सामुद्रादीनामप्रत्यक्षाणां निषेधः। तथाच देयमित्यनुवृत्तौ ब्रह्मपुराणे।

गव्यं पयो दधि घृतं तैलञ्च तिलसम्भवं।
सैन्धवं लवणञ्चैव तथा मानससम्भवं।
पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यश इति॥

'सैन्धवं' सागरोत्थं। सैन्धवमानससम्भवयोस्तु प्रत्यक्षयोरप्यनिषेधः। तथा च ब्रह्मपुराणे।

शाकसंस्कारमरिचपिप्पलीवर्जं शुण्ठीवर्जञ्च कटुरसानि द्रव्याणि। लवणान्योषराणि चेत्यस्मिंस्तु पाके ऊषरमृत्तिकया कृतानि लवणानीति॥

'रजस्वलाः' त्रिरात्राद्यनन्तरमप्यनिवृत्तरजस्काः इति।

आह विष्णुः।

भूतृण-शिग्रु-सर्षप-कूष्माण्डालावु-वार्त्ताक-पालङ्क्या-तन्दुलीयक-कुसुम्भ-महिषीक्षीराणि वर्जयेदिति।

'शिग्रुः' सोभाञ्जनकः। तस्य रक्तपुष्पस्य सर्वदा निषिद्धत्वेनात्र प्राप्त्यभावेऽपि श्वेतपुष्पस्य पत्रशाकत्वेन प्राप्तिरस्तीति प्रतिषेधोऽर्थवान्।

सर्षपश्च राजसर्षपो विवक्षितो न तु सर्षपमात्रं, कुसुम्भं राजसर्षप इति स्मृत्यन्तरे विशेषप्रतिषेधात्। तस्य च शेषाभ्यनुज्ञार्थत्वात्। अतः सामान्यवचनं सर्षपविशेषे सङ्कोच्यं। सामान्यानि हि विशेषं प्रति साकाङ्क्षाणि विशेषमनुरुन्धन्ति। न तूपलक्षणीभूय विशेषः सामान्यानुसारी भवति। सामान्यापेक्षया विशेषस्य बलीयस्त्वात्। अन्यथैकस्मिन्नपि वाक्ये सामान्यशब्दोविशेषमुपलक्षणीकृत्य शब्दविशेषव्यवहारं हन्यात्। को ह्येकवाक्यगतस्य वाक्यान्तरगतस्य वा विशेषशब्दस्यास्ति विशेषः। यदि तु स्याद्विशेषः तर्हि चतुर्द्धाकरणं नाग्नेयपुरोडाश उपसंह्रियेत। अतः सर्षपोऽत्रराजसर्षप एव। अतश्च गौरसर्षपो ग्राह्य एव। 'कूष्माण्डं' कर्कारु। 'अलावु' तुम्बिनीफलं। तच्च वर्तुलमेव वर्ज्यं। अलावु वर्तुलञ्चेति वचनान्तरे विशेषदर्शनात्। 'वार्त्ताकं' क्षुद्रवार्त्ताकीफलं। पालङ्क्या' मुकुन्दाख्यो गन्धद्रव्यविशेषः। 'कुसुम्भं' प्रसिद्धं। कुसुम्भस्य चाकण्टकिनो नित्यनिषिद्धत्वात् कण्टकिनोऽपि कोमलावस्थस्य शाकत्वसम्भवान्निवृत्त्यर्थः प्रतिषेधः।

विष्णुवचने पाठान्तरं।

पिप्पली-सृसुक-भूतृणासुरी-सर्षप-सुरस-कूष्माण्डालावु-वार्त्ताक-पालङ्क्या-तन्दुलीयक-कुसुम्भ-पिण्डमूल-महिषीक्षीराणि वर्जयेदिति।

'सृसुकं' खदिरशाकं। 'आसुरी' राजसर्षपः। आसुरी चासौ सर्षपश्चेति वा विग्रहः। तथा च गौरसर्षपो न वर्ज्यः।

हारीतोऽप्याह।

पालङ्क्या-नालिका-पौतीक-शिग्रु-सृसुक-वार्त्ताक-भूस्तृण कफेल-माष-मसूर-कृतलवणानि च श्राद्धे न दद्यादिति।

नालिका नाम दीर्घनाला शिरोभागावस्थितस्वल्पपल्लवा जलाशयोद्भवा शाकत्वेन प्रसिद्धनालदलावलिः। 'पौतीकं' पौतिक आपादकेतिपर्यायाभिधेयं शाकं। 'कफेलः' 'आरण्यविशेषः' काश्मीरेषु प्रसिद्ध इति हारीतस्मृतिभाष्यकारः। 'कृतलवणानि' कृत्रिमलवणानि।

आह शङ्खः।

भूस्तृणं सुरसं शिग्रुः पालङ्क्या सुसुकं तथा।
कूश्माण्डालावु-वार्त्ताक-कोविदारांश्च वर्जयेत् ॥
पिप्पलं मरिचञ्चैव तथा वै पिण्डमूलकं।
कृतञ्च लवणं सर्वं वंशाग्रञ्च विवर्जयेत् ॥

'वंशाग्रं' वंशाङ्कुरः, न त्वग्रमात्रं।

शाट्यायनोऽप्याह।

मारिषं नालिका चैव रक्ता या च कलम्बिका।
असुरान्नमिदं सर्वं पितॄणां नोपतिष्ठति ॥

'मारिषः' जीवशाकसंज्ञकस्तन्दुलीयकसदृशस्तदपेक्षया स्थूलतरः शाकविशेषः। 'कलम्बिका' वेणुपत्राकृतिपल्लवा जलजैव, रक्तेतिविशेषणात् श्वेता न प्रनिषिध्यते।

मार्कण्डेयपुराणे।

वर्ज्याश्चाभिषवा नित्यं शतपुष्पा गवेधुका।
जम्बीरजं फलवर्ज्यं कोविदारञ्च नित्यशः ॥

सर्षप-लवणादियुक्तेषु जल-तक्र-काञ्जिका द्रवेषु निक्षिप्य त्रिपञ्चसप्ताहादिकालेनाम्लक्षारादिरसान्तरमप्युक्तं। अतो विकल्पः प्रशस्तजम्बूफलविषयो वा निषेधो वर्णनीयः। यस्य फलमूलाश्मादेरुपरि

केनचित् क्षुतं कृतं तदवक्षुतमित्युच्यते, यस्योपरि केनचिद्रोदनं कृतं तदवरुदितं। उपलक्षणञ्चैतदपवित्रश्लेश्मादिसंसर्गापादकानां निष्ठीवनादिक्रियाप्रसङ्गानां।

उशना अपि ।

नालिका-शण-छत्राक-कुसुम्भालाबु-विड्भवान् ।
कुम्भी-कम्बुक-वृन्ताक-कोविदारांश्च वर्जयेत् ॥
वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकं ।
करञ्जं येऽपि चान्ये वै रसगन्धोत्कटास्तथा ॥

'छत्राकं' शतपुष्पा, वर्षाकाले भूमौ वृक्षेषु वा समुद्भूतं छत्रमित्यपरे ।

"भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये । ब्रह्मघ्नांस्तान्विजानीयाद्ब्रह्मवादिषु गर्हितान्" इति । यमस्मरणात् ।

'विड्भवान्' विष्ठासंसर्गदूषितभूप्रदेशोद्भवान् । उपलक्षणञ्चैतदपवित्रभूप्रदेशसम्भवानां। 'कुम्भी' श्रीपर्णीका। 'कम्बुकं' वृत्ताकारमलाबुफलं। अलाबुशब्दस्तु पचादेः शाकत्वप्रतिषेधार्थोऽस्तु । कम्बुकमित्यत्राम्बुकमिति पाठान्तरं । 'वृन्ताकं' श्वेतवृन्ताकं । 'गृञ्जनं' गाजरइति प्रसिद्धम् । 'काञ्जिकं' ख्यातं। करञ्जं, नक्तमालफलं। एवमन्येऽपि ये 'रसगन्धोत्कटाः' आहत्योग्ररसगन्धयुक्ताः तेऽपि वर्जनीयाः ।

भारद्वाजः ।

नक्तोद्धृतन्तु यत्तोयं पल्वलाम्बु तथैव च ।
स्वल्पन्तु कूष्माण्डफलं वज्रकन्दश्च पिप्पली ॥
तन्दुलीयकशाकञ्च माहिषञ्च पयो दधि ।

ग्रैष्मिकानि करीराणि कोविदारं गवेधुकं ॥
कुलत्थ-शण-जीराणि करम्भाणि तथैव च ।
अब्जादन्यद्रक्तपुष्पं शिग्रुः क्षारस्तथैव च ॥
नीरसान्यपि सर्वाणि भक्ष्य-भोज्यानि यानि च ।
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणीति ॥

'नक्तोद्धृतं' रात्रौ जलाशयात् उद्धृतं पृथक्कृतं। 'पल्वलाम्बु' ग्रामे वा अरण्ये वा स्वल्पतरनिम्नावटद्रोण्यादिसम्भृतं जलं। पल्वलाम्बुनो विशेषणं स्वल्पमिति एकस्या अपि गोस्तृप्तेरपर्याप्तं। 'वज्रकन्दः' आरण्यसूरणः। माहिषमिति पयोदधिविशेषणान्माहिषमात्रं पयोदधि वर्ज्यमिति गम्यते। मसूरं, कृष्णाढ़की, कृष्णनिष्पावं, कृष्णचणकं, कृष्णेतरमाष-कृष्णेतरमुद्गादीनि शिम्बिधान्यानि ग्रैष्मिकानीत्युच्यन्ते। 'करीरः' पत्रशून्योवदराकृतिफलोजाङ्गलोद्भवोवृत्तविशेषः। 'जीरकं' कृष्णजीरकं, स्मृत्यन्तरे विशेषितत्वात्। 'करम्भाणि' दधिमिश्राः सक्तवः। अब्जशब्दोजलजातपुष्पजातिविशेषवचनः। 'क्षारः' सर्जिकायवक्षारादिः। 'नीरसानि' मन्दरसानि निकृष्टरसानि वा। 'भक्ष्याणि' दन्तैरवखण्ड्याव शीर्याणि, अवखण्डनमन्तरेणाभ्यवहारयोग्यानि 'भोज्यानि'। सर्वस्मिन्निति नित्यश्राद्धादन्यत्र सर्वस्मिन्। प्रतिदिनं हि कुष्माण्डादिद्रव्य-वर्जनपूर्वकमन्ननिष्पादनस्याशक्यत्वात्। अतएव नित्यश्राद्धं विषयीकृत्य रामायणादावुच्यते।

इङ्गुदैर्बदरैर्बिल्वैरामस्तर्पयते पितॄन् ।
यदन्नं पुरुषो भुङ्क्ते तदन्नास्तस्य देवता इति ॥

आह सुमन्तुः ।

बीजपूरकमाषाणि श्राद्धे न दद्यात् ।

ब्रह्मपुराणे ।

तालं करुणकाकोले बहुपुत्रार्जुनीफलं ।
जम्बीरं रक्तविल्वञ्च शालस्यापि फलं त्यजेत् ॥
अलाबु तिक्तपर्णौ च कुष्माण्डी कटुपत्रिका ।
वार्त्ताकं शिम्बिजातिञ्च लोमशानि जटीनि च ॥
कालिङ्गं रक्तचारञ्च चीणाकं धृतचारकं ।
श्राद्धकर्मणि वर्ज्यानि गन्धचिर्भटिकं तथा ॥
कपालं काकमाचीञ्च करम्भं पिण्डमूलकं ।
गृञ्जनं चुक्रिकां चुक्रं गाजरं पोतिकां तथा ॥
जीवकं शतपुष्पाञ्च नालिकां ग्राम्यशूकरं ।
हलं नृत्यं सर्षपञ्च पलाण्डु लशुनं त्यजेत् ॥
माणकन्दं तन्दुलीयं विषकन्दं गताश्रिगं ।
पुरुषालं सपिण्डालुं श्राद्धकर्मणि वर्जयेत् ॥
नोग्रगन्धञ्च दातव्यं कोविदारकशिग्रुकौ ।
अत्यम्लं पिच्छिलं रूक्षमन्यच्च मुनिसत्तम ॥
न वै देयं गतरसं मद्यगन्धञ्च यद्भवेत् ।
हिङ्गूग्रगन्धापनसं भूनिम्बनिम्बराजिके ।
कुस्तुम्बरं कलिङ्गोत्थं वर्जयेदम्लवेतसं ॥

तथा ।

कुसुम्भशाकं जम्बीरं शिग्रुकं कोविदारकं ।
पिण्याकं शिग्रुषाञ्चैव मसूरं गृञ्जनं शणं ॥

कोद्रवं कोकिलाक्षञ्च चुक्रं कम्बु च पद्मकं ।
चकोरश्येनमांसञ्च वर्तुलालावुनालिनीं ॥
फलं तालतरूणाञ्च भुक्त्वा नरकमृच्छति ।
दत्त्वा पितृभ्यस्तैः श्राद्धं व्रजेत् पूयवहं नरः ॥
तस्मात् सर्वप्रयत्नेन नाहरेत विचक्षणः ।
निषिद्धानि वराहेण स्वयं पित्रर्थमादरात् ॥

'करुणं' करुणस्य फलं गूर्जरदेशे प्रसिद्धं। 'काकोलं' काकोलीफलं उत्तरापथे प्रसिद्धं । 'बहुपुत्रा' शतावरी तस्या मूलं किसलयञ्च । 'अर्जुनीफलं' ककुभलताफलं । 'शालः' सर्जः । 'तिक्तपर्णी' कटुकरोहिणी । 'कटुपत्रिका' राजिका । 'शिम्बिजातिः' कुलत्थमसूरादिशिम्बिधान्यानि । 'रोमशानि' कपिजम्बूफलानि । 'रक्तचारं' लोहितचारफलं । 'धृतचारकं' चिरसंगृहीतचारबीजं । 'कपालं' नालिकेरं । गुड़मधुकाञ्जिकमस्त्वादिद्रवद्रव्यं धान्याद्युष्माणि त्र्यहसप्ताहादिकालमवस्थाप्यातिशुक्ततां नीतं 'चुक्रं' इत्युच्यते । 'गाजरं'गाजर इति लोके प्रसिद्धं । 'जीवकः' काकोल्यादिजीवनीयादिके पठिते जीवकसंज्ञयैवोत्तरापथे प्रसिद्धः । 'हलं' लाङ्गली । 'नृत्यं' नटी । 'उग्रगन्धा' वचा । 'भूनिम्बः' किराततिक्तकः । 'पिण्याकं' यन्त्रसमाकृष्टतैलानां तिलानां कल्कः । 'कोकिलाक्षः' ईक्षुरः, कोलिषा इति लोके प्रसिद्धः । 'पद्मकः' स्वनाम्नैव प्रसिद्धः । 'चकोरश्येनौ', पक्षिविशेषौ ।

मार्कण्डेयपुराणे ।

लशुनं गृञ्जनञ्चैव पलाण्डुं पिण्डमूलकं ।

करम्भं यानि चान्यानि हीनानि रसवर्णतः॥
गन्धारिकामलावूनि लवणान्यौषराणि च।
वर्जयेत्तानि वै श्राद्धे यच्च वाचा न शस्यते॥

'गन्धारिका' गंजाधिका सङ्कीत्यर्थः। यच्च वाचेति। दाना प्रदानकाले सत्कारार्थं वाचा यन्न स्तूयते तदपि श्राद्धसाद्गुण्याय न भवतीत्यर्थः।

तथा।

पूति पर्युषितञ्चैव वार्त्ताकाभिषवास्तथा।
वर्जनीयानि वै श्राद्धे तथा वसु च लोहितं॥

'पूति' दुर्गन्धं, 'लोहितं' वसुकाख्यं शाकं। यद्वा लोहितवर्णं वसु द्रव्यं करवीरपुष्पादि। अन्ये तु तथा वस्त्रञ्च लोहितमिति पठन्ति।

कूर्म्मपुराणे।

पिप्पलीं रुचकञ्चैव तथा चैव मसूरकं।
कुष्माण्डालावुवार्त्ताकभूस्तृणं सुरसं तथा॥
कुसुम्भं पिण्डमूलञ्च तन्दुलीयकमेव च।
राजमाषांस्तथा चीरं माहिषाख्यं विवर्जयेत्॥
आढ़कीं कोविदारञ्च पालङ्क्यां मरिचं तथा।
वर्जयेत् सर्व्वयत्नेन श्राद्धकाले द्विजोत्तमः॥

'रुचकं' सौवर्चलं।

पद्म-मत्स्यपुराणयोः।

पद्म-विल्वक-धुस्तूरपारिभद्राढ़रूषकाः।
न देयाः पितृकार्येषु पयश्चाजाविकं तथा॥

'पारिभद्रः' निम्बः । 'आढ़रूषकः' सिंहास्यः ।

महाभारते ।

हिङ्गुद्रव्येषु शाकेषु मालानं लशुनं तथा ।
पलाण्डुसौभाञ्जनकौ तथा गृञ्जनकादयः ॥
किम्पिण्डजान्यलाबूनि कृष्णं लवणमेव च ।
ग्राम्यं वराहमांसञ्च यच्चैवाप्रोषितं भवेत् ॥
कृष्णाजाजी विटञ्चैव शीतपाकी तथैव च ।
अङ्कुराद्यास्तथा वर्ज्या गृहशृङ्गाटकानि च ॥
वर्जयेल्लवणं सर्वं तथा जम्बुफलानि च ।
अवक्षुतावरुदितं तथा श्राद्धेषु वर्जयेत् ॥

किम्पिण्डजान्यलाबूनीत्यत्र कुकुण्डकान्यलाबूनीत्यपि पठन्ति । व्याचक्षते च 'कुकुण्डकानि' छत्राकसमानप्रकृतिद्रव्याणि पिण्डोपमानि । 'कृष्णं लवणं' सौवर्चलं । शाकादिसंस्कारद्रव्येषु मध्ये हिङ्गु वर्जनीयं। यत्तु हिङ्गुनो ग्राह्यत्वमुक्तं आदित्यपुराणे ।

मधुकं रामठञ्चैव कर्पूरं मरिचं गुडं ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रिपुसन्तथेति ॥

तद्विहितप्रतिषिद्धत्वाद्विकल्पेनेति मन्तव्यं। अन्ये तु तच्छेतहिङ्गु-विषयं वर्णयन्ति । लोहितान् वृक्षनिर्यासान् वर्जयेदिति स्मृत्यन्तरे-दर्शनात् । अन्ये च शाकसंस्कारद्रव्यान्तरालाभेऽनुकल्पत्वेन हिङ्गू-पादेयमित्याहुः । अपरे च शाकरूपादि हिङ्गुविषयं वदन्ति । हिङ्गुलवणमरिचानाममिश्रत्वेन प्रत्यक्षाणां निषेधादिति । एतत्तु हिङ्गुनः पृथक्भूतस्यानुपयोज्यत्वाल्लवणस्यैव च प्रत्यक्षस्य निषेधादयुक्तं ।

ब्रह्माण्डपुराणे ।

सुगन्धं पञ्चशिम्बञ्च कलायाः सर्व एव च ।
वांशं करीरं सुरसमर्जकं भूस्तृणानि च ।
भक्ष्यत्वेन निषिद्धञ्च न देयं श्राद्धकर्मणि ॥

'सुगन्धं' गन्धनाकुल्याः पत्रादि । निष्पाव-मसूर-राजमाष-मठ-कुलत्थाख्यानि पञ्चशिम्बिधान्यानि 'पञ्चशिम्बं' । यच्च धर्मशास्त्रेषु भक्षणीयत्वेन प्रतिषिद्धं तदपि न देयं ।

किं पुनस्तदित्यपेक्षायां पैठीनसिराह ।

वृन्ताक-नालिका-पौतीक-कुसुम्भाश्मन्तकाश्चेति शाका न भक्ष्याः इति ।

'वृन्ताकं' श्वेतवृन्ताकं ।

तथा च देवलः ।

कण्डूरं श्वेतवृन्ताकं कुम्भाण्डञ्च विवर्जयेत् ।

'कण्डूरं' कण्डूरायाः प्रावृषेऽण्यापरनामधेयायाः फलं । तच्चात्यन्तकण्डूतिजनकबहुरोमयुक्तं भवति । 'कुम्भाण्डं' कुम्भवद्वर्तुलमदीर्घालाबुसदृशं फलं । 'कुसुम्भं' कण्टकरहितं । स्मृत्यन्तरे विशेषितत्वादिति देवस्वामी ।

कुसुम्भादीनां भक्षणे दोषमाहोशनाः ।

कुसुम्भं नालिकाशाकं वृन्ताकं पौतिकं तथा ।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः(१) ॥

भविष्यत्पुराणे ।

(१) अपि दाता तथा द्विजः ।

लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च।
वार्त्ताकं नालिकालावु ह्यवेयाज्जातिदूषितं॥

एतज्जात्यैव दूषितं 'अवेयात्' जानीयात्।

हारीतः।

न वट-प्लक्षोदुम्बर-दधित्थ-नीप-मातुलिङ्गानि भक्षयेत्।

'दधित्थं' कपित्थफलं। 'नीपं' कदम्बपत्रं।

आह मनुः।

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।
शेलु गव्यञ्च पीयूषं प्रयत्नेन विवर्जयेत्॥

'शेलुः' श्लेष्मातकः। प्रसूताया दशाहं पयः 'पीयूषं'।

इति वर्ज्यानि फलमूलादीनि।

अथ ग्राह्याणि वर्ज्यानि च क्षीरादीनि।

कूर्मपुराणे।

क्षीरं क्षीरविकारश्च पायसं शर्करा मधु।
देयं श्राद्धेषु यत्नेन सर्वदा पितृतृप्तये॥

पद्मपुराणे।

अन्नञ्च सदधिक्षीरं गोघृतं शर्करान्वितं।
मांसं प्रीणाति वै सर्वान् पितॄनित्यब्रवीदजः॥

पितरस्तृप्यन्ति इत्यनुवृत्तौ मनु-देवल-कात्यायनाः।

संवत्सरन्तु गव्येन पयसा पायसेन च।

मनुः।

अनिर्दशाया गोः क्षीरमौष्ट्रमैकशफं तथा।

आविकं सन्धिनीचीरं विवत्सायाश्च गोः पयः॥
आरण्यानाञ्च सर्वेषां मृगानां माहिषं विना।
स्त्रीचीरञ्चैव वर्ज्यानि सर्वशुक्तानि चैव हि॥

इह अनिर्दशाहस्य गोः चीरमिति पाठे अनिर्दशाहशब्दानुवृत्तौ उष्ट्रादीनामपि दाशाहिकः प्रतिषेध आशङ्क्येत। तत्रात्यन्तिकतत्प्रतिषेधार्थं समाचार आश्रयणीयः। अनिर्दशाया इति स्त्रीलिङ्गपाठे आशङ्कैव नास्ति। न हि तद्धितान्तैरौष्ट्रमित्यादिभिरनिर्दशाया इत्यन्वेति। यस्याः प्रसूताया दशदिनान्यनपक्रान्तानि सा गौरनिर्दशा। उष्ट्राः करभ्या इदम् 'औष्ट्रं'। एकशफादीनाम् वड़वाप्रभृतीनां इदं 'ऐकशफं'। अविकानामिदम्'आविकं'। उत्तरत्र पुनः चीराग्रहणसमाचाराच्च औष्ट्रैकशफाविकानिर्दशगवादिचीराणि सविकाराणि प्रतिषिध्यन्ते। सन्धिन्या अवत्सायास्च गोः चीरमेव। वृषभेण क्रान्ता 'सन्धिनी'। मेधातिथिस्त्वाह। या उभयोः कालयोः प्राप्तदोहा कथञ्चिदन्यतरत्र दुह्यते, सायमदुग्धा प्रातर्दुग्धा प्रातरदुग्धा सायं वा दुग्धा सा 'सन्धिनी'। अन्या तु स्वल्पदुग्धत्वान्नित्यमेकस्मिन्नेव काले दुह्यमाना अत्र दोहशब्दस्य सन्धानात् सन्निकर्षात् सन्धिनीशब्दप्रवृत्तौ सन्धाशब्दात् सन्धिशब्दाद्वा व्रीह्यादिपाठादिनिः। कश्चिदाह या मृतवत्सा वत्सान्तरसन्धानेन दुह्यते सा सन्धिनीति। सन्धिनीशब्दस्यावस्थाविशेषवचनत्वात्तदवस्थाया एव चीरं वर्ज्यं। नोत्तरकालमपि विवत्सायाः। मृतवत्सायास्तु गोर्वत्सविरहजनितशोकशान्तिपर्यन्तं पयोवर्ज्यं। या तु जीवद्वत्सापि वत्समन्तरेणैव तुष-चूक-पिण्याकादिना दुह्येत तस्या अपि विवत्सायाः पयो वर्ज्यं। पयोग्रहणञ्च समासान्तर्गतस्य चीरपदस्योत्तरत्रान्वयात्। आर-

णानां मृगाणामित्यत्र पुंलिङ्गस्य पयः प्रकृतिभावेनान्वयासम्भवाज्जातिमात्रविवक्षायां सामर्थ्याच्चमरीप्रभृतीनां पयोवर्ज्यमिति लभ्यते । 'माहिषं विना' आरण्यमहिषीक्षीरमन्तरेण । 'स्त्रीक्षीरं' मानुषीक्षीरं। तदपि नित्यं वर्ज्यं । सर्वाणि शुक्तान्यपि वर्ज्यानि ।

यमः ।

अनिर्दशाया गोः क्षीरं आजं माहिषमेव च ।
आविकं सन्धिनीक्षीरं औष्ट्रमैकशफञ्च यत् ।
वर्जयेद्गोरवत्सायाः पयश्चैवान्यवत्सायाः ॥
आरण्यानान्तु सर्वेषां वर्जयित्वा तु माहिषं ।
आविकादीनि वर्ज्यानि सदा स्वायम्भुवोऽब्रवीत् ॥

याज्ञवल्क्यः ।

सन्धिन्यनिर्दशावत्सागोः पयः परिवर्जयेत् ।
औष्ट्रमैकशफं ऐणं आरण्यकमथाविकं ॥

वशिष्ठः ।

अग्रामपाश्वविपयः सन्धिनीक्षीरं गोमहिष्यजानामनिर्दशाहानां ।

गौतमः ।

गोश्च क्षीरमनिर्दशायाः सूतके अजामहिष्योश्च नित्यमाविकमपेयमौष्ट्रमैकशफञ्च स्यन्दिनी-यमसू-सन्धिनीनाञ्च याश्च वत्सव्यपेताः। 'स्यन्दिनी' स्वयमेव क्षीरं प्रस्यन्दमाना प्रस्यन्दमानयोनिर्वा । 'यमसूः' प्रसूतयमला ।

बौधायनः ।

अनिर्दशाहासन्धिनीक्षीरमपेयं विवत्सायाश्चाविकमैकशफञ्चापेयं ।

आपस्तम्बः ।

अपेयं तथैणकं पय उष्ट्रीक्षीरं मृगीक्षारं सन्धिनीक्षीरं यमसूक्षीरं गोश्चानिर्दशायाः ।

हारीतः ।

स्यन्दिनी वृषस्यन्ती तस्याः पयो न पिबेत् । न ऋतुमङ्गवति । न हतवत्सायाः शोकाभिभूतत्वात् । न दुग्धाया विना वत्सात् । यथा ह्यश्नत आच्छिद्यात्मनाश्नीयादेवं तत् । न नवसूतायाः सरजस्कत्वात् । सप्तरात्रादित्येके दशरात्रादित्यपरे मासेनापि पूयं भवतीति धर्मविदः ।

एवं व्याडः ।

द्वौ मासौ पाययेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनञ्चैव यथान्याय्यं यथाबलं ॥

वृषेण मैथुनमिच्छती 'वृषस्यन्ती' तदीयं पयः । 'ऋतुमङ्गवति' ऋतुमत्याः सम्बन्धि भवतीत्यर्थः । अनेन निवृत्तमैथुनेतरायाः पयो न निषिद्धमिति गम्यते । 'हतवत्सा' मृतवत्सा । शोकाभिभूतत्वादिति हेतुः । तेन विस्मृतवत्सशोकायाः पयसि न प्रतिषेधः । अस्य हेतुवन्निगदार्थवादता स्मृतिचन्द्रिकारेणैव निराकृतेति तन्न प्रपञ्च्यते । वत्साद्विनेति क्षीरलोभात् । जीवन्तमेव वत्सं अन्यतोनिधाय दुग्धायाः पयो न पिबेत् । दृष्टान्तेन निषिद्धं द्रढ़यति । यथा 'अश्नतः' भुञ्जानात्, 'अन्नं' 'आच्छिद्य' हठात् गृहीत्वा, 'आत्मना' स्वयं, अश्नीयात् । एवं तदिति । नवसूतायाः पयो न पिबेदिति सम्बन्धः । रजस्कत्वादिति हेतुः । सप्तरात्रादुपरि पूयं भवतीत्येके । दशरात्रादुपरीत्यपरे । मासादुप-

रीति धर्म्मविदः मन्यन्त इति शेषः । एतेषु सप्तगात्रादिपक्षेषु यथा रजोनिवृत्तिव्यवस्था द्रष्टव्या । धर्मविद्ग्रहणं मासान्ते रजोनिवृत्ति-संशयोऽपि नास्तीति ज्ञापनार्थं तेन यदा सप्तगात्रादावपि रजोनि-वृत्तिनिश्चयः तदा पयःपानेऽपि न धर्महानिः ।

शङ्खलिखितौ ।

माहिषं गव्यमाजञ्च भक्ष्यं क्षीरन्तु निर्दशं ।

शङ्खः ।

सर्वासां द्विस्तनीनां क्षीरमभोज्यं अजावर्जमिति ।

आपस्तम्बस्तु ब्राह्मणव्यतिरिक्तेन कापिलं पयो न पेयमित्याह ।

क्षत्रियस्यैव वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः ।
यः पिबेत् कापिलं क्षीरं ततोऽन्योनास्त्यपुण्यकृत् ॥

तेन ब्राह्मणव्यतिरिक्तः कपिलाया गोः क्षीरं श्राद्धादिकर्म्मोप-युक्तशेषमपि प्रयत्नेन वर्जयेदित्यर्थः । ब्राह्मणस्य हुतशेषव्यतिरिक्तका-पिलक्षीरपाने दोषोभविष्यत्पुराणे दर्शितः ।

कापिलं यः पिबेत् शूद्रो नरके स विपच्यते ।
हुतशेषं पिबेद्विप्रो विप्रः स्यादन्यथा पशुरिति ॥

हुतशेषे पीते विप्रस्य जन्मान्तरेऽपि विप्रत्वं भवति ।

तथा ।

हुतशेषव्यतिरिक्तकापिलक्षीरे पीते विप्रस्य जन्मान्तरे पशुत्वं भवतीत्यर्थः । क्षीरवर्जनविधानादेव क्षीरविकारस्यापि कूर्चिकादे-र्वर्ज्यत्वं सिद्धं । कूर्चिकादिविकारेऽपि क्षीररसस्य सद्भावात् । अतएव क्षीरे वर्जयितव्ये तद्रसवतः पायसादेरपि वर्जनं कार्य्यमिति मीमांसायां

प्रतिपादितं। अतएव निषिद्धक्षीरविकाराणां भक्षणे निषिद्धातिक्रमस्य कृतत्वात् प्रायश्चित्तमाह शङ्खः।

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
सप्तरात्रव्रतं कुर्य्यात् प्रयत्नेन समाहित इति॥

श्राद्धेषु महिषीक्षीरस्य निषेधेऽपि वचनान्तरेण प्राशस्त्यप्रतिपादनान्महिषीघृतं ग्राह्यमेव।

भविष्यत्-पुराणे।

श्राद्धेषु महिषीक्षीरमजाक्षीरञ्च वर्जयेत्।
गवाञ्चानिर्दशाहानां सन्धिनीनां पयस्त्यजेत्॥

आदित्यपुराणे।

न च गोव्यतिरिक्तानां पयः श्राद्धेषु शस्यते।
सविकारं गवामेव पितॄणां तृप्तये पयः॥

सुमन्तुः।

पयोदधि घृतञ्चैव गवां श्राद्धेषु पावनं।
महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित्॥

देवलः।

अजावि-महिषीणान्तु पयः श्राद्धेषु वर्जयेत्।
विकारान् पयसश्चैव माहिषं तु घृत हितं॥

मार्कण्डेयपुराणे।

मार्गमाविकमौष्ट्रञ्च सर्वमैकशफञ्च यत्।
माहिषञ्चामरञ्चैव धेन्वा गोश्चाप्यनिर्दशं॥
पित्रर्थं मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतं।

वर्जनीयं सदा सद्भिः तत्पयः श्राद्धकर्म्मणि ॥

ब्रह्मपुराणे ।

माहिषञ्चामरं मार्गमाविकैकशफोद्भवं ।
ऐणमौष्ट्रं याचितञ्च दधिक्षीरं त्यजेत् घृतं ॥
घृतात्फेनं घृतान्मण्डं पीयूषमथ चार्द्रगोः ।
सगुड़ं मरिचाक्तन्तु तथा पर्य्युषितं दधि ।
दीर्णं तक्रमपेयञ्च नष्टास्वादञ्च फेनवत् ॥

अयमर्थः । 'घृतात् फेनं' घृतादुद्धृत्य फेनं, अपेयं । 'घृतान्मण्डं' घृतादुद्धृता सन्तानिका । तथा 'आर्द्रगोः पीयूषं'यावत् प्रसूतागौरार्द्रयोनिस्तावत् क्षीरमपेयं । तथा पयोदधिगुड़मरिचमिश्रितं यत् पर्य्युषितं तदप्यपेयं । तथा यत्तक्रं 'दीर्णं' दर्वीघट्टन-शून्याग्नितापादिना खतोवा स्फुटितं । यच्च 'नष्टास्वादं' शुक्तं नष्टरसं । यच्च बहुदिनस्थित्या सञ्जातफेनं तदप्यपेयम् ।

इति ग्राह्याणि वर्ज्यानि च क्षीरादीनि ।

अथ ग्राह्याणि मांसानि ।

तत्र तावत् सामान्यतः श्राद्धे मांसदानविधिः ।

मनुः ।

मुन्यन्नानि पयःसोमो-मांसं यच्चानुपस्कृतं ।
अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते ॥

पूर्व्वं व्याख्यातः श्लोकः ।

पितॄणां मासिकं श्राद्धं अन्वाहार्य्यं विदुर्बुधाः ।
तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः ॥

तदेतत्प्रतिमासममावास्यायां विहितं श्राद्धं तत्पितॄणामन्वाहार्य्यमिति मुनयोमन्यन्ते। तदेतदामिषेण मांसेन कर्त्तव्यं। प्रशस्तेनाप्रतिषिद्धेन द्वौ मासौ मत्स्यमांसेनेत्यादिविशेषविहितेन वा। अयञ्च मुख्यः कल्पः। तदभावे दधिघृतसूपादि विधायिष्यते। मांसञ्च व्यञ्जनं भक्तादेर्भोज्यस्य न पुनरेतदेव केवलं भोज्यं। येन वक्ष्यति। गुणांश्च सूपशाकाद्यानामिति। तथा यावन्तश्चैव यैश्चान्नानि इति स्मृत्यन्तरे।

विना मांसेन यत् श्राद्धं कृतमप्यकृतं भवेत्।
क्रव्यादाः पितरो यस्मादभावे[१] पायसादयः॥

पुराणे।

मांसं शाकं दधि क्षीरं मधु चान्यत्तथैव च[२]।

इति सामान्यतः श्राद्धे मांसदानविधिः।

अथ मांसभक्षणे विधिरुच्यते।

मनुः।

यत्प्रोक्षितं भवेन्मांसं ब्राह्मणानाञ्च काम्यया।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये॥

पशुं प्रोक्षतीत्यादि विहितप्रोक्षणादिसंस्कारयुक्ताग्नीषोमीयादिपशुप्रकृतिकं मांसं प्रोक्षितमित्युच्यते। 'ब्राह्मणकाम्यया' ब्राह्मणेच्छया। काम्यशब्दः छान्दसः।

---

(१) यस्मादलाभे इति क०।

(२) मुन्यन्नमेव चेति ग०।

यदा ब्राह्मणाः प्रार्थयन्ति तदा प्रोक्षणार्हप्रकृतिकमप्यप्रोक्षितं कृताभक्षणसङ्कल्पोऽपि भक्षयेत्। 'यथाविधि' यथाशास्त्रं, मधुपर्कयज्ञश्राद्धेषु 'नियुक्तः' नियोगमङ्गीकारितः मांसं भक्षयेत्। अतः श्राद्धे भोक्ष्य इत्युपेत्य इदमश्नामीदं नाश्नामीति नार्हति वक्तुं। यतिब्रह्मचारिभ्यां तु नियुक्ताभ्यामपि मांसं न भक्षणीयमिति प्रतिपादितं प्राक्। 'प्राणानामत्यये' अन्नान्तराभावात् भाविप्राणापगमनिश्चये देवपितृकार्योपयुक्तशेषादन्यदपि निषिद्धमपि पौनःपुन्येनापि ब्रह्मचर्येऽपि मांसं भक्षयेत्। सर्वत आत्मानं गोपायेदिति वचनादात्मघातपातकपरिहारस्यावश्यकार्यत्वाच्च।

यमोऽपि।

भक्षयेत्प्रोक्षितं मांसं सकृत् ब्राह्मणकाम्यया।
दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत्॥

अनियमे पूर्व्वपादत्रयोक्तनियमाभावे मांसं विवर्जयेत्।

याज्ञवल्क्य-विश्वामित्रौ।

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया।
देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दुष्यति॥

देवलः।

भक्षयन्नपि मांसानि शेषभोजी न लिप्यते।
औषधार्थमशक्तौ वा नियोगाद्यज्ञकारणात्॥

वृहस्पतिः।

रोगी नियुक्तो विधिनाहितं विप्रव्रतस्तथा।
मांसमद्याच्चतुर्द्धैषा परिसङ्ख्या प्रकीर्त्तिता॥

'रोगी' मांसभक्षणैकपरिहार्यरोगवान्। नियुक्तः श्राद्धादौ। विधिनाहितं क्रतुशेषं। 'विप्रवृतः' विप्राभ्यर्थितः। 'चतुर्द्धा परिसङ्ख्या', चतुर्द्धा चतुःप्रकारो नियम इत्यर्थः।

हारीतः।

वृथामांसं भक्षयंस्तु पुष्यकृच्छ्रं चरेद्बुधः।
काम्यया ब्राह्मणानान्तु यथाकामं समश्नुयात्॥

'यथाकामं' यावदिच्छं।

विष्णुः।

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कथञ्चन।
मन्त्रैस्तु संस्कृतानद्यात् शाश्वतं विधिमास्थितः॥

'शाश्वतं' नित्यं वैदिकमित्यर्थः।

यजुषा संस्कृतं मांसं भक्षयीत यथाविधि।
न भक्षयेद्वृथामांसं वृथामांसं विवर्जयेत्॥
श्राद्धे मांसं समश्नीयात् यदातिथ्ये निवेदयेत्(१)।

इति मांसभक्षणविधिः।

अथ नियुक्तस्य मांसभक्षणे प्रत्यवाय उच्यते।

पैठीनसिः।

निमन्त्रितो योनाश्नाति श्राद्धे मांसं द्विजोत्तमः।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति॥

यावन्ति हतस्य पशोः रोमाणि तावत् सङ्ख्यानि च वर्षाणि नरके वसतीत्यर्थः।

---

(१) यदातिथ्यनिवेदितमिति ग०।

मनुः ।

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिं ॥

'सम्भवान्' जन्मानि ।

वशिष्ठः ।

नियुक्तस्तु यदि श्राद्धे दैवे मांसं समुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

यमः ।

आमन्त्रितस्तु यः श्राद्धे दैवे मांसं समुत्सृजेत्।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

इति नियुक्तस्य मांसाभक्षणे प्रत्यवायनिरूपणं ।

अथ प्रशस्तमांसप्रकृतयः ।

प्रशस्तेनामिषेण श्राद्धं कुर्यादिति मनुवचने पूर्व्वमुक्तत्वात् ।

तत्राह शङ्खः ।

तित्तिरञ्च मयूरञ्च लावकञ्च कपिञ्जलं ।
वार्ध्रीणसं वर्त्तकञ्च भक्ष्यानाह यमः सदा ॥

'तित्तिरः' चित्रपक्षः । 'मयूरः' शिखण्डी । 'लावकः' प्रसिद्धः। 'कपिञ्जलः' शरद्बभ्रुवर्णः पक्षी । 'वार्ध्रीणसः' कृष्णग्रीव इत्यादिना द्वादशवार्षिकतृप्तौ वक्ष्यमाणलक्षणः। 'वर्त्तकः' वृत्ताकृतिश्चित्रविन्दु-लाञ्छितः तुलपुच्छः पक्षिविशेषः ।

मनुः ।

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।

राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः ॥

'पाठीनः' वक्रदंष्ट्रोमत्स्यः, सहस्रदंष्ट्रः पाठीन इत्यभिधानात् । 'रोहितः' रक्तवर्णोमत्स्यः । एतावुभौ हव्यकव्यनियोगेन श्राद्धादौ भक्षणीयौ । 'राजीवाः' पद्मवर्णा मत्स्या इति केचित्, राजीभिः रेखाभिर्युक्ता इत्यपरे । 'सिंहतुण्डाः' सिंहमुखाकृतिमुखाः । 'सशल्काः' पृष्ठप्रतिष्ठितशुक्त्याकारशकलाः, राजीवाद्याः सर्वशोऽनियुक्तेनापि भक्ष्याः। तथा ।

श्वाविदं शल्यकां गोधां खड्गं कूर्मं शशांस्तथा ।

भक्ष्यान् पञ्चनखानाहुरनुष्ट्रांश्चैकतोदतः ॥

'श्वाविद्ः' श्वभक्षकोव्याघ्रविशेषः । 'शल्यकः' शललीसंज्ञतनूरुहः श्वापदविशेषः । 'गोधा' दीर्घाकृतिर्विलेशयः प्राणिविशेषः । 'खड्गः' गण्डकः । 'कूर्मः' कच्छपः प्रसिद्धः । शशः पञ्चनखानां मध्ये श्वावित्प्रभृतीन् भक्ष्यानाहुः । स्मृत्यन्तरे तु खड्गे विकल्पः ।

तथाच वशिष्ठः ।

खड्गे तु विवदन्त इति ।

उष्ट्रवर्जितानेकविभागस्थितदन्तपङ्क्तीन् गोजाविमृगान् भक्ष्यानाहुः ।

भक्ष्या इत्यनुवृत्तौ बौधायनः ।

मत्स्याः सहस्रदंष्ट्रा गोजाविमृगा वृद्धश्रिरसः तित्तिरिरोहितराजीवाः ।

भक्ष्या इत्यनुवृत्तौ गौतमः ।

मत्स्याश्चाविकृताः ।

वशिष्ठः ।

श्वाविच्छल्यकशशकच्छपगोधाः पञ्चनखानां भक्ष्याः अनुष्ट्राः पशूनां अदन्ताश्च ।

देवलः ।

पञ्च पञ्चनखा भक्ष्याः धर्म्मतः परिकीर्त्तिताः ।
गोधाकूर्म्मशशाः श्वावित् शल्यकश्चेति ते स्मृताः ॥

भक्ष्या इत्यनुवृत्तौ बौधायनः ।

पक्षिणः तित्तिरि-कपोत-कपिञ्जल-लाव-वृणमयर-वारणाचारणा॒वर्ज्याः पञ्च विष्किराः ।

'कपोतः' प्रसिद्धः । विष्किराणां मध्ये एते पञ्च भक्ष्याः । 'वारणाचारणौ' कपोतभेदौ ॥

शङ्खलिखितौ ।

माहिषञ्चाजमौरभ्रं मार्गं रौरवमेव च ।
भक्ष्यमांसं समुद्दिष्टं यच्च वै पार्षतं स्मृतं ।
वराहाश्च तथा भक्ष्या महारण्यनिवासिनः ॥

महिषस्येदं 'माहिषं' । उरभ्रस्य मेषस्य मांसं 'औरभ्रम्' । मृगस्य ताम्रहरिणस्य 'मार्गं' । रुरोः कृष्णसारङ्गस्य बहुशृङ्गस्य वा मृगस्य मांसं 'रौरवं' । पृषतस्य विन्दुवतो मृगस्य 'पार्षतं' । 'वराहाः' शूकराः ।

हारीतः ।

ग्राम्यारण्यानां पशूनामृच्छन्ति यथाजमेष-हिरण्य-खड्ग-रुरु-पृषत-ऋष्य-वभ्रु-महारण्यवासिनश्च वराहास्तथा शशक-शल्यक-मेधा-

गोधा-कूर्म-वर्त्तक-तित्तिर-मयूर-वार्ध्रीणस-लावक-कुरर-कपिञ्जलान् सशल्कांश्च मत्स्यान्न्यायोपपन्नान् भक्षयेत्।

इति प्रशस्तमांसप्रकृतयः।

अथ मांसभक्षणप्रतिषेधः।

मनुः।

असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कदाचनः[१]।
मन्त्रैस्तु संस्कृतानद्याद्वैदिकं[२] विधिमास्थितः॥

प्रोक्षणादिसंस्कारमन्तरेण ये निहितास्तान्नाद्यात्। ये तु वैदिकैर्मन्त्रैः संस्कृतास्तानेव भक्षयेत्।

पुलस्त्योऽपि।

वर्जयेद्दूरतः श्राद्धे यदप्रोक्षितमामिषं।
राज्ञानुत्पादितं यच्च व्याधिनाभिहतञ्च यत्॥

'अप्रोक्षितं' प्रोक्षणादिरहितं मांसं, श्राद्धे ब्राह्मणादिर्दाता वर्जयेत्। राज्ञा तु मृगव्येन स्वयं यदनुत्पादितं। व्याधिनाभिहतात् पशोर्यद्गृहीतं तत्सर्वं वर्ज्यं। अयमप्रोक्षितप्रतिषेधो ग्राम्यपशुविषयः। आरण्यास्तु प्रोक्षणमन्तरेणापि प्रशस्ता एव।

ब्रह्मपुराणे।

आरण्यानाञ्च सर्वेषां प्रोक्षणं ब्रह्मणा कृतं।
अतएव तु ते भक्ष्या ब्राह्मणक्षत्रियादिभिः॥

व्यासोऽपि।

---

(१) कथञ्चन इति ग०।
(२) शास्त्र मिति ख०।

प्रजानां हितकामेन अगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशोमृगाः ।
तस्मादप्रोक्षिता एव प्रयोज्यास्ते सदा बुधैः ॥

आरण्यानां पशूनां अगस्त्येन ब्रह्मणा च सर्वार्थतया प्रागेव प्रोक्षणस्य कृतत्वादन्यैर्न कर्त्तव्यमित्यर्थः ।

अत्र कश्चिदाह । असंस्कृतान् पशूनाद्यादित्ययं फलविशेषकामस्य पर्युदासवचनो[१] न प्रतिषेधः । अतः फलार्थित्वाभावेऽसंस्कृतमपि मांसं भक्षणीयमेवेति । तन्न । यतः प्रतिषेधत्वे सम्भवति पर्युदासत्वं फलकल्पना चेति न न्याय्यं । "न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा जन्तूनां[२] निवृत्तिस्तु महाफला" इत्यादिवचनोक्तन्यायादिति चेत् । न । अस्य वचनस्य मन्त्ररहितशूद्रादिविषयत्वेनैवोपपत्तेः । अतो विप्रोमन्त्रसंस्कृतमेव मांसमद्यान्नान्यत् । येन हि मांसेन देवाश्च पितरश्चार्च्यन्ते तन्मन्त्रसंस्कृतमेव भवति । देवपित्रर्चनसम्बद्धस्यैव ब्राह्मणभोज्यत्वेन विहितत्वात् ।

तदुक्तं मनुना ।

देवान् पितॄन् समभ्यर्च्य खादन्मांसं न दोषभागिति ।

विधिपूर्वकभक्षणे गुणमभिधायाविधिपूर्व्वकभक्षणे दोषमाह स एव ।

यस्तु भक्षयते मांसं विधिं हित्वा पिशाचवत् ।
स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते ॥

तथा

(१) मांसविशेषवर्जनव्रतोपदेशः इति ग० ।
(२) भूतानामिति ग० ।

यज्ञाय जग्धिर्मांसस्येत्येष दैवोविधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसोविधिरुच्यते ॥

'जग्धिः' भक्षणं ।

विष्णुः ।

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यते तु सः ॥

तैः पशुभिरद्यते ।

हारीत-शातातपौ ।

विषच्छद्महतं मांसं व्याधिभिर्जग्धितञ्च यत् ।
न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्जितं ॥

'विषेण', 'छद्मना' कूटयन्त्रादिप्रकारेण, हतस्य तथा व्याधिभिः सिंहव्याघ्रव्यतिरिक्तश्वापदैश्च हतस्य पशोर्यन्मांसं यच्च मन्त्रवर्जितं तच्छ्राद्धादौ न प्रशंसन्ति श्रेष्ठं न मन्यन्ते ।

आपस्तम्बः ।

हिंसार्थेनासिना छिन्नं तदभोज्यं विदुर्बुधाः ।

इति मांसभक्षणप्रतिषेधः ।

अथ निषिद्धमांसप्रकृतयः ।

तत्राह मनुः ।

क्रव्यादः शकुनीन्(१) सर्वान् तथा ग्रामनिवासिनः ।
अनिर्दिष्टांश्चैकशफान् टिट्टिभांश्च विवर्जयेत् ॥

---

(१) क्रव्यादान् शकुनानिति ख० ।

कलविङ्कं प्लवं हंसं चक्राङ्क[१] ग्रामकुक्कुटं ।
सारसं रज्जुवालञ्च दात्यूहं शुकसारिके॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ॥
बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकं ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः ॥

क्रव्यं मांसमदन्तीति 'क्रव्यादः' केवलमांसभक्षकाः काकगृध्रादयः । 'ग्रामनिवासिनः' अक्रव्यादोऽपि पारावतादयः । 'एकशफाः' अश्वाश्वतरगर्द्दभादयः । 'अनिर्द्दिष्टाः' श्रुतौ भक्ष्यत्वेन नोक्ताः । येतूक्तास्ते तत्र भक्ष्याः । यथा "त्वाष्ट्रं वाड़वमालभेत गौरं वा गर्द्दभं प्रजाकामस्य च मांसमश्नीयात्" इति । 'टिट्टिभाः' अत्युच्चतरशब्दोपलक्षिताः । कदुत्काणनामानः पक्षिविशेषाः[२] 'टिट्टिभाः' । 'कलविङ्कः' ग्रामचटको निगमे दृष्टः । तस्य ग्रामवासित्वेन प्रसिद्धौ सत्यामपि पुंलिङ्गशब्देन पुनस्तत्प्रतिषेधः तत्स्त्रियाश्चाभ्यनुज्ञानार्थम् । अन्ये तु कलविङ्कशब्दस्य चटकजातिमात्रवचनत्वं मन्यमानाः आरण्यनिवृत्त्यर्थं तत्प्रतिषेधं वर्णयन्ति । 'प्लवः' जलकुक्कुटः । 'हंसः' मरालः । 'चक्राङ्कः' चक्रवाकः । प्लवहंसचक्रवाकानां वर्ज्यमानजालपादप्रतिषेधात् सिद्धे प्रतिषेधे नित्यार्थं वचनं । अतश्चाषादीनां विकल्पेन भक्षणं गम्यते । ग्रामग्रहणादारण्यकुक्कुटोभक्ष्यः । 'सारसः' पुष्कराख्यः । स च दीर्घगलजङ्घोनीलाङ्गः पक्षी । 'रज्जुवालः' रज्जुसदृशदीर्घकेशः पक्षी ।

---

(१) चक्राङ्गमिति क० ।
(२) कदुत्काणनामाः पक्षिविशेषा इति ग० ।

रजुदाल इति तु पाठे वृचकुक्कुटकोज्ञेयः । 'दात्यूहः' कालकण्ठः । 'शुकः' कीरः । 'सारिका' 'सारिका' एवं नामप्रसिद्धा । प्रतुद्य प्रहृत्य चञ्चा ये भक्षयन्तीति 'प्रतुदाः' । जीव-जीवक-भृङ्गाङ्क-लद्दार-कोकिल-हारित-कपोत-शतपत्रादयः । 'जालपादाः' जालस-दृशपादाः । चाषादयः । 'कोयष्टिः' आरण्यपक्षिविशेषः । नखैर्विकीर्य्य भक्षयन्ति ये ते 'नखविष्किराः' वार्तीकवर्त्तीरकवर्त्मककुभोपच-क्राङ्कचकोरकुरराङ्कककचकरणानर्द्धगिरिवर्त्तकशारपदेद्राभवाड़ादयः । निमज्ज्य ये मत्स्यान् भक्षयन्ति जलवायसप्रभृतयः तेऽपि वर्ज्याः । यत्र मांसविक्रयार्थं पशवो हन्यन्ते सा सूना । आपणोमांसस्येत्येके । सूनायां भवं 'सौनं' । 'वल्लूरं' संशोष्य स्थापितं छागादिमांसं । वकः प्रसिद्धः । 'वलाका' विकण्टका[१] । 'काकोलः' कृष्णकाकः । 'खञ्जरीटः' खञ्जनः । यो वर्षासु शिखोद्गमेनाह्वयो भवति । वकव-लाकाकाकोलानां निमज्जन्मत्सादैः सह पौनरुक्त्यं परिहर्तुं ये कदा-चिदुन्मज्ज्य न भक्षयन्ति ये च केवलान् मत्स्यानेवादन्ति तत्र मक-रादयो मत्स्यादशब्देन गृह्यन्ते । विड्वराहप्रतिषेधादारण्यस्याभ्यनुज्ञा । पूर्व्वसूत्रस्थितस्य ग्रामनिवासिशब्दस्य प्रकरणात् पक्षिविशेषणत्वे सिद्धे विड्वराहविषयात्वाभावादपौनरुक्त्यम् । 'मत्स्याः' मीनाः । 'सर्वशः' सर्वदा । उत्सर्गोऽयं ।

यमः ।

मत्स्यानशल्कान् वै सर्वान् वेदाध्यायी विवर्जयेदिति ।

'अशल्कान्' पृष्ठभागे शल्करहितान् । 'वेदाध्यायी' त्रैवर्णिकः ।

---

(१) सकण्टका इति क० ।

देवलः ।

बलाकोहंस-दात्यूह-भृङ्गराड्वक-चित्रकाः ।
उलूक-कुरर-श्येन-गृध्र-कुक्कुट-वायसाः ॥
चकोरः कोकिलोरज्जुवालकश्चाष-मद्गुकौ ।
पारावत-कपोतौ च न भक्ष्याः पक्षिणः स्मृताः ॥

'भृङ्गराजः' तेनैव नाम्ना प्रसिद्धः । 'चित्रकः' मयूरः । 'उलूकः' कौशिकः घूकश्च । 'कुररः' क्रोशकः । 'चकोरः' चन्द्रिकाहरो लोहितचञ्चुचरणचक्षुः पक्षी । 'कोकिलः' कुहूकण्ठः । 'चाषः' किकीदिविः । 'मद्गुः' जलवायसः ।

देवलः ।

अभक्ष्याः पशुजातीनां गो-खरोष्ट्राश्च कुञ्जराः ।
सिंह-व्याघ्रर्क्ष-शरभ-सर्पाजगरकास्तथा ॥
आखु-सूकर-मार्जार-नकुल-ग्राम्यसूकराः ।
श्व-सृगाल-कपि-द्वीपि-गोलाङ्गूलक-मर्कटा इति ॥

'खरः' गर्दभः । 'ऋक्षः' भल्लुः । 'शरभः' अष्टचरणः सिंहशत्रुः । 'आखुः स्थूलोन्दुरः । 'नकुलः' बभ्रुः । 'सृगालः' जम्बुकः । 'कपिः' प्लवङ्गः । 'द्वीपी' महाव्याघ्रः । 'गोलाङ्गूलः' गोपुच्छसदृशपुच्छो वानरविशेषः । 'मर्कटः' लोहितमुखः शाखामृगः । अत्रोक्ताः पञ्चनखा श्वावित्प्रभृतिपञ्चनखव्यतिरिक्तपञ्चनखोपलक्षणार्थाः । अतएव न भक्षयेदित्यनुवृत्तौ आह मनुः ।

सर्वान् पञ्चनखांस्तथेति ।

इति निषिद्धमांसप्रकृतयः ।

अथ कालविशेषावच्छेदेन तृप्तिकराणि द्रव्याण्युच्यन्ते ।

तत्राह मनुः ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणां ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥
षण्मासान् छागमांसेन पार्षतेनाथ सप्त तु ।
अष्टावैणेन मांसेन रौरवेण नवैव तु ॥
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्म्मयोस्तु मांसेन मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन वा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्कः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः ॥

श्राद्धविधिमाश्रित्य दत्ततिलादिद्रव्येणैकवारं मासमेकं पितरस्तृप्त्यनुवृत्त्या प्रीयन्ते। अत्र द्विजातिकर्तृकस्य मुख्यस्य श्राद्धस्य ब्राह्मणभोजनात्मकत्वादन्नाकाङ्क्षायां तत्प्रीतियोग्यानां तिलव्रीह्यादीनां तृप्तिसाधनत्वेन विधीयमानानां दृष्टद्वारेण साधनत्वोपपत्तये स्वविकारभूतान्नद्वारेणैव तृप्तिसाधनत्वं तेषां च तत्प्रथमं समुचितानामेव भोजनस्य लोकतः समुचितनानाविधान्नफलमूलादिसाध्यत्वावगमात् । अलाभे तु तृप्तिकरत्वयोग्यान्नप्रकृतिभूतस्यैकस्यापि श्राद्धीयभोजनसाधनत्वं। लौकिकोपायसाधनकं हि भोजनं समुचितालाभे

एकेनापि दृश्यते। एवं चामश्राद्धेऽपि समुच्चयासमुच्चयौ वेदितव्यौ, तत्रापि तेषां भोज्यान्नप्रकृतिभावानुपसन्धानेनैवोपकल्पितत्वात्। उक्त-न्यायादन्नद्वारेणैषां साधनत्वमामश्राद्धे च वचनादपीष्यत इति नैष दोषः।

अन्नद्वारेणैवैषां श्राद्धसाधनत्वमुक्तं प्रचेतसा।

हरित-मुद्ग-कृष्णमाष-श्यामाक-प्रियङ्गु-गोधूमेक्षुविकारांश्च दद्या-दिति। विधीयन्ते चापूपपायसादीन्यन्नानि श्राद्धे। तानि च प्रकृति-द्रव्यसाकाङ्क्षाणि। अतोव्रीहिपुरोडाशयोरिव तिलव्रीह्यादीनां अन्नानां प्रकृतिविकारभावेनान्वयसिद्धिः। न विकल्पो दोषबाहुल्यात्।

कात्यायनवचने चान्नीभूतानामेवैतेषां तृप्तिसाधनत्वं स्फुटं भवि-ष्यति। सत्यपि समुच्चये अद्भिर्मूलफलेन वेति विकल्पवचनं ब्राह्मण-तृप्तिपर्याप्तान्नसाधनीभूतव्रीह्याद्यलाभेनुकल्परूपपक्षान्तराभिप्रायेनेति कात्यायनव्याख्याने च दर्शयिष्यते।

मासतृप्तिकराणि तु मूलफलानि मार्कण्डेयेन प्रपञ्चितानि।

विदार्यैस्तु पद्मैस्तु बिसैः शृङ्गाटकैस्तथा।
कम्बुकैश्च तथा कन्दैः कर्कन्धुबदरैरपि॥
पालेवतैरारुकैश्च अक्षोटैः पनसैस्तथा।
काकोल्या क्षीरकाकोल्या तथा पिण्डालुकैः शुभैः॥
लाजाभिश्च सधानाभिः त्रपुसैश्चारुचिर्भटैः।
सर्षपाराजशाकाभ्यामिङ्गुदैराजजम्बुभिः॥
प्रियालामलकैर्मुख्यैः फल्गुभिश्च बिलम्बकैः।
वंशाङ्कुरैस्तालकन्दैः चुक्रिकाक्षीरिकाधवैः॥

वोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः ।
मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैस्तु संस्कृतैः ॥
रागषाड़वचोष्यैश्च त्रिजातकसमन्वितैः ।
दत्तैस्तु मासं प्रीयन्ते श्राद्धेषु पितरो नृणां ॥

'कन्दः' सूरणः । अर्शोघ्नः सूरणः कन्द इत्यभिधानात् । 'बदरं' बदरीफलं । 'काकोली-चीरकाकोल्यौ' गौड़देशे प्रसिद्धौ । सर्षपेति स्त्रीलिङ्गतया निर्देशः छान्दसः । 'राजशाकं' राजवृत्ताख्यं शाकं । 'इङ्गुदी' तापसतरुः । 'राजजम्बुः' जम्बुविशेषः । 'मुख्यान्यामलकानि' स्थूलामलकानि । 'फल्गूनि' क्षुद्रामलकानि । 'विलम्बकानि' पटोलानि । 'वंशाङ्कुरः' प्रसिद्धः । 'चीरिका' फलाध्यचं । राजादनः फलाध्यचो चीरिकायामित्यमरसिंहेनाभिधानात् । 'मोचं' कदलं । 'लकुचः' लिकुचः । स च जम्बीरफलतुल्यखर्वफलवान् गुल्मविशेषः । 'बीजपूरः' मातुलिङ्गः । 'मुञ्जातं' गौड़देशे प्रसिद्धं फलं । 'पद्मफलं' पद्मबीजकोशकर्णिकेति यावत् । मुद्गाढ़क्यादीनि मांसानि वा मूलफलादीनि निष्काथ्य गृहीता रसाः शर्करामध्वादिद्रव्यसङ्गेन मधूरीकृताः 'रागाः' । अम्लद्रव्यसंयोगेनाम्लीकृतास्तु 'षाड़वाः' उच्यन्ते । 'चोष्याणि' वक्ष्यमाणलक्षणानि । 'त्रिजातकं' लवङ्गैलापत्रकाणां समाहारः । एतैर्द्रव्यैर्मासमेकं पितरः प्रीयन्ते । एवमनिषिद्धेन मत्स्यमांसेन द्वौ मासौ । 'हरिणः' ताम्रमृगः तस्य मांसं 'हारिणं' । उरभ्रो मेषः तस्य मांसं 'औरभ्रं' । शकुनिः पक्षी । स चाचारण्यकुक्कुटतित्तिरादिरनिषिद्ध एव विवक्षितः । तस्य मांसं 'शाकुनं' 'छागः' वस्तः । पृषतः चित्रमृगः तस्येदं 'पार्षतं' । एणः

कृष्णमृगः । तस्येदमैणं । एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यते इत्यभिधानात् । येत्वष्टावैणेयमांसेनेति पठन्ति तत्र हरिणीमांसेनेत्युच्यते । 'रुरुः' बहुशृङ्गो मृगः । तस्य मांसं 'रौरवं' । 'वराहः' अरण्यसूकरः । ग्रामसूकरस्य निषिद्धत्वात् । 'महिषः' लुलापः । 'आमिषं' मांसं । अत्र माहिषाणि च मांसानि श्राद्धेषु परिवर्जयेदिति विष्णुपुराणदर्शनात् माहिषमांसस्य विहितप्रतिषिद्धत्वेन विकल्पो वेदितव्यः । स च तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नत इति विना मांसेन यत् श्राद्धं कृतमप्यकृतं भवेदित्यादिवचनावगतावश्यकाङ्गभावस्य मांसान्तरस्याभावे महिषस्य ग्रहणं कर्त्तव्यमन्यदा नेत्येकरूप इति केचित् । तद्विचारणीयं । अप्रशस्तस्य ह्यवगतत्वेन सर्वथा प्रतिषेधे गृह्यमाणस्य प्रशस्तहरिणोरभ्रछागादिमांसेभ्योधिकं माहिष्यमुच्यमानं विरुद्धं स्यात् । 'शशः' प्रसिद्धः । 'कूर्मः' कच्छपः । श्रुतसम्बन्धत्वौषध्यान्माहिषेण पयसेति सम्बन्धो न मांसेनेति ।

शङ्खधरस्त्वाह ।

गव्यं प्रकरणान्मांसमेव ।

अतएव व्यासः ।

गवयस्य तु मांसेन तृप्तिर्मासं सदैव तु ।
मासानेकादश प्रीतिः पितॄणां माहिषेण तु ।
गव्ये तु दत्ते श्राद्धेषु संवत्सरमिहोच्यत इति ॥

तन्न कलौ गवालम्भस्य निषिद्धत्वात् लोकविद्विष्टत्वाच्चेति । पयसा सिद्धमोदनं 'पायसं' पयोविकारो दध्यादि च । 'वार्ध्रीणसः' छागविशेषः पक्षिविशेषो वा ।

तथा च निगमविष्णुधर्मोत्तरयोः ।

त्रिःपिवन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिं ।
वार्ध्रीणसन्तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥

यस्य पिवतोजलं कर्णौ स्पृशतः स किल कर्णाभ्यां मुखेन पिवतीति 'त्रिःपिवः' । 'क्षीणेन्द्रियः' संभोगाक्षमः । 'अजापतिः' अज इत्यर्थः । पाठान्तरे ।

त्रिःपिवन्त्विन्द्रियक्षीणं यूथस्याग्रचरं तथा ।
रक्तं वर्णेन राजेन्द्र अजं वार्ध्रीणसं विदुः ॥

तथा निगम एव ।

कृष्णग्रीवोरक्तशिराः श्वेतपक्षो विहङ्गमः ।
स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥

कालशाकादीनि धान्यप्रकरणे व्याख्यातानि । इह सर्वत्र प्रीत्यतिशयो विवक्षितः । न तु यथाश्रुत एव कालः । तथा सति द्वादशवर्षपर्यन्तं पितॄणां तृप्तत्वात् श्राद्धाकरणे प्राप्ते सति न "प्रतिवर्षं यत्नात् कार्य्यं" इत्येतद्वचनं विरुध्यत इति हरिहरादयः ।

आह कात्यायनः ।

अथ तृप्तिर्ग्राम्याभिरोषधीभिर्मासं तृप्तिरारण्याभिर्वा तदलाभे मूलफलैरद्भिर्वा सहान्नेनोत्तरास्तर्पयन्ति । छागोस्र-मेषा आलब्धव्याः शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृतानां वाहृत्य पचेन्मासद्वयं मात्स्यैः, त्रीन्मासान् हारिणमृगमांसेन, चतुरः शाकुनेन, पञ्च रौरवेण, षट् छागेन, सप्त कौर्मेण, अष्टौ वाराहेण, नव मेषमांसेन, दश माहिषेण, एकादश पार्षतेन, संवत्सरं गव्येन पायसेन पयसा वा, वार्ध्रीणसस्य

मांसेन च द्वादशवर्षाणि अक्षया तृप्तिः। खड्गकालशाकलोहच्छागोमहाशल्कोवर्षासु मघासु च श्राद्धं हस्तिच्छायायाञ्च ।

'ग्राम्याभिः' शालियवगोधूम-मुद्गाद्याभिः, 'ओषधीभिः' सकृद्दत्ताभिर्मासं तृप्तिर्भवति। 'आरण्याभिः' अरण्यौषधीभिः मासमेव तृप्तिः। यत्त्वारण्यानामेव स्मृत्यन्तरे तृप्तिसाधनत्वमुक्तं, तद्दानप्रस्थादिकर्तृकश्राद्धविषयं। 'तदलाभे' ग्राम्यारण्यानामोषधीनामलाभे, मूलफलैरद्भिश्च मासमेव तृप्तिः। मूलादीनां केवलानां तृप्तिसाधनत्वं निराकर्तुमाह सहान्नेनेति। 'उत्तराः' मूलफलादयः। ओषधीनामुपरिष्टान्निर्दिष्टत्वादुत्तराः अन्नेन सहैव दत्ताः सत्यस्तर्पयन्ति न केवलाः, तदन्नोपसर्जनीभूता एव तृप्तिकारित्वेन लोके प्रसिद्धाः।

नन्वोषधीनामलाभे मूलादीनां प्रदेयत्वमन्नसाहित्यञ्चेति विप्रतिषिद्धम्। मैवं। इह हि सम्पूर्णतृप्तिसाधनीभूतान्नसम्पादनपर्याप्तानामोषधीनामलाभे स्वल्पान्नसहितानां मूलादीनां तृप्तिसाधनत्वमुच्यत इत्यविरोधात्।

अथ चोत्तराः सत्यन्ने सहान्नेन, असति तु तस्मिन् केवला इत्यनुसन्धेयं।

अथ चैवं व्याख्या। ग्राम्यौषधिसिद्धान्नालाभे मूलफलैरद्भिश्च-सहिताः 'उत्तराः' आरण्या ओषध्यः, 'अन्नेन' अन्नद्वारा, मासं तर्पयन्ति। यद्यपि ग्राम्यौषधिसिद्धान्नसाहित्यं शाकत्वेन मूलादीनामस्त्येव तथाप्यारण्यानां मन्दरसत्वात् शाकसाहित्यमपेक्षिततरमिति प्राधान्येन तत्रोक्तमिति मन्तव्यं। अन्नादिभिर्मासं तृप्तिमुक्त्वा मांसैर्द्विमासादितृप्तिं प्रतिपादयिष्यंस्तदुपादानविधिं तावदाह। छागोस्त्रमेषा आलभ्या

इत्यादि । 'उक्षः' अनड्वान् । प्रोक्षणादिसंस्कारपूर्वकं संज्ञपनं 'आलम्भः' । एतत्पशुचयव्यतिरिक्तानां तु पशूनां प्रोक्षणादिसंस्कारमन्तरेणापि स्वयं परेण वा हतानां क्रयाद्युपायसम्पादितं मांसं श्राद्धादावुपयोजनीयं ।

तथा चाहतुः हारीतशातातपौ ।

क्षत्रियैस्तु मृगव्येन विधिना समुपार्जितं ।
श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतञ्च यत् ॥

मनुः ।

क्रीत्वा स्वयं वाप्युत्पाद्य परोपहृतमेव वा ।
देवान् पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति ॥

गौतमः ।

व्यालहतादृष्टदोषवाक्प्रशस्तान्यभ्युक्ष्योपयुञ्जीतेति ।

औशनसाः ।

तत्र व्रीहियवैर्माषैरर्चिता मासं पितरस्तृप्ता भवन्ति, मासद्वयं मात्स्येन मांसेन, त्रयं हरिणमृगमांसेन, चतुरोमासान् कृष्णसारङ्गेन, पञ्च शाकुनेन, षट् छागेन, सप्त पार्षतेन, अष्टौ वराहेण, नव रुरुणा, मेषेण दश, एकादश कूर्मेण, पायसेन पयसा गव्येन संवत्सरं, वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी । खड्गमांसेनानन्त्यमपि चोदाहरन्ति ।

खड्गस्य कालशाकञ्च लोहच्छागस्तथैव च ।
महाशल्कास्य मत्स्यं पित्र्येनन्त्याय कल्पते ॥

याज्ञवल्क्यः ।

हविष्यान्नेन वै मासं पायसेन तु वत्सरं ।
मात्स्य-हारिण-कौरभ्र-शाकुन-छाग-पार्षतैः ॥
ऐण-रौरव-वाराह-शाशैर्मांसैर्यथाक्रमं ।
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः ॥
खड्गामिषं महाशल्कं मधु मुन्यन्नमेव च ।
लोहामिषं कालशाकं मांसं वार्ध्रीणसस्य च ।
यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते ॥

'हविष्यं' हविर्योग्यं तिलव्रीह्यादि, तत्प्रकृतिकेनान्नेन सकृद्दत्तेन मासपर्यन्तं पितॄणां तृप्तिर्भवति। तत ऊर्द्धं तु यथाक्रममेकैकमासवृद्ध्या मात्स्यादारभ्य शशपर्यन्तैर्मांसैस्तृप्तिर्भवति। मत्स्या अनिषिद्धा रोहितादयः। 'शाशं' शशमांसं। 'मुन्यन्नं' नीवारादि।

यमः।

अद्भिर्मूलफलैः शाकैः पुष्पैर्व्रीहियवैस्तिलैः।
प्रीणाति मासं दत्तेन श्राद्धेनेह पितामहान्॥
मत्स्यैः प्रीणाति मासौ द्वौ त्रीन्मासान् हारिणेन तु।
शल्यकश्चतुरो मासान् रुरुः प्रीणाति पञ्च च॥
शशः प्रीणाति षण्मासान् कूर्मः प्रीणाति सप्त तु।
अष्टौ मासान् वराहस्तु मेषः प्रीणयते नव॥
माहिषं दशमासांस्तु गावयं रुद्रसम्मितान्।
गव्यं द्वादशमासांस्तु पयः पायसमेव वा॥
वार्ध्रीणसस्य मांसे तु तृप्तिर्द्वादशवार्षिकी।
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये।

पितॄत्रयो गया ज्ञेया[1] तत्र दत्तं महाफलं ॥
कालशाकञ्च खड्गञ्च लोहच्छागस्तथैव च ।
महाशल्काश्च मत्स्याश्च पित्र्येऽनन्त्याय कल्पिताः ॥
यत्किञ्चिन्मधुसंयुक्तं तदानन्त्याय कल्पयेत् ।
उपाकृतन्तु विधिना मन्त्रेणान्नं तथाकृतं ॥

गवयोनामारण्यो गवा सहात्यन्तसदृशः पशुस्तस्य मांसं 'गावयं'। 'रुद्रसम्मितान्' एकादशेति यावत्। 'पितृत्रये' पितॄणां त्रयो यस्य, तत्र गयासंज्ञकं तीर्थं। 'उपाकरणं' वैदिकसंस्कारविशेषः।

देवलः।

अद्भिर्मूलफलैः शाकैर्व्रीहिमाषयवैरपि ।
मासं तृप्यन्ति पितरः श्राद्धेष्विह निवेदितैः ॥
तुष्यन्ति मत्स्यैर्द्वौ मासौ त्रीन्मासान् रुरुभिर्मृगैः ।
शाकुनैश्चतुरो मासान् पञ्च तृप्यन्ति पार्षतैः ॥
शशैः षाण्मासिकी तृप्तिः कूर्मैः स्यात्सप्तमासिकी ।
अष्टौ मासान् वराहेन नव तृप्यन्त्यजेन च ॥
दश माहिषमांसेन तृप्यन्त्येकादशाविकैः ।
संवत्सरन्तु गव्येन पयसा पायसेन वा ॥
वार्ध्रीणसस्य मांसे तु तृप्तिर्द्वादशवार्षिकी ।
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृत्रये ॥
महाशकलिनो मत्स्याश्छागो वा सर्वलोहितः ।
कालशाकमित्येतदानन्त्याय प्रकीर्त्तितं ॥

---

(१) पितृत्रयाह्वे सा तत्रेति- ख०।

आह विष्णुः ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैः शाकैः प्रियङ्गुनीवारैः मुद्गैः गोधूमैश्च मासं प्रीयन्ते । द्वौ मासौ मत्स्यमांसेन, त्रीन्मासान् हारिणेन तु, चतुरस्त्रौरभ्रेण, पञ्च शाकुनेन, षट् छागेन, सप्त रौरवेण, अष्टौ पार्षतेन, नव गावयेन, दश माहिषेणैकादश तूपरेणाजेन, सम्वत्सरन्तु गव्येन पयसा पायसेन च तद्विकारैर्वा । कालशाकं महाशल्का वा वार्ध्रीणसमांसं खड्गमांसमक्षय्याय ।

अत्र पितृगीता गाथा भवन्ति ।

कालशाकं महाशल्का मांसं वार्ध्रीणसस्य च ।
विषाणवर्ज्या ये खड्गा आसूर्य्यं तान् लभेमहि ॥

'गाथाः' श्लोकविशेषाः । 'आसूर्य्यं' यावच्चन्द्रसूर्य्यादिपदार्थानामवस्थानं, तावत्कालं तान् वयं लभेमहीति पितरः प्रार्थयन्ते ।

विष्णुधर्म्मोत्तरे ।

खड्गा विषाणैः परिवर्जिता ये तेषां हि मांसेन भवत्यनन्तम् ।

आह पैठीनसिः ।

घृतेन मांसं प्रीणाति । कालशाकेन द्विमासं, यवाग्वपूपक्षीरेण त्रिमासं, मत्स्यैश्चतुरो मासान्, आजेण मांसेन पञ्च, पायसेन षण्मासान्, शाकुनेन सप्त मासान् , अष्टौ मासानैणेयेन, नव मासान् पार्षतेन, दश मासान् गव्येन, एकादशमासान् माहिषेण, द्वादशमासान् छागेन, खड्गेन त्रयोदशमासान्, सर्व्वलोहच्छागेनानन्त्यमिति ॥

ब्रह्मपुराणे ।

मासं तृप्तिः पितॄणान्तु हविष्यान्नेन जायते ।

मासद्वयं मत्स्यमांसैस्तृप्तिं यान्ति पितामहाः ॥
त्रीन्मासान् हारिणं मांसं विज्ञेयं पितृतृप्तये ।
प्रीणाति चतुरोमासान् शशीयैः पिशितैः पितॄन् ।'
शाकुनं पञ्च वै मासान् षण्मासान् शूकरामिषं ।
छागलं सप्त वै मासानैणञ्चैवाष्टमासिकीं ॥
करोति तृप्तिं नव वै रुरुमांसं न संशयः ।
गवयस्य मांसं तृप्तिं करोति दशमासिकीं ॥
तथैकादश मासांस्तु औरभ्रं पितृतृप्तिदं ।
संवत्सरं तथा गव्यं पयः पायसमेव च ॥
वार्ध्रीणसामिषं लोहं कालशाकं तथा मधु ।
दुहित्रामिषमन्नञ्च दत्तान्यात्मकुलोद्भवैः ॥
अनन्तां वै प्रयच्छन्ति तृप्तिं गौरीसुतस्तथा ।
पितॄणां नात्र सन्देहो गयाश्राद्धञ्च भो द्विजाः ॥

'दुहित्रामिषं' खड्गमांसं ।

कूर्म्मपुराणे ।

व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा ।
श्यामाकैश्चणकैः शाकैः नीवारैश्च प्रियङ्गुभिः ।
गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥
षण्मासान् मृगमांसेन पार्षतेनेह सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥

दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकच्छपयोर्मांसं मासानेकादशैव तु ॥
संवत्सरन्तु गव्येन पयसा पायसेन तु ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्व्वशः ॥

प्रभासखण्डे ।

गुणैश्च सूपशाकाद्यैर्नानाभक्ष्यैस्तथैव च ।
अन्नन्तु सुदधिक्षीरगोघृतं शर्करान्वितं ॥
मासं प्रीणाति वै सर्वान् पितृनित्याह वाक्पतिः ।
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हारिणेन तु ॥
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ।
सप्त लोहस्य मांसेन तथाष्टावैणजेन तु ॥
पृषतस्य तु मांसेन तृप्तिर्मासान् नवैव तु ।
दश मासांस्तु तृप्यन्ति वराहमहिषामिषैः ॥
शशकूर्म्मस्य मांसेन मासानेकादशैव तु ।
संवत्सरन्तु गव्येन पयसा पायसेन वा ॥
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।
कालशाकेन चानन्त्यं खड्गमांसेन चैव हि ॥
यत्किञ्चिन्मधुसंमिश्रं गोक्षीरघृतपायसं ।
दत्तमक्षय्यमित्याहुः पितरः पूर्व्वदेवताः ॥

वायुपुराणे ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन तु पितामहाः ॥
मत्स्यैस्तृप्यन्ति द्वौ मासौ त्रीन्मासान् हारिणेन तु ।
शशस्तु चतुरो मासान् पञ्च प्रीणाति शाकुनं ॥
वाराहेण तु षण्मासान् छागलं सप्तमासिकं ।
अष्टमासिकमित्युक्तं यच्च वै पार्षतं भवेत् ॥
रौरवेण तु प्रीयन्ते नव मासान् पितामहाः ।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥
कूर्म्मस्यैव तु मांसेन मासानेकादशैव तु ।
श्राद्धमेवं विजानीयात् गव्यं संवत्सरं भवेत् ॥
तथा गव्यसमायुक्तं पायसं मधुसर्पिषा ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
गयायामक्षयं श्राद्धं जपोहोमस्तथैव च ॥
पितृक्षये हि सा प्रोक्ता तस्मात्तत्राक्षयं स्मृतं ।
कृष्णछागस्तथा लोह आनन्त्यायैव कल्प्यते ॥

महाभारते ।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ॥
द्वौ मासौ तु भवेत्तृप्तिर्मात्स्यैः पितृगणैः सह ।
त्रीन्मासानाविकेनाऊस्चतुर्मासान् शशेन तु ॥
आजेन मासान् प्रीयन्ते पञ्च वै पितरो नृप ।

वाराहेण तु षण्मासान् सप्त वै शाकुनेन च ॥
मासानष्टौ पार्षतेन रौरवेण नवैव तु ।
गवयस्य तु मांसेन तृप्तिर्मासान् दशैव तु ॥
मासानेकादश प्रीतिः पितॄणां माहिषेण तु ।
गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ॥
यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
कालशाकञ्च लोहञ्चाप्यनन्तं छागमुच्यते ॥
गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर ।
अपि नः स कुले जातो यो नो दद्यात् त्रयोदशीं ॥
आपोमूलफलं मांसमन्नञ्चापि पितृक्षये ।
यत्किञ्चिन्मधुसंमिश्रं तदानन्त्याय कल्प्यते ॥

नागरखण्डे ।

अप्राप्तौ खड्गमांसस्य तथा वार्ध्रीणसस्य च ।
मधुना सह दातव्यं पायसं पितृतृप्तये ॥
तेनापि वार्षिकी तृप्तिः पितॄणाञ्चोपजायते ।
अभावे चापि तस्यापि शिशुमारसमुद्भवं ॥
मांसन्तु तृप्तये प्रोक्तं वत्सरं मासवर्जितं ।
तदभावे वराहोत्थं दशमासप्रतुष्टिदं ॥
आरण्यमाहिषोत्थेन तृप्तिः स्यान्नवमासिकी ।
रुरोश्चैवाष्टमासान् वै एणस्य सप्तमासिकी ॥

छागस्य मासषट्कञ्च शशकस्य च पञ्च वै ।
चतुरः शल्यकस्योक्तास्त्रयो विष्किरिकस्य च॥
मासद्वयञ्च मत्स्यस्य मांसं कपिञ्जलस्य च ।
नान्येषां योजयेन्मांसं पितृकार्ये कथञ्चन।
एतेषामपि चाभावात् पायसञ्च नराधिप ॥

योजयेदिति शेषः।

इति कालविशेषावच्छेदेन तृप्तिकरणानि द्रव्याणि ।

अथान्नानि ।

तत्र धान्यफलमूलादीनां साक्षादभ्यवहार्यभक्ष्यभोज्यलेह्यपेयचोष्य-रूप-स्वविकारप्रकृतिभावेन श्राद्धसम्बन्धात् धान्यादीनां ग्राह्यत्ववर्ज्यत्वप्रतिपादनं तद्विकारग्राह्यत्ववर्ज्यत्वपर्यन्तमिति ग्राह्यद्रव्यसाध्यस्यान्नस्य ग्राह्यत्वं वर्ज्यसाध्यस्य च वर्ज्यत्वमिति सिद्धमेव। अतो यद्ग्राह्यद्रव्यविकाराणां सामान्यतो ग्राह्यत्वं वचनैः प्रतिपाद्यते तत् स्पष्टत्वार्थं। यच्च विशेषतो विकारविशेषाणामपूपपायसादीनां तदन्येभ्यो विकारेभ्योऽपि प्रशस्ततरत्वप्रतिपादनार्थमिति विवेक्तव्यं।

तत्र ग्राह्याण्युच्यन्ते ।

आह प्रचेताः ।

पायस-तिलकृशर-ब्रह्मसुवर्चला-हरित-मुद्ग-कृष्णमाष-श्यामाक-प्रियङ्गु-यव-गोधूमेक्षुविकारांश्च दद्यात्। तिलतण्डुलसिद्धौदनः 'कृशरः' 'ब्रह्मसुवर्चलाः' आदित्यभक्ताः। विकारशब्दः प्रत्येकं प्रकृतिभिः सम्बध्यते । विहितद्रव्यप्रकृतिकाभ्यवहार्याशेषविकारोपलक्षणार्थमिति ।

देवलः ।

ततोन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्यपेयसमृद्धञ्च यथाशक्त्युपकल्पयेत् ॥

'बहुसंस्कारं' सूपकारशास्त्रोपदिष्टैः समृद्धतरगृहजनप्रतिसिद्धैर्हिङ्गुमरिचैलाकर्पूरादियुक्तिजन्यैरभिज्ञरसनीयैरतिशयविशेषैर्युक्तं । 'नैकव्यञ्जनभक्ष्यवत्' व्यज्यतेनेनान्नस्य रस इति 'व्यञ्जनं' सूपशाकादिकं। दन्तैरवखण्ड्य यद्भुज्यते तद् 'भक्ष्यम्'। यस्य ओष्ठदशनरसनादिभिर्निपीड़ितस्य सफूत्कारेण मुखमारुतेन रसोनिःष्पीयते तत् 'चोष्यं' यथेक्षुखण्डादिकं। 'पेयं' द्रवैकस्वभावं पानकादि। उपलक्षणं चैतद्भोज्यलेह्ययोः। यत्त्वनतिकाठिन्यादतिप्रयत्नवत्खण्डनानपेक्षं चर्व्वयित्वैव निगीर्य्यते तत् 'भोज्यं'। यत्तु सान्द्रद्रवस्वभावतया दशनानपेक्षेण रसनाव्यापारेणाश्यते तत् 'लेह्यं'। 'यथाशक्ति' शक्तिमनतिक्रम्य। 'उपकल्पयेत्' सम्पादयेत्।

ब्रह्मपुराणे।

गुड़-शर्कर-मत्स्यण्डी देयं फाणित-मुर्मुरं ।
गव्यं पयो दधि घृतं तैलञ्च तिलसम्भवं ॥

पाकाद्घनीभूतो गोलाकारेणोपनिबद्धेक्षुरसः 'गुड़ः'। इक्षुरसपाकप्रभव एव श्वेतवर्णचूर्णात्मकोविकारः 'शर्करा'। उत्कृष्टः शर्करा-भेदः 'मत्स्यण्डी'। ईषत्क्वथितस्येक्षुरसस्य द्रव एव विकारः 'फाणितं'। गुड़मरिचैलामिश्रो गोधूमस्थूलचूर्णविकारः 'मुर्मुरः'। तैलमित्यादि, तिलसम्भवमेव तैलं देयं नान्यत्। अयञ्च श्राद्धार्थप्रदीपप्रवर्त्तकस्य श्राद्धीयशाकपाकार्थस्याभ्यङ्गोद्वर्त्तनार्थस्य च तैलस्य नियमायोपदेशोऽनुसन्धेयः।

तथा ।

पायसं शालिमुद्गाढ्यं मोदकादींश्च भक्तितः ।
पूरिकाञ्च रसालाञ्च गोक्षीरञ्च नियोजयेत् ॥
यानि चाभ्यवहार्याणि स्वादुस्निग्धानि भो द्विजाः ।
ईषदुष्णकटून्येव देयानि श्राद्धकर्म्मणि ॥

'मोदकः' लड्डुकः । 'पूरिका' अनेनैव नाम्ना प्रसिद्धः अपूपविशेषः । शर्करालगेलानागकेशरमधुमरिचमिश्रमनुद्धृतस्नेहभागं वस्त्रे संघृष्य गालितं गोदधि 'रसाला' ।

तदुक्तमायुर्वेदे ।

सिताचतुर्जातमधूषणाढ्यं
दधि प्रघृष्टं सरसं रसालेति ।

तथा ।

मृष्टस्निग्धानि यानि स्युरीषत्कट्वम्लकानि च ।
स्वादूनि देवभोज्यानि तानि श्राद्धे नियोजयेत् ॥

कूर्म्मपुराणे ।

लाजान् मधुयुतान् दद्यात् सक्तून् शर्करया सह ।
दद्याच्छ्राद्धे प्रयत्नेन शृङ्गाटविससेबुकान् ॥

किञ्चिदार्द्रीकृत्य भृष्टाः शालयः 'लाजाः' । शर्करायुतानि भृष्टयवपिष्टानि 'सक्तवः' ।

वायुपुराणे ।

भक्ष्यान् वक्ष्ये करम्भञ्च इष्टका घृतपूरकाः ।
कृशरं मधु सर्पिश्च पयः पायसमेव च ।

स्निग्धमुष्णञ्च यो दद्यादग्निष्टोमफलं लभेत् ॥

करम्भस्य विहितप्रतिषिद्धत्वाद्विकल्पः। इष्टकाकृतिः खण्डेष्टकाख्यो भक्ष्यविशेषः 'इष्टका'। घृताक्तदुग्धालोड़ितैः शालिगोधूमपिष्टसारैर्विहितापूपविशेषाः(१) 'घृतपूराः'। 'सर्पिः' आज्यं, तच्च गव्यं माहिषं वा। 'पयः' क्षीरं, तच्च गव्यमेव। 'स्निग्धं' स्नेहद्रव्यसंस्कृतं। 'उष्णं' ईषदुष्णं। 'अग्निष्टोमः' ज्योतिष्टोमस्याद्या संस्था।

उष्णं दद्यादित्यस्यापवादः सौरपुराणे।

विविधं पायसं दद्याद्भक्ष्याणि विविधानि च।
लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना।
विविधान्यपि मांसानि पितॄणां पितृपूर्व्वकं॥

अत्राग्निपकात् फलादन्यत् फलं विनेति बोद्धव्यं। पक्वस्य कदुष्णस्यैव स्वादुत्वात् तथाविधस्यैव दानं युक्तं। उपलक्षणं चैतदपक्वभक्ष्याणां कन्दमूलादीनां।

अतएव कूर्म्मपुराणे।

उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता।
अन्यत्र फलमूलेभ्यः पानकेभ्यस्तथैव च॥

'पानकानि' गुड़मरिचशर्करैलाकर्पूरादिसंस्कृतापक्वद्राक्षाकदलादिफलद्रवाः।

भविष्योत्तरे।

उष्णमन्नन्तु विप्रेभ्यः श्रद्धया विनिवेदयेत्।
अन्यत्र फलमूलेभ्यः पानपुष्पादिकांस्तथा॥

(१) पूरीविशेषा इति ख०।

वायुपुराणे ।

दधि गव्यमसंसृष्टं भक्ष्यान्नानाविधानपि ।
दत्त्वा न शोचति श्राद्धे वर्षासु च मघासु च ॥

'असंसृष्टं' असंपृक्तं । मक्षिकाद्युच्छिष्टविकारैः अपवित्रद्रव्यान्तरेण वा भक्ष्यवटकमण्डकमोदकादयो लोकसिद्धप्रकारका एव विशिष्टतर-श्राद्धाचरणसमुत्पादितपरिपुष्ट-पारलौकिक-सुखोत्पादक-सुकृतराशित्वादकृतान्यबहुपुण्योऽपि स्वर्गसुखाभावनिमित्तकं शोकं न करोति ।

तथा ।

घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् ।
शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ॥
स्युश्च संवत्सरं प्रीता वर्करैर्मेषकैणकैः ।
सक्तूलाजांस्तथा पूपान् कुल्माषान् व्यञ्जनैः सह ॥
सर्पिःस्निग्धानि सर्वाणि दध्ना संस्कृत्य भोजयेत् ।
श्राद्धेष्वेतानि यो दद्यात् पितरः प्रीणयन्ति तं ॥

घृतं भूमौ समुत्सृजेदित्यस्य घृतबाहुल्ये तात्पर्य्यं। तथा घृतं परिवेष्यं यथा पात्रमापूर्य्य भूमावप्युपसर्पति । अङ्गारभ्रष्टकणिशगलिता धान्यकणाः 'पृथुकाः' । 'वर्करैः' तरुणैः । 'मेषैः' उरभ्रैः । 'पूपाः' पूपलिकादिबहुभेदाः । अर्द्धस्विन्नानि धान्यानि 'कुल्माषाः' ।

कूर्म्मपुराणे ।

अथ पिण्डावशिष्टान्नं विधिवद्भोजयेद्द्विजान् ।
मांसान्यपूपान् विविधान् दद्यात् कृसरपायसं ॥
पूपशाकफलानीक्षून् पयोदधि घृतं मधु ।

अन्नं चैव यथाकामं विविधं भोज्यपेयकं ॥
यद्यदिष्टं द्विजेन्द्राणां तत्तत्सर्वं निवेदयेत् ।
धानास्तिलांश्च विविधान् शर्करा विविधास्तथा ॥

अथेत्यग्नौकरणकालीनपिण्डप्रदानानन्तरं ।

कालिकापुराणे ।

पायसं मधुसर्पिर्भ्यां खण्डेन च विमिश्रितं ।
आदौ पिण्डान् समुद्दिश्य द्विजेभ्यस्तदनन्तरं ॥

दद्यादिति शेषः ।

देवलेन तु प्रदेयस्यान्नस्य तिलादिसाहित्यमुक्तम् ।

अथ पिण्डावशिष्टान्नं भोजयेत्प्रयतोद्विजान् ।
भोजनैः सतिलैः स्नेहैर्भक्ष्यपूपविमिश्रितैः ॥

मित्रायणीयसूत्रे तु परिवेषणीयस्य मध्वादिसाहित्यमप्युक्तम् ।

तिलवन्मधुमच्चान्नं सामिषञ्च दद्यादिति ।

प्रदेयस्यान्नस्य प्रभूतत्वं तु पिप्पलादसूत्रे प्रतिपादितं ।

मांसैः शाकैर्माषैर्मधुना घृतेन दध्ना पयसा च प्रभूतमन्नमिष्टं दद्यात् ।

शङ्खलिखितौ ।

ततस्तिलैर्माषैः शाकैः पूपैः कृसरपायसापूपैर्लाजैर्भक्ष्यैः पानैर्मधुना घृतेन दध्ना पयसा च प्रभूतमिष्टमन्नं दद्यात् ।

तत इत्यग्नौकरणशेषप्रतिपत्त्युत्तरकालं। यच्च जीवतः पित्रादेर्भक्ष्य-भोज्यादिकं प्रियमासीत् तत्पितृताङ्गताय तस्मै श्राद्धे देयम् ।

तदाह कार्ष्णाजिनिः ।

यदिष्टं जीवतस्त्वासीत्तद्द्यात्तस्य यत्नतः ।
सुहृत्सौ दुस्तरं मार्गं ततोयाति न संशयः ॥

पायसाद्यन्नविशेषदाने फलविशेषाः ।

तत्र ब्रह्मवैवर्त्ते ।

सदान्नं पायसं सर्पिर्मधुमूलफलानि च ।
भक्ष्यांश्च विविधान् दत्त्वा परत्रेह च मोदते ॥
नवशस्यानि योदद्याच्छ्राद्धं सत्कृत्य यत्नतः ।
सर्वान् भोगानवाप्नोति पूज्यते च दिवङ्गतः ॥
भक्ष्यभोज्यानि चान्यानि प्रलेह्यान्यपराणि च ।
सर्वश्रेष्ठानि योदद्यात् सर्वश्रेष्ठोभवेन्नरः ।
वैश्वदेव्यञ्च सौम्यञ्च खड्गमांसं वरं हविः ॥

प्रभासखण्डे ।

तिलानिक्षूंस्तथा भोज्यं श्राद्धे सत्कृत्य दापयेत् ।
मित्राणि लभते लोके स्त्रीषु सौभाग्यमेव च ॥

भगवतीपुराणे ।

सर्वेषामेव चान्नानां परमान्नञ्च पायसं ।
सर्वानन्दः स तु प्रोक्तो येन दत्तन्तु पायसं ॥
पायसेन पितॄन् प्रीणन् प्रीणाति सुधया नरः ॥
कपिलापायसं गव्यं पयः सर्पिस्तथामिषं ।
मधु वेत्यचयां तृप्तिं पितॄणां साधयन्ति हि ॥

मत्स्यपुराणे ।

यत्किञ्चिन्मधुना मिश्रं गोक्षीरघृतपायसैः ।

दत्तमक्षय्यमित्याहुः पितरः पूर्वदेवताः॥

यत्किञ्चिद्भक्ष्यभोज्यं मधुमिश्रितं गोक्षीरघृतपायसैः सहितमक्षय्य-मित्यर्थः।

पयसा प्राप्नुयाच्चैव गोक्षीरं गोसवे फलं।
सर्पिषा तु शुभं चक्षुः षोड़शाहफलं लभेत्।
मधुना तु चिराचस्य फलञ्च समवाप्नुयात्॥

अन्नं नरः प्राप्नुयाच्छ्रद्दधानः सर्वैः कामैर्भोजयेद्यस्तु विप्रान्।
सर्वार्थदः सर्वविप्राभिवन्द्यः फलं भुङ्क्ते सर्वमेधस्य नित्यम्॥

इति ग्राह्याण्यन्नानि।

अथ वर्ज्यान्यन्नानि।

तत्राह शाट्यायनिः।

वर्ज्यमन्नं त्रिधा प्रोक्तमाद्यमाश्रयगर्हितं।
जातितो गर्हितं यच्च यच्च भावादिदूषितं॥
अभोज्यान्नं विजानीयादन्नमाश्रयगर्हितं।
लशुनादिकमन्नं यत् ज्ञेयं जातिविगर्हितं।
दुष्टं भावक्रियावस्थासंसर्गैस्तु तृतीयकं॥

अभोज्यान्नमिति तच्च परिभाषाप्रकरणे वक्ष्यते। तत्र कारण-गतजातिदुष्टतया वर्ज्यानि वर्ज्यधान्याभिधानेनैवाभिहितानि भावक्रि-यासंसर्गावस्थादुष्टतया वर्ज्यानि तूच्यन्ते।

विश्वामित्रः।

जातिक्रियादुष्टमसत्संसर्गदुष्टं सकृल्लेषं न भक्षयेत्।

आह गोभिलः।

अतिशुक्तोग्रलवणं विरसं भावदूषितं
राजसं तामसञ्चैव हव्यकव्येषु वर्जयेत् ॥

'अतिशुक्तं' यत् स्वयमनम्लं द्रव्यान्तरेण संसृष्टं वा कालवशादुत्पन्नातिकुत्सितरसं । 'उग्रलवणं' लवणाधिक्येन मुखोद्वेगकरं । 'विरसं' स्वभावतोऽतिमन्दरसं, कालादपगतस्वाभाविकरसं वा । 'भावदूषितं' कार्पण्यकुत्साकुत्सितसाकूण्यारोपादिभिरन्तःकरणविकारैर्दूषितं । 'राजसं' रजोगुणस्य कार्यं कारणं वा । एवं तामसं ।

तच्चोभयमुक्तं भगवद्गीतासु ।

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥
यातयामङ्गतरसं पूतिपर्युषितञ्च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियं ॥

अतः सात्त्विकमेवान्नं प्रशस्तं । तदपि तत्रैव दर्शितं ।

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रिया इति ॥

'हव्यकव्येषु' हव्यकव्यसाध्येषु कर्मसु ।

ब्रह्माण्डपुराणे ।

आसनारूढमन्नाद्यं पादोपहतमेव च ।
अमेध्यादागतैः स्पृष्टं शुक्तं पर्युषितञ्च यत् ॥
ङिःखिन्नं परिदग्धञ्च तथैवाग्रावलेहितं ।
शर्कराकीटपाषाणैः केशैर्यच्चाप्युपद्रुतं ॥
पिण्याकं मथितञ्चैव तथातिलवणञ्च यत् ।

सिद्धाः कृताश्च ये भक्ष्याः(१) प्रत्यक्षलवणीकृताः ॥
वाग्भावदुष्टाश्च तथा(२) दुष्टैश्चोपहता अपि ।
वाससा चोपधूतानि वर्ज्यानि श्राद्धकर्म्मणि ॥

'आसनारूढं' साक्षादासनस्योपरिस्थापितं, भूव्यतिरिक्ताधिकरणस्थापितपात्रस्थितं वा । 'अन्नाद्यं' अदनार्हमन्नं । 'पादोपहतं' साक्षात् भाजनद्वारा वा पादस्पर्शदूषितं । 'अमेध्यादागतैः' अपवित्रस्पर्शदूषितैश्चेतनाचेतनैः, स्पृष्टम् । 'शुक्तं' पूर्व्वमुक्तं । 'पर्युषितं' रात्र्यन्तरितं । 'द्विःस्विन्नं' वारद्वयं पक्वम्। यदन्नमवश्रयणान्तं पचिक्रियया सिद्धं सन्मार्द्दवाय पुनरुदकं निनीयावस्रावरणान्तमेव पच्यते तत् द्विःस्विन्नं । न तु यत्सिद्धमेव पुनरौष्ण्यनिर्वाहार्थमग्निसन्निधौ स्थाप्यते । "अत्युष्णं सर्वमन्नं स्यात्' इति वचनात् । अतएव पुनर्व्विलाप्यमानमाज्यमपि न द्विःस्विन्नं । यस्य तु सूरणादेरधिश्रयणद्वयेनैव सिद्धिः प्रसिद्धा तस्य तावदवयव एक एवासौ पाक इति तत्रापि न द्विःपक्वता । 'परिदग्धं' द्रवांशसंशोषणात् भाण्डाग्निना परिसृष्टं । 'अग्रावलेहितं' अग्रे उपरिभागे मार्जारादिभिरवलीढं, पूर्वमन्येनास्वादितैकदेशं वा । 'शर्कराः' श्वेताश्मजातिविशेषः । 'कीटाः' पिपीलिकादयः । 'पाषाणः' दृषत् । 'केशः' कचः । एतैर्दूषितं अन्तःप्रविश्याभक्ष्यतां नीतं । 'मथितम्' आलोडितं दधि । 'अतिलवणम्' अतिमात्रलवणयुक्तं । 'सिद्धाः कृताश्च ये भक्ष्याः' येषु तैलपक्वगोधूमचूर्णमयवर्त्तिशोषितफल-फाणि-पर्पटकादिरूपेषु भक्ष्येषु चिरकालस्थितेष्वपि पर्युषित-

---

(१) भक्ता इति ग० ।
(२) वासावदुष्टाश्च तथेति ग० ।

व्यवहारो नास्ति ते भक्ष्याः सिद्धाः कृता इत्युच्यन्ते। 'प्रत्यक्षलवणीकृताः' भोक्तरि पश्यति लवणेन संयोजिताः। 'वाग्दुष्टाः' निन्दादिरूपया वाचा दूषिताः। 'दुष्टैश्चोपहताः' श्व-शूकर-काक-कुक्कुटादिभिर्नग्न-पतित-पाषण्डादिभिश्च दर्शन-स्पर्शनादिगोचरीकृताश्च ये भक्ष्याः। 'वाससा चोपधूतानि' येषामुपरि मक्षिकापगमार्थमौष्ण्यनिवृत्तये वा प्रसङ्गान्तरेण वा वस्त्रमवधूयते तान्यन्नानि तथोच्यन्ते। मनुः।

केशकीटावपन्नञ्च पदा स्पृष्टञ्च कामतः।
भ्रूणघ्नावेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया॥
पतत्रिणावलीढ़ञ्च शुना संस्पृष्टमेव च।
गवा चान्नमुपघ्रातं घुष्टान्नञ्च विशेषतः॥
शुक्तं पर्युषितञ्चैव शूद्रस्योच्छिष्टमेव च।
वृथाकृशरसंयावपायसापूपमेव च।
अनुपाकृतमांसञ्च देवान्नानि हवींषि च॥

केशकीटैरवपन्नं संस्पृष्टं 'केशकीटावपन्नं'। केशग्रहणं नखरोम्णां दूषिकादिमलानाञ्च प्रदर्शनार्थं। कीटग्रहणं क्षुद्रजन्तूनां क्रिमि-पतङ्गानां। कीटेषु च मक्षिकादयो मृता एव दूषयन्ति न जीवन्तः, अन्ये तु जीवन्तोऽपि। 'कामतः' बुद्धिपूर्वं, कामकारेण यत्पादस्पृष्टं, अतः प्रमादस्पृष्टे न दोषः। 'भ्रूणहा' ब्रह्महा, तेनावेक्षितं निपुणमवलोकितं। प्रदर्शनार्थं चैतदन्येषां महापातकिनां। स्पृष्टस्य तु प्रतिषेधः स्नानविधानादेव सिद्धः। 'उदक्या' रजस्वला, तया स्पृष्टस्यैव प्रतिषेधोनावेक्षितस्य। उदक्यास्पृष्टस्यापि स्नानविधानादेव प्रतिषेधसिद्धौ प्रत्या-

लितमपि तदन्नं भोज्यमित्येतदर्थं स्पृष्टग्रहणं। 'पतत्री' पक्षी स च समाचारात् क्रव्यादो गृध्र-वायसादिः, न तु शुक-हंसादिः। 'घुष्टान्नं' भुज्यतामत्र ये केचिदर्थिन इति यदुद्घुष्य दीयते। यद्वान्यस्मै प्रतिश्रुत्यान्यस्मै दीयते। प्रतिज्ञाने ह्ययं धातुः पठ्यते। 'शूद्रस्य' शूद्रस्वामिकं यदन्नं। 'उच्छिष्टं' भुक्तावशिष्टं। तिलैः सह सिद्धौदनः 'कृशरः'। 'संयावः' तिलसर्पिर्गुडादिसहित-गोधूमशकलनिर्म्मितो भक्ष्यविशेषः सूदेषु प्रसिद्धः। पयसि सिद्धौदनः 'पायसः'। 'अपूपः' अस्नेहपक्वो गोधूमविकारः। वृथाशब्दः सर्वत्रानुषज्यते। यदात्मार्थं क्रियते देवान् पितॄनतिथीन् वानुद्दिश्य तद्वृथा। 'अनुपाकृतम्' अप्रोक्षितं मांसं। 'देवान्नानि' देवस्वीभूतान्यन्नानि। 'हवींषि' देवतार्थमुपकल्पितानि।

याज्ञवल्क्यः।

अनर्चितं वृथामांसं केशकीटसमन्वितं।
शुक्तं पर्युषितोच्छिष्ट[१] श्वस्पृष्टं पतितेक्षितं॥
उदक्यास्पृष्ट-संघुष्ट-पर्य्यायान्नञ्च वर्जयेत्।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टञ्च कामतः॥

तथा।

वृथाकृसरसंयावपायसापूपशष्कुलीः।

'अनर्चितं' अर्चार्हाय यदवज्ञया दीयते। 'वृथामांसं' देवाद्यर्चनशिष्टं न भवति, आत्मार्थमेव यत्साधितं, तच्च प्राणात्ययादिव्यतिरेकेण वर्जयेत्। 'श्वस्पृष्टं' शुना स्पृष्टं। अन्यसम्बन्धव्यपदेशेन यद्दी-

(१) पर्य्युषितं शिष्टमिति ख०।

यते तत् 'पर्यायान्नम्'। पर्याचान्तमिति पाठे परिगतमाचान्तं गण्डूषग्रहणं यस्मिन् भुज्यमाने तत् 'पर्याचान्तं'। पार्श्वाचान्तमिति पाठे एकस्यां पङ्क्तौ पार्श्वस्थे आचान्ते न भोक्तव्यं, भस्मोदकादिविच्छेदो न कृतश्चेत्। 'शकुनः' क्रव्यादपक्षी। स्नेहपक्वोगोधूमविकारः 'शष्कुली'।

यमः।

उदक्यया च संस्पृष्टं गवाघ्रातञ्च यद्भवेत्।
काक-कुक्कुटसंस्पृष्टं शुक्तञ्च कृमिसंयुतं।
अभोज्यञ्च द्विजातीनां धर्मराजवचो यथा॥
यवागूं कृशरञ्चैव पायसापूपशष्कुलीः।
छजीषपक्वमांसञ्च मत्स्यानप्यनुपाकृतान्॥
वर्जयेत्सर्वशुक्तानि देवान्नानि हवींषि च।
स्नेहेन तु समायुक्तं नैव सर्वं प्रयोजयेत्॥

तथा।

अवधूतमवज्ञातं सरोषं विस्मयान्वितं।
गुरोरपि न भोक्तव्यमन्नं संस्कारवर्जितं॥
अवघुष्टं यदुच्छिष्टं वागदुष्टमपि यद्भवेत्।
अश्रद्धया कृतं दत्तमभोज्यञ्च द्विजातिभिः॥

तथा।

भिन्नभाण्डे न भुञ्जीत न रात्रौ दधिसक्तुकान्।
दिवा दधित्थधानासु रात्रौ च दधिसक्तुषु।
श्लेष्मातके तथा लक्ष्मीर्नित्यमेव कृतालया॥

यवागूप्रभृतीन्यात्मोद्देशेन साधितान्यभक्ष्याणि । अनवस्रावितो-विरलद्रव ओदनः 'यवागूः'। 'ऋजीषं' पिष्टपचनभाण्डं। अनग्निक उष्मा 'ऋजीषं' तेन धान्यराश्यादिगतोष्मपक्कमिति स्मृतिचन्द्रिकायां। 'अवधूतं' वाससा । 'दधित्थं' कपित्थं । 'धानाः' भृष्टयवाः ।

देवलः ।

अभोज्यं प्राकृराहारं शुक्तं पर्युषितञ्च यत् ।
अन्यत्र मधु-सक्तुभ्यां भक्ष्येभ्यः सर्पिषो गुड़ात् ॥
नाश्नीयात् पयसा नक्तं भुक्तं चेन्न स्वपेन्निशि ।
न चीरमुत्सृजेत् प्राप्तं पवित्रं हि पयः स्मृतम् ॥

गौतमः ।

उद्धृतस्नेहविलयन-पिण्याक-मथितप्रभृतीनि चात्तवीर्य्याणि नाश्नीयात् ।

'विलयनं' भक्तमण्डः ।

आपस्तम्बः ।

विलयनं मथितं पिण्याकं मधुमांसं वर्जयेत् । कृष्णधान्यञ्च शूद्रान्नं ये चान्ये नास्य सम्मताः। अहविष्यमनृतं क्रोधं येन च क्रोधः स्मृतिमिच्छन् यशोमेधां स्वर्गं बुद्धिं द्वादशैतानि वर्जयेत् ।

तथा ।

अप्रयतोपहतमन्नमप्रयतमभोज्यं । अप्रयतेन शूद्रेणोपहतमभोज्यं। यस्मिंश्चान्ने केशः स्यादन्यद्वा मेध्यममेध्यैरवसृष्टं कीटो वाऽमेध्यः । सदा मूलकलिङ्गं वा पदा चोपहतं शिवया शुना वाप्यपात्रेण वा दृष्टं शुचा वोपहतं भुञ्जानं श्वा शूद्रो वा उपस्पृशेदनर्हद्भिर्वा समानपङ्क्तौ

भुञ्जानेषु वा यत्रानुत्थायोच्छिष्टं प्रयच्छेदाचामेद्वा कुत्सयित्वा वा यत्रान्नं दद्युः गोभिरवघ्रातमन्यैर्वाऽमेध्यैः ।

तथा ।

नापणीयमन्नमश्नीयात्तथा रसानां मांसं मधुलवणानि परिहाप्य तैल-सर्पिषी तूपयोजयेत्। उदके बधाय कृतान्नं पर्युषितमप्यद्यात् तत्रानाद्यं शुक्तं चेत्यपराणि च पृथुकतण्डुलकरम्भभरुजसक्तुशाकमांसपिष्टक्षीरवृक्षौषधिवनस्पतिमूलफलवर्जं शुक्तञ्चापरियोगं ।

शङ्खलिखितौ ।

तत्रापेयान्यभक्ष्याणि वर्जयेदमेध्यपतितचण्डालपुक्कसरजस्वलाकुणपकुष्ठिसंस्पृष्टानि ।

तथा ।

नापणीयमन्नमश्नीयान्न द्विःपक्वं न शुक्तं न पर्युषितमन्यत्र रागचुक्रखाडवदधिगुडगोधूमयवपिष्टविकारेभ्यः ।

अश्नीयादित्यनुवृत्तौ हारीतः ।

न रजस्वलादत्तं न पुंश्चल्या न क्रुद्धया न मलवद्वाससा नापरया द्वारापन्नं न द्विःपक्वं न शुक्तं न पर्युषितमन्यत्र गुड़पिष्टसक्तुस्नेहगोरसतैलादिषु पक्वान्नतैलदध्यन्नपानं नावक्षुतान्नं न जुगुप्सितं ।

गौतमः ।

नित्यमभोज्यं केशकीटावपन्नं रजस्वलाकृष्णशकुनिपदोपहतं भ्रूणघ्नावेक्षितं गवाघ्रातं भावदुष्टं शुक्तं केवलमदधि पुनःसिद्धं पर्युषितान्यशाकभक्ष्यस्नेहमांसमधूनि ।

अभोज्यमित्यनुवृत्तौ वशिष्ठः ।

अन्नं पर्युषितं भावदुष्टं सल्लेखं पुनःसिद्धमाममृजीषपक्वञ्च कामं तु दध्ना घृतेन वाभिघारितमुपभुञ्जीत ।

तथा ।

उच्छिष्टमगुरोर्न भोज्यं समुच्छिष्टमुच्छिष्टोपहतञ्च यद्वसनकेश-कीटोपहतञ्च ।

वृहस्पतिः ।

नाद्याच्छास्त्रनिषिद्धन्तु भक्ष्यभोज्यादिकं द्विजः ।
मांसं विगर्हितञ्चैव शुक्तं बहुविधं तथा ।
अत्यम्लं शुक्तमाख्यातं निन्दितं ब्रह्मवादिभिः ॥

यमः ।

घृतं वा यदि वा तैलं विप्रो नाद्यान्नखच्युतं ।
यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणैः ॥
हस्तदत्ताश्च ये स्नेहा व्यञ्जनं लवणानि च ।
दातारं नोपतिष्ठन्ति भुक्त्वा भुञ्जीत किल्विषं ॥
एकेन पाणिना दत्तं शूद्रदत्तञ्च यद्भवेत् ।
घृतं तैलञ्च लवणं पाणीयं पायसं तथा ॥

वर्ज्यमिति शेषः। दर्व्याद्यनन्तर्द्धाय साक्षाद्धस्तेनैव यद्दत्तं तद्धस्तदत्तं। तथा हस्तेन दत्तं शौद्रं यदपि किमानीयतां तदपि शीतलं शौद्रं शूद्रैः परिविष्टं भवति। अथवा शौद्रं शूद्रोचितं श्राद्धायोग्यमिति यावत्। यदप्योदनाद्यन्नं किं तत्तदर्थमानीयतामिति पृष्ट्वा आनीतं तदपि शौद्रम्।

भविष्यत्पुराणे ।

सुरालशुनसंसृष्टं पीयूषादिसमन्वितं ।
संसर्गात् दुष्यते तद्धि शूद्रोच्छिष्टवदाचरेत् ॥
इति वर्ज्यान्नानि ।

अथैतेषु वर्ज्यत्वेनोक्तेष्वन्नेषु केषाञ्चित्प्रतिप्रसवः क्रियते। तत्राह मनुः।

दधि भक्ष्यञ्च शुक्तेषु सर्वञ्च दधिसम्भवं।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः॥

तथा।

यत्किञ्चित्स्नेहसंयुक्तं भक्ष्यं भोज्यमगर्हितं।
तत्पर्युषितमप्याद्यं हविःशेषञ्च सर्वशः॥
चिरस्थितमपि त्वाद्यमस्नेहाक्तं द्विजातिभिः।
यवगोधूमजं सर्वं पयसश्चैव विक्रियाः॥

'दधिसम्भवं' उदश्विन्मधुकिलाटकूर्चिकादि। शुक्तान्युच्यन्ते। यानि मधुररसान्यपि कालात्ययेन द्रव्यान्तरसंसर्गेण वात्यम्लीभावमापद्यन्ते, यथाम्रद्राक्षादीनि, यानि तु स्वभावतोम्लानि दाडिमामलकजम्बीरादीनि तानि नैव शुक्तानि यानि चाप्राप्तपाकान्याम्रादीनि। न ह्ययमम्लपर्यायः शुक्तशब्दः। तेषु च केवलानि कालतः शुक्तानि प्रतिषिध्य द्रव्यान्तरैर्मूलादिभिः मिश्रितान्यनुज्ञायन्ते। तथा च गौतमेनोक्तम् केवलमदधीति।

उदकेन संसृज्य परिवासनं 'अभिषवः', पुष्पादिभिः सह यान्यभिषूयन्ते। 'भक्ष्यं' धानाशष्कुल्यानि। खरविशदभोज्यमोदनादि। अगर्हितमनपेतगन्धवर्णरसं तच्चेत्स्नेहसंयुक्तं सत्पर्युषितं तदा भक्षणीयं।

अभिघारणस्नेहसंयुक्तस्यापि हविःशेषस्य पृथक्ग्रहणमादरार्थं । 'चिर-स्थितं' द्विविराद्यन्तरितं । 'यवगोधूमजं' अपूप-सक्त्वादि, अस्नेहाक्तमपि भोज्यं । 'पयसः', 'विक्रियाः' विकाराः दधि-मथितादयः ।

याज्ञवल्क्यः ।

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितं ।
अस्नेहा अपि गोधूम-यव-गोरसविक्रियाः ॥

बृहस्पतिः ।

दधि भक्ष्यं शुक्तमपि यच्चैव दधिसम्भवं ।
ऋचीषपक्वं भक्ष्यं स्यात् ससर्पिष्कमिति श्रुतिः ॥

तथा ।

यवगोधूमजं सर्वं विकाराः पयसश्च ये ।
राग-खाडवचुक्राद्यं भक्ष्यं पर्युषितं भवेत् ॥
अपूपाश्च करम्भाश्च धानावटक-सक्तवः ।
शाकमांसानि यूपश्च सूपं कृशरमेव च ॥
यवागूं पायसञ्चैव यच्चान्यत् स्नेहसंयुतं ।
सर्वं पर्युषितं भोज्यं शुक्तञ्च परिवर्जयेत् ॥

वशिष्ठः ।

अपूप-धाना-करम्भ-सक्तु-वटक-तैल-पायस-शाकानि विना शुक्तानि वर्जयेत् । अन्यांश्च चीरयवपिष्टविकारान् ।

पैठीनसिः ।

कामं दध्ना घृतेनाभिघारितं पर्युषितान्नं भुञ्जीत ये ह्यत्र शुक्त-पर्युषितादीनां प्रतिप्रसवास्तेषां पुरुषार्थैकरूपत्वान्न श्राद्धान्नविष-

गन्ध-वर्णशुद्धा आपो भूमिगताः वितृष्णा यत्र गौर्भवेत्।
विपर्यस्तं महोदकमपि वर्ज्यं।

यमः।

प्रपामरण्ये च घटञ्च कूपे द्रोण्यां जलं कोषगतास्तथापः।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगतं पिवेत्तु॥

हारीतः।

भूमिष्ठाः पुण्या आपोऽशुभवर्जमथापि ब्राह्मणं देवानां वागेषा मत्स्यापः प्राविशंस्ते देवा अद्भ्यो वाचमैच्छंस्तानापोऽब्रुवन् यदस्माकं प्रजाभ्यो यदन्येभ्योऽशुभं तत् पावयध्वं ततो वाचं दास्याम इति तथेति देवाः प्रत्याहुस्ता अग्निं प्राविशंस्ताः अग्निपूता अभवंस्तस्मादेता यत्र तिष्ठन्ति तद्दहन्ति ताः वायुं प्राविशंस्ता वायुपूता अभवंस्तस्मादेता यतो यन्ति ततो दारयन्ति ताः सोमं प्राविशंस्ताः सोमपूता अभवंस्तस्मादेता स्निग्धाः शैत्यरसवत्यः कल्प्यन्ते। असावादित्यो ब्रह्मा यज्ञः सर्वा देवतास्ता अन्वहं देव-गवादिभीरश्मिभिरपाययंस्तस्मादेता अहनि शुद्धाः पूताः शुद्धौ कल्प्यन्ते। तस्माद्यद्यन्मीमांस्यं स्यात् तत्तदद्भिः संस्पृशेच्छुद्धिर्भवति। रात्रावेतास्त्वापो वरुणं प्राविशंस्तस्मान्न रात्रौ गृह्णीयाद्धाम्नो धाम्न इत्यग्निमुपरिष्टाद्धारयन् गृह्णीयात्।

कात्यायनः।

अपो निशि न गृह्णीयाद्गृह्णन्नपि कदाचन।
विधृत्याग्निमुपर्यासां धाम्नो धाम्न इतीरयन्॥

अस्तमित आदित्यमुदकं गृह्णीयादापदि रात्रौ यदि गृह्णीयादग्निमुपरि धारयन् धाम्नोधाम्नोराजन्निति यजुर्जपन् गृह्णीयात्।

बौधायनः ।

अस्तमितआदित्य उदकं गृह्णीयान्न गृह्णीयादिति मीमांसन्तेन गृह्णीयादित्येके आहुर्ब्रह्मवादिनो गृह्णीयादित्येतदपरे यावदुदकं गृह्णीयात्तावत् प्राणमायच्छेदग्निर्ह्व वा उदकं गृह्णाति ।

उशनाः ।

नद्यः कूप-तड़ागानि सरांसि सरितस्तथा ।
असंवृतान्यदोषाणि मनुः स्वायम्भुवोऽब्रवीत् ॥

पराशरः ।

अन्यैरपि कृतान् दोषान् कूपसेतुपथेषु च ।
तेषु वेगेषु यत्तोयं सम्यक् चेत्रपथेषु च ।
प्रतिग्राह्यास्च पेयास्च न दुष्टान् मनुरब्रवीत् ॥

इति ग्राह्याण्युदकानि ।

अथ वर्ज्याण्युदकानि ।

ब्रह्माण्डपुराणे ।

दुर्गन्धि फेनिलं वर्ज्यं तथा वै पल्वलोदकं ।
न लभेत् यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ॥
यन्न सर्वाय चोत्सृष्टं यच्चाभोज्यं निपानजं ।
तद्वर्ज्यं सलिलं तात सदैव पितृकर्मणि ॥

'यत्' कूपादिकं, तत्कर्तृभिः सर्वप्राण्युपजीवनार्थं 'नोत्सृष्टं' न परित्यक्तं,तत्सलिलं पितृकर्मणि वर्ज्यं।कूपसमुद्धृतं पश्वादिपेयोदकधारणार्थो जलाशयः 'निपानं' 'तज्जं' तत्र स्थितमपि, सलिलं वर्ज्यनीयं ।

योगयाज्ञवल्क्यः ।

अग्राह्यास्त्वग्रिमा आपो नद्याः प्रथमवेगगाः ।
अक्षोभितास्तु केनापि यास्तु तीर्थात्तथोद्धृताः[१] ॥

'अग्रिमाः' प्रथमवृष्टिसम्भूताः, ता नद्याः कलुषतरैकद्वित्र्यादिदिनस्थायिवेगगता एव न ग्राह्याः। निवर्त्तमाने तु प्रथमवेगे प्रसादवत्यो ग्राह्याः। द्वितीयादिवेगे च वेगानिवृत्तावपि ग्राह्याः। नदीव्यतिरिक्ताशयसंभृतास्त्वग्रिमाः दशरात्रमग्राह्याः।

तथा च वचनं।

अजा गावो महिष्यश्च ब्राह्मण्यश्च प्रसूतिकाः।
दशरात्रेण शुध्यन्ति भूमीषु च नवोदकं ॥

याश्च केनचित् सङ्क्षोभ्य कलुषीकृताः याश्च तीर्थाज्जलावतरणमार्गादुद्धृतास्ता अपि न ग्राह्याः।

व्यासः ।

नद्या यच्च परिभ्रष्टं नद्या यच्च विवर्जितं ।
गतप्रत्यागतं यच्च तत्तोयं परिवर्जयेत्॥

ग्रीष्मादावुपशुष्यज्जलान्नदीप्रवाहात् पृथग्भूय पल्वले स्थिरीभूतं 'नद्याः परिभ्रष्टं'। यच्च स्वल्पनिर्झररूपेण पृथक्भूय पुनर्महाप्रवाहेण सह संसर्गं न लभते तत् 'नद्या विवर्जितं'। सकृदसकृद्वा स्वतो वा कारणान्तरेण वा यत्प्रतिलोमं स्यन्दते तत् 'गतप्रत्यागतं', तत्परिवर्जयेत्।

मरीचिः ।

नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणं ॥

(१) तीर्थेषु विस्रुता इति ख० ।

तर्पणशब्दः श्राद्धाद्युपलक्षणार्थं। नभाश्च नभस्यश्च नभोनभस्यौ श्रावण-भाद्रपदौ तयोर्मध्ये तयोरन्तरं तावत्कालमिति यावत्। रजस्वलाशब्दो गौण्या वृत्या पवित्रत्वविपर्ययं वदन् तज्जलस्य कर्मार्हतां वारयति।

मार्कण्डेयः।

आदित्यदुहिता गङ्गा प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः॥

'आदित्यदुहिता' यमुना। 'गङ्गा' भागीरथी। 'प्लक्षजाता सरस्वती' कुरुक्षेत्रे स्थिता सती।

स्मृत्यन्तरे।

कालिन्दी नर्मदा गङ्गा प्लक्षजाता सरस्वती।
एतास्तु पुण्याः सरितः सङ्क्षोभपरिवर्जनात्।
वैमल्यगुणसंयोगाद्रजोनाभिभवत्युत॥
गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती।
अन्तर्गतरजोयोगात् सर्वाहेष्वपि चामलाः॥

निगमः।

प्रतिस्रोतो रजोयोगो रथ्याजलनिवेशनं।
गङ्गायां न प्रदुष्यन्ति स हि धर्मद्रवः स्वयं॥

इति वर्ज्याण्युदकानि।

अथाभ्युक्षणाहरणं।

तत्र शाट्यायनिः।

ततः सूर्यमुपस्थाय सम्यगाचम्य च स्वयं।

अभ्युक्षणं समादाय यन्त्रितात्मा गृहं व्रजेत् ॥

आचम्येत्यत्र द्विरितिशेषः ।

तथा च वृद्धशातातपः ।

तपःसिद्धे द्विराचम्याभ्युक्षणार्थमथाहरेत् ।

न विनाभ्युक्षणं जातु विधिज्ञः किञ्चिदाचरेत् ॥

आहरणेतिकर्त्तव्यतामाह शाण्डायनिः ।

सोपानत्कः सदर्भः सदशोत्तरीयः समाहर्त्ता ।

'सोपानत्कः' उपानद्युगलारूढ़ः। 'सदर्भः' दर्भपवित्रयुक्तपाणिः । 'सदशोत्तरीयः' दशायुक्तोत्तरीयवस्त्रावृतः, 'समाहर्त्ता' पात्रस्थमभ्युक्षणार्थं जलमाहरेदित्यर्थः ।

प्रचेताः ।

अनुगुप्ता अपो गृह्य प्रचारार्थं गृहं व्रजेत् ।

सवने प्रोक्षणं कुर्यादगृहीतेन सदा शुचिः ॥

'अनुगुप्ताः' अन्येनादृष्टाः । 'अपः' जलं। 'गृह्य' गृहीत्वा। 'प्रचारार्थं' गृहनिर्वर्त्त्यकर्मानुष्ठानार्थं।'सवने' प्रातरादिकाले। गृहं गच्छेत्। गत्वा च तेन जलेन कर्मार्थद्रव्यदेशानां शुचिर्भूत्वा प्रोक्षणं कुर्यात् ।

उशनाः ।

स्रवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन् ।

आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः ॥

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे ।

ततः कर्माणि कुर्वीत नित्यं वै यानि कानिचित् ॥

शातातपः ।

बहिर्नद्यादिष्वाचान्तः सोदकः कश्चिदस्पृशत् ।
रथ्यागतोऽपि यत्नेन शुचिरेव हि मानवः ॥

गर्गस्तु जलाहरणे नियमान्तरमाह ।

त्रिसन्ध्यं वाग्यतोवारि गुप्तमाहृत्य शोधयेत् ।
आहृत्य वारा द्रव्याणि देशञ्च प्रोक्ष्य शोधयेदिति ॥

'वाग्यतः' मौनी ।

गोभिलः ।

पुरा प्रादुष्करणवेलायाः सायंप्रातरनुगुप्ता अपो हरेत् परिचरणीया वा इति ।

अग्निविहरणं 'प्रादुष्करणं', तस्य 'वेला' कालः तस्मात्, 'पुरा' पूर्व्वकालं। अत्र मुख्यामुख्यानि जलाहरणपात्राणि ।

आह योगियाज्ञवल्क्यः ।

सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्त्तितं ।
तदलाभे स्मृतं पात्रं स्रवते यन्न धारितं ॥

शाट्यायनिः ।

अग्र्यं हिरण्मयं रौप्यं दारवं मृन्मयं दृढं ।
ताम्रं पत्रपुटं पुण्यं पात्रमभ्युक्षणाय वै ॥

'पत्रपुटं' प्रशस्तपत्रनिर्म्मितं जलाहरणयोग्यं पात्रमित्यर्थः। एतच्च पात्रान्तरालाभे वेदितव्यं ।

तदाह आपस्तम्बः ।

सर्वालाभे तु पात्राणां पर्णपात्रं विधीयते।
पात्रं तदपि विज्ञेयं स्रवते यन्न धारितं॥

वर्ज्यपात्राण्याह आपस्तम्बः ।

सैवाल-वालुका-दूर्वा-तृण-पर्णायसैरपि ।
अभ्युक्षणं न गृह्णीयादापस्तम्बोऽब्रवीन्मुनिः ॥

पर्णनिषेधोऽत्र पात्रान्तरसद्भावविषयः । अनापादितपुटाकृति-विषयो वानुसन्धेयः ।

नलिकाभिन्नपात्रेण कांस्यपात्रेण चैव हि ।
प्राण्यङ्ग-फलजेनापि कुर्य्यान्नाभ्युक्षणं द्विजः ॥

'नलिकया' वेण्वादिमय्या 'भिन्नेन' स्फुटितेन, 'कांस्यपात्रेण' घोषपात्रेण, घोषमिति निघण्टौ कांस्यनाम । 'प्राण्यङ्गेन' शृङ्ग-शुक्त्या-दिरूपेण । 'फलजेन' नालिकेर-विल्वादिमयेन ।

वृद्धशातातपः ।

सैवाल-तृण-पर्णाद्यैरसंस्काराम्बुभाजनैः ।
सिकतावस्त्रलेपैश्च न कुर्य्यात्प्रोक्षणं बुधः ॥

आदिशब्देन नलिका-प्राण्यङ्गादि गृह्यते ।

द्रव्यशुद्धिप्रकरणोक्तसंमार्जनादिसंस्काररहितैः 'अम्बुभाजनैः' जल-पात्रैः, सिकताभिर्वस्त्रेण वा संगृहीतानि 'सिकता-वस्त्रलेपानि' ।

यमोऽपि ।

पात्राद्विरहितं तोयं उद्धृतं सव्यपाणिना ।
न तेन प्रोक्षणं कुर्य्याद्वस्त्रनिष्पीड़नेन च ॥

'पात्राद्विरहितं' शैवलाद्याहृतं । 'सव्यपाणिना' वामेन पाणिना । अनेन दक्षिणपाणिना समाहृतं तोयं प्रोक्षणार्हमित्यभ्यनुज्ञातं । पात्र-स्थितं सव्यपाणिनाप्याहृतमभ्यनुज्ञा तं ।

शातातपः ।

यत्याक्षरहितं तोयं धृतं सव्येन पाणिना ।
न तेन प्रोक्षयेद्द्रव्यं वस्त्रनिष्पीड़नेन च ॥
नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् ।
अथानीते तु सव्येन प्रोक्षयेद्दक्षिणेन तु ॥

शाट्यायनिः ।

नाहरेदेकजातिस्तु नावृतो न च जल्पकः ।
न पाणिना न वस्त्रेण जलमभ्युक्षणाय वै ॥

'एकजातिः' शूद्रः । "ब्राह्मणः क्षत्रियोवैश्यस्त्रयोवर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रोनान्यस्तु पञ्चमः" इति मनुस्मरणात् । 'जल्पकः' अमौनी ।

अभ्युक्षणाहरणानन्तरकृत्यमाह प्रचेताः ।

संगृह्याभ्युक्षणं पायात्सोपानत्को गृहं प्रति ।
तदनुत्को गृहं प्राप्य सर्व्वानुष्ठानमाचरेत ॥
अभ्युक्षणोदपात्रन्तु न तावत् स्थाप्यते क्वचित् ।
यावन्नाचमनं दत्तं प्रोक्षिता न गलन्तिका ॥

अनेनाहृत्याभ्युक्षणं क्वचिदनिधायैव केनचिद्दत्तेन जलान्तरेणाचम्य संप्रोक्ष्याभ्युक्षणपात्रं निदध्यादित्युक्तं भवति ।

शाट्यायनिरपि ।

आदाय प्रोक्षणं पात्रं न निदध्याद्गृहं गतः ।
अकृत्वाचमनं भूमावाचान्तः प्रयतोभवेत् ॥

आचमनमकृत्वा प्रोक्षणं भूमावस्थापयन्नाचान्तः प्रयतोभवतीत्यर्थः ।

आचमनानन्तरं पुलस्त्यः ।

तेन द्रव्याण्यशेषाणि प्रोक्ष्याचम्य पुनर्गृहे ।
ततः कर्म्माणि कुर्वीत सत्क्रियास्तु द्विजोत्तमाः ॥

अत्र गृहे पुनराचम्य तेन द्रव्याणि प्रोक्ष्येत्यन्वयः ।

प्रोक्षणीयानि द्रव्याण्याह गर्गः ।

त्रिसन्ध्यं वाग्यतोवारि गुप्तमाहृत्य शोधयेत् ।
होमोपहारभोगे च द्रव्यात्मपरिचारकान् ॥

यमोऽपि ।

अभ्युक्षेत्तु प्रयत्नेन प्रचाराध्युषितं गृहं ।
मध्याह्ने चैव सन्ध्यायां न चानभ्युक्षिते यजेत् ॥

गर्गः ।

गोचर्म्ममात्रमब्बिन्दु गां शोधयति पातितः ।
समूढ़ामप्रचीनान्तु यत्र लेपो न विद्यते ॥

अपां बिन्दुः 'अब्बिन्दुः', 'गां' भूमिं, 'समूढ़ां' कृतपरिसमूहनां अपसारितावकरामिति यावत् ।

उक्ताभ्युक्षणासमर्थं प्रत्याह

शाट्यायनिः ।

नद्यादौ सम्यगाचान्तः संयतो गृहमागतः ।
उद्धृत्य मणिकात्तोयं तथाभ्युक्षणमाचरेत् ॥
गृहे वा समुपस्पृश्य कृत्वा स्वर्णकुशोदकं ।
कृत्वाचमनमाचान्तः पुनः प्रोक्षणमाचरेत् ॥

सम्यग्द्विराचम्य संयतो नद्यादेः स्वयं शिष्यादिभिर्वा प्रोक्षणमाह-

रेदित्येकः पक्षः । तथैव समुपस्पृश्य गृहे स्थितात् मणिकादभ्युक्षण-तोयमाहरेदित्यपरः पक्षः । पूर्ववदाचमनं कृत्वा गृह एव यत्रऽकुत्र-चित् स्थितमुदकमादाय निक्षिप्तसुवर्णकुशं कृत्वा पुनराचान्तस्तदभ्यु-क्षणार्थमुपकल्पयेदित्यन्यः ।

तथा—

आग्नेयं प्रथमं प्रोक्तं विप्रहस्ताद्द्वितीयकं ।
तृतीयमुदकस्थानाच्चतुर्थं मणिकात् स्मृतं ॥

नद्यादेः स्वयमाहृतं प्रथमं, अन्येन शुचिना ब्राह्मणेन तत एवा-नीतं द्वितीयं, गृहस्थितादेव कूपादेर्जलस्थानात् गृहीतं तृतीयं, मणिकादुपात्तं चतुर्थं । वृहज्जलसंश्रयं भाण्डं मणिकः ।

प्रचेताः ।

वैश्वानरेण यत्किञ्चित् कुरुते प्रोक्षणं द्विजः ।
गङ्गातोयसमं सर्व्वं वदन्ति ब्रह्मवादिनः ॥

'वैश्वानरम्' आग्नेयं ।

इत्यभ्युक्षणाहरणं ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलश्रीकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे प्रत्येयद्रव्यनिरूपणं नाम अष्टमोऽध्यायः ॥०॥

# अथ नवमोऽध्यायः ।

श्राद्धोपकरणानि ।



शैलान् कैलासयन्ती भुवि बलिसदने शेषयन्ती भुजङ्गा-
नाकाशे भानुमन्तं शिशिरकरतुलां प्रापयन्ती सितिम्ना ।
यत्कीर्त्तिः कौतुकेन त्रिभुवनमटनि स्पष्टपुण्यः स एषः
श्रीहेमाद्रिः पुरस्तादुपकरणगणं श्राद्धयुक्तं ब्रवीति ॥

अथान्यान्यपि श्राद्धोपप्रकरणान्युच्यन्ते ।

तत्र कुशास्तावत् । तत्राप्युत्पत्तिपूर्व्वं यत्तेषां महिमा तत्र शतपथश्रुतिः ।

या वै वृत्राद्बीभत्समाना आपो धन्व दृभन्त्य उदायंस्ते दर्भा अभवन् यद्दृभन्त्य उदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या आपो वृत्राभिप्रचरिता यद्दर्भा इति[1] । 'वृत्रात्' त्वष्टृपुत्रात्, 'बीभत्समानाः' बिभ्यत्यः, 'आपः' उदकानि, 'धन्व' मरुस्थलं, 'दृभन्त्यः' संदृभ्यमानाः, 'उदायन्' उदपतन्, 'शुद्धाः' निर्दोषाः । 'मेध्याः' यज्ञियाः । 'अवृत्राभिप्रचरिताः' वृत्रेण कालुष्यमप्रापिताः ।

आह-गोभिलः ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ।
कुशाग्रे शङ्करं विद्यात् सर्वे देवाः समन्ततः ॥

दर्भान् प्रकृत्य शतपथश्रुतिः ।

अग्रमिव वै देवानां मध्यमिव मनुष्याणां । मूलमिव पितॄणामिति ।

हारितोऽपि ।

---

(१) का० ७, अध्या० २, प्र २ सू २ .

कुशहस्तेन यज्जप्तं दानञ्चैव कुशैः सह ।
कुशहस्तस्तु यद्भुङ्क्ते तस्य सङ्ख्या न विद्यते ॥
कुशपूतं भवेत्स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेन चोद्धृतं तोयं सोमपानेन सम्मितं ॥
कुशमालान्तु यः कण्ठे समावहति सर्वदा ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥
करे कण्ठे शिखायाञ्च कर्णयोरुभयोरपि ।
पवित्रधारको यस्तु न स पापेन लिप्यते ॥

कौशिकः ।

कुशासनं सदा पूतं यतीनान्तु विशेषतः ।
कुशासनोपविष्टस्य सिध्यते योग उत्तमः ॥
यथा पुष्करपर्णेषु अपां लेपो न दृश्यते ।
एवं पवित्रहस्तस्य न लोपो विद्यते क्वचित् ॥

हारीतः ।

जपहोमहरा ह्येते असुरा व्यक्तरूपिणः ।
पवित्रकृतहस्तस्य विद्रवन्ति दिशो दश ॥

गोभिलः ।

वज्रो यथा सुरेन्द्रस्य शूलं हस्ते हरस्य च ।
चक्रायुधं यथा विष्णोरेवं विप्रकरे कुश इति ॥

अथ कुशविधिः ।

आह कौशिकः ।

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।

ॐकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः ॥

उत्पाटनमन्त्रस्तत्रैव ।

विरञ्चिना सहोत्पन्नः परमेष्ठीति सर्गजः ।
नुद पापानि सर्वाणि मम स्वस्तिकरो भव ॥

स्मृत्यन्तरेऽपि तमेव मन्त्रमभिधाय ।

एवं मन्त्रं समुच्चार्य्य ततः पूर्वोत्तरामुखः ।
ॐ फट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत् ॥

कार्ष्णाजिनिः ।

भुवन्तु शिथिलीकृत्य खनित्रेण विचक्षणः ।
आदद्यात् पितृतीर्थेन ॐ फट् ॐ फट् सकृत् सकृत् ॥

अत्र कालनियममाह हारीतः ।

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोक्तव्याः पुनः पुनः ।
नार्द्रान् लुनीयाद्रात्रौ तु लुनीयाद्वापि सन्ध्ययोः ॥

'नभः' श्रावणः। 'यातयामं' अनेकत्र प्रयोगानर्हं। 'अयातयामाः' उपयुक्ताः अथानेकशः क्रियान्तरोपयोगयोग्या इति भावः। अतस्ते उपयुक्ताः। अथापवादस्थानं विहाय क्रियान्तरेऽपि पुनः पुनरुपयोज्याः। कालान्तरे गृहीतास्तु सकृदप्युपयुक्तया तया मतया क्रियान्तरानर्हाः।

शालङ्कायनः ।

नभोमासस्य दर्शे तु शुचिर्दर्भान् समाहरेत् ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

यदपि याज्ञवचनम् ।

दर्भाः कृष्णाजिनं मन्त्राः ब्राह्मणाश्च विशेषतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

यच्च गृह्यपरिशिष्टे ।

दर्भाः कृष्णाजिनं मन्त्राः ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनरिति ॥

तदपि पूर्व्ववचनानुसारेण नभोऽमावास्यागृहीतदर्भविषयमेव मन्तव्यम् ।

मार्कण्डेयोऽप्यमीषां सापवादामयातयामतामाह ।

सपवित्रेण हस्तेन कुर्य्यादाचमनक्रियां ।
नोच्छिष्टं तत् पवित्रन्तु भुक्तोच्छिष्टन्तु वर्ज्जयेत् ॥

येन पवित्रेण सहाचमनं कृतं तदुच्छिष्टं न भवति, येन तु सह भोजनं कृतं तदुच्छिष्टतया त्याज्यं। एतच्च ग्रन्थिरहितपवित्रविषयं ।

ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनञ्चरेदिति हारीतस्मरणात् ।

एतदपि ब्रह्मग्रन्थिमत्पवित्रविषयं ।

न ब्रह्मग्रन्थिनाचामेन्न च काशादिभिः क्वचिदित्यादित्यस्मरणात् ।

हारीतः ।

आचामेत्प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टञ्च भवेत्तत्तु भुक्तशेषन्तु वर्जयेत् ॥

'पवित्रेण' सह पवित्रयुक्तपाणिरित्यर्थः । 'तत्' पवित्रं, उच्छिष्टं न भवति, कर्म्मानर्हं न भवतीत्यर्थः । 'भुक्तशेषं' भोजनाङ्गतां नीतं, 'वर्जयेत्' त्यजेत् । एतच्च शुचेराचामतोवेदितव्यं 'प्रयतः', इति

वचनात्। अन्ये तु कर्माङ्गाचमनविषयमेतदित्याहुः।

तथा च कात्यायनः।

सपवित्रः सदर्भो वा कर्माङ्गे पितृकर्मणि।
अशून्यं तु करं कृत्वा सर्वत्राचमनञ्चरेत्।
नोच्छिष्टान्तत्सदर्भश्च भुक्तोच्छिष्टन्तु वर्जयेत्॥

अत्र पवित्रशब्देन ग्रन्थिमत्पवित्रमित्येके।

आह शातातपः।

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि।
अशून्यन्तु करं कुर्य्यात् सुवर्णरजतैः कुशैः॥
जपे होमे तथा दाने स्वाध्याये पितृतर्पणे।
सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः॥

कश्यपः।

स्नाने होमे जपे दाने स्वाध्याये पितृतर्पणे।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा॥

मार्कण्डेयपुराणे।

कुशपाणिः सदा तिष्ठेद्ब्राह्मणो दम्भवर्जितः।
स नित्यं हन्ति पापानि तूलराशिमिवानलः(१)॥

पुराणेऽपि।

कौशेयं बिभृयान्नित्यं पवित्रं दक्षिणे करे।
भुञ्जानस्तु विशेषेण गृहीतान्न च शोधनं॥

---

(१) तृणराशिमिवानल इति ग०।

'कौशेयं पवित्रं' कुशपवित्रं।

अत्रिरपि ।

उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके ।
धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते ॥
ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलः प्रोक्तः एवं धर्मो न हीयते ॥

द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिणमर्द्धवेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलग्रन्थिः। यदा स एव प्रादक्षिण्येन समग्रवेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिः।

दर्भधारणायाङ्गुलिनियमः स्कन्दपुराणे दर्शितः ।

अनामिकाधृतो दर्भो ज्येष्ठानामिकयापि वा।
उभाभ्यामनामिकाभ्यां धार्यौ दर्भपवित्रके ॥

स्मृत्यन्तरे ।

अनामिकाभ्यामेवैते पवित्रे ग्रन्थिसंयुते ।
धारयेद्दक्षिणेनैव पाणिना वा कुशग्रहः ॥

'अनामिका' उपकनिष्ठिका ।

पवित्रलक्षणमाह कात्यायनः ।

अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥

पवित्रकरणप्रकारमाह योगयाज्ञवल्क्यः ।

पवित्रे स्थेति मन्त्रेण द्वे पवित्रे च कारयेत् ।
नान्तर्गर्भे कुशच्छिन्ने कौशे प्रादेशसम्मिते ॥

'नान्तर्गर्भे' गर्भे शिखारहिते । 'कुशच्छिन्ने' कुशेनावेष्ट्य च्छिन्ने । 'कौशे' कुशमये । "पवित्रेस्थो वैष्णव्यौ" इति छेदनमन्त्रः ।

अत्र विशेष उक्तो देवीपुराणे ।

पवित्रेस्थ इति छिन्नं मूलदेशे कुशद्वयं ।
कुशत्रयेण प्रादेशमात्रे ते स्तः पवित्रके ॥

आपस्तम्बोऽपि ।

समौ साग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते । पवित्रेस्थो वैष्णवी वा पुनर्मनसा पुनात्विति तृणं काष्ठं वान्तर्द्धा यच्छिनत्ति न नखेनेति ।

यज्ञपार्श्वोऽपि ।

या ओषधीमन्त्रेण कृत्वाङ्गुष्ठाङ्गुलिपर्वणि ।
छिन्द्यात्प्रादेशमात्रन्तु पवित्रं विष्णुदैवतं ॥
न नखेन न काष्ठेन न लोहेन न मृण्मयैः ।
नखेन तु भवेद्व्याधिः काष्ठेनार्थो न सिध्यति ॥
आयसेन भवेन्मृत्युः मृण्मयैः कलहो ध्रुवं ।

वृत्तग्रन्थिमत्पवित्रलक्षणमुक्तं गारुड़पुराणे ।

अर्द्धं प्रदक्षिणीकृत्य शिखां पाशं प्रवेशयेत् ।
वैष्णवेनैव मार्गेण वृत्तग्रन्थौ पवित्रके ॥

'वैष्णवोमार्गः' पश्चाद्भागः ।

ब्रह्मग्रन्थिमत्पवित्रलक्षणमपि तत्रैवोक्तं ।

सन्त्यज्य वैष्णवं मार्गं ब्रह्ममार्गविनिःसृतं ।
सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते ।
तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः ॥

पवित्रकर्तुरभिमुखः प्रदेशः 'ब्रह्ममार्गः' ।
पवित्रदर्भशिखासञ्ज्ञापि तत्रैवोक्ता ।

सप्तभिर्दर्भपिञ्जूलैः कुर्य्याद्ब्राह्मं पवित्रकं ।
पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः ।
द्वाभ्यां शूद्रस्य विहितमन्तराणां तथैव च ॥

मार्कण्डेयस्तु ।

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकं ।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमं ॥
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ।
त्रिभिस्तु शान्तिके कार्य्यं पौष्टिके पञ्चभिस्तथा ।
चतुर्भिस्त्वाभिचाराख्यं कुर्वन् कुर्य्यात्पवित्रकं ॥

दर्भलक्षणमाह कौशिकः ।

सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः ।
ते प्रशस्ता द्विजातीनां दैवे पित्र्ये च कर्म्मणि ॥
अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ।
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसंज्ञिताः ॥

'अप्रसूताः' असञ्जातप्रसवाः अपुष्पिता इत्यर्थः ।

हारीतोऽपि ।

दर्भाग्रं दैवमित्युक्तं समूलाग्रं तु पैतृकं ।
तत्र मूलं विना ये तु ते कुशाः कुतपाः स्मृताः ॥
अच्छिन्नाग्रान् सपत्रांश्च समूलान् कोमलान् शुभान् ।
पितृदेवजपार्थञ्च समाददीत कुशान् द्विजः ॥

एतत्प्रस्तरादिव्यतिरिक्तविषयं।

तथाच ब्रह्माण्डपुराणे।

हरिता वै सपिञ्जूलाः स्निग्धाः पुष्टाः समन्विताः।
रत्निमात्रप्रमाणेन पितृतीर्थेन संस्कृताः॥
छिन्नमूला गृहीतव्याः प्रस्तरार्थं कुशोत्तमाः।
अग्निकार्य्ये च यागे च समूलान् परिवर्जयेत्॥

'सपिञ्जूलाः' अपृथक्कृतदलाः। बद्धमुष्टिकारपरिमाणं रत्निः, तया संस्कृताः पितृतीर्थग्रहणेनोत्पादितातिशयाः।

सुमन्तुः।

अच्छिन्नाग्राः शुभा दर्भाः पित्र्ये तु हरिताः शुभाः।
अमूला देवकार्येषु प्रयोज्याश्च जपादिषु।
सप्तपत्राः कुशाः शस्ता दैवे पित्र्ये च कर्म्मणि॥

आह कात्यायनः।

हरिता यज्ञिया दर्भाः पीतकाः पञ्चयज्ञिकाः।
समूलाः पितृदेवत्याः कल्माषा वैश्वदेविकाः।
ह्रस्वाः प्रचरणीयाः स्युः कुशा दीर्घाश्च बर्हिकाः॥

'पञ्चयज्ञियाः' पञ्चयज्ञार्हाः। 'प्रचरणं' अनुष्ठानं, तदर्हाः 'प्रचरणीयाः', 'पितृदेवत्याः' पित्र्याः।

तथाच यमः;

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्म्मणि।
वहिर्लूनाः सकृल्लूनाः सर्वत्र पितृकर्मणि॥

'वहिर्लूनाः' उपमूललूनाः।

एवञ्च यदुक्तं ब्रह्माण्डपुराणे ।

उपमूले तथा लूनाः श्राद्धार्थं तु कुशाः स्मृताः ।
तथा श्यामाकनीवारौ दूर्वा च समुदाहृतेति ॥

यदपि गोभिलेनोपमूललूनाः पितृकार्येष्विति तदेकोद्दिष्टेतर-श्राद्धविषयमित्यवगन्तव्यम् ।

अत्र पुराणे ।

सपिण्डीकरणं यावदृजुभिश्च कुशैः क्रियाः ।
समूलैश्चापि कर्त्तव्याः साग्रैः शुचिसमाहितैः ॥
सपिण्डीकरणादूर्द्ध्वं द्विगुणैर्व्विधिवद्भवेत् ।
तिलचेचोद्भवैर्दर्भैः प्रयत्नाद्विगुणीकृतैः ॥
पितॄणां तर्पणं कार्य्यं देवतानां यदृच्छया ।
पैत्र्यं मूलेन मध्येन नारं दानं प्रयत्नतः ।
दैवं कर्म्म कुशाग्रेण कर्त्तव्यं भूतिमिच्छता ॥

'यदृच्छया' अनियमेनेत्यर्थः ।

नारदीयपुराणे ।

तर्पणादीनि कार्य्याणि पितॄणां यानि कानिचित् ।
तानि स्युः द्विगुणैर्दर्भैः सप्तपत्रैर्व्विशेषतः ॥

अत्र वर्ज्यानाह हारीतः ।

चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु ।
प्रस्तरासन-पिण्डेषु षट् कुशान् परिवर्जयेत् ॥
ब्रह्मयज्ञे च ये दर्भाः ये दर्भाः पितृतर्पणे ।
हृता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥

अपूता गर्भिता दर्भा ये च दर्भा नखैस्तथा ।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्जयेत् ॥

'गर्भिताः' गर्भदलयुक्ताः । 'क्वथिताः' ग्रटिताः ।

पुराणेऽपि ।

पिण्डार्थं ये कृता दर्भा यैः कृतं पितृतर्पणं ।
मूत्रोच्छिष्टधृता ये च तेषां त्यागो विधीयते ॥

आश्वायनिः ।

यैः कृतः पिण्डनिर्वापः श्राद्धं वा पितृतर्पणं ।
भोजने च मलोत्सर्गे ये धृतास्तान् परित्यजेत् ॥

कात्यायनः ।

पिण्डार्थं ये स्तृता दर्भास्तर्पणार्थे तथैव च ।
धृतैः कृते तु विण्मूत्रे त्यागस्तेषां विधीयते ॥

त्यागापवादमाह हारीतः ।

नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्रांस्तान् विजानीयाद्यथाकायस्तथैव ते ॥

गौतमोऽप्याह ।

नीवीमध्ये स्थिता ये च यज्ञसूत्रे स्थितास्तथा ।
उच्छिष्टमूत्राद्युत्सर्गे न तेषूपहतिर्भवेत् ॥
वामहस्ते स्थिते दर्भे न पिबेद्दक्षिणेन तु ।
वस्त्रादिनोपग्रहणे न दोषः पिबतो भवेत् ॥

हारीतः ।

समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ।

शूद्राहृतैः कुशैर्विप्रः कर्म्म कुर्व्वन् व्रजत्यधः ॥
कुशपुष्पाणि समिध औषधं तु विशेषतः ।
निषेधेऽपि च गृह्णीयादमावास्याऽहनि द्विजः ॥

कुशालाभे प्रतिनिधिमाह शङ्खः ।

कुशाभावे द्विजश्रेष्ठः काशैः कुर्व्वीत यत्नतः ।
तर्पणादीनि कर्म्माणि काशाः कुशसमाः स्मृताः ॥

अथ शतपथश्रुतिः ।

यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वापराङावर्त्तत तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य साईं सन्यासुस्तत एता ओषधयः समभवन् यदश्व वाला इति ।

प्रभासखण्डे ब्रह्मवैवर्त्तपुराणेषु ।

पूर्वं कीर्त्तिमतां श्रेष्ठो बभूवासौ प्रजापतिः ।
तस्य वाला निपतिता भूमौ काशत्वमागताः ॥
तस्मान्मेध्याः सदा काशाः श्राद्धकर्मणि पूजिताः ।
पिण्डनिर्वपणं तेषु कर्त्तव्यं भूतिमिच्छता ॥
प्रजापुष्टिद्युतिप्रज्ञाकीर्त्तिकान्तिसमन्विताः ।
भवन्ति रुचिरा नित्यं विपाप्मानो विवर्जिताः ॥
पिण्डप्रदानं काशेषु ये कुर्वन्ति यथाविधि ।

विष्णुः ।

कुशाभावे कुशस्थाने काशं दूर्वां वा दद्यात् ।

यज्ञपार्श्वः ।

कुशाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः ।

काशाभावे ग्रहीतव्या अन्ये दर्भा यथाक्रमं ॥

'अन्ये दर्भाः' दर्भकार्य्यकराः । ते चात्रिणा प्रोक्ता दशदर्भेषु ।

कुशाः काशा यवा दूर्वा उशीराश्च सकुन्दुराः ।
गोधूमा व्रीहयो मुञ्जा दशदर्भाः सवल्वजाः ॥

'उशीरः' बालकः । 'कुन्दुरुः' कुन्द इति नाम्ना प्रसिद्धः तृणविशेषः । 'वल्वजः' काशसदृशस्तृणविशेषः यस्य रज्जुभिः पामरैः खट्वा वितन्यते ।

बर्हिः प्रत्याह यमः ।

कुशाः काशास्तथा दूर्वा यवा व्रीहय एव च ।
वल्वजाः पुण्डरीकाणि सप्तधा बर्हिरुच्यते ॥

उशनाः ।

पिण्डबर्हिः कुशाः काशा दूर्वा मुञ्जाश्च वल्वजाः ।
मुञ्जेत्तुव्रीहिगोधूमयवकुन्दुरुबालकाः ॥
एकादश्यां त्रयोदश्यां मघाकृत्तिकयोरपि ।
पिण्डदानं न कर्त्तव्यं दूर्वासु श्रियमिच्छता ॥

पिण्डबर्हिषि तु वल्वजनिषेधमाह गोभिलः ।

बर्हिरुप मूललूनं पितृभ्यस्तेषामलाभे शूकतृणशरवल्वजवर्जं सर्वतृणानि ।

'शूकतृणं' शूकवत्तृणं ।

अत्रापस्तम्बसूत्रम् ।

समूलं सकृदाच्छिन्नं बर्हिराहरन्ति । सकृदाच्छिन्नानि वा तृणान्युपमूलं दितानीति । 'उपमूलं' मूलसमीपे, 'दितानि' छिन्नानि ।

निषिद्धानि तृणान्युक्तानि वायुपुराणे ।

सदा श्राद्धे तुपाश्चैव वल्वजास्तरवस्तथा ।
वीरणाश्च लवाश्चैव वर्ज्या वर्षाश्च नित्यशः ।
एवमादीन्यथान्यानि तृणाणि परिवर्जयेत् ॥

इति कुशनिरूपणम् ।

अथ तिलाः ।

तत्र तेषामुत्पत्तिस्तावन्निरूप्यते वाराहपुराणे ।

धरण्युवाच ।

कथं तिलाः समुत्पन्नाः केन चोत्पादिताः प्रभो ।
पितॄणां वल्लभाः कस्मादिति मे वक्तुमर्हसि ॥

श्रीवराह उवाच ।

ब्रह्मक्षेत्रे कुरुक्षेत्रे देवा ब्रह्मपुरोगमाः ।
आदित्या वसवः साध्याः भास्करा मरुतोऽश्विनौ ॥
विश्वेदेवाश्च उषिता रुद्राश्चेन्द्रो बृहस्पतिः ।
आरेभिरे महायज्ञं गोसवं संशितव्रताः ॥
आहूतास्तत्र वै देवाः सर्वशो वरवर्णिनि ।
ऋषयश्च जितात्मानो नानादेशनिवासिनः ॥
अध्वर्यूद्गातृ-होतारस्तत्र ब्राह्मणपुङ्गवाः ।
स्वाहाकारवषट्कारैरध्वरं तं वितेनिरे ॥
आज्याहुतिभिरग्र्याभिर्मन्त्रपूताभिरेव च ।
सामिधेनीसमिद्धेषु दीयमानेषु(१) वह्निषु ।

(१) दीप्यमानेष्विति क० ।

विचित्राणां तथान्नानां प्रदानैरनिवारितैः ॥
यथाकामाभिसम्पन्नैस्तर्प्यमाणेषु भोक्तृषु ।
गो-भू-हिरण्य-ग्रामोभिर्दीयमानैर्यदृच्छया ॥
अनार्त्तिंभूमिदेवेषु नीयमानेषु कृत्स्नशः ।
दक्षिणाभिरनन्ताभिः प्रीतेष्वृत्विक्षु चैव हि ॥
समागतेषु देवेषु तत्र सर्वेषु केवलं ।
राज्ञा सोमेन सहिता आजग्मुः पितरस्तदा ॥
यज्ञसम्भारसम्भ्रान्तैर्नाहूतास्ते पुरामरैः ।
अथ ते पितरः श्रुत्वा तायमानं(१) तु गोसवं ॥
सोमेन राज्ञा सहिताः समाजग्मुस्त्वरान्विताः ।
तान् दृष्ट्वा सवनस्थाने विलक्षा भीतमानसाः ॥
प्रोचुः प्राञ्जलयः सर्वे गम्यतां गम्यतामिति ।
ततः ससोमाः पितरः क्रोधसंरक्तलोचनाः ॥
प्रत्यूचुर्वेपमानाङ्गाः किमस्माभिरिहागतैः ।
पूर्व्वमस्मानवज्ञाय युष्माभिर्विततः क्रतुः ॥
वाङ्मात्रेणापि वै देवाः किं न सम्भाविता वयं ।
अप्स्यामहे ततः सर्व्वान् यजमानान् सऋत्विजः ॥
अथ ते विबुधा भीता रक्षेत्यूचुः पितामहं ।
उवाचाथ विरिञ्चोऽपि कश्यपं तैर्भृशं तदा ॥
ससोमकान् पितृगणान् सान्त्वय त्वं महामुने ।
कश्यपोऽपि महाभागो निदेशात्परमेष्ठिनः ॥

(१) नीयमानर्मिति क० ।

प्रणम्य सोमं राजानं भक्त्या पितृगणानपि ।
तुष्टाव विविधैः स्तोत्रैर्ऋग्यजुःसामसम्भवैः ॥
तमूचुः पितरः सर्वे तुष्टास्तव महामुने।
न च शापप्रदानस्य विघ्नः कार्य्यस्त्वयाधुना ॥
अकृत्वा दण्डमेतेषामवलेपवतां मुने ।
नास्माकं मनसः शान्तिरतोऽस्मान्मा निवारय॥
अब्रवीत्कश्यपोऽथैतान् क्षमध्वं योगवित्तमाः ।
यज्ञभागादपि श्रेष्ठं भवद्भ्योऽन्नं ददाम्यहं ॥
इत्यूचिवान् मुनिः स्वेभ्यो गात्रेभ्योऽप्यसृजत्तदा ।
तिलान् कृष्णानतिश्लक्ष्णान् सुमृष्टानमृतादपि॥
सृष्टवानथ रोमभ्यस्तिलान् श्वेतान् मुनीश्वरः ।
तेषामधिपतिं सोमं राजानं समकल्पयत् ॥
प्रकल्प्य तिलराशीन् वै पितॄन् प्रोवाच कश्यपः ।
इदमन्नं मया दत्तं पितरः प्रतिगृह्यतां ॥
आकल्पं तृप्तये वोऽस्तु त्यज्यतां शापसम्भ्रमः ।
अथातः पितरः सर्वे प्रीताः सोमपुरोगमाः ॥
तिलानां दर्शनेनैव परमां तृप्तिमागताः ।
ऊचुः प्रसन्नमनसस्तातास्ते मुनिपुङ्गव ।
किं कार्य्यं यज्ञभागेन तिला एव भवन्तु नः ॥
वयं शापान्निवृत्ताः स्मस्त्रिदशाः सन्तु निर्भयाः ।
अतःपरं तिला एव देया नः श्रद्धयान्वितैः ॥
नामृतेनापि नः कृत्यं तिलान् यदि लभामहे ।

यस्तर्पणञ्च श्राद्धं च तिलपूतं करिष्यति ॥
भक्ष्यांस्तिलमयांश्चापि भक्त्या नः सम्प्रदास्यति ।
देयद्रव्याणि चान्यानि प्रदास्यन्ति तिलोदकैः ॥
तस्य प्रजां धनं स्वर्गं प्रीता दास्यामहे वयं ।
इत्युक्त्वान्तर्दधुस्ते वै पितरो दिव्ययोगिनः ॥
हिरण्यगर्भप्रमुखा ययुर्देवा यथागतं ।
इत्येवं सोमदेवत्या गोसवे देवनिर्मिताः ।
तिलाः कृष्णाश्च शुक्लाश्च किमन्यच्छ्रोतुमर्हसि ॥

मत्स्यपुराणे ।

विष्णोर्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा ।
धर्मस्य रक्षणायालमेतत्प्राहुर्दिवौकसः ॥

प्रभासखण्डे ।

विष्णोः स्वेदात्तिला जाताः कुशा रोमभ्य एव च ।
श्राद्धस्य रक्षणार्थाय इति प्राहुर्महर्षयः ॥

ब्रह्मवैवर्त्ते ।

तिला विष्णोः समुद्भूतास्ततस्ते परमं हविः ।
तिलैः श्राद्धाच्च होमाच्च स्यात् जगत्प्रीतिर्भार्गव ॥

अथ तिलानां महिमविधिरुच्यते ।

आदित्यपुराणे ।

दुर्व्वासा उवाच ।

कथं तिलाः समुत्पन्नाः कथञ्चैवावतारिताः ।
एतं मे संशयं देव छेत्तुमर्हस्यशेषतः ॥

भानुरुवाच ।

शृणुष्वावहितो विप्र सर्व्वं वक्ष्याम्यशेषतः ।
पुरा कृतयुगे शश्वदनावृष्ट्यान्तिलक्षये ॥
क्षुत्क्षामकण्ठास्तृषिताः पितरः सर्व्वे आगताः ।
तपस्विनस्य विपुलं तिलार्थे नात्र संशयः ॥
दिव्यवर्षसहस्रन्तु निराहारास्तपस्विनः ।
परिवृत्ताः सर्व्वगणैः सर्व्वैर्देवैर्विशेषतः ॥
गन्धर्व्वैश्चारणैर्यक्षैः सिद्धैः किन्नरपन्नगैः ।
प्रजापतिः पितृपतिः साक्षाद्देवपितामहः ॥
परितुष्टोऽस्मि वो दद्मि ब्रूत यच्चेप्सितं हि वः ।

पितर ऊचुः ।

तिलान् देहि महाभाग काङ्क्षितान् वै न संशयः ।
तिलैर्व्विना न जीवामो नातिलस्तिष्ठते हृदि ॥

ब्रह्मा उवाच ।

गच्छध्वं वै तिला दत्ताः सर्वेषां वो द्विजोत्तमाः ।
परितुष्टाश्च पितरः तिलानादाय निर्ययुः ॥
ततः पितृणामाहारः सर्वस्तिलमयोऽभवत् ।
तिलामृतेन सन्तुष्टाः पितरो निर्वृतिं ययुः ॥
तिलान् यस्तु प्रयच्छेत पितृणां तृप्तिकाम्यया ।
अग्निष्टोमसहस्रस्य फलं प्राप्नोति मानवः ॥
वैशाख्यां पौर्णमास्याञ्च तिलान् क्षौद्रेण संयुतान् ।
यः प्रयच्छेद्द्विजाग्र्येभ्यः सर्व्वपापैः प्रमुच्यते ॥

कृषिभागी च धनवान् जायते नात्र संशयः ।
यः श्रद्दधानः श्राद्धेषु गुडेन तिलमोदकान् ॥
सितया वापि मत्स्यण्ड्या कृत्वा भक्त्या प्रयच्छति ।
तस्य तृप्ताः पितृगणाः प्रयान्ति परमां गतिं ।
तस्यैवायुः प्रयच्छन्ति स्वर्गमारोग्यमेव च ।
तिलैस्तु कृशरान् कृत्वा दद्याच्च तिलशष्कुलीः ॥
ददाति यः पितृणां वै तस्य लोकोऽक्षयो मतः ।
यश्चाक्षयतृतीयायां तिलपात्राणि यच्छति ॥
अयने चोत्तरे चैव तस्य पुण्यमनन्तकं ।
यो धर्मराजाय तिलान् ददाति श्रद्धया नरः ॥
महर्षेः कश्यपस्यैव गात्रेभ्यः प्रसृतास्तिलाः ।
ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो ॥

महाभारते ।

तिलाञ्छ्राद्धे प्रशंसन्ति दानमेतदनुत्तमं ।
तिला नित्यं प्रदातव्या यथाशक्त्या द्विजर्षभ ॥

अत्राह सत्यव्रतः ।

जर्त्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनोद्भवाः ।
जर्त्तिलाश्चैव ते ज्ञेया अकृष्टोत्पादिताश्च ये ॥

आपस्तम्बोऽपि ।

अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा ।
ते वै श्राद्धे पवित्रास्तु तिलास्ते न तिलास्तिलाः ॥

येऽटव्यामुत्पन्ना अकृष्टायां च भूमौ फलितास्ते जर्त्तिलाख्यास्तिलाः

श्राद्धकर्मणि प्रशस्ततमाः। ये तु ग्राम्याः कृष्टक्षेत्रे फलिताः प्रसिद्धास्ति-लास्ते न तिलाः। नायं तेषां तिलरूपस्य निषेधः। अशक्यत्वात्। नापि तिलकार्य्यकारित्वनिषेधः। लौकिकतत्कार्य्यकारित्वनिषेधस्य प्रत्यक्षादिबाधितत्वात्। नापि वैदिककार्य्यकारित्वस्य निषेधः। वचन-विरोधात्।

तथा च ब्रह्माण्डपुराणे।

यतिस्त्रिदण्डी करणं राजतं पात्रमेव च।
दौहित्रः कुतपः कालः छागः कृष्णाजिनं तथा॥
गौराः कृष्णास्तथारण्यास्तथैव विविधास्तिलाः।
पितॄणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयमिति॥

अत्र त्रिदण्डीति यतेर्विशेषणं। राजतमिति पात्रस्य। कुतप इति कालस्य। गौरास्तिलाः कृष्णास्तिलाः आरण्यास्तिला इति विशेषण-भेदात् त्रयः पदार्थाः। एवं च दशसङ्ख्या घटते। अस्मिंश्च वचने सर्वप्रका-राणां तिलानां वैदिककार्य्यकारित्वाभिधानान्न प्रसिद्धानां तिलानां तत्कारित्वनिषेधो घटते। अतः "न तिलास्तिलाः" इति "अपशवो वा अन्ये गोऽश्वेभ्यः" इतिवद्विधीयमानजर्त्तिलप्रशंसार्थं निन्दामात्रमिति।

इति तिलनिरूपणम्।

अथ यवाः।

तत्र तेषामुत्पत्तिः शतपथश्रुतौ।

पुरुषं ह वै देवाः। अग्रे पशुमालेभिरे तस्यालब्धस्य मेधोऽपचक्राम सोऽश्वं प्रविवेश तेऽश्वमालभन्त तस्यालब्धस्य मेधोऽपचक्राम स गां प्रविवेश ते गामालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽविं प्रविवेश

तेऽविमालभन्त तस्यालब्धस्य मेधोऽपचक्राम सोऽजं प्रविवेश तेऽजमालभन्त तस्यालब्धस्य मेधोऽपचक्राम। स इमां पृथिवीं प्रविवेश। तं खनन्त इवान्वीषुस्तमन्वविन्दंस्ताविमौ व्रीहि-यवौ तस्मादप्येतावेतर्हि खनन्त इवैवानुविन्दन्ति स यावद्वीर्य्यवद्ध वाऽस्यैते सर्व्वे पशवः आलब्धाः स्युस्तावद्वीर्य्यवद्धास्य हविरेव भवति य एवमेतद्वेदेति(१)।

एतान् सर्वान् पशूनालभ्य यजमानस्य यावत् फलं तावद्व्रीहिभिर्यवैर्वा यजमानस्य फलं स्यादिति वचनार्थः।

चमत्कारखण्डे।

प्रजाकामः पुरा त्वष्टा तुष्टाव परमेष्ठिनं।
ततो गोत्रभिदः शत्रुं वृत्रं पुत्रमजीजनत्॥
जातमात्रः स लोकानां महाकायो महाबलः।
भयं सञ्जनयामास भुवनग्रासलालसः॥
अधस्तादूर्द्धतस्तिर्य्यगिषुमात्रं हि सर्वशः।
प्रत्यहं वर्द्धते तस्य शरीरममितौजसः॥
स विश्वं व्यानशे वीरः स्वल्पकेनाप्यनेहसा।
जिघत्सुर्युगपद्विश्वं स हि पित्रा निवारितः॥
पूर्वाह्ने बुभुजे देवैर्दीयमानं बलिं बली।
मध्यन्दिने च मनुजैरपराह्ने पितृव्रजैः॥
एवं स सर्वमन्नाद्यमेकाकी ग्रसते तदा।
एक एव पपौ सोममेक एवाहरद्धविः॥
ततो वृहस्पतिर्देवैः संश्रुतो यज्ञसत्क्रिभिः।

(१) का० १, प्र २, अ० २, सू ६, ७।

चिक्षेप क्षेपणायास्य ज्वलन्तमशनिं शनैः ॥
स दम्भोऽलिप्रहारेण दुर्द्धरेण धरातले।
वृत्रः पपात पातालकुहराणि प्रदारयन् ॥
ततः प्रस्कन्नमन्नाद्यरसं सर्वं वसुन्धरा।
दधार जगदाधारा धाराभिरभिपातितं ॥
अथ तस्मान्महौषध्यो जज्ञिरे यज्ञसाधनं।
मिश्रान्नरसजातत्वाद्धीयमाना यवाख्यया ॥
ततो वृत्रासुरवधात् परितुष्टा दिवौकसः।
यवानालोक्य परमं परितोषमुपाययुः ॥
ऊचुः सर्व्वे प्रमुदिताः सुधाहाराः परस्परं।
आरण्यानामोषधीनां ग्राम्याणामप्ययं रसः ॥
राज्ञः सोमस्य सारोऽयमाविर्भूतो यवात्मना।
वृत्रासुरस्य वीर्येण परमेणोपबृंहिताः ॥
एते पवित्रमस्माकमेत एव परं हविः।
एते पीयूषमधुराः सर्वदा प्रीणयन्तु नः ॥
हविर्यज्ञाः प्रवर्त्तन्तामेतैरमृतभोजिनां।
कर्माण्येते नियुज्यन्तां शान्तिके पौष्टिकेऽपि च ॥
यत्किञ्चिद्दैवदैवत्यं श्रद्धावद्भिः प्रदीयते।
तदेतन्मिश्रितैरेव सलिलैः संप्रदीयतां ॥
श्राद्धेषु वैश्वदेवानि यानि कर्माणि कानिचित्।
एतैरेव विधीयन्तां तानि श्रोत्रियपुङ्गवैः ॥
यवैरर्घो यवैर्दानं यवैरर्चा यवा हविः।

वैश्वदेवे तु यत्र स्यात्तृप्तिस्तत्रास्तु शाश्वती ॥
इत्युक्ता विबुधाः प्रीताः स्वानि धामानि भेजिरे ।
पूर्व्ववद्भुवनान्यासन् पाकशासनशासने ॥

अथ यवानां महिमा ।

तत्र शतपथश्रुतिः ।

देवाश्च वा असुराश्च । उभये प्राजापत्याः पस्पृधिरे ततो देवेभ्यः सर्वा एवौषधय ईयुर्यवा हैवेभ्यो नेयुः । तद्दै देवा अस्पृण्वत । त एतैः सर्वाः सपत्नानामोषधीरयुवत यदयुवत तस्माद्यवा नाम । ते होचुः । हन्त यः सर्वासामोषधीनां रसस्तं यवेषु दधामेति स यः सर्वासामोषधीनां रस आसीत्तं यवेष्वदधुस्तस्माद्यत्रान्या ओषधयो म्लायन्ति तदेते मोदमाना वर्द्धन्त एवं ह्मेषु रसमदधुस्तथोऽ एवैष एतैः सर्वाः सपत्नानामोषधीर्युते[१] इति ।

पुरा देवासुरविग्रहे प्रवृत्तिबलिभिरसुरैर्देवेभ्यः सर्वा एवौषधयोऽपहृत्य नीताः । केवलं रचोघ्नशक्तिविशेषवद्भ्यो यवेभ्यो बिभ्यद्भिरसुरैस्त एव नेतुं नाशक्यन्त । ततो देवा देवानामेव महिम्ना सर्वानप्यसुरान् विद्राव्य सर्वा अप्योषधीरात्मना सह दधुरतः सर्वतश्च यवा इति वाक्यार्थः ।

अथ कृष्णाजिनम् ।

तत्र शतपथश्रुतिः ।

यज्ञः स यज्ञस्तत्कृष्णाजिनमिति ।

तथा ।

---

(१) का० ३, प्र ४, अ० ६, सू ८, ९ ।

श्रेयांसं वा एष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनमिति।

त्रैलोक्यात्मकत्वेनापि कृष्णाजिनस्य स्तुतिस्तत्रैव।

यद्धु एकं भवति तदेषां लोकानां रूपं तदेनमेषु लोकेष्वधिदीक्षयति यानि शुक्लानि तानि दिवो रूपं यानि कृष्णानि तान्यस्यै यदिवेतरथा यान्येव कृष्णानि तानि दिवोरूपं यानि शुक्लानि तान्यस्यै यान्येव बभ्रूनीव हरीणि तान्यन्तरिक्षस्य रूपं तदेनमेषु लोकेष्वधिदीक्षयतीति।

शुक्लानीत्यादिषु रोमाणीतिशेषः। 'अस्यै' पृथिव्याः। 'बभ्रूणि' कडाराणि, 'हरीणि' हरिणवर्णानि।

नागरखण्डे।

भर्तृयज्ञ उवाच।

ततः शक्त्या पुरा सृष्टः सृष्टिकामेन वेधसा।
आसीत्क्रतुक्रियादक्षो दक्षो नाम प्रजापतिः॥
शतमेकोत्तरं कन्याः स प्रासूत महातपाः।
ताश्च धर्म्मेण विधिना सुरेभ्यः प्रत्यपादयत्॥
ददौ स दश धर्माय कश्यपाय त्रयोदश।
पीयूषभानवे चैव प्रीतात्मा सप्तविंशतिं॥
अन्येभ्यो मतिमानन्यास्ताः कन्याः स च दत्तवान्।
सुता दाक्षायणी नाम सर्वाभ्योऽपि यवीयसी॥
तेन त्रिभुवनेशाय प्रदत्ता कृत्तिवाससे।
स कदाचित् क्रतुं कर्तुमारेभे धर्मकर्मठः॥
संभृताशेषसम्भारः पुरुहूतपुरोगमान्।
सुरानाकारयामास तेन तत्र महोत्सवे॥

जामातरन्तु सन्त्यज्य कृत्तिवाससमन्तरा ।
आहृतास्तेन सर्वेऽपि गीर्वाणगणवन्दिना ॥
अभवन्नृत्विजस्तत्र मरीच्याद्या महर्षयः ।
ततः प्रवितते तस्मिन्नध्वरे बहुदक्षिणे ॥
यक्षान् सुपर्वणः सर्वान् गन्धर्वानुरगानृषीन् ।
पश्यन्ती दीव्यतोऽशेषान् वसन्ती भवने पितुः ॥
दयितं स्वमनालोक्य परिम्लानमुखाम्बुजा ।
दाक्षायणी क्षणात् क्षोणीं विलिखन्ती यदा तदा ॥
उपेत्य पितरं साध्वी साध्वसाकुललोचना ।
आलम्बमाना मन्दाक्षं मन्दाक्षरमुवाच सा ॥
तात नातः परः कश्चिदुत्सवो भविता ततः ।
कस्मादस्माकमीशोऽसावेतस्मिन्नपि विस्मृतः ॥
अद्यापि जगतां कर्त्ता मद्भर्त्ताह्यतामिह ।
तं विना यज्ञपुरुषं यज्ञोऽपि तव कीदृशः ॥
इत्युक्तो बालया दक्षः कोपविस्फुरिताधरः ।
उवाच वत्से बीभत्सदर्शनोऽसौ निराकृतिः ॥
कापालिकः कथंकारं प्रवेश्यो यज्ञभूमिषु ।
इह तेन वयं पुत्रि जामात्राऽपत्रपामहे ॥
पतिव्रतानामेतासां पश्यन्तीनां पुरः कथं ।
असाम्रमङ्गलाचारः समानेयो दिगम्बरः ॥
इति रोषेण परुषं दक्षेऽमल्यं प्रजल्पति ।
पिधाय कर्णौ तन्वङ्गी स्मरन्ती स्मरवैरिणं ।

विससर्ज तदा प्राणान् न वाचं शोकसंयुता[१] ॥
ततो जगत्यशेषेऽपि हाहाकारो महानभूत् ।
आकर्ण्य तमपर्णाया वृत्तान्तं त्रिपुरान्तकः ।
शुचा: संपीड्यमानोऽपि क्रोधस्यैवाभवद्वशः ॥
अथ क्षणेन संनद्धां क्रुद्धां गणपताकिनीं ।
पुरस्कृत्य पुरीं भेत्तो प्रतस्थे दुःस्थयं जगत् ॥
ततः प्रववृते युद्धं सार्द्धं विबुधसैनिकैः ।
दक्षस्य पक्षपातेन प्राप्तैर्नारायणादिभिः ॥
अथ रुद्रगणैः रुद्धां समरेऽमरवाहिनीं ।
ववर्षाधिकसम्बद्धाः शरासारैर्निरन्तरं ॥
घोरैः शस्त्रास्त्रसम्पातैः प्रहरन् पृतनाद्वयं ।
सस्मार योगशक्तिं स्वामनादिनिधनः शिवः ॥
ततः क्षणात्पराभूताः प्रभुता दिविषद्भटाः ।
कां दिशं कां दिशं जग्मुराक्रान्तास्ते समन्ततः ॥
असहन्त न हन्तारं नाकिनस्ते पिनाकिनं ।
तेनाविन्दन्त गोविन्दप्रमुखा न तु धीरतां ॥
अथ यज्ञपतिं त्रस्तं कृष्णसारवपुर्धरं ।
पलायमानमद्राक्षीत् भगवान् भगनेत्रहा ॥
विव्याध त्रिपुरव्याधस्तं शरेण त्रिपर्वणा ।
चिच्छेद च शिरो व्योम्नि तदेनन्मृगशीर्षकं ॥
अद्यापि दृश्यते लोके लोकेशस्य यशोज्ज्वलं ।

(१) शोकसङ्कुलेति ग० ।

भूमौ मखकुरङ्गस्य कबन्धं निपपात यत् ॥
तं वास्तुपुरुषं प्राहुर्वास्तुशास्त्रविशारदाः ।
अङ्गादङ्गाधरस्तस्य कृत्तिमुत्कृत्य कृत्स्नशः ॥
ससर्ज धूर्जटिः पुण्यं कृष्णाजिनमनुत्तमं ।
अब्रवीच्च विरूपाक्षो दीक्षासाधनमुत्तमं ॥
इदमस्तु समस्तानां दानानामपि चाधिकं ।
सन्निधापयिता यश्च श्राद्धे कृष्णाजिनं नरः ॥
प्राप्स्यन्ति पितरस्तस्य तृप्तिमाकल्पकालिकीं ।
इत्युक्त्वा वामदेवस्तु देवदारुवनं ययौ ॥
इत्येवमिदमुत्पन्नं मेध्यं कृष्णाजिनं पुरा ।
एतच्छ्राद्धे प्रयत्नेन सन्निधाप्यं मनीषिभिः ॥
एतस्य सन्निधानेन पितॄणामक्षया गतिः ।
आस्तीर्य्य दक्षिणग्रीवमेतदुत्तरलोमकं ।
सर्व्वान् श्राद्धस्य सम्भारान् तस्योपरि निवेशयेत् ॥

ब्रह्मवैवर्त्ते ।

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ।
रक्षोघ्नं ब्रह्मवर्चस्यं पशून् पुत्रांश्च तारयेत् ॥

नागरखण्डे ।

संस्पर्शनात् कृष्णमृगाजिनस्य
सर्व्वे पदार्थाः शुचयो भवन्ति ।
तस्मात् प्रयत्नेन निवेशनीयं
श्राद्धप्रदेशेष्विदमागमज्ञैः ॥

इति कृष्णाजिननिरूपणं ।

अथ रजतं ।

तत्र तावदुत्पत्तिर्नन्दिपुराणे ।

अथ देवो विरूपाक्षः प्रत्यालीढं समाश्रितः ।
स्थानकं शरमादाय सर्व्वदेवमयं तदा ॥
आकृष्य मन्दरं चापं वासुकिं ज्यावनामितं ।
त्रिपुरस्य बधार्थाय निर्निमेषैर्विलोचनैः ॥
ततोऽश्रुकण एकस्मादपतत्तस्य लोचनात् ।
तस्माद्रूप्यं समभवत्तत्राखं पिटपोज्वलं ॥
द्वितीयादपतन्नेत्रादश्रुविन्दुस्तु वामकात् ।
तस्माद्रजतमुत्पन्नं पितृकर्म्मसु शंसितं ॥

अत्र पितृकर्म्मस्थितिविशेषणाद्दैवकर्म्मसु रजतस्य निषेधो गम्यते । अतएव मत्स्यपुराणे रजतं प्रकृत्योक्तं ।

शिवनेत्रोद्भवं यस्मात्तस्मात् तत्पितृवल्लभं ।
अमङ्गलञ्च यत्नेषु देवकार्य्ये विवर्जितं[१] ।
रजतं दक्षिणामाहुः पितृकार्य्येषु सर्व्वदेति ॥

तैत्तिरीयशाखायां ।

देवासुराः संयता आसंस्ते देवा विजयमुपयन्तोऽग्नौ वामं वसु संन्यदधन्त इदमु नो भविष्यति यदि नोजेष्यन्तीति तदग्निर्न्यकामयत तेनापाक्रामत्तं देवा विजित्यावरुरुत्समाना अन्वायंस्तदस्य सहसादित्सन्त सोऽरोदीत् यदरोदीत्तद्रुद्रस्य रुद्रत्वं । यदश्र्वशीर्यत् तद्रजतं

(१) देवकार्य्ये च वर्जितमिति ख॰ ।

हिरण्यमभवत् तस्माद्रजतं हिरण्यमदक्षिण्यमश्रुजं यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयमिति।

अस्यार्थः।

'देवाश्चासुराश्चान्योन्याः, 'संयताः' संग्रामोद्यताः, पुरा बभूवुस्तत्र विजयकामाः सन्तो देवाः संग्रामभूमिं प्रतिष्ठमानाः 'वामं' रमणीयतमं, 'वसु' धनं, स्वकीयं, रक्षणायाग्निहस्ते न्यदधुर्यदि नामासुरैर्जिता वयं भवेम तदैतत् धनमस्माकं निर्वासाय भविष्यतीत्यनुसन्धाय, तदिदं धनमग्निरतिलुब्धतया ममैवेदमस्त्विति नितरमकामयत, स तत्रोपायं विचार्य्य तस्माद्देशात् 'अपाक्रामत्' अपलायत। अथासुरान् विजित्य देवा स्तद्धनं 'अवरुरुत्समानाः' अवरोद्धुमवाप्तुमिच्छन्तः, अग्निं 'अन्वायन्' अगच्छन् 'तदस्य' अग्नेः, सकाशात् 'सहसा' बलेन, 'आदित्सन्त' आदातुमैच्छन्, तदासावग्निररोदीत्ततोऽसौ रुद्रनामाभवत्। तदस्य रुदतः 'यदश्रु' लोचनजलं, 'अशीर्यत' भूमावपतत्, तद्रजतमभवत्। तस्मात् 'बर्हिषि' देवदेवत्ये कर्म्मणि, रजतं न देयमिति।

अथ रजतमहिमा।

नन्दिपुराणे।

रजतेन समायुक्तं यद्यच्छ्राद्धेषु किञ्चन।
तत्तदक्षयमित्युक्तं रहस्यं पितृभिः स्वयं॥
अथात्र रजताभावे वरं रजतसंश्रयं।
कृत्वा श्राद्धेषु प्रीणाति पितॄनब्दानि षोड़श॥

स्कन्दपुराणे।

यः प्रयच्छति विप्राय रजतं चातिनिर्मलं।

स विधूयाशु पापानि स्वर्गलोके महीयते ।
रूपकः सुभगः श्रीमानिह लोके च जायते ॥

ब्रह्मवैवर्त्ते ।

रजतस्य कथा वापि दर्शनं दानमेव च ।
अनन्तमक्षयं स्वर्ग्यं राजतं दानमेव च ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ॥

नागरखण्डे ।

धातूंस्तु सृजता पूर्वं रौप्यं सृष्टं स्वयम्भुवा ।
तेन तद्विहिता श्राद्धे दक्षिणा पितृतृप्तये ॥
अलाभे सति रूप्यस्य नामानि परिकीर्त्तयेत् ।
तुष्यन्ति पितरो राजन् कीर्त्तनाद्रजतस्य च ॥
न हि रूप्यात्परं किञ्चित् पितॄणां विद्यते प्रियं ।
रूप्यं दृष्ट्वैव पितरो यान्ति प्रीतिमनुत्तमां ॥

नारदीयपुराणे ।

य इच्छेत्परमां तृप्तिं पितॄणां चाक्षयां गतिं ।
तेन श्राद्धेषु यत्नेन रूप्यं देयं द्विजोत्तम ॥
रूप्यं हस्तेन दातव्यं यत्किञ्चित् पितृदैवतं ।
तेन स्युः पितरस्तृप्ता यावदाभूतसंप्लवं ॥
रजतं दक्षिणां दद्याच्छ्राद्धकर्मणि यो नरः ।
पितॄनेतेन तेन स्युरिष्टाः पितृपितामहाः ॥

वाराहपुराणे ।

तर्जन्या रजतं धृत्वा पितृभ्यो यत्प्रदीयते ।

अन्तोऽस्ति परमाणूनां तस्यान्तो नैव विद्यते ॥
राजतान्यर्घ्यपात्राणि कारयेत् पितृकर्मणि ।
तथा भोजनपात्राणि कुर्याद्रूप्यमयानि तु ॥
परिवेषणपात्राणि पिण्डपात्राणि चैव हि ।
रूप्येणैव प्रकुर्वीत पितृभक्तिपरो नरः ॥
एवं कृतं तु यच्छ्राद्धं यत्र कुत्र स्थितेन हि ।
तद्गयाश्राद्धमेव स्यान्नात्र कार्या विचारणा ॥
रजतं दक्षिणां दत्त्वा श्राद्धेषु प्रयतो नरः ।
आत्मानञ्च पितॄंश्चैव नयति ब्रह्म शाश्वतं ॥

प्रभासखण्डे ।

रूप्यं पितॄणामतिवल्लभं तत्
दत्त्वा नरो वल्लभतामुपैति ।
सोमस्य लोके लभते स तावद्
ध्रुवे निबद्धा ऋषयो हि यावत् ॥

'ध्रुवे निबद्धा ऋषयः' सप्तर्षिसंज्ञका ऋषयः । रजतदानमत्र दक्षिणादिरूपेण श्राद्धब्राह्मणेभ्यो वेदितव्यं । रजतभाजनप्रशंसा तु भाजनप्रकरणे वक्ष्यते ।

इति रजतनिरूपणं ।

अथ हिरण्यं ।

तत्र शतपथश्रुतिः ।

अश्वस्य वा आलब्धस्य रेत उदक्रामत्तत् सुवर्णं हिरण्यमभवदिति ।

तथा ।

अग्निर्ह वा आपोऽभिदध्यौ मिथुन्याभिः स्यामिति ताः संबभूव तासु रेतः प्रासिञ्चत्तद्धिरण्यमभवत् तस्मादेतदग्निसंकाशमग्नेर्हि रेतस्तस्मादप्सु विन्दन्त्यप्सु हि प्रासिञ्चत्तस्मादेनेन न धावयति न किञ्चन करोत्यपयशो देवरेतसं हि तद्यशसैवेनमेतत्समर्द्धयति ।

स्कान्दे-काशीखण्डे भगवानुवाच ।

महेश्वरस्य यद्रेतः पवित्रं शुक्रमुत्तमं ।
समाकृष्टं पुरा गौर्य्या दुराधर्षतमात् पतेः ॥
देवतानां हितार्थाय तदग्नौ प्राक्षिपत्पुरा ।
मुखेनैवापिवद्रेतः शुक्रं चैव पिनाकिनः ॥
ततो ज्वलति वै वह्निः काष्ठमध्यस्थितो यथा ।
तदौष्ण्येन परीतोऽसौ गङ्गायां प्राक्षिपत्पुनः ॥
क्वाथित्वा च पुनर्गङ्गा ससमुद्रसरिद्गणा ।
भूम्यां निखनिता साथ पर्व्वतैरभ्यपातयत् ॥
तप्तायःपिण्डवद्भूमिः सद्वीपकुलपर्व्वता ।
ततस्तदैश्वरं रेतः स्वरसेन सपावकं ॥
दग्ध्वा समस्तं भुवनं यातं शरवनं प्रति ।
ततः स्कन्दः समभवत् स्कन्दसम्पर्कि यज्जलं ॥
तत्स्वच्छं स्वर्णमभवद्विप्रुषो याः समुत्थिताः ।
स्वेदकास्त्वापतन्मेरावासीदाद्यन्तसंयुतः ॥
वृक्षगुल्मलतायुक्तो मेरुः परमकाञ्चनं ।
दधित्थः समभूत्प्रान्ते जम्बूपक्वकचिद्गिरेः ॥
तस्य मूलेन संयुक्तो व्यवर्द्धत महातरुः ।

तस्य पर्व्वतमात्राणि फलानि लघुजीवनः ॥
महास्वादूनि न्यपतन् सर्वर्तुष्वविशेषतः ।
तेषां रसौघान्महतः सरिदासीत्समुद्रगा ॥
जाम्बूनदीति विख्याता पुराणे तरलोर्म्मिका ।
जाज्वल्यमाना सततं वह्निज्वालासमौष्णतः ॥
द्रष्टुं न शक्यते कैश्चिद्दशयोजनमायता ।
तीरम्रुत्तद्रसं प्राप्ता हेमत्वमभिगच्छति ॥
तत्संसक्तकसंसक्ता तद्रसाङ्क्षुषितापि वा ।
मृत्तिका गृह्यते लोके वरिष्ठं स्वर्णमिच्छति ॥
तत्संसक्तं यदप्यन्यत् काञ्चनं परिकीर्त्त्यते ।
एतत्पवित्रं हेमाभूत् पुरा धर्म्यमनुत्तमं ॥

ब्रह्माण्डपुराणे ।

हिमवद्दुहिता पूर्व्वमुमानाम्नेति विश्रुता ।
पूर्व्वजन्मनि सा चासीद्दक्षस्य तनया सती ॥
दक्षकोपाच्च तत्याज सती चात्मकलेवरं ।
हिमवद्दुहिता जज्ञे लोके गौरीति विश्रुता ॥
दत्ता तेनापि सा तस्मै प्रणिपत्य पिनाकिने ।
विवाहं कारयामास विधिवद्दुहितुस्तदा ॥
वैवाहिकेन विधिना जुहावाग्निं पितामहः ।
होमञ्च कुर्व्वतस्तस्य विकारो मान्मथोऽभवत् ॥
रूपं दृष्ट्वा तदा देव्या रेतस्कन्नं महात्मनः ।
पङ्काच्च मृदितं तेन बहुधा समपद्यत ॥

तत्रोत्पन्नामहात्मानो बालखिल्या मरीचिपाः।
अग्नौ च शेषमपतत् तच्चाभूज्ज्वलनप्रभं॥
जाज्वल्यमानदीप्त्या च अग्निमध्यगतं तथा।
शशंसिरे ततोदेवा दृष्ट्वा पुत्रं विभावसोः॥
जगृहुः शिरसा चैव पुण्यत्वात्ते मुदान्विताः।
विभूषणञ्च देवाश्च चक्रुरुत्तमतेजसः॥

अथ हिरण्यमहिमा।

तत्र शतपथश्रुतिः।

देवरूपममृतं हिरण्यमिति।

स्कान्दे-काशिखण्डे।

ईशितुर्हृदयाज्जातं भोक्तृणाञ्च प्रियं धनं।
समुद्रस्य तथा मेरोर्जम्बूनद्यास्तटस्य च॥
तस्माद्देवमनुष्याणां पवित्रं प्रियमुत्तमं।
यत्पवित्रं पवित्राणां तद्धिरण्यमुदाहृतं॥
शिरसा धार्य्यते देवैरीश्वरेणापि किं परैः।
धारणात् स्पर्शनाद्दानाद्दर्शनात्कीर्त्तनादपि॥
लिङ्गार्च्चेन समं पुण्यं मयापि भ्रियते यतः।
हरणान्नाशनाद्द्वेषादवमानादयं ततः॥
महत्प्रजायते हेम शिरो नष्टं हि पुष्कलं।
तस्मादेव ह्यभूद्दण्डं प्रथमन्वादिसर्गिकं॥
अतो हेममयं कुर्यादङ्गुलीयकसंज्ञकं।
पवित्रं परमं ह्येतदनामाङ्गुलिसंज्ञकं॥

अन्यानि च पवित्राणि कुशदूर्व्वात्मकानि वै ।
हेमात्मकपवित्रस्य ह्येकां नार्हन्ति वै कलां ॥

विष्णुधर्म्मोत्तरे ।

जाम्बूनदं तद्देवानामिन्द्रगोपकसन्निभं ।
पितॄणां चन्द्ररश्म्याभं दैत्यानां शबलोपमं ॥
नागानां तत्शुकाभं स्यान्नारीणां पीतमुच्यते ।

वह्निपुराणे सुवर्णं प्रकृत्य रामा उवाच ।

एतत्पवित्रमतुलं सम्भूतमिह विश्रुतं ।
अम्भोर्वीजं परं ह्येतदपत्यं जातवेदसः ॥
सहजं कार्त्तिकेयस्य रुद्रशुक्रसमुद्भवं ।
पवित्रत्वात्सुरैः सर्व्वैर्धार्य्यते मुकुटादिषु ॥
अग्निस्तु देवताः सर्वाः सुवर्णञ्च तदात्मकं ।
तस्मात् सुवर्णं ददतां प्रीताः स्युः सर्वदेवताः ॥
दशपूर्वान् परांश्चैव नरकात्तारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति प्रोवाचेदं वृहस्पतिः ॥
सर्वान् कामान् प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनं ।
मरीचिर्भगवान् पूर्वं पितामहसुतोऽब्रवीत् ॥
यः सुवर्णं नरो नित्यं ब्राह्मणेभ्यः प्रयच्छति ।
स चिरं विरजा विद्वान् देववद्दिवि मोदते ॥
सर्वेषामेव दानानामेकजन्मानुगं फलं ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलं ॥
कृत्वापि सुमहत्पापं जातरूपं ददाति यः ।

स सद्यस्तेन पापेन मुच्यते नात्र संशयः ॥

ब्रह्माण्डपुराणे ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
पवित्राणां पवित्रं च दानानां नात्र संशयः ॥
पवित्रं परमं लोके सुवर्णेन समं क्वचित् ।
न विद्यते द्रव्यजातं दानं वा भूषणं तथा ॥

बृहस्पतिः ।

गृहादिके पुण्यफलं भवेन्मूल्यानुसारतः ।
तस्मात् सर्वप्रदानानां हिरण्यमधिकं स्मृतं ॥
तथा मन्तानिकादीनां हेम्नां सम्पद्यते क्रिया ।
तथा न गृहदानेन हिरण्यमधिकं ततः ॥

वेदव्यासः ।

सर्वान् कामान् प्रयच्छन्ति ये यच्छन्ति काञ्चनं ।
एवं हि भगवानत्रिः पितामहसुतोऽब्रवीत् ॥
पवित्रमथ वा पुण्यं पितॄणामक्षयञ्च तत् ।
सुवर्णं मनुजेन्द्रेण मनुना संप्रकीर्त्तितं ॥

मनुः ।

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ।

सम्बर्त्तः ।

हिरण्यदो महावृद्धिं दीर्घमायुश्च विन्दति ।

विष्णुः ।

सुवर्णदानेनाग्निसालोक्यमाप्नोति ।

विश्वामित्रः।

यत्रास्ते लिखिता गेहे स्वर्णदानस्य संश्रुतिः।
रक्षोभूतपिशाचास्तं न पश्यन्ति तु पार्थिव ॥

देवीपुराणे।

ज्ञात्वा मानं सुवर्णादेः पात्रेषु प्रतिपादयेत्।
कामानिष्टानवाप्नोति विधिश्रद्धासमन्वितः ॥

वशिष्ठः।

तस्मादग्निमुखाः सर्वदेवता इति शुश्रुम।
ब्रह्मणो हि प्रसूतोऽग्निरग्नेरपि च काञ्चनं ॥
तस्मादेव प्रयच्छन्ति हिरण्यं सर्वदैवतं।
तस्य वै वैधसा लोका गच्छतः परमाङ्गतिं।
स्वर्गलोके च राज्येन सोऽभिषिच्येत भार्गव ॥

सुवर्णमित्यनुवृत्तौ कालिकापुराणे।

पूतमेतत्परं पुण्यं सुरकार्येषु नित्यशः।
धारयन्ति यतः सर्वे त्वमलार्थं मलोज्झितं ॥
अतः सर्वाणि पापानि पात्रेभ्यो विधिपूर्वकं।
दत्तं पुनाति काले च देशे च हरसन्निधौ ॥

महाभारते भीष्मं प्रति पितृवाक्यम्।

वेदोपनिषदे चैव सर्वकर्मसु दक्षिणं।
सर्वक्रतुषु चोद्दिष्टा भूमिगावोऽथ काञ्चनं ॥
ततः श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै।
तदिदं सम्यगारब्धं त्वयाद्य भरतर्षभ ॥

किन्तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ।
एवं वयञ्च धर्म्मज्ञाः सर्वे चास्मत्पितामहाः ।
तारिता वै तरिष्यन्ति पावनं परमं हि तत् ॥
दश पूर्वान् दशैवान्यांस्तथा सन्तारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति एवं ते पितरोऽब्रुवन् ।

रामं प्रति वसिष्ठवाक्यानि ।

सर्वरत्नानि निर्मथ्य तेजोराशिसमन्वितं ।
सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमं ॥
एतस्मात् कारणाद्देवा गन्धर्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयत्नाद् धारयन्ति तत् ॥
मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः ।
सुवर्णरचितैरत्र विराजन्ते रघूत्तम ॥
तस्मात् सर्वपवित्रेभ्यः पवित्रं परमं स्मृतं ।
पृथिवीं गां च दत्वेह तथान्यदपि किञ्चन ॥
विशिष्यते सुवर्णस्य दानं परमकं विभो ।
अक्षयं पावनञ्चैव सुवर्णमिह कथ्यते ॥
प्रयच्छेद्द्विजमुख्येभ्यः पावनं ह्येतदुत्तमं ।
सुवर्णमेव सर्वत्र दक्षिणासु विधीयते ।
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ॥

नन्दिपुराणे ।

कृष्णलाः पञ्च माषस्तु माषैः षोड़शभिः स्मृतं ।
सुवर्णमेकं यद्दानात् स्वर्गलोकमवाप्नुयात् ॥

तथा ।

सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
एतत् पवित्रं परममेतत् स्वस्त्ययनं महत् ॥
दशपूर्वान् परान् वंश्यानात्मानञ्च विशाम्पते ।
अपि पापशतं कृत्वा दत्त्वा विप्रेषु तारयेत् ॥
सुवर्णं ये प्रयच्छन्ति नराः शुद्धेन चेतसा ।
देवतास्ते न सन्देहः समस्ता इति नः श्रुतं ॥
अग्निर्हि देवताः सर्वाः सुवर्णञ्च हुताशनः ।
तस्मात् सुवर्णं ददता दत्ताः सर्वाश्च देवताः ॥
अग्न्यभावे च कुर्वन्ति वह्निस्थानेषु काञ्चनं ।
सर्ववेदप्रमाणज्ञाः श्रुतिशास्त्रनिदर्शनात् ॥
ये त्वेनं ज्वालयित्वाग्निमादित्योदयनं प्रति ।
दद्युर्वै व्रतमुद्दिश्य सर्वकामानवाप्नुयुः ॥

'व्रतमुद्दिश्य' व्रतमनुसन्धायेत्यर्थः ।

सुवर्णदः स्वर्गलोके कामानिष्टान् समश्नुते ।
विरजोऽम्बरसंवीतः परियाति यतस्ततः ॥
विमानेनार्कवर्णेन भास्वरेण विराजितः ।
अप्सरोगणकीर्णेन भास्वता स्वेन तेजसा ॥
हंसबर्हिणयुक्तेन कामगेन नरोत्तमः ।
दिव्यगन्धवहः स्वर्गे परिगच्छन्नितस्ततः ॥

बृहस्पतिः ।

अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्तेन भवन्ति दत्ता
यः काञ्चनं गाञ्च महीञ्च दद्यात् ॥

स्कान्दे-प्रभासखण्डे ।

द्रव्यं पृथिव्यां परमं सुवर्णं
हृष्यन्ति देवा यदि दीयते तत् ।
सूर्य्योऽपि तस्मै सुचिरं विमानं
ददाति तावद्भ्रमतेऽत्र यावत् ॥

इति हिरण्यनिरूपणं ।

अथ पात्राणि ।

तत्रार्घ्याद्यर्थपात्राणि हारीतः ।

कांस्यपार्ण-राजत-ताम्रपात्राण्यर्घोदकधारणानि सर्वाण्युपकल्प्यानि 'सर्वाणि' हृस्वानि ।

बैजवापः ।

खादिरौदुम्बराण्यर्घ्यपात्राणि श्राद्धकर्मणि ।
अप्यश्मसृण्मयानि स्युरपि पर्णपुटास्तथेति ॥

'खादिरं' बालपत्रतरुदारुमयं । 'औदुम्बरं' जन्तुफलवृक्षनिर्मितं, ताम्रमयं वा । 'पर्णपुटाः' यज्ञीयवृक्षपर्णनिर्मितास्समघाकृतयः पात्रविशेषाः ।

कात्यायनः ।

सौवर्ण-राजतौदुम्बर-खड्ग-मणिमयानां पात्राणामन्यतमेषु मृण्मय-यवर्जं यानि वा विद्यन्ते पलाशपत्रपुटेषु वा।

'खड्गमयं' गण्डकशृङ्गनिर्मितं। अत्र मृण्मयवर्जनं सति सम्भवे। असम्भवे तु तदप्युपादेयं तैजसाश्ममयमृण्मयेष्वित्याश्वलायनवचनात्। अथाश्ममृण्मयानि स्युरिति बैजवापवचनात् शाखाभेदेन व्यवस्थिते वा मृण्मयवर्जनोपादानेऽवगन्तव्ये।

वृद्धशातातपः।

दौहित्रं खड्गशृङ्गन्तु ललाटे यत्तु दृश्यते।
तस्य शृङ्गस्य यत्पात्रं दौहित्रमिति कीर्त्तितं॥

मत्स्यपुराणे।

पात्रं वनस्पतिमयं तथा पर्णमयं पुनः।
जलजं वापि कुर्वीत तथा सागरसम्भवं।
सौवर्णं राजतं ताम्रं पितॄणां पात्रमुत्तमं॥

पुष्पं विना ये फलन्ति ते वनस्पतयः तद्दारुमयं 'वनस्पतिमयं'। पर्णमयमित्यत्र पर्णान्यपि वनस्पतीनामेव। 'जलजं' कमलिनीपत्रं। 'सागरमयं' शङ्ख-शुक्त्यादि।

रजतस्य कथा वापि दर्शनं दानमेव वा।
राजतैर्भाजनैर्देयमपि वा रजतान्वितैः॥
वार्य्यपि श्रद्धया दत्तमक्षय्यायैव कल्पते।
यथार्घ्यपिण्डभोज्येऽपि पितॄणां रजतं मतं॥
शिवनेत्रोद्भवं यस्मात्तस्मात्तत् पितृवल्लभं।
अमङ्गलञ्च यज्ञेषु देवकार्य्येषु वर्जितं।

एवं पात्राणि सङ्कल्प्य यथालाभं विमत्सरः ॥

ब्रह्मवैवर्त्ते ।

पालाशे ब्रह्मवर्चस्यमश्वत्थे राज्यभागिता ।

सर्वभूताधिपत्यञ्च प्लक्षे नित्यमुदाहृतं ॥

'प्लक्षः' जटी ।

पुष्टिः प्रजाश्च न्यग्रोधे बुद्धिः प्रज्ञा धृतिः स्मृतिः ।

'न्यग्रोधः' वटः ।

रक्षोघ्नञ्च यशस्यञ्च काश्मर्य्याः पात्रमुच्यते ।

'काश्मरी' श्रीपर्णी ।

सौभाग्यमुत्तमं लोके मधूके समुदाहृतं ।

'मधूकः' गुड़पुष्पः ।

फल्गुपात्रेण कुर्वाणः सर्वान् कामानवाप्नुयात् ।

'फल्गुः' काकोदुम्बरिका ।

परां द्युतिमथार्के च प्राकाम्यञ्च विशेषतः ।

'अर्कः' रूपिका ।

बिल्वे लक्ष्मीस्तपो मेधा नित्यमायुष्यमेव च ।

क्षेत्राराम-तड़ागेषु सर्वसस्येषु चैव हि ॥

वर्षत्यजस्रं तत्रैव पर्जन्यो वेणुपात्रतः ।

एतेषां लभते पुण्यं सौवर्णे राजते तथा ॥

पलाश-फल्गु-न्यग्रोध-प्लक्षाश्वत्थ-विकङ्कताः ।

उदुम्बरस्तथा बिल्वश्चन्दनो यज्ञियाश्च ये ॥

सरलोदेवदारुश्च शालोऽथ खदिरस्तथा ।

एते ह्यर्घ्यादिपात्राणां योनयः स्युरशेषतः।
यस्तैर्दद्यात् स यज्ञानां सर्वेषां फलमाप्नुयात्॥

'विकङ्कतः' स्रुवव्रचः, 'सरलः' पीतद्रुः, 'शालः' सर्जकः। अर्घ्यादीत्यादिशब्देनावनेजनादिपात्राणि तिलकुशादिश्राद्धोपकरणधारणार्थानि पात्राणि च गृह्यन्ते।

तस्मिन्नेव पुराणे।

राजतं रजताक्तं वा पितॄणां पात्रमुच्यते।
रजतस्य कथा वापि दर्शनं दानमेव च॥
अनन्तमक्षयं स्वर्ग्यं राजतं दानमेव च।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत॥
राजते हि सुधां दुग्ध्वा पात्रेऽस्मिन् पृथिवी पुरा।
सुधाक्षयार्थिभिस्तात तस्मिन् दत्तं ततोऽक्षयं॥

अथ भोजनपात्राणि।

वायुपुराणे।

पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने।
पात्रं भवति कामानां विद्यानाञ्च धनस्य च॥

'तैजसं' सुवर्ण-रजत-कांस्य-ताम्रमयं।

राजतं काञ्चनञ्चैव दद्याच्छ्राद्धेषु यः पुमान्।
दत्वा स लभते दाता प्राकाम्यं धनमेव च॥
राजतैर्भाजनैरेषामपि वा रजतान्वितैः।
वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते॥

तत्र यद्यप्यविशेषेण राजतानि सौवर्णानि च पात्राणि श्राद्धे

विहितानि तथापि वैश्वदेविके सौवर्णानि पित्रे राजतानीति गुण-प्रकर्षार्थं व्यवस्थामाहात्रिः ।

भोजने हैमरूप्याणि दैवे पित्र्ये यथाक्रमं ।

विष्णुः ।

तैजसानि च पात्राणि दद्याद्विशेषतो राजतानि ।

अत्र हैमपात्राभावे हारीतः ।

राजत-कांस्य-पार्ण-ताम्रपात्राणि ब्राह्मणभोजनार्थानि महान्ति कार्य्याणि भोजनार्थोपकल्पितसर्व्वान्नधारणपर्य्याप्तं महत्त्वमात्रमत्रानुसन्धेयं । कांस्यपात्रं तु द्विपञ्चाशत्पलपरिमितकांस्यनिर्म्मितमेव ग्राह्यं तदसम्भवे यथोपपन्नं ।

तथाच अत्रिः ।

पञ्चाशत्पलिकं कांस्यं ह्यधिकं भोजनाय वै ।
गृहस्थैस्तु सदा कार्य्यमभावे हेमरूप्ययोः ॥

'गृहस्थैरिति' गृहस्थाश्रमिभिरित्यर्थः । पर्णमयं चात्र भोजनपात्रं पलाशपत्रमेव ग्राह्यं । तद्व्यतिरिक्तस्य पत्रपात्रस्यात्रिणा प्रतिषिद्धत्वात् । तद्यथा ।

पालाशेभ्यो विना न स्युरन्यपत्राणि भोजने ।

इति विशेषितत्वाद्दार्व्वादिषु तु न प्रतिषेधः । पर्णपात्रपक्षेऽपि घृतादिद्रव्यधारणार्थं, सति सम्भवे तैजसानि सम्पाद्यानि । घृतादिदाने तैजसानि पात्राणीति विष्णुस्मरणात् । तेषामलाभे पलाशपत्रनिर्मिताः पुटकाः घृतादिद्रव्यधारणार्थं विनियोज्याः ।

वाराहपुराणे ।

सौवर्णानीह पात्राणि सम्पाद्यानि प्रयत्नतः ।
तदभावे तु रूप्याणि कांस्यानि तदसम्भवे ॥
पलाशपर्णजानि स्युः श्राद्धेषु द्विजभोजने ।
अन्यान्यपि हि पात्राणि दारुजान्यपि जानता ॥
यथोपपन्नं कार्य्याणि मृण्मयानि न तु क्वचित् ।
नायसान्यपि कुर्वीत पैत्तलानि न चैव हि ।
न च सीसमयानीह शस्यन्ते त्रपुजान्यपि ॥

वृद्धशातातपः ।

पात्रे तु मृण्मये यस्तु श्राद्धे भोजयते पितॄन् ।
तत्र दाता पुरोधाश्च भोक्ता च नरकं व्रजेत् ॥

कूर्म्मपुराणे ।

पात्रे तु मृण्मये यो वै श्राद्धे भोजयते पितॄन् ।
स याति नरकं घोरं भोक्ता च सपुरोहितः ॥ इति ।

अङ्गिराः ।

न जातीकुसुमानि दद्यान्न कदलीपत्रमिति ॥

अथ परिवेषणपात्राणि ।

हारीतः ।

काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा ।
दत्तमक्षयतां याति खड्गपात्रेण चैव हि ॥

विष्णुः ।

घृतादिदाने तैजसानि पात्राणि खड्गपात्राणि फल्गुपात्राणि वा प्रशस्तानि ।

अत्र च गाथा भवति ।

सौवर्णराजताभ्याञ्च खड्गेनौदुम्बरेण वा ।
दत्तमक्षयतां याति फल्गुपात्रेण वाप्यथ ॥

अत्र विशेषमाह पैठीनसिः ।

दैवे सौवर्णानि श्रेष्ठानि पित्र्ये तु राजतानि परिवेषणपात्राणीति ।

मनुः ।

राजतैर्भाजनैरेषामपि वा रजतान्वितैः ।
वार्य्यपि श्रद्धया दत्तमक्षयायोपकल्पते ॥

अवश्यं चेदं परिवेषणं दर्व्यादिना पात्रेणैव विधेयं साक्षाद्धस्तेन परिवेषणस्य निषेधश्रवणात् ।

कूर्म्मपुराणे ।

न दद्याद्रिक्तहस्तेन प्रत्यक्षं लवणं तथा ।
न चायसेन पात्रेण न चैवाश्रद्धयान्वितः(१) ॥
काञ्चनेन तु पात्रेण राजतोदुम्बरेण च ।
दत्तमक्षयतां याति खड्गेन च विशेषतः ॥

विष्णुः ।

प्रत्यक्षलवणं न दद्यात् हस्तेन न घृतव्यञ्जनादि दद्यात् ।

पात्राद्यभावे तृणेन पर्णेन वा हस्तमन्तर्द्धाय प्रदेयमित्याह वृद्धशातातपः।

हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च ।
दातारन्नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषं ॥
तस्मादन्तरितं देयं पर्णेनैव तृणेन वा ।

---

(१) पुनरिति ख० ।

प्रदद्यान्न तु हस्तेन नायसेन कदाचन॥

वृद्धशातातप-लघुहारीत-वसिष्ठाः।

आयसेन तु पात्रेण यदन्नं संप्रदीयते।

भोक्ता विष्ठाशनं भुङ्क्ते दाता च नरकं व्रजेत्॥

पैठीनसिः।

सीसकायसपात्राणि रीतिशेषाणि पात्राणि चेत्ययज्ञियानि।

मार्कण्डेयपुराणे।

नापवित्रेण हस्तेन न नैकेन विना कुशं।

नायसे नायसेनैव श्राद्धे तु परिवेषयेत्॥

'अपवित्रेण' दुर्लेपसंसर्गादिना अपूतेन। 'आयसेन' अयोमयदर्व्यादिना। 'आयसे' अयोमयपात्रेऽपि न परिवेषयेत्।

अथ पचनभाण्डानि।

चमत्कारखण्डे।

स्वर्णभाण्डेषु कुर्वीत पितृणां पाकमुत्तमं।

तेनासौ भाग्यमायुष्यं लभते चातुलां श्रियं॥

राजतेषु तु भाण्डेषु कुर्व्वन् पाकन्तु पैतृकं।

पितृणां कुरुते तृप्तिं यावदाभूतसंप्लवं॥

पचमानस्तु भाण्डेषु भक्त्या ताम्रमयेषु तु।

समुद्धरति वै घोरात् पितॄन् दुःखमहार्णवात्॥

तैजसानामभावे तु पिठरे मृण्मये तु यः।

नवे शुचौ प्रकुर्वीत पाकं पित्रर्थमादरात्।

तस्य तुष्यन्ति पितरः प्रीता यच्छन्ति वाञ्छितं॥

नागरखण्डे ।

शुचीनि पितृपाकार्थं पिठराणि प्रकल्पयेत् ।
सौवर्णान्यथ रौप्याणि ताम्रकांस्योद्भवानि च ॥
मार्त्तिकान्यपि भव्यानि नूतनानि दृढ़ानि च ।
न कदाचित् पचेदन्नमयःस्थालीषु पैतृकं ॥
अयसो दर्शनादेव पितरो विद्रवन्ति हि ।
अयज्ञियममङ्गल्यं लोहमाहुर्मनीषिणः ॥
दैवेषु चैव पित्र्येषु गर्हितं सर्वकर्मसु ।
कालायसं विशेषेण निन्दितं पितृकर्मणि ॥
फलानाञ्चैव शाकानां छेदनार्थानि यानि तु ।
महानसेऽपि शस्त्राणां तेषामेव हि सन्निधिः ॥
दृश्यते नेतरस्याच शस्त्रमात्रस्य दर्शनं ।
श्राद्धदेशे तु विदुषां पितृणां प्रीतिमिच्छता ॥
महानसोपयुक्तानां अपि कार्य्यं निदर्शनं ।
अयःशङ्कुमयं पीठं प्रदेयं नोपवेशनं ॥

आदित्यपुराणे ।

पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयं ।
स्वर्णादिधातुजातेषु मृण्मयेष्वपि वा बुधः ॥
अच्छिद्रेषु विलेपेषु तथानुपहतेषु च ।
नायसेषु न भिन्नेषु दूषितेष्वपि कर्हिचित् ॥
पूर्व्वं कृतोपयोगेषु मृण्मयेषु तु न क्वचित् ।
पक्वान्नस्थापनार्थन्तु शस्यन्ते दारुजान्यपि ॥

दर्व्यादीन्यपि कार्याणि यज्ञियैरेव दारुभिः ।

इति पात्रनिरूपणं ।

अथ गन्धाः ।

गरुड़पुराणे ।

यस्तु गन्धान् पितॄणां वै दद्यादामोदितो नृप ।
गन्धर्वाप्सरसां लोकान् स प्राप्य दिवि मोदते ॥
गन्धा यथोपचारेषु पितॄणामतिवल्लभाः ।
न तथा विद्यते ह्यन्यदतो देयाः प्रयत्नतः ॥
विश्वेषामपि देवानामत्यन्तं प्रीतिहेतवः ।
गन्धास्तस्मात् प्रयत्नेन गन्धैस्तानपि पूजयेत् ॥

वाराहपुराणे ।

यः श्राद्धेषु प्रदद्याद्वै गन्धानतिमनोहरान् ।
स्वर्गे वराङ्गरागास्तमालिङ्गन्ति सुराङ्गनाः ॥
योऽनुलिम्पति गात्राणि श्राद्धं कुर्व्वन् द्विजन्मनां ।
देवाश्च पितरश्चैव तस्य तुष्यन्ति सर्व्वदा ॥

भगवतीपुराणे ।

यश्चन्दनेन शुद्धेन सुसूक्ष्मेण सुगन्धिना ।
अनुलिम्पति वै विप्रान् स कदाचिन्न तप्यते ॥
तेनैवागुरुमिश्रेण परं सौभाग्यमश्नुते ।
अगुरोस्तु विलेपेन(१) भुङ्क्ते भोगानमानुषान् ॥
यः श्रीखण्डं सकर्पूरं पितृभ्यः प्रतिपादयेत् ।

(१) युक्तेनेति।ग० ।

यशः प्राप्नोति विपुलं स पृथिव्यां महामतिः ॥
यः कुङ्कुमसमोपेतं ददाति मलयोद्भवं ।
केवलं कुङ्कुमं वापि रूपवान् स प्रजायते ॥
दद्यान्मलयजं दिव्यं यस्तु कस्तूरिकान्वितं ।
कस्तुरीं केवलां वापि स प्राप्नोति महाश्रियं ॥
योयक्षकर्दमं दत्ते श्राद्धेषु श्रद्धयान्वितः ।
स भूपतित्वमासाद्य महेन्द्र इव मोदते ॥
यस्तु श्राद्धे ददेद्गन्धान्नानाकुसुमवासितान् ।
स सर्वकामसम्पन्नः स्वर्गे वैमानिको भवेत् ॥

यक्षकर्दमलक्षणं "कर्पूरागुरुकक्कोलदर्पकुङ्कुमचन्दनैः । यक्षकर्दम इत्युक्तो गन्धः स्वर्गेऽपि दुर्लभः" इति विष्णुधर्मोत्तरोक्तमनुसन्धेयं ।

विष्णुः ।

चन्दन-कुङ्कुम-कर्पूरागुरु-पद्मकान्यनुलेपनाय ।

मार्कण्डेयः ।

चन्दनागुरु-कर्पूर-कुङ्कुमानि प्रदापयेत् ।
अश्वमेधमवाप्नोति पितॄणामनुलेपनात् ॥

मरीचिः ।

कर्पूर-कुङ्कुमोपेतं सुगन्धिसितचन्दनं ।
दैविके त्वथ वा पित्र्ये गन्धदानं प्रशस्यते ॥

ब्रह्मपुराणे ।

श्वेतचन्दन-कर्पूर-कुङ्कुमानि शुभानि च ।
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभं ॥

कुष्ठं मांसी बालकञ्च लकुष्ठी जातिपत्रकं।
नालिकोशीरमुस्तञ्च ग्रन्थिपर्णञ्च दुम्बरं।
मुरा चेत्येवमादीनि गन्धयोग्यानि पैतृके॥

अथ वर्ज्या गन्धाः।

विष्णुपुराणे।

श्राद्धे न देया पालङ्क्या तथा निष्पावकोद्भवाः।

'पालङ्क्या' मुकुन्दाख्यं गन्धद्रव्यं। बालकञ्चाथ पालङ्क्या मुकुन्दः कुन्दकुन्दुरू इति त्रिकाण्डीस्मरणात्।

नृसिंहपुराणे।

श्राद्धेषु विनियोक्तव्या न गन्धा जीर्णदारुजाः।
पूतीभावं समासाद्य न च पर्युषिताः क्वचित्।
न विगन्धाश्च दातव्या भुक्तशेषा विशेषतः॥

नारदीयपुराणे।

जीर्णं विकृतगन्धञ्च गन्धं श्राद्धे न योजयेत्।
पितृकर्मणि तज्ज्ञेन प्रदेयं न च बर्बरं॥

ब्रह्मपुराणे।

पूतीकं मृगनाभिञ्च रोचनां रक्तचन्दनं।
कालीयकं जोङ्गकञ्च तुरुष्कञ्चापि वर्जयेत्॥

'पूतीकं' सुगन्धितृणविशेषः, पूतिकं करञ्जकाष्ठं वा प्रकीर्यः पूतिकरजः पूतिकः कलिकारक इत्यमरसिंहेनाभिधानात्। 'मृगनाभिः' कस्तुरी, तस्याश्च विहितप्रतिषिद्धत्वाद्विकल्पः। 'रोचना' गोरोचना। 'रक्तचन्दनं' प्रसिद्धं। 'कालीयक-जोङ्गके' गन्धद्रव्यविशेषौ। कालीयकञ्च

कालानुसार्यञ्चाथ समानार्थकं, "वंशकागुरुराजार्हलोहं क्रमिजजोङ्गकमिति सुगन्धद्रव्यप्रकरणे अमरसिंहेनाभिधानात् । 'तुरुष्कः' सिल्हकः ।

इति गन्धनिरूपणं ।

अथ पुष्पाणि ।

ब्रह्माण्डपुराणे ।

पितृभ्योयः सुमनसः सुगन्धस्तत्परायणः ।
सदा दद्याद्द्विजातिभ्यः सोऽपि याति दिवाकरं ॥

वायुपुराणे ।

पितृभ्योयस्तु माल्यानि सुगन्धीनि च दापयेत् ।
सदा दद्यात् श्रिया युक्तः सोऽपि याति दिवाकरं ॥

भविष्यत्पुराणे ।

यस्तु श्राद्धे द्विजाग्र्याणां पुष्पाणि प्रतिपादयेत् ।
सुगन्धीनि मनोज्ञानि तस्य स्यात्पुण्यमक्षयं ॥
सुगन्धिपुष्पगन्धेन प्रीतिं यान्ति पितामहाः ।
प्रीयमाणाश्च यच्छन्ति दातुः कामान् यथेप्सितान् ॥
अतः पुष्पैश्च पत्रैश्च मञ्जरीभिरथापि वा ।
सुकुमारैः किशलयैर्यवदूर्वाङ्कुरैरपि ।
संपूजनीयाः पितरः श्रेयःकामेन सर्वदा ॥

स्कन्दपुराणे ।

गन्धमाल्यप्रिया नित्यं पितरः श्राद्धदेवताः ।
अतोगन्धैश्च पुष्पैश्च पूजयेत्तान् सुगन्धिभिः ॥
श्रेष्ठानि सर्वभोगेषु पुष्पाणीह परत्र च ।

अतोभक्त्या प्रदेयानि पितॄणां कुसुमानि वै ॥
विपरीतफलं लोके यदसत्कृत्य दीयते ।
अतः सत्कृत्य संपूज्य दानमिच्छन्ति सूरयः ॥
न प्रसूनैर्विना पूजा कृता पुण्यतमा भवेत् ।
अतः श्राद्धपरोविद्वान् श्राद्धेन प्रीणयेत् पितॄन् ॥
संपूजयीत प्रथमं पुष्पैः सर्वोत्तमैः सदा ।
अपर्युषितरूपैश्च तथानुपहतैरपि ।
कृमिकीटाद्यविद्धैश्च शुचिभिः प्रोक्षितैरपि ॥

पद्मपुराणे ।

यव-नीवार-मुद्गाश्च शुक्लाः सुमनसस्तथा ।
वल्लभानि प्रशस्तानि पितॄणामिह सर्वदा ॥

नन्दिपुराणे ।

पुष्पजातिर्यदा सृष्टा तदा प्राक् शतपत्रिका ।
सृष्टा तेन च मुख्या सा श्राद्धकर्म्मणि सर्वदा ॥

वायु-ब्रह्माण्डपुराणयोः ।

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च ।
गन्धवर्णोपपन्नानि यानि चान्यानि कृत्स्नशः ॥

अत्र पद्मोत्पलानि शुक्लेतराण्यपि देयानि ।

अत्र विष्णुः ।

जलजानि रक्तान्यपि दद्यात् ।

प्रभासखण्ड-मार्कण्डेयपुराणयोः ।

जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका ।

जलोद्भवानि सर्वाणि कुसुमानि च चम्पकं ॥

'जात्यः' मालत्यः। 'मल्लिका' मुद्गराख्यानि पुष्पाणि। 'श्वेतयूथिका' हेमकुसुमानि।

धान्यफलशाकान्यभिधाय

ब्रह्मपुराणे।

शाकमारण्यकञ्चैव दद्यात् पुष्पाण्यमूनि च।
जाती-चम्पक-रोध्रांश्च मल्लिका-बाण-बर्वरीः ॥
चूताशोकाटरूषञ्च तुलसीं तिलकं तथा।
पारन्तीं शतपत्रञ्च गन्धनेपालिकामपि ॥
कुजकं तगरञ्चैव मृगमारञ्च केतकीं।
यूथिकामतिमुक्ताञ्च श्राद्धयोग्यानि भो द्विजाः ॥
कमलं कुमुदं पद्मं पुण्डरीकञ्च यत्नतः।
इन्दीवरं कोकनदं कह्लारञ्च नियोजयेत् ॥

'चम्पकः' चाम्पेयः। 'रोध्रः' गालवः। 'बाणः' आर्त्तगलः। 'बर्वरी' कर्वरी। 'चूतः' आम्रः। 'अशोकः' वञ्जुलः। 'आटरूषः' सिंहास्यः। 'तुलसी' सुरसा। अस्याश्च श्राद्धे वर्जनीयत्वमुक्तं स्मृत्यर्थसारकारेण। तत्तु बहुस्मृतीतिहासपुराणेष्वदृष्टत्वान्निर्मूलमिति जानीमः। 'तिलकः' क्षुरकः। 'पारन्ती' शेफालिकासदृशपुष्पं। 'शतपत्रं' प्रसिद्धं। 'नेपालिका' नवमालिका। 'कुजकं' कुब्जकं। 'तगरं' गन्धतगरं। 'मृगमारं' श्रावणिकापुष्पं। 'अतिमुक्तकं' माधवीलतापुष्पं। कमलादयः पङ्कजभेदाः प्रसिद्धाः।

अथ वर्ज्यानि पुष्पाणि।

तत्र वायु-ब्रह्माण्डपुराणयोः ।

जपादि सुमना भण्डी रूपिका च कुरण्टकः ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥
यानि गन्धादपेतानि उग्रगन्धानि यानि च ।
वर्जनीयानि पुष्पाणि श्राद्धकर्मणि नित्यशः ॥
यानि गन्धादपेतानि उग्रगन्धानि यानि च ।
वर्जनीयानि पुष्पाणि भूमिमन्विच्छता सदा ॥

'जपा' रुद्रपुष्पम् । आदिशब्दः प्रकारवचनः, तेन जपाकुसुमसदृशानां करवीरादिकुसुमानां वर्ज्यत्वं । 'सुमना' जातिः । सुमना मालतीजातिरिति स्मरणात् । 'भण्डी' मञ्जिष्ठा । 'रूपिका' अर्कः । 'कुरण्टकः' पीतपुष्पमहासहा । जातीकुसुमनिषेधोऽत्र न नित्यः नित्यनिषेधे "जात्यश्च सर्वा दातव्याः" इति पूर्वोक्तवचनस्य निर्विषयत्वमापद्यते । नागरखण्डे ।

जातीपुष्पसमायुक्तं तच्छ्राद्धं व्यर्थतां व्रजेत् ॥

आह अङ्गिराः ।

न जातीकुसुमानि दद्यान्न कदलीपत्रमिति ।

कदलीपत्रमत्र भोजनपात्रतया प्राप्तं निषिध्यते ॥

क्रतुराह ।

असुराणां कुले जाता जाती पूर्वपरिग्रहे ।
तस्या दर्शनमात्रेण निराशाः पितरो गताः ॥

'पूर्वपरिग्रहे' पूर्वजन्मनि देहपरिग्रहावसरे, यद्यपि त्रीणि ह वै यज्ञस्योदराणि अत्र ह्येवावयन्ति अतएवोदयतीति वर्त्तमानापदेशतयार्थ-

वादस्वरूपे वाक्ये अर्थवादनिर्वाहार्थं गायत्र्यादिष्वावापोद्वापविधि-कल्पनवदत्र निन्दार्थवादरूपे वाक्ये निषेधविधिः कल्प्यते तथापि पाक्षिक एवायमपि प्रतिषेध इति न मार्कण्डेयवचनं निर्विषयं किन्त्व-निषिद्धपुष्पान्तरालाभविषयं । प्रतिषेधद्वयं तु तल्लाभविषयमिति मन्तव्यम् ।

आह शङ्खः ।

उग्रगन्धान्यगन्धानि चैत्यवृक्षोद्भवानि च ।
पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च ।
वनोद्भवानि देयानि रक्तान्यपि विशेषतः ॥

'उग्रगन्धानि' अहृद्यगन्धानि । 'चैत्यवृक्षः' श्मशानवृक्षः ।

सौरपुराणे ।

अजादन्यद्रक्तपुष्पं शिग्रुमारं तथैव च ।
नीरसान्यपि सर्वाणि भक्ष-भोज्यानि यानि च ।
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ॥

वर्जयेदित्यनुवृत्तौ विष्णुः ।

उग्रगन्धानि कण्टकिजातानि रक्तानि च पुष्पाणि ।

तथा ।

सितानि सुगन्धानि कण्टकिजातानि अपि ।

पद्म-मत्स्यपुराणयोः ।

पद्म-बिल्वार्क-धुस्तूर-पारिभद्राटरूषकाः ।
न देयाः पितृकार्य्येषु पयश्चाजाविकं तथा ॥

पद्मपत्रं स्थलजं प्रतिषिध्यते । जलजस्य विहितत्वात् । 'बिल्वः'

श्रीफलः। 'धुस्तूरः' उन्मत्तः। 'पारिभद्रः' रक्तस्तवकयुक्तो मन्दारः।
'आढ़रूषः' सिंहास्यः।

इति पुष्पनिरूपणं।

अथ धूपाः।

वायुपुराणे।

धूपं गन्धगुणोपेतं ददत्पितृपरायणः।
लभते सौख्यपत्यानि इह चामुत्र जन्मनि॥
गुग्गुलादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति।
संयुज्य मधुसर्पिर्भ्यां सोऽग्निष्टोमफलं लभेत्॥

अग्निपुराणे।

गन्धपुष्पैरलंकृत्य ब्राह्मणान् श्राद्धकर्मणि।
तदामोदेन सन्तुष्टाः पितरो भुञ्जते हविः॥

आदित्यपुराणे।

धूपैर्मनोरमैर्दिव्यैस्ततः सम्प्रीणयेत् पितॄन्।
प्रीतास्ते ह्यखिलैः कामैर्दातारं प्रीणयन्त्युत॥
गन्धमाघ्राय धूपस्य मनःप्रह्लादनं परं।
पितॄणामक्षया प्रीतिर्जायते नात्र संशयः॥
नास्ति धूपसमं किञ्चित् पितॄणां प्रीतिकारकं।
अतः श्राद्धे प्रदातव्यो धूपः पुण्यमभीप्सुभिः॥

कूर्म्मपुराणे।

आमोदिना तु धूपेन ततः संधूपयेद्द्विजान्।
प्रयान्ति तृप्तिमक्षय्यां तेन सर्वे पितामहाः॥

ब्रह्मवैवर्त्ते ।

चन्दनागुरुणी चोभे तमालोशीरपत्रकं ।
धूपञ्च गुग्गुलश्रेष्ठं तुरुष्कं धूपमेव च ॥

धूपाश्चात्र घृतमधुसंयुक्ता देयाः । "मधु-घृतसंयुक्तं गुग्गुलं दद्या-दिति विष्णुस्मरणात् ।

शङ्खोऽप्याह ।

धूपार्थे गुग्गुलं दद्यात् घृतयुक्तं मधूत्कटं ।
चन्दनञ्च तथा दद्यात् कर्पूरं कुङ्कुमं शुभं ॥

ब्रह्माण्डपुराणे ।

गुग्गुलादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति ।
संयुक्तान्मधुसर्पिर्भ्यां सोऽग्निष्टोमफलं लभेत् ॥

ब्रह्मपुराणे ।

चन्दनागुरुणी चोभे तथैवोशीरपद्मकं ।
तुरुष्कं गुग्गुलञ्चैव घृताक्तं युगपद्दहेत् ॥

तथा ।

गुग्गुलं चन्दनञ्चैव श्रीवासमगुरुं तथा ।
धूपानि पितृयोग्यानि ऋषे गुग्गुलमेव च ॥

विष्णुधर्म्मोत्तरे ।

धूपो गुग्गुलजो देयस्तथा चन्दनसारजः ।
अगरुश्च स कर्पूरस्तुरुष्कश्च तथैव च ॥

धूपभेदास्तु भविष्यत्पुराणोक्ता ग्राह्याः ।

तद्यथा ।

अगुरु चन्दनं मुस्ता सिह्लकं वृषणं तथा ।
समभागन्तु कर्त्तव्यं धूपोऽयममृताह्वयः ॥
श्रीखण्डं ग्रन्थिसहितमगुरुं सिह्लकं तथा ।
मुस्तामिन्दुञ्च भूतेशं शर्कराञ्च दहेदिह ॥
इत्येषोऽनन्तधूपस्य कथितोदेवसत्तम ।
कृष्णागुरुं सिह्लकञ्च बालकं वृषणं तथा ॥
चन्दनं तगरं मुस्ता प्रबोधः शर्करान्वितः ।
कर्पूरं चन्दनं कुष्ठमुशीरं सिह्लकं तथा ॥
ग्रन्थिकं वृषणं भीमं कुङ्कुमं गञ्जनं तथा ।
हरीतकी तथोशीरं यत्तधूप उदाहृतः ॥
वृषणं सिह्लकं विप्र श्रीखण्डमगुरुं तथा ।
कर्पूरञ्च तथा मुस्तां शर्करां मलचं द्विज ॥
इत्येष विषयोधूपः स्वयं देवेन निर्म्मितः ।
कर्पूरं चन्दनं मांसी त्वक्पत्रैला लवङ्गकं ॥
अगुरु सिह्लकं धूपं प्राजापत्यं प्रचक्षते ।
श्रीखण्डन्तगरं कुष्ठं कर्पूरं सिह्लकं तथा ॥
व्यञ्जनं शर्करा कृष्णं महाङ्गं सिह्लकं तथा ।
महाङ्गोऽयं स्मृतोधूपः प्रियोदेवस्य सर्वदा ॥

देवीपुराणे ।

बालारालसमायुक्तः तथा कुन्दुरुसंयुतः ।
श्रीवेष्टगुग्गुलकृतो धूपः पञ्चरसोमतः ॥

कालोत्तरे ।

कर्पूरदार्वगुरुभी रक्तचन्दनसंयुतैः ।
धूपः समुद्गको नाम सर्व्वदैवतवल्लभः ॥

एते चामृतादयो धूपाः प्राण्यङ्गद्रव्यपरिहारेणोपकल्प्य श्राद्धे नियोज्याः । "श्रौवर्ज्जं सर्वं न धूपार्थे तैले घृते च दद्यात्" इति विष्णुस्मरणात् ।

देवलोऽप्याह ।

ये हि प्राण्यङ्गजा धूपा हस्तवाताहताश्च ये ।
न ते श्राद्धे नियोक्तव्या ये च के चोग्रगन्धयः ।
घृतं न केवलं दद्यात् दुष्टं वा तृणगुग्गुलं ॥

इति धूपनिरूपणं ।

अथ दीपाः ।

वायुपुराणे ।

दीपं पितृभ्यः प्रयतः सदा यस्तु प्रयच्छति ।
गतिमप्रतिमञ्चक्षुस्तस्मात् स लभते शुभं ॥
तेजसा यशसा चैव आयुषा च बलेन च ।
भुवि प्रकाशो भवति भ्राजते च त्रिविष्टपे ।
अप्सरोभिः परिवृतो विमानाग्रे स मोदते ॥

ब्रह्मपुराणे ।

श्राद्धदीपप्रदानेन तेजस्वी जायते नरः ।
रूपवान् धनवान् भोगी सुखमैश्वर्य्यमश्नुते ॥
तस्माद्दीपः सदा देयो यजमानेन वै पितॄन् ।
दीपहीनं ददच्छ्राद्धमन्धे तमसि मज्जति ॥

प्रतिभोक्तृद्विजं दीपाः स्थापनीयाः प्रयत्नतः ।
पितृयाणेषु मार्गेषु स ह्यालोकः प्रकाशते ॥

विष्णुधर्म्मोत्तरे ।

श्रद्धया श्राद्धदेशेषु दीपदस्त्वनुत्तमं ।
लभते नात्र सन्देहः कान्तिमांश्च प्रजायते ॥
दीपः प्रकाशः परमः प्रकाशो ज्ञानमुत्तमं ।
अतः श्राद्धे ददद्दीपं ज्ञानवानभिजायते ॥
य इच्छेद्विमलं ज्ञानं तमोनिर्म्मूलनं परं ।
स भक्त्या पितृदेवेभ्यो दीपमेव प्रयच्छतु ॥
यः स्वेन तेजसा विश्वं प्रदाता येन कृत्स्नशः ।
वाञ्छति व्याप्यमानं वै श्राद्धे दीपप्रदोऽस्तु सः ॥
यथा निहन्ति ध्वान्तानि दीपः प्रज्वलितोऽभितः ।
तथैव सर्व्वपापानि श्राद्धे दत्तो निहन्ति सः ॥

स्कन्दपुराणे ।

स्थाप्याः प्रतिद्विजं दीपाः श्वेतसूत्रजवर्त्तयः ।
गव्येन माहिषेणापि घृतेन भृतभाजनाः ॥
अथवा तिलतैलेन पूरिता विमलार्चिषः ।
पितॄनुद्दिश्य दातव्याः प्रत्येकं ते यथाविधि ॥
तेनालोकेन पितरो दीव्यन्ते दिवि सर्व्वतः ।
दातुरिष्टान् प्रयच्छन्ति कामान् कामावसायिनः ॥

पद्मपुराणे ।

घृतप्रज्वलितं दीपं पितृभ्यो यः प्रयच्छति ।

स विराजेषु लोकेषु चरन् न प्रतिहन्यते ॥
गवां घृतेन तत्रापि यो दीपयति दीपकं ।
गवामेव स लोकेषु लोकेशैः सह मोदते ॥
घृताभावे तु यो दीपं तिलतैलप्रवर्त्तितं ।
प्रयच्छति पितॄणां वै सालोक्यं तस्य भानुना ॥
अलाभे तिलतैलस्य स्नेहैः प्राण्यङ्गवर्जितैः ।
यः श्राद्धे दीपदः सोऽपि तमस्तरति दुस्तरं ॥

कालिकापुराणे ।

श्वेतवर्त्तिकृतान् दीपान् गव्यसर्पिःप्रपूरितान् ।
दीपिकां धातुसम्भूतां सारदारुमयीमपि ॥
अलाभे मृन्मयीं वापि मनोज्ञामधिसंस्थितां ।
यो ददाति पितृभ्यस्तु तस्य पुण्यफलं शृणु ॥
तेजसा यशसा कान्त्या प्रज्ञया परया श्रिया ।
भ्राजमानः स हि स्वर्गे विमानवरमास्थितः ॥
रमते भुवने दिव्ये रत्नालोकसमाकुले ।
अभ्यर्च्य यः पितॄणां वै कुर्य्यादारात्रिकं नरः ॥
स हि नीराज्यते नाके दिव्यैरप्सरसाङ्गणैः ।
धात्वादिनिर्मितां रम्यां दीपिकां श्राद्धकर्मणि ॥
पितॄनुद्दिश्य यो दद्यात् स भवेद्भाजनं श्रियः ।
यो धूपदहनं पात्रं पात्रमारात्रिकस्य च ।
दद्यात् पितृभ्यः प्रयतस्तस्य स्वर्गेऽक्षया गतिः ॥

विष्णुः ।

दीपार्थं स्नेहद्रव्येषूपकल्पनीयम्।

मरीचिः।

घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकमिति।

'अन्यद्रव्यं' वसामेदोरूपं विवक्षितं। न पुनरतसीकुसुम्भादि-बीजसम्भवं स्नेहद्रव्यं।

यत आह शङ्खः।

घृतेन दीपो दातव्यस्तथवाप्योषधीरसैः।
वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्॥

'वसा' पाकात्समुद्भूतो मांसस्नेहः। मेदस्तु हृदयकमलाच्छादको मांसविशेषः। पाकात्समुद्भूतस्तदीयस्नेहो मेदश्शब्देन लक्ष्यते। मेदः-शब्दोऽकारान्तोऽप्यस्ति। मेदिनीत्यादिषु दर्शनात्।

अथाच्छादनं।

पद्मपुराणे।

संपूज्य गन्धपुष्पाद्यैर्दद्यादाच्छादनं ततः।
अधौतं सदृशं नूनं निश्छिद्रममलीमसं॥
तस्याभावे तु देयं स्यात् सवर्णैः चालितन्तु यत्।
प्रदेयं पितृकार्येषु कारुधौतं न जातुचित्॥

भगवतीपुराणे।

अधरीयोत्तरीयार्थमुद्दिश्यैकैकमादरात्।
वासोयुगं प्रदातव्यं पितृकृत्ये विपश्चिता।
निष्क्रयो वा यथाशक्ति वस्त्रालाभे प्रदीयते॥

स्कन्दपुराणे।

महाधनानि वासांसि पितृभ्यो यः प्रयच्छति ।
धनधान्यसमृद्धोऽसौ सुवेषश्च प्रजायते ॥
रूपवान् सुभगः श्रीमान् वनितानाञ्च वल्लभः ।
आयुरारोग्यसम्पन्नः कीर्त्तिं विन्दति चामलां ॥
चन्द्रिकाजालशुभ्राणि यः चौमाणि प्रयच्छति ।
स चान्द्रमसमासाद्य लोकं दीव्यति देववत् ॥
दत्त्वा चौमाणि रक्तानि सूर्य्यलोकं समश्नुते ।
पीतानि तानि दत्त्वा वै याति लोकं मधुद्विषः ।
चित्राणि दत्त्वा माहेन्द्रे लोके नित्यं महीयते ॥
पट्टसूत्रमये दत्त्वा वाससी पितृतत्परः ।
रूपसौभाग्यसम्पन्नो राजराजो भवेदिह ॥
कौसुम्भान्यपि वासांसि पितृभ्यो यः प्रयच्छति ।
स नाकपृष्ठे रमते दिव्यैर्भोगैः समाश्रितं ॥
कार्पाससूत्रजं वासः सुसूक्ष्मञ्चाति शोभनं ।
यो ददाति पितृणां वै सोऽनन्तं सुखमाप्नुयात् ॥
मञ्जिष्ठाद्यैः शुभैरागैरञ्जितं वा मनोरमं ।
प्रदाय पितृदेवेभ्यः परमामृद्धिमृच्छति ॥

विष्णुधर्मोत्तरे ।

बहुमूल्यानि वासांसि चौमादीनि महामतिः ।
श्राद्धे विश्राणयेद्यस्तु तस्य विष्णुः प्रसीदति ॥
यः कञ्चुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत् ।
द्वन्द्वोद्भवानि दुःखानि स कदाचिन्न पश्यति ॥

ददाति यः प्रसन्नात्मा पटान् कञ्चुकबन्धनान्।
विमुक्तः पापबन्धेभ्यः सोऽग्र्यां विन्दति सम्पदं॥
स्त्रीणां श्राद्धेषु सिन्दूरं दद्युश्चण्डातकानि च।
निमन्त्रिताभ्यस्त्रीभ्यो ये ते स्युः सौभाग्यसंयुताः॥

'चण्डातकानि' स्त्रीपरिधानोचितान्यंशुकानि।

वस्त्रस्थापनभाण्डानि सवस्त्राणि प्रयच्छति।
यः पितृभ्यः स सम्पद्भिः सर्वाभिरभिपूर्य्यते॥
शीतवातसमुद्भूतां पीड़ां वारयितुं क्षमान्।
यः प्रावारानतिघनान् विशालान् सुदृढ़ान्नवान्॥
दद्यात् पितृभ्यस्तस्येह द्वन्द्वदुःखं न विद्यते।
ऊर्णायुलोमरचितान् सुविशालान् महापटान्॥
विचित्रान् विविधैरागैर्वातप्रावरणोचितान्।
प्रयच्छति पितॄणां यः स सदारोग्यवान् भवेत्॥

वायुपुराणे।

कौशेयं क्षौमकार्पासं दुकूलमहतं तथा।
श्राद्धे श्वेतानि यो दद्यात् कामानाप्नोति पुष्कलान्॥

तथा।

वासो हि सर्वदेवत्यं सर्वदेवैरभिष्टुतं।
वस्त्राभावे क्रिया न स्याद्यज्ञदानादिका क्वचित्॥
तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः।
दत्त्वैतान्यत्राप्नोति यज्ञदानतपांसि च॥

प्रभासखण्डे।

आच्छादनञ्च यो दद्यादहतं श्राद्धकर्मणि ।
आयुः प्रकाममैश्वर्य्यं रूपञ्च लभते तु सः ॥

अहतलक्षणमाह प्रचेताः ।

ईषद्धौतं नवं चैव सदशं यन्न धारितं ।
अहतं तद्विजानीयात् सर्वकर्मसु पावनं ॥

'ईषद्धौतं' अकारुधौतं ।

अतएव वृद्धमनुः ।

स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता ।
न तु नेजकधौतेन नोपभुक्तेन वा क्वचित् ॥

'नेजकः' रजकः । स्वयंग्रहणादेव नेजकनिवृत्तौ पुनर्नेजकप्रतिषेधोऽन्येनापि सवर्णेन धौतस्य क्रियार्हत्वज्ञापनार्थः ।

श्राद्धमधिकृत्य ब्रह्मवैवर्त्ते ।

क्षौमकौशेयपत्रोर्णास्तथा प्रावरकं बलात् ।
अजिनं रौरवं यत् स्यादौर्णिकं मृगलोमकं ॥
दत्त्वा ह्येतानि विप्रेभ्यो भोजयित्वा यथाविधि ।
प्राप्नोति श्रद्दधानस्तु वाजपेयस्य यत्फलं ॥
बह्वीर्नार्य्यः सुरूपाश्च पुत्रा भृत्याश्च किङ्कराः ।
वशे तिष्ठन्ति भूतानि वपुर्विन्दत्यनामयं ॥
अलक्ष्मीं नाशयत्याशु तमः सूर्य्योदये यथा ।
भ्राजते च विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ॥
नित्यश्राद्धेषु यो दद्याद्वस्त्रं पितृपरायणः ।
सर्वान् कामानवाप्नोति राज्यं स्वर्गं तथैव च ॥

आदित्यपुराणे।

न कृष्णवर्णं दातव्यं वासः कार्पाससम्भवं।
पितृभ्यो नापि मलिनं नोपभुक्तं कदाचन।
न च्छिद्रितं नापदशं न धौतं कारुणापि च॥

ब्रह्माण्डपुराणे।

कार्पासं नैव दातव्यं पितृभ्यः कृष्णमंशुकं।
कृष्णं वापि प्रदातव्यमन्यत्कार्पाससम्भवात्॥
नामापि न ग्रहीतव्यं नीलीरक्तस्य वाससः।
दर्शनात् कीर्त्तनान्नील्या निराशाः पितरो गताः॥

ब्रह्मवैवर्त्ते।

यज्ञोपवीतं दातव्यं वस्त्राभावे विजानता।
पितृणां वस्त्रदानस्य फलं तेनाश्नुतेऽखिलं(१)॥

शातातपः।

युवा सुवासा इति वस्त्रं दद्यात्। अभावे यज्ञोपवीतमिति।

अथेदं यज्ञोपवीतं शूद्रेण स्वपितृभ्योदेयं न वेति विचार्य्यते। तत्र तावद्देयमित्युच्यते। सामान्येन श्राद्धे देयत्वाभिधानात्। न च शूद्रस्य यज्ञोपवीताभावादशक्तेरदानमिति वाच्यं। क्रयसम्पादितस्य दानसम्भवात्। न च क्रीतस्याहवनीयत्वाभाववत् क्रयोत्पादितस्य ब्रह्मसूत्रस्य क्रेतारं प्रति यज्ञोपवीतत्वाभाव इति वाच्यं। आदधीतेति कर्तृगामिक्रियाफलप्रतिपादकात्मनेपदसामर्थ्यावगताधातृपुरुषैकसम्बन्धादाहवनीयत्वोत्पत्त्यनुरोधात्। क्रीतस्याहवनीयत्वाभावोवर्ण्यते। ननु यज्ञो-

(१) तेनाश्नुतेऽखिलमिति ग०।

पवीतविधावात्मनेपदमस्ति । विद्यमानमप्यविवक्षितं भविष्यति यज्ञोपवीतदानविधिदर्शनात् । न च शूद्रश्राद्धे न दातव्यं यज्ञोपवीतमित्यपवादो दृश्यते । ननु येन पितरः प्रीयन्ते तत्पितृभ्यो देयं । श्राद्धीयस्य दानस्य पितृप्रीत्यर्थत्वात् । न च यज्ञोपवीतं शूद्रपितॄन् प्रीणयति । न तावद्भूषणत्वेन हारकेयूरादिवत् वर्जनिकभूषणप्रत्ययवेद्यत्वाभावेनाभूषणत्वात् । यस्तु परिचयविशेषप्रसूतवासनोपनीतोऽस्य भूषणभावः सोऽपि त्रैवर्णिकान् प्रत्येवेति न शूद्रपितृतृप्तये प्रभवति । मैवं । यद्विहितमप्रतिषिद्धं वा श्राद्धे दीयमानं ब्राह्मणान् प्रीणयति तदेतदधिष्ठानतयोद्देश्यान् पितॄन् । न तु यज्जीवन्तं प्रीणयति तदेव पितृत्वं गतमपीति नियमोऽस्ति । कोजानीते जन्मान्तरे कां योनिं गतोऽसाविति । अतएव स्त्रीश्राद्धे स्त्रीभूषणानि न दीयन्ते, यज्ञोपवीतानि दीयन्ते । न च परिव्राजकश्राद्धे यज्ञोपवीतं न दीयते, अलाबुपात्रादि वा दीयते । न च यतिब्रह्मचारिश्राद्धे मधुमांसं न दीयते, येन जीवता यत्पायसादिकं वर्जितमासीत् तत्तदीयश्राद्धे न दीयते । नन्वनौचित्यादनुपयोगात्तदपि न देयमेवेति चेत् । शिष्टाचारे तथानुपलम्भात् । किञ्चेदमाच्छादनस्थाने यज्ञोपवीतं विधीयते । आच्छादनेन च शूद्राणामप्युपयोगोऽस्त्येव । अतः शूद्रश्राद्धे कामं यज्ञोपवीतं देयम् । आच्छादनप्रतिनिधित्वव्यतिरेकेण गन्धादिवत् वक्ष्यमाणप्रकारेण यद्विहितं तदपि देयमेव । अपवादाभावात् ।

इत्याच्छादननिरूपणम् ।

अथ यज्ञोपवीतं ।

आदित्यपुराणे ।

पितॄन् सत्कृत्य वासोभिर्दद्याद्यज्ञोपवीतकं ।
यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलं ।
तस्माद्यज्ञोपवीतस्य दानमावश्यकं स्मृतं ॥

भविष्यत्पुराणे ।

दद्याद्यज्ञोपवीतानि पितॄणां प्रीतये सदा ।
श्रद्धावान् धार्म्मिकस्तेन जायते ब्रह्मवर्चसि ॥

कूर्म्मपुराणे ।

यो ब्राह्मणेन शुचिना ब्रह्मसूत्रं विनिर्मितं ।
पितृभ्यो यच्छति प्राज्ञः स भवेद्वेदपारगः ॥

वायुपुराणे ।

उपवीतं तु यो दद्याच्छ्राद्धकर्मणि धर्मवित् ।
पावनं सर्वविप्राणां ब्रह्मदानस्य तत्फलं ॥

चमत्कारखण्डे ।

सितसूक्ष्मेण सूत्रेण रचितं मन्त्रपूर्वकम् ।
उपवीतं ददच्छ्राद्धे मेधावानपि जायते ॥
चामीकरमयं दिव्यं पितॄणामुपवीतकं ।
दत्वा चामीकरमयैर्विमानैर्दिवि दीव्यति ॥
राजतान्युपवीतानि पितॄणां ददतः सदा ।
आयुः प्रजा च तेजश्च यशश्चैवाभिवर्द्धते ॥

पूर्वं वस्त्रालाभे तत्प्रतिनिधित्वेन यज्ञोपवीतदानमुक्तं । अत्र तु सत्यपि वस्त्रे गन्धपुष्पादिवन्मुख्यतयैव यज्ञोपवीतं देयत्वेन विधीयत

इति गम्यते । पितॄन् सत्कृत्य वासोभिरित्यादिषु समुच्चयदर्शनात् ।
तथा च न्युब्जपात्रं कृत्वाह वैजवापः ।

तस्योपरि कुशान् दत्त्वा प्रदद्याद्देवपूर्वकं ।
गन्धपुष्पाणि धूपञ्च दीपं वस्त्रोपवीतकम् ॥

इत्यत्रोपवीतस्य देयत्वेन विधानात् गन्धपुष्पादिवन्मुख्यतयैव यज्ञोपवीतं देयत्वेन विधीयत इति गम्यते ।

इति यज्ञोपवीतनिरूपणम् ।

अथ दण्ड-योगपट्टौ ।

विष्णुधर्मोत्तरे ।

दण्डान् श्राद्धेषु यो दद्यात् पितृप्रीत्यै महात्मवान् ।
कदाचित्तं न बाधन्ते व्यापदः श्वापदोद्भवाः ॥
दण्डांश्च योगपट्टांश्च योगिभ्यो यः प्रयच्छति ।
कामैस्तमभिवर्द्धन्ते पितरो योगवित्तमाः ॥
पालाशान् वैणवान्वापि यस्तु दण्डान् यथोचितं ।
व्रतिभ्योऽथ गृहस्थेभ्यो यतिभ्यः पितृतुष्टये ॥
ददाति योगपट्टांश्च पट्टसूत्रादिनिर्मितान् ।
स योगिनां कुले भूत्वा योगिराजः प्रजायते ॥

आदित्यपुराणे ।

वैणवान् सुदृढ़ान् दण्डान् हृद्यान् सन्नतपर्वणः ।
पितृप्रीतिकृते दत्त्वा न भयं जातु विन्दति ॥
आयसेन खनित्रेण मूलदेशे परिष्कृतान् ।
मृत्कुशानां यथाकालं(१) खननेषु क्षमान् भृशं ॥

(१) यथाकाममिति ग० ।

केवलान्वाथ दण्डान् वा यः श्राद्धे प्रतिपादयेत् ।
तस्य श्रद्धाञ्च मेधाञ्च शौचमास्तिक्यमेव च ।
इह जन्मनि चान्यत्र प्रयच्छन्ति पितामहाः ॥

स्कन्दपुराणे ।

योगपट्टान् मृदून् भव्यान्(१) यो वै पितृपरायणः ।
विश्राणयति विप्रेभ्यः स योगं विन्दते ध्रुवम् ॥
योगिनामुपयुक्तानि वस्तून्यन्यानि यानि च ।
तानि दत्त्वा पितॄन् प्रीणन् सद्यस्तरति दुष्कृतं ॥
पदार्थान् यस्तु दण्डादीन् योगिनामुपयोगिनः ।
ददाति श्रद्धया युक्तः स सुखीह परत्र च ॥

आह जातूकर्ण्यः ।

दण्डं दत्त्वा द्विजाग्र्याणां पित्र्ये कर्मणि भक्तिमान् ।
अदण्डनीयो भवति यमस्यापि न संशयः ॥

आह शालङ्कायनः ।

प्रदाय वैणवीं यष्टिं नूतनां सुदृढां मृदुं ।
श्लक्ष्णामनुल्वणग्रन्थिं द्विजाय श्राद्धभोजिने ॥
विजयी जायते नित्यं न पश्यति पराजयं ।
सा चेद्भवति कल्माषी सर्वन्तरति कल्मषं ॥

इति दण्डयोगपट्टौ ।

अथ कमण्डल्वादिजलपात्राणि ।

भविष्यत्पुराणे ।

---

(१) रम्यानिति ख० ।

श्राद्धेषु भक्तिसंयुक्तो जलपूर्णं कमण्डलुं ।
दद्यादभिनवं रम्यं द्विजेभ्यः पितृतृप्तये ॥
पितरो द्वादशाब्दानि तेन स्युरभितर्पिताः ।
दाता च सुखकृत्सर्वं सर्वतोऽप्यभिविन्दति ॥

अग्निपुराणे ।

सर्वेषु पितृदेवेषु प्रधानं द्वयमेव हि ।
अन्नञ्च सलिलञ्चेति परं तृप्तिकरे ह्युभे ॥
अन्नादपि वरं नूनं जलमेव न संशयः ।
न बाधते क्षुधा तादृक् यथा पीड़यते तृषा ॥
विनाप्यन्नं कदाचित्तु प्राणिनः प्राणितुं क्षमाः ।
क्षणार्द्धमपि जीवन्ति तृषार्त्ता नैव देहिनः ॥
मूर्च्छामुपागतास्चैव संसिक्ताः शिशिरैर्जलैः ।
लभन्ते चेतनां सद्यस्तस्मात् सञ्जीवनं हि तत् ॥
अतोऽर्थं सलिलं देयं प्रमीतानां विशेषतः ।
परां निर्वृतिमायान्ति सलिलाप्यायनेन ते ॥
परतन्त्राः परे लोके प्राणिनः पीड़ितास्तृषा ।
सलिलान्यभिवाञ्छन्ति दीयमानानि वंशजैः ॥
अतोऽर्थं तर्पणं कार्यं पितॄणां सलिलैः शुभैः ।
जलपूर्णानि पात्राणि प्रदेयानि च पर्वसु ॥
ग्रीष्मे धर्मघटा देया ब्राह्मणेभ्योऽनुवासरं ।
तथाक्षयतृतीयायां पूर्णान् कुम्भान् प्रदापयेत् ॥
अश्वत्थसेचनं कार्यं पितॄणां तृप्तयेऽन्वहं ।

श्राद्धे कमण्डलून् दद्यात् पूरितान् हिमवारिणा ॥
एवं नानाप्रकारं यः पितृणां यच्छते जलं।
सर्व्वकामैः समं तृप्तश्चिरं स्वर्गेऽभिमोदते ॥

नागरखण्डे ।

कमण्डलुं जलापूर्णं दत्वा श्राद्धे समाहितः ।
पूर्णकामैरशेषैश्च सोऽक्षयां लभते गतिं ॥

प्रभासखण्डे ।

कमण्डलुञ्च यो दद्याद्ब्राह्मणे वेदपारगे ।
मधुक्षीरस्रवा धेनुर्दातारमनुगच्छति ॥
चक्रवद्धन्तु यो दद्याच्छ्राद्धकाले कमण्डलुं ।
काञ्चनेन विमानेन किङ्किणीजालमालिना ।
रमते चिररात्राय सुहृष्टो मेरुमूर्द्धनि ॥

वायुपुराणे ।

यः काञ्चनमयं दिव्यं प्रयच्छति कमण्डलुं ।
धेनुं स लभते दिव्यां घटप्रस्रुतिदोहनां ॥

नरसिंहपुराणे ।

दद्यात् पितृणामापूर्णं यः कमण्डलुमम्भसा ।
घृतकुल्यामध्यगतं मधुकुल्यानुयाति तं ॥
स्वर्णादिधातुघटितं यः प्रदद्यात् कमण्डलुम् ।
पितृभ्यः स चिरं भोगैर्मोदते काञ्चनाचले ॥
यो ददाति पितृणां हि राजतं वै कमण्डलुम् ।
सम्पन्नः सकलैरङ्गैः स राजा धार्मिको भवेत् ॥

कमण्डलुं ताम्रमयं श्राद्धेषु प्रददाति यः ।
स महत्याश्रिया युक्तः कुले महति जायते ॥
काष्ठेन निर्मितं यस्तु नालिकेरमथापि वा ।
दद्यात् कमण्डलुं श्राद्धे स श्रीमानभिजायते ॥
चर्मणा निर्मितं वारिपात्रं नानाविधन्तु यः ।
प्रतिपादयति श्राद्धे स सुखी जायते चिरं ॥
यो मृत्तिकाविरचितान् श्राद्धेषु करकान्नवान् ।
प्रयच्छति महामेधाः स दुःखं नैव विन्दति ॥

स्कन्दपुराणे ।

यस्तड़ागांस्तथा वापीरपि कूपान् प्रपास्तथा ।
उत्सृजेत् पितृतृप्त्यर्थं ब्रह्मलोकं स गच्छति ॥
मणिकानम्भसा पूर्णान् प्रदद्याद्वा गलन्तिकां ।
प्रदद्यात्करकान्वापि यदि वा करपत्रिकाः ।
श्राद्धकाले यथाशक्ति सोऽक्षयं विन्दते सुखं ॥

वायुपुराणे ।

दत्त्वा पवित्रं योगिभ्यो जन्तुवारणमम्भसः ।
श्राद्धे निष्कसहस्रस्य फलं प्राप्नोति मानवः ॥

इति कमण्डल्वादिजलपात्राणि ।

अथ छत्रम् ।

वायुपुराणे ।

श्रेष्ठं छत्रञ्च यो दद्यात् पुष्पमालादिशोभितं ।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥

बृहद्विष्णुपुराणे ।

छत्रं विचित्रं यो दद्यात् पितॄणां श्रेयसान्वितः ।

स विन्दति न सन्देहः सन्तापं कुत्रचिन्न हि ॥

पद्मपुराणे ।

यो वै प्रयच्छति छत्रममुकस्येदमस्त्विति ।

तेन सन्तारितस्तापात् स भवेदायुगक्षयात् ॥

भगवतीपुराणे ।

वर्षातपत्राणयोग्यमातपत्रं प्रयच्छता ।

समुद्धृताः स्युः पितरो दुस्तरात् दुःखवारिधेः ॥

नारदीयपुराणे ।

दद्यात् पितॄणां यः छत्रं वृष्ट्यातपनिवारणं ।

महाभूतसमुद्भूतां नैव पीड़ां स पश्यति ॥

ब्रह्मवैवर्त्ते ।

छत्रं नरपतेर्योग्यं नानाशोभासमन्वितं ।

छत्रवाहाय वृत्तिञ्च परिकल्प्य यथोचितं ॥

प्रदद्याद्द्विप्रमुख्याय पितॄनुद्दिश्य यः स्वकान् ।

स प्रशास्ति नरः कृत्स्नमेकच्छत्रं महीतलं ॥

छत्रं शतशलाकं यः सितवस्त्रोपशोभितं ।

पितॄणां प्रयतो दद्यात् सोऽपि राजा भवेदिह ॥

मयूरपिच्छैर्बहुभिर्निर्मितं रुचिराकृति ।

छत्रं ददाति यस्तस्य विहारो नन्दने वने ॥

यः प्रदद्याल्लघुच्छत्रं रम्यमातपवारणं ।

श्राद्धकाले स मनुजो न क्वचित्परितप्यते ।
यो वृष्टिवारणं छत्रं वर्षाकाले प्रयच्छति ॥
स्वपितॄणां हितार्थाय स दुःखैर्नाभिभूयते ।

इति छत्रनिरूपणम् ।

अथोपानत्पादुके ।

वायुपुराणे ।

श्राद्धेषूपानहौ दद्याद्ब्राह्मणेभ्यो विशेषतः ।
दिव्यं स लभते चक्षुर्वाजियुक्तान् रथांस्तथा ॥

ब्रह्मपुराणे ।

उपानद्युगलं यस्तु श्राद्धकर्मणि धर्मवित् ।
एकैकस्मै द्विजाग्र्याय पित्रर्थं संप्रयच्छति ॥
पितॄणां तत्परे लोके विमानमुपतिष्ठते ।
दातापि स्वर्गमाप्नोति सुयुक्तैर्वडवारथैः ॥

देवीपुराणे ।

उपानहौ प्रयच्छन्ति ये पितृभ्यः समाहिताः ।
अश्वदानं कृतं तैस्तु नात्र कार्य्या विचारणा ॥

आदित्यपुराणे ।

प्रतप्तबालुकाः केचित् केचिदङ्गारसङ्कुलाः ।
लोहकण्टकसङ्कीर्णाः केचिद्व्यालसमाकुलाः ॥
यमलोकस्य पन्थानः प्रमीतानां सुदुस्तराः ।
उपानद्दानमेवैकं तेषु तारयितुं क्षमं ॥
उपानहौ स्वयं दत्त्वा द्विजेभ्यो वै यथाविधि ।

येभ्योवा वंशजैर्दत्ते पन्थानं ते तरन्ति तं ॥
एतस्मात् कारणान्नित्यं श्राद्धे दानमुपानहां ।
पुराणज्ञाः प्रशंसन्ति दानमन्यसमं न तत् ॥

सौरपुराणे ।

निर्माय सुदृढे दद्याद्दुर्गन्धेन चर्मणा ।
न न्यूने नातिरिक्ते च पादयोः सुखदे मृदू ॥
उपानहौ ब्राह्मणेभ्यः पितॄणां सुखहेतवे ।
प्रीयन्ते पितरस्तस्य प्रीता यच्छन्ति वाञ्छितं ॥

वायुपुराणे ।

ऋजू पूर्णे तु यो दद्यात् पादुके श्राद्धकर्मणि ।
शोभनं लभते यानं पादयोः सुखमेव च ॥

नन्दिपुराणे ।

यः पादुके प्रदद्यात्तु पितृतृप्त्यर्थमादरात् ।
तस्य पुण्येषु लोकेषु भवेदप्रतिघा गतिः ॥

चमत्कारखण्डे ।

धात्वादिनिर्मितं दद्यात् पितृभ्यः पादुकायुगं ।
यस्तस्य देवलोकेषु गतिर्वैमानिकी भवेत् ॥
गजदन्तकृते यस्तु पादुके संप्रयच्छति ।
स वै चित्राणि यानानि लभते प्रेत्य चेह चैति ॥
यः पादुके प्रयच्छेत्तु सारदारुमये शुभे ।
पितृभ्यः सोऽपि मेधावी सुखमत्यन्तमश्नुते ॥

इत्युपानत्पादुकानिरूपणम् ।

अथासनानि ।

ब्रह्मपुराणे ।

आसनानि च रम्याणि पितृभ्यो यः प्रयच्छति ।
स आस्ते सुचिरं कालं त्रिदशैरभिपूजितः ॥

देवीपुराणे ।

पीठान्यतिमनोज्ञानि पितॄणां प्रददाति यः ।
तस्य पीठेश्वरी नित्यं वरान् यच्छति वाञ्छितान् ॥

आदित्यपुराणे ।

सुश्लक्ष्णानि विशालानि प्रददात्यासनानि यः ।
श्राद्धेषु तस्य भवने सदास्ते पद्मसम्भवा ॥

गारुड़पुराणे ।

प्रयच्छत्यासनं यस्तु पितृभ्यः सुमहामतिः ।
स्वैरं वैरविनिर्मुक्तश्चिरमास्ते त्रिविष्टपे ॥

चमत्कारखण्डे ।

चामीकरमयं श्राद्धेष्वासनं यस्तु दापयेत् ।
तस्यासनं मेरुपृष्ठे समीपे परमेष्ठिनः ॥
यः पितॄणां सुघटितं दद्याद्राजतमासनं ।
स स्वर्गे सुखमासीनः क्रीड़ते कालमक्षयं ॥
येन ताम्रमयं दत्तमासनं पितृकर्म्मणि ।
स वै दिव्यासनारूढ़ो न हि प्रच्यवते चिरं ॥
प्रदद्यादासनं यस्तु निर्म्मितं सारदारुभिः ।
तस्य नाकगतस्योच्चैः कल्प्यते भव्यमासनं ॥

विष्णुधर्म्मोत्तरे ।

यस्तु भद्रासनं चारु पितॄणां प्रतिपादयेत् ।
स वै सिंहासनासीनश्चवते न चिरादपि ॥
यस्त्वासनं वस्त्रमयं हंसपिच्छैः सुसम्भृतं ।
प्रयच्छति महीपालास्तमासीनमुपासते ॥
तूलैः पूर्णोदरं वास्त्रमासनं यो निवेदयेत् ।
पितॄणामादरादेनं प्रत्यासीदन्ति सम्पदः ॥
यः पट्टगड्डिकाः श्राद्धे गड्डिकाश्च मनोहराः ।
ददाति तस्य हि स्वर्गे कल्प्यते दिव्यमासनं ॥
पितॄनुद्दिश्य योगिभ्यो दत्त्वा कुशमयीर्वृशीः ।
सर्वसङ्गविनिर्मुक्तो विशुद्धात्मा स जायते ॥
चैत्रासनानि चित्राणि पितृभ्यः प्रतिपादयेत् ।
नीरोगः सुभगः श्रीमान् पुरुषः सम्प्रजायते ॥
यस्त्वासनोपयोगार्थं प्रदद्यात् कम्बलान् नवान् ।
अष्टाङ्गयोगसंसिद्धिस्तस्य पुंसोऽभिजायते ॥
यस्तृणैर्मृदुभिः स्वन्तं निर्माय शुभमासनं ॥
दद्याच्छ्राद्धेषु तस्याशु स्थिराः स्युः सर्वतः श्रियः ।

इत्यासननिरूपणम् ।

अथ शय्यास्तरणप्रच्छादनपटोपधानानि ।

ब्रह्माण्डपुराणे ।

शय्यामास्तरणोपेतामुत्तरच्छदसंयुतां ।
उपधानेन संयुक्तां पितॄद्देशेन यो ददेत् ॥

मोदन्ते पितरस्तस्य सुखिनः शाश्वतीः समाः ।
दातापि स्वर्गमासाद्य विमानं दिव्यमास्थितः ।
सेव्यते सुरनारीभिर्गीयमानश्च किन्नरैः ॥

ब्रह्मवैवर्त्ते ।

यो मञ्चकञ्च दद्याद्वै चारु तूलिकयान्वितं ।
विशुद्धाच्छादनपटं रमणीयोपधानकम् ॥
पितृभ्यः श्रद्धया शुक्तः श्राद्धकाल उपस्थिते ।
स त्रिविष्टपमासाद्य दिव्यभोगसमन्वितं ॥
सहस्रैः सुरनारीणां रमते परिवारितः ।
कालक्षयादिहागत्य नारीणां वल्लभोभवेत् ॥

कूर्म्मपुराणे ।

शय्यां सतूलिकां दद्यात् पितृकर्म्मणि यो नरः ।
रमयन्त्यनुरक्तास्तं स्वर्गे सारङ्गलोचनाः ॥

विष्णुधर्म्मोत्तरे ।

मञ्चकं तूलिकायुक्तं निर्मितं दारुभिः शुभैः ।
भक्त्या विप्राय प्रयतो द्विजेभ्यः पितृकर्मणि ।
अप्सरसां वृन्दैरश्रान्तं परिचर्य्यते ॥
आन्दोलकं सास्तरणं सोपधानं प्रसुन्दरं ।
धातुजाभिः सुरम्याभिः शृङ्खलाभिश्च संयुतं ॥
मत्तवारणशोभाढ्यं ग्रथितं मृदुभिः पटैः ।
ददाति पितृकार्य्येषु योहि श्रद्धापरायणः ॥
गन्धर्व्वाप्सरसां लोके गीयमानो निरन्तरं ।

स भुङ्क्ते विविधान् भोगांस्त्रिदशैरपि दुर्लभान् ॥
पट्टान् काष्ठमयान् यश्च शयनेषूपयोगिनः ।
दत्त्वा स्वास्तरणोपेतान् मत्तवारणलाञ्छितान् ।
वर्षायुतञ्च रमते लोके वै विश्वकर्म्मणः ॥

चमत्कारखण्डे ।

दारुभिर्घटितान्तस्थैः स्वर्णपत्रैरलङ्कृतां ।
शय्यां ददाति यस्तस्य वासः शक्रस्य वेश्मनि ॥
भूषितां पित्तलमयैः पत्रच्छेदैर्यथोचितां ।
श्राद्धे शय्यां प्रयच्छेद् यः सूर्य्यलोके स राजते ॥
गजदन्तमयं दिव्यं श्राद्धे दत्त्वा तु मञ्चकं ।
गत्वा चान्द्रमसं लोकं शरदामयुतं वसेत् ॥
पट्टसूत्रमयैः पट्टैर्ग्रथिताञ्च ददाति यः ।
शय्यां पितृभ्योमेधावी देवीलोकं स गच्छति ॥
कार्पाससूत्रजैः पट्टैः सुदृढ़ां यः प्रयच्छति ।
चन्द्रस्य भवने सोऽपि कामान् भुङ्क्ते यथेप्सितान् ॥
कृतां शनमयैः पट्टैः सूत्रैर्वा वल्कजैरपि ।
दत्त्वा जन्मान्तरे जातः स्त्रियो विन्दति सुन्दरीः ॥
हंसपिच्छमयीं तूलीं पितृभ्यः प्रददाति यः ।
गन्धर्वाप्सरसां लोके मोदतेऽसौ यथासुखं ॥
कार्पासनिर्मितां तूलीं दत्त्वा मृद्वीं सुशोभनां ।
उपधानेन संयुक्तां लक्ष्मीवान् जायते नरः ॥
हंसपिच्छमयं रम्यं उपधानं ददाति यः ।

कीर्त्तिमान् जायते नित्यं सुखानामपि भाजनं ॥
चौमं वा पट्टसूत्रं वा यो दद्यादुत्तरच्छदं ।
लावण्येन समायुक्तो जायतेऽसौ जनप्रियः ॥
यः प्रयच्छेदुत्तरपटं सूक्ष्मकार्पाससूत्रजं ।
तस्यायुर्विपुलं लोके प्रयच्छन्ति पितामहाः ॥
मृदुचर्म्ममयीं दद्यात् यो नरः पट्टगड्डिकां ।
सोऽपि श्रिया समायुक्तो नीरोगोजायते भुवि ॥
विचित्रैश्चर्म्मभिर्युक्तं रचितं मृदुभिस्तृणैः ।
प्रदायास्तरणं श्राद्धे न दुःखं पश्यति कचित् ॥
दद्यादास्तरणं यस्तु निर्म्मितं मृदुभिस्तृणैः ।
श्राद्धकाले तु योगिभ्यः स दुःखैर्नाभिभूयते ॥

इति शय्यास्तरणप्रच्छादनपटोपधानानि ।

अथ चामरव्यजनदर्पणकेशप्रसाधनानि ।

वृहद्विष्णुपुराणे ।

चामरव्यजनञ्चैव भक्त्या यः प्रतिपादयेत् ।
स वै दिवस्पतेर्लोके बहुकालं महीयते ॥
राजोपकरणं ह्येतत् पितॄणामपि वल्लभं ।
अतो विद्वान् प्रयत्नेन तेभ्यो दद्यादतन्द्रितः ॥
प्रदाय दर्पणं तेभ्यश्चक्षुष्मानभिजायते ।
केशप्रसाधनं दत्वा तथा कूर्चप्रसाधनं ॥
सुपुष्टां रूपसामग्रीं लभते सोऽन्यजन्मनि ।

सौरपुराणे ।

चामरं तालवृन्तञ्च श्वेतच्छत्रञ्च दर्पणं ।
दत्त्वा पितॄणामेतानि भूमिपालो भवेदिह ॥

प्रभासखण्डे ।

केशप्रसाधनीं रम्यां दद्यात् कङ्कतिकान्तु यः ।
आदर्शं निर्मलञ्चैव पूर्णचन्द्रसमाकृतिं ।
श्राद्धकाले प्रसन्नात्मा तस्य स्वर्गेऽक्षया गतिः ॥

गजदन्तनिर्मितं केशसंस्कारसाधनं 'कङ्कतिका' ।

वाराहपुराणे ।

चामरीधेनुलाङ्गूलश्वेतबालसमुद्भवं ।
चामीकरविचित्रेण तथा दण्डेन निर्मितं ॥
पितृभ्यश्चामरं दत्त्वा स्वर्गे स्त्रीभिस्तु वीज्यते ।
तदेव कृष्णवर्णन्तु दत्त्वा भूमिपतिर्भवेत् ॥
मयूरपिच्छनिर्माणं हेमदण्डन्तु चामरं ।
प्रतिपाद्य पितृभ्यस्तु राजराजोऽभिजायते ॥
बालैर्दीर्घैरतिश्वेतैरश्वबालधिसम्भवैः ।
निर्मितं चामरं श्राद्धे दत्त्वा माण्डलिको भवेत् ॥
कृष्णाश्वबालरचितं चामरं यस्तु यच्छति ।
सोऽपि पुण्येन तेनेह धनी भवति धर्मभाक् ॥

कूर्मपुराणे ।

द्विजेभ्यश्चामरं दद्यात् स्थापयेद्वामरालये ।
पितॄनुद्दिश्य यस्तस्य पितरः सर्वकामदाः ॥

वायुपुराणे ।

व्यजनं तालवृन्तञ्च दत्त्वा विप्राय संस्कृतं ।
प्राप्नुयात् स्पर्शयुक्तानि सुगन्धीनि मृदूनि च ॥

'तालवृन्तं' वस्त्रव्यजनं ।

चमत्कारखण्डे ।

नानाकषायधौतेन निर्मितं मृदुचर्मणा ।
चित्ररागैरनेकैश्च स्वर्णदण्डेन शोभितम् ॥
दन्तिदन्तमयेनापि दण्डेन सुविराजितं ।
व्यजनं ये प्रयच्छन्ति ते वै गत्वामरावतीं ।
नारीभिरभिवीज्यन्ते नित्यं सत्कङ्कणैः करैः ॥
मयूरपिच्छघटितं व्यजनं यः प्रयच्छति ।
पितृभ्यः सोऽपि देहान्ते स्कन्दलोके महीयते ॥
रचितं वालकेनाथ यद्वोशीरेण निर्मितं ।
प्रदाय व्यजनं श्राद्धे मनस्तापं न विन्दति ॥
वेत्रपट्टेन रचितं वस्त्रैरन्यैरथापि वा ।
प्रयच्छेत्तालवृन्तं यः स भूपालो न संशयः ॥
तालीदलैर्विरचितं कृतं भूर्जत्वचाथ वा ।
प्रदाय व्यजनं श्राद्धे महदारोग्यमश्नुते ॥
कृतञ्च विदलच्छेदैः सुसूक्ष्मैश्चैव गुम्फितं ।
दत्त्वा पितृभ्यो व्यजनमनन्तं सुखमश्नुते ॥

गारुड़पुराणे ।

समर्प्य दर्पणं भक्त्या पितृभ्यः पितृकर्मणि ।
भुवि प्रकाशो भवति यशोभिरभिपूजितः ॥

भविष्यत्पुराणे ।

दर्पणं कलधौतेन निर्मलेन सुनिर्मितं ।
प्रतिपाद्य पितृभ्यो वै लोकं चान्द्रमसं व्रजेत् ॥
विमलेनापि कांस्येन पञ्चाशत्पलिकेन तु ।
कल्पितं दर्पणं दत्त्वा तेजस्वी जायते ध्रुवम् ॥
त्रिंशत्पलेन कांस्येन कृतमादर्शमण्डलं ।
पञ्चविंशतिजं वापि दत्त्वा वै कान्तिमान् भवेत् ॥
यो दर्पणं विरचितं कांस्यस्य दशभिः पलैः ।
प्रतिपादयते सोऽपि लभते चक्षुरुत्तमं ॥

स्कन्दपुराणे ।

केशप्रसाधनं दत्त्वा करिदन्तविनिर्मितं ।
पितृकर्मणि धर्मात्मा सोऽश्विनोर्लोकमश्नुते ॥
तालस्य नालिकेरस्य वेणोर्वेत्रस्य वा पुनः ।
शलाकाभिर्विरचितं दत्त्वा केशप्रसाधनं ।
सुभगश्च सुवेशश्च निश्चितं जायते नरः ॥
दारुणा निर्मितं दत्त्वा केशसंस्कारसाधनं ।
प्राप्नोति सुन्दरान् केशान् दीर्घमायुश्च विन्दति ॥
वराहरोमरचितां श्मश्रुवैशद्यकारिणीं ।
पितृभ्यः कूर्चिकां दत्त्वा सुरूपः सुभगोभवेत् ॥

इति चामरव्यजन-दर्पण-केशप्रसाधननिरूपणम् ।

अथान्न-मधु-फल-पात्र-पात्राधार-पतद्ग्रह-ताम्बूल-तत्पात्राणि ।
आद्यमधिकृत्य ब्रह्मवैवर्त्ते ।

तरुणादित्यसङ्काशं विमानं सार्व्वकामिकं ।
अन्नदो लभते तिस्रः कन्याकोट्यस्तथैव च ॥
अन्नदानात्परं दानं विद्यते नेह किञ्चन ।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥
जीवदानात्परं दानं न किञ्चिदिह विद्यते ।
अन्नाज्जीवति त्रैलोक्यं तेन तत्परमं भवेत् ॥
अन्नाल्लोकाः प्रतिष्ठन्ते लोकदानस्य तत्फलं ।
अन्नं प्रजापतिः साक्षात्तेन सर्वमिदं ततं ।
तस्मादन्नसमं दानं न भूतं न भविष्यति ॥

मार्कण्डेयपुराणे ।

बहुप्रकाराण्यन्नानि मृष्टानि च मृदूनि च ।
फलानि चैव स्वादूनि यथाकालोद्भवानि च ॥
निवेदयेत्पितृभ्यो यः सम्भृत्य स्वयमादरात् ।
स पितॄणां प्रसादेन ब्रह्मसायुज्यमश्नुते ॥

नारदीयपुराणे ।

भक्ष्यं भोज्यञ्च लेह्यञ्च पेयञ्चोष्यं तथैव च ।
पञ्चप्रकारं ह्यन्नं द्रव्यगन्धरसान्वितं ॥
द्राक्षाकदलनारङ्गसहकारादिकानि च ।
वर्ण-गन्ध-रस-स्पर्शसम्पन्नानि फलान्यपि ।
समर्पयेच्छ्राद्धकाले मन्त्रजिह्वेषु यत्नतः ॥
तेन तृप्तिं परां यान्ति पितरः सपितामहाः ।
कामानस्मै प्रयच्छन्ति दुर्लभानन्यकर्मणा ॥

यस्तु भोजनपात्राणि पितृभ्यः प्रतिपादयेत् ।
सौवर्ण-राजतादीनि तथा कांस्यमयान्यपि ।
स पुमान् पात्रतामेति सर्वासामपि सम्पदाम् ॥
धात्वादिनिर्मिता भुक्तिपात्राधारास्त्रिपादिकाः ।
उत्सृज्य स्वपितृप्रीत्यै प्रापयेद्ब्राह्मणालयं ।
स ज्ञातीनामशेषाणामाधारत्वं प्रपद्यते ॥
पतद्ग्रहं धातुमयं ष्ठीवनाचमनादिषु ।
उपयुक्तं श्राद्धकाले पितृभ्यः परिकल्प्य तु ।
द्विजस्य भवने स्थाप्य श्रियमाप्नोति पुष्कलां ॥

वह्निपुराणे ।

अन्नं ब्रह्म समुद्दिष्टमखिलैः श्रुतिपारगैः ।
तच्च भूरिगुणोपेतं देवलोकेऽपि दुर्लभं ॥
तत्पितॄणामतिप्रीत्या यः प्रयच्छति भूरिशः ।
अशेषक्लेशनिर्मुक्तः स याति ब्रह्म शाश्वतं ॥
ताम्बूलं यो ददातीह शुचिकर्पूरसंयुतं ।
ऐश्वर्य्यं सोऽतिविपुलं परत्रेह च विन्दति ॥
यश्चूर्णपर्णपूगादिस्थापनार्थानि कृत्स्नशः ।
दद्यात्ताम्बूलपात्राणि पूगाद्यैः पूरितानि च ॥
तथा कर्पूरभाण्डञ्च कर्पूरेणाभिपूरितं ।
दिव्यं वर्षसहस्रं हि भुङ्क्ते भोगान् भुवि स्थितः ॥

पद्मपुराणे ।

अन्नं हि प्राणिनां प्राणाः अन्नमेवामृतं दिवि ।

अन्नदः प्राणदः प्रोक्तो ह्यन्नदोऽमृतदस्तथा ॥
तस्मात्पुत्रेण कर्त्तव्यं पित्रर्थं भूरिभोजनं ।
भूर्यन्नदाता पुरुषो न मन्तव्यो हि मानुषः ।
तस्य निर्दग्धपापस्य निवासो वैष्णवे पुरे ॥
फलानि च सुगन्धीनि पक्वानि मधुराणि च ।
मृद्वीकादीनि यो दद्यात् पितृभ्यः प्रणयान्वितः ।
स स्वर्गे नन्दनोद्यानफलपीयूषभाग्भवेत् ॥
उत्कृष्टैः क्रमुकैश्चैव नागवल्लीदलैरपि ।
कल्पितं घनसारादिसुगन्धिद्रव्यसंयुतं ।
दत्त्वा पितृभ्यस्ताम्बूलमनन्तां लभते श्रियं ॥
नान्नात् परतरं किञ्चित् प्राणिनां विद्यते प्रियं ।
ताम्बूलाच्च परं नास्ति भोगेषु प्रवरं यतः ॥
तेनैतदुभयं देयं पितृणां तृप्तिमिच्छता ।
आरोग्यमन्नदो याति भोगी ताम्बूलदो भवेत् ॥

प्रभासखण्डे ।

जाम्बूनदमयं दिव्यं विमानं सूर्य्यसन्निभं ।
दिव्याप्सरोभिः सङ्कीर्णमन्नदो लभतेऽक्षयं ॥

भगवतीपुराणे ॥

अन्नं हि प्राणिनां प्राणाः सुप्रसिद्धमिदं वचः ।
तस्मादन्नप्रदो यस्तु प्राणानेव ददाति सः ॥
तस्मादन्नं प्रदातव्यं पितृणामपि भूरिशः ।
आरोग्यमन्नदो याति दीर्घमायुश्च विन्दति ॥

सह्याद्रिखण्डे ।

ओषधीनां हि सर्वासां परमो वै रसो मधु ।
सर्वान्नानामयं सारो विश्रुतो मधुसंज्ञया ॥
देवानाञ्च पितॄणाञ्च तदेतदतिवल्लभं ।
अतः श्राद्धं न कर्त्तव्यं यत्किञ्चिन्मधुना विना ॥
मधुना रहिते श्राद्धे निराशाः पितरो गताः ।
देवाश्च पितरश्चैव मधुना तर्पिता ध्रुवम् ॥
सुधारसेन तृप्यन्ति यावदाभूतसंप्लवम् ।
कथञ्चिद्यदि विप्रेभ्यः प्रदत्तं भोजने मधु ।
पिण्डास्तु नैव दातव्याः कदाचिन्मधुना विना ॥
सुतेन मधुसर्पिर्भ्यां यैर्दत्ताः पायसेन वै ।
पिण्डाः पितृभ्यस्ते पैत्रात् समुत्तीर्णा ऋणार्णवात् ॥
यैर्वा मघात्रयोदश्यां मधुना पायसेन च ।
विहितः पिण्डनिर्वापः कृतकृत्यास्तु ते नराः ॥
अन्नाद्यैर्मधुसंपृक्तैः सक्तुभिर्वा मधुप्लुतैः ।
यैर्निरूप्ता नरैः पिण्डा गयाशीर्षे महात्मभिः ॥
कल्पकोटिशतं साग्रं नानाभोगसमन्विताः ।
ते स्वीयैः पूर्व्वजैः सार्द्धं ब्रह्मलोके निवासिनः ॥
मधु मध्विति वै श्राद्धे त्रिःसमुच्चरितं वचः ।
श्रावणान्मधुनामस्तैः पितरः स्युः सुतर्पिताः ॥
अतोऽयं मधु शंसन्ति धर्मज्ञाः श्राद्धकर्मणि ।
सौवर्णं राजतं वापि कांस्येनाप्यथ निर्मितं ॥

शक्त्या भोजनपात्रन्तु विशालञ्चातिनिर्म्मलं ।
घृतादिपात्रैर्लघुभिर्युतं स्वर्णादिसम्भवैः ॥
हेमादिधातुसंभूते स्थितमाधारयन्त्रके ।
एतद्द्रव्याभिधानेन मलपात्रेण चान्वितम् ॥
यो ददाति द्विजाग्रेभ्यः पितॄणामिदमस्त्विति ।
सुचिरं स दिवि स्थित्वा सम्राड्भवति भूतले ॥

वायुपुराणे ।

पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजिनां ।
पात्रं भवति कामानां विद्यानाञ्च धनस्य च ॥
राजतं काञ्चनञ्चैव दद्याच्छ्राद्धेषु यः पुमान् ।
दत्त्वा स लभते दानात् प्राकाम्यं धनमेव च ॥
रौप्यं रजतयुक्तं वा पितॄणां पात्रमुच्यते ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ॥
लवणेन तु पूर्णानि श्राद्धे पात्राणि दापयेत् ।
रसाः समुपतिष्ठन्ति भक्ष्यं सौभाग्यमेव च ॥
तिलपूर्णानि यो दद्यात्पात्राणीह द्विजन्मनां ।
तिले तिले निष्कशतं स ददाति न संशयः ॥

ब्रह्मवैवर्त्ते ।

सुरभिद्रव्यतैलैस्तु गन्धवद्भिस्तथैव च ।
पूरयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥
गन्धवह्वा महानद्यः सुखानि विविधानि च ।
दातारमुपतिष्ठन्ति युवत्यश्च पतिव्रताः ॥

नरसिंहपुराणे ।

फलानि कदलादीनि पितॄणां यः प्रयच्छति ।
पितृभक्तस्य लोकेऽस्मिन् सफलं तस्य जीवितम् ॥

ब्रह्माण्डपुराणे ।

वृक्षैर्मनोहरफलैर्लताभिश्च समाकुलान् ।
आरामान् ये प्रयच्छन्ति पितृभ्यो जलपूर्व्वकं ।
ते चक्रवर्त्तिनो भूत्वा प्रशासन्ति वसुन्धरां ॥
ये पुष्पवाटिकां वापि वृक्षैः कतिपयैर्युतां ।
प्रयच्छन्ति पितृभ्यस्ते भूमिपाला न संशयः ॥
येऽप्येकं फलितं वृक्षं लतामण्डपमेव वा ।
प्रयच्छन्ति पितृप्रीत्यै ब्राह्मणानां महात्मनां ।
बहुपुत्रा बहुधनास्ते दृश्यन्ते महीतले ॥
ये तु क्रीत्वाथ लब्ध्वा वा फलान्यादाय भक्तितः ।
पितॄणां सम्प्रयच्छन्ति धनिनस्तेऽपि निश्चितम् ॥

स्कन्दपुराणे ।

ये तु पूगद्रुमान् भव्यान् ताम्बूलीमण्डपानपि ।
पितृभ्यो ददते तेषामप्सरोभिः सह स्थितिः ॥
पूर्णं क्रमुकपालीभिः क्रमुकावापभाजनं ।
पूगविच्छेदनियन्त्रैर्युतं कालायसोद्भवैः ॥
पर्णस्थापनपात्रञ्च पूर्णं पर्णैः समुज्ज्वलैः ।
तथा कर्पूरपात्रं चेत्येवमादीनि कृत्स्नशः ।
समाहृत्य द्विजाग्रेभ्यः श्राद्धेषु प्रतिपादयेत ॥

ताम्बूलग्रहणार्थञ्च द्रव्यं संवत्सरोचितं ।
पूर्णे संवत्सरे भूयः सर्व्वमेव प्रदापयेत् ॥
एवं यः कुरुते तस्य पितरः प्रीतमानसाः ।
आयुः प्रजां धनं तस्मै प्रयच्छन्ते सुखानि च ॥

इत्यन्न-मधु-फल-पात्र-पात्राधार-पतद्ग्रह-ताम्बूल-तत्पात्रनिरूपणं ।

अथ हिरण्यालङ्कार-यानानि ।

नन्दिपुराणे ।

सर्वेषामपि दानानां हिरण्यमधिकं स्मृतं ।
प्रभवन्ति हि सर्वेऽपि पदार्थास्तु हिरण्यतः ॥
अतो हिरण्यं दातव्यं पितॄणान्तु विशेषतः ।
अतः संपूज्य गन्धाद्यैर्वस्त्राद्यैरभिपूज्य च ॥
हिरण्यं सम्प्रदातव्यमिदमस्मै स्वधेति हि ।
दक्षिणादौ तु रजतं पित्रे कर्म्मणि शस्यते ॥
अलङ्काराः प्रदातव्या यथाशक्ति हिरण्मयाः ।
केयूर-हार-कटक-मुद्रिका-कुण्डलादयः ॥
स्त्रीश्राद्धेषु प्रदेयाः स्युरलङ्कारास्तु योषितां ।
मञ्जीरमेखलादामकर्णिकाकङ्कणादयः ॥
हारमाणिक्यवैदूर्य्यमुक्तागारुत्मतादिभिः ।
रत्नैर्विरचिताः स्वच्छैरलङ्कारा मनोहराः ।
पितृभ्यः सम्प्रदातव्या निजवित्तानुरूपतः ॥
यानानि शिविका-गन्त्री-तुरङ्गादीनि यत्नतः ।
श्राद्धे देयानि विदुषा स्वसामर्थ्यानुसारतः ॥

अन्नानि च विचित्राणि स्वादूनि सलिलानि च ।
दातव्यानि यथाकामं पितृन्मोदयता सदा॥
एवं यः कुरुते श्राद्धं श्रद्धया धार्म्मिकोत्तमः ।
प्रक्षीणाशेषपापस्य तस्य संशुद्धचेतसः ।
विच्छिन्नक्लेशजालस्य(१) मुक्तिरेवामलं फलं ॥

आदित्यपुराणे ।

हिरण्यमम्‌तं साक्षाद्देवरूपमिति श्रुतिः।
हिरण्यदाता श्राद्धे स्यात् पितृणाममृतप्रदः ॥
अतो हिरण्यं दातव्यं पितृणां प्रीतये सदा ।
रजतं वा यथाशक्ति तेषां तदतिवल्लभं ॥
पितॄन् संपूज्य चाच्छाद्य हिरण्यं प्रददाति यः ।
तुलादानसमं पुण्यं लभते नात्र संशयः॥
रजतस्य प्रदानेन गोसहस्रफलं लभेत् ।
दक्षिणार्थं पृथग्देयं स्वर्णं रूप्यमथापि वा।
तेनास्य वर्द्धते लक्ष्मीरायुर्दीर्घञ्च विन्दति ॥

वायुपुराणे ।

रजतस्य कथा वापि दर्शनं दानमेव च।
विशेषादक्षयं स्वर्गं राजतं दानमुच्यते ॥

भविष्यत्पुराणे ।

यो ददाति सुवर्णं वै रूप्यं वा पितृपूजकः।

---

(१) विच्छिन्न-क्लेशजातस्येति ख० ।

तस्य दिव्यायुतं पूर्णं निवासः काञ्चनाचले(१)॥
ददाति रजतं वापि यः पितॄणां महामतिः ।
तस्यापि वर्द्धते वंशः पितॄणां हि प्रसादतः ॥
अलङ्कारांस्तथानर्घान् पितॄणां भक्तिपूर्व्वकं ।
यो ददाति महाभागः सुरस्त्रीणां सुवल्लभः ॥
जाम्बूनदेन शुद्धेन यः कृत्वा भूषणानि वै ।
प्रयच्छति द्विजाग्र्येभ्यः श्राद्धकाले विशुद्धधी
यशोभागी बहुधनः स नरो जायते भृशं ॥
अलङ्कारान् कृतान् दद्याद्यस्तु रत्नैर्महाधनैः ।
स भूमिपालो भवति सर्व्वसामन्तवन्दितः ।
ततः काले बहुतरे विष्णोः सालोक्यमाप्नुयात् ॥

गारुड़पुराणे ।

अलङ्कारं महामुल्यं पितृभ्यो यः प्रयच्छति ।
तस्य पुण्यवतः पुण्यं गण्यते केन सत्तम ॥
यस्तु यानानि रम्याणि सुखहेतूनि वाहने ।
दद्यात् पितृभ्यस्तस्य स्याद्विमानैश्वर्य्यमद्भुतं ॥

स्कन्दपुराणे ।

मूर्द्धालङ्करणं दत्त्वा श्राद्धे बहुधनोचितं ।
मूर्द्धाभिषिक्तो भवति पृथिव्यां नात्र संशयः ॥
कर्णभूषणदानेन निश्चितं स्याद्बहुश्रुतः ।
कण्ठालङ्कृतिदाता तु वाग्मी स्यान्मधुरस्वरः ॥

---

(१) काञ्चनालय इति ग० ।

मेधावी जायते विद्वान् दत्तैर्हृदयभूषणैः ।
जायते बाहुभूषाभिः प्रदत्ताभिर्महाबलः ॥
हस्तालङ्करणं दत्त्वा दाता भवति विश्रुतः ।
स विश्ववन्द्यो भवति यो दद्यात् पादभूषणं ॥
स्वर्गच्युतानामेतानि फलान्युक्तानि सूरिभिः ।
पितृभूषणदानस्य स्वर्गो मुख्यतमं फलं ।
रत्नजैर्भूषणैर्दत्तैर्न मुक्तिरपि दुर्लभा ॥

ब्रह्मपुराणे ।

यद्यदिष्टं विशिष्टञ्च तत्तद्देयं पितॄन् प्रति ।
तत्राप्यन्नं जलं वस्त्रं भूषणानि विशेषतः ।
यानान्यपि प्रदेयानि पितॄणां परितुष्टये ॥

मत्स्यपुराणे ।

श्राद्धे वासांसि देयानि शयनान्यासनानि च ।
दातव्यानीह विदुषा यानानि तु विशेषतः ॥

पद्मपुराणे ।

सुदुर्गमाः प्रमीतानां पन्थानः पारलौकिकाः ।
यानदानादृते ते वै न शक्यन्ते विलङ्घितुं ।
अतो यानानि देयानि पितृभ्यो वंशजन्मभिः ॥

विष्णुधर्म्मोत्तरे ।

शिविकां यः प्रयच्छेत्तु सर्व्वोपकरणैर्युतां ।
दोलावाहनकर्म्मभ्यो वृत्तिं संवत्सरोचितां ॥
वर्षपर्य्याप्तमशनं कुटुम्बार्थं द्विजस्य तु ।

छत्रप्रदानमप्येवं कर्त्तव्यं पितृकर्म्मणि ॥
भूयोऽपि सर्वं दातव्यं वर्षान्ते पितृतुष्टये ।
प्रतिवर्षं सकृद्वापि य एवं कुरुते नरः ।
वैमानिकत्वं प्राप्तस्य तस्यावृत्तिर्न विद्यते ॥
यस्तु चित्रगतिं दद्यात् तुरगं लक्षणान्वितं ।
श्राद्धेषु तस्य देहान्ते सूर्य्यलोकेऽक्षया स्थितिः ॥

चमत्कारखण्डे ।

दद्यान्मतङ्गजं यस्तु युवानं चारुलक्षणं ।
स लोके लोकपालानामेकैकमयुतं वसेत् ॥
तेजस्विनं चारुगतिं लक्षण्यं यस्तुरङ्गमं ।
दद्यात् पितृभ्यो विजयः तस्याप्रतिहतो भुवि ॥
रथं ददाति यो रम्यं युग्मैर्युक्तं तुरङ्गमैः ।
उक्षभिर्वा महाकायैस्तरुणैः सर्व्वलक्षणैः ।
महाहवेषु कुत्रापि न तस्य स्यात्पराजयः ॥
गन्त्रीं वा शकटं वापि लौहचक्राक्षकूवरां ।
दत्त्वा पितृणां प्राप्नोति धनर्द्धिमतिभूयसीं ॥

ब्रह्मवैवर्त्ते ।

श्राद्धे सम्मोदते दत्तैः स्यन्दनैस्तु सुखावहैः ।
राजभिः पूज्यते वापि धनधान्यैश्च वर्द्धते ॥

इति हिरण्यालङ्कार-याननिरूपणम् ।

अथ गो-महिषी-बलीवर्दाश्वादयः ।

मत्स्यपुराणे ।

श्राद्धे गावो महिष्यश्च बलीवर्दास्तथैव च।
प्रदातव्या महोक्षाश्च यच्चान्यदस्तु शोभनं ॥

पद्मपुराणे ।

गो-महिष्यादयो देयाः पदार्थाः श्राद्धकर्म्मणि ।
प्रीतिः श्राद्धेषु कर्त्तव्या पितॄणां सार्व्वकामिकी ॥
नानापदार्थैर्यः श्राद्धे पितॄंस्तु परितोषयेत् ।
पदार्थास्तस्य सर्व्वेऽपि नित्यं गृहमुपासते ॥

वृहद्विष्णुपुराणे ।

तरुणीं सुखसन्दोह्यां जीववत्सां पयस्विनीं ।
ददाति धेनुं विप्रेभ्यः तुष्टिमुद्दिश्य पैतृकीं ।
यस्तस्य सा दिविष्ठस्य सर्वकामदुघा भवेत् ॥
सुशीलां लक्षणवतीं सवत्सां बहुदोहनां ।
दत्त्वा पितृभ्यः कपिलां घण्टाचामरभूषितां ॥
मुञ्जवल्कात् यथेषीका पृथग्भवति निर्मला ।
एवं स सर्व्वपापेभ्यः पृथग्भवति निर्म्मलः ॥
अयुतानां शतं साग्रं ब्रह्मलोके महीयते।
ददाति यः सुमहिषीमव्यङ्गाङ्गीमकोपनां ।
भूरिक्षीरां गुणवतीं सापत्यां बहुसर्पिषां ॥
क्षीरस्य सर्पिषो दध्नः परिपूर्णा दिवि ह्रदाः ।
पितॄणामुपतिष्ठन्ते यावदाभूतसंप्लवम् ।
दातापि स्वर्गमाप्नोति वर्षाणामयुतानि षट् ॥
यस्तु धुर्य्यान् बलीवर्दान् पृष्ठीभारवहानपि ।

अविद्धनासिकान् दद्यादनुषवृषणांस्तथा ॥
वृषरूपः स्वयं धर्मस्तस्य साचात्प्रसीदति ।
प्रसन्ने भगवत्यस्मिन् किं किं नाम न लभ्यते ॥
क्रमेलकान् भारवहान् बहुयोजनगामिनः ।
येऽलङ्कृत्य प्रयच्छन्ति राजानस्ते न संशयः ॥
अजाश्चैवावयश्चैव महिषा भारवाहिनः ।
पितृभ्यः सम्प्रदातव्याः सर्व्वपापक्षयार्थिना ॥

नारदीयपुराणे ।

दत्त्वा पितृभ्यः श्वेतां गां श्वेतद्वीपे महीयते ।
प्रदाय धेनुं कृष्णाङ्गीं यमलोकं न पश्यति ॥
पीतवर्णान्तु गां दत्त्वा न शोचति कृताकृते ।
प्रदाय रोहिणीं धेनुं सर्व्वं तरति दुष्कृतं ।
नीलां तु सुरभीं दत्त्वा वंशच्छेदं न विन्दति ॥
अन्येन येन केनापि धेनुं वर्णेन लक्षितां ।
दत्त्वा पितृभ्यो जयति नाके सुखमनुत्तमं ॥
बलीवर्दान् बलवतो यो ददाति धुरन्धरान् ।
समग्रं भूमिदानस्य फलमाप्नोति मानवः ॥
पृष्ठे वहन्ति ये भारमुक्षाणो वहनक्षमाः ।
तान् प्रयच्छन् पितृणां तु धनाढ्यो जायते भृशं ॥

देवीपुराणे ।

महिषीं पुष्कलक्षीरां पितृभ्यः शस्तलक्षणां ।
यः प्रयच्छति नाकेऽस्य सुधाधारा प्रवर्त्तते ॥

महिषं भारवोढ़ारं यः पितॄणां निवेदयेत् ।
तस्य पुंसो भगवती महिषघ्नी प्रसीदति ॥

स्कन्दपुराणे ।

उष्ट्रीर्वै गवद्वा यस्तु दद्यादुष्ट्रानथापि वा ।
तस्य स्वर्गं प्रयातस्य गतिर्नैव विहन्यते ॥
पशूनजाविकादींश्च यस्तु श्राद्धे प्रयच्छति ।
प्रजया पशुभिश्चैव गृहं सुपरिपूर्य्यते ॥

इति गो-महिषी-बलीवर्दोष्ट्रादिनिरूपणं ।

अथ भू-गृह-पुस्तकाभयानि ।

ब्रह्मपुराणे ।

यथाशक्त्या प्रदातव्या भूमिः श्राद्धे विपश्चिता ।
पितॄणां सम्पदे सा हि सर्व्वकामं प्रसूयते(१) ॥
भूमिप्रदं हि पुरुषं प्राज्ञः सर्व्वप्रदं जनाः ।
सर्व्वप्रदः परे लोके सर्व्वान् कामान् समश्नुते ॥

कूर्म्मपुराणे ।

भूमिप्रदानेन समं दानमन्यत्(२) न विद्यते ।
अतः पितॄणां दातव्या भूमिर्भूतिमभीप्सता ॥
भूमिदानेन पितरः सर्व्वान् कामानवाप्य वै ।
मोदन्ते ब्रह्मणा सार्द्धं यावदाभूतसंप्लवं ॥

भगवतीपुराणे ।

---

(१) पितॄणां सम्प्रदेयानि भूमिदानानि यत्नत इति ग० ।
(२) दानं मर्त्त्ये न विद्यत इति ग० ।

भूमेर्भवन्ति धान्यानि भूमेर्वस्त्राणि चैव हि ।
भूमेर्गावो महिष्यश्च वराश्वा वरवारणाः ॥
उद्यानानि च रम्याणि नद्यः कूपाः सरांसि च ।
आतपत्राणि यानानि शयनान्यासनानि च ॥
अन्नपानानि हृद्यानि गन्धमाल्यानि चैव हि ।
रूप्यञ्च कनकञ्चैव रत्नानि विविधानि च ॥
अलङ्कारा मनोज्ञाश्च यच्चान्यत्सुखसाधनं ।
प्रभवस्तस्य सर्व्वस्य भूमिरेव न संशयः ॥
अतोऽर्थं पितृभक्तेन भूमिर्देया प्रयत्नतः ।
पितॄणामक्षयां तृप्तिमिच्छता सार्व्वकामिकीं ॥
भूमिप्रदस्य पितरो वैरिञ्चं लोकमास्थिताः ।
विचरन्ति विमानाग्र्यैर्यथाकामप्रचारिभिः ॥
भूमेर्दाता च पुरुषः प्रध्वस्ताशेषकल्मषः ।
प्रयाति ब्रह्मसालोक्यं यद्गत्वा न निवर्त्तते ॥

गारुड़पुराणे ।

य इच्छेदखिलैर्भोगैः पितॄंस्तर्पयितुं नरः ।
भूमिस्तेन प्रदातव्या पितॄनुद्दिश्य धीमता ॥
भूमिदानान्नरः स्वर्गे क्रीड़ते शाश्वतीः समाः ।
कालक्षयादिहागत्य भूपतिः स्यात् प्रतापवान् ॥
गृहाणि च विचित्राणि पितृभ्यो यः प्रयच्छति ।
जाम्बूनदमयं दिव्यं यथाकामगमं शुभं ।
सर्वसम्पत्समोपेतं विमानं सोऽधिरोहति ॥

पुस्तकान्यपि यः श्राद्धे पितृभ्यः प्रतिपादयेत्।
अर्हणां लभते सोऽपि सभार्यां परमेष्ठिनः॥

ब्रह्माण्डपुराणे।

पितॄन् भक्त्या समभ्यर्च्य भूमिं दद्यात् समाहितः।
भूमिदानेन संतृप्ता विदन्त्यार्त्तिं न ते क्वचित्॥
ग्रामं वा खर्वटं वापि पितृभ्यः प्रददाति यः।
शक्रस्य भवनं गत्वा यावदिन्द्रं स मोदते॥
श्राद्धे ददाति यः क्षेत्रं दशलाङ्गलसम्मितं।
पञ्चलाङ्गलिकं वापि यद्वा गोचर्म्ममात्रकं॥
अलाभे द्विहलं वापि हलमात्रमथापि वा।
लाङ्गलैः सबलीवर्दैर्योक्त्र-तोत्रादिसंयुतैः॥
अन्यैश्चैवोपकरणैरज्जुफालादिभिर्युतं।
वाजपेयस्य यज्ञस्य स फलं प्राप्नुते नरः(१)।
काले स्वर्गात् परिभ्रष्टो भूपतिर्द्धार्म्मिको भवेत्॥
जालीनामथवेक्षूणां यव-गोधूमयोरपि।
माष-मुद्ग-तिलानाञ्च क्षेत्रमुत्पत्तिहेतु यत्।
पितॄणां तन्नरो दत्त्वा विष्णोः सायुज्यमाप्नुयात्॥
पुनर्मानुष्यमायातो धनधान्यसमन्वितः।
तेजसा यशसा युक्तो विद्वान् वाग्मी च जायते॥
गृहं पक्वेष्टकचितं सुधाभिर्धवलीकृतं।
मत्तवारणशोभाढ्यं गवाक्षद्वारभित्तिमत्॥

---

(१) फलं सम्प्राप्यते नर इति ख०।

अनेकभूमिसंयुक्तमेकभूमिकमेव वा ।
पितृभ्यो यो ददातीह स याति ब्रह्मविष्टपं ॥
प्रासादा यत्र सौवर्णा नानामणिविभूषिताः ।
तत्रासौ रमते नित्यं नृत्यवादित्रगायनैः ।
दिव्यं वर्षायुतशतं तत्रैव परिवर्त्तते ॥
दत्त्वा गृहं पितृभ्यस्तु तृणच्छन्नमथापि वा ।
लभतेऽग्र्याणि वेश्मानि स्त्रीमन्ति धनवन्ति च ॥
प्रासादान् केशवादीनां निर्म्माय सुमनोहरान् ।
पित्रोः पितामहादिभ्यो यस्तु श्रेयः समर्पयेत् ॥
वैकुण्ठादिषु लोकेषु स्वकीयैः पितृभिः सह ।
मोदतेऽसौ महाभागो यावदिन्द्राश्चतुर्दश ॥
पुस्तकानि सुवाच्यानि सच्छास्त्राणां ददाति यः ।
ब्राह्मणानां कुले यज्वा जायतेऽसौ बहुश्रुतः ॥

ब्रह्मवैवर्त्ते ।

श्राद्धकाले गुणवतां विप्राणां समुपस्थिते ।
दद्याच्छास्त्राणि धर्म्याणि स्मृतिं मेधाञ्च विन्दति ॥

चमत्कारखण्डे ।

यः पुस्तकानि विप्राणां पित्रर्थं विनिवेदयेत् ।
स विद्वान् जायते वाग्मी मेधावी च बहुश्रुतः ॥
पुस्तकानि पितृभ्यस्तु वेदान्तानां ददाति यः ।
स श्रोत्रियान्वये(१) भूत्वा जायते वेदवित्तमः ॥
दत्त्वा व्याकरणं तु स्याच्छश्वत् ब्रह्मविदां वरः ।

---

(१) स श्रोत्रियाणां कुले इति क० ।

मीमांसायाः प्रदानेन सोमयाजी भवेन्नरः ॥
प्रदाय न्यायशास्त्राणि भवेद्विद्वत्तमः पुमान् ।
पुराणदाता भक्तः स्यात् पुराणपुरुषे हरौ ॥
मन्वादिधर्म्मशास्त्राणां दानाद्भवति[१] धार्म्मिकः ।
कलाशास्त्रप्रदानेन कलासु कुशलो भवेत् ॥
यः श्राद्धदिवसे विद्वान् प्राणिनामभयं ददेत् ।
भयं न तस्य किञ्चित्स्यादिह लोके परत्र च ॥

सौरपुराणे ।

यद्यस्य भयमुत्पन्नं स्वतो वा परतोऽपि वा ।
श्राद्धकर्म्मणि सम्प्राप्ते तत्तस्यापनयेत् सुधीः ॥
राजतश्चौरतो वापि व्यालाच्च श्वापदादपि ।
सञ्जातान्तु हरेद्भीतिं पितृकर्म्मणि शक्तितः ॥
एकतः क्रतवः सर्व्वे सर्व्वस्ववरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणं ॥
अतोऽर्थं सर्व्वकालेषु दद्यादभयदक्षिणां ।
श्राद्धकाले विशेषेण स हि धर्म्मः परो मतः ॥
यथा ह्यभयदानेन तुष्यन्ति प्रपितामहाः ।
न तथा वस्त्र-पानान्न-रत्नालङ्कारकाञ्चनैः ॥
एतस्मादभयं देयं श्राद्धकाले विजानता ।
अभयस्य प्रदातारो भयं विन्दन्ति न क्वचित् ॥
जन्म-मृत्युभयाभावादभयं मोक्ष उच्यते ।

---

(१) दाता भवतीति ग० ।

मोक्षमेव नरो याति प्राणिनामभयप्रदः ॥

श्राद्धमधिकृत्य ब्रह्मवैवर्त्ते ।

जीवितस्य प्रदानाद्धि नान्यद्दानं विशिष्यते ।
तस्मात् सर्व्वप्रयत्नेन देयं प्राणाभिरक्षणं ॥
अहिंसा सर्व्वदेवत्यं पवित्रं सर्व्वपावनं ।
दानं हि प्राणिनामाहुर्दानानां परमं बुधाः ॥

प्रभासखण्डे ।

यः श्राद्धे ह्यभयं दद्यात् प्राणिनां जीवितैषिणां ।
अश्वदानसहस्रेण रथदानशतेन च ।
दन्तिनाञ्च सहस्रेण अभयं वै विशिष्यते ॥
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ।
क्षिप्रं प्राप्नोति तत् सर्व्वं श्राद्धकालेऽभयं ददत् ॥
बन्धमोक्षन्तु(१) यः कुर्य्यात् श्राद्धकाले तु मानवः ।
न तस्य गदितुं शक्यं सुकृतं साधुकर्म्मणः ॥

वामनपुराणे ।

बन्दीकृतास्तु ये केचित् स्वयं वा यदि वा परैः ।
येन केनाप्युपायेन यस्तान्मोचयते नरः ।
पितरस्तस्य गच्छन्ति शाश्वतं पदमव्ययं ॥
बन्दिनो मोचयेत्तस्मात् पितृकार्य्येषु यो नरः ।
स याति विष्णुसायुज्यं निर्मुक्तः कर्म्मबन्धनात् ॥

इति भूमि-गृह-पुस्तकाभयनिरूपणं ।

---

(१) बन्दिमोक्षन्त्विति ग० ।

अथाञ्जनाभ्यञ्जन-सूत्राणि ।

ब्रह्मवैवर्त्ते ।

अञ्जनाभ्यञ्जने चैव पितृभ्यः प्रतिपादयेत् ।
सूत्रञ्चाभिनवं सूक्ष्मं पिण्डानामुपरि न्यसेत् ॥
तत्र त्रैककुदं शस्तमञ्जनं पितृकर्म्मणि ।
तिलतैलोद्भवाद्दीपात् कज्जलं वापि यद्भृतं ॥

'त्रिककुत्' नीलपर्व्वतः, तत्र भवं 'त्रैककुदं' स्रोतोऽञ्जनाख्य-नीलपर्व्वतशिलाचूर्णजमित्यर्थः ।

तिलतैलेन दातव्यं तथैवाभ्यञ्जनं बुधैः ।
क्षौमं कार्पासजं वापि पितॄणां सूत्रमिष्यते ॥
असावङ्क्ष्व तथाभ्यङ्क्ष्वेत्यञ्जनादीनि दापयेत् ।
असावेतत्त इत्येवं सूत्रञ्चापि निवेदयेत्(१) ॥
इत्येवमञ्जनं दत्त्वा चक्षुष्मान् जायते नरः ।
अभ्यञ्जनप्रदानेन लभते रूपमुत्तमं ।
लभेद्वस्त्राण्यनन्तानि पिण्डसूत्रप्रदानतः ॥

वायुपुराणे ।

अञ्जनाभ्यञ्जने चैव पिण्डनिर्वपणे तथा ।
अश्वमेधफलेनैव सम्मितं मन्त्रपूर्वकं ।
क्रियाः सर्वा यथोद्दिष्टाः प्रयत्नेन समाचरेत् ॥

प्रभासखण्ड-वायुपुराणयोः ।

श्रेष्ठमाञ्जस्त्रिककुदमञ्जनं नित्यमेव च ।

(१) नियोजयेदिति ख० ।

दीपात् कृष्णतिलोद्भूततैलजाद् यच्च धारितं ॥

ब्रह्माण्डपुराणे ।

अपसव्यं पितृभ्यस्तु दद्यादञ्जनमुत्तमं ।
नामान्युच्चार्य्य सर्व्वेषां वस्त्रार्थं सूत्रमेव च ॥
पेषयित्वाञ्जनं सम्यक् वेद्या उत्तरतो बुधः ।
गृह्य तद्दर्भपिञ्जूलैस्त्रिभिः कुर्य्याद्यथाविधि ॥

तथा ।

एकं पवित्रं हस्ते स्यात्पितॄणान्तु सकृत्सकृत् ।
तैलं पात्रेण दातव्यं पिण्डेभ्योऽभ्यञ्जनं हि तत् ॥

तथा ।

क्षौमं सूत्रं नवं दद्याच्छणकार्पासजं तथा ।
पत्रोर्णं पट्टसूत्रञ्च कौशेयञ्च विवर्जयेत् ॥

'पत्रोर्णं' धौतकौशेयं ।

वर्जयेत्तु दशाः प्राज्ञो यद्येता ह्यतवस्त्रजाः ।
न प्रीणन्ति तथैतान् हि दातुश्चाप्यफलं भवेत् ॥

आपस्तम्बसूत्रे तु वस्त्रदशा अपि दातव्या इत्युक्तम् ।

एतानि वः पितरो वासांस्यतो नान्यत् पितरो मयोष्टेति वासः सोदशां छित्वा निदध्यादूर्णासुकां वा पूर्व्वे वयस्युत्तरायुषि स्वं लोमेति 'ऊर्णासुकाः' मेषलोमदशाः । 'उत्तरे वयसि' पञ्चाशद्वर्षेभ्य ऊर्द्ध्वं । स्वं लोम उरःसम्भवमिति शेषः । "पञ्चाशत ऊर्द्ध्वमुरोलोम यजमानस्य" इति शाट्यायनिवचनात् ।

कात्यायनसूत्रे ।

एतद इत्यपास्यति सूत्राणि प्रतिपिण्डमूर्णादशा वा वयस्युत्तरे यजमानलोमानि वेति ।

ब्रह्मपुराणे ।

दद्यात्क्रमेण वासांसि दशा वा श्वेतवस्त्रजाः ।
ततो वयसि वृद्धे च स्वानि लोमान्यथापि वा ॥
क्षौमं सूत्रं नवं दद्याच्छाणं कार्पासमेव वा ।
पत्रोर्णनीलरक्ताक्तकौशेयानि विवर्जयेत् ॥

नागरखण्डे ।

सूत्रञ्च प्रतिपिण्डन्तु दद्यात्तेषु पृथक् पृथक् ।
अन्यत्तु सर्वपिण्डेषु सततं विनियोजयेत् ॥
न त्रुट्यति यथा तन्तुस्तथा तन्निक्षिपेच्छनैः ।
विरोधमाचरेत्तेषां त्रोटनाच्च परस्परं ॥
तच्च रक्तं प्रदातव्यं रागैर्वा कुङ्कुमेन वा ।
रक्तसूत्रविहीनं यत्तत्ते श्राद्धं भवेदिति ॥
ब्रह्मणैवं वरो दत्तः कव्यभक्षाय रक्षसे ।
एवं ददाति यः सूत्रं सोऽक्षय्यां लभते श्रियं ॥

ब्रह्माण्डपुराणे ।

अञ्जनाभ्यञ्जने गन्धं सूत्रप्रणयनं तथा ।
कुशैः पुनर्भवैः कुर्वन् अश्वमेधफलं लभेत् ॥

इत्यञ्जनाभ्यञ्जन-सूत्रनिरूपणं ।

अथ प्रकीर्णकम् ।

प्रभासखण्डे ।

लोके श्रेष्ठतमं सर्वमात्मनश्च प्रियं सदा ।
तत्तत् पितॄणां दातव्यं तदेवाक्षयमिच्छता ॥

वायुपुराण-ब्रह्माण्डपुराणयोः ।

गन्धैः पुष्पैस्तथा धूपैस्तथाहुतिभिरेव च ।
फलमूलनमस्कारैः पितॄणां प्रयतः शुचिः ।
पूजां कृत्वा द्विजान् पश्चात् तर्पयेदन्नसम्पदा ॥
श्राद्धकालेषु नियतं वायुभूताः पितामहाः ।
आविशन्ति द्विजान् श्रेष्ठान् तस्मादेतद्ब्रवीमि ते ॥

कूर्म्मपुराणे ।

प्रदद्याद्गन्धमाल्यादि धूपादीनि च शक्तितः ।

तत्रैव पुराणे विश्वान् देवान् प्रति पितृवाक्यं ।

पुष्पैर्गन्धैस्तथान्नेन युष्मानग्रेऽर्चयिष्यति ।
अग्रे दत्त्वा तु युष्माकमस्माकं दास्यते पुनः ।
एवं कृते कृतं सम्यक् सर्वमेव भविष्यति ॥

वायुपुराणे ।

वस्त्रैरन्नप्रदानैश्च भक्ष्यपेयैस्तथैव च ।
गोभिरश्वैस्तथा ग्रामैः पूजयेद्द्विजसत्तमान्(१) ॥
भवन्ति पितरः प्रीताः पूजितेषु द्विजातिषु ।
तस्मादनेन विधिना पूजयेत द्विजान् सदा ॥

वाराहपुराणे ।

---

(१) सम्पूजयेद्द्विजोत्तमानिति ख० ।

गन्धाः पुष्पाणि ताम्बूलधूपदीपाक्षतानि च ।
पितृकृत्ये प्रशस्तानि स्वादन्नं सलिलं हिमं ॥
एतानि श्रद्धयोपेतः पितृभ्यो यो निवेदयेत् ।
स एव धर्मशीलो मे प्रियकारी वसुन्धरे ॥

तथा ।

उपवेश्यासने शुभ्रं छत्रं तत्र प्रकल्पयेत् ।
आवरणार्थञ्च तत् छत्रं ब्राह्मणाय प्रदापयेत् ।
ततो वस्त्राणि रम्याणि सर्वाण्याभरणानि च ॥

विष्णुपुराणे पितृवाक्यं ।

रत्नवस्त्रमहायानं सर्वभोगादिकं वसु ।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ।
स भुक्त्वा निखिलान् भोगानन्ते स्वर्गं गमिष्यति ।

नरसिंहपुराणे ।

उपानच्छत्रवस्त्राणि भुक्तिपात्रं कमण्डलुं ।
शयनासनयानानि दर्पणव्यजनानि च ॥
अन्नं सुसंस्कृतं गन्धं ताम्बूलं दीपचामरं ।
पितृभ्यो यः प्रयच्छेत्तु श्रद्दधानो विमत्सरः ।
स शोकमोहौ तरति प्राप्य ज्ञानमनुत्तमं ॥

नन्दिपुराणे ।

अन्नोदके धूपदीपवस्त्रमाल्यानुलेपनं ।
गोमहिष्यस्य करभबलीवर्दादिकं तथा ॥
आदर्शव्यजनछत्रशयनासनपादुकाः ।

शिविका रथगन्त्रीका सुखवासाश्च शोभनाः ॥
मनोज्ञाः पटवासाश्च सुगन्धाश्चूर्णमुष्टयः ।
अङ्गारधानिकाः शीते योगपट्टाश्च यष्टयः ॥
कटिसूत्राणि शिक्यानि मेखलाश्चैव कम्बलाः ।
यज्ञोपवीतं पीठानि कौपीनं कुण्डिकास्तथा ॥
वस्तून्येतान्यथान्यानि पितॄणां प्रीतये बुधैः ।
यथोपयोगं देयानि ब्राह्मणेभ्यो यथाविधि ॥
एवं ददाति यो भक्त्या यथालाभं यथाधनं ।
सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥

स्कन्दपुराणे ।

अलङ्कारान् बहुविधान् काञ्चनेन विनिर्मितान् ।
रत्नैर्व्विरचितांश्चापि क्षौमादीन्यंशुकान्यपि ॥
कर्पूरागुरुकस्तूरीकुङ्कुमादीनि यान्यपि ।
गन्धद्रव्याणि रम्याणि श्रीखण्डशकलान्यपि ॥
कर्पूरादेश्च भाण्डानि ताम्बूलावपनं तथा ।
दीपपात्रं धूपपात्रं तथा भोजनभाजनं ।
भाजनाधारयन्त्राणि पतद्ग्राहस्तथैव च ॥
आन्दोलकान्मञ्चकांश्च मृदुला हंसतूलिका ।
कटाहास्ताम्रधातूत्थास्ताम्रजाः कलशास्तथा ॥
चरुका दर्विका लोही भाण्डानि विविधानि च ।
ताम्रादिधातुसम्भूताः गडुकाः करकास्तथा ॥
भद्रपीठानि पीठानि गद्दिकाश्चासनानि च ।

वस्त्रपूर्णाश्च मञ्जूषा मनोज्ञाश्च विहङ्गिकाः ॥
मीमांसादेश्च शास्त्रस्य पुस्तकानि नवानि च ।
सौधानि कमनीयानि वापीकूपादिकं तथा ॥
ग्रामान् क्षेत्राणि केदारान् उद्यानान्यथ वाटिकाः ।
वृक्षान् लतावितानानि पूगादिद्रुमवाटिकाः ॥
शकटान् सोपकरणान् लाङ्गलानि च भूरिशः ।
मुषलोलूखलं दात्रं शिला मन्थानमण्डकं ॥
तथाञ्जनशलाकाश्च केशानाञ्च प्रसाधनं।
एतान् पदार्थानन्यांश्च चतुराश्रमकाङ्क्षितान् ॥
आत्मनश्च प्रियान् दद्यात् पितॄणां युक्तमानसः ।
विभवस्यानुसारेण देशकालानुरूपतः ॥
एतान् दद्यात्तु यः सम्यक् पदार्थान् भोगसाधनान् ।
न तस्य दुर्लभं किञ्चिदिह लोके परत्र च ॥

रामायणे ।

समतीते दशाहे तु कृतशौचो विधानतः।
चक्रे द्वादशकं श्राद्धं त्रयोदशकमेव च ॥
ततस्तोद्दिश्य पितरं ब्राह्मणेभ्यो ददौ धनं।
महार्हाणि च रत्नानि गाश्च वाहनमेव च ॥

अत्र भरत इति शेषः ।

ब्रह्मवैवर्त्ते ।

अतःपरं प्रवक्ष्यामि दानानि सफलानि च ।
तारणानि पितॄणां वै स्वर्ग्याण्यात्मसुखानि च ॥

लोके श्रेष्ठतमं यच्च आत्मनश्चापि यत्प्रियं ।
सर्व्वं पितॄणां दातव्यं तेषामेवाक्षयोऽर्थिना ॥
वापीसंक्रीडनं दत्वा महासत्रफलं लभेत् ।
वनं पुष्पफलोपेतं दत्वा गोमेधमश्नुते ॥

तथा ।

दद्याद्यः शिशिरे वह्निं बहुकाष्ठं प्रयत्नतः ।
कायाग्निदीप्तिप्राकाश्यं रूपं सौभाग्यमेति सः ॥
इन्धनानि तु यो दद्याद्द्विजेभ्यः शिशिरागमे ।
नित्यं जयति संग्रामे श्रिया युक्तश्च दीप्यते ॥

तथा ।

शरणं सर्वसम्पूर्णं सशय्यासनभोजनं ।
श्राद्धे दत्वा यतिभ्यस्तु नाकपृष्ठे महीयते ॥

'शरणम्' आवासः ।

मुक्तावैदूर्य्यवासांसि रत्नानि विविधानि च ।
वाहनानि च दिव्यानि जायन्ते तस्य कोटिशः ॥
गन्धर्वाप्सरसस्तञ्च गायन्ते वादयन्ति च ।
सुमहज्ज्वलनप्रख्यं सर्वकामसमन्वितं ॥
सूर्य्यचन्द्रप्रभन्दिव्यं विमानं लभतेऽक्षयं ।
अप्सरोभिः परिवृतं कामगन्तु मनोजवं ॥
वसते स विमानाग्रे स्तूयमानः समन्ततः ।
दिव्यैः पुष्पैः प्रसिञ्चन्ति चूर्णमुष्टिभिरेव च ॥
कन्यायुवत्यस्तासाञ्च हासाभरणनिस्वनैः ।

सुखिनस्ते विबुध्यन्ति सततं हि मनोरमैः ।
अश्वदानसहस्रेण रथदानशतेन च ।
दन्तिदानसहस्राच्च योगिष्वावसथो वरः ॥
अश्वमेधसहस्रेण राजसूयशतेन च ।
पुण्डरीकसहस्रेण योगिष्वावसथो वरः ॥

तथा ।

भोजनाद्यासनं दत्त्वा अतिथिभ्यः कृताञ्जलिः ।
सर्वयज्ञक्रतूनाञ्च फलं प्राप्नोत्यनुत्तमं ॥
क्षिप्रमत्युष्णमक्लिष्टं स्वादु दत्तम्बुभुक्षिते ।
सव्यञ्जनं सदा स्निग्धं सत्कृत्य च प्रयत्नतः ॥
प्रतिश्रयं सदा दद्यादतिथिभ्यः कृताञ्जलिः ।
देवावासं प्रतिष्ठन्ति दिव्यातिथ्यैः सहस्रशः ॥
सर्वाण्येतानि यो दद्यात् पृथिव्यामेकराड्भवेत् ।
त्रिभिर्द्वाभ्यामथैकेन दानेन तु सुखी भवेत् ॥
दानानि परमो धर्मः सद्भिः सत्कृत्य पूजितः ।
त्रैलोक्यस्याधिपत्यं हि दानादेव ध्रुवं स्थितिः ॥
राज्यभ्रष्टस्तु राजा स्यादधनः स्वोत्तमं धनं ।
क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः ॥
यान् कामान्मनसा चेच्छेत्तांस्तस्य पितरो ददुः ।
यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा ।
क्षिप्रमाप्नोति तत्सर्वं पितृभक्तस्तु मानवः ॥

महाभारते ।

अन्नपानाश्वगोवस्त्रछत्रशय्यासनानि च ।
प्रेतलोके प्रशस्तानि दानान्यष्टौ विशेषतः ॥
दासीदासानलङ्कारान् भोगोपकरणानि च ।
दत्त्वा पितृभ्यः प्राप्नोति साम्राज्यं नेह संशयः ॥

तथा ।

इत्युक्त्वा धर्मराजस्तु वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामादीनां तथैव च ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विधिवत्तदा ॥
ददौ रत्नानि वासांसि ग्रामानश्वान्रथानपि ।
स्त्रीश्चैव द्विजमुख्येभ्यस्तथा शतसहस्रशः ॥
अलङ्कारांस्तथाश्वांश्च गाश्च कान्या वरस्त्रियः ।
आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तम ॥
द्रोणं सात्यञ्च भीष्मञ्च सोमदत्तञ्च वाह्लिकं ।
दुर्य्योधनञ्च राजानं पुत्रांश्चैव पृथक् पृथक् ॥
जयद्रथपुरोगांश्च सुहृदश्चैव सर्वशः ।
आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तम ॥
तथा स पुत्रपौत्राणां पितॄणामात्मनस्तथा ।
गान्धारस्य महातेजाः प्रददौ चौर्द्ध्वदेहिके ॥

श्राद्धमेवोपक्रम्य विष्णुधर्मोत्तरे पितृगाथाः ।

अपि स्यात्स कुलेऽस्माकं कश्चित्पुरुषसत्तमः ।
दद्यात्कृष्णाजिनं यो नः स्वर्णशृङ्गं विधानतः ॥
अपि स्यात्स कुलेऽस्माकं कश्चित्पुरुषसत्तमः ।

प्रसूयमानां यो धेनुं दद्याद्ब्राह्मणपुङ्गवे ॥
अपि स्यात्स कुलेऽस्माकं कश्चित्पुरुषसत्तमः ।
कूपारामतडागानां वापीनां यश्च कारकः ॥

आह बौधायनः ।

वापीकूपतडागानि उद्यानारामकमेव च ।
शालीक्षुक्षेत्रकेदाराः समृद्धाः पुष्पवाटिकाः ॥
श्राद्धेषु दत्त्वा प्रयतः पितॄनात्मानमेव च ।
उद्धरत्येनसो दुःखाद्यावदाभूतसंप्लवं ॥

तदेवमेतेष्वभिहितेषु प्रदेयेषु यानि प्रदेयानि श्राद्धप्रयोगान्तर्गतार्चनाङ्गभूतानि तानि तत्तत्पितृनामगोत्रसङ्कीर्त्तनपूर्वकं पितृभ्य एव देयानि। यानि पुनरन्यानि गोभूहिरण्यकृष्णाजिनप्रभृतीनि श्राद्धकाले स्वपितॄणां श्रेयःसिद्ध्यर्थं दानखण्डोक्तप्रकारेण ब्राह्मणेभ्यः प्रदेयानि। तत्र निमित्तान्तरापेक्षा न कर्त्तव्या श्राद्धमेवाधिकृत्य तेषां विधानात्। तानि चैवं प्रदत्तानि पितॄणामात्मनश्च विशिष्टस्वर्गादिफलप्राप्त्यर्थं भवन्तीति।

इति प्रकीर्णकं।

अथ दक्षिणाद्रव्याणि ।

ब्रह्मपुराणे।

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
दक्षिणार्थन्तु तद्देयं तस्य तस्याक्षयार्थिना ॥

मत्स्यपुराणे ।

सतिलं नामगोत्रेण दद्याच्छक्त्याथ दक्षिणां।

गो-भू-हिरण्य-वासांसि यानानि शयनानि च ॥
दद्याद्यदिष्टं विप्राणामात्मनः पितुरेव वा ।
वित्तशाठ्येन रहितः पितृभ्यः प्रीतिमाचरन् ॥

'नामगोत्रेण' सम्प्रदानस्यात्मनश्च नामगोत्रोच्चारणेन ।

नामगोत्रे समुच्चार्य्य सम्प्रदानस्य चात्मनः ।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयम् ॥

इति व्यासस्मरणात् ।

'शक्त्या' स्वशक्त्यनुसारेण, 'पितृभ्यः प्रीतिमाचरन्' पैत्रेण कर्मणा पितॄन् प्रीणयन् ।

आह जमदग्निः ।

सतिलं नामगोत्रेण दद्याच्छक्त्याथ दक्षिणां ।
हिरण्य-धन-वासांसि धर्म्याणि शयनानि च ॥

वह्निपुराणे ।

भक्त्याथ दक्षिणा देया श्राद्धकर्म्मणि शक्तितः ।
ग्रामान् क्षेत्राण्यथारामान् विचित्राः पुष्पवाटिकाः ॥
बहुभौमानि रम्याणि शयनानि गृहाणि च ।
सुवर्ण-रत्न-वासांसि रजतं भूषणानि च ॥
अनडुहो महिष्यश्च विविधान्यासनानि च ।
पादुका दासदासीश्च छत्र-व्यजन-चामरं ।
लाङ्गलान् शकटान् गन्त्रीर्गृहोपकरणानि च ॥
येन येनोपयोगोऽस्ति विप्राणामात्मनस्तथा ।
तत्तत्प्रदेयं श्राद्धेषु दक्षिणार्थं हितैषिणा ॥

यथा यथा हि गुणवद्द्रव्यं भूरि यथा यथा ।
जायते फलभूयस्त्वं श्राद्धकर्त्तुस्तथा तथा ॥

वायुपुराणे ।

धेनुं श्राद्धेषु यो दद्यात् गृष्टिं कुम्भोपदोहनां ।
गावस्तमुपतिष्ठन्ति गवां पुष्टिश्च जायते ॥
शयनासनानि तथा भूमयो वाहनानि च ।
श्राद्धेष्वेतानि यो दद्यादश्वमेधफलं लभेत् ॥
सर्पिःपूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ।
कुम्भादिदोहधेनूनां बह्वीनां फलमश्नुते ।
यथेष्टां दक्षिणां दद्यात् पुण्डरीकफलं लभेत् ॥

'पुण्डरीकः' क्रतुविशेषः ।

रम्यमावसथं दत्त्वा राजसूयफलं लभेत् ।
कूपाराम-तडागानि क्षेत्रघोषगृहाणि च ।
गां दत्त्वा मोदते स्वर्गे नित्यमाचन्द्रतारकं ॥
स्वास्तीर्णं शयनं दत्त्वा श्राद्धे रत्नविभूषितं ।
पितरस्तस्य तुष्यन्ति स्वर्गं चानन्त्यमश्नुते ॥

ब्रह्माण्डपुराणे ।

सौवर्णरौप्यपात्राणि मनोज्ञानि शुभानि च ।
हस्त्यश्व-रथ-यानानि समृद्धानि गृहाणि च ।
उपानत्पादुकाच्छत्रचामराण्यजिनानि च ॥
यज्ञेषु दक्षिणा पुण्या सेति सञ्चिन्तयेत्तदा ।
दरिद्रोऽपि यथाशक्ति दद्याद्विप्रेषु दक्षिणां ॥

सैवेयमिति बुद्धिः कार्य्येत्यर्थः ।

सौरपुराणे ।

वस्त्रीभिर्दक्षिणाभिर्यः श्राद्धे प्रीणयति द्विजान् ।
स पितॄणां प्रसादेन याति स्वर्गमनन्तकं ॥
अशक्तस्तु यथाशक्त्या श्राद्धे दद्यात्तु दक्षिणां ।
अदक्षिणन्तु यच्छ्राद्धं ह्रियते तद्धि राक्षसैः ॥
यज्ञोपवीतमथवा ह्यतिदारिद्र्यपीड़ितः ।
प्रदद्याद्दक्षिणार्थं वै तेन स्यात् कर्म सद्गुणं ॥

इति दक्षिणाद्रव्यनिरूपणम् ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-समस्तकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे श्राद्धोपकरणं नाम नवमोऽध्यायः ॥९॥

# अथ दशमोऽध्यायः ।



गणकगणसहस्रैरप्यशक्यो यदीयः
कलयितुमखिलानां राशिरुच्चैर्गुणानां ।
कृतसुकृतसमृद्धिः सोऽय हेमाद्रिसूरिः
कथयति परिभाषां श्राद्धकर्मण्यशेषाम् ॥

अथ परिभाषा ।

तत्र सर्वशास्त्रोपसंहारः तदर्थमिदं चिन्त्यते । किंस्वित् शाखा-कल्पसूत्रगृह्येषु यावद्धर्मकं श्राद्धमुक्तं तावन्मात्रमेव कर्त्तव्यम् उत मन्वादिस्मृतिविहितसर्वधर्मोपसंहारेणेति । तत्र यदि तावन्मात्रधर्मकं क्रियते तदा शाखाकल्पसूत्रगृह्येषु तावन्मात्रोपदेशोऽर्थवानन्यथानर्थकः स्यात् । ननु यदि स्मृतिविहितधर्मोपसंहारः क्रियते तदा स्मृतयोऽर्थवत्यः अन्यथानर्थिकाः स्युरिति समानन्यायतया स्मार्त्तधर्मकलापोपसंहारो-ऽपि निरवद्यमासीदिति । न च प्रातिस्विकशाखाकल्पसूत्रगृह्यशून्यान् पुरुषान् प्रति स्मृतयोऽर्थवत्यो भविष्यन्तीति वाच्यं । प्रातिस्विक-शाखादिशून्यानां त्रैवर्णिकानामभावात् । न च शूद्रान् प्रत्यर्थवत्यो भविष्यन्तीति वाच्यं । त्रैवर्णिकाधिकारिकोपनयनाध्ययनाग्निहोत्रा-दिकर्मोपदेशप्रधानत्वात् स्मृतीनां त्रैवर्णिकान् प्रत्यपि तासामर्थवत्त्वेन भाव्यम् । मैवं । कर्मविशेषे शूद्रान् प्रत्येवार्थवत्त्वं कल्प्यताम् । अथवा

त्रैवर्णिकान् प्रत्यपि बहुधर्मकश्राद्धान्तरोपदेशेनोपयोगित्वं वर्ण्यतां। अतः स्वशाखाकल्पसूत्रगृह्योक्तश्राद्धप्रयोगस्तावानेव कर्त्तव्यो न स्मार्त्त-पदार्थप्रवेशेनातिरेच्यः। अतिरेच्यमानो हि प्रयोगविध्यभिमतौ क्रमकालौ हित्वान्यात्राबाधयेत्। अतएव स्वशाखाकल्पसूत्रगृह्यो-क्तश्राद्धप्रयोगः परशाखाद्युक्तपदार्थप्रवेशेन न वृंहणीयः।

किञ्च। कल्पसूत्रगृह्याणामध्येतृविशेषसम्बन्धित्वनियमाल्लिङ्गलि-ङ्गिनोश्चैकाश्रयत्वात् कर्तृविशेषाश्रितेन कल्पसूत्रेण लिङ्गेन तदाश्रितैव लिङ्गिनी श्रुतिः कल्प्यते। अतः स्वस्वकल्पसूत्रगृह्योक्तानां श्राद्धकर्मणां व्यवस्थैव।

किञ्च। शाखान्तरगृह्यान्तरादौ विधीयमानस्य पौनरुक्त्यादिदो-षपरिहारस्याशक्यत्वात्कर्मान्तरत्वे तदन्वितस्य धर्मजातस्यातिदेशमन्त-रेण शाखान्तरीयकर्मसम्बन्धानुपपत्तौ सर्वोपसंहारो निष्प्रमाणकः। न चोपपदासम्भवेन व्यवस्थानुपपत्तिः। तत्तच्छाखागृह्याध्येतृत्वलक्ष-णस्य तत्तच्छाखीयताभिमानित्वरूपस्य चोपपदस्य कर्तृविशेषकस्य सम्भवात्। न च प्रतिविधिवाक्यमुपपदकल्पने गुर्वी कल्पनेति वाच्यं। सर्वानपि विधीनिदमादिना केनचित् सर्वनाम्ना परामृश्य युगपदुप-पदान्वयस्य कल्प्यमानत्वात्।

मैवं। परम्परागतस्वशाखापरित्यागेन शाखान्तराध्ययनकर्त्तापि हि स्वकुलपरम्परागतशाखागृह्योक्तधर्मानेवानुतिष्ठति। द्वित्रिवेदाध्यायी च वेदान्तरान्तर्गतं स्वशाखान्तरमधीयानोऽपि स्वशाखागृह्योक्तानेव धर्मानाचरति। अनधीतवेदोऽपि श्राद्धादिकं कर्म कुर्वन् शाखावि-शेषगृह्यविशेषोपदिष्टामेव सरणिमाश्रयत इति न तत्तच्छाखागृह्य-

ध्येतृत्वलक्षणमुपपदं यावदाचारमनुवर्त्तते तच्छाखीयत्वाभिमानोऽपि तच्छाखाध्येतृत्वभ्रम एव वाच्यः। न चासौ स्वशाखामधीतवतो-ऽनधीतवतो वा सम्भवति। प्रथमे तच्छाखाध्येतृत्वज्ञानस्य सत्यत्वात्, द्वितीये तादृशस्य ज्ञानस्यैवासम्भवात्। अतस्तयोः शाखागृह्या-चारविशेषानुसरणं नोपपद्येत। अन्यशाखाध्येतुरपि च वातादिदोष-वशोपजातशाखान्तराध्येतृत्वभ्रमस्य तच्छाखागृह्यानुसरणं प्रसज्येत। दोषमन्तरेण समुत्पन्नभ्रमस्यायं नियम इति चेत्। न। कारण-मन्तरेण भ्रमस्यासम्भवात्। अथाहार्यारोपरूपभ्रमस्य दोषमन्तरे-णापि सम्भव इत्युच्यते। तर्हि तस्य सर्वत्र सम्भवादव्यवस्थैव प्राप्नोति। गौणे च शाखान्तरीयत्वव्यपदेशे तस्य विद्यमानत्वात् परशाखागृह्यो-क्तविधिग्रहणप्रसङ्गः। अतः कर्तृविशेषणीभूतोपपदासम्भवात् सर्वशा-खाकल्पसूत्रगृह्यस्मृत्याचारप्राप्तानां श्राद्धकर्मणां सर्वान् प्रति साधा-रणमेव न पुनर्व्यवस्थेति। नैतदेवं। शाखाविशेषाध्येतृसन्ततिजत्वा-नपायात्तच्छाखीयत्वमस्त्येव। अतः स्वशाखाकल्पसूत्रगृह्योक्तधर्ममात्र-युक्तमेव श्राद्धं कर्त्तव्यं नाधिकस्मार्त्तपदार्थप्रवेशेन परशाखाकल्पसूत्र-गृह्योक्तपदार्थप्रवेशेन वातिरेच्यमिति स्थितं।

अत्रोच्यते। अनन्यथासिद्धप्रत्यभिज्ञाबलादशेषशाखाप्रत्ययमेक-मेवाग्निहोत्रादिकर्मेति शाखान्तराधिकरणे स्थापितं "एकं वा संयोगरूपचोदनाख्याविशेषात्"। सर्वास्वपि शाखासु ज्योतिष्टोमा-दिकर्मणः संयोगरूपचोदनाख्यानामविशेषात् प्रत्यभिज्ञायमानस्यैकत्वं निश्चीयते। संयोगोऽत्र प्राधान्यात् फलसम्बन्धो विवक्षितः। रूपञ्चा-न्तरङ्गत्वात्कर्मस्वरूपनिरूपकत्वाच्च द्रव्यदेवता। चोदना च धात्वर्थ-

सहितभावनाविषयोविधिः । आख्या तु ज्योतिष्टोमादिनामधेयं । एतदेव सूत्रं व्याचक्षाणाः प्राञ्चराचार्याः । "सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखास्वपगच्छति" इति । न चात्र किञ्चिद्भेदकं कारणमस्ति । शाखान्तरोक्तस्य भेदप्रयोजकत्वानवधारणात् । प्रकरणान्तर इव परस्परासन्निधानं भेदकमिति चेत् । न । एकस्याध्येतुः शाखान्तराध्ययनाभावात् तत्प्रतिपाद्यमानज्योतिष्टोमादिकर्मानुपलम्भे भेदावभासासम्भवात् । कुतः पुनरेकस्य शाखान्तराध्ययनाभावः । इत्थं यथैवाकृतिरेकस्यां व्यक्तौ समाप्यते तथा स्वाध्यायत्वमेकैकस्यां शाखायान्ततस्य स्वाध्यायोऽध्येतव्य इत्यत्राधीतेन स्वाध्यायेन कर्मावबोधं भावयेदित्युक्तः स्वाध्यायस्य कर्मावबोधनं प्रत्युपादीयमानत्वाद्विवक्षितैकसंख्यैका शाखाध्येतव्येति गम्यते । कुतस्तर्हि वेदान्तराध्ययनमपि वेदानधीत्य वेदौ वेत्यादिवचनैरिति ब्रूमः ।

किञ्च । वेदान्तरे कर्मणः साकाङ्क्षत्वात्कर्मावबोधं प्रति वेदानां समुच्चये सत्येकस्य नैकवेदाध्ययनं। एकवेदान्तर्गते तु शाखान्तरेऽपि परिपूर्णधर्मकं शाखान्तरनिरपेक्षमेव ज्योतिष्टोमादिकर्मावगम्यते । अतस्तुल्यकार्यत्वादेकवेदान्तर्गतैकशाखाध्ययननियमे शाखानां विकल्प इति ।

तदाहुराचार्याः । "स्वाध्यायग्रहणे नैका शाखा हि परिगृह्यते । एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति" इति । ननु यद्येकस्यैकवेदान्तर्गतानेकशाखाध्ययनाभावाच्छाखान्तरीयकर्माप्रतीतिस्तर्हि कुतः प्रत्यभिज्ञापि भवेत् । अथ स्वयमनधीयमानेऽपि परैरधीयमाने शाखान्तरे समाकर्ण्यमाने तत्प्रतिपाद्यमानकर्मावगतिर्भवतीति प्रत्यभिज्ञोपपद्यत इत्युच्यते तर्हि तथैव भेदावगतिरपि भविष्यति ।

उच्यते। कर्मस्वरूपगतविशेषाभावात् प्रत्यक्षभेदप्रतीत्यभावे नामरूपाद्यविशेषनिबन्धनापरोक्षप्रत्यभिज्ञोत्पत्तौ परस्परासन्निधानप्रयुक्तानुमानजन्यभेदप्रतीतेरुत्पत्तिप्रतिबन्धात्। अस्तु वा भेदबुद्ध्यभावसहकृतास्वरूपप्रतीतिरेवाभेदप्रमात्मकप्रत्यभिज्ञाकार्यकरत्वादप्रत्यभिज्ञैव सती गौणी प्रत्यभिज्ञा। गुणान्तरं तर्हि भेदकमस्तु। न। तस्यैकस्मिन्नेव कर्मणि विकल्पेनान्वयोपपत्तेः। नन्त्पत्तिवाक्यशिष्टे गुणे सति गुणान्तरानवकाशाद्वाजिन इव गुणान्तरे कर्मभेद एव। मैवं। द्वयोरुत्पत्तिवाक्यशिष्टयोस्तुल्यबलत्वे सत्येकस्मिन् कर्मणि विकल्पसम्भवात्।

ननु यदि सर्वासु शाखास्वेकमेव कर्म प्रतिपाद्यते तदा पुनरुक्तताप्रसङ्गः। अतस्तत्परिहारार्थमभ्यासन्यायेन शाखान्तरे कर्मभेदो वाच्यः। मैवं। यत्र तावन्मात्रार्थत्वेन पुनः श्रुतिः प्रयोजनशून्या भवेत् तत्र भेदमापादयति। शाखान्तरे तु गुणान्तरार्थत्वेन प्रशंसार्थत्वेन वा प्रयोजनवती सती न भेदं करोति। न चेयं पुनः श्रुतिः। यत आहुः।

> एकशाखानिबद्धानां ज्ञायते हि पुनः श्रुतिः।
> कण्ठादिचरणानान्तु प्रतिशाखं सकृच्छ्रुतिः॥

अत्रैकशाखाध्ययननियमाद्येनैकशाखागतमग्निहोत्रादि श्रुतं नासौ शाखान्तरगतं शृणोति। कदाचित् परैरधीयमानं शाखान्तरगतं शृण्वन्नपि च परप्रतिपत्त्यर्थमेवैतदित्यध्यवस्यति। अतः पुरुषान्तरप्रतिपत्त्यर्थत्वाच्छाखान्तरस्य न पुनः श्रुतित्वं। अपि च शाखानां युगपद्वृत्तेर्न पुनः श्रुतिकल्पना तर्हि तत्रैकशाखावत्क्रमेणाध्ययन-

स्थितिः । क्रमेणाध्ययने हि काचित्पुनः श्रुतित्वमापद्यमाना कर्म-भेदं करोति । अत्र तु युगपच्छ्रुतेः का पुनः श्रुतिर्भवेत् । अतो-यथैकशाखागतं कर्म देशान्तरपुरुषान्तरादिषु पुनः श्रूयमाणमपि प्रति-पाद्यभेदान्न पुनरुक्तमेवमेव शाखान्तरेष्विति । यत्त्वेकयैव शाखया सर्व्वं प्रतिपद्यन्तामनर्थकं शाखान्तरमिति । तच्छाखान्तराणामकृत्रिमत्वात् प्रतिशाखं चाध्येतृनियमस्यानादित्वादनुपालम्भ एवेति । अतएवै-तदपि न वाच्यं । यथा कृतस्य करणासम्भवस्तथा विहितस्य विधाना-सम्भवोऽपीत्येकस्यां शाखायां विहितस्य शाखान्तरे तावद्विधानास-म्भवः। शाखानां युगपदुपस्थानाच्चानुवादासम्भवोऽपीत्यतो भेद एवेति। यतस्तत्तच्छाखाध्यायिनः प्रवर्त्यान् प्रतिपाद्यांश्च पुरुषान् प्रति प्रवृत्ति-भेदेन प्रतिपत्तिभेदेन च विहितस्यापि विधानं न विरुध्यते। तदेवं कर्मैकत्वे स्थिते यत्र क्वचनोपदिष्टैर्धर्मैः सम्बध्यमानमग्निहोत्रादिकं शाखान्तराध्येतृभिरप्यनुष्ठीयमानं नचैकं प्रतिशिष्यत इति न्यायात् तद्धर्मयुक्तमनुष्ठेयमिति सर्वशाखोपसंहारे स्थिते सर्व्वशाखागृह्य-कल्पसूत्र-स्मृति-पुराणेतिहासाचारावगतधर्ममात्रयुक्तमेव सर्वैः श्राद्धं कर्त्तव्यमिति स्थितम् ।

अतएवैकां कामपि शाखां पुरस्कृत्य कल्पसूत्राणि रचयन्तो-मुनयः स्वशाखोक्तधर्ममात्रोपनिबन्धनेनापरितुष्यन्तः शाखान्तरीय-धर्मसंग्रहं कुर्वाणा दृश्यन्ते ।

ननु सर्वशाखागृह्यादिषु कर्मैकत्वेऽपि तत्तच्छाखागृह्याध्येतृपुरुष-भेदव्यवस्थया तत्तच्छाखाविधुक्तेतिकर्त्तव्यताभेदव्यवस्थोपपत्तेः न सर्वशाखोपसंहारः ।

मैवं। ईदृग्विधायां व्यवस्थायां श्रुतिलिङ्गादिरूपमानाभावात्। न च श्रुत्यादिवत् केनचिच्छाखान्तरं व्यवस्थामानत्वेनाभ्युपगतं।

नन्वस्ति तावत्स्वाध्यायोध्येतव्य इति वचनादाचारपरम्परागत-पुरुषविशेषाणां शाखाविशेषाध्ययनव्यवस्था। अतो व्यवस्थितप्रमाणो-पनीयमानं प्रमेयमपि तद्वद्व्यवस्थातुमर्हति। तथा हि। यथा दृष्टे सम्भवति नादृष्टकल्पना न्याय्येति स्वाध्यायाध्ययनविधेः कर्मावबोधा-र्थत्वेन दृष्टार्थत्वमिष्यते। एवमेव शाखाविशेषाध्ययनव्यवस्थाया अपि दृष्टार्थत्वाय कर्तृविशेषव्यवस्थितकर्मावबोधार्थत्वमेष्टव्यम्।

उच्यते। प्रज्ञाविशेषशालिनां स्ववेदवत् परवेदाध्ययनस्याप्यनुज्ञा-तत्वात् परवेदान्तर्गतशाखायां च व्यवस्थाभावादव्यवस्थैकशाखाध्ययनं कर्त्तव्यं। तदपि कर्मावबोधार्थं बोधोऽप्यनुष्ठानार्थं इति शाखान्तरीय-कर्मानुष्ठाने कुतो व्यवस्था। नह्यदृष्टार्थं द्वितीयवेदाध्ययनम्, अध्ययनविधिवैषम्यापत्तेः।

अन्येभ्यस्तद्धर्मोपदेशार्थमन्यशाखाध्ययनं दृष्टार्थमेवास्तु। न। अधीतेन वेदेन कर्मावबोधं कुर्य्यादिति विध्यर्थो निर्णीतः। न तु कर्मावबोधं कारयेदिति।

यत्तु स्वशाखागताधिकार्य्यन्तरकर्त्तव्यकर्मविधायकवेदप्रदेशाध्ययनं क्रियते तत् कर्मावबोधार्थं समग्रशाखाध्ययने विहिते सति नान्तरी-यकत्वेनेति न दोषः।

अथ पराध्यापनार्थमध्यापनविधिना द्वितीयवेदाध्ययनं प्रयो-जितं नाध्ययनविधिनेति न वैषम्यं। न चादृष्टार्थत्वमिति चेत्। तन्न। एकत्राध्ययनविधिप्रयुक्तमध्ययनम् अन्यत्राध्ययनविधिप्रयुक्तमिति वैरूप्यं

प्रसज्येत। न च सर्वत्राध्ययनविधिप्रयुक्तमध्ययनमिति वाच्यम्। अध्ययनविध्यानर्थक्यप्रसङ्गात्।

किञ्च। अध्ययनविधिप्रयुक्ते परवेदाध्ययने प्रज्ञाविशेषशालिनोः क्षत्रियवैश्ययोर्वेदान्तराध्ययनं न प्राप्नोति तयोरनध्यापकत्वात्। अतो न शाखागृह्यादिव्यवस्थया कर्मणां व्यवस्था।

यत्तूक्तं। सर्वशाखोपसंहारे क्रमकालौ विरुध्येते इति। तन्न। प्रयोगविधिर्हि श्रुतिस्मृत्याचारादिप्रमाणप्रापित-सर्वपदार्थप्रतीक्षां कृत्वा प्रयोगं विधत्ते। न पुनः स्वसन्निधिसमाम्नातपदार्थमात्रप्राप्ति-परितुष्टः सहसैवेति। अतएव वेदवेद्याद्यन्तरा प्रविशतः स्मार्त्तस्या-चमनादिपदार्थस्यापि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्नित्यत्र प्रयोगविधिपरिग्रहो वर्णितः। किञ्च पदार्थानां धर्मः क्रमो न हीनप्रमाणप्रापितमपि पदार्थं बाधितुं क्षमते।

अपि च कस्याञ्चिच्छाखायां सामान्यमेवोपदिष्टं न विशेषः। तत्रानुष्ठानकालेऽवश्यं स्वबुद्ध्याध्यवस्य कश्चिद्विशेषो ग्रहीतव्यः। स च गृह्यमाणः कदाचिच्छाखान्तरोपदिष्टो गृह्यते। तत्र यदि शाखान्त-रानुसारेण स एव गृह्यते तदा किन्नामासमञ्जसं कृतं स्यात्। योऽपि तत्सामान्यानन्तर्गतो भिन्नद्वारतया समुच्चयेनैकप्रयोगनिवेशं लभमानः स्वशाखोक्तपदार्थाविरोधी शाखान्तरीयः पदार्थः सोऽप्यपूर्वस्यानिर्ज्ञा-तोपायपरिमाणत्वादिरुद्धप्रमाणान्तरानिवारितप्रवेशो गृह्यमाणो न किञ्चिद्दूषयेत्। यस्तु स्वशाखोक्तविरुद्धः शाखान्तरीयः सोऽपि प्रमाणस्यापक्षपातित्वादेकद्वारकत्वे सति तुल्यबलत्वाद्विकल्पन्यायेन गृह्यमाणो नातीवानौचित्येन नैयायिकानां सम्मतः।

अतः सर्व्वशाखाकल्पसूत्रगृह्यस्मृतिपुराणेतिहासाचारावगतान् पदार्थानुपसंहृत्य प्रयोगोऽनुष्ठेय इति सिद्धम् ।

अत्रार्थे लिङ्गदर्शनम् ब्रह्मपुराणे ।

रामेण भोजिता विप्रा मुन्युक्तेन यथाविधि ।
वैदिकी च कृता सर्वा क्रिया या मानवी स्मृता ।
पुराणोक्तो विधिश्चैव वैश्वदेविकपूर्वकः ॥

'मुन्युक्तेन' मुनिभिः प्रेरितेन । 'वैदिकी' वेदविहितपिण्डपितृयज्ञसम्बन्धिनी, पिण्डपितृयज्ञवदुपचारः पित्र्य इत्यतिदेशेन श्राद्धे प्रापिता । 'मानवी' मनुप्रणीतशास्त्रविहिता, 'स्मृता' अन्यैरपि हारीतगौतमप्रभृतिभिर्धर्मशास्त्रकारैर्वेदार्थमनुस्मृत्योपदिष्टा । सर्गप्रतिसर्गादि पञ्चलक्षणवन्ति ब्राह्म्यादीनि 'पुराणानि' तेषु 'उक्तः' प्रतिपादितः । 'विधिः' अनुष्ठानप्रकारः । एवं सर्व्वशास्त्राण्युपसंहृत्य रामेण श्राद्धं कृतमित्यर्थः ।

अत्राह कार्ष्णाजिनिः ।

आत्मतन्त्रेषु यन्नोक्तं न कुर्य्यात्पारतन्त्रिकं ।
विशेषाः खलु सामान्या वेदोक्ता वेदवादिभिः ॥

'आत्मतन्त्रे' शाखागृह्यादिरूपे स्वकीये शास्त्रे, यदनुष्ठेयपदार्थस्वरूपं नोक्तं तत्परकीयतन्त्रोक्तमपि कुर्य्यात् । यतो वेदोक्ताः सर्वे विशेषाः सर्वेषामनुष्टातॄणां सामान्याः साधारणा इति वेदवादिभिर्निर्णीतम् ।

यत्पुनरेतद्विरुद्धं वैजवापायनस्य वचनम् । "बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रचोदितं । तस्य तावति शास्त्रार्थे कृते सर्व्वकृतो भवेत्" इति ।

तत्तावत् केचिदेवं व्याचक्षते यद्गर्भाधानचौड़ोपनयनविवाहादिकं कर्म गृह्येषु सम्यगुक्तं मन्वादिस्मृतिग्रन्थेषु चासम्यगुक्तं तत्र स्मृत्यपेक्षा न कर्त्तव्या। यत्तु श्राद्धाष्टकादिकं स्मृतिषु सम्यग्गृह्ये चासम्यगुक्तं तत्र स्मृत्यपेक्षा कर्त्तव्यैवेति। अतः स्वगृह्योक्तस्य स्मृत्यपेक्षा निवार्य्यते।

न तु परगृह्याद्यपेक्षापीति सर्वोपसंहारन्यायस्य वचनस्य च व्रतस्य च विषयव्यवस्थेति।

नन्वसम्यगुक्तत्वं नाम स्वल्पधर्मकस्याभिधानं तत्राप्यल्पं वेत्यभिधानात् स्मृत्यपेक्षा वार्य्यत एवेति कुतस्तथाविधे तदपेक्षोक्ता। नैतदेवं असम्यक्त्वं नामात्र कर्मस्वरूपनिष्पादकेन सन्निपातिना दृष्टार्थेन धर्मेण विनाभिधानं। सम्यक्त्वञ्च स्वरूपनिष्पादकधर्माभिधानेन सम्पूर्णत्वम्। अल्पत्वञ्च तदभिधानसमाप्तावन्यत्रोक्तादृष्टैकार्थधर्मानभिधानम्। अतोऽसम्यगभिधाने युक्ता स्मृत्यपेक्षेति।

तदिदं व्याख्यानमयुक्तं गृह्योक्तस्य स्मृतिमात्रापेक्षानिषेधवचने स्वशब्दानर्थक्यप्रसङ्गः।

अस्तु तर्ह्येवम्। यत्स्वगृह्ये सम्यगुक्तं तत्र परगृह्यस्मृत्याद्यपेक्षा न कर्त्तव्या। यत्तु सम्यगनुक्तं तत्र कर्त्तव्या। अतएवैकवेदान्तर्गतानां शाखानां कर्मावबोधे विकल्पोऽङ्गीकृतः वेदानाञ्च समुच्चय इति।

तदपि न युक्तं। शाखान्तरोक्तधर्मोपसंहारन्यायस्यासम्यगुक्तकर्मविषयत्वे वेदान्तरवदसम्यगभिधायकशाखाया अपि शाखान्तराधिकरणेऽनुदाहरणत्वमेव प्रसज्येत। न चैकवेदान्तर्गता काचिदस्ति तादृशी शाखेत्यधिकरणवैयर्थ्यं चापद्येत। अत एवं व्याख्येयं, स्वशाखागृह्योक्ते स्वल्पधर्मके कर्मणि परशाखोक्ताधिकधर्मोपसंहारं कृत्वैव तावत्-

प्रयोगोऽनुष्ठेयः। यदि कदाचिद्दैवान्मानुषाद्वा प्रतिबलात् परशाखा-गृह्योक्ताधिककर्मोपसंहारो न शक्यते कर्तुं तदा स्वशाखागृह्यमात्रोक्तस्वल्पधर्मयुक्तमपि कर्त्तव्यं। तावति च कृते सर्वशाखागृह्योपसंहारेण यत्समग्रशास्त्रार्थरूपं क्रियते तद्देव तदपि समग्रशास्त्रार्थरूपमेव तेन कृतं भवतीत्यनुकल्पोऽयमिति।

अन्ये तु पुनः स्वगृह्योक्तधर्मविरुद्धपरगृह्यधर्मानुष्ठाननिषेधपरमिदं वचनं वर्णयन्ति। तन्न। न्यूनाधिकधर्मविषयत्वस्य वचने प्रत्यक्षेणोपलम्भात् विरुद्धधर्माणां वैकल्पिकत्वादेकोपादानेऽन्यहानात् प्रयोगपरिमाणसाम्ये सति बकल्पं वेत्यनुपयोगात्।

यच्च विरुद्धशाखान्तरीयधर्मोपसंहारनिषेधकमिदं लौगाचिवचनं "ऊनो वाप्यतिरिक्तो वा यः स्वशाखोदितोविधिः। तेन सन्तनुयाद्यज्ञं न कुर्य्यात् पारतन्त्रिकमिति" तदप्यनुकल्पत्वेन स्वशाखामात्रोक्तग्रहणे क्रियमाणे यदर्थात् परशाखीयाग्रहणं प्राप्तन्तदनुवादपूर्वकमनुकल्पविधिपरमेव। न तु शाखान्तरीयधर्मोपसंहारनिषेधपरमित्येवं व्याख्येयम्।

यत्त्वपरं लौगाचिवाक्यं। "यः स्वशाखां परित्यज्य परशाखां समाचरेत्। अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जति" इति। तच्छाखान्तराध्ययननिषेधकमस्तु।

अथ प्रकरणादिपर्य्यालोचनया यदि शाखाशब्दस्तदुक्तकर्मपरस्तदेवं व्याख्येयं। स्वशाखोक्तपरित्यागेन शाखान्तरीयग्रहणे दोषोऽयं न पुनः स्वशाखोक्तेन सह समुचितपरशाखीयग्रहणे, परित्यज्येति वचनात्। अथवा परशाखोक्तस्यापि ग्रहणे क्रियमाणे तद्विरुद्धस्वशा-

स्वोक्तधर्मपरित्यागस्याप्रसक्तत्वात् स्वशाखीयविरुद्धपरशाखीयग्रहण-निषेधपरमिदं वचनं निश्चीयते। अत्र स्वगृह्यमूलभूतवेदो गृह्यकारो वा व्यवस्थितआचारो वा दर्शनादृषिरुच्यते, तं 'अप्रमाणं कृत्वा' अप्रमाणत्वेन परिकल्प्य 'अन्धे तमसि' कृमि-कीट-पतङ्ग-पिपीलिकास्थावरादियोनिविशेषिके तमोगुणेऽविद्यायां पाप्मनि निरयविशेषे वा, निमज्जतीत्यर्थः। अविरुद्धानि तु परशाखाम्नातानि सर्वाण्यप्यङ्गान्युपसंहृत्य कर्मानुष्ठेयम्।

तदुक्तं भविष्यत्पुराणे।

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत्।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथेति॥

इति सर्वशास्त्रोपसंहारनिर्णयः।

अथानुसमयस्य निर्णयः।

स चायं द्विविधः। पदार्थानुसमयः काण्डानुसमयश्चेति। द्विविधमपि चैतमाद्रियन्ते याज्ञिकाः कर्म्मणि। तथाह्याग्नेयाग्नीषोमीययोः पुरोडाशयोः कपालोपधानाधिश्रयणोद्वासनादीनां पदार्थानामेवानुसमयमिच्छन्ति। अप्रतिग्रहेष्टावपि स्वल्पसङ्ख्यकेषु पुरोडाशेष्वेवमेव शतसहस्रादिसङ्ख्यकेषु तु तेषु काण्डानुसमयमङ्गीकुर्वते। तथा पशुगणे उपाकरणादीनां पशुधर्माणां पदार्थानुसमयमाश्रयन्ते। यूपगणे चाञ्जनादीनां यूपधर्माणां काण्डानुसमयं। अतः सन्देहः क्व पदार्थानुसमयः क्व काण्डानुसमय इति। किञ्च पदार्थानुसमयेऽपि चिकीर्षिते कियानेकः पदार्थ इत्येवं पदार्थपरिमाणे कचित् संशेरते। यथा मुष्टिकपालावदानाजनवपनपावनेषु, यथा चावघाते

कृष्णाजिनास्तरणोलूखलाधिवर्त्तनादिषु फलीकरणान्तेषु कर्मसु, किञ्च कश्चित् क्रियात्मा कश्चित् पदार्थावयवीभूतोऽप्यन्यत्र पदार्थतामश्नुवानो दृश्यते। यथा चरुपुरोडाशसान्नाय्यादिषु प्रदानं तस्य चतुरवत्तस्य पदार्थावयवीभूतं चतुरवत्तमात्रं सान्नाय्यविकृतिभूतेष्वग्नीषोमीये पशौ स्वतन्त्रैकपदार्थतां प्राप्तम् अग्नीषोमीयविकृतिभूते सम्प्रतिपन्नदेवताके पशुगणेष्वेवमेव। विप्रतिपन्नदेवताके तु प्रदानान्तचतुरवत्तपदार्थावयवतामेवागतम्। अत इह श्राद्धेऽपि निमन्त्रणादिविसर्जनान्तेषु श्राद्धभोक्तृद्विजसम्बद्धेष्ववनेजनादिप्रतिपत्त्यन्तेषु पिण्डसम्बद्धेष्वासनादिन्युब्जीकरणान्तेष्वर्घ्यपात्रसम्बद्धेषु प्रक्षालनस्थापनपरियन्त्रकादिषु भोजनपात्रसम्बद्धेषु कुश-यव-तिल-गन्ध-पुष्पादिप्रक्षेपेषु मण्डलसम्बद्धेषु क्व पदार्थानुसमयः क्व काण्डानुसमय इति विचार्य्य निर्णेतव्यम्।

तत्र तावदयमुत्सर्गो यत्पदार्थानुसमयेनानुष्ठानम्। अतो ब्राह्मणादिषु प्रत्येकं सन्निपत्योपकारकं पदार्थमावर्त्य तेनैव न्यायेनान्यमावर्त्तयेत् न तु प्रत्येकं पदार्थकाण्डमिति।

ननु पितृतृप्तिकामः पुत्रादिकामो वा ब्राह्मणान् भोजयेत् पिण्डान् प्रदद्यादित्यत्र तावत्कर्मविभक्तिनिर्दिष्टा अपि ब्राह्मणाः पिण्डाश्च भूतभाव्युपयोगान्तररहितत्वाद्धोमदानाभ्यामिव सक्तुगावौ भोजनेन प्रदानेन वा न चिकीर्ष्यंते। अतो येस्तु द्रव्यं न चिकीर्ष्यत इति न्यायात्तयोः प्रधानकर्मताफलवत्सन्निध्याम्नातफलरहितकर्मभ्योऽन्यानि च प्रधानकर्माण्यधिकारवाक्ये करणत्वेनोपादीयन्ते। अतश्च ब्राह्मणभोजनेन पिण्डप्रदानेन वा पितृतृप्तिं पुत्रपशुस्वर्गादि

क्त भावयेदिति वचनव्यक्तिर्जायते । तत्र न किञ्चिदपीतिकर्त्तव्यता-शून्यं करणं भवतीति कृत्वा करणाभिधायिना पदेन सहेत्थमितीति-कर्त्तव्यताभिधायकमपि पदं सम्बध्यते । अतः फलकरणेतिकर्त्तव्यता-नामेककालत्वं प्रयोगविधिनावगम्यते। शब्दवृत्तं तावदेवं यदुत त्रया-णामेककालत्वं वस्तुन्येवमेव । तथा हि। यदि तावद्भूतकालं भाव्यं भविष्यत्काले करणेतिकर्त्तव्यते ततः करणेतिकर्त्तव्यतात्वमेव न स्यात् । न हि पश्चाद्भाविकरणमितिकर्त्तव्यत्वं वा भवति। तथा भविष्यति भाव्ये भूतयोश्च करणेतिकर्त्तव्यतयोरयमेव दोषः । न हि विनष्टस्य करणत्वमितिकर्त्तव्यतात्वं वा सम्भवति। करणेतिकर्त्तव्यतयो-र्मिथो भिन्नकालत्वेऽप्ययमेव दोषः। न हि विनष्टमनागतं वानुग्राह-कमनुग्राह्यं वा भवितुमर्हति । तदेवं प्रयोगविधिना प्रधानकालत्वम-ङ्गानां बोधितं ।

नन्वेवमशक्यार्थोपदेशप्रसङ्गः। नह्येकेन कर्त्ता युगपदनेकानुष्ठानं कर्त्तुं शक्यते। सत्यं। किन्त्वत्र यावन्तं विप्रकर्षमन्तरेणानुष्ठानमशक्य-न्तावान् विप्रकर्षोऽभ्युपगम्यते । क तर्हि प्रयोगविधिबोधितमेकका-लत्वं । नैवं । यतः प्रयोगवचनं यावतः पदार्थाननुष्ठापयति तावद्भि-रवर्जनीयतया यावान् कालो व्याप्यते तावानेकः कालः तावत्येव सर्वेषां साहित्यं विधीयते न त्वेकस्मिन् क्षणे । अशक्यार्थविधिप्रस-ङ्गात् । अतः प्रत्यासत्तिरेषां साहित्यं। सा च श्रुत्यर्थादिभिः यस्य यावती प्रमिता तस्य तावती क्रियते । अतो नानवस्थिततास्याः व्यर्थता वा श्रुत्यर्थादेः । तदेवं महाप्रयोगवचनः सर्वेषां प्रधाना-नामङ्गसाहित्यं बोधयन्नेकस्मिन् प्रधानेऽवान्तरप्रयोगवचनात् परि-

कल्पयन् स्वयं वा तदवस्थतामाविष्कृत्यैकैकस्य प्रधानस्य स्वस्वाङ्गसाहित्यं ब्रूते। एवमवान्तरावान्तरप्रयोगवचनत्वमभ्युपेत्याङ्गानामपि प्रत्येकं स्वस्वाङ्गवर्गसाहित्यं प्रतिपादयति। तथा चैकैकस्य ब्राह्मणस्य पिण्डस्य पात्रस्य वा परधर्मानुष्ठानव्यवधानरहितस्वाङ्गवर्गसहितस्यानुष्ठाने प्राप्ते काण्डानुसमय एव न्याय्यः न पदार्थानुसमय इति। अत्राभिधीयते। ब्राह्मणान् भोजयेत् पिण्डान् प्रदद्यात् पात्राण्यासादयेदित्यादौ द्वन्द्वसमासार्थैकशेषवशात् प्राजापत्यैश्चरन्तीतिवत् ब्राह्मणादीनां परस्परसहितानामेवानुष्ठानं गम्यते। तच्च तदङ्गभूतपदार्थानुष्ठानद्वारकमेव न स्वरूपतः। तत्र यद्येकस्मिन् ब्राह्मणादौ समग्रमप्यङ्गकाण्डमनुष्ठायापरस्मिन्नप्यनुष्ठीयेत तदैकस्यानुष्ठानेऽपवृक्ते सत्यपरस्यारम्भात् साहित्यासिद्धिः। यदि पुनरेकं पदार्थमेकस्मिन् कृत्वानन्तर एव चणे तमेवान्यस्मिन्नपि कुर्य्यात् तदा ब्राह्मणादीनामन्योन्यसाहित्यमापादितं भवति।

ननु प्रयोगवचनानुग्रहाय परस्परसाहित्यवचनं सर्वार्थतया तन्त्रानुष्ठीयमानारादुपकारकाङ्गमात्रविषयमस्तु।

मैवं। काल्पनिकं हि प्रयोगवचननिबन्धनं साहित्यं, न तद्बलात् श्रुतप्रत्यक्षसाहित्यबाधः सङ्कोचो वापि कर्तुं न्याय्यः।

तस्मात् पदार्थानुसमय एवौत्सर्गिक इति स्थितं।

निमन्त्रणादीनां काण्डानुसमये च बहुबाध इत्यपरो दोषः। तथाहि पूर्वेद्युरेकस्य निमन्त्रणं कृत्वा यदि तस्यैवान्येद्युरन्योपकल्पनपर्य्यन्तं पदार्थकाण्डं कृत्वा तं तथैवावस्थाप्यान्यस्य निमन्त्रणादि कर्तुं प्रवर्त्तते तदा पूर्वेद्युर्ब्राह्मणान्निमन्त्रयेदिति सर्वनिमन्त्रणस्य पूर्वदिन-

सम्बन्धावगतिः, यावत्प्रयोगं प्रयोगदेशे कर्तृस्थितिः, शौचं, कुतपापराह्णादिकालः, पाकोष्णता, सकलसर्वसम्बन्धयोग्यानां प्रैषादीनां तन्त्रता, आवृत्त्यादिप्रसङ्गात् प्रयोगप्रांशुभावः, समाचारश्चेत्येतत्सर्वं बाध्येत । तत्र तावन्निमन्त्रणीयसमीपोपगमनस्य निमन्त्रणाक्षिप्तस्य पृथक्पदार्थत्वविरहादनर्थकावृत्तिप्रसक्तेरनवस्थानान्निमन्त्रणासिद्धेर्निमन्त्रणान्तस्यानुसमयः । निमन्त्रणस्यापि नियमश्रावणान्तस्य केवलस्यानुसमये निमन्त्रणीयद्विजानामन्योन्यं दूरेऽवस्थानादुपगमनद्वारे प्रयोगविध्यपेक्षितप्रांशुभावभङ्गप्रसङ्गः ।

किञ्च ।

दक्षिणं जानुमालभ्य त्वं मयात्र निमन्त्रितः ।
एवं निमन्त्र्य नियमान् श्रावयेत् पैतृकान् बुध ॥

इत्यनेकवचनोपात्तैकैकनिमन्त्रणस्य क्त्वाश्रुत्या पूर्वकालतामुक्त्वा नियमश्रावणस्याव्यवहितोत्तरक्षणवर्त्तितोच्यते सापि बाध्येत ।

न चैतद्वक्तव्यम् । “अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः भवितव्यं भवद्भिश्च मया च श्राद्धकर्मणि” ॥ इति देवलोपदिष्टे नियमश्रावणवाक्ये बहुवचनात् सम्मिलितानां युगपन्नियमश्रावणेन सह सम्बन्धोऽवगम्यमानः केवलस्य निमन्त्रणस्य नियमश्रावणान्तस्य वानुसमयेन युज्यत इति । बहुवचनस्य पूजार्थत्वोपपत्तेः । श्राद्धदिनपूर्व्वाह्ने प्रावृत्तिकक्रमानुरोधाय निमन्त्रणक्रमेण विप्रेभ्यः पदार्थानुसमयेन दन्तकाष्ठं प्रदाय तैलोद्वर्त्तनपानीयादिस्नानीयद्रव्यप्रदानानि काण्डानुसमय इव समुदितान्येकैकस्मिन् ब्राह्मणे कुर्य्यात् । तथा हि कृष्णाजिनास्तरणादिफलीकरणान्तानि कर्माणि तण्डुल-

निष्पत्तिफलकावघातभावनाच्छिन्नत्वेन तद्वयवीभूयैकपदार्थताङ्गतानि सन्ति नानाबीजेष्टौ सन्तानादावेकैकस्मिन्बीजे काण्डानुसमय इव समुदितान्येव क्रियन्ते । तथा तैलादिप्रदानान्यपि स्नानभावनाच्छिन्नत्वेनैकपदार्थीभूतत्वात् समुदितान्येवैकैकस्मिन् ब्राह्मण इति ।

आकारणमपि निमन्त्रणक्रमेण पदार्थानुसमयेनैव स्वागतप्रश्नस्य तन्त्रानुष्ठानभ्रमं निराकर्तुं पदार्थानुसमयमुपदिशति मार्कण्डेयः ।

"स्वातः स्नातान् समाहूतान् स्वागतेनार्चयेत् पृथक्" इति ।

यवगन्धाद्यर्चनद्रव्यप्रक्षेपास्त्वेकैकस्मिन्मण्डले लाघवात्तन्त्रेणैव तावत कर्त्तव्याः । पृथगनुष्ठानपक्षेप्यर्चनभावनाच्छिन्नत्वेनैकपदार्थाभावादेकैकस्मिन्मण्डले काण्डानुसमय इव समुदायवन्तोऽनुष्ठेयाः । चरणप्रक्षालनाचमनप्रदानासनोपवेशनानि पदार्थानुसमयेन । आसनक्षणावाहनार्घ-गन्ध-पुष्प-धूप-दीपाच्छादनानां पदार्थानां कृत्स्नं काण्डं वैश्वदैविकेषु द्विजेष्वपवर्ज्य पैतृकेष्वारम्भणीयं । याज्ञवल्क्य-मत्स्यपुराणयोस्तथा वचनात् ।

वचनात्तु परिव्याणान्तमञ्जनादीत्यत्र जैमिनिनापि पूगगणे वचनात् काण्डानुसमयो वर्णितः सोऽत्रापि वचनाद्भवितुमर्हति ।

तथा च याज्ञवल्क्यः ।

पाणिप्रक्षालनं दत्त्वा विष्टरार्थं कुशानपि ।
आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ॥
या दिव्या इति मन्त्रेण हस्तेष्वर्घं विनिःक्षिपेत् ।
दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकं ॥
अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणं ।

द्विगुणांस्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ॥
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ।
यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्व्ववत् ॥ इति ।

इह वैश्वदेविकेषु द्विजेष्वासनाद्याच्छादनान्तपदार्थकाण्डस्य परिसमाप्तिमुक्त्वा पैतृकेषु तदारम्भः प्रतिपादितः ।

मत्स्यपुराणेऽपि ।

विश्वान् देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्व्वकं ।
पूरयेत्पात्रयुग्मन्तु स्थाप्य दर्भपवित्रके ॥
शन्नो देवीत्यपः कुर्य्याद्यवोसीति यवांस्तथा ।
गन्धपुष्पैश्च संपूज्य वैश्वदेवं प्रति न्यसेत् ॥
विश्वेदेवास इत्याभ्यामावाह्य विकिरेद्यवान् ।
गन्धपुष्पैरलङ्कृत्य या दिव्येत्यर्घ्यमुत्सृजेत् ।
अभ्यर्च्य तैरनुज्ञातः पितृकार्य्यं समारभेत् ॥ इति ।

तदेवमासनाद्याच्छादनान्ताः पदार्था वैश्वदेविके पैतृके च वचनात् काण्डानुसमयेनानुष्ठीयमानाः। अथैकैकवर्गान्तर्गतेषु ब्राह्मणेषु पदार्थानुसमयेनैव निर्व्वर्त्तनीयाः परियन्त्रोपकल्पनपात्रावस्थापनतिलावकिरणोपस्तरणपरिवेषणानि सर्व्वेष्वपि द्विजेषु पदार्थानुसमयेनैव कार्य्याणि। परिविष्टान्नप्रोक्षणाभिमन्त्रणाङ्गुष्ठनिवेशनानि देवतोद्देशहविस्त्यागाश्च प्रदानान्तावदानवदेकपदार्थीभूताः समुदिता एकैकस्मिन् ब्राह्मणे काण्डानुसमयवदनुष्ठेयाः। एकैकशोऽन्ये प्रतिपाद्यं सोमवत् प्रधानावृत्तिः। सकृत्प्रयोगयोग्यानां तन्त्रतेति ब्राह्मणेषु। अवनेजनादीन्येकैकशः। अञ्जनाभ्यञ्जनवासांसि त्रिस्त्रिरेकैकस्मिन्

निर्वापमुष्टिपुरोडाशकपालाग्नेयाद्यवदानदीक्षिताभ्यञ्जनादिवत् पिण्डाञ्जनादीनामपि सञ्ज्ञाविशेषविशिष्टानामेव विहितत्वादिति पिण्डेषु ।

अथानेकाग्नौकरणानुष्ठानपक्षेऽन्नोद्धरणात् प्रभृत्यवदानात् प्राक् सर्व्वं पदार्थानुसमयेन कृत्वा प्रदानान्तेनैव चतुरवत्तेनानुसमेतव्यं । दैवतान्यवदाय न तावत्येव होतव्यं सौविष्टकृतान्यवद्यतीत्यग्नीषोमीयपशावतिदेशागतं चतुरवत्तस्य प्रदानान्तत्वं यथा वचनादपोद्यते तथात्र कुतश्चिदपवादाभावादित्यग्नौ करणे । अथ पात्रेषु सर्व्वमेकैकश इति ।

इत्यनुसमयनिर्णयः ।

अथ भोज्याभोज्यान्नाः निमन्त्रणप्रकरणे वक्ष्यन्ते । अनिन्द्येनामन्त्रितो नापक्रामेदिति । तत्रानिन्द्या भोज्यान्नाः निन्द्या अभोज्यान्नाः । अतस्तद्विवेकः क्रियते । तत्र गौतमः ।

प्रशस्तानां स्वकर्मसु द्विजातीनां ब्राह्मणो भुञ्जीत ।

यमः ।

श्रोत्रियाणां सदाश्नीयाद्दोषस्तेषां न विद्यते ।
विकल्पोपहतानाञ्च नाश्नीयान्नैव दापयेत् ॥

परत्र परलोकशास्त्रार्थेषु सदर्थेषु सदसद्विकल्पैर्नित्यमव्यवस्थितचित्तवृत्तयो विकल्पोपहताः ।

यम-हारीत-जमदग्नि-पैठीनसयः ।

ब्राह्मणस्य सदाश्नीयात् क्षत्रियस्य च पर्व्वसु ।
प्रकृतेषु च वैश्यस्य शूद्रस्य न कदाचन ॥

अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतं ।
वैश्यस्य त्वन्नमेवान्नं शूद्रान्नं रुधिरं स्मृतं ॥
ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च ।
तां तां योनिं व्रजेद् विप्रो भुक्तान्नं यस्य वै मृतः ॥

'सदा' कालनियममन्तरेण । 'पर्व्वसु' प्रशस्तदिवसेषु, श्रद्धया श्राद्धाद्यर्थं निमन्त्रितः क्षत्रियस्य गृहेऽश्नीयात् 'प्रकृतेषु' प्रकरणेषु विवाहाद्युत्सवेष्विति यावत् । 'अमृतमित्यादिः पूर्व्वस्यार्थवादः । 'तां तां योनिं व्रजेदित्यनेनानिन्द्ययोरपि क्षत्रियवैश्ययोरन्नमसकृन्न भोक्तव्यमिति गम्यते ।

पैठीनसिः ।

ब्राह्मण-क्षत्रिय-विशां यस्यान्ने जठरस्थे म्रियते तामेव योनिं व्रजतीति ।

आपस्तम्बः ।

त्रयाणां क्षत्रियप्रभृतीनां समावृत्तेन भोक्तव्यं प्रकृत्या ब्राह्मणस्य भोक्तव्यं कारणादभोज्यं यदप्रायश्चित्तं कर्मासचते प्रायश्चित्तवति कर्मणि चरितनिर्वेशस्य भोक्तव्यं सर्ववर्णानां स्वधर्मे वर्त्तमानानां भोक्तव्यं शूद्रवर्जमित्येके ।

'प्रकृत्या' उत्सर्गतः । 'कारणात्' निमित्तात् । 'अप्रायश्चित्तं कर्म' प्रायश्चित्तानर्हमभ्यस्तं महापातकादि । 'आसचते' सम्बध्यते । 'प्रायश्चित्तवति' प्रायश्चित्तयोग्ये, तु कर्मणि । 'चरितनिर्वेशस्य' कृतप्रायश्चित्तस्य ।

वशिष्टः ।

अश्रद्दधानस्य भोक्तव्यं चौरस्यापि विशेषतः ।
न त्वेव बहुयाज्यस्य यश्चोपनयते बहून् ॥

चौरस्यापीति श्रद्धाप्रशंसार्थं ।

तथा च मनुः ।

श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्द्धुषेः ।
मीमांसित्वोभयन्देवाः सममन्नमकल्पयन् ॥
तान् प्रजापतिराह स्म माकृद्धं विषमं समं ।
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ॥

यो धनवानप्यतिलोभादात्मानं धर्मकृत्यं पोष्यवर्गञ्च न पुष्णाति स 'कदर्य्यः'। 'वदान्यः' बहुप्रदानशीलः। निषिद्धवृद्ध्युपजीवी 'वार्द्धुषिकः'। 'मीमांसित्वा' विचार्य्य। एकः श्रोत्रियोऽपि सन् कदर्य्यः। इतरश्च वार्द्धुषिरपि सन् वदान्यः। अनयोरन्नं तुल्यत्वेन कल्पयतो देवान्निवार्य्य वदान्यस्यैव श्रद्धापूतत्वेन श्रैष्ठ्यं प्रजापतिः समर्थितवानित्यर्थः ।

बौधायनः ।

शुचेरश्रद्धधानस्य श्रद्धधानस्य चाशुचेः ।
मीमांसित्वोभयन्देवाः सममन्नमकल्पयन् ॥
तान् प्रजापतिरित्याह माकृद्धं विषमं समं ।
हतमश्रद्दधानस्य श्रद्धापूतं विशिष्यते ॥

यमः ।

अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्म्मतेः ।
अन्नमश्रद्धधानस्य योभुङ्क्ते स तु भ्रूणहा ॥

श्वशुरान्नन्तु योभुङ्क्ते स भुङ्क्ते पृथिवीमलं ।
नृणामाकर्मलञ्चान्नं सर्वमन्ने प्रतिष्ठितं ॥
दुष्कृतं हि मनुष्यस्य अन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषं ॥

'अवलिप्तः' गर्वितः । 'मूर्खः' अनधीतवेदः । 'दुष्टवृत्तः' दुराचारः । 'दुर्मतिः' क्रूराशयः । श्वशुरान्नमिति सर्वदा श्वशुरान्नभोजनस्यैव प्रतिषेधः ।

अन्येषामपि भोज्यान्नानां गृहे नित्यं न भोक्तव्यमित्याह याज्ञवल्क्यः ।

परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ।

'परपाकरुचिः' । परपाकाभिलाषुकः ।

मनुरप्याह ।

उपासते ये गृहस्थाः परपाकमबुद्धयः ।
तेन ते प्रेत्य पशुतां व्रजन्त्यन्नाद्यदायिनां ॥

अनापदीति शेषः ।

तदाह यमः ।

स्वपाके वर्त्तमाने यः परपाकं निषेवते ।
सोऽश्वत्वं शूकरत्वञ्च गर्दभत्वञ्च गच्छति ॥
परपाकेन पुष्टस्य द्विजस्य गृहमेधिनः ।
इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत् ॥
यस्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते ॥

हारीत-जमदग्नी ।

ब्राह्मणान्नेन दारिद्र्यं क्षत्रियान्नेन प्रेष्यताम् ।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्नैर्नरकं व्रजेत् ॥

पैठीनसिः ।

गृहमेधी नान्यस्यान्नं काङ्क्षेदित्युदाहरन्ति ।

परपाकमुपाश्नन्ति ये द्विजा गृहमेधिनः ।
श्वभास-रासभानान्ते योनिं गच्छन्ति दुर्द्धियः ॥

उप समीपं गत्वा येऽश्नन्ति अनिमन्त्रिता एव स्वयं याचित्वाश्नन्तीत्यर्थः।

भोज्यान्नयोरपि ब्राह्मणशूद्रयोः कदाचिदभोज्यान्नतामाहुर्यम-शातातप-छागलेयाः ।

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणोददत् ।
उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणञ्चरेत् ॥

'निमन्त्रितं' निमन्त्रितभोक्तृकं, भुक्त्वा तदन्नमिति शेषः ।

अन्यान्यभोज्यान्नानाह मनुः ।

नाश्रोत्रियतते यज्ञे ग्रामयाजकृते तथा ।
स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित् ॥

'अश्रोत्रियः' अनधीयानः, तेन 'तते' प्रारब्धे, यज्ञे । ऋत्विग्भिर्वाऽश्रोत्रियैस्ततेन भुञ्जीत ब्राह्मणः । 'ग्रामयाजः' बहुयाजकः, तेन, स्त्री-क्लीवाभ्याञ्च यत्र हूयते, यत्र यज्ञे भर्त्ता दारिद्र्योपहतः स्त्री च सौदायिकेन धनेन ज्ञातिबलेन वा दर्पिता सती प्रधानं भवति स स्त्रिया हुत इति मेधातिथिः ।

मत्त-क्रुद्धातुराणाञ्च न भुञ्जीत कदाचन ।
गणान्नं गणिकान्नञ्च विदुषा च जुगुप्सितम् ॥

यावन्मदादियोग एतेषां तावदभोज्यान्नाः । अन्ये तु बाहुल्यं मन्यन्ते । बाहुल्येन यः क्षीवोभवति तदन्नं न भोक्तव्यम् । एवं क्रोधप्रधानस्वभावस्य । 'आतुरः' दीर्घरोगी, 'गणः' सङ्घातः, तस्यान्नं गणान्नं । भ्रातृणान्त्वविभक्तानां न गणव्यपदेशः । "भ्रातृणामविभक्तानामेकोधर्मः प्रवर्त्तते" इति वचनात् ।

एकस्य धर्मस्तेषामातिथ्यादिक्रियैवेति तद्धर्मे वर्णितं । 'गणिका' वेश्या । यन्नान्यमपि विदुषा 'जुगुप्सितं' निन्दितं ।

स्तेन-गायनयोश्चान्नं तक्ष्णोर्वार्द्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥

'गायना' अत्र गीतोपजीवी । अन्यस्य तूपरान्तकादिगानं विहितमेव । 'तक्षा' वर्द्धकिः । 'दीक्षितः' दीक्षणीयेष्ट्यादिजनितदीक्षाख्यसंस्कारवान् । दीक्षाख्यसंस्कारवत्ताचावभृथेष्टेः प्रागेव, अवभृथेष्ट्या तत्संस्कारापगमात् । एवञ्च दीक्षणीयेष्ट्यनुष्ठानप्रभृत्यवभृथेष्ट्यनुष्ठानपर्य्यन्तं दीक्षितस्याभोज्यान्नत्वमनया स्मृत्योक्तमिति यद्यपि प्रतिभाति तथापि संस्थितेऽग्नीषोमीये यजमानस्य गृहेऽशितव्यमित्यादि श्रुत्या सत्यपि दीक्षाख्यसंस्कारेऽग्नीषोमीयपशुयागसमाप्तेः प्रागेव भोज्यान्नत्वावगमात् तदविरोधाय तत्पर्य्यन्तमेवाभोज्यान्नत्वमनया स्मृत्याद्युक्तमिति मन्तव्यं ।

आपस्तम्बस्तु पूर्व्वमप्यग्नीषोमीयवपाहोमाद् यज्ञार्थं द्रव्ये पृथक्कृते यदवशिष्टं तदेव दीक्षितस्यापि भोक्तव्यमित्युक्तवान् । न दीक्षितस्य

वसनं परिदधीत नास्य पापं कीर्त्तयेत् नान्नमश्नीयात् यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन् संस्थिते वाग्नीषोमीये कृतायां वा वपायामिति। शतपथे तु दीक्षितस्याङ्गुलीविसर्जनात् पूर्व्वमभोज्यान्नत्वं तदुत्तरकाले च भोज्यत्वं सार्थवादमुक्तं। तस्मादस्यान्नाश्नन्ति मानुषो हि भवति तस्मादस्याच नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषो हुतस्य नाश्नीयादेवं तत्तस्माद्दीक्षितस्य नाश्नीयादथाचाङ्गुलीर्विसृजत इति। 'निगड:' निगडित:। बद्धनिगडयोरियान् विशेष:। एकोवाङ्मात्रेणावरुद्ध:, अपरोरज्ज्वादिना नियन्त्रित:।

अभिशस्तस्य षण्डस्य पुंश्चल्या दाम्भिकस्य च।
चिकित्सकस्य मृगयो: क्रूरस्योच्छिष्टभोजिन:।
उग्रान्नं सूतिकान्नञ्च पर्याचान्तमनिर्दशं॥

'अभिशस्त:' पतनीयकर्मकारित्वेनाभियुक्त:। 'षण्ड:' नपुंसक:। 'पुंश्चली' व्यभिचारिणी। 'दाम्भिक:' ख्यातिलाभादिप्रयोजनाभिसन्धानेनैव धर्मानुष्ठाता। 'चिकित्सक:' चिकित्सावृत्ति:, असम्यक्चिकित्सक इतरोऽपि। 'मृगयु:' मृगव्याध:, य आखेटकार्थं मांसविक्रयार्थं वा प्रायोमृगान् हन्ति। 'क्रूर:' अनृजुप्रकृतिर्दु:प्रसाद इति यावत्। 'उच्छिष्टभोजी' परभुक्तोज्झितान्नभोजनशील:। 'उग्र:' जातिविशेष:, शूद्राक्षत्रिययोरुग्र इत्यमरसिंहेनाभिधानात्। परुषभाषणादिना दु:सहसन्निधिर्वा। 'सूतिकान्नं' सूतिकामुदिश्य यत्कृतं तत्कुलीनैरपि तन्न भोज्यम्। 'अनिर्दश' दशाहं यावदशौचिनामन्नं न भोक्तव्यं। तेन यद्यपि क्षत्रियादीनां दशाहादूर्ध्वमप्यशौचं तथापि दशैवाहानि न भोज्यं। सूतकान्नमिति पाठान्तरे सूतकशब्देन तद्वन्त: पुरुषा

उच्यन्ते, ते च दशाहमभोज्यान्नाः । अनिर्दशग्रहणमशौचानिवृत्त्युपलक्षणार्थं तेन यस्य यावानशौचकालः स तावत्कालमभोज्यान्नः। प्रथमपाठे व्याख्यानान्तरम् । सूतिकायाः प्रसूताया गवादेरन्नमदनीयं दुग्धादि अनिर्दशमनतिक्रान्तदशाहं न भोज्यं । 'परि' मध्ये, 'आचान्तं' आचमनं यस्य तत्पर्य्याचान्तमाचनव्यपेतमित्यर्थः । अर्द्धभुक्तः केनचित् कारणेन यदाचामति तदा भुक्तोच्छिष्टं पुनर्नाश्नितव्यं ।

अनर्चितं वृथामांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्यन्नं पतितान्नमवक्षुतं ॥

अर्चनीयेभ्यो यदवज्ञया दीयते तदनर्चितं, न तु सुहृदादेः । 'वृथामांसं' देवार्चनशिष्टं यन्मासं न भवति आत्मार्थं यत्साधितम् । अवीरा स्त्री यस्या न भर्त्ता नापि पुत्रः। 'द्विषन्' शत्रुः । 'नगरी' राजव्यतिरिक्तो नगरस्वामी । 'अवक्षुतं' यस्योपरि क्षवथुः कृतः ।

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिकस्य च ।
शैलूषतन्तुवायान्नं कृतघ्नस्यान्नमेव च ॥

'पिशुनः' यो विश्रब्धमर्थं कथितं भिनत्ति । परोक्षं परछिद्रवादी वा । 'अनृती' कृतकोटसाक्ष्यः । 'क्रतुविक्रयिकः' क्रतुर्यज्ञः तं कृत्वा विक्रीणीते क्रतुफलं मदीयं तवास्त्विति मूल्येन तद्ददाति। यद्यपि परमार्थतः क्रतोर्विक्रयोनास्ति तथापि यस्यैवंविधभ्रान्त्या विप्रलम्भेन वा प्रवृत्तिस्तदन्नस्य प्रतिषेधः । 'शैलूषः' नटभार्य्यः, 'तन्तुवायः' सूचीशिल्पोपजीवी । 'कृतघ्नः' कृतमुपकारं विनाश्योपकर्तुरपकारे वर्त्तते' यस्तु तस्य न प्रत्युपकरोति ।

कर्मारस्य निषादस्य रङ्गावतरकस्य च ।

सुवर्णकर्तुर्वेनस्य शस्त्रविक्रयिणस्तथा ॥

'कर्म्मारः' लोहकारवृत्तिजीवी। शूद्रायां ब्राह्मणाज्जातः 'निषादः'। 'रङ्गावतरकः' नटगायनकेभ्योऽन्योमल्लादिः। यो वा कुतूहलेन प्रतिरङ्गमुपतिष्ठते। 'वेनः' वादित्रजीवनः। 'शस्त्रविक्रयी' कृतस्य खड्गादेरकृतस्य वा अयसोविक्रेता।

श्ववतां शौण्डिकानाञ्च चैलनिर्णेजकस्य च।
रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥

आखेटकाद्यर्थं ये शुनोबिभ्रति ते 'श्ववन्तः'। 'शौण्डिकाः' मद्यव्यसनिनः, तत्पण्यजीविनो वा। चैलं वस्त्रं निर्णेनेक्तीति 'चैलनिर्णेजकः' वस्त्रधावक इत्यर्थः। 'रजकः' वाससां नीलादिरागकरः। 'नृशंसः' नॄन् मनुष्यान् शंसति स्तौति यो लोके वन्दीति प्रसिद्धः, अथवा निर्दयाशयो नृशंसः। 'उपपतिः' जारः, यस्य भार्याया गृहे जारोपि वर्त्तते।

पुष्यन्ति ये चोपपतिं स्त्रीजितानाञ्च सर्वशः[१]।
दशाहिकञ्च प्रेतान्नमतुष्टिकरमेव च ॥

पूर्व्वश्लोके भर्त्रा अविदितोभार्याजारोगृहे वसतीत्युक्तम्। अत्र तु गृहादन्यत्रापि वसन्तं भार्याजारं विदित्वापि यः क्षमते, न भार्याया निग्रहं करोति, नापि जारस्य, तदन्नस्य प्रतिषेधः। अतो येषामविदिता गृहान्तरवासिनश्च भार्य्याजारास्ते भोज्यान्नाः। 'स्त्रीजिताः' येषां गृहेषु भार्य्यैव कर्त्री हर्त्री च, स्वयं परिजनस्य धनस्य वा

---

(१) सत्तम इति ख०।

नेष्यते। दशाहिकं प्रतिषेधति, तदेव प्रेतान्नं, प्रेतमुद्दिश्य यदन्नं कृतं। यस्याशौचं नास्ति सुहृद्बान्धवादेः तस्यापि कारुण्याच्चतुर्थीश्राद्धादि-प्रवृत्तस्य यदन्नं तन्न भोक्तव्यं। "दशाहिकं नावमिकं चतुर्थीश्राद्धं" इत्यादिना रामायणे वर्णितम्। वर्णितमन्यैरपि ग्रन्थकारैः। 'अतु-ष्टिकरं' यस्मिन् भुज्यमाने चित्ततुष्टिर्न भवति।

आह याज्ञवल्क्यः।

अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि।
कदर्यबद्धचौराणां क्लीवरङ्गावतारिणाम्॥
वैणाभिशस्तवार्द्धुष्य-गणिकागणदीक्षिणां।
चिकित्सकातुरक्रुद्ध-पुंश्चलीमत्तविद्विषां॥
क्रूरोग्रपतितव्रात्य-दाम्भिकोच्छिष्टभोजिनाम्।
अवीरास्त्रीस्वर्णकार-स्त्रीजितग्रामयाजिनां॥
शस्त्रविक्रयिकर्म्मार-तन्तुवायश्ववृत्तिनां।
नृशंसराजरजककृतघ्न-वधजीविनाम्॥
चैलधावसुराजीव-सहोपपतिवेश्मनां।
पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनां।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा॥

अदत्तानीति पूर्व्ववाक्यावयवः, श्रौतस्मार्त्ताग्न्यधिकाररहितस्य शू-द्रस्य प्रतिलोमजस्य च तथा सत्यप्यधिकारेऽग्निपरिग्रहमकुर्व्वाणस्योत्सृ-ष्टाग्नेश्चान्नमनापदि न भुञ्जीतेत्यर्थः। अनेनार्थादापद्यग्निहीनस्यान्न-मद्यादित्युक्तं भवति। 'चौरः' ब्रह्मस्वव्यतिरिक्तपरद्रव्यापहर्त्ता, 'वैणः' वीणावादनजीवी। 'वार्द्धुष्यं' निषिद्धवृद्ध्युपजीवनं, तेन च तद्वान्

लच्यते। 'दीक्षी' दीक्षितः। 'विद्विट्' शत्रुः। 'पतितः' ब्रह्महत्यादिमहापातककर्त्ता। 'व्रात्यः' पतितसावित्रीकः। 'श्ववृत्ती' श्ववृत्तवान् सेवक इति यावत्। यद्वा शुनां वृत्तमस्ति यस्मिन् स श्ववृत्ती शुनकवान्। 'राजा' जनपदपुरपरिपालकः। यः प्राणिबधेन जीवति स 'बधजीवी'। 'चैलधावः' वस्त्रप्रक्षालकः। 'सुराजीवी' सुराविक्रयी। 'सहोपपतिवेश्मा' निजभार्य्याजारसहितगृहः। 'सोमविक्रयी' सोमलताविक्रेता। 'चाक्रिकः' तैलिकः। 'बन्दी' परस्तुतिपाठकः। एषां कदर्य्यत्वादिदोषदुष्टानां त्रैवर्णिकाणामन्नं कदर्य्यत्वादिदोषदुष्टस्वामिसम्बन्धात् परम्परया दुष्टं न भोक्तव्यमित्यर्थः। यद्यपि दीक्षितान्नस्याश्रयदोषाभावान्न कृतदुष्टत्वभावस्तथापि तस्य वचनबलादेवाभोज्यत्वम्।

यमः।

नटनर्त्तकतक्षाणश्चर्मकारः सुवर्णकृत्।
स्थायुकाः षण्डगणिका अभोज्यान्नाः प्रकीर्त्तिताः॥
गान्धर्वो लोहकारश्च सौचीकस्तन्तुवायकः।
चक्रोपजीवी रजकः कितवस्तस्करस्तथा॥
ध्वजी मानोपजीवी च शूद्राध्यापकजीवकौ।
कुलालस्त्रिचकर्म्मा च वार्द्धुषी चर्म्मविक्रयी॥

'नटः' स्वयं नृत्यकर्त्ता। 'नर्त्तकः' नृत्यक्रियोपदेष्टा। 'स्थायुकाः' ग्रामाधिकृताः, स्थायुकोऽधिकृतोग्राम इत्यमरसिंहेनाभिधानात्। 'गान्धर्वः' गायनः। 'सौचीकः' सूचीशिल्पोपजीवी। 'तन्तुवायः' कुविन्दः। 'चक्रोपजीवी' शाकटिकः। 'कितवः' द्यूत-

कारः। 'ध्वजी' मद्यविक्रयी। 'मानोपजीवी' धान्यादिमानकर्मणा यो जीवति। 'दारोपजीवीति क्वचित् पाठः। तत्र दारार्जितेनार्थेन यो जीवति स तथा।

सुमन्तुः।

अभिशस्त-पतित-पौनर्भव-भ्रूणह-पुंश्चल्यशुचि-शस्त्रकार-तैलिक-चाक्रिक-ध्वजि-सुवर्णकार-लेखक-पण्डक-बन्धकी-गण-गणिकान्नानि चाभोज्यानि। सौकरिक-व्याध-निष्यन्द-रजक-वुरुड-चर्मकारा अभोज्यान्ना अप्रतिग्राह्याः।

'चाक्रिकः' वैतालिकः। "वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः" इत्यमरसिंहेनाभिधानात्। 'लेखकः' चित्रकरः। 'पण्डकः' पण्डः। 'बन्धकी' पुंश्चली। 'सौकरिकः' यः सूकरैश्चरति। 'व्याधः' मृगवधजीवी। 'वुरुडः' शूर्पपिटकादिवंशपाचकर्त्ता।

वशिष्ठः। चिकित्सक-मृगयु-पुंश्चली-दाण्डिक-स्तेनाभिशस्त-शठ-पतितानामन्नमनाद्यं तथा कदर्य-दीक्षित-बद्धातुर-सोमविक्रयि-तक्षक-रजक-शौण्डि-सौनिक-वार्द्धुषिक-चर्मावकृतानां। शूद्रस्य चास्वभूतस्य उपपतेर्यश्चोपपतिं मन्यते यश्च गृहान् दहेत् यश्च वधार्हानुपहन्यात्। के भोज्यत इति चावक्रुष्टं गणान्नं गणिकान्नं चेति।

अथाप्युदाहरन्ति।

नाश्नन्ति श्ववतो देवा नाश्नन्ति वृषलीपतेः।
भार्य्याजितस्य नाश्नन्ति यस्य चोपपतिर्गृहे॥

'दाण्डिकः' यो दण्डं गृहीत्वा राजादीनामग्रतश्चरन् मनुष्यानुत्सारयति स 'दाण्डिकः'। 'शठः' अनृजुहृदयः। 'तक्षकः' वर्द्धकः।

'अस्वभूतस्य' यं प्रति स्वस्वामिसम्बन्धो नास्ति। यः स्वभार्याया उपपतिं 'मन्यते' अनुमन्यते। श्वानो विद्यन्ते यस्यासौ श्ववान् तस्य 'श्ववतः'

गौतमः। उत्सृष्ट-पुंश्चल्यभिशस्तानपदेश्य-दाण्डिक-तक्षक-कदर्य-बन्धनिक-चिकित्सक-मृगयु-विषचार्युच्छिष्टभोजि-गण-विद्विषाणामपङ्क्त्यानां प्राग्दुर्बालादन्नं नाद्यात्। वृथान्नाचमनोत्थानव्यपेतानि समासमाभ्यां विषम-समे पूजितानर्चितञ्च।

'उत्सृष्टः' स्वजातिबहिष्कृतः। 'अनपदेश्यः' अविज्ञातकुलशील-देशादिः। 'बन्धनिकः' वागुरादिबन्धनैः प्राणिहन्ता। 'विषचारी' योविषविद्यया जीवति। 'विद्विषाणः' शत्रुः। अपङ्क्त्यप्रकरणे दुर्बालात् पूर्वं यावन्तः कथिताः एतेषामन्नं नाद्यात्। 'आचमन-व्यपेतं' अनाचान्तेन दत्तं। 'उत्थानव्यपेतं' अभ्युत्थानादिसत्कारशून्यं। तथा समेन विषमं, विषमेण समं, पूजार्हेण चानर्चितं नाशितव्यं।

आपस्तम्बः। सङ्घान्नमभोज्यं परिक्रुष्टञ्च सर्वेषां च शिल्पजीवानां ये च शस्त्रेण जीवन्ति ये चाग्निभिर्भिषग्वार्धुषिको दीक्षितोऽक्रीत-राजकोऽग्नीषोमीयसंस्थायामेव हुतायां वा वपायां दीक्षितस्य भोक्तव्यं। यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति ब्राह्मणं क्लीबो राजप्रेषकरो हविर्याजी चाविधिना प्रव्रजितो यश्चाग्नीनपास्येत् यश्च सर्वान् वर्जयेत् सर्वान्नीनो श्रोत्रियो निराकृतिर्वृषलीपतिर्मत्त उन्मत्तो बद्धो वणिक्प्रत्युपविष्टो यश्च प्रत्युपविष्यते तावन्तं कालं। क आस्यान्नो य ईप्सेदिति काण्वः। पुण्य इति कौत्सः। यः कश्चिद्दद्यादिति वार्ष्यायणिः। यदि हि रजः स्थावरं पुरुषेण भोक्तव्यमण्वेदन्नदानेन निर्दोषो भवति शुद्धा भिक्षा भोक्तव्येकतः कुणिकौ कण्ठकुत्सौ तथा पौष्कर-

सादिः। सर्वतोऽप्यन्नं वार्ष्यायणिः। पुण्यस्येप्सतो भोक्तव्यं पुण्यस्याप्यनीप्सतो न भोक्तव्यं यः सर्वान् वर्जयते कस्यापि गृहे नाश्नाति।

'सर्वान्नीनः' सर्वान्नभोजी। "सर्वान्नीनस्तु सर्वान्नभोजी गृध्नुस्तु गर्धनः" इति अमरसिंहेनाभिधानात्।

श्लोकापस्तम्बः।

द्वावेवाश्रमिणौ भोज्यौ ब्रह्मचारी तथा गृही।
मुनेरन्नमभोज्यं स्यात् सर्वेषां लिङ्गिनां तथा॥

'मुनिः' वानप्रस्थो यतिश्च। 'लिङ्गिनां' श्रुतिबाह्यलिङ्गधारिणां।

शङ्खलिखितौ।

भीत-रुदिताक्रन्दितावक्रुष्टावलुत-परिभुक्त-विस्मितोन्मत्तावधूत-राजपुरोहितान्नानि वर्जयेत्।

पुनः शङ्खलिखितौ।

विद्विषाणस्य नाश्नीयात् ब्रह्मविद्यापकारिणः।
श्राद्धसूतगणान्नानि परिभूतानि यानि च॥

देवलः।

पतितान्नमभोज्यान्नमपाङ्क्तेयान्नमेव च।
शूद्रान्नं कुत्सितान्नञ्च दूरतः परिवर्जयेत्॥

वशिष्ठः।

अनिर्दशाहे प्रसवे नियोगाद्भुक्तवान् द्विजः।
कृमिर्भूत्वा स देहान्ते तां विष्ठां समुपाश्नुते॥

यमः।

यस्तु प्राणान्निमुञ्चेत्तु भुक्त्वा श्राद्धं नवं द्विजः।

अग्राह्यासु सुघोरासु तिर्य्यग्योनिषु पच्यते ॥
यस्तु प्रजायते गर्भो भुक्त्वा श्राद्धं नवं द्विजात् ।
न स विद्यामवाप्नोति क्षीणायुश्चैव जायते ॥

तथा ।

भुक्तं राजभृतस्यान्नं चौरस्यान्नं तथैव च ।
सूतके मृतके चान्नं स्वर्गस्थमपि पातयेत् ॥

शङ्खः ।

पराशौचे नरो भुक्त्वा कृमियोनौ प्रजायते ।
भुक्त्वान्नं म्रियते यस्य तस्य जातौ प्रजायते ॥

आपस्तम्बः ।

यस्य कुले म्रियते तत्रानिर्दशे न भोक्तव्यं । तथानुत्थितायां सूतिकायामन्तःशवे च ।

अङ्गिराः ।

जन्मप्रभृतिसंस्कारे बालस्यान्नस्य भोजने ।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः ॥

शातातपः ।

यस्य नाश्नन्ति वै देवाः पितरश्च तथातिथिः ।
वृथा पाकः स विज्ञेयो न तस्याद्यात्कथञ्चन ॥

आपस्तम्बः ।

द्विषन् द्विषतो वा नान्नमश्नीयाद्दोषेण वा मीमांस्यमानस्य मीमांसितस्य वा तथा पाप्मानं हि तस्य भक्षयतीति विज्ञायते ।

मनु-वसिष्ठौ ।

अन्नादेर्भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषं ॥

शङ्खलिखितौ ।

अन्नादेर्भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी ।
गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषं ॥

अङ्गिराः ।

अप्रजानान्तु नारीणां नाश्नीयाज्जातु तद्गृहे ।
मोहाद्वा यस्तु भुञ्जीत सपूयं नरकं व्रजेत् ॥

'नारीणां' दुहितॄणां ।

तथा च छागलेयः ।

अप्रजायास्तु कन्याया नाश्नीयाज्जातुचिद् गृहे ।
गान्धर्वे चैव राजन्यः कुर्यादै गमनागमं ॥
ब्रह्मदेयां न वै कन्यां दत्त्वाश्नीयात् कदाचन ।
अथ भुञ्जीत मोहात्मा पूयं स नरकं व्रजेत् ॥

ब्राह्मादिविवाहचतुष्टयपरिणीता 'ब्रह्मदेया' ।

यमः ।

अधीत्य चतुरो वेदान् साङ्गोपाङ्गान् विशेषतः ।
नरेन्द्रस्य गृहे भुक्त्वा क्रमियोनौ प्रजायते ॥
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसं ।
वैश्यान्नं सूतिकान्नञ्च लोकेभ्यः परिकृन्तति ॥

हारीतः ।

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।

गणान्नं गणिकान्नञ्च लोकानपि निकृन्तति ॥
य इच्छेच्छुद्धमात्मानं इष्टान् लोकांश्च वेदितुं।
गणान्नं गणिकान्नञ्च दूरतः परिवर्जयेत् ॥

अयञ्च स्वधर्मव्यपेतस्य राज्ञोऽन्नभोजने प्रतिषेध इति द्रष्टव्यम्। "प्रजापालनहीनानां राज्ञामुच्छास्त्रवर्त्तिनां। अन्नं न जातु भोक्तव्यं भुञ्जानो रौरवं व्रजेत्" ॥ इति छागलेयस्मरणात्।

आह मनुः।

राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसं।
आयुः सुवर्णकारान्नं यशश्चर्मावकर्त्तिनः॥
कारुकान्नं प्रजां हन्ति बलं निर्णेजकस्य च।
गणान्नं गणिकान्नञ्च लोकेभ्यः परिकृन्तति ॥
पूयं चिकित्सकस्यान्नं पुंश्चल्यास्त्वन्नमिन्द्रियं।
विष्ठा वार्द्धुषिकस्यान्नं शस्त्रविक्रयिणो मलं ॥
य एभ्योऽन्ये त्वभोज्यान्नाः क्रमशः परिकीर्त्तिताः।
तेषान्त्वगस्थिलोमानि वदन्त्यन्नं मनीषिणः ॥

'पूयं' पूयतुल्यं, चिकित्सकस्यान्नं भोजने। एभ्यः प्रतिपदनिर्दिष्टेभ्यो येऽन्ये अभोज्यान्ना अस्मिन् प्रकरणे पठितास्तेषां यदन्नं तत् त्वगस्थिरोमतुल्यं। यत्तदीयायां त्वचि भुक्तायां दोषः स एवान्नेपीति।

आह पैठीनसिः।

गणान्नं गणिकान्नञ्च दुष्कृतं, वार्द्धुषेर्विष्ठा सांवत्सरघाण्टिकग्रामकौटान्नं विषः, बन्धकीनां रेतः, भिषक्शल्यहर्तोः पूयं, परिवित्ति-

परिवित्तिविदान-विद्ध-प्रजनन-वृषलीपति-दिधिषूपति-अग्रेदिधिषूपति-पुनर्भूपुत्राणां रुधिरं पतितानां च दुष्कृतहेतुत्वाद्दुष्कृतं ।

'सांवत्सरः' मुहूर्त्तोपदेशजीवी, 'ग्रामकौटः' ग्रामेष्वनन्याधीनः तथा । "कौटतचोऽनधीनकः" इत्यमरसिंहेनाभिधानात् । 'ग्रामकूटः' इति तु पाठे ग्रामवासिनामनेकोपद्रवैरात्मम्भरिः 'ग्रामकूटः' ।

यमः ।

विष्ठा वार्द्धुषिकस्यान्नं रुधिरं ब्रह्मघातिनः ।
पूयं चिकित्सकस्यान्नं बन्धक्यास्त्वन्नमिन्द्रियं ॥
मलं हि रजकस्यान्नं चर्मकारस्य किल्बिषं ।
यक्ष्मा तथान्नं शौण्डस्य घाण्टिकस्य तथैव च ॥
इतरे ये त्वभोज्यान्नास्तेषामन्नं विवर्जयेत् ।
तेषान्त्वगस्थिरोमाणि वदन्त्यन्नं मनीषिणः ॥

'यक्ष्मा' रोगः । 'शौण्डः' सुराविक्रयी ।

हारीतः ।

विष्ठा वार्द्धुषिकस्यान्नं भिषजाञ्चैव शोणितं ।
रेतोऽन्नं बन्धकीनान्तु गणान्नमिह दुष्कृतं ॥
दुष्कृतं पतितस्यान्नं तास्करं पूयशोणितं ।
सूतिकान्नं रजः प्राहुः श्वविष्ठा शूद्रयाजके ॥

'रजः' आर्त्तवं ।

पैठीनसिः ।

गृहमेधीनशूद्रान्नमश्नीयादस्माद् ब्रह्मवर्चसं बलं तेजः इति व्यपक्रामति ।

हारीतः ।

शूद्रान्नेन तु भुक्तेन जठरस्थेन यो मृतः ।
स वै खरत्वमुष्ट्रत्वं शूद्रत्वं चोपगच्छति ॥

वशिष्ठः ।

शूद्रान्नेनोदरस्थेन यः कश्चिन्म्रियते द्विजः ।
स भवेत् सूकरो ग्राम्यस्तस्य वा जायते कुले ॥
शूद्रान्नरसपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः ।
जुह्वद्वापि जपन्वापि गतिमूर्द्धां न विन्दति ॥
शूद्रान्नेन च भुक्तेन मैथुनं योऽधिगच्छति ।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत् ॥

यमः ।

शूद्रान्नेनोदरस्थेन ब्राह्मणो यस्त्यजेत्तनुम् ।
आहिताग्निस्तथा यज्वा स शूद्रगतिमाप्नुयात् ॥
यस्त्वाहिताग्निर्विप्रस्तु शूद्रान्नान्न निवर्त्तते ।
पञ्च तस्य प्रणश्यन्ति ह्यात्मा ब्रह्म त्रयोऽग्नयः ॥

अङ्गिराः ।

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितं ।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते ॥

शूद्रस्य न कदाचनेत्यादिभिः सकृदपि शूद्रान्नस्याभोज्यत्वे सिद्धे षण्मासवचनं दोषाधिक्यप्रतिपादनार्थं ।

वशिष्ठः ।

अशौचे यस्तु शूद्रस्य सूतके वापि भुक्तवान् ।
स गच्छेन्नरकं घोरं तिर्य्यग्योनौ च जायते ॥

आशौचादिवचनमपि दोषातिशयार्थमेव ।

अविशेषेणोक्तस्य शूद्रान्नप्रतिषेधस्य विषयविशेषमाह मनुः ।

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावैकरात्रिकं ॥

'अश्राद्धिनः' श्राद्धशब्देन पाकयज्ञादिक्रिया शूद्रस्य विहितोपलक्ष्यते । तेन तदुक्तसत्क्रियानुष्ठायिनः सच्छूद्रादन्यस्य यत्पक्वमन्नं तन्नाद्यात् । 'अश्रद्धिनः' इति वा पाठः अश्रद्दधानस्येत्यर्थः । 'आमं' अपक्वं धान्यतण्डुलादि, तच्च 'ऐकरात्रिकं' एकाहपर्याप्तं न बहु । 'अवृत्तौ' प्रकारान्तरेण वृत्त्यभावे सति ।

न शूद्रान्नमश्नीयादित्युक्तं तत्र प्रतिप्रसवार्थमाहतुर्मनु-विष्णू ।

अर्द्धिकः कुलमित्रञ्च गोपालो दास-नापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥

'अर्द्धिकः' यो भूमिकर्षणादिना सस्यार्द्धभागी । 'कुलमित्रं' पितृ-पितामहादिक्रमायातं । 'गोपालः' गवां पालनेन यो जीवति । 'दासः' गर्भदासादयः । दास-गोपालौ सम्बन्धिशब्दौ । यो यस्य दासः यश्च यस्य गाः पालयति स तस्य भोज्यान्नः । 'नापितः' चौरकर्मा । अहं त्वच्चरणः त्वयि संबद्धोवत्स्यामीत्येवं वाङ्मनःकायकर्मभिरात्मानं यो निवेदयति । शूद्रेष्विति निर्द्धारणे सप्तमी । तेन शूद्राणां मध्ये अर्द्धिकादयो भोज्यान्नाः नान्ये शूद्राः ।

आत्मनिवेदनमपि व्यक्तीकरोति मनुः ।

यादृशोऽस्य भवेदात्मा यादृशञ्च चिकीर्षितं ।
यथा चोपचरेदेनं तथात्मानं निवेदयेत् ।

यत्कुलीनो यश्च वेषो यच्छिल्पश्च चिकीर्षितं ॥

अनेन कार्य्येण लाभहमाश्रितो धर्म्मेणान्येन वा राजकुलरक्षादिना प्रयोजनेन यथा चोपचरेच्छिल्पेनानेन त्वां सेवे पादमर्दनादिना गृह-कृत्यकारित्वेन वा, एवं सर्वस्मिन्निवेदिते आत्मा निवेदितो भवति । अन्ये तु आत्मा वै पुत्र नामासीत्यपत्यवचनमात्मशब्दं मन्यमानाः यस्य शूद्रस्य कामतः प्रवृत्तौ दुहिता विवाह्यते तस्यानेन भोज्यान्नतोच्यत इत्याहुः। तदयुक्तं। न तावदयमात्मशब्दो दुहितरि स्पष्टं प्रयुक्तः, पुत्र-शब्दस्य पुंस्येव प्रसिद्धतरः। न च परोक्षशब्दोपदेशेन किञ्चित्प्रयोजन-मस्ति। तथा हि सति एतावदेव वक्तुं युक्तं दद्याद्दुहितरञ्च य इति। अन्ये त्वर्द्धिकादिग्रहणं सम्बन्धिशूद्रोपलक्षणार्थं वर्णयन्ति तेन पार-शवस्यापि शूद्रस्य भोज्यान्नता सिद्धा भवति।

याज्ञवल्क्यः ।

शूद्रेषु दास-गोपाल-कुलमित्रार्द्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥

'अर्द्धसीरी' सम्भूयसमुत्थापितया हलपर्यायसीरोपलक्षितकृषि-फलभागग्राही ।

यमः ।

कुलमित्रं चार्द्धसीरी गोपालो दास-नापितौ ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत् ॥

पैठीनसिः ।

दास-नापित-गोपाल-कुलमित्रार्द्धसीरिणः ।
एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत ॥

देवलः ।

स्वदासो नापितो गोपः कुम्भकार-कृषीवलौ ।
ब्राह्मणैरेव भोज्यान्नाः पञ्चैते शूद्रयोनयः॥

छागलेयः ।

गोप-नापित-कुम्भकार-कुलमित्रार्द्धिक-निवेदितात्मानो भोज्यान्नाः । शूद्राधिकारे गौतमः ।

पशुपाल-क्षेत्रिक-कुलसङ्गत-कारयितृ-परिचारका भोज्यान्नाः ।

'पशुपालः' गोपालः । 'क्षेत्रिकः' अर्द्धसीरी । 'कारयिता' नापितः । 'परिचारकः' दासः ।

सुमन्तुः ।

कृषि-गोपाल-क्षेत्रिक-परिचारक-नापित-निवेदितात्मानश्च भोज्यान्नाः॥

शाट्यायनिः ।

कुलमित्रं कुलपुत्रो भक्तदः शिष्यकः सुहृत् ।
भवेद्यस्य सुखं लाभे भये त्राता च यो भवेत् ।
एते तु शूद्रा भोज्यान्ना मनो यत्र विभाव्यते॥

'कुलपुत्रः' दासः । अन्ये तु कुलकर्षकः तत्पुत्रः कुलपुत्र इत्याहुः । 'विभाव्यते' प्रसीदति ।

इति भोज्यान्ननिरूपणं ।

अथद्रव्यशुद्धुरणायाः ।

तत्राशुद्धिर्नाम द्रव्यादेः स्पर्शनाद्यनर्हतापादको दोषविशेषः । शुद्धिस्तु संस्कारविशेषोत्पादिता तन्निवृत्तिः । शुद्धिमत एव च सकलकर्मोपयोगयोग्यत्वं ।

तदुक्तं ब्रह्माण्डपुराणे ।

श्रौतं स्मार्त्तं तथा कर्म कर्त्तव्यमधिकारिणा ।

शुचिना साधनैः शुद्धैः सम्यक्‌श्रद्धान्वितेन चेति ॥

अतो यथाशास्त्रं शुचिना शुचिभिरेव द्रव्यैः प्रचरणीयं । नन्वत्र किं शास्त्रेण, लोकव्यवहारेण प्रसिद्धत्वात् शुद्ध्यशुद्ध्योः, व्यवहरत्येव हि लोको जुगुप्सितमूत्रपुरीषादिसंस्पृष्टं द्रव्यमशुद्धमिति प्रक्षालनाद्यपनीतगन्धलेपञ्च शुद्धमिति । सत्यं। किन्त्वयं लोकव्यवहारः क्वचिदेव जुगुप्सितस्पर्शोपहत एव द्रव्ये न सर्वत्र । सामान्यतस्त्वसौ व्यवहारो न द्रव्यदेश-कालावस्थादिकृतभेदशुद्ध्यशुद्धितारतम्यविशेषेणापि । अतः सर्वत्र विशेषतश्च शुद्ध्यशुद्ध्योः शास्त्रादेव विनिश्चयः । यस्तु चण्डालस्पर्शादावपि विशेषतस्तु लोकव्यवहारः स तु शास्त्रमूलिकामेव सिद्धिमाश्रित्य(१) यागदानहोमादिषु श्रेयःसाधनत्वव्यवहारवत् । कथं पुनः कार्य्यार्थपरेण धर्मशास्त्रेण शुद्ध्यशुद्धिरूपस्य सिद्धार्थस्यावगतिः श्रुतार्थापत्त्येति ब्रूमः । तथा हि यथा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र क्षणिकानां यागानां श्रूयमाणकालान्तरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या सुकृतापूर्वसिद्धिः, यथा वा क्षणिकस्यावगोरणस्य श्रुतकालान्तरभाविशतयातनासाधनत्वान्यथानुपपत्त्या दुरितापूर्वसिद्धिः । तथा मूत्रपुरीषादिस्पृष्टेन न व्यवहर्त्तव्यं प्रक्षालनप्रोक्षणादिसंस्कारवता तु तेन व्यवहर्त्तव्यमिति श्रुतव्यवहारनिषेधतदभ्यनुज्ञान्यथानुपपत्त्या द्रव्यादिगतशुद्ध्यशुद्धिरूपसिद्धार्थकल्पना न विरुध्यते । अथवा शुद्ध्यशुद्धिस्मृतीनां सिद्धार्थ-

(१) शास्त्रमूलप्रसिद्धिमाश्रित्येति ग० ।

परत्वमेवास्तु । तासाञ्च तादृशमेव वेदवाक्यं मूलं कल्प्यते । स्मर्य्यमाणार्थानुसारिणी हि कल्पना । नास्ति नियमः कार्य्यार्थेनैव वेदवाक्येन भाव्यमिति ।

ननु सिद्धार्थानां स्मृतीनां शब्दस्मृतिवदनिन्द्यप्रथमवृद्धव्यवहारमूलत्वसम्भवात् किं वेदमूलत्वकल्पनया । मैवं । व्यवहारमूलत्वे विध्यानर्थक्यं स्यात् । कथं तर्हि "साधुभिर्भाषितव्यमसाधुभिर्न" इति पाणिनिस्मृतेरर्थवत्त्वं । कथं च स्वत्वविषये "स्वांशं हरेत्" इत्यस्य विधेः । उच्यते । या तावत्साधुभाषणनियमस्मृतिः सा न पाणिनेः किन्तु कल्पसूत्रकाराणां । या च "स्वांशं हरेत्" इति स्मृतिः, न तत्र विधिरस्ति यस्यानर्थक्यं स्यात् । न च लिङ्श्रुतेर्विधिकल्पना, प्राप्तकालादावपि लिङ्सम्भवात् । न चात्र विधेयमस्ति, अंशहरणस्य रागतः प्राप्तेः । हरेदिति च विधावहरणे प्रत्यवायः स्यात् । स्वांशमेव हरेदिति नियमे परांशं न वा हरेदिति परिसङ्ख्यायां भ्रातृभिरभ्यनुज्ञातमपि विभागरूपेणाधिकमंशं गृह्णन् प्रत्यवेयात् । यदि चेयं प्रतिषेधरूपा परिसङ्ख्या स्यात् तदा प्रतिषेधातिक्रमकृतं प्रत्यवायमभ्युपगम्य यः कश्चिदननुज्ञातमपि परांशं गृह्णीयात्तच तस्य स्वत्वं प्रसज्येत । न हि तदा परिग्रहादन्यत्स्वत्वकारणं किञ्चित्स्यात् । तथाच चौर्य्यादिनाप्यर्ज्येत धनं । अतश्च स्वांशं गृह्णीयादित्येषा स्मृतिः स्वांश एव स्वत्वं नान्यत्रेत्येतावन्मात्रप्रतिपादनपराध्यवसीयते । अतएव गौतमः स्वत्वमेवाह । "स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु" इत्यादि । तदेवमनिन्द्यप्रथमवृद्धव्यवहारसिद्धेऽर्थे नास्ति विधिः । इह तु प्रचालितेनैव व्यवहर्त्तव्यमिति नियमे विधिर्दृश्यते । अतो वेदमूलत्वकल्पना ।

ननु तर्हि व्यवहारनियमोऽस्तु वेदमूलः न शुद्धिस्वरूपं । मैवं । श्रुतार्थापत्तिकल्पितेन वाक्येन स्वरूपसिद्धिसम्भवात्। अतः शुद्ध्यशुद्धी उभे अपि शास्त्रावसेये। तदुक्तं। "शुद्ध्यशुद्धी ह्यदृष्टत्वाद्विज्ञायेते यथाश्रुति" इति। तदेवं वसाशुक्रमित्यादिभिरशुद्धिवचनैरशुद्धिर्गम्यते। जलेनैव विशुद्ध्यतीत्यादिभिश्च शुद्धिरवसीयते। अतोऽष्टकादिवद्विधिमूले एव शुद्ध्यशुद्धी। एतावांस्तु विशेषः। अष्टकादयः प्रधानविधिमूलाः शुद्ध्यशुद्धी संस्कारविधिमूले इति। शुद्धिवचनैश्चाशुद्धिरवगम्यते। शुद्धिर्हि मूत्राद्युपघातेनाशुद्धानां द्रव्याणां संस्काररूपा कर्त्तव्यतया विधीयते, न पुनरेवमेव प्रयुज्यमानानां। न हि सुवर्णादयो भावाः स्वभावेनाशुद्धाः। येन प्रयोगकाले शुद्धिमपेक्षेरन्। अथादृष्टार्थो दृष्टप्रयोगाश्रयः संस्कारो विधीयते प्राङ्मुखतेव भोजने। तन्न। तथा सति हि शुद्धिवचनं विरुध्येत। ये तु पात्राणां भोजनारम्भे सम्मार्जन-प्रक्षालने ते समाचारतो न पुनरस्याः शुद्धिस्मृतेः। अतः सिद्धं शुद्ध्यशुद्ध्योः शास्त्रगम्यत्वमिति।

इति शुद्ध्यशुद्ध्योः शास्त्रीयत्वनिरूपणं।

अथाध्यात्मशुद्ध्युपायाः।

तत्रोशनाः।

अत ऊर्द्धं शौचाध्यायं व्याख्यास्यामस्तत्र द्विविधं शौचं वाह्यमाभ्यन्तरञ्च। तत्राभ्यन्तरशौचं नाम यद्दुष्टाहङ्कारनिन्दितेभ्यो मनो निवर्त्तयेत्। वाह्यमपि गन्धलेपस्नेहोपघातेऽद्भिरनिष्टरूपस्पर्शगन्धनाशे प्रोक्षणाभ्युक्षणाच्छुचिरित्यशुचिप्रतिषेधः।

पुनरुशनाः ।

तत्र हृदयशौचमनुतप्तानां साधुता, कर्मशौचमगर्हितकर्मण्यता, शरीरशौचं मृद्भिरद्भिश्च, वाचामप्रियानृतनैष्ठूर्यवर्जनं, मनसो मिथ्या-सङ्कल्पप्रतिषेधः, बुद्धेर्ज्ञानं ।

बौधायनः ।

अथातः शौचाधिष्ठानं ।

अद्भिः शुद्ध्यन्ति गात्राणि बुद्धिर्ज्ञानेन शुद्ध्यति ।
अहिंसया च भूतात्मा मनः सत्येन शुद्ध्यति ॥

मनःशुद्धिरन्तःशौचं, बहिर्व्याख्यास्यामः ।

पुनर्बौधायनः ।

श्रूयते द्विविधं शौचं यच्छिष्टैः पर्युपासितं ।
वाह्यं निर्लेपनिर्गन्धमन्तःशौचमहिंसनं ॥

पुनर्बौधायनः ।

कालोग्निर्मनसः शुद्धिरुदकान्यनुलेपनं ।
अविज्ञानञ्च भूतानां षड्‌विधं शौचमुच्यते ॥
देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनं ।
उपपत्तिमवस्थाञ्च परिज्ञाय यथाविधि ॥
शौचज्ञः कुशलो धर्मे धर्मेप्सुः शौचमाचरेत् ।

शौचमित्यनुवृत्तौ हारीतः ।

पञ्चविधमाभ्यन्तरं भवति मानसञ्चाक्षुषं घ्राणं वाच्यं स्वाद्यञ्चेति ।

पुनर्हारीतः ।

अनिलानल-सोम-सूर्यांशु-काञ्चन-रजत-भस्म-तोय-ताम्रैः ।

अजमुख-बालगोमय-रजआद्यैः स्पर्शगुणैरिह मेध्यतां नयति ॥

कुल-श्रुत-शील-शौचाद्युद्धो धनजन-वस्त्र-भाजनैश्च विद्वान् ।

अतमोरजाः सत्त्वभावपरममचलं पदमाप्नुवीतेति ॥

शुद्धिरित्यनुवृत्तौ शङ्ख-लिखितौ ।

आत्मयाजिनां शरीरस्याद्भिर्मृद्भिश्च, ज्ञानेन बुद्धेः, तपसा पापानां, सन्तानजानां मातृपितृकाणां दोषाणां यम-नियम-मन्त्र-व्रतोपवासादिभिः ।

वशिष्ठः ।

कालोऽग्निर्मनसस्तुष्टिरुदकान्यवलेखनं ।

अविज्ञानञ्च भूतानां षड्विधा शुद्धिरिष्यते ॥

मनु-विष्णू ।

ज्ञानं तपोऽग्निराहारो मृन्मयो वार्य्युपाञ्जनं ।

वायुः कर्मार्ककालौ च शुद्धिकर्तॄणि देहिनां ॥

सर्वेषामेव शौचानामर्थशौचं परं स्मृतं ।

योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ॥

क्षान्त्या शुद्ध्यन्ति विद्वांसो दानेनाकार्य्यकारिणः ।

प्रच्छन्नपापा जाप्येन तपसा वेदवित्तमाः ॥

शोध्यं शुद्ध्यति मृत्तोयैर्नदीवेगेन शुद्ध्यति ।

रजसा स्त्री मनोदुष्टा सन्न्यासेन द्विजोत्तमाः ।

अद्भिर्गात्राणि शुद्ध्यन्ति मनः सत्येन शुद्ध्यति ॥

याज्ञवल्क्यः ।

कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जलम् ।

पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः ॥
अकार्य्यकारिणां दानं वेगो नद्याश्च शुद्धिकृत् ।
शोध्यस्य मृच्च तोयञ्च सन्न्यासो वै द्विजन्मनां
तपो वेदविदां क्षान्तिर्विदुषां वर्ष्मणो जलं
जपः प्रच्छन्नपापानां मनसः सत्यमुच्यते ॥
भूतात्मनस्तपो-विद्ये बुद्धेर्ज्ञानं विशोधनं ।
क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ॥

यमः ।

सत्यं शौचं तपः शौचं शौचमिन्द्रियसंयमः ।
सर्वभूतदया शौचं शौचमद्भिस्तु पञ्चमं ॥

तथा ।

कालाग्निमनसा शुद्धिरुदकेन तथा मृदा ।
अविज्ञानन्तु भूतानां षड्विधं शुद्धिलक्षणं ॥

तथा ।

गात्राण्यद्भिर्विशुध्यन्ति नदी वेगेन शुध्यति ।
रजसा शुध्यते नारी सन्न्यासेन द्विजोत्तमः ॥

तथा ।

गात्राण्यद्भिर्विशुध्यन्ति मनः सत्येन वाक्धिया ।
भूतात्मा तपसा बुद्धिर्ज्ञानेन क्षमया बुधः ॥

वृहस्पतिः ।

गात्रं मृदम्भसा शुध्येच्चित्तं भूतातिशंसनात् ।
विद्यया तपसा देही मतिर्ज्ञानेन शुध्यति ॥

स्वाध्यायेनानुतापेन होमेन तपसैव च ।
ध्यानेन क्षेत्रवासेन दानेनेह परिक्षयः ॥

तथा ।

परापवादाश्रवणं परस्त्रीणामदर्शनं ।
एतच्छौचं श्रोत्र-दृशोर्जिह्वाशुद्धिरपैशुनं ॥
अप्राणिवधमस्तेयं शुचित्वं पाद-हस्तयोः ।
असंश्लेषः परस्त्रीणां शारीरं शौचमिष्यते ॥

तथा ।

सबाह्याभ्यन्तरं शौचमेतदुक्तमशेषतः ।
सर्वस्यास्याधिकं प्रोक्तमर्थशौचं स्वयम्भुवा ॥

पैठीनसिः ।

उच्छिष्टोपेतोऽभ्युक्षणाच्छुचिर्विण्मूत्रं संस्पृश्योन्मृज्याचम्य प्रयतो भवति त्रिः प्रक्षाल्य च तं प्रदेशं ।

विष्णुः ।

प्राणिनामपि(१) सर्वेषां मृद्भिरद्भिस्तु कारयेत् ।
अत्यन्तोपहतानाञ्च शौचं नान्यदतन्द्रितः ॥

मनु-विष्णू ।

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि ॥
वसा शुक्रमसृङ्मज्जा मूत्रविट्कर्णविट्नखाः ।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥

---

(१) प्राणिनामथेति ग० ।

देवलः ।

तथा शरीरे श्रोत्रेभ्यो मलविष्यन्दविस्रवः ।
अन्नादीनां प्रदेशस्य स्यादशुचिर्विशेषतः ॥
पतिताशुच्यमेध्यानां स्पर्शनाच्चाशुचिर्भवेत् ।
स्वप्नाद्वस्त्रविपर्यासात् क्षुतात् बुद्धिपरिश्रमात् ॥
उक्तावाचमनं शुक्रमनृतं क्रूरमेव च ।
ईप्साविद्धं धनुर्लक्ष्यं दृष्ट्वा वाप्यशुचिर्भवेत् ॥
प्रलेप-स्नेह-गन्धानामशुचौ चापकर्षणं ।
शौचलक्षणमित्याहुर्मृदम्भो-गोमयादिभिः ॥
लेपे स्नेहे च गन्धे च व्यपकृष्टे च दूरतः ।
पश्चादाचमनञ्चापि शौचार्थं वक्ष्यते विधिः ॥

हारीतः ।

अत्र शारीरं दुष्टाभिशस्त-पतित-तिर्यग्गन्ध-वर्णोपहतानां संस्पर्शः । स्पर्शाच्चास्य स्वेद-तोय-पूय-शोणित-च्छर्दि-लाला-निष्ठीवित-रेणुक-र्दमोच्छिष्टजलविण्मूत्र-पुरीषादिभिर्वाह्यशरीरोपघातादिभिरुपपूताभिरद्भिर्मृद्भिश्च भस्म-गोमयौषधिमन्त्र-मङ्गलाचारविद्भिः प्रयुक्तैर्बाह्यशरीरोपघातात्पूतो भवति ।

विष्णुः ।

नाभेरधस्तात् प्रबाहुषु च कायिकैर्मलैः सुराभिर्मद्यैर्वोपहतौ मृत्तोयैस्तदङ्गं प्रक्षाल्यातन्द्रितः शुध्येत् । अन्यत्रोपहतौ मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन चक्षुःषूपहतस्तूपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्च ।

अङ्गिराः ।

ऊर्द्धं नाभेः करौ मुक्ता यदङ्गमुपहन्यते ।
तत्र स्नानमधस्तात्तु क्षालनेनैव शुध्यति ॥
इन्द्रिये तु प्रविष्टं स्यादमेध्यं यदि कर्हिचित् ।
मुखेऽपि संस्पृश्य मलं तत्र स्नानं विशोधनं ॥

शङ्खः ।

रथ्याकर्दमतोयेन ष्ठीवनाद्येन वा तथा ।
नाभेरूर्द्धं ततः(१) स्पृष्टा सद्यः स्नानेन शुध्यति ॥

यमः ।

सकर्दमे तु वर्षासु प्रविश्य ग्रामसङ्करं ।
जङ्घाभ्यां मृत्तिकास्तिस्रः पद्भ्याञ्च द्विगुणाः स्मृताः ॥

मनुः ।

दिवाकीर्त्तिमुदक्याञ्च सूतिकां पतितं तथा ।
शवं तत्स्पृष्टिनञ्चैव स्पृष्ट्वा स्नानेन शुध्यति ॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौर्यान्मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ।
नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुध्यति ॥
आचम्यैव तु निःस्नेहं गां स्पृष्ट्वा वीक्ष्य वा रविं ।
वान्तोविरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् ।
आचामेदेव भुक्तान्नं स्नानं मैथुनिनः स्मृतं ॥

'दिवाकीर्त्तिः' चण्डालः, 'तत्स्पृष्टी' चण्डालादिस्पृष्टेन यः स्पृष्टः ।

---

(१) नर इति ख० ।

स्नानञ्चाच सचेलं । 'वान्तोविरिक्तः' सञ्जातवमनविरेकः । स यदि भोजनादन्यदिवसे तर्हि स्नात्वा घृतप्राशनं, भोजनदिवसे चेदाचमनमात्रं कुर्यात् । मैथुनानन्तरमृतौ गर्भशङ्कायां स्नानं । "ऋतौ तु गर्भं शङ्कित्वा स्नानं मैथुनिनः स्मृतं । अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत्" ॥ इति शातातपस्मरणात् ।

तथा ।

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते ॥
शुना चैव श्वपाकेन मृतनिर्हारकेण वा ।
स्पृष्टमात्रस्तु कुर्वीत सचेलं प्लावनं जले ॥

बृहस्पतिः ।

दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्मणि ।
मैथुने कटधूमे च सद्यः स्नानं विधीयते ॥
उदक्या-पतितान्त्यानां स्पर्शे स्नानं विधीयते ।
वान्तोविरिक्तः स्नात्वा तु घृतप्राशनमाचरेत् ॥

तथा ।

पतितं सूतिकामन्त्यं शवं स्पृष्ट्वा तु कामतः ।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥
शवस्पृशन्दिवाकीर्त्तिं चितिं यूपं रजस्वलां ।
स्पृष्ट्वा प्रमादतो विप्रः स्नानं कृत्वा विशुध्यति ॥

याज्ञवल्क्यः ।

उदक्याशुचिभिः स्नायात्संस्पृष्टस्तैरुपस्पृशेत् ।

अप्लिङ्गानि जपेच्चैव गायत्रीं मनसा सकृत् ॥

उपस्पृशिरत्र स्नानार्थः, उदक्यादिस्पृष्टः स्नायात्। 'तैः' उदक्यादिस्पृष्टैः, संस्पृष्टोऽपि स्नायादिति वचनार्थः।

अङ्गिराः।

शवस्पृशं तथोदक्यां सूतिकां पतितं तथा।
स्पृष्ट्वा स्नानेन शुध्यन्ति सचेलेन न संशयः ॥

वृद्धशातातपः।

चण्डालं पतितं व्यङ्गमुन्मत्तं शवमन्त्यजं।
सूतकिं सूतिकां नारीं रजसा च परिप्लुतां ॥
श्व-कुक्कुट-वराहांश्च ग्राम्यान् संस्पृश्य मानवः।
सचेलं सशिराः स्नात्वा तदानीमेव शुध्यति ॥

देवलः।

श्वपाकं पतितं व्यङ्गमुन्मत्तं शवहारकं।
अशुद्धान् स्वयमप्येतानशुद्धश्च यदि स्पृशेत् ॥
विशुध्यत्युपवासेन पुनः कृच्छ्रेण वा पुनः।
उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः ॥
हस्तौ पादौ च तोयेन प्रक्षाल्याचम्य शुध्यति।

साक्षाच्चण्डालादिना यः स्पृष्टः स प्रथमः। चण्डालादिस्पृष्टेन स्पृष्टो द्वितीयः तेनापि स्पृष्टस्तृतीयः। एतेषां त्रयाणां स्नानेन शुद्धिः। वक्ष्यमाणगौतमवचनेऽस्यार्थस्य व्यक्तमेव प्रतीयमानत्वात्। तृतीयं यः

---

(१) कृत्वाग्निमिति ख०।

स्पृशति तस्य पाणिपादप्रक्षालनपूर्वकमाचमनमेव । यानि तु तृतीयस्याचमनविधायीनि वचनानि तान्यशक्तविषयाणीति वेदितव्यं ।

तथा ।

मानुषास्थि वसां विष्ठामार्त्तवं मूत्ररेतसी ।
मज्जानं शोणितञ्चापि परस्य यदि संस्पृशेत् ॥
स्नात्वा प्रमृज्य लेपादीनाचम्य स शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्जनात् ॥

छागलेयः ।

चण्डालं पतितं स्पृष्ट्वा सचेलो जलमाविशेत् ।
शवं तत् स्पृष्टिनञ्चैव चितिं यूपं रजस्वलां ॥

पराशर-बौधायनौ ।

चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत् ॥
दुःस्वप्नं यदि पश्येत्तु वान्ते च क्षुरकर्मणि ।
मैथुने कटधूमे च स्नानमित्यभिधीयते ॥
श्व-काकैरुपलीढ़स्य नखैर्विलिखितस्य च ।
अद्भिः प्रक्षालनं शौचमग्निना चोपचूलनम् ॥

हारीतः ।

श्वपचसूतिकप्रेतहारकशवानि संस्पृश्य देवीराप इत्येताभिरन्तर्जले स्नातः पूतोभवत्यजीर्णवान्त-श्मश्रुकर्मायोनिपशुदिवामैथुनगमनेन च ।

आह गौतमः ।

पतित-चण्डाल-सूतिकोदक्या-शवस्पृष्टि-तत्स्पृष्ट्युपस्पर्शनं तद्वा-न्यैः सहाश्रुपातं कृत्वा स्नानेनाकृतेऽस्थिसञ्चये सचेलस्नानेन ।

विष्णुः ।

चिताधूमावसेचने सर्वे वर्णाः स्नानमाचरेयुः । मैथुने दुःस्वप्ने वमनविरेकयोश्च श्मश्रुकर्मणि कृते च शवं स्पृष्ट्वा रजस्वलां श्वचण्डाल-यूपांश्च भक्ष्यवर्जं पञ्चनखशवं तदस्थि सस्नेहञ्च सर्वेष्वेतेषु स्नानेषु पूर्ववस्त्रं नाप्रक्षालितं बिभृयात् ।

अथ ब्रह्मचर्यानुवृत्तौ पैठीनसिः ।

स्कन्दने च्छर्दने सचेलस्नानमनुदकघृतप्राशनञ्च । काककेशमल-स्पर्शने सचेलं स्नानमनुदकमूत्रपुरीषकरणे सचेलस्नानं महाव्याहृति-होमश्च अस्नेहमस्थि संस्पृश्य अचेलस्नानं । सस्नेहमस्थि संस्पृश्य सचेलस्नानं महाव्याहृतिहोमश्च खरोष्ट्र-चण्डालस्पर्शने सचेलस्नानं ।

कश्यपः ।

अथ सांस्पर्शिकं व्याख्यास्यामः । चण्डाल-श्मशान-मृतहार-रज-स्वला-सूतिकासंस्पर्शने उदितास्तमिते स्कन्दित्वाक्षिस्पन्दने कर्णक्रोशने चितारोहणे यूपसंस्पर्शने चैव प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य सचेलं स्नात्वा पुनर्मनोजपात् महाव्याहृतिभिः सप्ताज्याहुतीर्जुहुयात् ततः शुद्धिर्भवति

यवनः । श्वानं श्वपाकं प्रेतधूमं देवद्रव्योपजीविनं ग्रामयाजकं यूपं चितिं चितिकाष्ठं समद्यभाण्डं सस्नेहं मानुषास्थि शवस्पृष्टं रजस्वलां महापातकिनं शवं स्पृष्ट्वा सचेलवासा अम्भोऽवगाह्य उत्तीर्याग्निमुप-स्पृशेत् । गायत्र्यष्टशतं जपेत् । घृतं प्राश्य पुनः स्नात्वा त्रिराचमेत् ।

शातातपः ।

शुनाघ्रातावलीढ़स्य नखैर्विलिखितस्य वा ।
अद्भिः प्रक्षालनं प्रोक्तमग्निना चोपचूलकम् ॥

आपस्तम्ब-बौधायनौ ।

शुनोपहतः सचेलोऽवगाहेत् । प्रक्षाल्य च तं देशमग्निना संस्पृश्य पुनः प्रक्षाल्य पादौ चाचम्य प्रयतो भवति ।

वृद्धशातातपः ।

अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति ।
तं स्पृष्ट्वान्यो न दुष्येत्तु सर्वद्रव्येष्वयं विधिः ॥

यस्य स्पर्शे आचमनमात्रं विहितं सोऽत्राशुचिशब्देनोच्यत इति भाष्यकारः । यद्यप्यत्राशुचिस्पृष्टस्पर्शिनः सर्वथा निर्दोषत्वमुच्यते तथापि समाचारादाचमनं विधेयम् ।

सम्वर्त्तः ।

श्व-वराह-खरानुष्ट्रान् वृक-गोमायु-वानरान् ।
काक-कुक्कुट-गृध्रांश्च स्पृष्ट्वा स्नानं समाचरेत् ॥

व्यासः ।

ग्राम-वानर-मार्जार-खरोष्ट्राणां शुनां तथा ।
सूकराणाममेध्यं वै स्पृष्ट्वा स्नायात् सचेलकं ॥

हारीतः ।

षण्ढकं कुक्कुटं काकं श्व-शृगाल-शिवा-वृकान् ।
चिति-यूप-श्मशानानि विड्वराह-खराशुचीन् ।
अवकीर्णिनमन्त्यञ्च स्पृष्ट्वा स्नानं विधीयते ॥

मार्कण्डेयपुराणे ।

अभोज्य-सूतिका-षण्ड-मार्जाराखु-श्व-कुक्कुटान्।
पतितापविद्ध-चाण्डाल-मृतहारांश्च धर्मवित्॥
संस्पृश्य शुध्यते स्नानादुदक्यामन्त्य-सूकरौ।
तद्वच्च सूतिकाशौचं दूषितौ पुरुषावपि॥

षट्त्रिंशन्मतेऽपि।

बुद्धान् पाशुपतान् जैनान् लोकायतिक-कापिलान्।
विकर्मस्थान् द्विजान् स्पृष्ट्वा सचेलो जलमाविशेत्।
कपिलां गां तु संस्पृश्य प्राणायामोऽधिको मतः॥

ब्रह्माण्डपुराणे।

शैवान् पाशुपतान् स्पृष्ट्वा लोकायतिक-नास्तिकान्।
विकर्मस्थान् द्विजान् शूद्रान् सवासा जलमाविशेत्॥

सम्वर्त्तः।

शूद्रोच्छिष्टं द्विजः स्पृष्ट्वा उच्छिष्टं शूद्रमेव वा।
शुचिमप्यवगाह्यैनं सचेलं स्नानमाचरेत्॥

छागलेयः।

स्पृष्ट्वा देवलकञ्चैव सवासा जलमाविशेत्।

विष्णुः।

नाभेरधः कराग्रं वा शुना यद्युपहन्यते।
प्रक्षाल्य तदवत्ताल्य पुनराचम्य शुध्यति॥
नाभेरूर्द्ध्वं शुना स्पृष्टो लिप्तो मेध्येन वा पुनः।
प्रमृज्य मृद्भिरङ्गानि(१) सचेलं स्नानमर्हति॥

---

(१) मृद्भिर्गात्राणीति गं।

शातातपः ।

रजकश्चर्मकश्चैव व्याध-जालोपजीविनौ ।
निर्णेजकः शौण्डिकश्च नटः शैलूषकस्तथा ॥
मुखेभगस्तथा श्वा च वनिता सर्व्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्राम्यकुक्कुट-सूकरौ ॥
एभिर्यदङ्गं स्पृष्टं स्याच्छिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्ताः प्रयता मताः ॥

जातूकर्ण्यः ।

ऊर्द्ध्वं नाभेः करौ मुक्त्वा यदङ्गं स्पृशते खगः ।
स्नानं तत्र प्रकुर्वीत शेषं प्रक्षाल्य शुध्यति ॥

कूर्मपुराणे

उच्छिष्टोऽद्भिरनाचान्तश्चाण्डालं स्पृशते द्विजः ।
प्रमादाद्वै जपेत्स्नात्वा गायत्र्यष्टसहस्रकं ॥
चाण्डाल-पतितादींस्तु कामाद्यः संस्पृशेद्द्विजः ।
उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये ॥

विष्णुः ।

उच्छिष्टेन तु संस्पृष्टे स्नानं येन विधीयते ।
तेनैवोच्छिष्टसंस्पृष्टे प्राजापत्येन शुध्यति ॥

सम्वर्त्तः ।

नीली-नीलिविकारांश्च मानुषास्थीन्यपि द्विजः ।
चण्डाल-पतितच्छायां स्पृष्ट्वा स्नानं समाचरेत् ॥

स्कन्दपुराणे ।

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः ।

शाण्डायनिः ।

अष्टम्याञ्च चतुर्दश्यां दिवा पर्वणि मैथुनं ।
कृत्वा सचेलं स्नात्वा तु वारुणीभिश्च मार्जयेत् ॥

अङ्गिराः ।

स्नानं रजस्वलायास्तु चतुर्थेऽहनि निर्दिशेत् ।
कुर्य्याद्रजसि निर्वृत्ते शौचार्थन्तु ततः पुनः ।
रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला ॥

रजोनिवृत्त्यनन्तरं पुनः स्नानेन साध्वी दैवादिकर्मयोग्येत्यर्थः । यत्पुनस्तस्यैव वचनं "शुद्धा भर्त्तुश्चतुर्थेऽह्नि स्नाता नारी रजस्वला । दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति" तद्रजोनिवृत्तिकालोपलक्षणार्थं ।

यदाह शङ्खः ।

साध्वाचारा न तावत्स्यात्स्नातापि स्त्री रजस्वला ।
यावत् प्रवर्त्तमानं हि रजो नैव निवर्त्तते ॥

'साध्वाचारा' कर्मयोग्या । स्पर्शयोग्या तु स्नानादनन्तरं भवत्येव । तदाह कात्यायनः ।

रजस्वला चतुर्थेऽह्नि स्नानाच्छुद्धिमवाप्नुयात् ।

यदा तु रोगेण रजो निःसरति तदा तु न तेनाशुद्धिरित्याह शङ्खः ।

रोगेण यद्रजः स्त्रीणामत्यर्थन्तु प्रवर्त्तते ।
अशुच्यो नैव तास्तेन येन वैकारिकं हि तत् ॥

एवमकालेऽपि रजोदर्शने द्रष्टव्यं ।

तथा च छागलेयः ।

अकाले यद्भवेत् स्त्रीणां रक्तमाहुर्मनीषिणः ।
काले तु यद्रजः प्रोक्तं तस्मात्तच्चैव सा शुचिः ॥

इत्यध्यात्मशुद्ध्युपायाः ।

अथ तैजसादिद्रव्यशुद्ध्युपायाः ।

तत्राह मनुः ।

एष शौचस्य वः प्रोक्तः शारीरस्य विनिर्णयः ।
नानाविधानां द्रव्याणां शुद्धेः शृणुत निर्णयं ॥
तैजसानां मणीनाञ्च सर्वस्याश्ममयस्य च ।
भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः ॥
निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति ।
अब्जमश्ममयञ्चैव राजतं चानुपस्कृतं ।
अग्नेश्चापाञ्च संयोगाद्धेमरूप्यञ्च सम्बभौ ॥
तस्मात्तयोः स्वयोन्यैव निर्णेको गुणवत्तरः ।
ताम्रायःकांस्यरौप्याणां त्रपुणः सीसकस्य च ।
शौचं यथार्हं कर्तव्यं क्षाराम्लोदकवारिभिः ॥
द्रव्याणाञ्चैव सर्वेषां शुद्धिरुत्पवनं स्मृतं ।
प्रोक्षणं संहतानाञ्च दार्व्वाणाञ्चैव तक्षणं ॥
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
चमसानां ग्रहाणाञ्च शुद्धिः प्रक्षालनेन तु ॥
चरूणां स्रुक्स्रुवाणाञ्च शुद्धिरुष्णेन वारिणा ।

स्फ्य-शूर्प-शकटानां च मुषलोलूखलस्य च ॥
अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससां ।
प्रक्षालनेन त्वल्पानामद्भिरेव विधीयते ॥
चेलवच्चर्मणां शुद्धिर्वैदलानां तथैव च ।
शाक-मूल-फलानाञ्च धान्यवच्छुद्धिरिष्यते ॥
कौशेयाविकयोरूषैः कुतपानामरिष्टकैः ।
श्रीफलैरंशुपट्टानां क्षौमाणां गौरसर्षपैः ॥
क्षौमवच्छङ्ख-शृङ्गाणां अस्थि-दन्तमयस्य च ।
शुद्धिर्विजानता[१] कार्या गोमूत्रेणोदकेन वा ॥
प्रोक्षणात् तृणकाष्ठानां पलालञ्च विशुध्यति ।
मार्जनोपाञ्जनैर्वेश्म पुनःपाकेन मृन्मयं ॥

यमः ।

सुवर्णस्याथ रूप्यस्य यज्ञेषु चमसस्य च ।
यतीनाञ्चैव पात्राणां अद्भिः शौचं विधीयते ॥

तथा ।

रजतस्य सुवर्णस्य ताम्रस्य त्रपुणस्तथा ।
रीत्ययः-कांस्य-सीसानां भस्मना शौचमुच्यते ॥
मणि-मुक्ता-प्रवालानां शङ्खानामुपलस्य च ।
अजानाञ्चैव सर्वेषामद्भिः शौचं विधीयते ॥
नदी शुध्यति वेगेन दारवं तक्षणेन च ।
फलमात्रस्य सर्वस्य वालरज्ज्वा प्रघर्षणं ॥

---

(१) शुचिर्विजानतेति गं ।

अभ्युक्ष्य तृणकाष्ठानां वैणवे गोमयेन च ।
मृन्मयानाञ्च सर्व्वेषां पुनर्दाहो विशोधनं ॥
द्रव्याणां संहतानाञ्च शुद्धिरद्भिर्म्मृदा तथा ।
सोमपानन्तु यत्पात्रमद्भिस्तच्छुद्धिमाप्नुयात् ॥
धान्यानां प्रोक्षणाच्छुद्धिरद्भिः प्रक्षालनेन वा ।
चेलवच्चर्म्मणां शुद्धिर्वैदलानां तथैव च ॥
शाक-मूल-फलानाञ्च पुष्पाणामासनस्य च ।
ऊर्णाकार्पासिकानाञ्च शुद्धिरद्भिर्म्मृदा सह ।
दुकूल-पट्ट-कौशेयाः शुद्ध्यन्त्यद्भिः सदैव तु ॥

तथा ।

कुतपानामरिष्टैस्तु श्रीफलैरंशु-पट्टयोः ।
कृष्णाजिनानां विल्वैश्च बालानां मृद्भिरम्भसा ॥
गोमूत्रेणास्थिदन्तानां क्षौमाणां गौरसर्षपैः ।
पांशुकं परिवर्त्तेन मृत्तिकाभिश्च काद्रवं ॥

वृहस्पतिः ।

अम्भसा हेमरूप्यायःकांस्यं शुद्ध्यति भस्मना ।
अम्लाम्भसा ताम्ररैत्यं पुनर्दाहेन मृन्मयं ॥
शाकमूलफलानान्तु शुद्धिः प्रक्षालनेन तु ।
दारुभूम्योस्तक्षणेन प्रोक्षणेन तृणोदके ॥
वस्त्रवैदलचर्म्मादेः शुद्धिः प्रक्षालनं स्मृतं ।
अतिदृष्टास्य तन्मात्रत्यागमुक्तिस्त्वान्यशुद्धये ।
अभ्युक्षणेन शुद्धिः स्यात् बहूनां धान्यवाससां ॥

प्रक्षालयेद्यज्ञपात्राण्यम्भसोष्णेन यत्नतः ।
गृहस्य मार्जनं लेपः शुद्धिः स्रावो द्रवस्य तु ।
शाकमूलफलानान्तु शुद्धिः प्रक्षालनेन तु ॥

याज्ञवल्क्यः ।

सौवर्णराजताब्जानामूर्द्ध्वपात्रग्रहाश्मनां ।
शाकरज्जुमूलफलवासोविदलचर्म्मणां ॥
पात्राणाञ्चमसानाञ्च वारिणा शुद्धिरिष्यते ।
चरुस्रुक्स्रुवसस्नेहपात्राण्युष्णेन वारिणा ॥
स्फ्यशूर्पाजिनधान्यानां मुसलोलूखलानसां ।
तक्षणं दारुशृङ्गास्थ्नां गोवालैः फलसम्भुवां ॥
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्म्मणि ।
सोषैरुदकगोमूत्रैः शुद्ध्यत्याविककौषिकं ॥
सश्रीफलैरंशुपट्टं सारिष्टैः कुतपं तथा ।
सगौरसर्षपैः क्षौमं पुनःपाकान्महीमयं ॥

तथा ।

त्रपुसीसकताम्राणां क्षाराम्लोदकवारिभिः ।
भस्माद्भिः कांस्यलोहानां शुद्धिः स्रावो द्रवस्य तु ॥

शङ्खः ।

अम्लोदकेन ताम्रस्य सीसस्य त्रपुणस्तथा ।
क्षारेण शुद्धिः कांस्यस्य लोहस्य च विनिर्द्दिशेत ॥
मुक्ताफलप्रवालानां शुद्धिः प्रक्षालनेन तु ।
अब्जानाञ्चैव भाण्डानां सर्व्वस्याश्ममयस्य च ॥

शाक-रज्जु-मूल-फल-वैदलानां तथैव च ॥
मार्जनं यज्ञपात्राणां पाणिना यज्ञकर्मणि ।
उष्णाम्भसा तथा शुद्धिं सस्नेहानां विनिर्दिशेत् ॥
शयनासन-यानानां स्फ्य-शूर्प-कटकस्य च ।
शुद्धिः संप्रोक्षणात् ज्ञेया पलालेन्धनयोस्तथा ॥
सर्षांर्जक्षारतोयेन वाससां शुद्धिरिष्यते ।
बहूनां प्रोक्षणाच्छुद्धिर्धान्यानाञ्च विनिर्दिशेत् ॥
शुद्धिर्द्रवाणां विज्ञेया नित्यमुत्पवनेन तु ।
प्रोक्षणात्संहतानाञ्च दारवाणां च तक्षणात् ॥
सिद्धार्थकानां कल्केन शृङ्गदन्तमयस्य च ।
गोवालैः फलपात्राणामस्थ्नां स्याच्छृङ्गवत्तथा ॥
निर्यासानां गुडानाञ्च लवणानां तथैव च ।
कुसुम्भ-कुङ्कुमानाञ्च ऊर्णा-कार्पासयोस्तथा ।
प्रोक्षणात्कथिता शुद्धिरित्याह भगवान् यमः ॥

तथा ।

मृन्मयं भाजनं सर्वं पुनःपाकेन शुध्यति ।

देवलः ।

हेम-स्फाटिक-रौप्याणां यज्ञेषु चमसस्य च ।
यतीनां चैव पात्राणामद्भिः शौचं विधीयते ॥

तथा ।

तान्तवं मलिनं पूर्वमद्भिः क्षारैश्च शोधयेत् ।
अंशुभिः शोषयित्वा वा वायुना वा समाहरेत् ॥

ऊर्णा-पट्टांशुक-क्षौम-दुकूलाविकचर्म्मणां ।
अल्पाशौचे भवेच्छुद्धिः कर्म्मभिः शोषणादिभिः ॥
तान्येवामेध्ययुक्तानि निषिच्यात् क्षारसर्षपैः ।
धान्यारिष्टक-कल्कैश्च रसैश्च फल-वल्कलैः ॥
तूलिकामुपधानानि पुष्परक्ताम्बराणि च ।
शोषयित्वातपे किञ्चित् करैरुन्मार्जयेन्मुहुः ॥
पश्चाच्च वारिणा प्रोक्ष्य शुचीन्येवमुदाहरेत् ।
तान्यप्यतिमलिष्टानि यथावत् परिशोधयेत् ॥
लोहानां दहनाच्छुद्धिः भस्मना गोमयेन च ।
दहनात् खननाद्वापि शैलानामम्भसापि वा ॥
काष्ठानान्तक्षणाच्छुद्धिर्म्मृद्गोमयजलैरपि ।
मृन्मयानान्तु पात्राणां दहनाच्छुद्धिरिष्यते ॥
सर्व्वद्रवाणां पक्वानां लवणस्य गुड़स्य च ।
नान्यच्छौचं परित्यागादशुद्धानामिति स्मृतिः ॥
तोयाभावे परस्पर्शे भूमिसंवेशनेऽपि च ।
कुण्डिकायाः परित्यागो दहनं वापदि स्मृतं ॥
द्रव्याणामवशिष्टानां तोयाग्निभ्यां विशोधनं ।
शोधनार्थं हि सर्व्वेषामुभयं ब्राह्मणैः स्मृतं ॥
श्वपाको यत्स्पृशेद्द्रव्यं मृन्मयं द्रवमेव वा ।
पक्वं वा भोज्यकल्पं वा तत् सर्वं परिवर्जयेत् ॥
उच्छिष्टाशुचिभिः स्पृष्टमद्रवं शोध्यतेऽम्भसा ।
ऊनं वापि प्रभूतं वा शोधयेत् प्रोक्षणादिभिः ॥

विष्णुः ।

सौवर्ण-राजताब्ज-मणिमयानां निर्लेपानामद्भिः शुद्धिरश्ममयानाञ्च चमसानां ग्रहाणाञ्च, चरुस्रुक्स्रुवाणामुष्णेनाम्भसा यज्ञकर्मणि । यज्ञपात्राणां पाणिसंमार्जनेन स्फ्य-शूर्प-शकट-मुषलोलूखलानां प्रोक्षणेन च । शयनयानासनानाञ्च बहूनां धान्याजिन-रज्जु-तान्तव-वैदल-सूत्र-कार्पासवाससाञ्च शाक-मूल-फल-पुष्पाणाञ्च तृण-काष्ठ-पलानाञ्च एतेषां प्रक्षालनेनाल्पानामूषैः, कौशेयाविकयोररिष्टकैः, कुतपानां श्रीफलैः, अंशुपट्टानाङ्गौरसर्षपैः, क्षौमाणां शृङ्गास्थि-दन्तमयानाञ्च पद्माचैः, मृगलोमिकानां ताम्र-रीति-त्रपु-सीसमयानां अम्लोदकेन, भस्मना कांस्यलोहयोः, तक्षणेन दारवाणां, गोवालैः फलसम्भवानां, प्रोक्षणेन संहतानां, उत्पवनेन द्रवाणां गुडादीनामिक्षुविकाराणां, प्रभूतानां गृहनिहितानां मृद्वार्य्यग्निदानेन, सर्व्वलवणानाञ्च पुनःपाकेन, मृन्मयानां द्रव्यवत्कृतशौचानां देवार्थानां भूयः प्रतिष्ठापनेन, असिद्धस्यान्नस्य यन्मात्रमुपहतन्तन्मात्रं परित्यज्य शेषस्य कण्डन-प्रक्षालने कुर्य्यात् ।

हारीतः ।

अथार्थशौचमद्भिः काञ्चन-राजतानां । तत्तद्गुण-वर्ण-स्नेह-वैवर्ण्योपहतानां यव-गोधूम-कलाय-माष-गोमयचूर्णैर्मार्जनं शोधनमद्भिः प्रक्षालनं स्यादम्ल-लवणाभ्यान्ताम्राणां, भस्मना कांस्यानां, शैल-तैल-घर्षणैः कार्ष्णायसानां, सिकतावघातन-घर्षणैः शैलानां, शैलावघर्षण-मार्जनैर्मणिमयानां, निर्लेखनैर्दारुमयानां, पुनःपाकान्मार्त्तिकानां । गोमूत्र-गोमय-विल्वैर्वैदलानां, गोवालरज्वा सोदकया फलपात्राणां ।

मार्जनं कमण्डलूनां यतिपात्राणाञ्च। क्षारोषाभ्यां कार्पास-शणमयानां, पुत्रजीवकारिष्टकैः क्षौमदुकूलानां, पुत्रजीवकोदश्विद्भिः चीराणां, श्रीफलैः श्वेतसर्षपैः कौशेयानां, मुदश्विद्वल्मीकमृदा सर्षपैरूर्णानां, स्नेह-सक्तु-कुल्माषोद्वर्त्तनैः गुरूणां।

गौतमः।

द्रव्यशुद्धिः परिमार्जन-प्रदाह-तक्षण-निर्णेजनानि तैजस-मार्त्तिक-दारव-तान्तवानां, तैजसवदुपल-मणि-शङ्ख-शुक्तीनां, दारुवदस्थि-भूम्योः, आवपनं च भूमेः, चैलवद्रज्जुविदलचर्म्मणां। उत्सर्गो वा। तैजस-मार्त्तिक-दारव-तान्तवानां भस्मपरिमार्जन-प्रदाह-तक्षण-धावनानि, तैजसवदुपल-मणीनां। मणिवच्छङ्खशुक्तीनां। दारुवदस्थ्नां। रज्जुविदलचर्मणाञ्चैलवच्छौचं। गोवालैः फलमयानां। गौरसर्षप-कल्केन क्षौमानां। तथा अद्भिरेव केवलं काञ्चनं पूयते तथा राजतं।

शङ्ख-लिखितौ।

अत ऊर्द्धं शौचविधिः। कारुहस्तः शुचिः। तथा करस्थद्रव्याणि च प्रोक्षितानि शुचीनि। आकरजातानान्त्वभ्यवहरणीयानां घृतेनाभिघारितानां शुद्धिः, प्लवनेन स्नेहानां, संहतानां मृद्भिरद्भिः, द्रवाणामुत्पवनं, शुष्काणामुद्धृतदोषाणां संस्कारः। परिस्रावितानां दोषाणां ततस्त्यागः। चैलानां मृद्भस्म-गोमूत्र-क्षारोदकैः। चैलवद्धान्यानां पत्र-चामर-चर्म-तृण-बालवैत्र-वल्कलजानाञ्च। सुवर्णरजतानां मृद्भिरद्भिः, भस्मना तैजसानामभ्यवहरणीयानां, पुनर्दाहो मृन्मयानां, परिलेखनं वैणवानां, तक्षणं दारवाणां, दारुवदस्थि-दन्त-शृङ्गाणां, तैजसवदुपल-मणि-शङ्ख-शुक्तीनां।

बौधायनः ।

तैजसानां पात्राणामसकृन्मृद्भस्मभिः परिमार्जनमन्यतमेन वा । ताम्र-रजत-सुवर्णानामम्लैः । अमत्राणां दहनं । वैणवानां गोमयेन । फलमयानां गोबालरज्वा । कृष्णाजिनानां विल्वतण्डुलैः । कुतपानामरिष्टैः । ऊर्णवानामादित्येन । क्षौमाणाङ्गौरसर्षपकल्केन । मृदा चैलानां । चैलवच्चर्मणां । तैजसवदुपल-मणीनां । दारुवदस्थ्नां । क्षौमवच्छङ्ख-शृङ्ग-शुक्ति-दन्तानां पयसा वा चक्षुर्घ्राणानुकूल्याद्वा ।

पैठीनसिः ।

चमसानाञ्चोच्छिष्टगन्ध-हिरण्य-रजत-ताम्राणामलेपानामद्भिः, सलेपानां गोमयेन । भिन्नमभिन्नमिति न दोषः । कार्ष्णायसानां सिकताभिः । दाहेन मृन्मयानां । अद्भिः शैलानां । त्रपुसीसकानां गोमयतुषैः । कांस्यं भस्मना । काष्ठमयन्तक्षणेन । क्षीरोदकाभ्यां शङ्ख-शुक्ती । वस्त्राणां निर्णेजनेन । चैलवदुपल-मणीनां । कृष्णाजिनानां गौरसर्षपैः । गवाजिवस्ताजिनानां विल्वतण्डुलैः । कुतपानामरिष्टैः ।

उशनाः ।

काष्ठानां परिलेखनं । फल-मूल-पुष्प-भूमि-तृण-दारु-पलाल-धान्यानां अभ्युक्षणं । रज्जु-वैणव-यज्ञ-चर्म-कार्पासिक-क्षौम-दुकूल-चीनांशुक-पट्टकौशेयोर्णकानामद्भिरेव प्रक्षालनं । सुवर्ण-रजत-ताम्र-लोह-त्रपु-सीसकानामद्भिरेव भस्मसंयुक्ताभिः, मणिमयानामद्भिरेव मृत्संयुक्ताभिः, तैजसानाञ्चोच्छिष्टानां भस्मना त्रिः प्रक्षालनं । फल-मयानां गोबालरज्वा । वैणवानां गोमयेन । कृष्णाजिनानां विल्व-तण्डुलैः । कुतपानामरिष्टैः । कौशेयानां गौरसर्षपकल्केन । मृद्भि-श्चान्येषां वाससां ।

सुमन्तुः ।

मणि-कनक-रजत-शङ्ख-शक्त्युपल-प्रवालानां प्रमार्जनं शुद्धिः। वस्त्र-विदल-रज्जु-चर्मणामद्भिः प्रक्षालनं। भूम्यस्थि-काष्ठानां तक्षणं। मृत्पात्र-लोहानामग्निनोत्तापनं। सीस-त्रपु-कांस्य-ताम्रायसकुद्दाला-नामुदकभस्मभ्यां त्रिःप्रमार्जनाच्छुद्धिः। गोबालरज्ज्वा पुष्पफलानां। अन्यत्र शकुनोच्छिष्टेभ्यस्तेषामदोषः। श्वदष्टानाञ्च मांसादीनां स्रुक्-स्रुवाणामन्येषाञ्च भाण्डानां उष्णेन वारिणा शौचं। तैजसानाञ्च शृङ्ग-जतु-चर्म-चीर-वेणु-फलवल्कलानामद्भिः प्रक्षालनं।

कश्यपः।

अथ पात्राणां शौचविधिं व्याख्यास्यामः। परिलेखनं दारुपात्राणां। औपलानां घर्षणं। मृन्मयानां पुनर्दाहः। रीतीनां परिमार्जनं। भस्मना कांस्य-त्रपु-सीसक-ताम्रायसानां। सिकताभिर्दन्त-शृङ्ग-शङ्ख-शुक्ति-मणीनां। वस्त्र-राजत-सौवर्णानामद्भिः शौचं। तृण-काष्ठ-रज्जु-भूर्जशाण-क्षौम-चीर-चर्म-वेणु-वैदलपत्रवल्कलानाञ्चैलव-च्छौचं। अत्यन्तोपहतानां परित्यागो विधीयते।

हारीतः।

पयसा दन्तानां। क्रीतानामवहननिष्ठ्यवनैः। व्रीहि-यव-गोधू-मानां घर्षण-दलन-पेषणैः। शिविधान्यानां खण्डन-विमृशनप्रक्षालनैः। फलीकृतानां घर्षण-प्रक्षालन-पर्य्यग्निकरणैः। शाक-मूल-फलानां भूस्य-ग्रहण-प्रक्षालनैः इक्षुकाण्डानाञ्च। विधिविधानात् यज्ञद्रव्यहविष्यस्य। उत्पवनमेव स्नेहानां। पुनःपाकः कृतलवणानां। पुक्कसादिभिः स्पृष्टानां भूस्थानां तृण-काष्ठानामादित्यदर्शनाच्छौचं।

आपस्तम्बः ।

अनाघ्रीते मृन्मये भोक्तव्यमाघ्रीतञ्चेदभिदग्धे परिमृष्टं लोहं प्रयतं विलिखितं दारुमयं यथागमं यज्ञे तापनीयमश्नीयात् ।

तथा ।

रसानाममांसमधुलवणानीति परिहाप्य तैल-सर्पिषी तूपयोजयेदुदकेऽवधाय ।

शातातपः ।

गवाघ्रातेषु कांस्येषु शूद्रोच्छिष्टेषु वा पुनः ।
दशभिर्भस्मभिः शुद्धिः श्व-काकोपहतेषु च ॥

शङ्ख-लिखितौ ।

चमसानामद्भिर्यज्ञसोमैकशौचमध्वरेषु चमसवद्यतिपात्राणां यतिसमयपात्राणां भस्मोदकेन परिघर्षयेत् ।

बौधायनः ।

वचनात् यज्ञे चमसपात्राणां न सोमेनोच्छिष्टा भवन्तीति श्रुतिः।

पैठीनसिः ।

यतिपात्राणामद्भिः शौचं।

उशनाः ।

यज्ञे चमसपात्राणां नोच्छिष्टं न सोमेनोच्छिष्टं भवतीति श्रुतिः ।

बौधायनः ।

आसनं शयनं यानं गवां पन्थास्तृणानि च ।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च॥
आत्मशय्यासनं वस्त्रं जायापत्यं कमण्डलुः ।

शुचीन्यात्मन एतानि परेषामशुचीनि तु ॥

शङ्खः।

स्वभार्य्या-शिशु-वस्त्रं स्वमुपवीतं कमण्डलुः।

आत्मनः कथितं शुद्धं न तु शुद्धं परस्य तु ॥

दुष्टाभिशस्त-पतित-तिर्य्यगन्त्यवर्णोपहतानीत्यनुवृत्तौ।

हारीतः।

पानशयनासनानि परिहार्य्याण्येके मन्यन्ते। तत्र वर्णविशेषाच्छुष्क-मलिनसंसर्गदर्शनात् पादोपसर्गाद्व्याधिसंक्रमणयोगाच्च। तस्मात् पृथक् शौचाः श्रेयांस इति। स्नानुपपत्तौ शुच्यन्तर्वासः समामनन्ति, सचैलं संस्पर्शे स्नानमेवं ह्याह। आसनं शयनं पानमन्तर्द्धाय समाचरेत्।

बौधायनः।

असंस्कृतानां भूमौ न्यस्तानां तृणानां प्रक्षालनं नरोत्वाहृतानामभ्यु-क्षणं। एवं क्षुद्रसमिधां महतां काष्ठानामुपघाते प्रक्षाल्यावशोषणं, दारुमयानां पात्राणामुच्छिष्टसमन्वारब्धानामुल्लेखनं उच्छिष्टलेपो-पहतानामेव तक्षणं। मूत्र-पुरीष-लोहित-रेतःप्रभृतिभिरुत्सर्गः मृन्म-, यानां, पात्राणामुच्छिष्टसमन्वारब्धानामवज्वलन उच्छिष्टलेपोपहतानां पुनर्दहनं। मूत्र-पुरीष-लोहित-रेतःप्रभृतिभिरुत्सर्गः। तदेतदन्यत्र निर्देशात् यथैतदग्निहोत्रे च धर्मोच्छिष्टे च दधिधर्मे च कुण्डपायि-नामयने चोत्सर्गिणामयने च दाक्षायणयज्ञे चेडादौ च चतुश्चक्रे च ब्रह्मचक्रे च ब्रह्मोदनेषु च तेषु सर्वेषु दर्भैरद्भिः प्रक्षालनं सर्व्वेषु च सोमभ-क्ष्येष्वद्भिरेव मार्जारलीढे प्रक्षालनं मूत्र-पुरीष-लोहित-रेतःप्रभृतिभि-रुत्सर्गः। तैजसानां पात्राणामुच्छिष्टोपहतानान्तु त्रिःसप्तकृत्वः परि-

मार्जनं परिमार्जनद्रव्याणि गोशकृन्मृद्भस्मानि । मूत्र-पुरीष-लोहित-रेतःप्रभृत्युपहतानां पुनःकरणं गोमूत्रे वा सप्तरात्रं परिशायनं । महानद्याञ्चैवमश्ममयानामलावु-बिल्व-वैदलानां गोवालैः परिमार्जनं । नलवेणु-शर-कुशच्युतानां गोमयेनाद्भिरिति प्रक्षालनं । व्रीहीणामुपघाते प्रक्षाल्यावशोषणं । तण्डुलानामुत्सर्ग एव ।

पैठीनसिः ।

काष्ठं तृणं चाण्डालादिस्पृष्टमादित्यदर्शनात्पूतं भवति ।

आपस्तम्बः ।

गूढः प्रस्तरे वासः स्पृशन्नन्यानप्रयतानप्रयतो मन्येत तयोस्तृणकाष्ठेषु निखातेषु प्रोक्ष्य वास उपयोजयेत् ।

बौधायनः ।

परिहितमधिरूढप्रक्षालितप्रावरणं नापक्षुलितं मनुष्यसंयुतं देवत्रायुञ्जते ।

अङ्गिराः ।

शौचं महस्ररोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः ।
रेतःस्पृष्टं शवस्पृष्टमाविकं नैव शुध्यति ॥
शयनासन-यानानि रोमबद्धानि यानि तु ।
वस्त्राण्येतानि सर्वाणि संहतानि प्रचक्षते ॥

चैलानामित्यनुवृत्तौ

शङ्ख-लिखितौ ।

सर्वेषामापो मृदरिष्टकेङ्गुद-बिल्व-तण्डुल-सर्षप-कल्क-क्षार-गोमूत्र-गोमयादीनि शौचद्रव्याणि संहतानां प्रोक्षणमित्येके ।

मनुः ।

यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।
तावन्मृद्वारि देयं स्यात् सर्वासु द्रव्यशुद्धिषु ॥

गौतमः ।

लेपगन्धापकर्षणे शौचममेध्यलिप्तस्याद्भिर्मृदा च ।

याज्ञवल्क्यः ।

अमेध्याक्तस्य मृत्तोयैः शुद्धिर्गन्धापकर्षणात् ।
वाक्शस्तमम्बुनिर्णिक्तमज्ञातञ्च सदा शुचिः ।

मनु-वसिष्ठ-बौधायनाः ।

त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयत् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥

पैठीनसिः ।

शुचिरित्यशुचिरिति प्रतिषेधो वागदुष्टानि वर्जयेत् वाक्प्रशस्तानि च कुर्वीत ।

हारीतः ।

उपघातवशं शौचं प्रतिघातलक्षणं गन्धलेपापकर्षणं द्रव्यस्य भावशुद्धिः शौचं बाह्यार्थेषु ।

वृद्धशातातप-हारीतौ ।

शोधितानान्तु पात्राणां यद्येकमशुचिर्भवेत् ।

इति तैजसादिद्रव्यशुद्ध्युपायाः ।

अथात्यन्तोपहतद्रव्यशुद्ध्युपायाः ।

तत्र विष्णुः ।

शारीरैर्मलैः सुराभिर्मद्यैर्यदुपहतन्तदत्यन्तोपहतं । अत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रक्षिप्तं शुध्येत । मणिमयमश्ममयमब्जञ्च सप्तरात्रं महीनिखननेन । शृङ्गदन्तास्थिमयं सन्तक्षणेन । दारवञ्च मृन्मयञ्च जह्यात् । अत्यन्तोपहतस्य प्रक्षालितस्य चिरवद्य तत् छिन्द्यात् ।

हारीतः ।

अत्यन्तोपहतानां सर्वतैजसानामग्निना शौचं । मृन्मय-चर्मणान्त्यागः । तन्मात्रच्छेदनमित्येके वाससां । नववाससां धारणं हि शौचमित्याचार्याः । तस्मात्सर्ववाससामाप्लवनादेव शुद्धिः ।

शङ्खलिखितौ ।

तैजसानां कुणप-रेतो-मूत्र-पुरीषोपहतानामावर्त्तनमुल्लेखनं भस्मना त्रिःसप्तकृत्वः परिमार्जनमुच्छेदनं तन्मात्रच्छेदनं वा ।

बौधायनः ।

मूत्र-पुरीषासृक्कुणपस्पृष्टानां पात्राणां पूर्वोक्तानामन्यतमेन त्रिःसप्तकृत्वः परिमार्जनमतैजसानामेवम्भूतानामुत्सर्गः ।

पुनर्बौधायनः ।

क्षौमानि वासांसि तेषामलाभे कार्पासिकान्यौर्णिकानि भवन्ति । मूत्र-पुरीष-लोहित-रेतःप्रभृत्युपहतानां मृदाद्भिरिति प्रक्षालनं, वासोवत्तार्ण-वल्कानां वल्कलवत् कृष्णाजिनानां ।

शङ्ख-वसिष्ठ-कश्यपाः ।

मद्यैर्मूत्र-पुरीषैश्च श्लेष्म-पूयाश्रुशोणितैः ।
संस्पृष्टं नैव शुध्येत पुनःपाकेन मृन्मयं ॥
एतैरेव तथा स्पृष्टं ताम्र-सौवर्ण-राजतं ।

शुध्यत्यावर्त्तितं पश्चादन्यथा केवलाम्भसा ॥

यमः ।

अलाबु-दारुपात्राणां वैदलानां तथैव च ।
अत्यन्तोपहतानाञ्च परित्यागो विधीयते ॥

तथा ।

अत्र मूत्र-पुरीषाभ्यां रेतसा रुधिरेण वा ।
चैलं यदुपहन्येत पुनः प्रक्षालयेत्तु तत् ॥
यदम्भसा न शुध्येत्तु वस्त्रञ्चोपहतं दृढं ।
छेदनं तस्य दाहो वा यन्मात्रमुपहन्यते ।
मृत्तिकाक्षारपातेन अशुद्धं तत् परित्यजेत् ॥

बृहस्पतिः ।

वस्त्र-वैदल-चर्माद्ये शुद्धिः प्रक्षालनं स्मृतं ।
अतिदुष्टस्य तन्मात्रं त्यजेच्छित्त्वात्मशुद्धये ॥

उशनाः ।

मूत्र-पुरीष-रेतो-रक्तोपहतानामत्यन्तोत्सर्गः ।

देवलः ।

दूषितं वर्जितं दुष्टं कश्मलञ्चेति लिङ्गिनां ।
चतुर्विधममेध्यञ्च सर्वं व्याख्यास्यते पुनः ॥
शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्य-भोज्य-पेयानि वर्जितानि हि वक्ष्यति ॥
न्यङ्कुः पतित-चण्डालौ ग्राम्यसूकर-कुक्कुटौ ।
श्वा च नित्यं विसर्ज्याः स्युः षड़ेते धर्मतः समाः ॥

सव्रणः सूतकी सूती मत्तोन्मत्त-रजस्वलाः ।
मृतबन्धुरशुद्धश्च वर्ज्यान्यष्टौ स्वकालतः ॥
स्वेदाश्रुविन्दवः फेणो निरस्तं नखरोम च ।
आर्द्रचर्मासृगित्येतत् दुष्टमाऊर्द्दिजातयः ॥
मानुषास्थि कफो विष्ठा रेतो मूत्रार्त्तवानि च ।
कुणपं पूयमित्येतत् कश्मलञ्चेत्युदाहृतं ॥
दूषितप्रोक्षणेनापि[१] शुद्धिरुक्ता विधानतः ।
दुष्टैर्मार्जन-संस्कारैः कश्मलैः सर्वथा भवेत् ॥

इति अत्यन्तोपहते द्रव्ये शुद्ध्युपायाः ।

अथ भूशुद्ध्युपायाः ।

तत्राह मनुः ।

सम्मार्जनेनाञ्जनेन सेकेनोल्लेखनेन च ।
गवाञ्च परिवासेन भूमिः शुध्यति पञ्चधा ।

यमः ।

खननात् पूरणाद्दाहाल्लेपनादभिघर्षणात् ॥
गोभिराक्रमणात् कालाद्भूमिः शुध्यति सप्तभिः ॥

देवलः ।

पञ्चधा वा चतुर्द्धा वा भूरमेध्या विशुध्यति ।
दुष्टा द्विधा त्रिधा वापि शोध्यते मलिनैकधा ॥
दहनं खननं भूमेरुपलेपन-वापने ।
पर्जन्यमार्जनञ्चेति शौचं पञ्चविधं स्मृतं ॥

---

(१) दूषितप्रोक्षितेनापीति ख० ।

प्रसूते गर्भिणी यत्र म्रियते यत्र मानुषः ।
चण्डालैरुषितं यत्र यत्रोपन्यस्यते शवं ॥
विण्मूत्रे वहतो यत्र कुणपं यत्र दृश्यते ।
एवं कल्मषभूयिष्ठा भूरमेध्येति लक्ष्यते ॥
कृमि-कीट-पतङ्गाद्यैर्दूषिता यत्र मेदिनी ।
द्रव्यैः प्रकर्षोच्छिष्टैर्वा वान्तैर्वा दुष्टतां व्रजेत् ॥
नख-दन्त-तनूज-त्वक्तुष-पांसु-रजोमलैः ।
भस्म-पङ्क-तृणैर्वापि प्रच्छन्ना मलिना भवेत् ॥

बौधायनः ।

घनाया भूमेरुपघाते उपलेपनं सुषिरायाः कर्षणं, आच्छिन्नाया मेध्यमाहृत्य प्रच्छादनं, चतुर्भिः शोध्यते भूमिः गोभिराक्रमणात् खननाद्दहनादभिघर्षणात्पञ्चमाच्चोपलेपनात् षष्ठात्कालात्।

वसिष्ठः ।

भूमिस्तु संमार्जन-प्रोक्षणोपलेपनोल्लेखनैर्यथास्थानं दोषविशेषात् प्रायत्यमुपैति । अथाप्युदाहरन्ति । "खननाद्दहनाद्वर्षाद्गोभिराक्रमणा-दपि चतुर्भिः शोध्यते भूमिः पञ्चमादुपलेपनात्" इति ।

शुद्ध्यनुवृत्तौ शङ्ख-लिखितौ ।

कर्षणमुपलेपनमद्भिरभ्युक्षणं कालो दाहश्च भूमेः ।

हारीतः ।

खननात् पूरणाद्दाहाल्लेपनादभिघर्षणात् ।
गोभिराक्रमणात् कालात् भूमिरेतैर्विशुध्यति ॥

याज्ञवल्क्यः ।

भूशुद्धिर्मार्जनाद्दाहात् कालाद्गोक्रमणात्तथा[१] ।
सेकादुल्लेखनाल्लेपात् गृहं मार्जन-लेपनात् ॥

विष्णुः ।

मार्जनोपाञ्जनैर्वेश्म प्रोक्षणेन च पुस्तकं ।
मार्जनेनाञ्जनेनापि सेकेनोल्लेखनेन च ॥
दाहेन च भुवः शुद्धिर्वासेनाप्यथवा गवां ।
गावः पवित्रं मङ्गल्यं गोषु लोकः प्रतिष्ठितः ॥
गावो वितन्वते यज्ञं गावः सर्वाघसूदनाः ।
गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना ॥
षड़ङ्गमेतत् परमं मङ्गल्यं सर्वदा गवां ।
शृङ्गोदकं गवां पुण्यं सर्वाघविनिषूदनं ॥

मनु-बौधायनौ ।

भूमेस्तु संमार्जन-प्रोक्षणोपलेपनोपस्तरणैर्यथास्थानं दोषविशेषात् प्रायत्यं । यथाचाप्युदाहरन्ति ।

गोचर्ममात्रमब्बिन्दुर्भूमेः शोधयति पातितः ।
समूढमसमूढं वा यत्र लेपो न दृश्यते ॥

गौतमः ।

दारुवदस्थि-भूम्योरावपनञ्च भूमेः ।

शङ्खः ।

मार्जनाद्वेश्मनां शुद्धिः क्षितौ शोधनतक्षणं ।

---

(१) कालाद्गोक्रमणादपीति ग० ।

वृहस्पतिः ।

गृहस्य मार्जनं लेपः शुद्धिः शावो द्रवस्य तु ।

यमः ।

ब्राह्मणावसथे भूमिर्देवागारे तथैव च ।
मेध्याश्चैव सदा मन्ये गवां गोष्ठे च या भवेत् ॥

पराशरः ।

रथ्या-कर्दम-तोयानि नावः पन्थास्तृणानि च ।
स्पर्शनान्न प्रदुष्यन्ति पक्वेष्टकचितानि च ॥
वापी-कूप-तडागेषु उद्यानोपवनेषु च ।
त्रिःसप्तमार्जनं कृत्वा एवं शौचं विधीयते ॥

याज्ञवल्क्य-विष्णू ।

रथ्या-कर्दम-तोयानि स्पृष्टान्यन्त्य-श्व-वायसैः ।
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ॥

तथा ।

पन्थानश्च विशुध्यन्ति सोम-सूर्यांशु-मारुतैः ।

शातातपः ।

वल्मीकादुत्करात्लेपाज्जलाच्च पथिवृत्तयोः ।
कृतशौचावसिष्टाश्च न ग्राह्याः सप्तमृत्तिकाः ।
शुचौ देशे च संग्राह्याः सकण्टाश्मादिवर्जिताः ॥

इति भूशुद्ध्युपायाः ।

अथ पक्वान्नशुद्ध्युपायाः ।

तत्र शातातपः ।

केश-कीटहताघ्रातं वायसोपहतञ्च यत् ।
क्लीवाभिशस्त-पतितैः सूतिकोदक्य-नास्तिकैः ॥
दृष्टं वा स्याद्यदन्नन्तु तस्य निष्कृतिरुच्यते ।
अभ्युक्ष्य किञ्चिदुद्धृत्य तद्भुञ्जीताविशङ्कितः ॥
भस्मना वापि संस्पृश्य संस्पृशेदुल्मुकेन वा ।
सुवर्ण-रजताभ्याञ्च भोज्यं घ्रातमजेन वा ॥
घृतं सपायसं क्षीरं तथैवेक्षुरसो गुड़ः ।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

केशादीनां वायसान्तानां सूतिकोदक्ययोश्च द्वन्द्वैकवद्भावः । 'उदक्या' रजस्वला । 'निष्कृतिः' शुद्धिः । यावन्मक्षिकादिसंस्पृष्टं तत् सन्निहितेन कियतापि सहोद्धृत्य वक्ष्यमाणमन्त्रैः सलिलेनाभ्युक्ष्य ततो भस्मनोल्मुकेन वा संस्पृश्य ततः सुवर्णेन रजतेन वा संस्पृशेत्, अजेन वा घ्रापयेत् । 'पायसाः' पयोविकाराः दध्यादयः ।

अत्राभोज्यमित्यनुवृत्तौ वशिष्ठः ।

यद्दसन-केशकीटोपहतञ्च काममन्नु केशकीटानुद्धृत्याद्भिः प्रोक्ष्य भस्मनावकीर्य्य वाचा प्रशस्तमुपभुञ्जीत, निर्दोषमिदं पूतमिदं इदानीं सक्तमिति वाचा प्रशंसनीयं ।

बौधायनः ।

त्वक्-केश-कीट-रोम-नखान्याखुपुरीषाणि दृष्ट्वा तद्देशपिण्डान्न-मुद्धृत्याद्भिरभ्युक्ष्य भस्मनावकीर्य्याभिघार्य्य पुनरपि प्रोक्ष्य वाचा प्रशस्तं ॐ भूर्भुवःस्वरित्युपष्टात् ध्यात्वा पुनरेवमुपभुञ्जीत ।

'आखुपुरीषं' मूषकस्य शकृत्। तद्देशस्थितं ग्रासमात्रमन्नमुद्धृत्यावातादिभिः संस्कुर्य्यात्।

पैठीनसिः।

केश-कीट-गवाघ्रातमन्नं हिरण्येन भस्मना स्पृष्टं प्रोक्षितञ्च।

उपभुञ्जीतेतिशेषः।

यमः।

शुक्तानि हि द्विजोऽन्नानि न भुञ्जीत कदाचन।
प्रक्षालयित्वा निर्दोषाण्यापद्धर्मो यदा भवेत्॥
मसूर-माष-संयुक्तं तथा पर्य्युषितञ्च यत्।
तत्तु प्रक्षालितं कृत्वा भुञ्जीत ह्यभिघारितं॥

'माषाः' राजमाषाः।

तथा।

मक्षिका-केशमन्नेषु पतितं यदि दृश्यते।
मूषकस्य पुरीषं वाक्षुतं यच्चावधूनितं।
भस्मना स्पृश्य वाश्नीयादभ्युक्ष्य सलिलेन वा॥

क्षुतेनाक्रान्तम् 'आक्षुतं'। 'अवधूनितं' वस्त्रेणेति शेषः।

तथा।

अवक्षुतं केश-पतङ्ग-कीटैरुदक्यया वा पतितैश्च दृष्टं।
अलात-भस्माम्बु-हिरण्य-काग्रैः संस्पृष्टमन्नं मनुराह भोज्यं॥

तथा।

वाक्यशस्तानि भुञ्जीत वागदुष्टानि विवर्जयेत्।
शुचीनि ह्यन्न-पानानि वाक्शस्तानि न संशयः॥

तथा।

मक्षिका मशका दंशा घुणाः सूक्ष्माः पिपीलिकाः ।
आमिषामेध्यसेवी च नैते कीटा विपत्तयः ॥

मनु-विष्णू ।

पक्षिजग्धङ्गवा घ्रातमवधूतमवक्षुतं ।
दूषितं केश-कीटैश्च मृत्प्रक्षेपेण शुध्यति ॥

याज्ञवल्क्यः ।

गोघ्रातेऽन्ने तथा केश-मक्षिका-कीटदूषिते ।
सलिलं भस्म मृद्वापि प्रक्षेप्तव्यं विशुद्धये ॥

वृहस्पतिः ।

गोघ्रातेऽवक्षुते चान्ने मक्षिका-केशदूषिते ।
मृद्भस्म सलिलं तत्र प्रक्षेप्तव्यं विशुद्धये ॥

सुमन्तुः ।

केश-कीट-क्षुत-निष्ठीवित-वचोऽभिहतं श्वभिराघ्रातं प्रेक्षितं वा दधि पर्युषितं पुनः सिद्धं चण्डालावेक्षितमभोज्यमन्नमन्यत्र हिरण्यो-दकस्पृष्टादिति ।

उशनाः ।

अजाघ्राणेनाघ्रातानां स्नेह-घृत-गुड़-मधु-लवणानां पाकेन।

शङ्ख-लिखितौ ।

आकरजानान्त्वभ्यवहरणीयानां घृतेनाभिधारितानां शुद्धिः पुनः-पचनमेव, स्नेहानां स्नेहवद्रसानां संहतानामद्भिः, द्रवाणामुत्पवनं, शुष्काणामुद्धृतदोषाणां संस्कारः, परिस्रावितानां दोषाणां ततस्त्यागः।

आपस्तम्बः ।

परोक्षमन्नं संस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तदन्नं पवित्रमित्याचक्षते।
हारीतः।

अनिष्टगन्धोपघ्राण-श्रवण-दर्शने केश-कीट-पिपीलिकाभिरन्नाद्योपघाते काञ्चन-रजत-वैदूर्य्य-प्रवाल-गोबालाजिनदर्भाणामेकतमेनाद्भिः संस्पृष्टेन मन्त्रप्रोक्षणं पर्य्यग्निकरणमादित्यदर्शनात् पूतं भवति। वह्नेनोपघाते ब्राह्मणमतात्तदन्तरपनीय अजमवघ्राप्य पूतं भवति। त्यागो रसमयानां।

बौधायनः।

सिद्धहविषां महतां श्ववायसप्रभृत्युपहतानां तद्देशे पिण्डमुद्धृत्य पवमानः सुवर्जन इत्येतेनानुवाकेनाभ्युक्षणं, मधूदके पयोविकारे च पात्रान्तरनयने शुद्धिः। एवं तैल-सर्पिषी। उच्छिष्टसमन्वारब्धे तूदकेऽवधायोपयोजयेत्।

'महतां' भूयसां। 'तद्देशे' उपघातदेशे। 'पवमानः सुवर्जन इत्यादिर्जातवेदामूर्जयन्त्या पुनात्वित्यन्तोऽनुवाकस्तैत्तिरीयाणां प्रसिद्धः। माध्यन्दिनादिभिस्तु "पुनन्तु मा पितरः सोम्यास इत्यादिभिः पवनप्रकाशकैर्यजुर्भिरभ्युक्षणं विधेयं। 'उच्छिष्टसमन्वारब्धे' उच्छिष्टसंस्पृष्टे, 'अवधाय' पात्रान्तरे निधाय।

लौगाक्षिः।

> पयोदधिविकारादि शुचि पात्रान्तरस्थितं।
> पावनोत्पवनाभ्याञ्च पर्य्यग्निप्रकरणेन च॥

'पावनं' वस्त्रादिगालनं। 'उत्पवनं' दर्भपवित्रेण "सवितुस्त्वा प्रसव उत्पुनामीत्यनेन मन्त्रेण याज्ञिकप्रसिद्धप्रकारेण संस्करणं।

यमः ।

आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ।
म्लेच्छभाण्डस्थिता दुष्या निष्क्रान्ताः शुचयः स्मृताः ॥

शङ्खः ।

घृत-दधि-पयस्तक्राणामाकरभाण्डस्थितानामदोषः ।

तथा ।

आधारदोषे तु नयेत् पात्रात् पात्रान्तरं द्रवं ।
घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुड़ः ।
शूद्रभाण्डस्थितं तक्रं तथा मधु न दुष्यति ॥

तथा ।

श्रपणं घृत-तैलानां स्नावनं गोरसस्य च ।
भाण्डानि स्नावयेदद्भिः शाक-मूल-फलानि च ॥
सिद्धमन्नं तथा सर्पिः क्षीरञ्च दधि चाम्बु च ।
एतेषामवलीढानां तेजसा शुद्धिरिष्यते ॥
काक-मार्जार-नकुल-सर्प-मूषक-पक्षिभिः ।
संस्पृतन्तु यदा ह्यन्नमवलिह्येत केनचित् ॥
सुवर्णवर्णताम्रोल्कैर्गोवालैः रजतेन च ।
स्पृष्टमेकतरेणापि भोज्यं स्नातमजेन वा ॥

'श्रपणेन' पाकेन, घृत-तैलयोः शुद्धिः । 'स्नावनेन' भाण्डस्य वहिः-प्रदेशे सलिलपूरणेन, गोरसानां शुद्धिः कार्य्या । 'तेजसा शुद्धिः' पर्य्यग्निकरणं । सुवर्णवर्णत्वं ताम्रस्य विशेषणं । दूयञ्च शुद्धिः क्रमि-केशादिकं दूषकमुद्धृत्य कार्य्या ।

ब्रह्माण्डपुराणे ।

द्रवद्रव्याणि भूरीणि परिस्राव्याणि चाम्भसा।
सस्यानि व्रीहयश्चैव शाक-मूलफलानि च।
त्यक्त्वा तु दूषितं भागं स्राव्यान्यथ जलेन वा॥

विष्णुः।

द्रोणादभ्यधिकं सिद्धमन्नमुपहतं न दुष्यति। तस्योपहतमात्रमपास्य गायत्र्याभिमन्त्रितं सुवर्णाम्भः क्षिपेत्। वस्तस्य च दर्शयेदग्नेश्च।

षट्पञ्चाशदधिकं पलशतद्वयं 'द्रोणः'। इदञ्च द्रोणाधिकपरिमाणकथनं काक-शुनक-विड्वराहावलेहनादिमहोपघातेष्वनुसन्धेयं। केशकीटस्वल्पोपघाते तु स्वल्पपरिमाणस्यापि यथोक्ता शुद्धिर्विधेया।

पराशरः।

शृतं द्रोणाधिकस्यान्नं श्व-काकैरुपघातितं।
न त्याज्यं तस्य शुद्ध्यर्थं ब्राह्मणेभ्यो निवेदयेत्॥
कर्त्तव्यं वन्दनन्तेषामन्नसंस्कारकर्मणि।
वेदवेदाङ्गविद्विप्रा धर्मशास्त्रबहुश्रुताः॥
उच्चार्य्य धर्मशास्त्रन्तु ऋषेर्वक्त्रादिनिःसृतं।
मुनिवक्त्रच्युतान्धर्मान् गायन्तो धर्मपाठकाः॥
एभिर्य उक्तो धर्मो वै सेव्यः स्यान्नेतरस्तथा।
द्रोणाधिकस्य शुद्धिस्तु धर्मशास्त्रेषु पश्यते॥
श्वकाकैरवलीढन्तु द्रोणान्नं न विसर्जयेत्।
ग्रासमुद्धृत्य तन्मात्रं यच्च लालाश्रितं भवेत्॥
सुवर्णोदकेनाभ्युक्ष्य ज्वलनेन तु तापयेत्।
हुताशज्वालया स्पृष्टं सुवर्णसलिलेन च।

विप्राणां मन्त्रघोषेण पूतं भोज्यञ्च तद्भवेत् ॥

द्रोणान्यूनपरिमाणस्य त्वन्नस्य शुनकाद्यवलेह-महोपघातदूषितस्य त्याग एव कर्त्तव्य इति स एवाह ।

श्व-वायस-गवाद्यैस्तु जग्धमन्नं यदा भवेत् ।
स्नेहो वा गोरसो वापि तत्र शुद्धिः कथम्भवेत् ॥
अन्नं परित्यजेत्तत्र स्नेहस्योत्पवनेन तु ।
अश्वत्थलतया शुद्धिर्गोरसस्य विधीयते ॥

देवलोऽपि ।

अवलीढं श्व-मार्जार-ध्वांच-कुक्कुट-मूषकैः ।
भोजने नोपयुञ्जीत तदमेध्यं हि सर्वतः ॥

चण्डालस्पृष्टस्य द्रोणाधिकस्यापि त्याग एव कर्त्तव्य इत्याह स एव ।

चाण्डालेन शुना वापि दृष्टमन्नमयज्ञियं ।
चाण्डालादिभिरुच्छिष्टं स्पृष्टं भूयोऽपि वर्जयेत् ॥

यमः ।

देवद्रोण्यां विवाहेषु यज्ञेषु प्रसवेषु च ।
काकैः श्वभिश्च यत् स्पृष्टन्तदन्नं न विवर्जयेत् ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ।
घनानां प्रोक्षणाच्छुद्धिर्द्रवाणामपि तापनात् ।
संस्पर्शनाद्भवेच्छुद्धिरपामग्नेर्घृतस्य च ॥
छागेन मुखसंस्पृष्टं शुचित्वेन विनिर्दिशेत् ॥

वसिष्ठः ।

देवद्रोण्यां विवाहेषु यज्ञेषु प्रकृतेषु च ।
काकैः श्वभिश्च संस्पृष्टमन्नं तन्न विवर्जयेत् ॥
तन्मात्रमन्नमुद्धृत्य शेषं संस्कारमर्हति ।
द्रवाणां प्लावनेनैव घृतानां प्रोक्षणेन च ॥
छागेन मुखसंस्पृष्टं शुचित्वेन हि तद्भवेत् ॥

बृहस्पतिः ।

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टं न दुष्यति ॥
गोकुले कन्दुशालायां तलचक्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ॥

शातातपः ।

गोकुले कन्दुशालायां तैलचक्रेक्षुयन्त्रयोः ।
अमीमांस्यानि शौचानि स्त्रीषु बालान्तरेषु च ॥

हारीतः ।

कन्दुपक्वानि तैलानि पायसं दधि सक्तवः ।
एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

इयन्तु यथोक्ता शुद्धिरन्नान्तरसम्पादनाशक्तिरूपायामापद्येव कर्त्तव्या। अनापदि दुष्टमन्नं परित्यज्यान्नान्तरमेव सम्पादनीयं ।

यच्च नग्नादीनभिधायोक्तं वायुपुराणे ।

अन्नं पश्येयुरेते तु यदि वै हव्य-कव्ययोः ।
उत्स्रष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ॥

नग्नादिभिर्दृष्टमन्नं 'उत्स्रष्टव्यं' परित्याज्यं । 'प्रधानार्थं' अग्नौ-

करणब्राह्मणभोजन-पिण्डप्रदानात्मक-प्रधानसम्पत्त्यर्थं अन्यदन्नं सम्पाद्यं। आपदि तु नग्नादिदृष्टमन्नं नोत्सृष्टव्यं। किन्तु तस्यैव पवित्रीकरणं कर्त्तव्यं। तदुक्तं ब्रह्मपुराणे।

हविषां संस्कृतानान्तु पूर्वमेवापवर्जनं।
मृत्संपृक्ताभिरद्भिश्च प्रोक्षणन्तु विशुद्धये॥
सिद्धार्थकैः कृष्णतिलैः कार्यञ्चाप्यवकीरणं।
द्विज-सूर्य्याग्नि-वस्तानां दर्शनञ्च प्रयत्नतः॥

अस्यार्थः। 'हविषां' हव्यकव्यानां, पाकेन संस्कृतानां नग्नादिदर्शने सति 'अपवर्जनमेव' परित्याग एव, कर्त्तव्य इत्येषः मुख्यः कल्पः। आपदि तु दोषापगमहेतुभूतसंस्कारसिद्धये प्रशस्तमृत्तिकासंपृक्ताभिरद्भिः प्रोक्षणं विधेयं। तथा गौरसर्षपैः कृष्णतिलैश्चावकीरणं दुष्टहव्य-कव्ययोरुपरि प्रक्षेपणं कार्य्यं। तथा द्विज-सूर्य्याग्नि-छागानां दर्शनं कार्य्यं। एवं यथा हव्य-कव्ये शुध्यतस्तथा प्रयतितव्यमिति। अथवा जमदग्निनोक्तामन्नशुद्धिं कुर्य्यात्।

शुद्धवत्योऽथ कूष्माण्ड्यः पावमान्यस्तरत्समाः।
पूतेन वारिणा दर्भैरन्नदोषानपानुदेत्॥

शुद्धवत्यादिमन्त्राभिमन्त्रितमुदकं दर्भैरुपादाय नग्नादिवीक्षणादिप्रभवदोषापनोदनार्थं प्रोक्षणं कुर्य्यादित्यर्थः। एतो न्विन्द्रं स्तवामेत्याद्यास्तिस्र ऋचः शुद्धवत्यः। यद्देवा देवहेलनमित्याद्यास्तिस्रः कूष्माण्ड्यो यजुर्वेदे प्रसिद्धाः। यदन्ति यच्च दूरक इत्याद्याः पावमान्यः। तरत्समन्दीधावतीत्याद्यास्तरत्समाः।

इति पक्वान्नशुद्ध्युपायाः।

अथोदकशुद्ध्युपायाः।

तत्राह बृहस्पतिः।

उच्छिष्टं मलिनं क्लिन्नं यच्च विष्ठानुलेपितं।
अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत्॥
सूर्य्येन्दुरश्मिपातेन मारुतस्पर्शनेन च।
गवां मूत्रपुरीषेण शुध्यन्त्याप इति स्थितिः॥

विष्णुः।

मृतपञ्चनखात् कूपादत्यन्तोपहतात्तथा।
आपः समुद्धरेत्सर्वाः शेषं शास्त्रेण शोधयेत्॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयसमुद्भवे॥
जलाशयेष्वथाल्पेषु स्थावरेषु महीतले।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणं॥

पराशरः।

वापी-कूपतड़ागेभ्य आपो ग्राह्यास्तु सर्वशः।
पश्चात्पश्येदमेध्यन्तु पञ्चगव्येन शुध्यति॥
अस्थि-चर्मावसिक्तेन श्व-मार्जारैस्तु मूषकैः।
दूषितं तद्भवेत्तोयं तथाधस्तात्तु शोधनं॥
अस्थि-चर्मावपतितं खर-वानर-सूकरैः।
उद्धरेदुदकं सर्वं शोधनं परिमार्जनं॥
वापी-कूप-तड़ागेषु दूषितेषु कथञ्चन।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुध्यति॥

खनि-कूप-तडागेषु सन्दिग्धेषु विशेषतः ।
तोयं [१]हृत्वा घटशतं पञ्चगव्येन शुध्यति ॥
पादुकोपानविण्मूत्रं कूपे यदि निमज्जति ।
षष्टिकुम्भान् समुद्धृत्य पञ्चगव्येन शुध्यति ॥
दूषितश्च मलैः क्लिन्नं यच्च विष्ठानुलेपितं ।
अद्भिः शुध्यति तत्सर्वमपां शुद्धिः कथं भवेत् ॥
गवां मूत्रपुरीषेण सोम-सूर्य्याग्निरश्मिभिः ।
मारुतस्य तु वेगेन आपः शुद्धिमवाप्नुयुः ॥

इत्युदक-शुद्ध्युपायाः ।

अथाशुद्ध्यपवादाः ।

तत्र मनु-विष्णू ।

नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।
प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥

वशिष्ठात्रि-शातातप-बौधायनाः ।

वत्सः प्रस्रवने मेध्यः शकुनिः फलपातने ।
स्त्रियश्च रतिसंसर्गे श्वा मृगग्रहणे शुचिः ॥

उशनाः ।

रहस्ये स्त्रीमुखं शुचि । शुचयः फलपातने पक्षिणः । प्रस्रवने वत्सः ।

मृगग्रहणे श्वा मेध्यतीत्यनुवृत्तौ पैठीनसिः ।

वत्सः प्रस्रवने, श्वा मृगग्रहणे, शकुन्ताः फलपातने, स्त्रीमुखं रतिसङ्गमे ।

---

(१) तेभ्य इति ग० ।

शङ्खः ।

नारीणाञ्चैव वत्सानां शकुन्तानां शुनां मुखं ।
रतौ प्रस्रवने वृक्षे मृगयायां तथा शुचि ॥
आकराः शुचयः सर्वे शकुनिः फलपातने ।
वत्सः प्रस्रवणे मेध्यः श्वा मृगग्रहणे शुचिः ॥

हारीतः ।

वत्सः प्रस्रवणे मेध्यः श्वा मृगग्रहणे शुचिः ।
आकराः शुचयः सर्व्वे शकुनिः फलपातने ॥

मनु-विष्णू ।

श्वभिर्हतस्य यन्मांसं शुचि तन्मनुरब्रवीत् ।
क्रव्याद्भिश्च हतस्यान्यैश्चण्डालाद्यैश्च दस्युभिः ॥

शुचीत्यनुवृत्तौ याज्ञवल्क्यः ।

तथा मांसं श्व-चण्डाल-क्रव्यादादिनिपातितं ।

वसिष्ठः ।

श्वहताश्च मृगाः धन्याः पातितञ्च खगैः फलं ।
बालैरनुपरिक्रान्तं स्त्रीभिराचरितञ्च यत् ॥
प्रसारितं च यत्पण्यं ये दोषाः स्त्रीमुखेषु च ।
मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते ॥

यमः ।

याः स्युर्भूमिगता ह्यापो यच्च मांसं श्वभिर्हतं ।
स्त्रीणां मुखेषु ये दोषा न दोषा मनुरब्रवीत् ॥

तथा ।

बालकैर्यत्परिक्रान्तं स्त्रीभिराचरितञ्च यत् ।
मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते ।
क्षितिस्थाश्चैव या आपो गवां तृप्तिकराश्च याः ॥

याज्ञवल्क्यः ।

रश्मिरग्निरजश्छाया गौरश्वो वसुधानिलः ।
विप्रुषो मक्षिकाः स्पर्शे वत्सः प्रस्रवने शुचिः ॥

तथा ।

कारुहस्तः शुचिः पण्यं भैक्ष्यं योषिन्मुखं तथा ।

यमः ।

आत्मशय्यासनं वस्त्रं मेध्यं वा मलदूषितं ।
ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थितिः ॥

तथा ।

आसनं शयनं यानं स्त्रीमुखं कुतपं क्षुरं ।
न दूषयन्ति विद्वांसो यज्ञेषु चमसं तथा ॥
गौरश्वो विप्रुषश्छाया मक्षिकाः शलभाः शुकाः ।
अजो हस्ती रथो शस्त्रं रश्मयश्चन्द्र-सूर्ययोः ॥
भूमिरग्नीरजो वायुरापो दधि घृतं पयः ।
सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः ॥

तथा ।

शुचिरग्निः शुचिर्वायुः पवित्रा ये बहिश्चराः ।
आपश्च शुचयो नित्यं पन्थाः सञ्चरणाच्छुचिः ।

तथा ।

आपः शुद्धा भूमिगताः शुचिर्नारी पतिव्रता।
शुचिर्धर्मपरो राजा सन्तुष्टो ब्राह्मणः शुचिः॥

मनु-बौधायनौ।

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितं।
ब्रह्मचारिगतं भैक्ष्यं नित्यशुद्धमिति स्थितिः॥

मनु-शातातपौ।

मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः।
रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि सर्व्वदा॥

विष्णुः।

नित्यं शुद्धः कारुहस्तः पण्यं यच्च प्रसारितं।
ब्राह्मणान्तरितं भैक्ष्यमाकराः सर्व एव तु॥
मक्षिका विप्रुषश्छाया गौरश्वः सूर्य्यरश्मयः।
रजो भूर्वायुरग्निश्च मार्जारश्च सदा शुचिः।

सुमन्तुः।

स्त्री-बाल-मशक-मक्षिका-छाया-आसन-शयन-यानाम्बु-विप्रुषो-नित्यं मेध्याः। घृत-कदलागाराणामत्याज्यानामदोषः।

हारीतः।

मक्षिका विप्रुषो नार्य्यो भूमिस्तोयं हुताशनः।
मार्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः॥

शङ्खः।

शुद्धं नदीगतन्तोयं सर्व एव तथाकराः।
शुद्धं प्रसारितं पण्यं शुद्धमश्वाजयोर्मुखं।

मुखवर्जञ्च गौः शुद्धा मार्जारश्चङ्क्रमे शुचिः॥

बृहस्पति-पराशरौ ।

अदुष्टा सन्तता धारा वातोद्धूताश्च रेणवः।
स्त्रियो वृद्धाश्च बालाश्च न दुष्यन्ति कदाचन॥
मक्षिका विप्रुषो नारी भूमिरापो हुताशनः।
मार्जारश्चैव दर्व्वी च मारुतश्च सदा शुचिः॥

शङ्ख-लिखितौ।

बाल-स्त्रीपरिगतान्यगारेषु न दुष्यन्ति, धूमाग्निरजांसि वाय्वीरितानि विप्रुषः छाया मक्षिका इति स्पर्शे मेध्याः।

उशनाः ।

कारुहस्तः शुचिर्नित्यं पण्यं यच्च प्रसारितं।
आकराः सोमपानञ्च वाचा यच्च प्रशस्यते॥

बौधायनः।

अदूष्याः सन्तता धारा वातोद्धूताश्च रेणवः।
आकराः शुचयः सर्व्वे वर्जयित्वा सुराकरं॥

पैठीनसिः।

आकराः शुचयः सर्व्वे पण्यं यच्च प्रसारितं।
रजसा स्त्री मनोदुष्टा नदी वेगेन शुध्यति॥

पुनः पैठीनसिः।

गौरजोऽश्वरजोवायुर्मक्षिका वेति स्पर्शे मेध्यानि ।

शातातपः ।

रेणवः शुचयः सर्व्वे वायुना समुदीरिताः।
अन्यत्र रासभाजावि-श्व-समूहनिवाससां॥

उशनाः।

गजाश्व-रथ-नागानां[१] प्रशस्ता रेणवः सदा।
अप्रशस्ताः समूहान्याः श्वावि-रासभ-वाससां॥

बौधायनः।

पुरे रेणुगुण्ठितशरीर-स्तप्रतिपूर्णनेत्रवदनस्य नगरे वसन् स नियतात्मा सिद्धिमवाप्स्यतीति नैतदस्ति।

रथाश्व-गज-धान्यानां गवाञ्चैव रजः शुभं।
अप्रशस्तं समूह्न्याः श्वाजावि-खरवाससां॥

शातातपः।

अपां नोच्छिष्टदोषोऽस्ति मधुनो न च सर्पिषः।
न फलानां न चेक्षूणां नाकराणां न योषितां॥
बालकैर्दत् परिक्रान्तं स्त्रीभिराचरितञ्च यत्।
मशकैर्मक्षिकाभिश्च निलीनं नोपहन्यते॥

पैठीनसिः।

मधु-सर्पिः-फल-बाल-स्त्रीणामनुच्छिष्टं।

देवलः।

शुचिपूतं स्वयंशुद्धं पवित्रञ्चेति केवलं।
मेध्यञ्चतुर्विधं लोके प्रजानां मनुरब्रवीत्॥

तथा।

नवञ्चानिर्मलं वापि शुचीति द्रव्यमुच्यते।
शोधितन्तु यदान्येन तत्पूतमभिधीयते॥

(१) गवाश्वरथनागानामिति ख०।

स्वयमेव हि यद्द्रव्यं केवलं धन्यतां गतं ।
स्थावरं जङ्गमं वापि स्वयं शुद्धमिति स्मृतं ॥
अन्यद्द्रव्यैरदूष्यं यत् स्वयमन्यानि शोधयेत् ।
हव्य-कव्येषु पूज्यं यत्तत्पवित्रमिति स्मृतं ॥
अथ सर्वाणि धान्यानि द्रव्याण्याभरणानि च ।
अवर्ज्यभक्ष्य-भोज्यानि शुचीन्येतानि केवलं ॥
वर्जिते निखिलद्रव्येऽशुचिसंज्ञा प्रवर्त्तते ।
तस्मिन्नेवेह धर्मज्ञ[१] शुद्धता न पुनर्भवेत् ॥
तस्माच्छुद्धं तु कर्मण्यं शुचीत्याहुर्द्विजातयः[२] ।
निर्मलं संस्कृतं द्रव्यं क्रियार्हं पूतमुच्यते ॥
वसतिस्त्वमसो यानं वाहनं साधनानि च[३] ।
क्षुरो नौरासनञ्चेति स्वयं शुद्धमिति स्मृतं ॥
शिशवश्च स्वयं शुद्धा योषितश्चानृतौ तथा ।
ब्रह्महत्या हि नारीणामृतुकालेन संस्पृशेत् ॥
आकरा हि स्वयं शुद्धा द्रव्याणामिति निर्णयः ।
क्रीतञ्च व्यवहारिभ्यः पण्यं शुद्धमिति स्मृतं ॥
अदुष्टं वाक्प्रशस्तं हि स्वयं शुद्धञ्च केवलं ।
त्रीण्येतानि विशुद्धानि भगवान् मनुरब्रवीत् ॥
अजाश्वा मुखतो मेध्या गावो मेध्यास्तु पृष्ठतः ।
तरवः पुष्पिता मेध्या ब्राह्मणाश्चैव सर्वदा ॥

---

(१) सर्व्वज्ञ इति ग० ।
(२) मनीषिन इति ख० ।
(३) साधनाम्बु चेति ग० ।

भस्म चौद्रं सुवर्णञ्च सदर्भाः कुतपास्तिलाः।
अपामार्ग शिरीषार्काः पद्मामामलकं मणिः॥
माल्यानि सर्षपा दूर्वाः सदा भद्राः प्रियङ्गवः।
अक्षता रोचना लाजा हरिद्राश्चन्दनं यवाः॥
पलाश-खदिराश्वत्थ-तुलसी-धातकी-वटाः।
एतान्याहुः पवित्राणि ब्राह्मणा हव्य-कव्ययोः॥
पौष्टिकानि मलघ्नानि शोधनानि च देहिनां।
तथापोऽग्निः शकृन्मृच पवित्राणि विशेषतः।
सर्वाशौचविशुद्ध्यर्थं सर्वेषां सर्वतः सदा॥

तथा।

अकश्मलैः समिद्धोऽग्निर्दुर्मनुष्यैरदूषितः।
सर्वेषामप्यशौचानां समर्थः शोधनाय सः॥
द्रव्याणामग्निदग्धानां मेध्यत्वमुपदिश्यते।
ज्वालाभिस्पृष्टपात्राणां शुचित्वं नियतम्भवेत्॥
अग्नेर्वृषलमुक्तस्य ग्रहणं नास्त्यनापदि।
श्वपाको वृषलो भोक्तृब्राह्मणोऽग्निरनाहितः॥
चण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हिचित्।
पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतं॥
गोशकृत्कुड्कदेशस्था श्मशानाद्यचिता शिवा।
अग्राम्या मृद्भवेच्छुद्धा सत्त्रण विण्मूत्रवर्जिता॥

मनु-विष्णू।

ऊर्द्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः।

यान्यधस्तान्यमेध्यानि देहाच्चैव मलाश्च्युताः ॥

बौधायनः ।

नाभेरधःसंस्पर्शं कर्मयुक्तो वर्जयेत् । ऊर्द्धं वै पुरुषस्य नाभेर्मेध्यं आवाचीनममेध्यमिति श्रुतिः ।

विष्णु-याज्ञवल्क्यौ ।

अजाश्वं मुखतो मेध्यं न गौर्न नरजा मलाः ।

उशनाः ।

ऊर्द्धं नाभेः पुरुषः, गौर्मेध्यः पृष्ठे, पुरस्तादजाः, स्त्रियः सर्वतो हृदयमासामशुचि ।

यमः ।

मेध्या रहोगता नारी स्त्रीमुखेषु च वारुणी ।
स्पर्शने न तु दुष्यन्ति वातो गन्ध-रसाः स्त्रियः ॥
स्त्रीणां मुखरसश्चैव गन्धो निश्वास एव च ।
मुखतो गौरमेध्या स्यान्मेध्योऽजो मुखतः स्मृतः ॥
पृष्ठतो गौर्गजः स्कन्धे सर्वतोऽश्वः शुचिस्तथा ।
नृणां मूत्रपुरीषे तु अमेध्ये मल एव च ॥
गोः पुरीषञ्च मूत्रञ्च नित्यं मेध्यमिति स्थितिः ॥,

वृहस्पतिः ।

पादौ शुची ब्राह्मणानामजाश्वस्य मुखं शुचि ।
गवां पृष्ठानि मेध्यानि सर्वगात्राणि योषितां ॥
रोमोद्गमे शशी भुङ्क्ते गन्धर्वः कुचदर्शने ।
अनलस्तु रजो भुङ्क्ते स्त्रियो मेध्यास्तु नान्यथा ॥

बलात्कारोपभुक्ता वा चौरहस्तगतापि वा ।
स्वयं विप्रतिपन्ना वा अथवा विप्रमादिता ॥
अत्यन्तदूषितापि स्त्री न परित्यागमर्हति ।
सर्वेषां निष्कृतिः प्रोक्ता नारीणान्तु विशेषतः ॥
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजस्तासां दुष्कृतान्यपकर्षति ॥
सोमः शौचं ददावासां[1] गन्धर्वाश्च शुभां गिरं[2] ।
पावकः सर्वभक्ष्यत्वं मेध्या वै सर्वतो[3] ह्यतः ॥

यमः ।

ब्राह्मणाः पादतो मेध्या गावो मेध्यास्तु पृष्ठतः ।
अजाश्वं मुखतो मेध्यं स्त्रियो मेध्यास्तु सर्व्वतः ॥
चीण्याहुः पातकान्यासां स्त्रीणां सर्ववि‍दो जनाः ।
भर्त्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनं ॥
यानि कानिचिदन्यानि कुर्व्वन्ति भुवि योषितः ।
सर्वाण्यासां स्वकर्माणि देवैर्दत्तवराः स्त्रियः ॥
पूर्व्वं नार्य्यः सुरैर्भुक्ताः सोम-गन्धर्व्व-वह्निभिः ।
तैश्च दत्तवरा ह्येता नैव दुष्यन्ति कर्हिचित् ॥
सोमस्तासां ददौ शौचं गन्धर्वः शिक्षितां गिरं ।
हुताशः सर्वभक्ष्यत्वं तेन निष्कसमाः स्त्रियः ॥

यमाचौ ।

---

(१) ददौ स्त्रीणामिति ग० ।
(२) गन्धर्वाः शिक्षितां गिरमिति ग० ।
(३) योषितः इति क० ।

न स्त्री दुष्यति जारेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां न द्विजो वेदकर्मणा ॥
गावो न दुष्यन्त्यमृतं वहन्त्यः
स्त्रियो न दुष्यन्ति परोपभुक्ताः ।
आपो न दुष्यन्ति महीतलस्थाः
विप्रा न दुष्यन्ति प्रतिग्रहेण ॥

वशिष्ठ-बौधायनौ ।

न स्त्री दुष्यति जारेण न विप्रो वेदकर्मणा ।
स्वयं विप्रतिपन्ना वा यदि वा विप्रमादिता ॥
बलात्कारोपभुक्ता वा चौरहस्तगतापि वा ।
न त्यजेद्दूषितां नारीं नास्यास्त्यागो विधीयते ॥
पुष्पकालमुपासीना ऋतुकालेन शुध्यति ।
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति ॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोम-गन्धर्व-वह्निभिः ।
तैश्च दत्तवरा ह्येता नैव दुष्यन्ति कर्हिचित् ॥
तासां सोमो ददौ शौचं गन्धर्वः शिक्षितां गिरं ।
अग्निश्च सर्वभक्ष्यत्वं तस्मान्निष्कसमाः स्त्रियः ॥
त्रीणि स्त्रियः पातकानि लोके धर्मविदो विदुः ।
भर्त्तुर्वधो भ्रूणहत्या स्वस्य गर्भस्य पातनं ॥

अत्रिः ।

बलात्कारोपभुक्ता वा चौरहस्तगतापिवा ।

शुध्येत रजसा नारी नदी वेगवती यथा॥
स्वयं विप्रतिपन्ना वा अथवा विप्रमादिता।
अत्यन्तदूषिता नारी नास्यास्त्यागो विधीयते॥
स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित्।
मासि मासि रजो ह्यासां दुष्कृतान्यपकर्षति॥
पूर्वं स्त्रियः सुरैर्भुक्ताः सोम-गन्धर्व-वह्निभिः।
सोमस्तासां ददौ शौचं गन्धर्वः शिक्षितां गिरं।
पावकः सर्वमेध्यत्वं तस्मान्निष्कसमाः स्त्रियः॥

याज्ञवल्क्यः।

सोमः शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरं।
पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः॥
व्यभिचाराद्दृतौ शुद्धिर्गर्भे त्यागो विधीयते।
भर्तृ-गर्भवधादौ च तथा महति पातके॥

स्त्र्यधिकारे पैठीनसिः।

त्रीणि पातकानि भर्तृवधो ब्रह्मवधः स्वगर्भपातनञ्चेति। ऋतौ मासि मासि शुध्यन्तीत्याह।

मासि मासि रजस्तासां दुष्कृतान्यपकर्षति।
पुष्पकालमुपासित्वा ऋतुकालेन शुध्यति॥
सोमस्तासां ददौ शौचं गन्धर्वः शिक्षितां गिरं।
अग्निश्च सर्वभक्ष्यत्वं तस्मान्निष्कसमाः स्त्रियः॥

यमः।

बलात्कारोपभुक्ता वा चौरहस्तगता च या।

कन्दर्पमदमूढा या यदि वा मद्यमोहिता ॥
स्वयं विप्रतिपन्ना वा यदि वा विप्रमादिता ।
ऋतुकालेन शुध्येत्तु धर्मापेता च या भवेत् ॥
शुध्येत्तु रजसा नारी नदी वेगवती यथा ।
पुष्पकालमुपासीना पुंसा सह विशुध्यति ॥

तथा ।

स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् ।
मासि मासि रजः स्त्रीणां दुष्कृतान्यपकर्षति ॥
मृन्मयस्याग्निना शुद्धिर्दारवस्य तु तक्षणात् ।
भस्मना चैव तु कांस्यस्य स्त्रीणान्तु रजसा स्मृता ॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥

वसिष्ठः ।

रजसा शुध्यते नारी नदी वेगेन शुध्यति ।
भस्मना शुध्यते कांस्यं पुनःपाकेन मृन्मयं ॥

शङ्ख-लिखितौ ।

न वै स्त्रीणां व्रतं न मन्त्रक्रिया न कार्य्यमिति ।

प्रजापतिः ।

पाणिगृहीताः सन्तानार्थिना परैरवकीर्णा न दुष्यन्तीति स्मृतिवादः । ता ह्यार्त्तवेन शुध्यन्तीति वैवस्वतः । कामानुपगमप्रवृत्तिरकार्य्यमिति ।

हारीतः ।

तद्गतत्वादात्मसम्भवाच्च दोष इति ।

गौतमः ।

चान्द्रायणमासां पावनमित्याचार्याः । प्राजापत्योवा ।

हारीतः ।

गर्भघ्नीं मध्ये वर्णशिष्यसुतगामिनीं पानव्यसनासक्तां धनधान्यक्षयकरीन्तु वर्जयेत् । नाभिचारिणीं रजसा शुध्यतीत्येके । व्यभिभोगान् परैरसृज्य न दुष्यतीत्यन्ये ।

वशिष्ठः ।

सोमो ददौ शौचमासां गन्धर्वः शिक्षिताङ्गिरं ।
अग्निश्च सर्व्वभक्ष्यत्वं तस्मान्निष्कसमाःस्त्रियः ॥ इति ।

अपरे ।

एकव्रतस्कन्नभावत्वात् परेन्द्रियोपहतत्वाच्च दुष्याः कुलसंकरकारिण्यो भवन्ति ।

यमः ।

स्वच्छन्दगा हि या नारी तस्यास्त्यागो विधीयते ।
नैव स्त्रीवपनं कुर्यात् न चैवाङ्गविकर्त्तनं ॥
स्वच्छन्दव्यभिचारिण्या विवस्वांस्त्यागमब्रवीत् ।
चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जघन्योपगता च या ॥

शातातपः ।

ग्रामे तु यत्र संस्पृष्टं यात्रायां कलहादिषु ।
ग्रामसंदूषणे चैव स्पृष्टिदोषो न विद्यते ॥

'ग्रामे' राजमार्गादौ ।

देवयात्रा-विवाहेषु यज्ञेषु प्रकृतेषु च ।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न दुष्यति ॥

वृहस्पतिरपि ।

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगर-ग्रामदाहे च स्पृष्टास्पृष्टिर्न दुष्यति ॥

एतच्च वाक्यत्रयं यत्राहमनेन स्पृष्ट इति ज्ञानं नास्ति तद्विषयमिति केचित् । उच्छिष्टाशुचि-संस्पृष्टविषयमित्यन्ये ॥

इत्यशुद्ध्यपवादः ।

अथ स्नानमुच्यते ।

तत्र स्नानप्रशंसा ।

आह विष्णुः ।

स्नातोऽधिकारी भवति दैवे पित्र्ये च कर्मणि ।
पवित्राणां तथा जप्ये दाने च विधिचोदिते ॥
अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितं ।
अप्मात्रेनाभिषिक्तस्य नश्यन्त इति धारणा ॥
याम्यं हि यातनादुःखं नित्यस्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो नराः ॥
उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ।
प्राजापत्येन तत्तुल्यं महापातकनाशनं ॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ।
स्रवत्येष दिवारात्रौ प्रातःस्नानं विशोधनं ॥

क्लिद्यन्ति च सुषुप्तस्य इन्द्रियाणि स्रवन्ति च ।
अङ्गानि समतां यान्ति उत्तमान्यधमानि च ॥
अस्नात्वा नाचरेत् कर्म जप-होमादि किञ्चन ।
लाला-स्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥
अतः स्नानं प्रशंसन्ति दृष्टादृष्टकरं शुभं ।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकं ॥

दक्षः ।

बलं रूपं यशो धर्मो ज्ञानमायुः सुखं धृतिः ।
आरोग्यं पुष्टिमाप्नोति सम्यक् स्नानेन मानवः ॥

योगयाज्ञवल्क्यः ।

अगम्यागमनात्पापात् पापेभ्यश्च प्रतिग्रहात् ।
रहस्याचरितात्पापान्मुच्यते स्नानमाचरन् ॥
प्रकर्तुमसमर्थश्चेत् जुहोति-यजतिक्रियाः ।
स्नान-ध्यान-जप-दानैरात्मानं शोधयेद्बुधः ॥
यदेव स्नानं कुरुते विशुद्धेनान्तरात्मना ।
तेनैव सर्वमाप्नोति विधियज्ञक्रियाफलं ॥
मनःप्रसादजननं रूप-सौभाग्यवर्द्धनं ।
शोकदुःखप्रहं स्नानं मोक्षदं ज्ञानदं तथा ॥
स्नानमूलाः क्रियाः सर्वाः श्रुति-स्मृत्युदिता नृणां ।
तस्मात्स्नानं निषेवेत श्री-पुष्ट्यारोग्यवर्द्धनं ॥

गुणा दश स्नानपरस्य साध्वे
रूपञ्च तेजश्च बलञ्च शौचं ।

आयुष्यमारोग्यमलोलुपत्वं
दुःस्वप्नघातश्च तपश्च मेधा ॥

इति स्नानप्रशंसा ।

अथ स्नानभेदाः ।

तत्राह दक्षः ।

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते ।
तेषां मध्ये तु यन्नित्यं तत् पुनर्भिद्यते त्रिधा ॥
मलापकर्षणं पार्श्वे समन्त्रन्तु जले स्मृतं ।
सन्ध्यास्नानमुभाभ्यान्तत्स्नानदेशाः प्रकीर्त्तिताः ॥

मृद्गोमयाभ्यां शरीरचालनं 'मलापकर्षणं' । 'पार्श्वे' तटे । 'सन्ध्यास्नानं' मार्जनं । तत् 'उभाभ्यां' जलस्थलाभ्यां, कार्य्यं ॥

मनुः ।

स्नानं तु द्विविधं प्रोक्तं गौण-मुख्यप्रभेदतः ।
तयोस्तु वारुणं मुख्यं तत् पुनः षड्विधं भवेत् ॥
नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणं ।
क्रियास्नानं तथा षष्ठं षोढ़ा स्नानं प्रकीर्त्त्यते ॥

एतेषां क्रमेण लक्षणान्याह स एव ।

अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु ।
प्रातःस्नानं तदर्थञ्च नित्यं स्नानं प्रकीर्त्तितं ॥
चण्डाल-शव-पूयादि स्पृष्ट्वा स्नानं रजस्वलां ।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥
पुष्यस्नानादिकं यत्तु दैवज्ञ विधिचोदितम् ।

स्नानं समाचरेद्यत्तु क्रियाङ्गं तत् प्रकीर्त्तितं ॥
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकं
मलापकर्षणार्था तु प्रवृत्तिस्तस्य नान्यथा ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
क्रियास्नानं समुद्दिष्टं स्नानं तत्र मता क्रिया ॥

स्नानमेव तत्र 'क्रिया' कार्य्यं, 'मता' विहितेत्यर्थः ।

तत्र काम्यन्तु कर्त्तव्यं यथावद्विधिचोदितं ।
नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणं ॥
तीर्थाभावे तु कर्त्तव्यं उष्णोदक-परोदकैः ।
स्नातस्य वह्नितप्तेन तथैव परवारिणा ॥
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ।
अद्भिर्गात्राणि शुध्यन्ति तीर्थे स्नानाल्लभेत्[१] फलं ॥
सरःसु देवखातेषु तीर्थेषु च नदीषु च ।
स्नानमेव क्रिया यस्मात् स्नानात् पुण्यफलं स्मृतं ॥

गोभिलः ।

नित्यं सततनिर्वर्त्यं काम्यं कामाय यद्धितं ।
निमित्तादथ जातन्तु स्नानं नैमित्तिकं स्मृतं ॥

अनेन मध्यन्दिनस्नानस्यापि नित्यत्वमुक्तं भवति । तस्यापि नित्यनिर्वर्त्त्यत्वात् ।

तथा च वैयाघ्रपादः ।

प्रातःस्नायी भवेन्नित्यं मध्यस्नायी सदा भवेत् ।

(१) स्नानाद्भवेदिति ग० ।

यथोक्तस्नानासमर्थं प्रत्यन्यान्यपि स्नानान्याह योग-याज्ञवल्क्यः ।

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चैव सप्त स्नानान्यनुक्रमात् ॥

एतेषां लक्षणमाह स एव ।

आपोहिष्ठादिभिर्मान्त्रं मृदालम्भस्तु पार्थिवं ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतं ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।
वारुणं चावगाहन्तु मानसं विष्णुचिन्तनं ॥
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानात्क्रमेण तु ।
कालादेशादसामर्थ्यात् सर्वं तुल्यफलं स्मृतं ॥
मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ।
आत्मतीर्थप्रशंसायां व्यासेन पठितं यतः ॥

तथा ।

शन्न आपस्तु द्रुपदादापोहिष्ठाघमर्षणं ।
एतैश्चतुर्भिऋक्मन्त्रैर्मन्त्रस्नानमुदीरितं ॥
अप्रायत्ये समुत्पन्ने स्नानमेवन्तु कारयेत् ।
पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं भवेत् ॥

आह गौतमः ।

दिव्य-वायव्यमाग्नेयं ब्राह्मं सारस्वतन्तथा ।
मानसञ्चेति विज्ञेयं गौणस्नानन्तु षड्विधं ॥

पराशरोऽपि।

पञ्च स्नानानि पुण्यानि यान्यभाषन्त तद्विदः।
सम्यक् तानि प्रवक्ष्यामि यथावदनुपूर्वशः॥
आग्नेयं वारुणञ्चैव तृतीयं ब्राह्ममेव च।
चतुर्थञ्चैव वायव्यं पञ्चमं दिव्यमुच्यते॥
आग्नेयं भस्मना स्नानमवगाह्य तु वारुणं।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजोभवं॥
काले वा यदि वाकाले सूर्ये मेघविवर्जिते।
तस्मिन् दृष्टे तु यत्स्नानं तद्दिव्यमिति चोच्यते॥

छागलेयः।

आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते।
आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतं॥
अद्भिरातपवर्षाभिर्दिव्यं स्नानमिहोच्यते।
एतैस्तु मन्त्रतः स्नात्वा तीर्थानां फलमाप्नुयात्॥

अत्र विशेषः कूर्म्मपुराणे दर्शितः।

आग्नेयं भस्मना पाद-मस्तकाद्देहधूलनं।

वृहस्पतिः।

वायव्यं गोरजः प्रोक्तमस्तङ्गच्छति गोपतौ।

विद्वत्सरस्वतीप्राप्तं सारस्वतमित्यर्थः॥

तत् स्वरूपं व्यासः।

स्वयमेवोपपन्नाय विनयेन द्विजातये।
तज्ज्ञः सम्पादयेत् स्नानं शिष्याय च सुताय च॥

दाक्षायणमयैः कुम्भैः मन्त्रविज्जाह्नवीजलैः ।
कृतमङ्गलपुण्याहैः स्नानमस्तु तवानघं ॥
इत्युक्त्वा जाह्नवीस्थाने तीर्थान्यन्यानि कीर्त्तयेत् ।
सर्वतीर्थाभिषेकस्ते भूयादित्यन्ततोवदेत् ॥
ब्रूयेवं विप्रवर्य्याणां वचनेन महात्मनां ।
सर्वतीर्थेषु सुस्नातः पूतो भवति नान्यथा ॥

'उपसन्नाय' समीपे उपविष्टाय, 'दाक्षायणं' हिरण्यं ।

जावालः ।

अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्मिणां ।
आर्द्रेण वाससा वापि मार्जनं दैहिकं विदुः ॥

एतत्कापिलं स्नानं ।

तदाह वृहस्पतिः ।

आर्द्रेण कर्पटेनाङ्गशोधनं कापिलं स्मृतं ।

ब्रह्माण्डपुराणे ।

नित्यं नैमित्तिकं काम्यन्त्रिविधं स्नानमुच्यते ।
तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितं ॥

क्वचिन्नैमित्तिके तर्पणापवादमाहापस्तम्बः ।

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे ॥
स्नानं नैमित्तिकं कार्य्यं दैव-पित्र्यविवर्जितं ॥

अत्र विशेषमाह विष्णुः ।

स्नानार्हो यो निमित्तेन कृत्वा भूयोऽवगाहनं(१) ।

(१) तोयावगाहनमिति ख० ।

आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्॥

'कृत्वावगाहनं' तूष्णीमिति शेषः।

तथा योगयाज्ञवल्क्यः।

तूष्णीमेवावगाहेत यदा स्यादशुचिर्नरः।

आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत्॥

वृद्धवसिष्ठः।

चण्डालादेस्तु संस्पर्शे वारुणं स्नानमाचरेत्।

इतराणि तु चत्वारि यथायोगं स्मृतानि वै॥

'इतराणि' ब्राह्मादीणि।

वारुणस्नानेऽपि नित्यविशेषमाह गार्ग्यः।

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च।

नित्यं यादृच्छिकं चैव यथारुचि समाचरेत्॥

'यादृच्छिकं' मलापकर्षणार्थं। "मलव्यपोहनं स्नानं प्राज्ञर्या-दृच्छिकं पुनः" इति तेनैवोक्तत्वात्।

आतुरस्नानं प्रत्याह पराशरः।

आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः।

स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः॥

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला।

पात्रान्तरिततोयेन स्नानं कृत्वा व्रतञ्चरेत्॥

सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गं कथञ्चन।

न वस्त्रपीडनं कुर्य्यान्नान्यद्वासश्च धारयेत्॥

उशनाः।

ज्वराभिभूता या नारी रजसा च परिप्लुता ।
कथन्तस्या भवेच्छौचं शुद्धिः स्यात् केन कर्मणा ॥
चतुर्थेऽहनि संप्राप्ते स्पृशेदन्या तु तां स्त्रियं ।
सा सचैलावगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥
दश-द्वादशकृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ।
दद्याच्छक्त्या ततो दानं पुण्याहेन विशुध्यति ॥

सूतिका रजस्वलयोर्मरणे विशेषमाह छागलेयः ।

सूतिकायां मृतायाञ्च कथं कुर्व्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ।
तेनैव स्नापयित्वा तु कुर्य्यात्स्नानं यथाविधि ॥
पञ्चभिः स्नापयित्वा तु मृतां गव्यैरजस्वलां ।
वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्व्वकं ॥

इति स्नानभेदाः ।

अथ स्नानकर्त्तुः प्रतिषेधाः ।

तत्राह व्यासः ।

रात्रौ स्नानं न कुर्वीत दानञ्चैव विशेषतः ।
नैमित्तिकं तु कुर्वीत स्नानं दानञ्च रात्रिषु ॥

एतन्महानिशाभिप्रायं ।

यदाह मनुः ।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।

न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

जावालिः ।

न पारक्ये सदा स्नायान्न भुक्त्वा न महानिशि ।
नार्द्रमेकञ्च वसनं परिदध्यात् कदाचन ॥

महानिशालक्षणमाह मार्कण्डेयः ।

महानिशा द्वे घटिके रात्रौ मध्यमयामयोः ।
नैमित्तिकं तदा कुर्य्यात् काम्यं न तु मनागपि ॥

काम्यमत्राविहितकालविशेषं । द्वितीययामस्यान्त्या तृतीयस्य चाद्येति घटिकाद्वयं ।

मध्यमयामद्वयस्यैव महानिशात्वमाह देवलः ।

महानिशा तु विज्ञेया मध्यमं प्रहरद्वयं ।
तस्यां स्नानं न कुर्व्वीत काम्य-नैमित्तिकादृते ॥

काम्यं तत्कालविहितं। यथा,—

प्रतियामं ततोरात्रेः स्नायाच्छीतैर्घटाम्बुभिरित्यादि ।

पैठीनसिरपि ।

अपेयं हि सदा तोयं रात्रौ मध्यमयामयोः ।
स्नानं चैव न कर्त्तव्यं तथैवाचमनक्रिया ॥

विश्वामित्रः ।

महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः ।
तस्यां स्नानं न कुर्व्वीत काम्यमाचमनन्तथा ॥

षट्त्रिंशन्मतेऽपि ।

अपेयं हि सदा तोयं रात्रौ मध्यमयामयोः ।

स्नानं तत्र न कुर्वीत काम्यमाचमनक्रिया ॥

निमित्तविशेषे त्वाचमनप्रतिप्रसवोऽपि तत्रैव ।

मूत्रोच्चारे महारात्रौ कुर्य्यादाचमनन्तु यः ।
प्रायश्चित्तीयते विप्रः प्राजापत्यार्द्धमर्हति ॥

'उच्चारः' पुरीषोत्सर्गः ।

तदेवं महानिशायामेव स्नाननिषेधादन्यत्र रात्रावप्यविरुद्धमिति गम्यते ।

अतएव पराशरः ।

महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयं ।
प्रदोषे पश्चिमे यामे दिनस्नानं समाचरेत् ॥

'प्रदोषः' पूर्वयामः ।

एतच्च दिने स्नानासम्भवे सति वेदितव्यं ।

यदाह स एव ।

दिवाकरकरैः पूतं दिवास्नानं प्रशस्यते ।
अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ॥

व्यासः ।

अप्रशस्तं निशि स्नानं राहोरन्यत्र दर्शनात् ।
पराभसि तथैवाल्पे नाशिरस्कं कथञ्चन ॥

'राहुदर्शनं' ग्रहणं, संक्रान्त्यादेरपि प्रदर्शनार्थं ।

अतएव देवलः ।

राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु ।
स्नान-दानादिकं कुर्य्युर्निशि काम्यव्रतेषु च ॥

'अत्ययः' मरणं। 'वृद्धिः' जननं।

योगयाज्ञवल्क्योऽपि।

ग्रहणोद्वाह-सङ्क्रान्ति-यात्रार्त्ति-प्रसवेषु च।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥

'अर्त्तिः' मरणं।

पराशरोऽपि।

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि॥

'यज्ञे' अवभृथे।

यत्तु रात्रौ नदीस्नानप्रतिषेध उक्तो व्यासेन,

नद्यामस्तमिते स्नानं वर्जयेत् सर्वथा नरः।
नद्यां स्नातो नदीमन्यां न प्रशंसेत्तु धर्मवित्॥
अन्तर्द्धाय न च स्नायान्न च तीर्थे जलान्तरे।
न मेहेत जलद्रोण्यां स्नातुं च न नदीन्तरेत्॥

सोऽयमस्पृश्यस्पृष्टविषयः।

यदाह वृद्धशातातपः।

आदित्येऽस्तमिते रात्रावस्पृश्य स्पृशेद्यदि।
भगवन् केन शुद्धिः स्यात्तन्मे ब्रूहि सुनिश्चितं॥
अनस्तमित आदित्ये संगृहीतं तु यज्जलं।
तेन सर्वात्मना शुद्धिः शवस्पर्शञ्च वर्जयेत्॥

पराशरः।

अस्तं गते यदा सूर्य्ये चण्डालं पतितं स्त्रियं।

सूतिकां स्पृशतश्चैव कथं शुद्धिर्विधीयते ॥
जातवेदाः सुवर्णञ्च सोममर्कं तथैव च ।
ब्राह्मणानुमते चैव स्नात्वा स्पृष्ट्वा च शुध्यति ॥
आचान्तमनुगन्तुं वा निशि स्नानं न विद्यते ।
स्नानमाचमनं प्रोक्तं दिवाहृतजलेन तु ॥

यमः ।

विप्रः स्पृष्टो निशायां तूदक्यया पतितेन वा ।
दिवानीतेन तोयेन स्नापयेदग्निसन्निधौ ॥
दिवाहृतं तोयमपि कृत्वा स्वर्णयुतं तु तत् ।
रात्रिस्नाने तु सम्प्राप्ते स्नायादनलसन्निधौ ॥

यदा तु दिवाहृतं तोयं न सम्भवति तदा विशेषमाह मरीचिः ।

दिवाहृतं तु यत्तोयं गृहे यदि न विद्यते ।
प्रज्वाल्याग्निं ततः स्नायान्नदी-पुष्करिणीषु च ॥

अत्र विशेषमाह कात्यायनः ।

प्रचेता वरुणश्चाप्सु न रात्रौ जलमुद्धरेत् ।
अन्यत्र धाम्न इत्येतत्तीरस्थः स्नानमाचरेत् ॥

धाम्नोधाम्न इति प्रतीकोपलक्षितमन्त्रमन्तरेण रात्रौ जलं नोद्धरेदित्यर्थः। एवमुद्धृतेन च जलेन नद्यादितीरस्थः स्नायात्। मापो मौषधीर्हिंसीर्धाम्नोधाम्नो राजन्नित्यादिर्याजुर्वैदिको मन्त्रः ।
जलोद्धरणे विशेषमाह पैठीनसिः ।

यदि गेहे न तोयं स्यात्तावच्छुद्धिः कथम्भवेत्।
धान्नोधान्न इति मन्त्रेण गृह्णीयादग्निसन्निधौ ॥

'अग्निसन्निधौ' जलस्योपरि ज्वलन्तमग्निं धारयित्वेत्यर्थः।

तथा च हारीतः।

धान्नो धान्न इत्यग्निमुपरिष्टाद्धारयन् गृह्णीयात्।

राहुदर्शनादौ तु रात्रावपि नद्यादावेव स्नानं प्रशस्तं।

यदाह व्यासः।

चन्द्र-सूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीं।
स स्नातः सर्वतीर्थेषु किमर्थमटते महीं ॥

देवीपुराणे।

गोदावरी महापुण्या चन्द्रे राहुसमन्विते।
सूर्य्ये च शशिना ग्रस्ते तमोरूपे महामते ॥

सौरपुराणे।

चन्द्रगृहे श्वस्पर्शे रवेः संक्रमणेषु च।
नक्तमप्यवगाहेत सलिलं सरिदादिषु ॥

देवलः।

यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

यत्र सूर्य्योदयादूर्द्धं ग्रस्तस्य चन्द्रस्यास्तमयस्तत्र सूर्य्योदयात् प्रागेव राहुदर्शननिमित्तं स्नानादि कार्य्यं। न तु पश्चादित्यर्थः।

वृद्धवशिष्ठः।

सर्वेषामेव वर्णानां सूतकं राहुसूतके।

सचैलन्तु भवेत्स्नानं सूतकान्नञ्च वर्जयेत् ॥

'सूतकान्नं' राजसूतकान्नं ।

गौतमः ।

न कदाचिद्रात्रौ नग्नः स्नायात् ।

बौधायनः ।

नग्नः स्नायान्न नक्तं स्नायात् ।

आपस्तम्बः ।

सशिरोमज्जनमप्सु वर्जयेदस्तमिते न स्नानं ।

सशिरोमज्जनप्रतिषेधः स्रावरोदकविषयः ।

तथा च नन्दिपुराणे ।

मग्नो नदीजले स्नायात् प्रविश्यान्तर्जले द्विजः ।

तड़ागादिषु तोयेषु प्रत्यक्षं स्नानमाचरेदिति ।

मनुः ।

न नग्नः स्नानमाचरेदिति ।

उशनाः ।

न नग्नः स्नायात् ।

हारीतः ।

न नग्नो जलं पेयात् ।

शङ्ख-लिखितौ ।

अमग्नो अनग्नः स्नायान्नाप्सु मेढ्रेनोद्घर्षणं कुर्य्यान्न पादेन पाणिना वा जलमभिहन्याद्यस्मादापो वै सर्वा देवता न स्रवन्तीं वृथाभिक्रामेदवमिच्यामेध्योदकं परिहरेन्नाल्पोदके स्नायान्न समुद्रमवगाहेत न नदीषु नदीं ब्रूयान्न पर्वतेषु पर्वतान् ।

योगयाज्ञवल्क्यः ।

पादेन पाणिना वापि यष्ट्या वस्त्रेण चोदकं ।
न हन्यान्नैव वादेच्च न च प्रक्षोभयेद्बुधः ॥
न कुर्य्यात् कस्यचित् पीड़ां कर्मणा मनसा गिरा ।
आचरेन्नाभिषेकन्तु कर्माण्यन्यानि वाचरेत् ॥

देवलः ।

न नदीषु नदीं ब्रूयात् पर्वतेषु च पर्वतं ।
नान्यत् प्रशंसेत्तत्रस्थस्तीर्थेष्वायतनेषु च ॥

अन्यासु नदीषु स्थितोऽन्यां नदीं न ब्रूयात् । अन्येषु पर्वतेषु स्थितोऽन्यं पर्वतं न ब्रूयात् । न प्रशंसेत् । तथा अन्येषु तीर्थेष्वन्येष्वायतनेषु पुण्यक्षेत्रेषु च स्थितो नान्यत्तीर्थं क्षेत्रं वा प्रशंसेदित्यर्थः ।

हारीतः ।

न चलरोपहारयोः स्नायात् ।

पुनर्हारीतः ।

न स्नात-वर्णकयोरर्घं प्रयच्छेदन्यत्र देव-गुरु-ब्राह्मणेभ्यः ।

स्नानमाचरेदित्यनुवृत्तौ विष्णुः ।

नाजीर्णी न चातुरो न नग्नो न राहुदर्शनवर्जं रात्रौ न सन्ध्यायां ।

जाबालिः ।

नित्यं न हापयेत्स्नानं काम्यं नैमित्तिकञ्च यत् ।
दशम्यादिषु कर्त्तव्यं न च यादृच्छिकं क्वचित् ॥

'यादृच्छिकं' मलापकर्षणार्थं ।

आपस्तम्बोऽपि ।

याट्टच्छिकन्तु यत्स्नानं भोगार्थं क्रियते द्विजैः ।
तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकं न तु ॥

हारीतः ।

दशमीं पञ्चमीञ्चैव पूर्णमासीं त्रयोदशीं ।
एकादशीं तृतीयाञ्च यस्तैलमुपसेवते ।
उत्तीर्णा तस्य वृद्धिः स्यादनापत्तिबलायुषां ॥

बोधायनोऽपि ।

नन्दासु चैव रिक्तासु पूर्णासु च जयासु च ।
द्वादश्याञ्चैव सप्तम्यां व्यतीपाते सवैधृते ।
रविसंक्रमणे चैव नाभ्यक्तं स्नानमाचरेत् ॥

'नन्दाः' प्रतिपत्-षष्ठ्येकादश्यः । 'रिक्ताः' चतुर्थी-नवमी-चतुर्दश्यः । 'पूर्णाः' पञ्चमी-दशमी-पञ्चदश्यः । 'जयाः' तृतीयाष्टमी-त्रयोदश्य. । तदेवं द्वितीयां विहायेतरासु तिथिषु अभ्यङ्गस्नानं न कार्य्यमित्युक्तं भवति ।

वारनिषेधोऽपि पराशरेण दर्शितः ।

सन्तापः कान्तिरल्पायुर्धनं निर्द्धनता तथा ।
आरोग्यं सर्वकामाः स्युरभ्यङ्गाद्भास्करादिषु ॥

अथ प्रचेताः ।

सार्षपं गन्धतैलञ्च यत्तैलं पुष्पवासितं ।
अन्यद्द्रव्ययुतञ्चैव न दुष्यति कदाचन ॥

यमोऽपि ।

घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितं ।
न दोषः पक्वतैलेषु स्नानाभ्यङ्गे तु नित्यशः ॥

ब्रह्मवैवर्त्तपुराणे ।

पक्षयोरुभयोराजन् सप्तम्यां निशि सन्ध्ययोः ।
विद्या-पुत्र-कलत्रार्थी तिलैः स्नानं विवर्जयेत् ॥
तिलस्नानं सदा पुण्यं कुर्य्यादामलकैः श्रियं ।
सप्तमी-नवमी-दर्श-रविसंक्रमणादृते ॥

वायुपुराणे ।

नवम्यां दर्श-सप्तम्योः संक्रान्तौ रविवासरे ।
चन्द्र-सूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ॥

व्यासः ।

दशम्याञ्च तृतीयायां त्रयोदश्यां तथैव च ।
न वर्णैर्वारुणं स्नानं कर्त्तव्यं क्षत्रियादिभिः ॥

जाबालिरपि ।

त्रयोदश्यां तृतीयायां दशम्यां तु विशेषतः ।
शूद्र-विट्क्षत्रजाः(१) स्नानं नाचरेयुः कथञ्चन ॥

अत्र प्रतिप्रसवमाह गर्गः ।

पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते ॥

गारुड़पुराणेऽपि ।

---

(१) शूद्र विट् क्षत्रिया इति ग० ।

नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते ॥

भविष्यत्पुराणे ।

न स्नायादुत्सवेऽतीते मङ्गल्यानि निवर्त्त्य च ।
अनुव्रज्य सुहृद्बन्धूनर्चयित्वेष्टदेवताः ॥

प्रतिप्रसवोऽपि तत्रैव ।

मङ्गल्येष्विष्यते स्नानं वृद्धौ पर्वोत्सवेषु च ।
स्नेहमन्त्रसमायुक्तं मध्याह्नात् प्राग्विशेषतः ॥

इति स्नानकर्त्तुः प्रतिषेधाः ।

अथ स्नानार्थं ग्राह्याणि वर्ज्यानि चोदकानि ।

तत्र मनुः ।

नदीषु देवखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नित्यङ्गर्त्तप्रस्रवणेषु च ॥

'नदी' अशोष्यसलिला स्रवन्ती। ग्रीष्मशोष्यसलिलासु स्वल्पसरित्सु स्नाननिषेधात्। देवैः खातमिति यत्स्मर्यते तत् 'देवखातं'। सहस्र-द्वयहस्ताधिकपरिमाणः कृत्रिमोजलाशयः 'तडागः'। हस्तसहस्राधिक-परिमाणं तड़ागाच्च न्यूनं 'सरः'।

गर्त्तस्वरूपं उक्तं कात्यायनेन ।

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवाच्या गर्त्तास्ते परिकीर्त्तिताः ॥

अष्टधनुःसहस्रायामभूप्रदेशावस्थितानामपां यत्र परतो गतिः प्रवाहो नास्ति स जलाशयो गर्त्तशब्दवाच्यो न नदीशब्दवाच्यः। 'प्रस्रवणं' निर्झरः, पर्वतादेः प्रस्यन्दमानस्तोकजलप्रवाह इत्यर्थः।

याज्ञवल्क्यः।

स्नायान्नदी-देवखात-ह्रद-प्रस्रवणेषु च[१] ॥

स्तिमितप्रवाहोऽतिगम्भीरजलो नद्येकदेशः 'ह्रदः'।

दक्षः।

स्नानं चाकृत्रिमे जले।

विष्णुपुराणे।

नदी-नद-तड़ागेषु देवखात-सरःसु च।
नित्यक्रियार्थं स्नायीत गर्त्त-प्रस्रवणेषु च ॥

'नदाः' हिरण्यबाहुप्रभृतयः।

अपामुत्तरोत्तरं पुण्यत्वमाह मार्कण्डेयः।

भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकं।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते।
तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यन्तु सर्व्वतः ॥

'तीर्थं' साधुजुष्टं। "यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्ष्यते" इति स्मरणात्।

विष्णुरपि।

उद्धृतात् पुण्यं भूमिष्ठमुदकं तस्मान्नादेयं तस्मादपि साधुपरिगृहीतं सर्व्वत एव गाङ्गमिति।

विश्वामित्रः।

एकतः सर्व्वतीर्थानि जाह्नव्येकैव चान्यतः।
ब्रह्मलोकेऽपि शिरसः पतिता या महीतलं ॥

(१) नदी-देवखात-ह्रदेषु च सरःसु चेति ख०।

मरीचिरपि ।

भूमिष्ठमुद्धृतं वापि शीतमुष्णमथापि वा ।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकं ॥

पद्मपुराणे ।

उद्धृतं तु शुभं तोयमपर्य्युषितमेव हि ।
भागीरथ्यास्तु यत्तोयं न तत्पर्य्युषितं भवेत् ॥

आदित्यपुराणे ।

चिरं पर्य्युषितं वापि शूद्रस्पृष्टमथापि वा ।
जाह्नव्याः स्नानदानादौ पुनात्येव सदा पयः ॥

अतएव गाङ्गव्यतिरिक्तेनोद्धृतोदकेन शूद्रादिस्पृष्टेन न स्नातव्यमित्याह योगयाज्ञवल्क्यः ।

अशुचिस्पर्शदुष्टाभिरुद्धृताभिस्तु मानवः ।
स्नानं समाचरेद्यस्तु न स शुध्यति कर्हिचित् ।

तथा ।

त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥

'त्रिरात्रफलदाः' त्रिरात्रोपवासव्रतफलप्रदा इत्यर्थः । एवं पक्षमासयोरपि ।

वाराहपुराणे ।

त्रिभिः सारस्वतं तोयं पञ्चाहेन तु यामुनं ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदं ॥
समुद्रगानां सरितामन्यासामपि यत्पयः ।

पावनं स्नान-दानेषु प्राजापत्यसमं स्मृतं ॥
असमुद्रगताश्चापि याः काश्चिद्विपुलोदकाः ।
अशोष्या ग्रीष्मकालेऽपि तासु स्नानं समाचरेत् ॥
शुष्यन्ति याः कुसरितो ग्रीष्मे सूर्य्यांशुतापिताः ।
तासु स्नानं न कर्त्तव्यं दृष्टतोयास्वपि क्वचित् ॥

निगमः ।

याः शोषमुपगच्छन्ति ग्रीष्मे तु सरितो भुवि ।
तासु स्नानं न कुर्वीत प्रावृष्यप्यम्बुदर्शने ॥

प्रशस्तानामपि नदीनां रजोदोषकालं तत्र स्नानाद्यनर्हत्वमाह, कात्यायनः ।

सम्प्राप्ते श्रावणे मासि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा तु जाह्नवीं ॥

श्रावणे इति वर्षाकालोपलक्षणार्थं ।

अतएव मार्कण्डेयः ।

द्विमासं सरितः सर्वा भवन्तीह रजस्वलाः ।
अप्रशस्तं ततः स्नानं वर्षासु नववारिणा ॥

कर्कटसंक्रान्तेरारभ्य मासद्वयं वर्षाकालः । "वर्षाः कर्कटसिंहयोः" इति ज्योतिःपराशरस्मरणात् ।

स्नानग्रहणं तर्पणादेरपि प्रदर्शनार्थं । यदाह कात्यायनः ।

नभो-नभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
न स्नानादीनि सर्वाणि तासु कुर्वीत मानवः ॥

कर्कटादिमासद्वयं यावद्रजस्वला इत्यर्थः ।

चन्द्रसूर्य्यग्रहे चैव संक्रान्त्यादिदिने तथा ।

यदाह स एव ।

प्रावृट्काले महानद्यः सन्ति नित्यं रजस्वलाः ।

तासु स्नानं न कुर्वीत वर्जयित्वा तु जाह्नवीं ॥

जाह्नव्यास्तु दिनत्रयमेव रजोदोष इत्याह स एव ।

प्रवृत्ते श्रावणे मासि त्र्यहं गङ्गा रजस्वला ।

चतुर्थेऽहनि सम्प्राप्ते शुद्धा भवति जाह्नवी ॥

एतदपि सौरमानाभिप्रायमेव । अन्यथा "प्रथमे कर्कटे देवी त्र्यहं गङ्गा रजस्वला । सर्वा रक्तवहा नद्यः करतोयाम्बुवाहिनी ॥" इति योगयाज्ञवल्क्यवचनविरोधः स्यात् । सौरमाने संक्रान्तिवशादेव श्रावणादिव्यवहारदर्शनात् । 'करतोया' नदीविशेषः ।

तथा ।

कर्कटादौ रजोदुष्टा गोमती वासरत्रयं ।

चन्द्रभागा सती सिन्धुः शरयूर्नर्मदा तथा ॥

उक्तव्यतिरिक्तानां सर्वासामपि नदीनां मासद्वयं रजोदोषे प्राप्ते विशेषमाह स एव ।

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।

तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

'यव्याः' मासाः, "युरेकः संवत्सर" इति शतपथश्रुतेः ।

समुद्रगामिनीनां तु षड्रात्रं रजोयोग इत्युक्तं भगवतीपुराणे ।

मासद्वयं कर्कटादि सर्वानद्यो रजस्वलाः ।

समुद्रगामिनीनान्तु षड्रात्रं रज इष्यते ॥

समुद्रगामिनीष्वपि कासाञ्चित्सर्वथा रज एव नास्तीत्युक्तं वामनपुराणे।

सरस्वती नदी पुण्या तथा वैतरणी नदी।
आपगा नर्मदा चैव गङ्गा मन्दाकिनी नदी॥
मधुस्रवा अंशुमती कौशिकी यमुना तथा।
दृषद्वती महापुण्या तथा हैरण्वती नदी॥
वर्षाकालवहाः सर्वा वर्जयित्वा सरस्वतीं।
एतासामुदकं पुण्यं वर्षाकाले प्रकीर्त्तितं।
रजस्वलात्वमेतासां विद्यते न कदाचन॥

कात्यायनोऽपि।

तपनस्य सुता गङ्गा प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः॥

कुरुक्षेत्रे या सरस्वती सा 'प्लक्षजाता'।

एवमुक्तरजोदोषस्य क्वचिदपवादमाह स एव।

उपाकर्म्मणि चोत्सर्गे प्रातःस्नाने तथैव च।
चन्द्र-सूर्य्यग्रहे चैव रजोदोषो न विद्यते॥

गार्ग्यः।

प्रत्यावर्त्तेऽम्भसि स्नानं वर्ज्यं नद्यां द्विजातिभिः।
यस्यां रजकतीर्थञ्च दशहस्तेन चोपरि॥

प्रत्यावर्त्ते आवर्त्तयुक्ते।

बौधायनोऽपि।

तथावर्त्तोदके स्नानं वर्ज्यं नद्यां द्विजातिभिः।

तस्यां रजकतीर्थन्तु दशहस्तेन वर्जयेत् ॥
स्नानं रजकतीर्थे तु भोजनं गणिकागृहे ।
पश्चिमोत्तरशायित्वं शक्रादपि हरेच्छ्रियं ॥
निरुद्धासु न कुर्वीरन् अंशभाक् तत्र सेतुकृत् ॥

अत्र स्रवन्तीष्वित्यनुवृत्तौ जमदग्निः ।

न परेण निरुद्धासु स्रवन्तीषु कदाचन ।
स्नानं समाचरेद्विप्रः सेतुकर्त्तुः फलं यतः ॥

शङ्खः ।

नाल्पोदके स्नायात् न समुद्रमवगाहेत ।

एतच्च प्रभूतोदकसम्भवाभिप्रायं ।

यदाह छागलेयः ।

नद्यां सन्निहितायान्तु नान्यत्र स्नानमाचरेत् ।
प्रचुराणामपां लाभे न च स्वल्पोदके क्वचित् ॥

स्वल्पोदकलक्षणमुक्तं स्कन्दपुराणे ।

नाभिमात्रन्तु यत्तोयं तत्तु स्वल्पमुदाहृतं ।
तत्र स्नानं प्रकुर्वीत जानुमात्रे न तु क्वचित् ॥

योगयाज्ञवल्क्यः ।

प्रभूते विद्यमाने तु उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ॥

नारदीयपुराणे ।

नद्यां तु विद्यमानायां न स्नायादन्यवारिषु ।
न स्नायादल्पतोयेन विद्यमाने बहूदके ॥

नद्यसन्निधाने तड़ागादिष्वपि स्नातव्यमित्याह मरीचिः।

अमन्निधाने सरितां तड़ागेषु सरःसु च।
बह्नतोयासु वापीषु कूपेष्वपि कदाचन॥

विष्णुपुराणे।

कूपेषूत्तानतोयेषु स्नानं कुर्वीत वा द्विजः।
स्नायीतोद्धृततोयेन अन्यथा ह्यसम्भवे॥

मार्कण्डेयोऽपि।

पुराणानां नरेन्द्राणामृषीणाञ्च महात्मनां।
स्नानं कूपतड़ागेषु देवतानां समाचरेत्॥

महात्मनामित्यनेन पतितायुदपानेषु न स्नायादित्युक्तं भवति।

अतएव वृद्धमनुः।

अन्यायोपार्जितार्थस्य पतितस्य च वार्द्धुषेः।
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेदिति॥

एवमनुत्सृष्टेष्वपि द्रष्टव्यं।

यदाह व्यासः।

अनुत्सृष्टेषु न स्नायात्तथैवासंस्कृतेषु च॥

'असंस्कृतं' अकृतप्रतिष्ठं। 'अनुत्सृष्टं' सर्वार्थत्वेनात्यक्तं परकीयमिति यावत्।

अतएव जाबालिः।

न पारक्ये सदा स्नायात्।

मनुरपि।

परकीयनिपानेषु स्नायान्नैव कदाचन।

निपानकर्त्तुः स्नायी हि दुष्कृतांशेन लिप्यत इति ।

यत्पुनर्व्यासेनोक्तं ।

पञ्चपिण्डाननुद्धृत्य पारक्ये स्नानमाचरेदिति ।

यच्च याज्ञवल्क्येन ।

पञ्चपिण्डान् समुद्धृत्य न स्नायात्परवारिषु ।

यच्च शङ्खलिखितौ । नैष्ठिकचिते पितॄंस्तर्पयेत् । वापीकूपतड़ागोदपानेषु सप्त पञ्च त्रीन् वा पिण्डानुद्धृत्य देवपितॄंस्तर्पयेदिति ।

यच्च पैठीनसिना ।

परकृतान् सेतुकूपांश्च वर्जयेत् ।

अंशभाक् तच सेतोस्त्रीन् पिण्डानुद्धृत्य स्नायादिति । तन्न्याय्यलाभविषयं ।

तथा च मनुः ।

अलाभे देवखातानां सरसां सरितां तथा ।

उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेदिति ।

बौधायनोऽपि ।

तस्मात्परकृतान् सेतून् कूपांश्च परिवर्जयेत् ।

उद्धृत्य वापि त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा ॥

निरुद्धात्पञ्चमृत्पिण्डान् कूपाच्च त्रीन् घटांस्तथा ।

शौनकोऽपि ।

वापीकूपतड़ागेषु यदि स्नायात् कदाचन ।

उद्धृत्य मृत्तिकापिण्डान् दश पञ्चाथवा क्षिपेत् ॥

योगयाज्ञवल्क्योऽपि ।

परकीयनिपानेषु यदि स्नायात् कदाचन ।
सप्तपिण्डांस्तदोद्धृत्य ततः स्नानं समाचरेत् ॥

विष्णुरपि ।

परनिपानेषु न स्नायात् स्नानमाचरेद्वा पञ्चपिण्डानुद्धृत्यापदीति ।

अत्र यथासामर्थ्यं व्यवस्था । एवञ्च यत्रानुद्धृत्य परकीये स्नानं तत्रैव तद्दोषभाक्त्वमित्युक्तं भवति ।

तदाह शौनकः ।

अनुद्धृत्य तु यः स्नायात् परकीयजलाशये ॥
वृथा भवति तत्स्नानं कर्तुः पापेन लिप्यत इति ॥

'वृथा' निष्फलमित्यर्थः । सर्वार्थत्वेनोत्सृष्टे तु परकीयत्वाभावादनुद्धरणे न दोष इति भावः ।

एवमुष्णोदकस्नानेऽपि नैष्फल्यमाह शङ्खः ।

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।
शरीरशुद्धिर्विज्ञेया न तु स्नानफलं भवेत् ॥

योगयाज्ञवल्क्योऽपि ।

वृथा उष्णोदकस्नानं वृथा जप्यमवैदिकं ।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकमिति ॥

यत्तु यमेनोक्तं ।

आप एव सदा पूतास्तासां वह्निर्विशोधकः ।
तस्मात् सर्वेषु कालेषु उष्णाम्भः पावनं स्मृतमि।त ॥

यदपि षट्त्रिंशन्मते ।

आपः स्वभावतो मेध्याः किं पुनर्वह्नितापिताः ।

तेन सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणेति ॥

तदातुरस्नानविषयं ।

तथा च यमः ।

आदित्यकिरणैः पूतं पुनः पूतन्तु वह्निना ।

आम्नातमातुरस्नाने प्रशस्तन्तु शृतोदकमिति ॥

यदा तु नद्यादिकं न लभ्यते तदानीमनातुरस्याप्युष्णोदकस्नानमविरुद्धमित्याह स एव ।

नित्यं नैमित्तिकञ्चैव क्रियाङ्गं मलकर्षणं ।

तीर्थाभावे तु कर्त्तव्यमुष्णोदकपरोदकैरिति ॥

यत्तु वृद्धमनुनोक्तम् ।

मृते जन्मनि संक्रान्त्यां श्राद्धे जन्मदिने तथा ।

अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने ।

आरोग्यपुत्रमित्रार्थी न स्नायादुष्णवारिणा ॥

पौर्णमास्यां तथा दर्शे यः स्नायादुष्णवारिणा ।

स गोहत्याकृतं पापं प्राप्नोतीह न संशय इति ॥

तेनाप्युक्तेषु मरणादिषु तीर्थाभावेऽपि नोष्णोदकैः स्नायात्, किन्तु परोदकैरुद्धृतैर्वेत्युक्तमित्यविरोधः ।

उष्णस्नाने तु विशेषमाह व्यासः ।

शीतास्वप्सु निषिच्योष्णा मन्त्रसम्भारसम्भृताः ।

गृहेऽपि शस्यते स्नानमफलं स्यात्तदन्यथा ॥

'सम्भाराः' मृदादयः ।

अतएव मध्यन्दिनस्नानाधिकारे विवस्वान् ।
मन्त्रसम्भारसंयुक्तमुपस्पर्शनमुच्यते ।
स्नानेऽवगाहने चैव प्लावनं विधिवर्जितमिति ॥
इति स्नानार्थं ग्राह्याणि वर्ज्यानि चोदकानि ।

अथ स्नानसम्भाराः ।

तत्राह दक्षः ।

चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादीनि स्नानं वा कृत्रिमे जले ॥

अष्टधा विभक्तस्तुर्यो भागोऽत्र ज्ञेयः ।

योगयाज्ञवल्क्यः ।

मृत्तिलान् गोमयं दर्भान् पुष्पाणि सुरभीनि च ।
आहरेत्स्नानकाले तु स्नानार्थं प्रयतः शुचिः ।
गत्वोदकान्तं विधिवत् क्रमात् स्थाप्यं पृथक्क्षितौ ॥

शौनकः ।

नदीतीरे शुचौ देशे आहरेन्मृत्तिकां कुशान् ।
प्रयतो मृदमादाय दूर्वापामार्गगोमयं ।
एकदेशे पृथक् कुर्यान्मृदः स्तोकं ततः क्रमात् ॥

जाबालिः ।

ततश्च मृत्तिकां शुद्धामदुर्गन्धामनूषरां ।
शुचिदेशादतिस्तृणां कायशुद्ध्यर्थमाहरेत् ॥
अमेध्याशनशून्यानां नीरुजानां तथा गवां ।
अव्यङ्गानाञ्च सद्यस्कं शुचि गोमयमाहरेत् ॥

आर्द्रप्रतानिनीं देशात् श्मशानादिविवर्जितात् ।
मार्जनार्थं हरेत् दूर्वां अपामार्गं तथैव च ॥
सर्वकर्मोपयोगार्थं कुशान् काशानथापि वा ।
आनयेत्तर्पणार्थं तु यवानपि तिलांस्तथा ॥
देवतार्चनकर्मार्थं नवाः सुमनसः शुभाः ।
आददीत विशुद्धात्मा धौतवासोयुगं तथा ॥
तथाभ्युक्षणमाहर्तुं पात्रमौदुम्बरं दृढं ।
जपार्थमक्षमालाञ्च रुद्राक्षादिविनिर्मितां ।
एवं सम्भृतसम्भारः स्नानकर्म समारभेत् ॥

अत्र शातातपः ।

वल्मीकाखूत्करालेपाज्जलाच्च पथिवृक्षयोः ।
कृतशौचावशिष्टा च न ग्राह्याः सप्त मृत्तिकाः ॥
शुचौ देशे तु संग्राह्या शर्कराश्मादिवर्जिता ।
रक्ता गौरा तथा श्वेता मृत्तिका त्रिविधा स्मृता ॥
न मृदं नोदकं वापि न निशायां तु गोमयं ।
न गोमूत्रं प्रदोषे तु गृह्णीयाद्बुद्धिमान्नरः ॥
तिलोद्वर्त्ती तिलस्नायी शुचिर्नित्यं तिलोदकी ।
होता भोक्ता च दाता च षट्तिली नावसीदति ॥

मरीचिः ।

मृद्दर्भतिलपुष्पाणि दूर्वापामार्गगोमयं ।
तिलामलकवासांसि पात्रमभ्युक्षणस्य च ॥
एकान्तमुदकं गत्वा तटं प्रक्षाल्य पाणिना ।

सम्भारान् स्थापयेत्तत्र(१) यथादेशं पृथक् पृथक् ॥

अङ्गिराः ।

विना दर्भेण यत्स्नानं यच्च दानं विनोदकं ।
असङ्ख्यातञ्च यज्जप्यं तत्सर्वं निष्फलं भवेत् ॥

व्यासः ।

आदाय परया भक्त्या गङ्गातीरोद्भवां मृदं ।
संवर्द्धयति गात्राणि तस्य धर्मो महान् भवेत् ॥

वसिष्ठः ।

प्रयतोमृदमादाय दूर्वामार्द्रञ्च गोमयं ।
स्थापयित्वा तथाचम्य ततः स्नानं समाचरेत् ॥

इति स्नानसम्भाराः ।

अथ प्रातःस्नानं ।

तत्राह दक्षः ।

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
उषःकाले तु संप्राप्ते शौचं कुर्य्याद्यथार्थवत् ।
ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकं ॥

शौनकः ।

प्रातराचमनं कृत्वा श्रद्धायुक्तो यथार्थवत् ।
दन्तशौचं ततः कृत्वा प्रातःस्नानं समाचरेत् ॥

गौतमः ।

---

(१) तत्र संस्थापयेत् सर्व्वमिति ग० ।

कृतशौचविधिः सम्यक् स्वाचान्तो दन्तधावनं ।
विधायोषसि कुर्व्वीत स्नानञ्च विधिपूर्व्वकं ॥

जातूकर्ण्यः ।

सर्व्वैर्व्वर्णैः प्रकर्त्तव्यं प्रातःस्नानं दिने दिने ।
मन्त्रवत्तु द्विजाः कुर्य्युः शूद्रा मन्त्रविवर्जितं ॥

सत्यव्रतः ।

चतुर्णामपि वर्णानां प्रातःस्नानं विशोधनं ।
द्विजातिभिः प्रकर्त्तव्यं मन्त्रैस्तु श्रुतिचोदितैः ॥

बौधायनः ।

अम्भोऽवगाहनं स्नानं विहितं सार्व्ववर्णिकं ।
मन्त्रवत्प्रोक्षणञ्चापि द्विजातीनां विशिष्यते ॥

महाभारते ।

ब्रह्म-क्षत्र-विशाञ्चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणाञ्च कुरुनन्दन ॥

कूर्म्मपुराणे ।

नित्यमभ्युदयात् पूर्व्वं स्नातव्यं शुद्धिमिच्छता ।
एष साधारणो धर्म्मश्चातुर्वर्ण्यस्य कीर्त्तितः ।
स्त्रीभिः शूद्रैश्च कर्त्तव्यं मन्त्रवर्जं विगाहनं ॥

गोभिलः ।

कुर्य्यादहरहः स्नानं उषस्यनुदिते रवौ ।
नित्यमप्लिङ्गकैर्मन्त्रैस्तर्पयेच्च तथा पितॄन् ॥

विष्णुः ।

प्रातःस्नाय्यरुणकरग्रस्तां प्राचीमवलोक्य स्नायात् ।

यत्तु चतुर्व्विंशतिमते "उषस्युषसि यत् स्नानं सन्ध्यायामुदितेऽपि च" इति तदपि पूर्व्ववचनाविरुद्धं । 'उदिते' उदयाभिमुख इति व्याख्यानात् । अन्यथा "प्रातःसन्ध्यां सनक्षत्राम्" इत्यादिविरोधः स्यात् । "स्नातोऽधिकारी भवति" इत्यादिभिः स्नातस्यैव सन्ध्याद्यधिकारात् । न चैतद्वचनबलादेव सन्ध्योत्क्रम्यतामिति युक्तं । "सन्धौ सन्ध्यामुपासीत नास्तगे नोद्गते रवौ" इति योगयाज्ञवल्क्येनोदिते निषेधस्मरणात् ।

याज्ञवल्क्यः ।

उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः ।
तिसृष्वपि च सन्ध्यासु स्नातव्यन्तु तपस्विना ॥

'उभे सन्ध्ये' प्रातर्मध्याह्नाख्ये । 'गृहाश्रितैः' गृहस्थैः । 'तपस्वी' यतिः ।

विश्वामित्रः ।

प्रातर्मध्याह्नयोः स्नानं वनस्थ-गृहमेधिनोः ।
दिने दिने यतीनां तु स्नानं त्रिषवणं स्मृतं ।
सकृदेव हि तत्प्रोक्तं नियतं ब्रह्मचारिणः ॥

दक्षः ।

प्रातर्मध्याह्नयोः स्नानं वाणप्रस्थ-गृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥

कात्यायनः ।

यथाहनि तथा प्रातर्नित्यं स्नायादतन्द्रितः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चैतदमन्त्रवत् ॥

'अमन्त्रवदिति सर्व्वथा मन्त्रनिषेधपरं न भवति किन्तु मन्त्र बहुलनिषेधार्थं ।

यदाह जैमिनिः ।

गृहेऽपि हि द्विजातीनां मन्त्रवत्स्नानमिष्यते ।
विधेर्लोपं न ते कुर्य्युः सामर्थ्ये सति कर्हिचिदिति ॥

सर्व्वथा मन्त्रनिषेधे दोषमाह विवस्वान् ।

अविदित्वैव यः स्नात्तं त्रिधानं स्नानमारभेत् ।
स याति नरकं घोरमिति धर्म्मस्य धारणा ॥

व्यासोऽपि ।

मन्त्रपूतं तु यत्स्नानं प्राहुः स्नानं(१) फलप्रदं ।
न वृथा वारिमग्नानां यादसामिव तत्समं ॥

'यादसां' जलजन्तूनां ।

योगयाज्ञवल्क्योऽपि ।

उपस्थानादिर्यस्तासां मन्त्रवत्कीर्त्तितो विधिः ।
निवेदनान्तस्तत्स्नानमित्याहुर्ब्रह्मवादिनः ॥
निषेकात् प्रभृति यावत् श्मशानं श्रुतिदर्शनात् ।
नामन्त्रवद्द्विजातीनां कर्म्म किञ्चित् प्रवर्त्तते ॥
विधिदृष्टन्तु यत् कर्म्म करोत्यविधिना तु यः ।
न फलं किञ्चिदाप्नोति क्लेशमात्रं हि तस्य तत् ॥
मत्स्य-कच्छप-मण्डूकास्तोये मग्ना दिवानिशं ।
वसन्तोऽपि च ते स्नानात् फलं नार्हन्ति कर्हिचित् ॥

---

(१) प्रातःस्नानमिति ग० ।

श्रद्धाविधिसमायुक्तं कर्म्म यत् क्रियते नृभिः।
शुचिशुद्धेन भावेन तदानन्त्याय कल्पते ॥
विधिहीनं भावदुष्टं कृतमश्रद्धया च यत्।
तद्धरन्त्यसुरास्तस्य मूढस्य त्वकृतात्मनः ॥
ब्रह्म-क्षत्र-विशाञ्चैव मन्त्रवत् स्नानमिष्यते।
तूष्णीमेव हि शूद्रस्य सनमस्कारकं स्मृतमिति ॥

अतो होमादिकर्म्मलोपसम्भवात्[१] संक्षेपेण प्रातःस्नानं समन्त्रकं कुर्य्यात्।

यदाह शाण्डायनिः।

कालाल्पत्वाद्धि शङ्केत यदि होमादिबाधनं।
तदा संक्षेपतः कुर्य्यात् सर्व्वथा तत्समन्त्रकं ॥

कात्यायनोऽपि।

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्म्मणः।
प्रातः संक्षेपतः स्नानं होमलोपो विगर्हित इति ॥

संक्षेपस्नानप्रकारमाह योगयाज्ञवल्क्यः।

योऽसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः।
असामर्थ्यान्न कुर्य्याच्चेत् तत्रायं विधिरुच्यते ॥
स्नानमन्त्रैर्जले चैव मार्जनाचमने तथा।
जलाभिमन्त्रणञ्चैव तीर्थस्य परिकल्पनं ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः।
स्नानाचरणमित्येतत् समुद्दिष्टं महात्मभिः।

(१) होमादिकर्म्मलोपशङ्कयेति ख०।

अन्यान् वा वारुणान्मन्त्रान् कामतः संप्रयोजयेत् ॥

स्नानं चतुर्व्विंशतौ ।

स्नानमब्दैश्च तैर्मन्त्रैर्वारुणैश्च मृदा सह ।
कुर्य्याद् व्याहृतिभिर्वाथ यत्किञ्चेदमृचापि वा ॥
द्रुपदादिवेति वा स्नानं तर्पयेद्देवमानुषान् ।

इदञ्च तर्पणं स्नानाङ्गं । "तर्पणन्तु भवेत्तस्य अङ्गत्वेन प्रकीर्त्तितं" इति ब्रह्माण्डपुराणस्मरणात् ।

बौधायनः ।

तपस्यमपामवगाहनं देवतास्तर्पयित्वा पितृतर्पणमनुतीर्थमप उच्छिचत्यूर्जं वहन्तीरित्यथाप्युदाहरन्ति ।

स्रवन्तीष्वनिरुद्धासु त्रयोवर्णा द्विजातयः ।
प्रातरुत्थाय कुर्वीरन् देवर्षिपितृतर्पणं ॥

चतुर्विंशतौ ।

स्नानस्यानन्तरन्तावत्तर्पयेत् पितृदेवताः ।

इदञ्च तर्पणं जलस्थेनैव कर्त्तव्यं । यदाह व्याघ्रः ।

नाभिमात्रे जले स्थित्वा चिन्तयन्नूर्द्ध्वमानसः ।
आगच्छन्तु मे पितर इमं गृह्णन्त्वेतान् जलाञ्जलीन् ॥
पितॄणामम्बरस्थानामभ्यस्थोदक्षिणामुखः ।
त्रींस्त्रीन् जलाञ्जलीन् दद्यादुच्चैरुच्चतरान् बुध इति ॥

प्रादेशमात्रमुद्धृत्य पितुरुद्देशेनाञ्जलित्रयं देयं । ततो हस्तमात्रमुद्धृत्य पितामहोद्देशेन, ततो गोशृङ्गमात्रमुद्धृत्य प्रपितामहोद्देशेनेति क्रमेणोच्चैरुच्चतरत्वं ।

तदुक्तं गारुडपुराणे ।

प्रादेशमात्रमुद्धृत्य हस्तमात्रं ततः परं ।
ततो गोश्टङ्गमात्रञ्च पित्रादिभ्योजलं क्षिपेत् ।
प्रादेशमात्रमुद्धृत्य तर्पयेद्देवमानुषान् ॥

ब्रह्मवैवर्त्ते ।

नाभिमात्रे जले स्थित्वा कुर्यात् स्नानाङ्गतर्पणं ।
देवानृषीन् पितृगणान् स्वपितॄंश्चापि तर्पयेत् ॥
उद्धृतैरुदकैः स्नातो न कुर्यादन्यदा पुनः ।
स्नानाङ्गतर्पणं विद्वान् कदाचिन्नैव हापयेत् ॥

अतो मध्याह्नस्नानेऽपि स्नानाङ्गतर्पणमभ्यस्तेनैव कार्य्यं । न चापराह्णः पितॄणामिति श्रुतेः कथं प्रातः पितृतर्पणमिति शङ्कनीयं । तथात्वे पूर्वाह्णो वै देवानामिति श्रुतेर्मध्यन्दिने स्नाने देवतर्पणं न स्यात् । न च माभूदिति वाच्यं । "स्नानेषु चैव सर्वेषु तर्पयेत् पितृदेवताः । काम्ये नित्ये विशेषेण तत् प्रकुर्यात् प्रयत्नतः" इति व्याससमरणात् । अतः श्रुतिद्वयं तर्पणव्यतिरिक्तविषयमित्यवगन्तव्यं ।

किञ्च अकरणे दोषोऽपि वसिष्ठेन दर्शितः ।

नास्तिक्यभावाद्यः स्नात्वा न तर्पयति वै पितॄन् ।
पिबन्ति देहनिःस्रावं पितरोऽस्य जलार्थिन इति ॥

'देहनिःस्रावः' देहमलः ।

कश्यपः ।

देवानृषीन् मनुष्यांश्च शुचिः पितृगणानपि ।
स्नातः सन्तर्पयेद्विद्वांस्तदाधारा हि ते यतः ॥

एवं कृते फलमाह दक्षः ।

प्रातरुत्थाय योविप्रः प्रातःस्नायी सदा भवेत् ।
सप्तजन्मकृतं पापं त्रिभिर्वर्षैर्व्यपोहति ॥

शौनकोऽपि ।

प्रातरुत्थाय योविप्रः प्रातःस्नायी सदा भवेत् ।
सर्वपापविनिर्मुक्तः परं ब्रह्माधिगच्छति ॥

इति प्रातःस्नानं ।

अथ मध्याह्नस्नानं ।

तत्र योगयाज्ञवल्क्यः ।

एतच्छ्रुत्वा तु वचनं याज्ञवल्क्यस्य वै तदा ।
ऋषयः शंसितात्मानः पृच्छन्ति स्नाननिर्णयं ॥
स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुरानघ ।
तदाचक्ष्व विशेषेण स्नानस्य तु विधिं प्रभो ॥
तान् प्रत्युवाच प्रीतात्मा याज्ञवल्क्योऽमितद्युतिः ।
शृणुध्वं वक्ष्यते स्नानं सर्वपापप्रणाशनं ॥
मृदादीनि समाहृत्य गत्वा शुद्धं जलाशयं ।
कुर्य्यादहरहः स्नानं प्रातर्मध्याह्नयोर्द्विजः ॥

सुमन्तुः ।

ततो मध्याह्नसमये पुनःस्नानं समाचरेत् ।
सूर्य्यस्य चाप्युपस्थानं जप-होमादिकं ततः ॥

वसिष्ठहारीतावपि ।

पवित्रपाणिरेकाग्रः पार्श्वानवलोकयन् ।

अरुग्दिवाचरेत् स्नानं मध्याह्नात् प्राग्विशेषतः ॥

'अरुक्' रोगरहितः । अतोरोगिणा न स्नातव्यमित्युक्तं भवति । उक्तञ्च व्यासेन ।

स्नानं मध्यन्दिने कुर्य्यात् सुजीर्णेऽन्ने निरामयः(१) ।
न भुक्तालङ्कृतोरोगी नाज्ञातामम्भसि नाकुलः ॥

शङ्खः ।

प्रातः सङ्क्षेपतः स्नानं शौचार्थन्तु तदिष्यते ।
मन्त्रैस्तु विधिनिष्पाद्यं माध्याह्ने तु सविस्तरं ॥

पारस्करः ।

मृद्गोमय-कुश-तिलं सुमनस आदायोदकान्तङ्गत्वा शुचौ देशे संस्थाप्य पाणि-पादं यज्ञोपवीतञ्च प्रक्षाल्य शिखाम्बद्धाचामेत् ।

स्कन्दपुराणे ।

प्रक्षालयेद्यज्ञसूत्रं मृद्भिरद्भिः शनैः शनैः ।

भृगुः ।

मन्त्रपूतं स्थितं काये यस्माद्यज्ञोपवीतकं ।
नोत्तारयेत्ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
देहस्थमेव तत्क्षाल्यमुत्तार्य्यं न कदाचन ।

व्यासः ।

स्मृत्वोङ्कारञ्च गायत्रीं निबध्नीयाच्छिखां ततः ।
पवित्रपाणिराचम्य नाभिस्कन्धौ च संस्पृशेत् ॥

बौधायनः ।

---

(१) निरामये इति ग० ।

अथ हस्तौ प्रक्षाल्य कमण्डलुं मृत्पिण्डञ्च परिगृह्य तीर्थं गत्वा त्रिः पादौ प्रक्षालयेत् । त्रिरात्मानमथ हैके ब्रुवते श्मशानमापो देवगृहं गोष्ठं यत्र ब्राह्मणा अप्रक्षाल्य पादौ तन्न प्रवेष्टव्यमिति ।

योगयाज्ञवल्क्यः ।

त्रिधा कृत्वा मृदं तान्तु गोमयञ्च विचक्षणः ।
अधमोत्तममध्यानामङ्गानां क्षालनन्तु तैः ॥
भागैः पृथक् पृथक् कुर्य्यात् क्षालने मृदसङ्करः ।
अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याचम्य वै शुचिः ॥

अत्र नाभेरूर्द्धभागं दक्षिणहस्तेनाधोभागं वामहस्तेन प्रक्षालयेत् । "धर्मविद्दक्षिणं हस्तमधः शौचेन योजयेत् । तथैव वामहस्तेन नाभेरूर्द्धं न शोधयेत्" इति भृगुस्मरणात् ।

नन्दिपुराणे ।

आयुष्कामः शिरोलेपं मृदा कुर्य्याद्द्विजः पुरा ।
श्रीकामः पादयोः शौचं मृदापूर्वं समाचरेत् ॥

मलशोधनं प्रकृत्य व्यासोऽपि ।

षड्भिः पादौ चतसृभिर्जङ्घा नाभि-कटी त्रिभिः ।
मृदैकया शिरः क्षाल्यं ततः कुर्य्यात् प्रमार्जनं ॥

वशिष्ठोऽपि ।

मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ।
अधश्च तिसृभिः कायं पादौ षड्भिस्तथैव च ।
प्रक्षाल्य सर्वकायन्तु द्विराचम्य यथाविधि ॥

पारस्करः ।

एकया तु शिरः चाल्यं द्वाभ्यां नाभिं तथोपरि ।
मृद्भिस्तिसृभिः कायं षड्भिः पायुं तथैव च ॥
कटिवस्त्यूरुजङ्घाश्च पादौ च तिसृभिस्ततः ।
तथा हस्तौ परिचाल्य द्विराचामेत् समाहितः ॥

अत्र यथास्वशाखं व्यवस्था ।

मृदादिपरिमाणन्तु कूर्म्मपुराणे दर्शितं ।

मृत्तिका च समुद्दिष्टा त्वार्द्रामलकमात्रिका ।
गोमयस्य प्रमाणन्तु येनाङ्गं लेपयेत्ततः ॥

एतच्च मलशोधनं तटे कार्य्यं ।

तथा च नृसिंहपुराणे ।

शुचौ देशे समभ्युक्ष्य स्थापयेत् कुश-मृत्तिलान् ।
मृत्तोयेन स्वकं देहं बहिः संशोधयेत्ततः ॥

यमः ।

मलस्नानं ततः कृत्वा आचम्य प्राङ्मुखः शुचिः ।
प्राणायामत्रयं कृत्वा ततोध्यात्वा दिवाकरं ॥

आचम्य द्विरिति शेषः । एतच्चाचमनमेकं पादञ्जलान्तर्निधाय कार्य्यं ।

यदुक्तं चतुर्व्विंशतिमते ।

स्थले जलस्थ आचान्तो जलान्तस्तु स्थले शुचिः ।
पादौ स्थाप्योभयत्रैव ह्याचान्तः शुचितामियादिति ॥

स्नानशाटीं तटे शोधयित्वेदमाचमनं कार्य्यं ।

मृत्तोयेन स्वकं देहं बहिरुद्वर्त्य यत्नतः ।
स्नानशाटीञ्च संशोध्य कुर्य्यादाचमनं बुधः ॥

इति मरीचिस्मरणात् ।

उपवेशनाद्ययोग्ये च तीरे जानुभ्यामूर्द्धस्य तिष्ठतोऽप्याचमने न दोष इत्याह जातूकर्ण्यः ।

ऊर्द्धजानुर्जले तिष्ठन्नाचान्तो न प्रदुष्यतीति ।

व्यासः ।

शुचिर्भूत्वा शुचौ देशे उदकान्ते समाहितः ।
नित्यं चिरायमेत्प्राणांस्ततः स्नानमुपक्रमेत् ॥

'शुचिर्भूत्वा' मलशुद्धिं कृत्वेत्यर्थः । नित्यग्रहणान्मलशुद्धि-प्राणायामौ स्नानादावावश्यकौ ।

प्राणायामस्वरूपमाह सम्वर्त्तः ।

प्रणवेन तु संयुक्ता व्याहृतीः सप्त नित्यशः ।
गायत्रीं शिरसा सार्द्धं मनसा त्रिः पठेद्द्विजः ।
निगृह्य स्वात्मनः प्राणान् प्राणायामो विधीयते ॥

अत्र च प्रथमं नासिकाया वायोरापूरणं । ततः पूरितस्य वायोर्निश्चलीकरणं । ततस्त्रिर्मन्त्रजपः । ततो रेचनक्रमेण पूरक-कुम्भ-करेचकानुष्ठानं ।

तथाचोक्तं वसिष्ठेन ।

नासिकाकृष्ट उच्छ्वासो ध्मातः पूरक उच्यते ।
कुम्भको निश्चलश्वासो रिच्यमानस्तु रेचकः ॥

पूरकादिषु च स्थानविशेषे देवताविशेषध्यानमभिहितं तेनैव ।

नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितं ।
चतुर्भुजं महात्मानं पूरकेण तु चिन्तयेत् ॥

कुम्भकेन हृदि स्थाने ध्यायेत्तु कमलासनं।
ब्रह्माणं रक्तगौराङ्गं चतुर्वक्त्रं प्रजापतिं॥
रेचकेणेश्वरन्ध्यायेल्ललाटस्थं महेश्वरं।
शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनमिति॥

कूर्म्मपुराणे।

ततो देशविशेषकालावयवाननुस्मृत्योपात्तदुरितक्षयार्थं मध्यन्दिनस्नानमहं करिष्य इति सङ्कल्पं कुर्य्यात्। "ततः उरुं हि राजा वरुणश्चकारेत्युदकप्रार्थनं कृत्वा "ये ते शतं वरुणेति प्रदक्षिणमुदकमावर्त्य सुमित्रियान इत्यञ्जलिनोदकमादाय दुर्मित्रियान इत्यनेन कामक्रोधादीनुद्दिश्योत्तरतः प्रक्षिपेत्।

तदाह योगी।

उरुं हीति त्र्यृचा तोयमुपस्थाय प्रदक्षिणं।
आवर्त्तयेत्तदुदकं ये ते शतमिति त्र्यृचा॥
सुमित्रियान इत्यञ्जलिमुद्धरेद्दैवतं स्मरन्।
दुर्मित्रियान इति द्वेष्यं ध्यायंश्चापः प्रसेचयेत्॥

अत्र मृदोभागद्वयं विधाय त्रिधाकृतेन प्रथमभागेन पूर्व्वोक्तं मलस्नानं विधायावशिष्टं भागं मृत्तिकास्नानार्थं "अश्वक्रान्त इति मन्त्रेणाभिमन्त्रयेत्।

तथा च मत्स्यपुराणे।

स्नानं कुर्य्यान्मृदा तद्वदामन्त्र्य च विधानतः।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे इति॥

तदनन्तरम्।

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥
मृत्तिके हन तत्सर्वं यन्मया दुष्कृतं कृतं ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितं ।
त्वया हतेन पापेन जीवामि शरदः शतम् ॥

इत्यनेन ब्रह्माण्डपुराणोक्तेन मन्त्रेण मृदमुद्धृत्य "नमो मित्रस्य वरुणस्येत्यनयर्चा सूर्य्याय दर्शयित्वा ।

आरुह्य मम गात्राणि सर्वं पापं प्रमोचय ।
मृत्तिके त्वाञ्च गृह्णामि प्रजया च धनेन च ॥

इत्यनेन कश्यपोक्तेन मन्त्रेण शिरःप्रभृतिगात्राणि विलिप्य द्विराचमेत् ।

तदुक्तं शिवपुराणे ।

अश्वक्रान्त इति स्तुत्वा मन्त्रेणामन्त्र्य मृत्तिकां ।
उद्धरेदुद्धृतासीति मन्त्रेण सुसमाहितः ॥
नमोमित्रस्येति ऋचा दर्शयित्वा च भानवे ।
आरुह्येति च गात्राणि समालभ्य द्विराचमेत् ॥

आह जमदग्निः ।

अश्वक्रान्तेति वै शुद्धां मृत्तिकामाहरेच्छनैः ।
नमोमित्रस्येत्यादित्याय दर्शयेत् समृदौ करे ॥
गन्धद्वारामिति जप्वा स्वान्यङ्गानि विलेपयेत् ।

अङ्गलेपने मन्त्रान्तरमाह योगी ।

आलभेत मृदाङ्गानि इदं विष्णुरिति त्वृचा ।

तथा ।

अद्भिरद्भिश्च गात्राणि क्रमशस्तवने जपेत् ।
शीर्षाद्या नाभिसर्वाणि स्मरन् विष्णुमनामयम् ।
कटि-वस्त्वरु-जङ्घे च चरणौ च त्रिभिस्त्रिभिः ॥
तथैव हस्तावाचम्य नमस्कृत्य जलं ततः ।
यत्किञ्चेदमिति मन्त्रेण नमस्येत्प्रयताञ्जलिः ॥

जमदग्निः ।

हिरण्यशृङ्गं वरुणमित्यपोऽभिप्रपद्यते ।
सुमित्र्या इत्यपः स्पृष्ट्वा दुर्मित्रास्तु वहिःक्षिपेत् ॥
यदपां क्रूरमित्यपस्त्रिरालोड्य तु पाणिना ।

बौधायनः ।

अथापोभिप्रपद्यते ।
हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ।
यन्मे मनसा वाचा कर्मणा दुष्कृतं कृतं ॥

तन्न इन्द्रोवरुणो बृहस्पतिः सविता च पुनन्तु न इत्यथाञ्जलिना अप उपहन्ति सुमित्रियान आप ओषधयः सन्त्विति तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भविष्यति दुर्मित्रास्तस्मै भूयासुः योस्मां द्वेष्टि यञ्च वयं द्विष्म इत्यथाप उपस्पृश्य त्रिःप्रदक्षिणमुदकमावर्त्तयति यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतामिति ।

मत्स्यपुराणे ।

अनुद्धृतैरुद्धृतैर्वा जलैः स्नानं समाचरेत् ।
तीर्थं कल्प्यं द्विहस्तञ्च चतुरस्रं समन्ततः ॥

दर्भपाणिस्तु विधिना आचान्तः प्रयतः शुचिः ।
तीर्थन्तु कल्पयेद्विद्वान् मूलमन्त्रेण मन्त्रवित् ॥
ॐनमो नारायणायेति मूलमन्त्र उदाहृतः ।
चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः ॥
प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षणः ।
विष्णोः पादप्रसूतासि वैष्णवी विष्णुदेवता ॥
त्राहि न स्त्वेनसस्तस्मादाजन्ममरणान्तिकात् ।
तिस्रः कोट्योर्द्धकोटिश्च तीर्थानां वायुरब्रवीत् ॥
दिवि भुव्यन्तरीक्षे च तानि ते देवि जाह्नवि ।
नन्दिनीत्येव ते नाम देवेषु नलिनीति च ॥
दक्षा पृथ्वी च विहगा विश्वकाया शिवामृता ।
विद्याधरी सुप्रसन्ना तथा लोकप्रसाधनी[१] ॥
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ।
एतानि पुण्यनामानि[२] स्नानकाले प्रकीर्त्तयेत् ।
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी ॥

तथा गङ्गावाक्यमपि ।

नन्दिनी नलिनी सीता मालती च महापगा ।
विष्णुपादार्घ्यसम्भूता गङ्गा त्रिपथगामिनी ॥
भागीरथी भोगवती जाह्नवी त्रिदशेश्वरी ॥
द्वादशैतानि नामानि यत्र यत्र जलाशये ।

---

(१) लोप्रसादनीति ग० ।
(२) गङ्गानामानीति ख० ।

स्नानोद्यतः स्मरेन्नित्यं तस्य तत्र भवाम्यहं ॥

वशिष्ठः।

कृत्वैवं मार्जनं मन्त्रैरश्वक्रान्तादिभिस्ततः।
इहैव देवीरस्मृतं पारावर्यस्वरादिषु।
ये ते शतमिति द्वाभ्यां तीर्थान्यावाहयेद्बुधः ॥

व्यासः।

कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च।
तीर्थान्येतानि सर्वाणि स्नानकाले भवन्तु मे ॥

एतत्सर्वं कृत्रिमेष्वेव जलेषु कर्त्तव्यं। "गङ्गादिपुण्यतीर्थानि कृत्रिमादिषु संस्मरेदिति" योगयाज्ञवल्क्यस्मरणात्।

यत्र स्थाने तु यत्तीर्थं नदी पुण्यतमा च या।
तां ध्यायन्मनसा स्नायादन्यत्रेष्टविचिन्तनम् ॥

इत्यकृत्रिमेषु तत्तीर्थध्यानस्यैव भृगुणा स्मृतत्वात् न नदीषु नदीं ब्रूयादिति तीर्थे तीर्थान्तरस्मरणनिषेधाच्च। एवं तीर्थान्यावाह्य स्वशास्त्रोक्तेन[१] विधिना स्नायात्।

योगयाज्ञवल्क्यः।

उदुत्तममिति विप्रेन्तज्जलं प्राङ्मुखः शुचिः।
येन देवाः पवित्रेति कुर्य्यादालम्भनं त्रिभिः॥
महाव्याहृतिभिः पश्चादाचामेत् प्रयतोऽपि सन्।
भास्कराभिमुखो मज्जेदापो अस्मानिति त्वृचा ॥

जमदग्निः।

---

(१) स्वशाखोक्तेनेति ग०।

आदित्याभिमुखोमज्जेदापो अस्मानिति त्यृचा ।

ब्रह्माण्डपुराणे ।

आपो अस्मानिति ह्युक्त्वा भास्कराभिमुखः स्थितः ।
इदं विष्णुर्जपित्वा च प्रतिस्रोतो निमज्जति ॥

आपस्तम्बः ।

अनैरपोऽभ्युपेयादनभिघ्नन्नभिमुखादित्यमुदकमुपस्पृशेदिति सर्व्वेोदकोपस्पर्शनविधिः ।

आदित्याभिमुखत्वञ्च स्थावरोदकविषयं ।

तथा च नरसिंहपुराणे ।

नद्यां स्रवत्सु च स्नायात् प्रतिस्रोतःस्थितो द्विजः ।
तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचरेत् ॥

वामनपुराणे ।

स्रोतसोऽभिमुखोमज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु च तोयेषु आदित्याभिमुखः सदेति ॥

योगयाज्ञवल्क्यः ।

ततोऽवघृष्य गात्राणि निमज्ज्योन्मज्ज्य वै पुनः ।
आचम्य गोमयेनापि मानस्तोक्या समालभेत् ॥

अत्राचमनमन्त्रमाह जमदग्निः ।

मध्यन्दिने य आचामेन्मन्त्रेणापः पुनन्त्विति ।
अग्निश्च मे च मायश्च प्रातः सूर्यश्च मे इति ॥

एतच्चाचमनं तीरमागत्य कर्त्तव्यं ।

तदाह बौधायनः ।

अप्सु निमज्योन्मज्य नाप्सु सतः प्रणयं विद्यते न वाससः पल्पूलनं नोपस्पर्शनं यद्युपरुद्धाः स्युः नोपतिष्ठते नमोऽग्नयेऽप्सुमते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्य इत्युत्तीर्य्याचम्याचान्तः पुनराचामेत्। आपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु मां। पुनातु ब्रह्मणस्पतिर्ब्रह्मपूता पूनातु मां। यदुच्छिष्टमभोज्यं वा यद्वा दुश्चरितं मम सर्व्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहं स्वाहेति। गोमयं भानवे प्रदर्श्य मानस्तोक इत्यनेन,

अग्रमग्रञ्चरन्तीनामोषधीनां रसं वने।
तासां ऋषभपत्नीनां पवित्रं कायशोधनं।
त्वमेव रोगान् शोकांश्च पापं मे हर गोमय॥
अनेन वा शिरःप्रभृतिगात्राणि लिम्पेत्।

तदाह विष्णुः।

अग्रमग्रमिति स्तुत्वा मानस्तोकेन वा पुनः।
गोमयैर्लेपयेत् प्राज्ञः सोदकैर्भानुदर्शितैः।

वशिष्ठः।

पुनश्च गोमयेनैव अग्रमग्रमिति ब्रुवन्।

अथापामार्ग-दूर्वाभ्यां मार्जनं।

तदाह विष्णुः।

अपास्तमित्यपामार्गं दूर्व्वां काण्डादिति स्मरन्।
द्विस्त्रिरेकैकमादाय मार्जयेत्सुसमाहितः।

वशिष्ठः।

काण्डात् काण्डादिति द्वाभ्यामङ्गमङ्गमुपस्पृशेत्।

दूर्व्वयेति शेषः । काण्डात्काण्डादित्यादिरेकः, या शतेन प्रतनोषीति द्वितीयो मन्त्रः ।

बौधायनः ।

पवित्रे कृत्वाद्भिर्मार्जनं आपोहिष्ठामयोभुव इति तिसृभिः, हिरण्यवर्णाः शुचयः पावका इति चतसृभिः । पवमानः सुवर्जन इत्यनुवाकेनेति ।

वशिष्ठः ।

ततो महाव्याहृतिभिर्गायत्र्या वाभिमन्त्रयेत् ।
आपोहिष्ठेदमापश्च द्रुपदादिव इत्यपि ॥
तथा हिरण्यवर्णाभिः पावमानीभिरन्ततः ।
ततोऽर्कमीक्ष्य सोङ्कारं निमज्ज्यान्तर्जले बुधः ॥

जमदग्निः ।

सुरभिमत्याप्लिङ्गाभिः प्रोक्षयेत् कुशपाणिना ।
हिरण्यवर्णयाभिश्च पावमानीभिरेव च ॥

योगयाज्ञवल्क्यः ।

ततोऽभिषिच्य मन्त्रैस्तु वारुणैश्च यथाक्रमं ।
इमं मे वरुण इत्यृग्भ्यां तत्त्वः सत्वं न इत्यपि ॥
माप उदुत्तममिति मुञ्चन्तवभृथेति च ।
अभिषिच्य तदात्मानं निमज्ज्याचम्य वै पुनः ॥

ततः साग्रैः प्रादेशमात्रैस्त्रिभिरगर्भैः कुशैर्नाभेरारभ्य मुखप्रादक्षिण्येनापां मध्ये स्थितः प्रतिमन्त्रं मार्जनं कुर्य्यात् ।

तदाह योगी ।

दर्भैस्तु पावयेन्मन्त्रैरव्यङ्गैः पावनैः शुभैः ।
आपोहिष्ठेति तिसृभिरिदमापोहविष्मतीः ॥
देवीराप इति द्वाभ्यामापोदेवीरितित्यृचा ।
द्रुपदादिव इत्यृचा शन्नोदेवीरपां रसं ॥
आपोदेवीः पावमान्यः पुनन्त्वाद्यास्तृचो नव ।
चित्पतिर्मेति च शनैः पाव्यात्मानं समाहितः ॥
हिरण्यवर्णा इति च पावमान्यस्तथापराः ।
तरत्समाः शुद्धवतीः पवित्राण्यपि शक्तितः ॥
वारुण्यस्र ऋचः सूक्तं शक्तितः सम्प्रयोजयेत् ।
जलमध्ये स्थितो विप्रः शुद्धभावो हरिं स्मरेत् ॥
ॐकारेण व्याहृतिभिर्गायत्र्या तु समाहितः ।
आदावन्ते च कुर्वीत अभिषेकं यथाक्रमं ।
अपां मध्यस्थितस्यैवं मार्जनञ्च विधीयते ॥

विष्णुः ।

मृत्तोयैः कृतमलापकर्षणोऽप्सु निमज्योपस्पृश्यापोहिष्ठेति तिसृभिर्हिरण्यवर्णेति चतसृभिरिदमापः प्रवहतेति च तीर्थमभिमन्त्रयेत् । ततोऽप्सु निमग्नः त्रिरघमर्षणं जपेत् । तद्विष्णोः परमं पदमिति वा द्रुपदां सावित्रीं वा युञ्जते मन इत्यनुवाकं पुरुषसूक्तं वा ।

पैठीनसिः ।

हिरण्यवर्णा इति सूक्तेन स्नात्वा शौचं कृत्वा अपां मध्ये त्रीन् प्राणायामान् कुर्य्यात् ।

जमदग्निः ।

ऋतञ्चेत्येतदप्स्वन्तस्त्रिःपठेदघमर्षणं ।
यथाश्वमेधेवभृथस्तथा स्नानेऽघमर्षणं ॥

अन्तर्जल इत्यनुवृत्तौ वशिष्ठः ।

प्राणायामांश्च कुर्वीत गायत्रीं वाघमर्षणं ।
यथोक्तैः शोभितस्तैस्तु मज्जेत् त्रिर्दण्डवत्ततः ॥

यथोक्तैर्वायोरादान-रोधोत्सर्गरूपैरित्यर्थः ।

बौधायनः ।

मार्जयित्वान्तर्जलगतोऽघमर्षणेन त्रीन् प्राणायामान् धारयित्वेति ।

योगयाज्ञवल्क्यः ।

अन्तर्जले जपेन्मन्त्रं त्रिःकृत्वस्त्वघमर्षणं ।
द्रुपदां वा त्रिरभ्यसेत् आपह्नौरिति वा त्र्यृचं ॥
हंसः शुचिषदित्यृचं त्रिरावर्त्य जपेदथ ।
अन्यानि चैव सूक्तानि स्मार्तदृष्टान्यनुस्मरेत् ॥
सव्याहृतिं सप्रणवाङ्गायत्रीं त्रिर्जपेदथ ।
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययं ॥
विष्णोरायतनं ह्यापः स ह्यपां पतिरुच्यते ।
तस्यैव सूनवश्चैतास्तस्मात्तं ह्यप्सु संस्मरेत् ॥
नरादापः प्रसूता वै तेन नारा इति स्मृताः ।
ता एवास्यायनं ह्यापस्तस्मान्नारायणः स्मृतः ॥
यो हि व्रतानां वेदानां यमस्य नियमस्य च ।
ओङ्कारं यज्ञतपसां ध्यायिनां ध्यानमेव च ॥
ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु ।

वशिष्ठः ।

योऽनेन विधिना स्नाति यत्र तत्राम्भसि द्विजः ।
स तीर्थफलमाप्नोति तीर्थेषु द्विगुणं फलं ॥
मनोवाक्कर्मभिश्चापि यत्पापं कुरुते तु सः ।
नाशमायाति तत्सर्वमामपात्रमिवाम्भसा ॥

शङ्खः ।

अनेन विधिना स्नातः पुण्यं फलमुपाश्नुते ।

इति मध्याह्नस्नानं ।

अथ क्रियास्नानं ।

तत्राह शङ्खः ।

क्रियास्नानं प्रवक्ष्यामि यथावद्विधिपूर्वकं ।
मृद्भिरद्भिश्च कर्त्तव्यं शौचमादौ यथाविधि ॥
जले निमग्नस्तून्मज्ज्य उपस्पृश्य यथाविधि ।
तीर्थस्यावाहनं कुर्यात् तत् प्रवक्ष्याम्यतः परं ॥
प्रपद्ये वरुणं देवमम्भसां पतिमूर्जितं ।
याचितं देहि मे तीर्थं सर्वपापानुपत्तये ॥
तीर्थमावाहयिष्यामि सर्वाघविनिषूदनं ।
सान्निध्यमस्मिन् स्वे तोये भजतामदनुग्रहात् ॥
रुद्रान् प्रपद्ये वरदान् सर्वानप्सुषदस्त्वहं ।
सर्व्वानप्सुषदश्चैव प्रपद्ये प्रणतः स्थितः ॥
देवमप्सुषदं वह्निं प्रपद्येऽघनिषूदनं ।
आपः पुण्याः पवित्राश्च प्रपद्ये शरणं तथा ॥

रुद्राश्चाग्निश्च सर्पाश्च वरुणश्चाप एव च ॥
शमयन्त्वाशु मे पापं पुनन्तु च सदा मम ।
इत्येवमुक्त्वा कर्त्तव्यं ततः सम्मार्जनं कुशैः ॥
आपोहिष्ठेति तिसृभिर्यथावदनुपूर्व्वशः ।
हिरण्यवर्ण्ण इति च ऋषिस्तसृभिस्तथा ॥
शन्नोदेवीति च तथा शन्न आपस्तथैव च ।
इदमापः प्रवहत तथा मन्त्रमुदीरयेत् ॥
एवं सम्मार्जनं कृत्वा छन्द आर्षं सदैवतं ।
अघमर्षणसूक्तस्य संस्मरेत् प्रयतः सदा ॥
छन्द आनुष्टुभं तस्य ऋषिश्चैवाघमर्षणः ।
देवता भाववृत्तश्च पापघ्नस्य प्रकीर्त्तिता ॥
ततोऽम्भसि निमज्जंस्तु त्रिःपठेदघमर्षणं ।
यथाश्वमेधः क्रतुराट् सर्व्वपापप्रनोदनः(१) ॥
तथाघमर्षणं सूक्तं सर्व्वपापापनोदनं ।
प्रपद्यान्मूर्द्धनि तथा व्याहृतीभिर्जलं ततः ॥
अनेन विधिना स्नात्वा अमेध्ये स्नानवाससी ।
परिवर्त्तितवासाश्च तीर्थतीर उपस्पृशेत् ॥

इति क्रियास्नानं ।

अथ जलादुत्तीर्णस्य कृत्यं ।

तत्राह बौधायनः ।

उत्तीर्य्य वासः पीड़यित्वा प्रक्षालितोपवातान्यक्लिष्टानि वासांसि

(१) सर्व्वपापापलेपन इति ख० ।

परिधायाप आचम्य दर्भेष्वासीनो दर्भान्धारयमाणः प्राङ्मुखः सावित्रीं सहस्रकृत्वः आवर्त्तयेत् ।

'प्रक्षालितोपवातानि' प्रक्षालनानन्तरं शुष्काणि ।

अत्र व्यासः ।

पीड़नात् पूर्वमसंस्कृतप्रमीतोद्देशेन स्थले जलाञ्जलिर्देयः ।

इत्युक्तं पद्मपुराणे ।

प्राचीनावीतसंयुक्तः कुशपाणिः तिलैः सह ।
असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिं ॥
प्रेक्षमाणो दिशं याम्यां मन्त्रेणानेन यत्नतः ।
असंस्कृतप्रमीता ये गोत्रजा दुर्गतिङ्गताः ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकं ॥

व्यासोऽपि ।

असंस्कृतप्रमीतानामेकमेवावटे क्षिपेत् ।
अनग्निदग्धा ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परांगतिं ॥

स चायञ्जलाञ्जलिर्जलस्थेनैव स्थले प्रक्षेपणीयः। यतोऽन्यथाकरणे दोषमाह सुमन्तुः ।

जलार्द्रवासाः स्थलगो यः प्रदद्याज्जलाञ्जलिं ।
वस्त्रनिश्च्योतनं प्रेता अपवार्य्य पिबन्ति ते ॥

'अपवार्य' जलाञ्जलिं त्यक्त्वेत्यर्थः ।

वस्त्रोदकस्रावणार्थञ्च किञ्चित्कालं तटे स्थातव्यं ।

तदाह भरद्वाजः ।

वस्त्रोदकमपेक्षन्ते ये मृता दासवर्गिणः ।
किञ्चित्कालं स्थितस्तस्माज्जलं भूमौ निपातयेत् ॥

ततः स्नानवस्त्रं निष्पीड़येत् ।

पुलस्त्यः ।

कृत्वा तर्पणमेवन्तु समुत्तीर्य्य जलाशयात् ।
पीड़येत्स्नानशाटीन्तु तट एव विचक्षणः ॥

तट एव निष्पीड़येदित्यत्र हेतुरुक्तो वायुपुराणे ।

वस्त्रनिष्पीड़ितं तोयं श्राद्धे चोच्छिष्टभागिनां ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीड़येत् स्थले ॥

जलमध्यनिष्पीड़ने निषेध उक्तो नारदीयपुराणे ।

जलमध्ये तु यः कश्चिद् ब्राह्मणो ज्ञानदुर्बलः ।
निष्पीड़यति वस्त्रं तत् स्नानं तस्य वृथा भवेत् ॥

कृत्वा तर्पणमितिवचनात् पूर्वं वस्त्रनिष्पीड़नं न कुर्य्यात् ।

तदाह योगयाज्ञवल्क्यः ।

यावद्देवानृषींश्चैव पितॄंश्चैव न तर्पयेत् ।
तावन्न पीडयेद्वस्त्रं येन स्नातो न चोदके ॥

येन वस्त्रेण स्नातस्तन्न पीड़येत् ।

निष्पीड़यति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् ॥
निराशाः पितरस्तस्य यान्ति देवैः सहर्षिभिः ।

पराशरः ।

निराशाः पितरो यान्ति वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणं ॥

देवताः पितरश्चेत्यनुवृत्तौ शातातपः ।

निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीड़ने कृते ।
तस्मान्न पीड़येद्वस्त्रमकृत्वा पितृतर्पणं ॥

शङ्खः ।

उदकस्याप्रदानाद्धि स्नानशाटीं न पीड़येत् ।

विष्णुः ।

अकृत्वा देवपितृतर्पणं स्नानशाटीं न पीडयेत् ।

वस्त्रनिष्पीड़ने प्रकारमाह सुमन्तुः ।

दक्षिणाभिमुखस्तिष्ठन् प्राचीनावीतवानपि ।
वेष्टयन्नपसव्येन स्नानवस्त्रन्तु पीड़येत् ॥

अत्र मन्त्रमाह कार्ष्णाजिनिः ।

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीड़नोदकं ॥

वस्त्रनिष्पीड़नानन्तरमाचमनं कर्त्तव्यं इत्याह स एव ।

स्नानवस्त्रं ततः पीड्य पुनराचमनञ्चरेदिति ।

एतच्चाचमनं केवलं स्थलस्थितेन कर्त्तव्यं।

यदाह हारीतः ।

जलार्द्रवासा स्थलगो य आचामेन्नराधमः ।
वस्त्रनिस्रोतनं तस्य पिवन्ति पितरोऽशुचि ॥
तस्मादेकं जलस्यान्तः पादमेकं स्थले तथा ।
कृत्वाचामन् विधानज्ञः पूतो भवति नान्यथा ॥

पैठीनसिरपि ।

अन्तरुदक आचान्तोऽन्तः शुद्धोभवति । बहिरुदक आचान्तो-बहिरेव शुद्धः स्यात् । तस्मादन्तरेकं बहिरेकञ्च कृत्वा पादमाच-मेत्सर्व्वञ्च शुद्धो भवति ।

मत्स्यपुराणे ।

एवं स्नात्वा ततः पश्चादाचम्य तु विधानतः ।
उत्थाय वाससी शुद्धे शुक्ले तु परिधाय वै ॥

द्विराचमेदिति शेषः ।

तथा च व्याघ्रः ।

ततोवस्त्रद्वयं शुद्धं गृहीत्वा द्विरुपस्पृशेत् ।

वशिष्ठोऽपि ।

प्राग्वोदग्वा शुचौ देश उपविश्य द्विराचमेत् ।

वस्त्रपरिधानाचमनयोर्मध्ये जङ्घादिशोधनं कर्त्तव्यं ।

तथा च जाबालपराशरौ ।

स्नात्वा निवस्य वासोऽन्यज्जङ्घे शोध्ये मृदम्भसा ।
अपवित्रीकृते ते हि कौपीनास्नानवारिणा ॥

अत्रापवित्रीकृत इति हेतुविधानात् जङ्घाग्रहणमपवित्रीकृता-ङ्गोपलक्षणार्थं ।

अतएव योगयाज्ञवल्क्यः ।

स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च ।
प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः ॥

स्नानार्द्रवासाश्च विण्मूत्रोत्सर्गं न कुर्य्यात् ।

तथा च लिङ्गपुराणे ।

स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि।
प्राणायामत्रयं कृत्वा पुनःस्नानेन शुध्यति॥

मार्कण्डेयपुराणे।

अवमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः।
न च निर्द्धुनुयात् केशान् वासश्चैव न निर्द्धुनेत्॥

अत्र हेतुमाह व्यासः।

तिस्रः कोट्योऽर्द्धकोटिश्च यावन्त्यङ्गरुहाणि वै।
स्रवन्ति सर्व्वतीर्थानि तस्मान्न परिमार्जयेत्॥

गोभिलोऽपि।

पिबन्ति शिरसो देवाः पिबन्ति पितरो मुखात्।
मध्यतः सर्व्वगन्धर्व्वा अधस्तात्सर्व्वजन्तवः।
तस्मात्तोयं नावमृज्यात् स्नानशाट्या न पाणिना॥

विष्णुपुराणे।

स्नातो न मार्जयेदङ्गं स्नानशाट्या न पाणिना।

स्नानशाट्येति विशेषग्रहणात् वस्त्रान्तरेण मार्जनमनुमतमिति केचित्।

मनुः।

शिरःस्नातस्तु तैलेन नाङ्गं किञ्चिदपि स्पृशेत्।

लघुहारीतः।

स्नानं कृत्वा तु यः कश्चित् पुष्पं गृह्णाति वै द्विजः।
देवतास्तन्न गृह्णन्ति भस्मी स्यात् स च दारुवत्॥

विष्णुः।

स्नातः शिरो नावधुनुयात्। नाङ्गेभ्यस्तोयमुद्धरेन्न तैलं स्पृशेन्ना-

प्रक्षालितं पूर्व्वधृतं वासोविधृयात् । न म्लेच्छान्त्यजपतितैः सह सम्भाषणं कुर्य्यात् ।

व्यासः ।

न चानुलिम्पेदस्नात्वा वासोऽत्रापि न निर्धुनेत् ।
आर्द्र एव तु वासांसि स्नात्वा सेवेत मानवः ॥

हारीतः ।

स्नात्वा न गात्रमवमृज्यात् न शिरो विधुनुयात् न वासो विधुनुयात् नोत्तरीयविपर्य्यासं कुर्य्यात् ।

व्यासवसिष्ठौ ।

नोत्तरीयमधः कुर्य्यान्नोपर्य्याधस्त्यमम्बरं ।
नान्तर्वासो विना जातु विवसेद्वसनं बुधः ॥

आचमनानन्तरं तीर्थमृदादितिलकं विधाय यथाशक्ति गायत्र्यादिजपं कुर्य्यात् ।

तथा च भविष्यत्पुराणे ।

धौतवस्त्रयुगं शुक्लं परिधाय समाहितः ।
ऊरू जङ्घे च संशोध्य परिक्षाल्य तथा करौ ॥
द्विराचम्य कुशासीनः सावित्रीजपमाचरेत्
अन्यानि पुण्यसूक्तानि मन्त्रांश्च नियतो जपेत् ॥

इति जलोत्तीर्णकृत्यं ।

अथ परिधेयवस्त्राणि ।

तत्राह भृगुः ।

ब्राह्मणस्य सितं वस्त्रं नृपतेरक्तमुल्वणं ।

पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥

'उल्वणं' निविड़रक्तं, तच्च धातुरक्तमेव ।

न वेष्टितशिराः कृष्णकषायवासा वा देवपितृकार्य्याणि वा कुर्य्या-दित्युशनसा कषायरक्तस्य निषेधस्मरणात् "अहतं धातुरक्तञ्च तत्पवि-त्रमितिस्थितिः" इति तस्यानुग्रहस्मरणाच्च ।

अनेनैवाभिप्रायेण गौतमोऽपि ।

न रक्तमुल्वणमन्यधृतञ्च वासोबिभृयादिति ।

अहतलक्षणमुक्तमाच्छादनप्रकरणे ॥

अत्र विशेषमाह देवलः ।

स्वयन्धौतेन कर्त्तव्याः क्रिया धर्म्मा विपश्चिता ।

न तु नेजकधौतेन नाहतेन च कर्हिचित् ॥

'अहतेन' अधौतेन, तत्राप्यहतशब्दप्रयोगात् ।

यथोक्तं सत्यतपसा ।

अहतं यन्त्रनिर्मुक्तमुक्तं वासः स्वयम्भुवा ।

शस्तन्तन्माङ्गलिक्येषु तावत्कालं न सर्व्वदा ॥

'माङ्गलिक्यं' विवाहादि ।

मार्कण्डेयपुराणे ।

अन्यदेव भवेद्वासः शयनीये नराधिप ।

अन्यद्रथ्यासु देवानामर्च्चायामन्यदेव हि ।

अन्यच्च लोकयात्रायामन्यदीश्वरदर्शने ॥

बौधायनः ।

उत्तरं वासः कर्त्तव्यं पञ्चस्वेतेषु कर्मसु ।

स्वाध्यायोत्सर्गदानेषु भुक्ताचमनयोस्तथा ॥

'उत्सर्गः' मूत्रादेः, 'भुक्तं' भोजनं ।

योगयाज्ञवल्क्यः ।

स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणं ।
नैकवस्त्रो द्विजः कुर्य्याच्छ्राद्धभोजनसत्क्रियाः ॥

भविष्यत्पुराणे ।

न दान-जप-होमेषु श्राद्धाध्ययनकर्मसु ।
एकवस्त्रः प्रवर्त्तेत द्विजवाचनके तथा ।

'द्विजवाचनकं' पुण्याहवाचनं ।

विष्णुपुराणे ।

होम-देवार्चनाद्यासु द्विजानां वाचनं तथा ।
नैकवस्त्रः प्रवर्त्तेत द्विजो नाचमने जपे ॥

गोभिलः ।

एकवस्त्रो न भुञ्जीत न कुर्य्याद्देवतार्चनं ।
न चार्चयेद्द्विजान्नान्यं कुर्य्यादेवंविधो नरः ॥

एकवस्त्रस्य लक्षणमाह स एव ।

सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः ।
एकवस्त्रन्तु तं विद्यात् दैवे पित्र्ये च वर्जयेत् ॥

सव्यात् स्कन्धात् परिलुप्तं कटिदेशधृतं अम्बरं यस्य स तथोक्तः ।

एवं द्वितीयवासोविहीनस्यापि वेदितव्यं ।

श्रौतं स्मार्त्तं तथा कर्म्म न नग्नश्चिन्तयेदपीति ॥

विष्णुपुराणे नग्नलक्षणमुक्तं ।

आह जातूकर्ण्यः ।

स्वाध्याये तु जपे चैव दान-होमार्च्चने तथा ।
बध्नीयान्नासुरीं कक्षां दैवे पित्र्ये च कर्म्मणि ।
परिधानाद्बहिःकक्षा निबद्धा ह्यासुरी भवेत् ॥

अत्र वासःपरिधाने पारस्करेण मन्त्रोदर्शितः ।

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि
शतञ्च जीवामि शरदः पुरोचीरायस्पोषमभिसंव्ययिष्यत इति ।

तथोत्तरीयेऽपि ।

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती यशोभगश्च मा विदद्यशो मा प्रति-पद्यतामिति ।

एतच्च मन्त्रद्वयं नववस्त्रपरिधाने पठितव्यं। वासःछत्रोपानहस्रा-पूर्वाणि चेन्मन्त्र इति तेनैवोक्तत्वात् ।

अत्र वर्ज्यान्याह भृगुः ।

न रक्तमुल्वणं वासो न नीलञ्च प्रशस्यते ।
दशाहीनं मलाक्तञ्च वर्जयेत् कुत्सितं बुधः ॥

जातूकर्ण्यः ।

कषायं कृष्णवस्त्रं वा मलिनं केशदूषितं ।
छिन्नाग्रञ्चोपवस्त्रञ्च कुत्सितं धर्म्मतो विदुः ॥

अयञ्च मलिनवासोनिषेधः सति सामर्थ्ये ।

यदाह गौतमः ।

सति विभवे न जीर्णमलवासाः स्यादिति ।

तत्रानुकल्पमाह योगयाज्ञवल्क्यः ।

अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च।

कुतपं योगपट्टं वा द्विवासा येन वै भवेत्॥

गृह्णीयादिति शेषः।

'कुतपः' पार्वतीयाजरोमनिर्मितकम्बलः।

विश्वामित्रोऽपि।

यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्त्ते च कर्मणि।

तृतीयमुत्तरीयञ्च वस्त्राभावे तदिष्यते॥

उत्तरीयलक्षणमाह जातूकर्ण्यः।

वस्त्रोत्तरीयाभावे त्वेकाङ्गुलं द्व्यङ्गुलं त्र्यङ्गुलञ्चतुरङ्गुलं वा सूत्रैरेव कृतं परिमण्डलन्तदुत्तरीयं कुर्य्यादिति।

इति परिधेयापरिधेयवस्त्राणि।

अथ तर्पणं। तत्र कालदेशौ तावत्।

आह शातातपः।

तर्पणन्तु ततः कुर्यात् प्रत्यहं स्नातको द्विजः।

याज्ञवल्क्योऽपि।

स्नात्वा देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा।

व्यासः।

तर्पणं द्विविधं प्राहुर्मुनयः शंसितव्रताः।

एकं जले स्थितः कुर्य्यादपरन्तु स्थले स्थितः॥

अनयोर्व्यवस्थामाह विष्णुः।

स्नातश्चार्द्रवासा देव-पितृतर्पणमम्भःस्थ एव कुर्य्यात् परिवर्त्तितवासाश्च तीर्थतीरमुत्तीर्य्य।

हारीतोऽपि ।

आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपं ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपं ॥

जले स्थि ति शेषः ।

उक्तव्यवस्थातिक्रमे दोषमाह लिखितः ।

शुष्केणान्तर्जले चैव बहिरप्यार्द्रवाससा ॥
स्नानं दानं जपोहोमो निष्फलं पितृतर्पणं ।

स्नानं ब्राह्मं। अतएव हारीतः ।

ब्राह्मं स्नानं तथा दानं देवता-पितृतर्पणं ।
जलमध्ये तु कुर्वाणः शुष्कवस्त्रोऽतिदुष्यति ॥

मार्कण्डेयः ।

नार्द्रवासा स्थले स्थित्वा बुधस्तर्पणमाचरेत् ।
जानुदघ्नजलस्थोवा विगलत्स्नानशाटकः ॥

मरीचिः ।

स्नानाङ्गमेव कुर्वीत तर्पणं सलिलस्थितः ।
स्नानाङ्गादितरत् कुर्यान्मध्याह्ने स्थल एव तु ॥

मध्याह्नस्नानानन्तरं जपविधिमभिधाय सत्यव्रतः ।

जप्तानेन विधानेन देवर्षि-पितृतर्पणं ।
स्वशाखाविहितं कुर्यात् स्नानाङ्गं पृथगेव हि ॥

वशिष्ठोऽपि ।

ऋक्सामाथर्ववेदोक्तान् जपेन्मन्त्रान् यजूंषि च ।
जपित्वैवं ततः कुर्याद्देवर्षि-पितृतर्पणं ॥

यत्तु योगयाज्ञवल्क्येन ।

जपेद्वेदादिमेकाग्रस्तटे बद्धाञ्जलिः शनैः ।
ब्रह्मयज्ञप्रसिद्ध्यर्थं ब्रह्मविद्यामथापि वा ।
जप्त्वा वा प्रणवं शक्त्या ततस्तर्पणमाचरेदिति ॥

ब्रह्मयज्ञानन्तर्यमुक्तं तत्प्रातराहुतेरनन्तरं ब्रह्मयज्ञाकरणविषयं तत्रापि तस्य विधानात् । तथा च बृहस्पतिः ।

सचार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदा त्वनिमित्तत इति ॥

यदा तु स्थले स्थितस्तर्पणं कुर्यात् तदा तर्पणोदकमुदकमध्ये न निक्षिपेदित्याह विष्णुः ।

स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः ।
नोपतिष्ठति तद्वारि पितॄणां तन्निरर्थकं ॥

स्थलतर्पणमेव प्रकृत्याह गोभिलः ।

नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते ॥

अतः स्थलस्थेन भूमावेव देयमित्यभिप्रायः ।

शङ्खोऽपि ।

उदके नोदकं कुर्यात्पितृभ्यस्तु कदाचन ।
उत्तीर्य्य तु शुचौ देशे कुर्यादुदकतर्पणमिति ॥

अत्र विशेषमाह हारीतः ।

वसित्वा वसनं शुक्लं स्थले विस्तीर्णबर्हिषि ।
विधिज्ञस्तर्पणं कुर्यान्न पात्रे तु कदाचन ॥

पात्राद्वा जलमादाय शुभे पात्रान्तरे क्षिपेत्।
जलपूर्णेऽथवा गर्त्ते न स्थलेषु विर्हिषु॥

पात्रञ्चात्र पितामहेनोक्तं।

हेम-रूप्यमयं कार्य्यं ताम्र-कांस्यसमुद्भवं।
पितॄणां तर्पणे पात्रं मृन्मयन्तु परित्यजेदिति॥

परिस्तरणविशेषो योगयाज्ञवल्क्येन दर्शितः।

आवाह्य पूर्ववन्मन्त्रैरास्तीर्य्य च कुशान् शुभान्।
प्रागग्रेषु सुरान् सम्यग्दक्षिणाग्रेषु वै पितॄनिति॥

तर्पयेदिति शेषः।

यत्र पुनर्नेष्टकाचिते पितॄंस्तर्पयेदित्यादिना प्रतिषिद्धमशुचि वा स्थलं तत्र जले दद्यादित्याह विष्णुः।

यत्राशुचि स्थलन्तु स्यादुदके देवता-पितॄन्(१)।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितं॥

यदा तूदकमध्यस्थितस्तर्पणं कुर्यात् तदा तर्पणोदकं स्थले न निक्षिपेत्। तदुक्तं षड्त्रिंशन्मते।

न तर्पयेत्पितॄन्देवान् जलसंस्थः स्थले क्वचित्।
स्थलस्थस्तु क्वचित् कुर्यात् जलेष्वशुचि चेत् स्थलं॥

असंस्कृतप्रमीताञ्जलिस्तु सर्वदा स्थल एव क्षेपणीय इत्याह कार्ष्णाजिनिः।

देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिं।
असंस्कृतप्रमीतानां स्थले दद्याज्जलं पुनरिति॥

---

(१) उदकादथ तान् पितॄनिति।

इति तर्पणकाल-देशनिरूपणं।

अथ तर्पणसाधनानि।

तत्राह लौगाक्षिः।

खड्गमौक्तिकहस्तेन कर्त्तव्यं पितृतर्पणं।
मणिकाञ्चनयुक्तेन न शुद्धेन कदाचन॥

'खड्गं' गण्डकास्थि। 'शुद्धेन' केवलेन।

योगयाज्ञवल्क्यः।

अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः॥

कात्यायनोऽपि।

अशून्यन्तु करं कृत्वा सुवर्णरजतैः कुशैः।
प्रयतस्तर्पणं कुर्य्यान्मणिखड्गतिलैरपि॥

शङ्खोऽपि।

विना रूप्य-सुवर्णेन विना ताम्र-तिलैस्तथा।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपपद्यते(१)॥
सौवर्णराजताभ्यां खड्गेनोदुम्बरेण वा।
दत्तमक्षयतां याति पितॄणान्तु तिलोदकं॥
हिमेन सह यद्दत्तं क्षीरेण मधुनाथवा।
तदप्यक्षयतां याति पितॄणान्तु तिलोदकं॥

'हिमं' कर्पूरं चन्दनं वा।

मरीचिः।

---

(१) नोपतिष्ठतीति ख०।

रजते मनसा यायात्सुवर्णे हस्तनिर्गतं ।
तिलेषु च क्षणाद्गच्छेत् ताम्रे तु द्विमुहूर्त्ततः ॥
दर्भे सप्तमुहूर्त्तेन मन्त्रयुक्तं तदक्षयं ।
यत्र यत्र हि योयस्य तस्य तत्रोपतिष्ठते ॥

नैतानि सुवर्णादिसमुच्चयार्थानि वचनानि ।

यदाह स एव ।

एषामन्यतमेनापि युक्तपाणिः समाचरेत् ।
द्वाभ्यां वाथ त्रिभिर्वापि सर्व्वैर्वा तर्पणं बुधः ॥

याज्ञवल्क्योऽपि ।

तिलानामप्यलाभे तु सुवर्ण-रजतान्वितं ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः ॥

अनेन मन्त्रस्यावश्यकत्वं भवति ।

अतएव जावालिः ।

सुवर्णं रजतं दर्भान् यथालाभं प्रयोजयेत् ।
न मन्त्रेण विना कार्यं कदाचित्(१) तर्पणं बुधैः ॥

मरीचिः ।

वङ्गोषु यथा नष्टां मातरं लभते सुतः ।
मनुना यस्य यद्दत्तं तद्धि तस्योपतिष्ठते ॥

योगयाज्ञवल्क्यः ।

नाम-गोत्र-स्वधाकारैस्तर्पयेदनुपूर्वशः ।
मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनं ॥

(१) कदापीति क० ।

गौतमः ।

कुशानामप्यलाभे तु काशान्दूर्वामथापि वा ।
संयोज्य तर्पणं कुर्य्यान्न तु शून्यकरः क्वचित् ॥

अत्र विशेषमाह प्रजापतिः ।

तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।
तानि स्युर्द्विगुणैर्दर्भैः सपवित्रैर्विशेषतः ॥

भृगुः ।

प्रागग्रैस्तर्पयेद्देवानुदगग्रैस्तु मानुषान् ।
तानेव द्विगुणीकृत्य तर्पयेत् प्रयतः पितॄन् ॥

तानेवेति देवतर्पणविनियुक्तानामपि तेषां पितृतर्पणयोग्यतेत्युक्तं ।

तथा च गृह्यपरिशिष्टे ।

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

छागलेयः ।

लघुपात्रं करे कृत्वा सौवर्णं खड्गमेव च ।
राजतं ताम्रजं वापि तेन सन्तर्पयेत् पितॄन् ॥

शङ्खः ।

सौवर्णेन पात्रेण राजतेन औदुम्बरेण खड्गपात्रेण वा शङ्कुनाप्युदकं पितृतीर्थं स्पृशन् दद्यात् ।

'औदुम्बरं' ताम्रमयं। 'शङ्कुना' सुवर्णादिनिर्म्मितया शलाकया ।

विष्णुः ।

यवोदकेन देवेभ्यः पितृभ्यस्तु तिलोदकैः ।

तर्पणं कुर्य्यादिति शेषः ।

कूर्म्मपुराणे ।

देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ।
पितृभक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः ॥

मत्स्यपुराणे ।

यवैस्तु तर्पयेद्देवान् मनुष्यान् सनकादिकान् ।
तिलैर्विशेषतः कृष्णैरग्निष्वात्तादिकान् पितृन् ।
आत्मनश्च पितृन् सर्वान् सुहृत्सम्बन्धिभिः सह ॥

वृद्धमनुः ।

यथा योधसहस्रैस्तु राजा गच्छति धार्म्मिकः ।
एवं तिलसमायुक्तं जलं प्रेतेषु गच्छति ॥

यत्तु रामायणे ।

पादशौचमनभ्यङ्गं तिलहीनञ्च तर्पणं ।
सर्व्वन्तत्त्रिजटे तुभ्यं यच्च श्राद्धमदक्षिणमिति ॥

तत्तिललाभेऽपि तद्विहीनतर्पणाभिप्रायं, अन्यथा तिलानामप्यलाभे इत्यादिवचनविरोधः स्यात् ।

गोभिलः ।

शुक्लैस्तु तर्पयेद्देवान् मनुष्यान् शवलैस्तिलैः ।
पितॄंस्तु तर्पयेत्कृष्णैः तर्पयन् सर्व्वदा द्विजः ॥

तिलग्रहणे विशेषमाह मरीचिः ।

मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ।
वामहस्ते तिला ग्राह्या मुक्तहस्तस्तु दक्षिणः ॥

'मुद्रा' प्रदेशिन्यङ्गुष्ठाग्रसंयोगः। एतदनुद्धृतोदकतर्पणाभिप्रायं।

यथा च योगयाज्ञवल्क्यः ।

उद्धृतं निषिञ्चेत्तु तिलान् सम्मिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

'अतोऽन्यथा' अनुद्धृतोदकतर्पणे ।

तत्र जलस्थस्य विशेषमाह शालङ्कायनः ।

बाहुं पूर्णं तिलैः कृत्वा जलस्थस्तर्पयेत्पितॄन् ।
स्थलस्थेन न कर्त्तव्यं पितॄणां तृप्तिमिच्छता ॥

एवञ्च यदुक्तं गोभिलेन ।

रोमसंस्थान् तिलान् कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन चेति ॥

तत् स्थलतर्पणविषयमित्यवगन्तव्यं। यदा तु स्थलस्थोऽप्यनुद्धृतेन चोदकेन तर्पणं कुर्य्यात् तदा वामहस्तस्यालोमके प्रदेशे शाखां वा तिलान्निधाय तर्पणं कार्य्यं ।

तदाह कार्ष्णाजिनिः ।

रोमसंस्थान् तिलान् कृत्वा तर्पयेत् पितृदेवताः ।
जले स्थले तलस्थांस्तु कृत्वा शाखामथापि वा ॥

उक्ततिलतर्पणस्य क्वचिदपवादमाह मरीचिः ।

सप्तम्यां रविवारे च गृहे जन्मदिने तथा ।
भृत्य-पुत्र-कलत्रार्थी न कुर्य्यात् तिलतर्पणं ॥
पक्षयोरुभयोराजन् सप्तम्यां निशि-सन्ध्ययोः ।
विद्या-पुत्र-कलत्रार्थी तिलान् पक्षसु वर्जयेत् ॥

निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनं।
सप्तम्यां नैव कुर्वीत ताम्रपात्रे च भोजनं॥

कालिकापुराणे।

रवि-शुक्र-त्रयोदश्यां सप्तम्यां निशि-सन्ध्ययोः।
तिलतर्पणसंयोगात् तज्जलं रुधिरं स्मृतं॥

अधिकारिविशेषेण तिलतर्पणप्रतिषेधमाह कौण्डिन्यः।

दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकं।
न जीवत्पितृकः कुर्य्यात् तिलैस्तर्पणमेव च॥

इति तर्पणसाधनानि।

अथाञ्जलिसङ्ख्या।

तत्राह व्यासः।

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिं॥

आह सत्यतपाः।

देव-पितृ-मनुष्यादि स्वशाखाविधिचोदितां।
एकैकाञ्जलिना तृप्तिं प्रथमान्तेन वाचयेत्॥

विष्णुपुराणे।

त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्।
तथर्षीणां यथान्यायं सकृच्चापि प्रजापतिः।
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते॥

'अपवर्जयेत्' दद्यात्।

कूर्म्मपुराणे।

देवतानान्तु सर्वासामेकैकाञ्जलिरिष्यते ।
ऋषीणामेक एव स्यान्मनुष्याणां द्वयं तथा ।
त्रयस्त्रयः पितॄणान्तु स्त्रीणामेकैक एव हि ॥

ब्रह्माण्डपुराणे ।

अञ्जलिद्वितयं दद्याद्देवान् सन्तर्पयन् बुधः ।
ऋषीणाञ्च मनुष्याणां सकृदेव प्रदापयेत्॥
त्रिस्त्रिः पितृभ्योदद्यात्तु स्त्रीणान्तु सकृदेव हि ।
द्वौ द्वौ मातामहानाञ्च मातुलानां सकृत्तथा ।
गुर्व्वाचार्य्य-श्वशुराणां सुहृत्सम्बन्धिनां सकृत् ॥

बौधायनः ।

जलाञ्जलित्रयं देयं ये चान्ये संस्कृता भुवि ।
असंस्कृतप्रमीतानामेकमेवावटे क्षिपेत् ॥

तत्र यथास्वशाखं व्यवस्था वेदितव्या। येषां तु शाखिनामनाम्नातं तेषां विकल्प इति ।

इत्यञ्जलिसङ्ख्या ।

अथ तर्पणीयगणक्रमः ।

तत्र छागलेयः ।

देवान् देवगणांश्चैव मुनीन् मुनिगणानपि ।
पितॄन् पितृगणांश्चैव नित्यं सन्तर्पयेत्ततः ॥

शातातपः ।

देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमं ।

वसिष्ठोऽपि ।

देवानृषीन् मनुष्यांश्च भूतग्रामं चराचरं ।
वसून् रुद्रांस्तथादित्यांस्ततः पितृगणानपि ।
प्रमीतानात्मनश्चापि क्रमशस्तर्पयेद्बुधः ॥

ब्रह्मपुराणे ।

प्रथमन्तर्पयेद्देवान् ब्रह्मादीन् सुसमाहितः ।
ततः सन्तर्पयेद्विद्वान् मरीचिप्रमुखानृषीन् ॥
वसून्रुद्रांस्तथादित्यान् क्रमशस्तदनन्तरं ।
यक्षान् पशून् सुपर्णांश्च भूतग्रामं चतुर्विधं ॥
आचार्य्यानितरांश्चैव कालस्यावयवानपि ।
सनकप्रमुखांश्चैव मनुष्यांस्तदनन्तरं ॥
कव्यवालनलादींश्च ततः पितृगणानपि ।
स्वपितृभ्यस्ततोदद्यान्मातृभ्यस्तस्य चाप्यनु ।
ततो मातामहानाञ्च पितृव्याणां ततः परं ॥
पत्नीनाञ्च सुतानाञ्च पितृ-मातृस्वसुस्ततः ।
मातुलानी च दुहिता स्वमाचार्य्यर्त्विजस्तथा ॥
शिष्याश्च ज्ञातयश्चैव सुहृत्सम्बन्धिनस्तथा ।
एतेषां तर्पणं कार्य्यं यथावदनुपूर्व्वशः ॥
ज्ञाताज्ञातान् समुद्दिश्य प्रदेयश्चाञ्जलिस्ततः ।
असंस्कृतप्रमीतानां पृथग्देयोऽञ्जलिस्ततः ॥
इति क्रमेण यः कुर्य्याद्देवादीनान्तु तर्पणं ।
तेन सुस्तर्पितास्ते तु सुधाभिर्नाच संशयः ॥

स्कन्दपुराणे ।

पूर्वं मोदप्रमोदादीन् तर्पयेत् षड्विनायकान् ।
ततो ब्रह्मादयोदेवास्तर्पणीया महामते ।
ततश्च सनकादीनां प्रयतस्तृप्तिमाचरेत् ॥
अग्निष्वात्तादिकानान्तु पितॄणामप्यनुक्रमात् ।
यमाय धर्मराजाय कुर्यात्सन्तर्पणं ततः ॥
पितॄणामथ मातॄणां ततो मातामहस्य च ।
पत्नी-श्वशुर-बन्धूनां सुत-सम्बन्धिनां ततः ॥

नारदीयपुराणे ।

अग्निप्रभृतयो देवास्तर्प्याः स्युः प्रथमं नृप ।
ततः शतर्चिनाद्यास्तु मुनयः शंसितव्रताः ॥
ततः काण्डऋषीन् सर्वांस्तर्पयेच्छ्रद्धयान्वितः ।
मनुष्यांश्च पितॄंश्चैव यथापूर्वं प्रतर्पयेत् ॥

सत्यव्रतः ।

पूर्वं स्वपितरस्तर्प्याः पश्चादन्यांश्च तर्पयेत् ।
पितृभ्यः प्रत्यहं दद्यात्ततो मातृभ्य एव च ।
ततो मातामहानाञ्च पितृव्यस्य सुतस्य च ॥

पित्रादितर्पणानन्तरं याज्ञवल्क्यः ।

सुहृत्सम्बन्धि-बन्धूनां ततः कुर्य्यात्तु तर्पणं ॥

यमः ।

सपिण्डानाञ्च बन्धूनां कृत्वादावुदकक्रियां ।
सुहृत्सम्बन्धिवर्गाणां ततोदद्याज्जलाञ्जलिं ॥

विष्णुः ।

आदौ स्ववंश्यानां तर्पणं कुर्य्यात्ततः सम्बन्धि-बान्धवानां, ततः सुहृदामेवञ्च नित्यस्नायी स्यात्।

शङ्खः।

आसन्नमात्तु पुरुषात् पितृपक्षे यावतान्तु नाम जानीयात् तावतां पितृपक्षाणामुदकतर्पणं कृत्वा गुरूणां कुर्यात्। गुरूणां कृत्वा मातृ-पक्षाणां कुर्यात्। मातृपक्षाणां कृत्वा तत्सम्बन्धि-बान्धवानां कुर्यात्। तेषां कृत्वा सुहृदां कुर्यात्।

इति तर्पणीयगणक्रमः।

अथ हस्त-तीर्थोपवीत-जानु-दिङ्नियमाः।

तत्र यमः।

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिं।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्॥

यत्तु व्याघ्रेणोक्तं।

उभाभ्यामथ पाणिभ्यामुदकं यः प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः॥

तच्छ्राद्धादिविषयं।

तथा च कार्ष्णाजिनिः।

श्राद्धे विवाहकाले च पाणिनैकेन दीयते।
तर्पणन्तु भवेन्नैवं विधिरेष पुरातन इति॥

अतएव भविष्यत्पुराणे।

उभाभ्यामथ हस्ताभ्यामाबध्याञ्जलिमादरात्।
देवानृषीन्मनुष्यांश्च पितृंश्चैवाभितर्पयेत्॥

मत्स्यपुराणे।

उभयोर्हस्तयोः कृत्वा सलिलैः पूर्णमञ्जलिं ।
देवानाञ्च पितॄणाञ्च शुचिस्तर्पणमाचरेत् ॥

अत्र विशेषमाह योगयाज्ञवल्क्यः ।

उभाभ्यामथ हस्ताभ्यां अपराजितदिङ्मुखः ।
संवृताङ्गुष्ठकाभ्यान्तु सव्योपग्रहमेव वा ॥

प्रक्षिपेत्तोयमिति शेषः ।

वायुपुराणे ।

उभाभ्यामथ हस्ताभ्यां पितॄन् देवांश्च तर्पयेत् ।
सव्योपग्रहयुक्तेन दक्षिणेनैव वा पुनः ॥

वसिष्ठः ।

एकेन वा हस्तेन कुर्याद्देवपितृतर्पणं सव्यारब्धेनोभाभ्यां वेति ।

कूर्मपुराणे ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥

अन्वारब्धेन दक्षिणपाणिना सहाञ्जलेर्विकल्पः ।

विष्णुपुराणे ।

शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणं ।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥

'तेषां' देवादीनां, ततश्च देवतीर्थेन देवानां, प्रजापतितीर्थेन ऋषीणां, पितृतीर्थेन पितॄणां तर्पणं कर्त्तव्यमित्युक्तं भवति ।

नरसिंहपुराणे ।

देवतीर्थेन कुर्वीत देवानां तर्पणं सदा ।

सनकादिमनुष्याणां ऋषीणामपि सर्वशः ॥
प्राजापत्येन सिञ्चेत्तु सलिलं श्रद्धया शुचिः ।
पितृतीर्थेन कर्त्तव्यं पितॄणां तर्पणं बुधैः ।
अन्यथा तर्पणं कुर्वन्नेनसा युज्यते नरः ॥

अग्निपुराणे ।

दैवेनैव हि तीर्थेन देवानां तर्पणं स्मृतं ।
प्राजापत्येन तीर्थेन तर्पयेत् ब्रह्मणः सुतान् ।
पितॄणामपि तीर्थेन तेषामेव हि तर्पणं ॥

विष्णुः ।

आदावेव दिव्येन तीर्थेन देवानां तर्पणं कुर्यात् पित्र्येण पितॄणां। तीर्थलक्षणमुक्तं योगयाज्ञवल्क्येन ।

पञ्च तीर्थानि विप्रस्य करे तिष्ठन्ति दक्षिणे ।
ब्राह्मं दैवं तथा पित्र्यं प्राजापत्यञ्च सौमिकं ॥
अङ्गुष्ठमूले ब्राह्मन्तु दैवं ह्यङ्गुलिमूर्द्धनि ।
प्राजापत्यन्तु मूलेषु मध्ये सौम्यं प्रतिष्ठितं ॥
अङ्गुष्ठस्य प्रदेशिन्या मध्ये पित्र्यं प्रकीर्त्तितं ।
एवं ज्ञात्वा न मुह्यन्ति सर्वकर्मसु वै द्विजाः ॥

हारीतेन तु । मध्ये आग्नेयमुक्तं। अङ्गुष्ठस्योत्तरतो रेखा ब्राह्मं तीर्थं, कनिष्ठिकायाः पश्चात् प्राजापत्यं, अग्रेऽङ्गुलीनां दैवं, अङ्गुष्ठ-प्रदेशिन्योरन्तरा पित्र्यं, मध्ये आग्नेयं। क्षुत-निष्ठीविताघ्रात-पीत-लीढ़ेषु मूत्र-पुरीषयोर्दर्शनोत्सर्गे स्त्री-शूद्रोच्छिष्टाभिभाषणे देवतामभिगन्तुकामोऽध्येष्यमाणो वा ब्राह्मेण तीर्थेनाचामेत्। आवपन-होम-तर्पणानि

प्राजापत्येन कुर्य्यान्मार्जनार्चन-बलिकर्म-भोजनानि दैवेन, पित्रार्थान् पित्र्येण, प्रतिग्रहमाग्नेयेनेति ।

मार्कण्डेयपुराणे ।

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियां ।
प्राजापत्येन तीर्थेन यच्च किञ्चित् प्रजापतेः ॥

जमदग्निः ।

यज्ञोपवीती देवेभ्यः प्रदद्यात् सलिलाञ्जलीन् ।
निवीती तु मनुष्याणां कुर्य्यात्तर्पणमादृतः ।
प्राचीनावीतसंयुक्तः पितृभ्यो निर्वपेज्जलं ॥

यज्ञोपवीतादिलक्षणमाह भरद्वाजः ।

दक्षिणं बाहुमुद्धृत्य वामस्कन्धे निवेशितं ।
यज्ञोपवीतमित्युक्तं देवकार्य्येषु शस्यते ॥
कण्ठावलम्बितञ्चैव ब्रह्मसूत्रं यदा भवेत् ।
तन्निवीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥
उत्क्षिप्ते वामबाहौ च दक्षिणस्कन्धमाश्रितं ।
प्राचीनावीतमित्याहुस्तत् पित्र्येष्वेव कर्मसु ॥

सत्यव्रतः ।

कृतोपवीती देवेभ्यो निवीती च भवेत्ततः ।
मनुष्यांस्तर्पयेद्भक्त्या ब्रह्मपुत्रानृषींस्तथा ॥
अपसव्यं ततः कुर्य्यात् सव्यं जान्वाच्य भूतले ।
दर्भपाणिस्तु विधिना प्रेतान् सन्तर्पयेत्ततः ।
पित्रादीन्नामगोत्रेण ततोमातामहानपि ॥

पुलस्त्यः।

अन्वाच्य दक्षिणं जानुं प्रागग्रैस्तु कुशैर्द्विजः।
देवान् सन्तर्पयेन्नित्यं श्रद्धापूतेन चेतसा॥
अन्वाच्य जानुं सव्यन्तु कुशैश्च द्विगुणैरपि।
सन्तर्पयेत् पितॄन् भक्त्या ध्यायंस्तद्गतमानसः॥

गोभिलः।

देवं सन्तर्पयन् प्राज्ञो दक्षिणं जानु भूतले।
निदध्यादथ वामन्तु पितॄनपि विचक्षणः।
मनुष्यतर्पणं कुर्वन्न किञ्चिज्जानु पातयेत्॥

सुमन्तुः।

नुन्नं जानुं निवेश्याधो दक्षिणं तर्पयेत्सुरान्।
तथैव सव्यं विन्यस्य पितॄणान्तर्पणञ्चरेत्॥

ब्रह्मवैवर्त्ते।

पूर्व्वाशाभिमुखो भूत्वा पूर्वाग्रेषु कुशेषु च।
अपोनिाषचेत् प्रयतो देवानुद्दिश्य धर्मवित्॥
सौम्याशाभिमुखो नित्यमुदगग्रे च बर्हिषि।
मनुष्याणाञ्च तृप्त्यर्थं निर्वपेत्तु जलाञ्जलीन्॥
यमाशासम्मुखः स्थित्वा दक्षिणाग्रकुशेषु च।
पितृभ्यः सलिलं दद्यात्तृप्त्यर्थं प्रीतमानसः॥

विश्वामित्रः।

उभाभ्यामथ हस्ताभ्यामपराजितदिङ्मुखः।
आदाय सलिलं सम्यग्दशैन् देवांश्च तर्पयेत्॥

आग्नेयीमथ वा याम्यां प्रेक्षमाणो दिशं नरः ।
दद्यात् पितॄन् समुद्दिश्य चीँस्त्रीनथ जलाञ्जलीन् ॥

नन्दिपुराणे ।

ऐन्द्रौदिगाभिमुख्येन चिदशानान्तु तर्पणं ।
ऐशान्यामथ कौवेर्य्यां ब्रह्मपुत्रांश्च तर्पयेत् ।
दक्षिणस्यान्तु काष्ठायां विधेयं पितृतर्पणं ॥

इति हस्त-तीर्थोपवीत-जानु-दिङ्नियमाः ।

अथ प्रत्येकतर्पणीयदेवादिनिरूपणं ।

भविष्यत्पुराणे ।

प्रथमं तर्पयेद्देवानुपवीती विनायकान् ।
मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ।
अविघ्नो विघ्नकर्त्ता च इत्येते षड्विनायकाः ॥

योगयाज्ञवल्क्यः ।

ब्रह्माणं तर्पयेत् पूर्वं विष्णुं रुद्रं प्रजापतिं ।
देवान् छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान् ॥
आचार्य्यश्चैव गन्धर्वानाचार्य्यानितरांस्तथा ।
संवत्सरं सावयवं देवीरप्सरसस्तथा ॥
तथा देवानुगान्नागान् सागरान् पर्वतानपि ।
सरितोऽथ मनुष्यांश्च यक्षान् रक्षांसि चैव हि ॥
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ।
वनस्पतीनोषधींश्च भूतग्रामश्चतुर्विधं ॥

शौनकोऽपि।

अग्निर्विष्णुः प्रजापतिर्ब्रह्मा वेदा ऋषयः सर्व्वाणि छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञो द्यावा पृथिवी अन्तरिक्षमहोरात्राणि सङ्ख्याः सिद्धाः समुद्रा नद्यो गिरयः क्षेत्रौषधि-वनस्पति-गन्धर्व्वाप्सरसो नागाः वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्यान्यथर्षयः शतर्चिनो माध्यमा गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजोवसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति प्राचीनावीती सुमन्तु-जैमिनि-वैशम्पायन-पैल-सूत्रभाष्य-भारत-महाभारत-धर्म्माचार्य्याः जानन्ति-बाहवि-गार्ग्य-गौतम-शाकल्य-वाभ्रव्य-माण्डव्य-माण्डूकेयाः गार्गी वाचक्नवी वड़वा प्रावीथेयी सुलभा मैत्रेयी कहोलं कौषीतकं महाकौषीतकं योग्यं महायोग्यं सुयज्ञं साङ्ख्यायनमैतरेयं महैतरेयं बाष्कलं गार्ग्यं सुजातवक्रामोदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्य्यास्ते सर्वे तृप्यन्त्विति प्रतिपुरुषमिति।

पैठिनसिः।

गौतमोथ भरद्वाजो विश्वामित्रस्तथैव च।
जमदग्निर्वसिष्ठश्च कश्यपोऽत्रिस्तथैव च॥
स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा।
चाक्षुषश्च महातेजास्तर्प्या वैवस्वतस्तथा॥

इत्येवं यज्ञोपवीती प्राङ्मुखः अन्वाचितदक्षिणजानुः प्रागग्रेषु कुशेषु प्रागग्रैः कुशैर्देवतीर्थेन शुक्लतिलमिश्रैर्यवमिश्रैर्वा उदकैः देवानृषींश्च तर्पयित्वा निवीतीशानदिगभिमुख उदङ्मुखो वा उदगग्रेषु

कुशेषु कुशमध्येन प्रजापतितीर्थेन शवलतिलमिश्रैर्यवमिश्रैर्वा उदकैः सनकादीन् मरीच्यादींश्च तर्पयेत् ।

तदाह संवर्त्तः ।

निवीतन्तु ततः कृत्वा यज्ञसूत्रं उदङ्मुखः ।
प्राजापत्येन तीर्थेन मनुष्यांस्तर्पयेत् पृथक् ॥
एवं देवान् ऋषींश्चैव तर्पयित्वाथ भक्तितः ।
मनुष्यान् ब्रह्मपुत्रांश्च निवीती तर्पयेदृषीन् ॥
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
एते ब्रह्मसुताः सप्त मनुष्याः परिकीर्त्तिताः ॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च ।
देव-ब्रह्मऋषीनेतांस्तर्पयेदक्षतोदकैः ॥

अथ प्राचीनावीती दक्षिणामुखोऽन्वाचितसव्यजानुर्दक्षिणाग्रेषु कुशेषु द्विगुणीकृतैः कुशैः पितृतीर्थेन कुश-तिलमिश्रैरुदकैः पितृ-तर्पणमारभेत् ।

आह योगयाज्ञवल्क्यः ।

आवाह्य पूर्व्ववन्मन्त्रैरास्तीर्य्य च कुशान्कुशान् ।
सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः ॥
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा ।
प्राचीनावीत्युदकं प्रसिञ्चेद्वै तिलान्वितं ॥

तथा ।

कव्यवालनलं सोमं यममर्यमणं तथा ।
अग्निष्वात्तान् सोमपांश्च तथा बर्हिषदः पितॄन्॥
यदि स्याज्जीवपितृकः एतान् दिव्यान् पितॄंस्तथा ।
येभ्यो वापि पिता दद्यात् तेभ्यो वापि प्रदापयेत् ॥
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृकोद्विजः ।
वसून् रुद्रांस्तथादित्यान् नमस्कारस्वधान्वितान्॥
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ।
आचार्यांश्च पितॄन् स्वांश्च पितृप्रभृतिनामतः ॥

यदि जीवपितृकस्तर्पणं कुर्यात् तदा देव-ऋषिमनुष्य-तर्पणानन्तरं कव्यवालप्रभृतीनष्टौ देवपितॄन् सन्तर्प्य तर्पणं समापयेत् । येभ्यः पिता दद्यात् तेभ्यो वापि तर्पणं कुर्यात् । प्रमीतपितृकस्त्वेतान् कव्यवालप्रभृतीन् वक्ष्यमाणान् वसून् रुद्रादित्यान् स्वान् पितृपितामहांश्च तर्पयेत् ।

पितृतर्पणं प्रकृत्य पैठीनसिः ।

अपसव्यं ततः कृत्वा स्थित्वा च पितृदिङ्मुखः ।
पितॄन् दिव्यानदिव्यांश्च पितृतीर्थेन तर्पयेदिति ॥

'दिव्याः' वस्वादयः । 'अदिव्याः' स्वपित्रादयः ।

ते च दिव्यास्तेनैव दर्शिताः ।

ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानलो नलः ।
प्रत्यूषश्च प्रभावश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
अजैकपादहिर्बुध्नो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥

सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
एते रुद्राः समाख्याता एकादश सुरोत्तमाः॥
इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा।
अचिर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ॥
एते वै द्वादशादित्या देवानां प्रवरा मताः ।
एते च दिव्याः पितरः पूज्याः सर्वैः प्रयत्नत इति ॥

जैमिनिः ।

दिव्यान् पितॄंश्च सन्तर्प्य स्वपितॄनथ तर्पयेत् ।

जाबालिः ।

स्वपित्रादीनथ ध्यायन् दक्षिणाभिमुखः स्थितः ।
तर्पयेदथ मात्रादीन्मातामहगणांस्तथा ॥
आचार्य्यांश्च पितृव्यांश्च बन्धूनन्यांश्च तर्पयेत् ।
सुहृत्सम्बन्धिनश्चान्यान् याज्यशिष्यर्त्विजोऽपि च ॥

इति प्रत्येकं तर्पणीयदेवतानिरूपणम् ।

अथ तर्पणेतिकर्त्तव्यता ।

आह योगयाज्ञवल्क्यः ।

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥

तृप्यतामित्यत्र तर्पणीयव्यापारस्य प्रतीयमानत्वात् अभिहिते कर्त्तरि प्रथमैव युक्तेति प्रणवादिप्रथमान्तं नाम सङ्कीर्त्य तदन्ते तृप्यतामिति वक्तव्यं इति प्रयोगं दर्शितवान् ।

जातूकर्ण्यस्तु परस्मैपदेनापि प्रयोगं दर्शितवान् ।

तृप्यत्विति समुच्चार्य्य तृप्यतामित्यथापि वा।
विधिज्ञः प्रक्षिपेत्तोयं देवादीनामशेषतः॥

'देवादीनां' देवर्षिमनुष्यपितॄणां।

कात्यायनस्तु उत्तमपुरुषान्ताख्यानपदस्य प्रयोगमुक्तवान्।

अथाद्भिस्तर्पयेद्देवान् सतिलाभिः पितॄनपि।
नामान्ते तर्पयामीति आदावोमिति च ब्रुवन्॥

कूर्म्मपुराणे।

ततः सन्तर्पयेद्देवान् पितॄनृषिगणांस्तथा।
आदावोङ्कारमुच्चार्य्य नमोऽन्ते तर्पयामि चेति।

तर्पयामीत्यत्र तर्पणीयस्य कर्म्मत्वेनाभिसम्बन्धात् प्रणवादि देवतानाम द्वितीयान्तमुच्चार्य्य तर्पयामि नमः इत्यन्ते समुच्चारयेत्। ततश्च ॐ ब्रह्मा तृप्यतां। ॐ ब्रह्मा तृप्यतु। ॐ ब्रह्माणं तर्पयामि नम इति वा एकवचनेन। ॐ वेदास्तृप्यन्तां। ॐ वेदास्तृप्यन्तु। ॐ वेदांस्तर्पयामि नम इति वा बहुवचनेन प्रयोगः कर्त्तव्य इत्युक्तं भवति। अत्र यथास्वशाखं व्यवस्था।

अत्र, वस्वादितर्पणे विशेषमाह कश्यपः।

वसून् रुद्रांस्तथादित्यान् नमस्कारसमन्वितान्।
अद्भिः सन्तर्पयेन्नित्यं नामभिः प्रणवादिभिः।
तर्पयन् यमराजञ्च नमस्कारं प्रकीर्त्तयेत्॥

अत्र, स्मृतिचन्द्रिकाकारादिभिः ॐ ध्रुवाय नमः इत्येवं प्रयोगो-दर्शितः। अन्ये तु वाक्यपरिपूर्त्तये ॐ ध्रुवं तर्पयामि नमः इति प्रयोगमाहुः। अतः स्वाचारोऽनुसर्त्तव्यः। यमतर्पणे तु स्मृतिवचनस्य चतुर्थ्य-

स्तनमोन्तनामानुकीर्त्तनात् ॐ यमाय नमः इत्यादय एव प्रयोगा विधेयाः ।

तथा च छागलेयः ।

यमाय धर्म्मराजाय इत्यनुकीर्त्तयन् ।

यमं सन्तर्पयन्नद्भिर्निरयं नैव पश्यतीति ।

अत्रापि, ॐ यमाय नमः इति । यमं सन्तर्पयामीत्येके ।

छन्दोगपरिशिष्टे तु पितृतर्पणे मध्यमपुरुषान्तस्यापि पदस्य प्रयोगो दर्शितः ।

पितृभ्यादिभ्योऽञ्जलिं दद्यात् जपन्मन्त्रान् यथाविधि ।

तृप्यध्वमिति च त्रिर्वै ततो मातृभ्य एव च ॥

मन्त्रानुदीरतामित्यादि वक्ष्यमाणात् त्रिरिति एकैकस्य पुरुषस्य त्रींस्त्रीन् जलाञ्जलीन् दद्यादित्यर्थः ।

तथा च पैठीनसिः ।

सनामगोत्रग्रहणं पुरुषं पुरुषं प्रति ।

तिलोदकाञ्जलींस्त्रींस्त्रीन् उच्चैरुच्चैर्विनिःक्षिपेत् ॥

उच्चैरुच्चैरिति पितुरञ्जलिभ्यः पितामहाञ्जलयः किञ्चिदुच्चैरुत्क्षिप्तपाणिना देयाः । ततोऽपि प्रपितामहाञ्जलय इति स्नानप्रकरणे व्याख्यातम् । योगयाज्ञवल्क्यः ।

दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ।

दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥

सवर्णेभ्यो जलं देयं नासवर्णेभ्य एव च ।

गोत्रनामस्वधाकारैस्तर्पयेदनुपूर्वशः ॥

नामादिग्रहणेऽपि विशेषमाह बौधायनः ।

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥
चतुर्णामपि वर्णानां पितॄणां पितृगोत्रता ।
पितृगोत्रं कुमारीणामूढ़ानां भर्तृगोत्रता ॥

अत्र सम्बन्धानुकीर्त्तनमपि कर्त्तव्यं ।

"गोत्रसम्बन्धनामानि पितृकर्म्मणि कीर्त्तयेत्" इति भृगुस्मरणात् । अत्र गुरुषु गौरवार्थमाचारानुसाराद्बहुवचनं, कनिष्ठेषु पत्नीषु चैकवचनं प्रयोक्तव्यं । ततश्च ॐ अमुकसगोत्रान् अस्मत्पितॄन् अमुकशर्म्मणस्तर्पयामि स्वधा नमः इति । ॐ अमुकसगोत्राः अस्मत्पितरः अमुकशर्म्माणस्तृप्यध्वं स्वधेति वा प्रयोगः कर्त्तव्यः । कनिष्ठेषु तु अमुकसगोत्रं अस्मन्मित्रं अमुकशर्म्माणं तर्पयामि स्वधा नमः इति । ॐ अमुकसगोत्र अस्मन्मित्र अमुकशर्म्मन् तृप्यस्व स्वधेति वा प्रयोगः ।

अत्राह पैठीनसिः । पवित्रैरभ्युक्ष्याचम्य वसुभ्यो ब्रह्मणे वैश्रवणायेत्युदकं निनयेदुदीरतामिति त्रिभिर्मन्त्रैस्त्रीनुदकाञ्जलीन्निनयेत् । पितृवंशस्य नाम गृह्णन् आचार्य्याय मात्रे मातामहाय मातुलेभ्यश्चेति ।

योगयाज्ञवल्क्यः ।

मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनैरिति ।

ते च मन्त्रास्तेनैव दर्शिताः । उदीरतामङ्गिरस आयन्त्वित्यूर्जमित्यपि पितृभ्य इति ये चेह मधुवाता इति त्यृचं ।

पितॄन् ध्यायन् प्रसिञ्चेद्वै जपन्मन्त्रानिमान् क्रमात् ।
तृप्यध्वमिति तु त्रिर्वै ततः प्राञ्जलिरानतः ॥

अस्यार्थः । उदीरतामिति मन्त्रान्ते अमुकगोत्राः अस्मत्पितरः

अमुकशर्म्माणस्तृप्यध्वं स्वधेति प्रथमं तिलाञ्जलिं दद्यात्। ततश्चाङ्गिरसेन इति मन्त्रान्ते तथैव वाक्यमुच्चार्य्य द्वितीयं। तत आयन्तु न इति मन्त्रेण तथैव तृतीयमित्येवं पित्रेऽञ्जलित्रयं दद्यात्। तत ऊर्ज्जं वहन्तीरिति मन्त्रान्ते ॐ अमुकसगोत्राः अस्मत्पितामहाः अमुकशर्माणस्तृप्यध्वं स्वधेति प्रथमं। पितृभ्यः स्वधा इति तथैव द्वितीयं। ये चेह पितर इति तथैव तृतीयमित्येवं पितामहायाञ्जलित्रयं दद्यात्। ततो मधुवाता इति मन्त्रान्ते ॐ अमुकगोत्राः अस्मत्प्रपितामहाः अमुकशर्माणस्तृप्यध्वं स्वधेति प्रथमं। मधुनक्तमिति तथैवद्वितीयं। मधुमान्न इति तथैव तृतीयमित्येवं प्रपितामहायाञ्जलित्रयं दद्यात्। अत्रावसरे प्रथमं मात्रादीनां तर्पणन्ततो मातामहादीनां।

पूर्वं पित्रादयस्तर्प्या स्ततोमात्रादयोऽपि च।
ततोमातामहाश्चैव मातामह्यस्ततः परमिति॥

व्यासस्मरणात्।

ॐ अमुकसगोत्राः अस्मन्मातरः अमुकदास्तृप्यध्वं स्वधेति मात्रे। अमुकसगोत्राः अस्मत्पितामह्यः अमुकदास्तृप्यध्वं स्वधेति पितामह्यै। अमुकगोत्रा अस्मत्प्रपितामह्यः अमुकदास्तृप्यध्वं स्वधेति प्रपितामह्यै। इत्येवं मात्रादिभ्य एकैकमेवाञ्जलिं स्वधाकारवता नाममात्रेण दद्यात्।

तथा च पितृ-मातामहादिमन्त्रविधेरनन्तरमाह योगयाज्ञवल्क्यः।

माता मातृस्वसा चैव मातुलानी पितृस्वसा।
दुहिता च स्वसा चैव शिष्यर्त्विक्ज्ञातिबान्धवाः।
नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वश इति॥

तदनन्तरं नमो व इति मन्त्रान्ते ॐ अमुकसगोत्राः अस्मन्मातामहा.

अमुकशर्माणस्तृप्यध्वं स्वधेति प्रथमं, तथैव द्वितीय-तृतीयावित्येवं माता-महायाञ्जलित्रयं दद्यात्। एवमेव प्रमातामह-वृद्धप्रमातामहयोस्त्रीं-स्त्रीनञ्जलीन् दद्यात्। मन्त्रस्तु नमो व इत्येक एव पुनः पुनरावर्त्तते।

तथा च योगयाज्ञवल्क्यः।

नमो व इति जप्त्वा वै ततो मातामहानपि।
तर्पयेदानृशंस्यार्थं धर्मं परममाश्रितः॥

अथ मातृवत्प्रयोगमुच्चार्य्य मातामह्यादीनामेकैकाञ्जलिर्देयः। ततः पत्नीभ्यः कृत्वा पितृव्यादीनां तर्पणं कार्य्यं मातामहतर्पणानन्तरं।

तदुक्तं गरुड़पुराणे।

अथ मातामहीनाञ्च स्वपत्नीनामनन्तरं।
तर्पणञ्च पितृव्याणां तत्पत्नीभ्यस्ततोऽपि च॥
पितृस्वसुश्च तद्भर्तुर्मातुलस्यापि नित्यशः।
मातुलान्यास्ततो मातृस्वसुस्तत्पत्युरेव च॥
श्वशुरस्य च कर्त्तव्यं श्वश्रूणामपि तर्पणं।
आचार्य्याणां ततः कुर्य्यादाचार्य्याणीभ्य एव च॥
बन्धूनां भ्रातृपत्नीनां पुत्रं चैव स्नुषामपि।
पुत्रीं तस्याः पतिं चैव भगिनीं तत्पतिं तथा॥
भागिनेयञ्च पौत्रञ्च दौहित्रं याज्यमृत्विजं।
शिष्यं मित्रञ्च सन्तर्प्य तत्पत्नीस्तु तथैव च॥
अन्येषामपि दातव्यं येभ्योऽयं दातुमिच्छति।
मातामह्यादिसर्वेषामेकैकं सलिलाञ्जलिं।
दद्यात्तीर्थे विशेषेण धर्मं परममास्थितः॥

वाराहपुराणे ।

प्रेतेभ्यस्तु पृथग्दद्यान्मनसा तत्परः स्मरन् ।
आत्मनोऽपि जलं दद्यादिति द्वैपायनोऽब्रवीत् ॥

अत्रावसानाञ्जलिमाह कात्यायनः ।

पितृवंश्या मातृवंश्या ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्यन्तेन तिलाञ्जलिं दद्यात्।

ब्रह्मवैवर्त्तेऽपि ।

यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनां ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकं ॥
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्ज्जिताः ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकं ॥
मातृवंश्या मृता ये च पितृवंश्यास्तथैव च ।
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकं ।
इत्युच्चार्य्य ततो दद्यात् सलिले सलिलाञ्जलिमिति ॥

कामोदकाख्यमन्यमप्यञ्जलिं दद्यात् तदुक्तं विष्णुपुराणे ।

इदञ्चापि जपेदम्बु ददेदात्मेच्छया नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥
देवासुरास्तथा यक्षा गन्धर्वोरगराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेते न यान्त्वाशु मद्दत्तेनाम्बुनाखिलां ॥
नरकेषु समस्तेषु यातनासु च ये गताः ।

तेषामाप्यायनायैव दीयते सलिलं मया ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
ते तृप्तिमखिलां यान्तु यश्चास्मत्तोऽभिवाञ्छतीति ॥

विस्तरासमर्थस्तु सङ्क्षिप्तं मत्स्यपुराणोक्तप्रकारेण तर्पणं कुर्य्यात्।

देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः।
सर्पाः क्रूराः सुपर्णाश्च तरवो जृम्भकाः खगाः ॥
वाय्वाधारा जलाधारास्तथैवाकाशगामिनः।
निराधाराश्च ये जीवा ये च धर्मरतास्तथा ॥
कृतोपवीती दत्त्वैवं निवीती च भवेत्ततः।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा।
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुनाखिलां ॥
मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुं।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च।
देवब्रह्मऋषीन् सर्वान् तर्पयाम्यक्षतोदकैः ॥
अपसव्यं ततः कृत्वा सव्यं जान्वाच्य भूतले।
अग्निष्वात्तास्तथा सौम्या हविष्मन्तस्तथोष्मपाः ॥
त्रिकालिनो बर्हिषदस्तथान्ये कामचारिणः।
तर्पयामि पितॄन् भक्त्या सतिलैश्चन्दनोदकैः।
दर्भपाणिस्तु विधिना प्रेतान् सन्तर्पयेत्ततः ॥

विष्णुपुराणे अतिसङ्क्षेपतर्पणमुक्तं।

आब्रह्म स्तम्भपर्य्यन्तं जगत्तृप्यत्विति ब्रुवन्।

क्षिपेत्पयोऽञ्जलीन् त्रींस्तु कुर्वन् सङ्क्षेपतर्पणं ।

अत्रावसरे स्नानवस्त्रनिष्पीड़नं कर्त्तव्यं। तदाह वसिष्ठः।

तीरे जलाशयस्यैवं निर्वर्त्त्य पितृतर्पणं।

निष्पीड़येत्स्नानवस्त्रं दक्षिणाभिमुखः स्थले॥

अतो मध्याह्नस्नाने जलमध्यस्थितः स्नानाङ्गतर्पणं कृत्वा बहिर्निर्गतो वस्त्रम् निष्पीड्यैवाचमनं कुर्य्यात्।

वस्त्रनिष्पीड़नन्तु स्थलतर्पणानन्तरं कुर्य्यात्।

तदुक्तं ब्रह्माण्डपुराणे।

ततः स्नात्वा विधानेन सन्तर्प्य पितृदेवताः।

जलाशयाद्बहिर्निर्गत्य द्विराचामेत् समाहितः॥

स्नानवस्त्रमनिष्पीड्य स्थाप्यमास्थलतर्पणात्।

स्थलेऽपि तर्पणं कृत्वा ततो वस्त्रं निपीड़येत्॥

तदनु द्विरुपस्पृश्य सूर्य्यायार्घ्यं निवेदयेत्।

ततो देवार्चनं कुर्य्यात् एष माध्याह्निको विधिः॥

योगयाज्ञवल्क्यः।

पूर्वं निष्पीड़नं केचित् प्रागदेव-पितृतर्पणात्।

स्नानवस्त्रस्य नेच्छन्ति तस्मादूर्द्धं निपीड़येत्॥

अन्नप्रकरवत्तस्य अपसव्येन पीड़नं।

निष्पीड्य स्नानवस्त्रन्तु आचम्य प्रयतः शुचिः।

देवानामर्चनं कुर्य्यात् ब्रह्मादीनाममत्सरः॥

अत्र विशेषमाह वृहस्पतिः।

प्रक्षाल्य पादौ हस्तौ च स्वयमेव द्विराचमेदिति।

एवं कुर्वतः फलमाह शङ्खः।

स्नातः सन्तर्पणं कृत्वा पितॄणान्तु तिलाम्भसा।
पितृलोकमवाप्नोति प्रीणाति च तथा पितॄन्॥

मनु-शातातप-योगयाज्ञवल्क्याः।

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलं॥

अत्र पितृगाथासु यमः।

अपि नः सकुले भूयाद्यो नो दद्याज्जलाञ्जलीन्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥

अत्र तथैव विष्णुः।

कुलेऽस्माकं स जन्तुः स्यात् यो नो दद्याज्जलाञ्जलीन्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥

तर्पणाकरणे दोष उक्तो ब्रह्मवैवर्त्ते।

देवतांश्च मुनींश्चैव पितॄन् वै यो न तर्पयेत्।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः॥

हारीतः।

न स्रवन्तीं वृथाक्रामेदेवं ह्याह पितामहः(१)।
देवाश्च पितरश्चैव काङ्क्षन्ति सरितं प्रति।
अदत्ते तु निराशास्ते प्रतियान्ति यथागतं॥

पराशर-शातातपौ।

---

(१) प्रजापतिरिति ख०।

ब्राह्मणं स्नातुमायान्तमनुगच्छन्ति देवताः ।
पितरश्च महाभागा वायुभूता जलार्थिनः ।
अप्रदत्ते जले भग्ना निराशाः प्रतियान्ति ते ॥

कात्यायनोऽपि ।

छायां यथेच्छेच्छरदातपार्त्तः
पयः पिपासुः क्षुधितोऽन्नमन्नं ।
बालो जनित्रीं जननी च बालं
योषित् पुमांसं पुरुषश्च योषां ॥

तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्वेऽभ्युदयकाङ्क्षिणः ॥
तस्मात् सदैव कर्त्तव्यमकुर्वन् महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् विश्वमेतद्विभर्त्ति हि ॥

कूर्मपुराणे ।

एवं यः सर्वभूतानि तर्पयेदन्वहं द्विजः ।
स गच्छेत् परमं स्थानं तेजोमूर्त्तिरनामय इति ॥

इति तर्पणेतिकर्त्तव्यता ।

अथ यम-भीष्मतर्पणे ।

तत्र स्कन्दपुराणे ।

कृष्णपक्षे चतुर्दश्यामङ्गारकदिनं यदा ।
तदा स्नात्वा शुभे तोये तर्पयेद्यमनामभिः ॥

तत्राह वृद्धमनुः ।

यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीं ।

यमुनां वा विशेषेण ब्राह्मणो[१] नियतेन्द्रियः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
इत्येतैर्नाममन्त्रैश्च प्रणवादिनमोन्तकैः ।
तर्पयित्वा यमं देवं सर्वपापैः प्रमुच्यते ॥

अत्र ॐ यमाय नमः इत्येवं प्रयोगः ।

अत्र विशेषमाह वृद्धमनुः ।

एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन् कृत्वा जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

पद्मपुराणे ।

पितृवादपसव्येन दक्षिणाभिमुखस्तिलैः ।
देवत्वाद्देवतीर्थेन यमं सन्तर्पयेद्बुधः ॥

व्यासः ।

कृष्णत्रयोदश्यां चतुर्दश्यां वा ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥

इत्येतैः सप्तनामभिर्नमस्कारमन्त्रैः सप्तोदकाञ्जलीन् दद्यात् सर्वपापेभ्यः प्रमुच्यत इति ।

यमः ।

---

(१) नियत इति ग० ।

दत्त्वा जलाञ्जलीन् सप्त कृष्णपक्षे चतुर्दशीं ।
धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते ॥
अनर्काभ्युदिते काले माघकृष्णचतुर्दशीं ।
स्नातः सन्तर्प्य तु यमं सर्वपापैः प्रमुच्यते ॥
यत्र क्वचन नद्यां हि स्नात्वा कृष्णचतुर्दशीं ।
सन्तर्प्य धर्मराजानं मुच्यते सर्वकिल्बिषैः ॥

एवं कुर्वतः फलमाह मनुः ।

इहजन्मकृतं पापमन्यजन्मकृतञ्च यत् ।
अङ्गारकचतुर्दश्यां तर्पयंस्तद्व्यपोहति ॥

तथा माघशुक्लाष्टम्यां भीष्मतर्पणं स्मरन्ति महाभारते ।

शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलं ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

अत्रायं मन्त्रः ।

वैयाघ्रपदगोत्राय साङ्कृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकं ।
अपुत्राय ददाम्येतज्जलं भीष्माय शर्मणे इति ।

इति यम-भीष्मतर्पणे ।

अथ बौधायनोक्तं तर्पणं ।

पूतः पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु यथोत्तरं देवतास्तर्पयति । अग्निः प्रजापतिः सोमो रुद्रोऽदितिर्बृहस्पतिः सर्पा इत्येतानि प्राग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्त्तानि तर्पयामि । वसूंश्च तर्पयामि । पितरोऽर्यमा भगः सविता त्वष्टा वायुरि-

न्द्राग्नीत्येतानि दक्षिणद्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्त्तानि तर्पयामि। मित्र इन्द्रा महापितर आपो विश्वेदेवा ब्रह्मा विष्णुरित्येतानि प्रत्यग्द्वाराणि दैवतानि सनक्षत्राणि सग्रहाणि साहोरात्राणि समुहूर्त्तानि तर्पयामि। आदित्यांश्च तर्पयामि। वसून् तर्पयामि वरुणं तर्पयामि। प्रजापतिं तर्पयामि। परमेष्ठिनं तर्पयामि। चतुर्मुखं तर्पयामि हिरण्यगर्भं तर्पयामि। ब्रह्मपारिषदांश्च तर्पयामि। ब्रह्मपारिषदींश्च तर्पयामि। ॐभूः पुरुषं तर्पयामि। ॐभुवः पुरुषं तर्पयामि। ॐस्वः पुरुषं तर्पयामि। ॐभूर्भुवः स्वः पुरुषं तर्पयामि। ॐभूस्तर्पयामि। ॐभुवस्तर्पयामि। ॐस्वस्तर्पयामि। ॐमहस्तर्पयामि। ॐजनस्तर्पयामि। ॐतपस्तर्पयामि। ॐसत्यं तर्पयामि। ॐभवं देवं तर्पयामि। ॐशर्वं देवं तर्पयामि। ॐईशानं देवं तर्पयामि। ॐपशुपतिं देवं तर्पयामि। ॐरुद्रं देवं तर्पयामि। ॐउग्रं देवं तर्पयाम। ॐभीमं देवं तर्पयामि। ॐमहान्तं देवं तर्पयामि। ॐभवस्य देवस्य पत्नीं तर्पयामि। ॐईशानस्य देवस्य पत्नीं तर्पयामि। ॐपशुपतेर्देवस्य पत्नीं तर्पयामि। ॐरुद्रस्य देवस्य पत्नीं तर्पयामि। ॐउग्रस्य देवस्य पत्नीं तर्पयामि। ॐभीमस्य देवस्य पत्नीं तर्पयामि। ॐमहतो देवस्य पत्नीं तर्पयामि। ॐभवस्य देवस्य सुतं तर्पयामि। ॐशर्व्वस्य देवस्य सुतं तर्पयामि। ॐईशानस्य देवस्य सुतं तर्पयामि। ॐपशुपतेर्देवस्य सुतं तर्पयामि। ॐरुद्रस्य देवस्य सुतं तर्पयामि। ॐउग्रस्य देवस्य सुतं तर्पयामि। ॐभीमस्य देवस्य सुतं तर्पयामि। ॐमहतो देवस्य सुतं तर्पयामि। ॐरुद्रांश्च तर्पयामि। ॐरुद्रपारिषदांश्च तर्पयामि। ॐरुद्रपारि-

षदींश्च तर्पयामि । ॐविनायकं तर्पयामि । ॐवीरं तर्पयामि । ॐशूरं तर्पयामि । ॐउग्रं तर्पयामि । ॐवरदं तर्पयामि । ॐहस्तिमुखं तर्पयामि । ॐएकदंष्ट्रं तर्पयामि । ॐलम्बोदरं तर्पामि । ॐविघ्नपारिषदांश्च तर्पयामि । ॐ विघ्नपारिषदींश्च तर्पयामि । ॐसनत्कुमारं तर्पयामि । ॐस्कन्दं तर्पयामि । ॐइन्द्रं तर्पयामि । ॐषष्ठीं तर्पयामि । ॐषण्मुखं तर्पयामि । ॐविशाखं तर्पयामि । ॐसुब्रह्मण्यं तर्पयामि । ॐमहासेनं तर्पयामि । ॐस्कन्दपारिषदांश्च तर्पयामि । ॐस्कन्दपारिषदींश्च तर्पयामि । ॐनारायणं तर्पयामि । ॐमाधवं तर्पयामि । ॐगोविन्दं तर्पयामि । ॐविष्णुं तर्पयामि । ॐमधुसूदनं तर्पयामि । ॐत्रिविक्रमं तर्पयामि । ॐवामनं तर्पयामि । ॐश्रीधरं तर्पयामि । ॐहृषीकेशं तर्पयामि । ॐपद्मनाभं तर्पयामि । ॐदामोदरं तर्पयामि । ॐश्रियं देवीं तर्पयामि । ॐसरस्वतीं तर्पयामि । ॐपुष्टिं तर्पयामि । ॐगरुत्मन्तं तर्पयामि । ॐविष्णुपारिषदांश्च तर्पयामि । ॐविष्णुपारिषदींश्च तर्पयामि । ॐयमं तर्पयामि । ॐयमराजं तर्पयामि । ॐधर्मराजं तर्पयामि । ॐकालं तर्पयामि । ॐनीलं तर्पयामि । ॐमृत्युं तर्पयामि । ॐचित्रगुप्तं तर्पयामि । ॐवैवस्वतं तर्पयामि । ॐवैवस्वतपारिषदांश्च तर्पयामि । ॐवैवस्वतपारिषदींश्च तर्पयामि । ॐभूमिदेवं तर्पयामि । ॐकाश्यपं तर्पयामि । ॐविद्यां तर्पयामि । ॐधन्वन्तरिं तर्पयामि । ॐधन्वन्तरिपारिषदांश्च तर्पयामि । ॐधन्वन्तरिपारिषदींश्च तर्पयामि ।

अथ निवीती ।

ॐऋषींस्तर्पयामि । ॐमहर्षींस्तर्पयामि । ॐपरमर्षींस्तर्पयामि ।

ॐब्रह्मर्षींस्तर्पयामि। ॐदेवर्षींस्तर्पयामि। ॐराजर्षींस्तर्पयामि। ॐश्रुतर्षींस्तर्पयामि। ॐतपर्षींस्तर्पयामि। ॐसत्यर्षींस्तर्पयामि। ॐसप्तर्षींस्तर्पयामि। ॐकाण्डर्षींस्तर्पयामि। ॐऋषिकास्तर्पयामि। ॐऋषिपत्नीस्तर्पयामि। ॐपुत्रकांस्तर्पयामि। ॐकाण्डं बौधायनं तर्पयामि। ॐआपस्तम्बं सूत्रकारं तर्पयामि। ॐसत्याषाढं तर्पयामि। ॐहिरण्यकेशं तर्पयामि। ॐध्यानं तर्पयामि। ॐप्रणवं तर्पयामि। ॐव्याहृतीस्तर्पयामि। ॐसावित्रीं तर्पयामि। ॐगायत्रीं तर्पयामि। ॐ छन्दांसि तर्पयामि। ॐऋग्वेदं तर्पयामि। ॐ यजुर्वेदं तर्पयामि। ॐसामवेदं तर्पयामि। ॐअथर्ववेदं तर्पयामि। ॐअथर्वाङ्गिरसं तर्पयामि। ॐइतिहासपुराणं तर्पयामि। ॐसर्ववेदजनांस्तर्पयामि। ॐसर्वभूतानि तर्पयामि॥ ३२॥

अथ दक्षिणतः प्राचीनावीती।

पितॄन् स्वधानमस्तर्पयामि। पितामहान् स्वधानमस्तर्पयामि। प्रपितामहान् स्वधानमस्तर्पयामि। मातॄः स्वधानमस्तर्पयामि। पितामहीः स्वधानमस्तर्पयामि। प्रपितामहीः स्वधानमस्तर्पयामि। मातामहान् स्वधानमस्तर्पयामि। मातुः पितामहान् स्वधानमस्तर्पयामि। मातुः प्रपितामहान् स्वधानमस्तर्पयामि। मातामहीः स्वधानमस्तर्पयामि। मातुः पितामहीः स्वधानमस्तर्पयामि। मातुः प्रपितामहीः स्वधानमस्तर्पयामि। आचार्यान् स्वधानमस्तर्पयामि। आचार्यपत्नीः स्वधानमस्तर्पयामि। गुरून् स्वधानमस्तर्पयामि। गुरुपत्नीः स्वधानमस्तर्पयामि। सखीन् स्वधानमस्तर्पयामि। सखिपत्नीः स्वधानमस्तर्पयामि। ज्ञातीः स्वधानमस्तर्पयामि। ज्ञातिपत्नीः

स्वधानमस्तर्पयामि। अमात्यान् स्वधानमस्तर्पयामि। अमात्यपत्नीः स्वधानमस्तर्पयामि। सर्व्वान् स्वधानमस्तर्पयामि। सर्वपत्नीः स्वधानमस्तर्पयामि। इत्थमुत्तीर्य्य अपउत् सिञ्चति "ऊर्ज्जं वहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतं। स्वधा स्थ तर्पयत मे पितॄन् तृप्यत तृप्यत" इति। नार्द्रवासा नैकवस्त्रो दैवानि कर्माण्यनुसञ्चरेत् पितृकर्माणि चेत्येकेषां।

इति बौधायनोक्ततर्पणं।

अथ शङ्खोक्ततर्पणं।

स्नातः कृतजप्योऽन्तर्जानुः उदङ्मुखश्च दिव्येन तीर्थेन देवानुदकेन तर्पयेत्।

अथ तर्पणविधिः।

भगवन्तं शेषं तर्पयामि इति प्रत्येकशस्तर्पयामीति शब्दौ द्वावाद्यन्ते लिखितौ न मध्ये पुनरुक्तत्वात्तद्बोद्धव्यं इति। कालाग्निरुद्रं श्वेतवराहमजितं रुक्मभौमं शैलभौमं नीलभौमं रक्तभौमं पीतभौमं श्वेतभौमं कृष्णभौममितिपातालसप्तकं। जम्बूद्वीपं शाकद्वीपं कुशद्वीपं क्रौञ्चद्वीपं शाल्मलिद्वीपं गोमेदं पुष्करद्वीपं प्लक्षद्वीपमिति द्वीपसप्तकं। लोकालोकाख्यं पर्वतं सुधामानं शङ्खपदं केतुमन्तं हिरण्यरोमाणमिति कल्पस्थायिनो लोकपालान्। लवणं क्षीरोदं दध्योदं घृतोदकं सुरोदकं इक्षुरसोदकं स्वादूदकमिति समुद्रसप्तकं। सागरचतुष्कं। शृङ्गवन्तं श्वेतं नीलं मेरुं माल्यवन्तं गन्धमादनं निषधं हेमकूटं हिमवन्तमिति महापर्वतान्। महेन्द्रं मलयं सह्यं शुक्तिमन्तं ऋक्षवन्तं विन्ध्यं पारियात्रमिति सप्तकुलपर्वतान्। कैलास-मैनाकप्रमुखान् सर्वपर्वतांश्च बिन्दुप्रमुखानि सरांसि सप्तप्रवाहां गङ्गां त्रिलोकवाहिनीं

शतद्रूं सप्तसरस्वतीश्च। यमुनां प्रथमं पुष्करं द्वितीयं पुष्करं तृतीयं पुष्करं प्रयागं नैमिषं हयशीर्षं सर्वतीर्थानि सर्वप्रस्रवणानि सर्वाः सरितश्च ह्रदं तीर्थं अश्वत्थप्रमुखान् वनस्पतीन् यवप्रमुखा-नोषधींस्तु मानसोत्तराख्यं पर्व्वतं लोकपालांश्च इन्द्रं शचीं वज्रमैरावतं मातलिं चित्रसेनप्रमुखान् गन्धर्व्वांस्तु अप्सरसः प्रमुदोनामाप्सरसः पृष्टयोनामाप्सरसः आयुवोनामाप्सरसः स्तावा नामाप्सरसः भेकुरयो-नामाप्सरसः ऊर्ज्जोनामाप्सरसः अग्निं सन्तं स्वाहां सन्तं आग्नीध्रं यमं धर्मं प्रियं सत्यं तपः सन्तं। यज्ञदक्षिणां दीक्षां ब्रह्मचर्य्यं व्यवसायं धर्मराजानं दण्डपिङ्गलं पाशौ आयुधं। खगं मृत्युं चित्रगुप्तं यम-पुरुषान् श्यामशबलौ विरूपाक्षं निर्ऋतिं धर्मप्रधानान्। दैत्यदान-वान्। विद्याधरान्। यक्षान्। राक्षसान्। पिशाचान्। रोगान्। ज्वरं रोगाधिपमारोग्यं वरुणं गौरीं नागान्। वासुकिमनन्तं। सर्पान्। वनस्पतीन् वायून् सर्व्वान् प्राणापान-समानोदान-व्यानान्। इन्द्रियाणि इन्द्रियार्थान जीवं। सोमं नक्षत्राणि वर्त्तमानं नक्षत्रं पितॄन् अभा-स्वरान् बर्हिषदोऽग्निष्वात्तान् क्रव्यादानुपहूतानाज्यपान् सुकालिनः महादेवं पार्व्वतीं सेनान्यं स्कन्दं विशाखं स्कन्दग्रहान्। बालग्रहान् मातृग्रहान् स्कन्दपारिषदान् स्कन्दपारिषदीः भूतानि। भौमान् रुद्रीयान्तरिक्षान् रुद्रान् दिव्यान् रुद्रान् सङ्गतान् रुद्रान् मातृः योगीश्वरीः देवपत्नीः देवमातृः गणान् धनाधिपान्। विनायकं मितं सम्मितं सन्तं शालं सङ्कटं कूश्माण्डं राजपुत्रं धर्ममर्थं कामं गतिं प्रीतिं निद्रां क्षुधमदितिं आयतिं नियतिं कीर्त्तिं प्रज्ञां वृत्तिं मेधां आकूतिं रुचिं श्रद्धां वाणीं सरस्वतीं ऋचं दाक्षायणीः प्रजां

प्रजापतिं सनकं सनातनं सनत्कुमारं क्रतुं पितॄन् ब्रह्मर्षीन् देवर्षीन् राजर्षीन् ऋषिकान्। ऋषिपत्नीः ऋषिपुत्रान् गायत्रीमुष्णिहमनुष्टुभं पङ्क्तिं जगतीं सर्व्वच्छन्दांसि गरुड़मरुणं हव्यं जातं सुरभिं दिनार्धं गामुच्चैःश्रवसं धन्वन्तरिं भुवननागान् दिङ्नागान् कुलनागान् विश्वकर्म्माणं वैश्रवणं ऋद्धिं नलं कुवेरं रेवन्तं शङ्ख-पद्मौ बरूपुत्रं तत्पत्नीं तत्प्रजां कश्यपं तत्पत्नीं तत्प्रजां। धनदं तत्पत्नीं तत्प्रजां। प्रजापतिं तत्पत्नीं तत्प्रजां। चन्द्रं तत्पत्नीं तत्प्रजां। अरिष्टनेमिं तत्पत्नीं तत्प्रजां। कृशानुमत्भार्यां तत्प्रजाश्च शस्त्राणि शास्त्राणि अस्त्राणि। ऋग्वेदं यजुर्व्वेदं सामवेदं अथर्व्ववेदमितिहासान् पुराणं धनुर्व्वेदं गान्धर्व्ववेदमायुर्व्वेदं फलवेदं ज्योतिषं शिक्षां कल्पं व्याकरणं निरुक्तं छन्दोविचितिं धर्म्मशास्त्राणि भारतं मनुं विष्णुं यमं अङ्गिरसं वशिष्ठं नारदं दक्षं संवर्त्तं शातातपं पराशरमाश्वलायनमौशनसं कृष्णद्वैपायनं कात्यायनं वृहस्पतिं गौतमं शङ्खं लिखितं हारीतमत्रिं याज्ञवल्क्यमथ भगवन्तं धर्म्ममुत्तानपादं यज्ञं नारायणं नासत्यं वरुणार्यमाणौ संवत्सरं मित्रमिन्द्राग्नी मरीचि-कश्यपौ ध्रुवमगस्त्यं धातारं मार्त्तण्डं रामं बाल्मीकिं कल्पं महाकल्पं मन्वन्तरं वर्त्तमानमिन्द्रमोजस्विनं स्वायम्भुवं स्वारोचिषमौत्तमं तामसं रैवतं चाक्षुषं महातेजसं वैवस्वतमर्कं सावर्णिं ब्रह्मसावर्णिं रुद्रसावर्णिं दक्षसावर्णिं धर्म्मसावर्णिं रौच्यं भौत्यं युगं वर्त्तमानं संवत्सरं वर्त्तमानमयनं वर्त्तमानमृतुं वर्त्तमानं मासं वर्त्तमानपक्षं वर्त्तमानं आदित्यं सोमं कुजं बुधं जीवं शुक्रं शनैश्चरं राहुं केतून् नक्षत्राणि वर्त्तमानं दिवसं रात्रिं सन्ध्यां किम्पुरुषान् सर्व्वाणि भूतानि देवानुचरान् देवांशान् ।

ॐएकज्योतिषं द्विज्योतिषं त्रिज्योतिषं चतुर्ज्योतिषं एकशक्रं द्विशक्रं त्रिशक्रमीदृशमन्यादृशं शान्तं प्रीतं प्रीतसदृशं मितं सम्मितमसितं ऋतजितं सत्यजितं सुषेणं सेनजितमतिमित्रममित्रं पुरुषमित्रं ऋतं सत्यं धर्त्तारं विधर्त्तारं वरुणं धृतं विधारयमीदृक्षमेतादृक्षमसितं सितं। प्रीतिनं प्रीतिसदृक्षं सत्वरममतिधर्त्तारमुग्रं धुनिं भीममभियुक्तमृतपादं। सहं द्युतिं वसुमनाधृष्यं वासं कामजयं विजयं जयमित्येकोनपञ्चाशन्मरुतः भुवनं भावनमजन्यं सुधाजनं क्रतुं वसुं मूर्द्धानं वाजं व्यसुवं प्रसवमाप्यायनमृचामति द्वादशभृगून्। मनुं मन्तारं प्राणमपानं चितिं नयं रूपं हंसं नरं नारायणं विभुं प्रभुमिति द्वादशसाध्यान्। सवितारं धातारं मित्रमर्यमणं पूषणमंशुं त्वष्टारं विवस्वन्तमिन्द्रं विष्णुं वरुणं भगमिति द्वादशादित्यान्। अङ्गारकं सूर्यं निर्ऋतिं सखमजैकपादमहिर्बुध्नं धूमकेतुं बहं मृत्युं कपालिनं हरमित्येकादशरुद्रान्। आत्मानं अपं समं ऋचं वृमं प्राणं हविष्मन्तं गरिष्ठं ऋतं सत्यमिति द्वादशाङ्गिरसः। क्रतुं दक्षं वसुं सत्यं कामं धुरिं कालं रोचनं पुरूरवसमार्द्रवसमिति दशविश्वान्। देवान् धरं ध्रुवं सोमं आपं अनलं अनिलं प्रत्यूषं प्रभासं इत्यष्टौ वसून्। नासत्यं दस्रमित्यश्विनौ। एतान्नवदेवगणान् सानुचरान् स्वयम्भुवं सावित्रीं सर्व्वान् देवान् सतीं देवीं लक्ष्मीश्वरीं अनिरुद्धं प्रद्युम्नं सङ्कर्षणं वासुदेवं भूर्लोकं भुवर्लोकं स्वर्लोकं महर्लोकं जनलोकं तपोलोकं सत्यलोकं ब्रह्माण्डं पृथिवीं अपः वह्निं। वायुमाकाशं मनः बुद्धिं आसनं अव्यक्तं पुरुषं तर्पयामीति अन्ते शब्दः प्रयुक्तः। प्रत्यृचं पुरुषसूक्तेनाञ्जलीन्दद्यात् पुष्पाणि च भक्त्या। अथ कृतापसव्यो दक्षिणाभि

मुखः अन्तर्जानुः पित्र्येण तीर्थेन पितॄणां यथाश्रद्धं यथाप्रकाश-मुदकं दद्यात्।

इति शङ्खोक्ततर्पणं।

अथाचमनमुच्यते।

सकलकर्मणामाचमनपूर्वकत्वात्कर्मणि व्याप्रियमाणानामपि क्षुतादिनिमित्तोपनिपाते चाचमनस्यावश्यकार्य्यत्वादस्ति श्राद्धकर्तॄणामाचमनविधिज्ञानापेक्षेति। तत्र कर्मणामाचमनपूर्वकत्वमाह मार्कण्डेयः।

सम्यगाचम्य तोयेन क्रियाः कुर्वीत वै शुचिः।
देवतानामृषीणाञ्च पितॄणाञ्चैव यत्नतः॥

अकृताचमनस्य क्रियाकरणे दोष उक्तो ब्रह्मपुराणे।

यः क्रियां कुरुते मोहादनाचम्यैव नास्तिकः।
भवन्ति हि वृथा तस्य क्रियाः सर्वा न संशयः॥

तत्राचमननिमित्तानि मनुः।

कृत्वा मूत्रं पुरीषञ्च खान्याचान्त उपस्पृशेत्।
वेदमध्येष्यमाणश्चाप्यन्नमश्नंश्च सर्वदा॥

अनेकार्थत्वात्करोतेः 'कृत्वा' उत्सृज्येति प्रतीयते। उत्सृज्य मूत्रं पुरीषञ्च पायूपस्थं क्षालयित्वा यथोक्तविधिनाचान्त 'खानि' इन्द्रियाणि, उपस्पृशेत्। वेदमध्येष्यमाण इति लौकिकानि क्रियान्तराणि कृत्वाऽनाचान्तो वेदाक्षराणि नोच्चारयेत्। 'अन्नमश्नन्' अन्नं भोक्ष्यमाणः। मन्वङ्गिरोबृहस्पतयः।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्त्वानृतानि च।

पीत्वापोऽध्येष्यमाणश्चाप्याचामेत् प्रयतोऽपि सन् ॥

'सुप्त्वा' शयित्वा, 'क्षुत्वा' क्षुतं कृत्वा, 'भुक्त्वा' भोजनं कृत्वा, 'निष्ठीव्य' मुखेन श्लेष्माणमुत्सृज्य, 'अनृतं' असत्यं, 'अपः पीत्वा' जलं निपीय, प्रयत इत्यध्येष्यमाणपदेनैव सम्बध्यते। प्रयतोऽप्यध्येष्यमाण आचम्याधीत अध्ययनविध्यङ्गतया आचमनं कुर्यादित्यर्थः।

विष्णुः।

क्षुत्वा सुप्त्वा भुक्त्वा भोजनाध्ययनेप्सुः पीत्वा स्नात्वा निष्ठीव्य वासोविपरिधाय रथ्यामाक्रम्य कृतमूत्रपुरीषः पञ्चनखास्थ्यस्नेहं स्पृष्ट्वाचामेत् चाण्डाल-म्लेच्छसम्भाषणे च।

शङ्खः।

कृत्वा मूत्रं पुरीषञ्च स्नात्वा भोक्तुमनास्तथा।
भुक्त्वा क्षुत्वा तथा सुप्त्वा पीत्वा चाम्भोवगाह्य च।
रथ्यामाक्रम्य चाचामेद्वासो विपरिधाय च॥

आपस्तम्बः।

मूत्रं कृत्वा पुरीषं वा मूत्र-पुरीषान्नशेषलेपान् रेतसश्च ये लेपास्तान् प्रक्षाल्य पादौ चाचम्य प्रयतो भवति।

आचमनविध्यनन्तरं देवलः।

रेतो-मूत्र-शकन्मोक्षे भोजनेऽध्वपरिश्रमे।
शौचमेवंविधं प्रोक्तमोषधान्यत्र वर्त्तते॥
विशेषशौचं वक्ष्यामि भोजन-क्षुरकर्मणोः।
सामान्येन हि निर्दिष्टः सर्वत्राचमनक्रमः॥
उच्छिष्टं मानवं स्पृष्ट्वा भोज्यञ्चापि तथाविधं।

तथैवं हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति ॥

तथा ।

यदम्भः शौचसंयुक्तं चितिं प्राप्य विनश्यति ।
प्रक्षाल्याशुचिलिप्तञ्च तत्स्पृष्ट्वाचम्य शुध्यति ॥

आचमने वक्ष्यमाणे हारीतः ।

रथ्यामाक्रम्य सुषुप्सुः कृतमूत्रपुरीषोभक्षित्वा ।

'सुषुप्सुः' निद्रां करिष्यन् ।

वृहस्पतिः ।

अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसम्भवे ।
मार्जार-मूषकस्पर्शे प्रहासेऽनृतभाषणे ।
निमित्तेष्वेषु धर्मार्थं कर्म कुर्वन्नुपस्पृशेत् ॥

'उपस्पर्शनं' आचमनं ।

कूर्मपुराणे ।

चण्डालम्लेच्छसम्भाषे स्त्री-शूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यञ्चापि तथाविधं ।
आचामेदश्रुपाते च लोहितस्य तथैव च ॥
अग्नेर्गवामथालम्भे स्पृष्ट्वाप्रयतमेव वा ।
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ॥

नीवीशब्देनात्राधोवासो लक्ष्यते साहचर्यात्। अधोवासोग्रन्थनं हि नीवी ।

आपस्तम्बः ।

स्वप्ने क्षवथौ सिङ्घाणिकाश्वालम्भे लोहितस्य केशानामग्नेर्गवां

ब्राह्मणस्य स्त्रियाश्चालम्भो महापथङ्गत्वामेध्यञ्चोपस्पृश्याप्रयतञ्च मनुष्यं नीवीञ्च परिधाय उपस्पृशेदार्द्रं वा शकृदोषधीर्भूमिं वा ।

'क्षवथुः' क्षुतं । 'सिङ्घाणिका' नासिकामलः । 'अश्रु' नेत्रजलं । आर्द्रमिति शकृदादिभिः सर्वैः सम्बध्यते । 'शकृत्' गोमयं ।

बौधायनः ।

नीवीं विस्रस्य परिधायाचमेत् उपस्पृशेदार्द्रतृणं भूमिं गोमयं वा संस्पृशेत् ।

आर्द्रतृणादिस्पर्शनं तु कथञ्चिदप्याचमनासम्भवे वेदितव्यं । अन्यथा विषमशिष्टविकल्पापत्तेः । एवं च सत्याचमने न सह विकल्पमानतया दक्षिणश्रवणस्पर्शनं ।

यदुक्तं यमपुराणे(१) ।

चण्डालादीन् जपे होमे दृष्ट्वाचामेद्द्विजोत्तमः ।
श्वादीन् दृष्ट्वा तथैवापि कर्णं वा दक्षिणं स्पृशेत् ॥

जप-होमादिक्रियायां क्रियमाणायां चण्डालादि-श्वादिदर्शने वाचमनं कुर्याद्दक्षिणकर्णं वा स्पृशेदिति ।

यदपि वशिष्ठेन ।

क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।
पञ्चस्वेतेषु वाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेत् ॥ इति ।

यच्च सार्थवादं पराशरेण ।

क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥

(१) यदुक्तं पद्मपुराणे इति ख० ।

प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥
आदित्यो वरुणः सोमो वह्निर्वायुस्तथैव च
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः ॥ इति ।

तदेतदाचमनासम्भवविहितार्द्रतृणादिस्पर्शस्याप्यसम्भवे सति वेदितव्यं । तदुक्तं मार्कण्डेयपुराणे ।

क्षुतादौ सम्यगाचामेत् स्पृशेद्वार्द्रतृणादिकं ।
कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य वै ॥
यथाविभवतो ह्येतत् पूर्वालाभे[१] ततःपरं ।
न विद्यमाने पूर्वत्र उत्तरप्राप्तिरिष्यते ॥ इति ।

अप्रायत्यकारणे समुत्पन्ने झटिति यथासम्भवं शुद्धौ प्रयतनीयमित्याह बौधायनः ।

शक्तिविषये मुहूर्त्तमपि नाप्रयतः स्यादिति ।

आपस्तम्बोऽपि ।

रिक्तपाणिः पयसे उद्यम्याप उपस्पृशेच्छक्तिविषये मुहूर्त्तमप्यप्रयतो न स्यात् । नद्यो वा नाप्सु सतः प्रयमणं विद्यत उत्तीर्य्य त्वाचामेत् ।

'रिक्तपाणिः' जलपात्रशून्यहस्तः । 'पयसे उद्यम्य' जलार्थमुद्यमं कृत्वा । जलस्थितस्तु प्राप्तेप्याचमनकारणे जलादुत्तीर्य्याचामेत् । अत्र हेतुमाह 'अप्सु सतः' जले वर्त्तमानस्याचमतोऽपि, 'प्रयमणं' प्रयतता शुद्धिः, न विद्यतइति ।

जलमित्यनुवृत्तौ हारीतः ।

---

(१) पूर्व्वाभावे इति ग० ।

नोत्तरेदनुपस्पृश्य।

यमः।

उत्तीर्य्योदकमाचम्य अवतीर्य्य उपस्पृशेत्।
एवं स्याच्छ्रेयसा युक्तो वरुणश्चैव पूजितः॥

पूर्व्वमाचम्योदकं 'अवतीर्य्य' प्रविश्य, तदनन्तरं 'उत्तीर्य्य' जलान्निर्गत्यापि, आचामेत्॥

दक्षः।

स्नानादनन्तरन्तावदुपस्पर्शनमिष्यते।

प्रजापतिः।

उपक्रमे विशिष्टस्य कर्म्मणः प्रयतोऽपि सन्।

आचामेदिति शेषः।

मार्कण्डेयपुराणे।

देवार्चनादिकार्य्याणि तथा गुर्व्वभिवादनं।
कुर्व्वीत सम्यगाचम्य तद्वदेव भुजिक्रियां॥

कमण्डल्वधिकारे वशिष्ठः।

कृत्वा वावश्यकार्य्याणि आचामेच्छौचवित्तमः।

'अवश्यकार्य्याणि' नित्यानि कर्म्माणि।

हारीतः।

देवतामभिगन्तुकाम आचामेत्।

ब्रह्माण्डपुराणे।

सन्देहेषु च सर्व्वेषु शिखामोक्षे तथैव च।
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत्॥

शातातपः ।

आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणं ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासोविपरिधाय च ॥

आपस्तम्बः ।

आदान्तपर्यन्तावोष्ठावुपस्पृशेत् ।

'आदान्तपर्यन्ताविति दन्तमूलादारभ्य श्मश्रुसमीपवर्त्तिश्याम-लेखावधि इत्यर्थः ।

मार्कण्डेयः ।

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो निधाय च ।
आचम्य द्रव्यमभ्युक्ष्य पुनरादातुमर्हति ॥

उच्छिष्टशब्देनाचाचमनार्हेणाप्रायत्येन युक्तः पुरुष उच्यते ।

भुक्तावशिष्टमन्न वा द्रव्यमाचाभ्यवहार्य्यं ।

तथा च वशिष्ठः ।

प्रचरन्नभ्यवहार्य्येषूच्छिष्टं यदि संस्पृशेत् ।
भूमौ निक्षिप्य तद्द्रव्यमाचम्य प्रचरेत्पुनः ॥

'प्रचरन्' परिवेषणं कुर्वन् । 'अभ्यवहार्य्येषु' अन्नपानेषु, हस्तगृहीतेष्विति शेषः ।

वृहस्पतिरपि ।

प्रचरन्नन्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत्पुनः ॥

कूर्मपुराणे ।

तैजसं वै समादाय यद्युच्छिष्टो भवेद्द्विजः ।

भूमौ निक्षिप्य तद्द्रव्यमाचान्तः प्रचरेत् पुनः॥

बौधायनः।

तैजसं चेदादायोच्छिष्टी स्यात्तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत्' स चेत्तदन्येनोच्छिष्टी स्यात तदुदस्याचम्यादास्यन्नद्भिः प्रोक्षेत्। स चेदद्भिरुच्छिष्टी स्यात्तदुदस्याचाम्यादास्यन्नद्भिः प्रोक्षेत्।

'उदस्य' निधाय, 'तदन्यत्' तस्मात् तैजसादन्यदभ्यवहार्य्यं, तेन हस्तस्थेन सतेत्यर्थः।

यत्तु मनुनोक्तं।

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन।

अनिधायैव तद्द्रव्यमाचान्तः शुचितामियादिति॥

तत्र मेधातिथिनोक्ता व्यवस्था। गरीयो द्रव्यं निधीयते अन्यदनिधायैवाचम्यत इति। अनभ्यवहार्यस्य वस्त्रादेरनिधानं इतरत्र निधानविधानादिति स्मृतिचन्द्रिकाकारः। अथवा अमन्त्राख्यस्य द्रव्यस्यानिधानं अभ्यवहार्य-तैजसयोर्निधानं तद्व्यतिरिक्तेषु वस्त्रादिषु विकल्पः।

तदुक्तं कूर्मपुराणे।

यद्यमन्त्रं समादाय भवेदुच्छेषणान्वितः।

अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्।

वस्त्रादिषु विकल्पः स्यात् तत्स्पृष्टावेवमेव हि॥

'तत् स्पृष्टौ' उच्छेषणस्पृष्टौ, निधानमनिधानं वा कार्य्यमित्यर्थः।

निधानं प्रकृत्य बौधायनः।

एतदेव विपरीतममन्त्रे वानस्पत्ये विकल्पः। कथं पुनर्हस्तस्थे द्रव्ये

आचमनसम्भवः उच्यते । आ मणिबन्धनात्पाणी प्रक्षाल्येति हि, तत्र विधिः । शरीरसंसर्गमात्रं द्रव्यस्य विवक्षितं न हस्तस्थतैव । एवमशुद्धावपि स्कन्धाद्यारोपितेष्वपि द्रव्येषूच्छिष्टस्पृष्टस्याशुद्धतैव । तथैवाचान्तस्य शुद्धिः । अतोहस्तात्प्रदेशान्तरे प्रकोष्ठकक्षादिके तत् द्रव्यं गृहीत्वाचामेत् । अयमभिप्रायः यथैव पुरुषाशौचसम्बन्धादशुच्येव तच्छुद्धेः शुद्धमिति । यदा तु तद्द्रव्यं भूमौ निधायाचमनं तदा कथं द्रव्यस्य शुद्धिः । प्रयतेन पुरुषेण ग्रहणात् । आचम्य द्रव्यमभ्युक्षेदिति स्मृत्यन्तरविहितेनाभ्युक्षणादिना वेति । एवं च व्यवस्थायाञ्च वक्ष्यमाणेषु गौतमादिवचनेष्वनिधायेति वा निधायेति वा यथेष्टं छेदः क्रियतां ।

गौतमः ।

द्रव्यहस्त उच्छिष्टोनिधायाचामेत् ।

शङ्खलिखितौ ।

द्रव्यहस्त उच्छिष्टोनिधायाचम्याभ्युक्षेद्द्रव्यं ।

पक्वान्नमादाय मूत्रकरणे श्लोकापस्तम्बोक्तं द्रष्टव्यं ।

भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा यथाविधि ।
उत्सङ्गापन्नपक्वान्न उपस्पृश्य ततः शुचिः ॥

एतदापद्यशक्तविषयं ।

अरण्येऽनुदके रात्रौ चौर-व्याघ्राकुले पथि ।
कृत्वा मूत्रपुरीषं तु द्रव्यहस्तो न शुद्ध्यति ॥
शौचं प्रकुर्यात् प्रथमं पादौ प्रक्षालयेत्ततः ।
उपस्पृश्य तदाभ्युक्ष्य गृहीतं शुचितामियात् ॥

इति बृहस्पतिस्मरणात् ।

मार्कण्डेयस्तु शौचमप्यनिधायैव कार्यमित्याह ।

पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः ।
अनिधायैव तद्द्रव्यमङ्गे कृत्वा समाश्रितं ॥
शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि ।
अन्नमभ्युक्षयेच्चैव उद्धृत्यार्कस्य दर्शयेत् ।
त्यक्ताग्रमात्रं वा तस्माच्छेषं शुद्धिमवाप्नुयात् ॥

इत्याचमननिमित्तानि ।

अथ द्विराचमननिमित्तानि ।

तत्र याज्ञवल्क्यः ।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥

पैठीनसिः ।

भुक्त्वा क्षुत्वा च सुप्त्वा च वासश्च विपरिधाय कलिलकासश्वासागमे च रथ्या-चत्वर-श्मशानाक्रान्तेष्वाचान्तः पुनराचामेत् ।

मन्वङ्गिरोबृहस्पतयः ।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठीव्योक्तान्यनृतानि च ।
पीत्वापोऽध्येष्यमाणश्च आचामेत् प्रयतोऽपि सन् ॥

आचामेदित्यनुवृत्तौ गौतमः ।

सुप्त्वा भुक्त्वा क्षुत्वा च पुनः ।

भोजनविधौ हारीतः ।

ध्यायेदव्यक्तं पुरुषं मूत्रपुरीषे रथ्यामाक्रम्य श्मशानञ्चाचान्तः पुनराचामेत् ।

पैठीनसिः ।

रथ्यामाक्रम्य कृतमूत्रपुरीषः पञ्चनखास्थ्यस्नेहं स्पृष्ट्वाचान्तः पुनराचामेत् चण्डालम्लेच्छसम्भाषणे च ।

शङ्ख-लिखितौ ।

स्नान-भोजनकालेष्वाचान्तः पुनराचामेत् ।

आपस्तम्बः ।

भोक्ष्यमाणस्तु प्रयतो द्विराचामेत् द्विःपरिमृज्यात् सकृदुपस्पृशेत् ।

व्यासः ।

प्रक्षाल्य पाणि-पादौ तु भुञ्जानो द्विरुपस्पृशेत् ।

कूर्मपुराणे ।

प्रक्षाल्य पाणि-पादौ तु भुञ्जानो द्विरुपस्पृशेत् ।
शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥

वसिष्ठः ।

भुक्त्वा सुप्त्वा क्षुत्वा पीत्वा चाचान्तः पुनराचामेत् वासश्च परिधाय ओष्ठौ च संस्पृश्य विलोमकौ ।

कूर्मपुराणे ।

ओष्ठौ विलोमकौ स्पृष्ट्वा वासोपि परिधाय च ।
रेतोमूत्र-पुरीषाणामुत्सर्गे शुक्लभाषणे ॥
ष्ठीवित्वाध्ययनारम्भे काश-श्वासागमे तथा ।
चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः ॥

सन्ध्ययोरुभयोस्तद्वदाचान्तोप्याचमेत् पुनः ॥

शङ्ख-लिखितौ ।

मूत्र-पुरीष-ष्ठीवनादिषु शुक्लवाक्याभिधानेषु च पुनरुपस्पृशेत् ।

बौधायनः ।

भोजने हवने दाने उपहारप्रतिग्रहे ।

हविर्भक्षणकाले च न द्विराचमनं स्मृतं ॥

व्यासः ।

दाने भोजनकाले च संध्ययोरुभयोरपि ।

आचान्तः पुनराचामेज्जप-होमार्चनादिषु ॥

इति द्विराचमननिमित्तानि ।

अथ श्राद्धाचमनानि ।

तत्र ब्रह्माण्डपुराणे

श्राद्धमारभ्यमानस्तु प्रक्षाल्याङ्घ्री करौ तथा ।

अद्भिः सम्यग्विशुद्धाभिः द्विराचामेदुदङ्मुखः ॥

ततस्तु मण्डले शुद्धे द्विजाः प्रक्षालिताङ्घ्रयः ।

कुर्युराचमनं द्विर्वै मण्डलोत्तरतः स्थिताः ॥

श्राद्धकर्त्ताथ भूयोऽपि समाचम्य यथाविधि ।

दर्भपाणिश्च दर्भेषु ब्राह्मणानुपवेशयेत् ॥

आह सत्यव्रतः ।

क्षालिताङ्घ्रिषु विप्रेषु द्विराचान्तेषु च स्वयं ।

धौतपादः प्रकुर्वीत कर्त्ताप्याचमनन्ततः ॥

मार्कण्डेयपुराणे ।

आचान्तः पुनराचम्य द्विजपादावनेजनं ।
विधाय पुनराचामेत्पादौ प्रक्षाल्य यत्नतः ॥

जातूकर्ण्यः ।

अभ्यर्च्य गन्धमाल्याद्यैर्विश्वान् देवान् पितॄनपि ।
आचम्य चाग्नौकरणं कुर्वीत सुसमाहितः ॥

जमदग्निः ।

जलपूर्वन्ततो दत्वा गन्धादीन्यनुपूर्वशः ।
आचामेद्दापयित्वा तु पूर्णतामर्च्चनस्य वै ॥

विष्णुपुराणे ।

पितॄन् सम्पूज्य गन्धाद्यैराचम्याथ द्विजाग्रतः ।
सौवर्ण-राजतादीनि भाजनानि निवेशयेत् ॥

ब्रह्मपुराणे त्वर्घ्यदानानन्तरमेव आचमनमुक्तं ।

जलं क्षीरं दधि घृतं तिलं तण्डुल-सर्षपान् ।
कुशाग्राणि च पुष्पाणि दत्वाचामेत्पुनः स्वयं ॥

आदित्यपुराणे ।

येऽग्निदग्धा इति प्राज्ञो भुव्यन्नं विकिरेत्ततः ।
स्वयमाचम्य विप्राणामपोदद्यात् सकृत्सकृत् ॥

विष्णुः ।

उच्छिष्टसमीपे तिलोदकेनाभ्युच्यासंस्कृतप्रमीतानामन्नं विकीर्य्याप उपस्पृश्य तृप्तिं पृच्छेत् ।

संवर्त्तः ।

दक्षिणाभिमुखः स्थित्वा विकीर्य्यान्नं ततो भुवि ।

निर्णिक्तहस्त आचम्य ततो मधुमतीर्जपेत् ॥

आदित्यपुराणे ।

पिण्डनिर्वपणं कृत्वा पितॄणामनुपूर्व्वशः ।
तथा मातामहानाञ्च कुर्य्यादाचमनं ततः ॥

कात्यायनः ।

निरूप्य प्रयतः पिण्डानाचम्योदक्परीत्य च ।
नमस्कुर्वीत षट्कृत्वः पूजयेच्चैकमानसः ॥

विश्वामित्रः ।

निधाय पिण्डान् संपूज्य गन्ध-माल्यादिभिस्ततः ।
उपस्पृशेदपस्तञ्च देशं प्रोचेदमत्सरः ॥

अग्निपुराणे ।

गन्ध-माल्यादिभिः पिण्डानभ्यर्च्याचम्य संयतः ।
द्विजहस्तेष्वपो दद्यात् सपुष्पाः साक्षतास्ततः ॥

बृहस्पतिः ।

समाप्य च ततो विप्रान् सीमान्तमनुगम्य च ।
प्रक्षालिताङ्घ्रिपाणिश्च द्विराचमनमाचरेत् ॥

पाराशरः ।

श्राद्धं समाप्य विधिवत् विसर्ज्य ब्राह्मणानपि ।
द्विराचम्य प्रकुर्वीत वैश्वदेवादि नैत्यकं ॥

तदेतदाचमनसप्तकं समासेनाह सङ्ग्रहकारः ।

आदौ विप्राङ्घ्रिशौचान्तेऽभ्यर्चने विकिरे कृते ।
पिण्डान् दत्त्वार्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा ॥

आचामेच्छ्राद्धकर्त्ता तु स्थानेऽष्वेतेषु सप्तसु ।
आद्यन्तयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत् ॥

गोभिलः ।

आरम्भे चावसाने च द्विराचमनमिष्यते ।
अन्यत्र पितृकार्य्येषु सकृदाचमनं स्मृतं ॥

अत्र कैश्चिदुक्तं ।

श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः ।
विकिरे पिण्डदाने च द्विराचमनमिष्यते ॥ इति ।

तथा ।

आदावन्ते तथार्चायां विप्रपादप्रशोधने ।
विकिरे पिण्डदाने च षड्विराचमनं स्मृतमिति च ॥

तत्र तन्मते पिण्डनिर्वापानन्तरमुद्गावर्त्तनात् पूर्व्वं आचमनं न विद्यते किन्तु गन्धादिदानान्तं सकलमपि पिण्डदानप्रयोगं समाप्याचमनं क्रियत इति ।

इति श्राद्धाचमनानि ।

अथाचमनापवादः ।

तत्र याज्ञवल्क्यः ।

मुखजा विप्रुषो मेध्यास्तथाचमनविन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

'मुखजाः' मुखान्निःसृताः, 'विप्रुषः' श्लेष्मबिन्दवः, 'मेध्याः' नोच्छिष्टतामापादयन्ति । निष्टीव्योत्क्रान्तानि चेति निष्ठ्यूतवत आचमनविधानादनाचान्तस्याशुद्धता ज्ञायते । विप्रुषामपि मुखान्नि-

क्रमणं निष्ठीवनमेव। अतोऽत्रापि प्राप्तस्याचमनस्यापवादार्थमिद-मुच्यते। तथा आचमतो हस्तादधोऽङ्गुलिविवरैः पतन्त उदबिन्दवो-ऽपि मेध्याः। 'श्मश्रु' मुखलोम, तत् आस्यगतं मुखान्तःप्रविष्टं, अपि मेध्यं। दन्तसक्तमप्यन्नादिकं अनाचामन्नपि शुचिर्भवति। विप्रुषां स्पर्शे तु मलस्पर्शनिमित्तमाचमनं कर्त्तव्यमेव।

तथाचापस्तम्बः।

यदास्याद्बिन्दवः पतन्त उपलभ्यन्ते तेष्वाचमनं विहितं ये भूमौ न तेष्वाचामेदित्येक इति।

'उपलभ्यन्ते' संस्पृश्यन्ते।

अतएव गौतमः।

न मुख्या विप्रुष उच्छिष्टं कुर्वन्ति न चेदङ्गे निपतन्तीति।

वसिष्ठोऽपि।

न मुख्या विप्रुष उच्छिष्टं कुर्वन्त्यनङ्गश्लिष्टाः।

मनुरपि।

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं न यान्ति याः।
न श्मश्रूणि गतान्यास्यन्न दन्तान्तरधिष्ठितं॥

'दन्तान्तः' दन्तानां मध्ये छिद्रे वा। 'अधिष्ठितं' संसक्तं।

आचमनविन्दवो मेध्या इत्युक्तं तत्र विशेषमाह मनुः।

स्पृशन्ति बिन्दवः पादौ य आचमयतः परान्।
भौमिकैस्ते समा ज्ञेया न तैरप्रयतो भवेत्।

अत्र परानाचमयतः पादाविति सम्बन्धः।

यः परस्मै आचमनं ददाति तस्याचमयितृहस्तपतितैरुदबिन्दु-

भिर्यदि पादौ स्पृश्येते तदासौ नाशुचिः। यतस्ते भौमिकैः समाः यथानुपहतायां भूमौ स्थिताः काश्चिदुदकमात्राः शुद्धाः एवमुच्छिष्टहस्तात्पतन्तोऽपि ते शुद्धा एवेत्यर्थः । आचमयितुरेवात्र शुद्ध्यभिधानादाचमनकर्त्तुरन्येषां च समीपस्थानामाचमनविन्दुस्पर्शे भवत्येवाप्रायत्यमिति ज्ञायते ।

बौधायनेऽपि ।

स्पृशन्ति विन्दवः पादौ यस्याचामयतः परान् ।
न तैरुच्छिष्टभावः स्यात्तुल्यास्ते भौमिकैः सह ॥

वसिष्ठोऽपि ।

परानप्याचामयतः पादौ या विप्रुषो गताः ।
ताभिर्नोच्छिष्टतां याति भूम्या तास्तु समाः स्मृताः इति ॥

अत्र पादग्रहणमवयवान्तरस्यापि प्रदर्शनार्थं ।

तथा च यमः ।

प्रयान्त्याचमतो याश्च शरीरे विप्रुषो नृणां ।
उच्छिष्टदोषो नास्त्यत्र भूमितुल्यास्तु ताः स्मृताः इति ॥

एते च भूम्यभिघातोत्थिता एव शुद्धाः नान्तरालस्पृष्टाः ।

यथाह पैठीनसिः ।

भूमिगता विन्दवः परामृष्टाः पूताः विप्रुषः शुद्धा विलोमक्लिन्नेष्वाचामेदिति । मुखप्रविष्टैः श्मश्रुभिर्नोच्छिष्टतेति ।

देवलोऽप्याह ।

श्मश्रुभिश्च मुखाविष्टैराशौचं नोपदिश्यते ।

अत्र विशेषमाह आपस्तम्बः ।

न श्मश्रुभिरुच्छिष्टो भवत्यन्तरास्ये सद्भिर्यावन्न हस्तेनोपस्पृशन्ति। हस्तग्रहणमवयवान्तरस्याप्युपलक्षणार्थं अङ्गान्तराणामपि मुखमलस्पर्शे आचमनविधानात्। यच्च दन्तसक्तस्य त्यागमात्रेणैव प्रागशुचिल-मुक्तं तत् स्वयं च्युतदन्तसक्तविषयमिति ज्ञेयं। "स्वस्तेषु तेषु नाचा-मेत्तेषां संस्रावणाच्छुचिः" इति बौधायनस्मरणात्। 'संस्रावणं' मुखात् वहिर्निरसनं।

स्वयं प्रच्युतस्य निगिरणादेव शुद्धिरित्याह मनुः।

परिच्युतेष्ववस्थानान्निगिरन्नेव तच्छुचिः।

'निगिरन्' अन्तः प्रवेशयन्। निगिरण-त्यागयोस्तु विकल्पः। गौतमोऽपि।

च्युतेष्वास्रावविद्यान्निगिरन्नेव तच्छुचिरिति।

'आस्रावः' मुखोदकं, तत् यथा च्युतमप्यशुचि न भवति तद्व-दित्यर्थः। निगिरन्नेवेत्येवकारात् चर्वणक्रियायां "आचामेच्चर्वणे नित्यं" एवं विष्णुनोक्तमाचमनं कर्त्तव्यमेव बलात्प्रच्याविते तु दन्तलग्ने आचान्तव्यं "भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत्" इति देवल स्मरणात्।

दन्तादपरिच्युतन्त्वन्नादिकं दन्तवन्नोच्छिष्टं करोति। तदाह बौधायनः।

अथाप्युदाहरन्ति।

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत्।

आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः॥

वसिष्ठः।

न श्मश्रुगतोलेपः ।

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥

हारीतः ।

दन्तवद्दन्तलग्नेषु यच्चाप्यन्तर्मुखे भवेत् ।
आचान्तस्यावशिष्टं स्यान्निगिरन्नेव तच्छुचिः ॥

पैठीनसिः ।

दन्तवद्दन्तलग्नानां दन्तान्तरगतेषु च निगिरन्नेवान्तर्मुखं शुद्धः । दन्तवद्दन्तलग्नेष्विति रसानुपलब्धौ सत्यां वेदितव्यं ।

तथाह शङ्खः ।

दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वाभिमर्शनादिति ।
अन्यत्रेत्यादिरसानुपलब्धावपि जिह्वाभिमर्शने सत्यशुचित्वमित्यर्थः ।

मनुः ।

दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्भवेत् ॥

केचित्तु जिह्वाभिमर्शनेऽपि यावच्युतिर्न भवति तावन्नाशुचिरित्याहुः ।

तथा च गौतमः ।

दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिमर्षनात् प्राक्च्युतेरित्येके ।
"दन्तवद्दन्तलग्नं" इत्यनिर्हार्य्यलेपाभिप्रायं ।

तथा च देवलः ।

दन्तलग्नमसंहार्य्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्याद् यत्नमुद्धरणे पुनः ॥

भवेदशौचमत्यर्थं तृणवेधाद्‌व्रणे कृते ॥

शातातपः।

दन्तलग्ने फले मूले भक्ष्ये स्नेहे तथैव च।
ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विजः ॥

स्नेहोऽत्र कृताचमनस्यापि यो हस्तादिलग्नो भोजनस्नेहः।

षट्‌त्रिंशन्मते।

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टस्तु भवेन्नरः॥
त्वग्भिः पत्रैर्मूलपुष्पैस्तृणकाष्ठमयैस्तथा।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः ॥

दन्तलग्नस्य संस्पर्शे जिह्वयेति शेषः।

पराशरः।

ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥

अत्र्यङ्गिरसौ।

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनं तथा॥

अप्स्विति प्राणाहुतिसन्निधानादमृतापिधानमसीत्यादिनोदकपाने कर्त्तव्ये भुक्तवानपि मन्त्रोच्चारणं प्रति नोच्छिष्ट इत्यर्थः।

वशिष्ठः।

प्राणाहुतीषु सोमे च मधुपर्के तथैव च।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ॥

'आज्यहोमेषु' दष्टावशिष्टभक्ष्येषु ।

इत्याचमनापवादः ।

अथाचमने निषेधः ।

तत्र हारीतः ।

नायज्ञोपवीती न मुक्तशिखो न तिष्ठन्न हसन्न जल्पन्न विलोकयन्नाविलोकिताभिरद्भिर्नोष्णाभिर्न कलुषाभिर्न फेनाभिर्न सबुद्बुदाभिराचामेत्।

'तिष्ठन्' ऊर्ध्वजानुः 'विलोकयन्', दिश इति शेषः तस्मिन्नेव जले निजप्रतिबिम्बं वा ।

आचामेदित्यनुवृत्तौ शङ्खलिखितौ ।

न तिष्ठन्न प्रणतो नाङ्गुलिभिर्न मुखशब्दं कुर्वन्नाधौतपादो नायज्ञोपवीती न मुक्तशिखः ।

बौधायनः ।

नाङ्गुलीभिर्न सबुद्बुदाभिर्न सफेनाभिर्न क्षाराभिर्नोष्णाभिर्न कलुषाभिरद्भिर्न हसन्न विलोकयन्न प्रह्वो न प्रणतो न मुक्तशिखो नायुक्तशिखोनाबद्धकच्छो न बहिर्जानुरुपस्पृशेत् ।

'प्रह्वः' नम्रीकृतकायः ।

तथा ।

पादप्रक्षालनोच्छेषेण नाचामेत् यद्याचामेद्भूमौ स्रावयित्वाचामेत्।

आपस्तम्बः ।

न वर्षधाराखाचामेत्तथा प्रदरोदके तप्ताभिश्चाकारणात् ।

'प्रदरः' किञ्चिद्विभिन्ननिम्नीभूतोभूभागः । 'अकारणात्' रोगादिकारणमन्तरेण ।

तथा नान्योदकशेषेण वृथाकर्माणि कुर्वीताचामेद्वा पाणिसंक्षुब्धेनोदकेनैकपाण्यावर्जितेन नाचामेत्।

आचामेदित्यनुवृत्तौ गौतमः ।

न शूद्राशुच्येकपाण्यावर्जितेन जलेन ।

वशिष्ठः ।

व्रजंस्तिष्ठन् शयानः प्रणतो वा नाचामेत् ।

आपस्तम्बः ।

न तिष्ठन्नाचामेत्प्रह्वो वा ।

प्रचेताः ।

नान्तर्वासा न निर्वासा नाश्रु कुर्वन्नासमपाद आचामेत् ।

गौतमः ।

नाञ्जलिना पिबेन्न तिष्ठन्नानुद्धृतेनोदकेनाचामेत् न पशुवन्मुखेन पिबेदित्यर्थः ।

आचामेदित्यनुवृत्तौ वशिष्ठः ।

न वर्ण-रसदुष्टाभिर्याश्च स्युरशुभागमाः ।

हारीतः ।

विवर्णं गन्धवत्तोयं फेनिलञ्च विवर्जयेत् ।

शङ्खः ।

विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः ।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेत् ॥
बहिर्जानुरुपस्पृश्य एकहस्तार्पितैर्जलैः ।
सोपानत्कस्तथा तिष्ठन्नैव शुद्धिमवाप्नुयात् ॥

आचामेदित्यनुवृत्तौ देवलः ।

न गच्छन्न शयानश्च न स्खलन्न परान्स्पृशन् ।
न हसन्नैव वा जल्पन्नात्मानञ्चापि वीक्षयन् ॥
केशान्नीवीमधःकायं न स्पृशन् धरणीमपि ।
यदि स्पृशति चैतानि भूयः प्रक्षालयेत्करं ॥

'स्खलन्' प्रचलन् ।

तथा ।

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा पुनः ।
उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥

अस्यदेशेऽपि वेष्टनवान् 'उष्णीषी' ।

व्यासः ।

शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥
अपः पाणिनखाग्रेषु आचामेद्यस्तु ब्राह्मणः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

विष्णुः ।

न गच्छन्न शयानश्च न स्थितः प्रह्व एव च ।
न स्पृशन्न हसन् जल्पन्न श्व-चाण्डालदर्शने ॥

'स्थितः' उर्द्धीभूतः, 'न स्पृशन्' अन्यमिति शेषः ।

गोभिलः ।

नान्तरीयैकदेशस्य कृत्वा चैवोत्तरीयतां ।

आचामेदिति शेषः । 'अन्तरीयं' अधोवासः, यस्याधोवस्त्रैकदेशस्य

प्रथमपरिधानसमये मन्त्रपूर्वमुत्तरीयता न कल्पिता तद्विषयमेतत्। द्वितीयवस्त्राभावे हि परिधानवस्त्रोत्तरार्द्धस्यैवोत्तरीयत्वं क्रियते। "एकश्चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयति" इति समन्त्रकोत्तरीयग्रहणविधेरनन्तरं पारस्करस्मरणात्।

सम्वर्त्तः।

शूद्राशुच्येकहस्तैश्च दत्ताभिर्न कदाचन।
आरूढ़पादुकस्यापि न शुद्धेत द्विजोत्तमः॥

मरीचिः।

न बहिर्जानुरुत्तरया नासनस्थो न चोत्थितः।
न पादुकास्थो नाचित्तः शुचिः प्रयतमानसः।
भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन॥

भृगुः।

विना यज्ञोपवीतेन तथा धौतेन वाससा।
मुक्ता शिखां वाचान्तस्य कृतस्यैव पुनः क्रिया॥
सोष्णीषो बद्धपर्य्यङ्कः प्रौढपादश्च यानगः।
दुर्द्देशे प्रपदस्थश्च नाचामन् शुद्धिमाप्नुयात्॥

'बद्धपर्यङ्कः' वस्त्रादिना वेष्टितजघनभागः।

प्रौढ़पादलक्षणमाह गोभिलः।

आसने रूढपादो वा जान्वोर्वा जङ्घयोस्तथा।
कृतावसक्थिको यश्च प्रौढपादः स उच्यते॥

योगपट्टाकृतिना वस्त्रेणावेष्टितपृष्ठ-जानुद्वयमवस्थानम् 'अवसक्थिका' 'प्रपदं' पादाग्रं।

ब्रह्माण्डपुराणे ।

कण्ठं शिरो वा प्रावृत्य रथ्यापणगतोऽपि वा ।
अकृत्वा पादयोः शौचमाचान्तोप्यशुचिर्भवेत् ॥

'आपणः' क्रय-विक्रयभूः ।

कौशिकः ।

अपवित्रकरः कश्चित् ब्राह्मणो य उपस्पृशेत् ।
अपूतं तस्य तत्सर्वं भवत्याचमनं तथा ॥

विष्णुः ।

जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
अधस्ताच्छतकृत्वोपि समाचान्तो न शुध्यति ॥

जान्वोरधस्तादाचमननिषेधाज्जानुमात्रेप्यविरुद्धमाचमनमिति ज्ञायते । तदाह जातूकर्ण्यः ।

जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले ।
सर्वतः शुचिराचान्तस्तयोस्तु युगपत्स्थितः ॥

'तयोः' जल-स्थलयोरित्यर्थः ।

अतएव हारीतः ।

जलस्थो वा स्थलस्थो वा द्वयोर्वा समतः स्थितः ।
जलस्थो जलकृत्येषु स्थलस्थः स्थलकर्मसु ।
उभयोरुभयस्थस्तु कर्मस्वधिकृतोभवेत् ॥

यदि जलस्थित आचमति तदा जलकृत्य एवाधिकृतोभवति । यदा तु स्थलस्थः तदा स्थलकृत्य एव, यदि पुनरुभयस्थः तदोभयोरपि क्रियमाणेषु कर्मस्वधिकृतो भवति ।

दक्षोऽपि ।

स्नात्वाचामेद्यदा विप्रः पादौ कृत्वा जले स्थले ।
उभयोरप्यसौ शुद्धः ततः कार्यक्षमो भवेत् ॥

यमः ।

अपः करनखस्पृष्टा य आचामति वै द्विजः ।
सुरां पिबति सुव्यक्तं यमस्य वचनं तथा ॥
उद्धृत्य वामहस्तेन यत् पिबेत् ब्राह्मणोजलं ।
सुरापाणेन तत्तुल्यं मनुः स्वायम्भुवोऽब्रवीत् ॥

अत्र विशेषः कूर्मपुराणे दर्शितः ।

न वामहस्तेनोद्धृत्य पिबेत् वक्त्रेण वै जलं।

'वक्त्रेण' शुद्धेनेति शेषः।

शाट्यायनिः ।

अलावुताम्रपात्रस्थं करकस्थञ्च यत्पयः ।
गृहीत्वा स्वयमाचामन्न तेनाप्रयतोभवेत् ॥

छागलेयः ।

करकालावुकाष्ठेन ताम्र-चर्मपुटेन च ।
स्वहस्ताचमनं कार्यं स्नेहालापांश्च वर्जयेत् ॥
करपत्रे च यत्तोयं यत्तोयं ताम्रभाजने ।
सौवर्णे राजते चैव नैवाशुद्धोत्तु कर्हिचित् ॥

इत्याचमननिषेधः ।

अथाचमनोदकानि ।

तत्र मनुः ।

अनुष्णाभिरफेनाभिरदुष्टाभिश्च धर्मतः ।
शौचेप्सुः सर्वदाचामेदासीनः प्रागुदङ्मुखः ॥

अनुष्णाभिरित्यत्राग्निसंयोगजमौष्ण्यं प्रतिषिध्यते ।

"अनभ्युष्णाभिरफेनिलाभिरपूतिर्द्दैककरावर्जिताभिरचाराभिरद्भिराचामेत्" इति विष्णुस्मरणात् ।

'अदुष्टाभिः' अमेध्यसंसर्गादिदोषरहिताभिः ।

समुपस्पृशेदित्यनुवृत्तौ याज्ञवल्क्यः ।

अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ।

'प्रकृतिस्थाभिः' अविकृतगन्ध-वर्ण-रसाभिः ।

शङ्खः ।

अद्भिः समुद्धृताभिस्तु हीनाभिः फेनबुद्बुदैः ।
वह्निना च न तप्ताभिरचाराभिरुपस्पृशेत् ॥

उद्धृतग्रहणं जलाश्रयस्थानामपां मुखेन ग्रहणं निराकर्तुं ।

गौतमः ।

उद्धृतोदकेनाचामेत् ।

आचामेदित्यनुवृत्तौ शङ्ख-लिखितौ ।

उद्धृतपरिपूताभिरद्भिरवेचिताभिरचाराभिरनधिश्रिताभिरफेनाभिरबुद्बुदाभिः ।

'परिपूताभिः' वस्त्रपरिस्रुताभिः । 'अनधिश्रिताभिः' अवह्नितप्ताभिः ।

आपस्तम्बः ।

भूमिगताखप्खाचम्य प्रयतोभवति यं वा प्रयत आचामयति। प्रदरोदकेन नाचामेदित्युक्तं तत्र विशेषमाह।

वशिष्ठः।

प्रदरादपि या गोस्तर्पणाः स्युः ताभिः।

आचामेदिति शेषः।

आचामेदित्यनुवृत्तौ पैठीनसिः।

अशृतनाभिरफेनाभिरबुद्बुदाभिः।

'अशृताभिः' अपक्वाभिः। एतच्चानातुरविषयं।

अतएव यमः।

रात्रावनीक्षितेनैव शुद्धिरुक्ता मनीषिणां।
उदकेनातुराणाञ्च तथोष्णेनोष्णपायिनां॥

'उष्णपायिनां', आतुराणां, न पुनरातुरमात्राणामित्यर्थः।

यत्र पुनरुक्तलक्षणा आपो न लभ्यन्ते तत्र कथमित्यपेक्षिते देवलः।

येषु देशेषु ये देवा येषु देशेषु ये द्विजाः।
येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका॥
येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः।
तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः॥

एतच्चोदकं यावद्वामेन न स्पृशति तावन्नाचामेदित्याह यमः।

तावन्नोपस्पृशेद्विद्वान्यावद्वामेन न स्पृशेत्।
वामे हि द्वादशादित्या वरुणश्च जलेश्वरः॥

इत्याचमनोदकानि।

अथाचमनोदकपरिमाणं।

तत्र मनुः ।

हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्राः स्पृष्टाभिरन्ततः ॥

हृदयं गच्छन्ति प्राप्नुवन्तीति 'हृद्गाः, 'पूयते' पवित्रतां प्राप्नोति। 'कण्ठगाभिः' कण्ठमात्रस्पर्शिनीभिः, 'भूमिपः' क्षत्रियः । 'प्राशिताभिः' मुखान्तःप्रवेशिताभिरपि कण्ठमप्राप्ताभिः, वैश्यः। अन्तत इति तृतीयार्थे तसिः। समीपवचनस्यान्तशब्दः। स च सम्बन्ध्यान्तरमपेक्षते। ततस्च यत्र स्थाने वैश्यस्याचमनं विहितं तत्सपौपवर्त्तिना स्थानेन स्पृष्टाभिरद्भिः शूद्रः पूयते। वैश्यस्य च स्थानं जिह्वा तत्समीपवर्त्तिस्थानं दन्ता एव। अत्र यद्यपि दन्तनिहितस्योदकस्य द्रवत्वाज्जिह्वास्पर्शोऽपरिहार्य्यः। तथापि पूर्वपरिमाणात् किञ्चिन्न्यूनताज्ञापनार्थमिदं ।

शङ्ख-लिखितौ ।

हृदयङ्गाभिरद्भिर्ब्राह्मणः शुचिः। गण्ठगाभिः क्षत्रियः। तालव्याभिर्वैश्यः। स्त्री शूद्रः स्पर्शान्तिकाभिः ।

वशिष्ठः ।

हृदङ्गमाभिरबुद्बुदाभिरफेनाभिर्ब्राह्मणः । कण्ठगाभिस्तु क्षत्रियः शुचिः। वैश्योऽद्भिः प्राशिताभिः। स्त्री शूद्रः स्पृष्टाभिरेव तु ।

शङ्खः ।

विप्रः शुध्यति हृद्गाभिः कण्ठगाभिस्तु भूमिपः।
तालुगाभिस्तथा वैश्यः शूद्रः स्पृष्टाभिरन्ततः ॥

देवलः ।

अप्सु पीतासु हृदयं प्राप्तासु ब्राह्मणः शुचिः ।
राजन्यः कण्ठमास्यं वै विट्शूद्रः स्पर्शनाच्छुचिः ॥

पैठीनसिः ।

हृदयङ्गमाभिरद्भिर्ब्राह्मणः । राजन्यः कण्ठगाभिः । आस्यं प्राप्ताभिर्वैश्यः । स्त्री शूद्रः स्पृष्टाभिः ।

बौधायनः ।

अथाप्युदाहरन्ति ।

गताभिर्हृदयं विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ।
वैश्यस्त्वद्भिः प्राशिताभिः स्त्री-शूद्रौ स्पर्शतोऽन्ततः ॥

याज्ञवल्क्य-विष्णू ।

हृत्कण्ठ-तालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येयुः स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥

हारीतः ।

गताभिर्हृदयं विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ।
वैश्योऽन्तःप्राशिताभिः स्यात् स्त्री-शूद्रौ स्पर्शनादपि ॥

शालङ्कायनः ।

अप्सु प्राप्तासु हृदयं ब्राह्मणः शुद्धिमाप्नुयात् ।
कण्ठं राजा च नाभौ च वैश्यः शूद्र-स्त्रियोऽन्ततः ॥

शूद्राधिकारे गौतमः ।

आचमनार्थे पाणि-पादप्रक्षालनमेवैके ।

हृदयङ्गमादीनामपि परिमाणमाहाश्वलाः ।

माषमज्जनमात्रा हृदयङ्गमा भवन्ति ।

तदेकैकपादह्रान्या कण्ठ-तालु-दन्तगास्ताभिस्त्रैवर्णिकाः । स्त्री-शूद्राश्चाचामेरन्निति ।

भरद्वाजोऽपि ।

माषमज्जनमात्रास्तु संगृह्य त्रिः पिबेदप इति ।

हृदयङ्गमानां परिमाणज्ञाने प्रकारान्तरमाह कण्वः ।

संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताङ्गुष्ठ-कनिष्ठे तु शेषेणाचमनञ्चरेत् ॥

इत्याचमनोदकपरिमाणं ।

अथाचमने दिङ्नियमः ।

तत्र वृद्धपराशरः ।

कृत्वाथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः ।
निबद्धशिखकच्छस्तु प्रागुदङ्मुख आचमेत् ॥

पादप्रक्षालनमाजङ्घामूलात्, हस्तप्रक्षालनमा मणिबन्धात् कर्त्तव्यं । "आ मणिबन्धात्पाणी प्रक्षाल्य आजङ्घाभ्यां पादौ" इति हारीतस्मरणात् । "इत्येवमङ्घ्रिराजानु प्रक्षाल्य चरणौ पृथक् । हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयतः" इति देवलस्मरणाच्च ।

'शिखा' चूडा । परिधानवस्त्रगुह्यसंसक्तोऽञ्चलः 'कच्छः' । तस्य निबन्धनं कटिदेशे निगूहनं । 'प्रागुदङ्मुख इति मुखशब्दः प्रत्येकमभिसम्बध्यते । अतः प्राङ्मुख उदङ्मुखो वाचामेदिति । विग्रहस्त्वेवं । प्रागुदङ्मुखमस्येति । न चैष द्वन्द्वगर्भो बहुव्रीहिरिति वाच्यं । द्वन्द्वगर्भतायां समाहारे तावत्समासान्तेनाकारेण भवितव्यं । इतरेतरयोगोपि तथैव । न हि युगपत्प्रागुदङ्मुखता सम्भवति । तत्र कश्चिदाचमनभागः प्राङ्मु-

खेन कर्त्तव्यः। कश्चिदुदङ्मुखेनेत्यापतति। न चैकदेश आचमनं, न च दिगर्थ उपादेयः, येन परस्परापेक्षे दिशौ सम्बध्येयातां। नापि दक्षिण-पूर्वादिवत्प्रागुदक्शब्दोऽपराजिताया दिशोवाचकत्वेन प्रसिद्धः, येन दिक्समासबहुव्रीहिपूर्वको बहुव्रीहिर्विज्ञायेत। तस्मान्नायं द्वन्द्वान्तर-गर्भो बहुव्रीहिः। अतोऽत्र प्राच्युदीच्यो विकल्पः। यथा बृहद्रथन्तरं साम पठतीत्यत्र केषुचिदहःसु बृहत्केषुचिद्रथन्तरं न त्वेकैकस्मिन्नहनि समस्तोभयसामत्वमिति।

तथाच याज्ञवल्क्यः।

अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्॥

'अन्तर्जानु' जानुनोर्मध्ये हस्तौ कृत्वा, 'शुचौ' अशुचिद्रव्यासंस्पृष्टे, 'देशे' भुवि नोपानच्छयनासनादौ। 'उपविष्टः' आसीनः, न स्थितः, शयानः, प्रह्वोगच्छन्वा। 'प्राक्' प्राङ्मुखः। द्विजग्रहणात् स्त्रीशूद्रयो-र्नैते नियमा इति विज्ञायते। 'नित्यं' सर्वकालं, आश्रमान्तरस्थोऽपि।

शङ्खः।

अन्तर्जानु शुचौ देशे उपविश्यैन्द्रदिङ्मुखः।
उदङ्मुखो वा प्रयतो दिशस्त्वनवलोकयन्॥

गौतम-बौधायनौ।

प्राङ्मुख उदङ्मुखो वा शौचमारभेत्।

वसिष्ठः।

प्राग्वोदग्वासीन आचामेत्।

हारीतः।

पाणि-पादौ प्रक्षाल्योत्क्रम्य च नीविं प्राङ्मुख उदङ्मुखो वोपविश्याप: पिबेत् ।

विष्णु: ।

शुचौ देशे स्वासीनोऽन्तर्जानु: प्राङ्मुख उदङ्मुखो वा तन्मना: सुमनास्त्वाचामेत् ।

शङ्ख-लिखितौ ।

प्राङ्मुख उदङ्मुखो वा शुचौ देश उपविष्टोऽन्तर्जानुरुपस्पृशेत् ।

ईशान्यभिमुखत्वमप्याह हारीत: ।

ईशान्यभिमुखो भूत्वाप: स्पृशेत्तु यथाविधि ।

अत्र मनुष्य-देव-पितृकार्येषु दिग्व्यवस्थामाह पैठीनसि: ।

अथ प्रथमकल्प: । प्राङ्मुख उदङ्मुखो वोपविश्यान्तर्वाहुस्तौ कृत्वा शुद्धा आप: संगृह्य आमणिबन्धनात्पाणी प्रक्षाल्याभिमुखं ब्रह्मद्वारं मनुष्याणां प्राचीनञ्चैव देवानां पितॄणां दक्षिणं स्मृतं ।

'अभिमुखं ब्रह्मद्वारं' ध्रुवमण्डलाख्यं । "मण्डलस्यास्य पुच्छन्तु शिशुमाराकृतेर्ध्रुव: । मध्ये नारायणश्चेति ब्रह्मद्वारमिदञ्जगु:" इति गारुडपुराणेऽभिधानात् । ध्रुवमण्डले न चोत्तरा दिक् लक्ष्यते । अतश्चोदीची-प्राची-दक्षिणा मनुष्य-देव-पितॄणान्दिश: । मनुष्यादिकर्मसु तत्तद्दिगभिमुखेनाचान्तव्यमित्यर्थ: ।

देवलोऽपि ।

प्रथमं प्राङ्मुख: स्थित्वा पादौ प्रक्षालयेच्छनै: ।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुख: ॥
शिखाम्बद्धा वसित्वा च निर्णिक्ते वाससी शुभे ।

तूष्णीं भूत्वाप आचामेदकुप्यन्न विलोकयन्निति ॥

इत्याचमने दिङ्नियमः।

अथाचमने तीर्थनियमः।

तत्र व्यासः।

बाहू जान्वन्तरा कृत्वा तीर्थेन शुचिराचमेत्।

तारणाय पापप्रमोचनाय तिष्ठतीति तीर्थशब्देन कश्चित्पावनतमो देश उच्यते। तरत्यनेन तीर्थमिति क्वचिज्जलावतरणमार्गः। इह तूदकाधारे करतलैकदेशे स्तुत्यर्थं तीर्थशब्दप्रयोगः। अतः करविशेषतलैकदेशेनाचामेदित्यर्थः। पात्रादिनिराकरणार्थमेतत्।

अत्र विशेषमाह देवलः।

अथापः प्रथमात्तीर्थाद्दक्षिणात् त्रिः पिबेत्समं।

अशब्दमनवस्रावमवहिर्जान्वबुद्बुदं ॥

'प्रथमात्तीर्थात्' ब्रह्मतीर्थात्। 'दक्षिणात्' दक्षिणहस्तस्थितात्। 'त्रिः' वारत्रयं। 'समं' तुल्यकालं, अव्यवधानेनेत्यर्थः।

शङ्ख-लिखितौ।

ब्रह्मतीर्थेनाचामेत्।

विष्णुः।

ब्राह्मेण तीर्थेन त्रिःपीत्वा द्विः परिमृज्यात्।

ब्राह्मेणेति स्तुत्यर्थं ब्रह्मा देवतास्येति। न हि तीर्थस्य देवता सम्भवति। अहविःसूक्तरूपत्वात्। तद्रूपतान्तु केनचिद्धर्मेण शुद्धिहेतुत्वादिनाध्यारोप्य देवता तद्धितः। परिमृज्यान्मुखमितिशेषः।

बौधायनः।

शुचौ देश आसीनो दक्षिणं बाहुं जान्वन्तरा कृत्वा प्रक्षाल्य पादौ पाणी चामणिबन्धनात् ब्राह्मेण तीर्थेनाचामेत् ।

ब्राह्मतीर्थं लक्षयन्नाह ।

पैठीनसिः ।

अङ्गुष्ठमूलस्योत्तरतो रेखा ब्राह्मं तीर्थं त्रिराचामेत् ।

वसिष्ठः ।

प्रक्षाल्य पादौ पाणी चामणिबन्धनादङ्गुष्ठमूलस्योत्तरतो रेखा ब्राह्मं तीर्थं, तेन त्रिराचामेदशब्दवत् ।

प्राजापत्यतीर्थेनाप्याचमनमाह शङ्खः ।

प्राजापत्येन तीर्थेन त्रिःप्राश्नीयाज्जलं शुचिः ।

दैवतीर्थस्याप्याचमनाङ्गत्वमाह मनुः ।

ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ।

काय-त्रैदशकाभ्यां वा न पित्र्येण कदाचन ॥

विप्रग्रहणं क्षत्रियादेरप्युपलक्षणार्थं । "द्विजो नित्यमुपस्पृशेत्" इति स्मरणात् । नित्यकालं शौचार्थं कर्माङ्गत्वेन वा । कः प्रजापतिः स देवता अस्येति 'कायं' प्राजापत्यं । त्रिदशा देवास्ते देवा अस्येति 'त्रैदशकं' दैवं । त्रिदशशब्दाद्देवतार्थे कृते स्वार्थिकः कप्रत्ययः । कदाचनेति स्फोट-पिटकादिना ब्रह्मादितीर्थेष्वयोग्यतामापन्नेष्वपि 'पित्र्येण' पितृतीर्थेन, न आचामेत् ।

इत्याचमनतीर्थनियमः ।

अथाचमने गण्डूषसङ्ख्या ।

तत्र विष्णुपुराणे ।

निष्पादिताङ्घ्रिशौचस्तु पादावभ्युक्ष्य वै पुनः।
त्रिः पिवेत्सलिलं तेन तथा द्विः परिमार्जयेत्॥

तेन सोदकेन हस्तेन द्विरभ्यासेन परिमृज्यात्। परिमार्जनञ्चात्र ओष्ठश्लिष्टानामुदकानामपनयनं।

याज्ञवल्क्यः।

त्रिःप्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्।

'खानि' इन्द्रियच्छिद्राणि। अद्भिर्हस्तगृहीताभिः।

मनुः।

त्रिःप्राशयेदपः पूर्वं द्विरुन्मृज्यात्ततो मुखं।
खानि चैव स्पृशेदद्भिरात्मानं शिर एव च॥

'मुखम्' ओष्ठद्वयं। मुखशब्दस्यानेकदेशवृत्तित्वात्। मुख्यानामेव खानामेव स्पर्शविधिः मुखस्य प्रकृतत्वात्। 'आत्मानमिति हृदयं नाभिं वा निर्दिशति। उपनिषत्सु "अन्तर्हृदय आत्मानं पश्येत्" इति कथ्यते। अतो हृदयस्यायं स्पर्शः। क्षेत्रज्ञस्यात्मनो विभोरमूर्त्तस्य स्पर्शासम्भवात्। स्मर्य्यते च "नाभिमालभेतेति।

व्यासः।

त्रिःप्राशयेदपः पूर्वं द्विःप्रमृज्यात्ततो मुखं।
पादावभ्युक्ष्य मूर्द्धानमभ्युक्षेत्तदनन्तरं॥

अत्र विशेषमाह दक्षः।

अनेनैव विधानेन आचान्तः शुचितामियात्।
प्रक्षाल्य पादौ हस्तौ च त्रिःपिवेदम्बु वीक्षितं॥

अनेनैवेति वक्ष्यमाणस्याचमनविधेः परामर्शः। उत्तरकालमेव

तस्याभिधानात्। 'वीचितमिति दिवसाभिप्रायं। "रात्रावनीचितेनैव शुद्धिरुक्ता मनीषिणां" इति यमस्मरणात्।

विशेषान्तरमाह हारीतः।

अन्तरूर्वोररत्नीकृत्वा त्रिरपोहार्द्दं पिवेत्।

'अन्तः' मध्ये, 'ऊर्वोः' जानुनोः 'अरत्नी' हस्तौ, कृत्वा त्रिरपः 'हार्द्दं' हृदयसम्बन्धि यथा भवति तथा फुत्कारादिशब्दमन्तरेणैव, पिवेत्। अतएव बौधायनः।

शब्दमकुर्वंस्त्रिरपो हृदयङ्गमाः पिवेत्।

एतच्चोदकपानमुपविष्टेनैव कार्य्यम्।

तथाचापस्तम्बः।

आसीनस्त्रिराचामेत् हृदयङ्गमाभिरद्भिरिति।

त्रित्वेन सह वैकल्पिकं।

संख्यान्तरमाह प्रचेताः।

अनुष्णाभिरफेनाभिरशूद्राहृताभिरशब्दाभिस्त्रिश्चतुर्वाद्भिराचामेत्।

गौतमोपि।

शुचौ देशे आसिनो दक्षिणं बाहुं जान्वन्तरा कृत्वा यज्ञोपवीत्या-मणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयस्पृशस्त्रिश्चतुर्वाप आचामेत् पादौ चाभ्युक्षेत्।

'हृदयस्पृशः' हृदयङ्गमाः।

एतच्च संख्याद्वयं द्विजातिविषयमेव। स्त्री च शूद्रश्च सकृत्स्पृष्टा-भिरिति याज्ञवल्क्येन स्त्री-शूद्रयोः सकृत्त्वविधानात्।

उपस्पर्शन-परिमार्जने प्रकृत्य बौधायनेनाप्युक्तम्।

सकृदुभयं शूद्रस्य स्त्रियाश्चेति ।

उक्तञ्च वृद्धमनुना ।

त्रिराचामेदपः पूर्वं द्विःप्रमृज्यात्ततो मुखं ।
शारीरं शौचमन्विच्छन् स्त्री-शूद्रन्तु सकृत् सकृत् ॥

स्त्री-शूद्रमिति समाहारद्वन्द्वः ।

आचमने हस्तस्य संस्थानविशेष उक्तो भविष्यत्पुराणे ।

दक्षिणन्तु करं कृत्वा गोकर्णाकृतिवत्पुनः ।
त्रिःपिबेद्दक्षिणेनाम्बु द्विरास्यं परिमार्जयेत् ॥

दक्षिणं हस्तं गोकर्णाकृतिं कृत्वा त्रिरम्बु पिबेत् । दक्षिणेन हस्तेन द्विरास्यं परिमार्जयेदिति सम्बन्धः । पुनर्ग्रहणात् पूर्वं गोकर्णाकृतिना हस्तेनोदकं गृहीत्वा ततोऽङ्गुष्ठ-कनिष्ठे बहिःकृत्य पुनरपि गोकर्णाकृति-हस्तं कुर्यादिति गम्यते । कथितश्चाङ्गुष्ठकनिष्ठाबहिःकरणं परिमाण-प्रकरणे ।

हस्तस्य विशेषान्तरमप्याह मार्कण्डेयः ।

सपवित्रेण हस्तेन कुर्यादाचमनक्रियां ।
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टन्तु वर्जयेत् ॥

हस्तेनेत्येकवचनमविवक्षितं हस्तद्वयेऽपि पवित्रधारणस्य प्रशस्त-तमत्वात् ।

तथाच गोभिलः ।

उभयत्र स्थितैर्दर्भैः समाचमति यो द्विजः ।
सोमपानफलं तस्य भुक्त्वा यज्ञफलं लभेत् ॥

यत्तूक्तं वशिष्ठेन ।

वामहस्ते कुशान् कृत्वा समाचामति यो द्विजः ।
उपस्पृष्टं भवत्येव रुधिरेण मलेन चेति ॥

तत् केवलवामहस्तविषयं ।

इत्याचमने गण्डूषसंख्या ।

अथ द्वादशाङ्गस्पर्शनं ।

तत्र सम्वर्त्तः ।

परिमृज्य द्विरास्यन्तु द्वादशाङ्गानि चालभेत् ।

मुखं नासिकाद्वयं नेत्रद्वयं श्रोत्रद्वयं नाभिर्हृदयं मूर्द्धा बाहु-द्वयञ्चेति द्वादशाङ्गाणि । परिमार्जनञ्च त्रिःप्राशनानन्तरं कार्य्यं । तथा च शङ्ख-लिखितौ ।

त्रिःप्राश्य द्विरुन्मृज्य शिरश्चक्षुः श्रोत्रं घ्राणं हृदयं मूर्द्धानञ्चालभेत् ।

परिमार्जने सङ्ख्यान्तरमप्याह बौधायनः ।

त्रिःपरिमृज्यात् द्विरित्येके ।

आपस्तम्बोऽपि ।

त्रिरोष्ठौ परिमृज्याद्द्विरित्येके ।

ओष्ठशब्देनात्र तत्समीपस्थः सलोमकः प्रदेशोविवक्षितः ।

अथर्व्ववेदेतिहास-पुराणानि ध्यायन् ब्राह्मेण तीर्थेन ओष्ठयोः सलोमदेशमुन्मृज्यादिति कण्वस्मरणात् । ब्राह्मं तीर्थमङ्गुष्ठमूलं । देवलः ।

द्विस्तथाङ्गुष्ठमूलेन परिमृज्यात्ततो मुखं ।

एतच्चोष्ठयोरलोमकप्रदेशे यथा हस्तस्पर्शो न भवति तथा विधेयं ।

अतएव दक्षः।

संवृत्याङ्गुष्ठमूलेन द्विःप्रमृज्यात्ततो मुखं।

नाग्राङ्गुल्या न पृष्ठैर्वा परिमृज्यात्कदाचन[१]॥

संमृज्य निर्लोमकमोष्ठदेशमिति शेषः। एतच्च क्षालितपाणिना कर्त्तव्यं।

अतएव पैठीनसिः।

अङ्गुष्ठमूलेन द्विःपरिमृज्यान्निर्लेपपाणिः कृतशौचः।

'निर्लेपपाणिः' क्षालनादपनीताचमनोदकलेपपाणिः।

परिमार्जनानन्तरं खस्पर्शनं कुर्यात्तदाह शङ्खः।

द्विःप्रमृज्यान्मुखं पश्चात् खान्यन्ते समुपस्पृशेत्।

खानि च मुखस्थितान्येव स्पृशेदित्याह गौतमः।

खानि चोपस्पृशेच्छीर्षण्यानि मूर्द्धनि च दद्यात्।

अप इति शेषः।

तानि च जलेन स्पृशेदित्याह विष्णुः।

खान्यद्भिर्मूर्द्धानं हृदयञ्च स्पृशेत्।

वशिष्ठोऽपि।

द्विःपरिमृज्यात् खान्यद्भिः संस्पृशेत् मूर्द्धन्यपो निनयेत्सव्ये पाणौ च।

अत्रैवं क्रमः। त्रिरपः पीत्वा प्रक्षालितपाणिर्द्विरोष्ठौ परिमृज्य दक्षिणहस्तेन सव्यपाणौ जलं निषिच्य शेषेण पादौ मूर्द्धानञ्च प्रोक्ष्य सव्यपाणिस्थितमुदकं गृहीत्वा वक्ष्यमाणप्रकारेण मुखादीनि संस्पृश्यान्तेऽपः स्पृशेत्।

---

(१) कथञ्चनेति ग०।

तदाहापस्तम्बः ।

दक्षिणेन पाणिना सव्यं प्रोक्ष्य पादौ शिरश्चेन्द्रियाण्युपस्पृशेच्चक्षुषी नासिका-श्रोत्रे चेत्यथाप उपस्पृशेत् ।

वैयाघ्रपादपि ।

श्रोत्रस्थानानि सर्वाणि स्पृष्ट्वा चैव जलं स्पृशेत् ।
आचामन् ब्राह्मणो नित्यमित्याह भगवान् भृगुः ॥

व्यासः ।

अक्षिणी नासिके कर्णावोष्ठौ च तदनन्तरं ।
ततः स्पृशेन्नाभिदेशं पुनरापश्च संस्पृशेत् ॥
संस्पर्शनान्ते पुनः सव्यपाणिं प्रोक्षयेदित्याह बौधायनः ।

खान्यद्भिः संस्पृश्य पादौ नाभिं शिरः सव्यं पाणिमन्ततः ।

प्रोक्षयेदिति शेषः ।

पैठीनसिस्तु पादप्रोक्षणपूर्वकं सव्यपाणिप्रोक्षणमाह ।

तत्र स्रोकः ।

नासिका चक्षुषी श्रोत्रे मुखं नाभिं ततः शिरः ।
स्पृष्ट्वा प्राणान् यथासंख्यं पादौ प्रोक्ष्य ततः शुचिः ॥

संस्पर्शनञ्च सकृत्सकृद्विधेयमित्याह हारीतः ।

द्विःपरिमृज्योष्ठौ सकृन्मूर्द्धानञ्चक्षुः श्रोत्रे नासिकां हृदयं पादौ चाभ्युक्ष्योपस्पृश्य प्रयतो भवति नाप्रयताय हव्यं कव्यं न स्वाध्यायं ।

संख्यान्तरमप्याहापस्तम्बः ।

सकृदुपस्पृशेत् द्विरित्येके ।

कामेनाविशेषेण संस्पर्शनात् पूर्वं कर्त्तव्यान्तरमाह हारीतः।

ज्ञातिश्रैष्ठ्यकामोऽन्नाद्यकामो वा दक्षिणचरणाङ्गुष्ठे पाणिमवस्थाप्य प्राणानालभ्य नाभिमुपस्पृशेत्। पाणिमाचमनोदकसंपृक्तं।

ओष्ठौ परिमृज्य प्रथमं मुखस्पर्शं कुर्यादित्याह भार्गवः।

ओष्ठौ परिमृज्य ततो मुखं परिमृशेदग्निं ध्यायन्।

आस्यस्पर्शनानन्तरमपि ध्यानमाह व्याघ्रपात्।

आस्यं स्पृष्ट्वा कराग्रेण तोयं स्पृष्ट्वा समाहितः।
संस्मृत्य पद्मनाभन्तु विप्रः सम्यग्विशुध्यति॥

अत्र सोङ्कारं यज्ञेशं मनसा स्मरेदिति नारायणः।

संस्पर्शनं चाङ्गुलीभिर्विधेयमित्याह देवलः।

ततः कृत्वाङ्गुलिस्पर्शं दृक्घ्राण-श्रोत्र-नाभिषु।
मूर्द्धानञ्चरणौ चाद्भिः संप्रोक्ष्याथ शुचिर्भवेत्॥

स्थानविशेषेणाङ्गुलीविशेषमाह दक्षः।

संहत्य तिसृभिः पूर्वं आस्यमेवमुपस्पृशेत्।
अङ्गुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरं॥
अङ्गुष्ठानामिकाभ्यान्तु चक्षुः श्रोत्रं पुनः पुनः।
नाभिं कनिष्ठाङ्गुष्ठेन हृदयन्तु तलेन वै।
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत्॥

शङ्खस्तु।

पूर्वमेव मूर्द्धिस्पर्शनमङ्गुलीनां स्थानान्तरं क्रमान्तरञ्चाह।

ततोऽङ्गुलिचतुष्केण स्पृशेन्मूर्द्धानमादितः।
मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं पृथक्॥

अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नासापुटे क्रमात् ।
अङ्गुष्ठेन कनीयस्या कर्णौ संयोगतः स्पृशेत् ।
तर्जन्यङ्गुष्ठयोगेन नाभिं हृदि तलं न्यसेत् ॥

'तलं' हस्तमध्यं, हृदये न्यसेत् ।

पैठीनसिस्तु प्रकारान्तरेण सार्थवादसंस्पर्शनमाह ।

अङ्गुष्ठेन प्रदेशिन्या च नासिके स्पृशेदङ्गुष्ठानामिकाभ्याञ्च नेत्रे कनिष्ठिकाङ्गुष्ठाभ्याञ्च श्रोत्रे मध्यमिकया मुखमङ्गुष्ठेन नाभिं सर्वाभिः शिरः, प्रदेशिनी वायुरनामिका सूर्य्यः कनीनिका मघवान्मध्यमिका प्रजापतिरग्निरङ्गुष्ठस्तस्मात्तेनैव सह सर्वाणि स्थानानि स्पृशति वायुः सूर्य्यः इन्द्रः प्रजापतिरग्निरित्येता देवता एनं पुनीयुरिति ।

वृद्धशङ्खस्त्वन्यथा संस्पर्शनमाह ।

तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयं ।
अङ्गुष्ठमध्यायोगेन स्पृशेन्नेत्रद्वयं ततः(१) ॥
अङ्गुष्ठानामिकया च योगेन श्रवणौ स्पृशेत् ।
कनिष्ठाङ्गुष्ठयोगेन स्पृशेत् स्कन्धद्वयं ततः ॥
सर्वासामेव योगेन नाभिञ्च हृदयं तथा ।
संस्पृशेच्च तथा शीर्षं अयमाचमने विधिः ॥

इह येषां शाखिनामङ्गस्पर्शनं नाम्नातं तेषां विकल्प एव। येषान्तु तदुक्तं तेषामविरोधात् वचनान्तरानुसाराच्च अङ्गान्तरोपस्पर्शनमप्यस्तीत्यवगन्तव्यं ।

---

(१) पुनरिति ख० ।

अत्रार्थवादमाह स एव ।

त्रिःप्राश्नीयाद्यदम्भस्तु प्रीतास्तेनास्य देवताः ।
ब्रह्मा विष्णुश्च रुद्रश्च भवन्तीत्यनुशुश्रुमः ॥
गङ्गा च यमुना चैव प्रीयेते परिमार्जनात् ।
नासत्य-दस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥
स्पृष्टे लोचनयुग्मे तु प्रीयेते शशि-भास्करौ ।
कर्णयुग्मे तथा स्पृष्टे प्रीयेते चानिलानलौ ॥
स्कन्धयोः स्पर्शनादेव प्रीयन्ते सर्वपर्वताः ।
नाभिसंस्पर्शनान्नागाः प्रीयन्ते चास्य नित्यशः ॥
संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ।
मूर्द्धसंस्पर्शनादस्य प्रीतस्तु पुरुषो भवेत् ॥

एवमाचमनं कुर्वतः फलमाह वैयाघ्रपात् ।

य एवं ब्राह्मणो नित्यमुपस्पर्शनमाचरेत् ।
ब्रह्मादिस्तम्बपर्यन्तं जगत् स परितर्पयेत् ॥

इति द्वादशाङ्गस्पर्शनं ।

इत्याचमनप्रकरणं ।

अथ नियमाः ।

तत्र निमन्त्रितनियमस्तावत् ।

आह कात्यायनः ।

अनिन्दितेनामन्त्रितो नापक्रामेत् ।

'अनिन्दितेन' भोज्यान्नेन, 'निमन्त्रितो' निमन्त्र्यमाणः । 'नापक्रामेत्' निमन्त्रणं नेच्छेत् । किन्तु तदभ्युपगच्छेदेव ।

तथा चाङ्गिरसां दूततया समागतेनाग्निना तत्परिस्वङ्गिनामादित्यानां वरणे स्वीकृते सति क्रुद्धेष्वङ्गिरःस्वग्नेः प्रति वचनं शतपथे श्रूयते । सद्यो वा चानिन्द्या वै मावृषत सोऽनिन्द्यैर्वृतो नाशकमपक्रमीतुमिति तस्माद्ध्यानिन्द्य वृतो नापक्रामेदिति ।

अनिन्द्यामन्त्रणमवश्यमभ्युगम्यमित्याह देवलः ।

कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रणे कृते ।

'अनिन्द्यामन्त्रणे कृते' तेषां निमन्त्रितानां काममस्त्वित्येवं, 'प्रतिश्रवः' अङ्गीकार एव युक्त इत्यर्थः । एतच्च सामर्थ्ये सतीति वेदितव्यं ।

तथाच गौतमः ।

अनिन्दितेनामन्त्रितेन शक्तेन न प्रत्याख्यानं कर्त्तव्यमिति ।

अनेनार्थानिन्द्यामन्त्रणे भोक्तुमसामर्थ्ये च प्रत्याख्यानं कर्त्तव्यमित्यवगम्यते । अङ्गीकृतनिमन्त्रणस्याङ्गीकारादूर्द्ध्वमपि भोक्तुमसामर्थ्ये सत्यतिक्रमो न युक्त इत्यर्थात् ज्ञापयितुमाह स एव ।

विधिवत् केतनं प्रतिगृह्य शक्तः सन्नापक्रामेदिति ।

'केतनं प्रतिगृह्य' आमन्त्रणमङ्गीकृत्येत्यर्थः ।

अतएव ।

आमन्त्रितस्तु विधिवत् ब्राह्मणो हव्य-कव्ययोः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत् ॥
ब्राह्मणञ्च मुखं कृत्वा देवताः पितृभिः सह ।
यदन्नं समुपाश्नन्ति तस्मात्तु न व्यतिक्रमेत् ॥

इति यमवचनमपि अनिन्द्यामन्त्रितशक्तविषयमेवेति व्याख्येयं ।

यस्तु निमन्त्रणमङ्गीकृत्य भोजनसमर्थोऽपि तत्परित्यजति तं प्रत्याह मनुः ।

केतितस्तु यथान्यायं हव्ये कव्ये द्विजोत्तमः ।
कथञ्चिदप्यतिक्रामन् पापः शूकरतां व्रजेत् ॥

'केतितः' उपनिमन्त्रितः। निमन्त्रणमभ्युपगम्य यद्यतिक्रामेत् तदा शूकरः स्यात्। 'कथञ्चित्' कामादिस्त्रत्य वा। अन्ये त्वाहुः, प्रार्थ्यमानस्यानभ्युपगम एवातिक्रम इति। तच्च मेधातिथिना दूषणमुक्तं। तथाहि लिप्सया हि प्रवृत्तिः श्राद्धे न पुनः शास्त्रतः। अत्र सत्यां लिप्सायां यदि नाङ्गीकरोति को दोष इति। तदेतच्छतपथीयलिङ्गदर्शनविरुद्धमित्युपेक्षणीयं।

यमः।

आमन्त्रितस्तु यो विप्रो भोक्तुमन्यत्र गच्छति।
नरकाणां शतं गत्वा चाण्डालेष्वभिजायते ॥

नारायणः ।

आमन्त्रितस्तु यः श्राद्धे कुर्व्वीतान्यस्य तु क्षणं ।
संवत्सरं कृतं पुण्यं तस्य नश्यति दुर्मतेः ॥

कूर्मपुराणे।

आमन्त्रितो ब्राह्मणो वै योऽन्यस्मिन् कुरुते क्षणं।
स याति नरकं घोरं शूकरत्वं प्रयाति च ॥

मत्स्यपुराणे ।

आमन्त्रितस्तु गुणिना निर्धनेनापि च द्विजाः ।
नान्यमिष्टान्नलोभेन तमतिक्रमयन्ति हि।

निमन्त्रितास्तु येनादौ तस्माद्गृह्णन्ति नान्यतः ॥

तदेतत्सर्वमाढ्यविषयं । "विद्यमानधनोविद्वान् भोज्यान्नेन निमन्त्रितः । कथञ्चिदप्यतिक्रामन्पापः शूकरतां व्रजेत्" इति षट्त्रिंशन्मतेऽभिधानात् । अतोऽत्यन्तनिर्धनस्य बहुदक्षिणादिलाभलोभात् कदाचिदतिक्रमेऽपि न दोषोऽस्तीति गम्यते ।

यस्तु गृहीतनिमन्त्रणोन्यस्मादपि प्रतिगृह्णाति तं प्रति निषेधमाह कात्यायनः ।

आमन्त्रितोन्यदन्नं न प्रतिगृह्णीयात् ।

'आमन्त्रितः' पूर्वमन्येन निमन्त्रितः, अन्यदीयादन्नादन्यत् पश्चान्निमन्त्रकस्यान्नं श्राद्धोपक्लृप्तं तण्डुलादिरूपमप्यन्नं न प्रतिगृह्णीयादित्युपाध्यायकर्क्कों व्याख्यातवान् । अन्ये त्वेवं व्याचक्षते । यच्छ्राद्धार्थं निमन्त्रितस्तदर्थादन्नादन्यदाममपि श्राद्धव्यतिरेकेणापि केनचिद्दीयमानं तच्छ्राद्धोपलक्षिताहोरात्रपर्यन्तं न प्रतिगृह्णीयादिति ।

यः पुनः प्रतिगृह्णाति तस्य दोषमाह देवलः ।

पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहं ।
भुक्ताहारोऽथवा भुङ्क्ते सुकृतं तस्य नश्यति ॥

'निमन्त्रितः' पूर्व्वं भुक्ताहारः, यदि तस्मिन्नहोरात्रे पुनर्भुङ्क्ते तदा तस्य पूर्व्वकृतं सुकृतं नश्यति ।

यस्त्वामन्त्रितः कृताह्वानोप्यनागमनेन कुतपादिकालातिपत्तिं करोति तस्य दोष आदित्यपुराणे दर्शितः ।

आमन्त्रितश्चिरं नैव कुर्याद्विप्रः कदाचन ।
देवतानां पितॄणाञ्च दातुरन्यस्य चैव हि ॥

देवलः।

तस्माद्दोषान् परित्यज्य त्रीनेतानपरानपि।

ब्रह्मचारी शुचिर्भूत्वा श्राद्धं भुञ्जीत शक्तिमान्॥

'त्रीन्' स्त्रीसम्भोगान्यप्रतिग्रह-पुनर्भोजनाख्यान्।

तथा।

श्राद्धे निमन्त्रितो विप्रो वृषलीं यदि गच्छति।

दातुः पापं समग्रं यत् त्रयात्तत्प्रतिपद्यते॥

यमोशनसौ।

आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते।

भवन्ति पितरस्तस्य तं मासं शुक्रभोजनाः॥

मनुः।

आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते।

दातुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते॥

वृषलीशब्दः स्त्रीमात्रोपलक्षणार्थः। सामान्येन ब्रह्मचर्य्यस्य विधानात्। वृषस्यन्ती वृषं भर्त्तारं लाति स्वीकुरुत इति व्युत्पत्त्या ब्राह्मण्यपि वृषल्येव। तेनायमर्थः। निमन्त्रणमङ्गीकृत्य तदहर्यः स्त्रिया सह मोदते तस्यायं दोषः। 'मोदनं' हर्षोत्पत्तिः। तेन संलापालिङ्गनाद्यपि न कर्त्तव्यं। 'दातुः' श्राद्धकर्तुः, 'यद्दुष्कृतं' पापं यत्किञ्चित्, 'तत्सर्वं', तस्मिन् संक्रामति। अभीष्टफलयोगमात्रमनेन च निर्दिश्यतेऽन्यथा यत्र दाता पुण्यकृत्तत्र न कश्चिद्दोषः स्यात्।

ब्रह्मवैवर्त्त-वायुपुराणयोः।

आमन्त्रितस्तु यः श्राद्धे योषितं सेवते नरः[1] ।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते ॥

कूर्म्मपुराणे ।

श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति ।
ब्रह्महत्यामवाप्नोति तिर्य्यग्योनौ च जायते ॥

अत्र च मैथुनं स्वभार्य्यायामृतुमत्यामपि देवरादिना नियुक्तेनापि न कर्त्तव्यं। तदाह वृद्धमनुः ।

ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् ।
तत्र गच्छन् समाप्नोति ह्यनिष्टं फलमेव तु ॥

नियुक्त इत्यनेन रागतः प्रवृत्त्यभावेऽपि दोष इत्युक्तं भवति ।

कूर्म्मपुराणे ।

निमन्त्रितस्तु योविप्रो ह्यध्वानं याति दुर्म्मतिः ।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः ॥

यमः ।

आमन्त्रितस्तु यः श्राद्धे अध्वानन्तूपपद्यते ।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः ॥

उशनाः ।

आमन्त्रितस्तु यः श्राद्धे अध्वानं वहति द्विजः ।
भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः ॥

कूर्म्मपुराणे ।

---

(१) द्विज इति ग० ।

आमन्त्रितस्तु यः श्राद्धे कुर्य्याद्वै कलहं द्विजः ।
भवन्ति पितरस्तस्य तं मासं मलभोजनाः ॥

यमः ।

आमन्त्रितस्तु यः श्राद्धे कलहं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तं मासं कृच्छ्रभोजनाः ॥

उशनाः ।

आमन्त्रितस्तु यः श्राद्धे कलहं कुरुते द्विजः ।
पितरस्तस्य तं मासं दुःखमृच्छन्ति दारुणं ॥

यमोशनसौ ।

आमन्त्रितस्तु यः श्राद्धे भारमुद्वहति द्विजः ।
पितरस्तस्य तं मासम्भवन्ति खेदभोजनाः ॥
आमन्त्रितस्तु यः श्राद्धे हिंसां वै कुरुते द्विजः ।
तं मासं पितरस्तस्य भवन्ति रुधिराशनाः ॥
आमन्त्रितस्तु यः श्राद्धे आयासं कुरुते द्विजः ।
भवन्ति पितरस्तस्य तं मासं पित्तभोजनाः ॥

उशनाः ।

आमन्त्रितस्तु यः श्राद्धे द्यूतं संसेवते द्विजः ।
भवन्ति पितरस्तस्य तं मासं मलभोजनाः ॥
तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेत् द्विजः ।
अक्रोधनः शौचपरः सत्यवादी जितेन्द्रियः ॥

यमः ।

अहिंसा सत्यमक्रोधो दूरे चागमनक्रिया ।

अभारोद्वहनं शान्तिः श्राद्धेऽस्योपासनाविधिः ॥

दूरे सीम्नः पुरस्तादगमनविधानात् सीममध्ये गच्छतो न दोष इति ।

तथा च ब्रह्माण्डपुराणम् ।

न सीमानमतिक्रामेच्छ्राद्धार्थं वै निमन्त्रितः ।
पर्य्यटन् सीममध्ये तु कदाचिन्न प्रदुष्यतीति ॥

यमः ।

पुनर्भोजनमध्वानं भाराध्ययनमैथुनं ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुग्वर्जयेत् सदा ॥

होमं स्वयं न कुर्यात् अन्येन तु कारयेत् ।

यदाह कात्यायनः ।

सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ।
एवमादिनिमित्तेषु हावयेदिति योजयेत् ॥

हावयेदिति यद्गोभिलादिभिरुक्तं तदेवमादिनिमित्तेषु योजयेदित्यर्थः ।

होतुरन्यस्यालाभे भविष्यत्पुराणे उक्तं ।

दग्धशक्तः पिवेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

इति निमन्त्रितनियमाः ।

अथ श्राद्धकर्त्तुर्नियमाः ।

आदित्यपुराणे ।

तदहस्तु शुचिर्भूत्वाक्रोधनोऽत्वरितो भवेत् ।

अप्रमत्तः सत्यवादी यजमानोऽथ वर्जयेत् ॥
अध्वानं मैथुनञ्चैव श्रमं स्वाध्यायमेव च।

'तदहः' तस्मिन् श्राद्धोपलक्षिते काले, स च निमन्त्रणाप्रभृति श्राद्धभुक्तान्नपरिणामावधिः कालोऽहःशब्दार्थः। "क्रीतः प्रार्थयन् भक्त्या विप्रानामन्त्र्य यत्नतः। श्राद्धभुक्तान्नपाकान्तं नियमानाचरेत्ततः॥" इति लेगाक्षिस्मरणात्।

'शुचिः' स्नानादिभिः शुद्धदेहः। 'अक्रोधनः' क्रोधवर्जितः। उपलक्षणञ्चैतन्मात्सर्य्य-दम्भादीनां मनोदोषाणां। 'अत्वरितः' द्रुतकारित्वहीनः। त्वरायां हि कदाचित् यथावत्कार्य्यानिष्पत्तिः स्यात्। 'अप्रमत्तः' अनवधानविधुरः। प्रमाणवत्पदार्थविषयो लक्षणोपेतश्च शब्दः 'सत्यः' तद्वदनशीलः 'सत्यवादी'। अध्वशब्देन लक्षणया दूराध्वगमनमवधीयते। 'मैथुनं' स्त्रीसम्भोगः। 'श्रमः' भारोद्वहनादिजनितः क्लेशः। स्वाध्यायशब्देन साङ्गस्य वेदस्याध्ययनमध्यापनञ्च विवक्षितं। कूर्म्मपुराणे।

अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः।
भारमैथुनमध्वानं श्राद्धकृद्वर्ज्जयेज्जपं॥

'अत्वरः' त्वराशून्यः। 'अप्रमत्तः' अप्रमादी। 'जपः' स्वाध्यायाध्ययनं। वृद्धमनुः।

निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरं।
प्रमत्तताञ्च स्वाध्यायं क्रोधाशौचं तथानृतं॥

'क्षुरं' क्षुरकर्म।

एतच्च नखनिकृन्तनादेरप्युपलक्षणं।

जावालः ।

ताम्बूलं दन्तकाष्ठञ्च स्नेहस्नानमभोजनं ।

रत्यौषधपरान्नानि श्राद्धकर्त्ता तु वर्जयेत् ॥

श्राद्धं प्रकृत्य हारीतः ।

त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरं ।

देवलः ।

अक्रोधो निर्वृतः स्वस्थः श्रद्धावानत्वरः शुचिः ।

समाहितमनाः श्राद्धक्रियायामसकृद्भवेत् ॥

पैठीनसिः ।

श्राद्धे सत्यञ्चाक्रोधञ्च शौचञ्चात्वराञ्च प्रशंसन्ति ।

विष्णुः ।

कोपं परिहरेन्नास्रु पातयेन्न त्वरां कुर्यात् ।

उशनाः ।

न त्वरया न क्रोधेन कुर्वीत ।

वराहपुराणे ।

दन्तकाष्ठञ्च विसृजेद्ब्रह्मचारी शुचिर्भवेत् ।

वायुपुराणे ।

न दीनो नापि वा क्रुद्धो न चैवान्यमना नरः ।

एकाग्रमाधाय मनः श्राद्धं कुर्यात्सदा बुधः ॥

निमन्त्रितब्राह्मणपरित्यागेन ब्राह्मणान्तरनिमन्त्रणप्रतिषेधः

कूर्मपुराणे ।

आमन्त्रयित्वा यो मोहादन्यञ्चामन्त्रयेद्द्विजः ।

स तस्मादधिकं पापी विष्ठाकीटोऽभिजायते ॥

यो ब्राह्मणोऽन्येन निमन्त्रितोऽन्यस्मै क्षणं कुरुते तस्माद्ब्राह्मणात्पूर्वश्लोकोक्तादुक्तलक्षणो यजमानोऽधिकं पापीत्यर्थः ।

दोषान्तरमाह नारायणः ।

केतनं कारयित्वा तु निवारयति दुर्मतिः ।
ब्रह्मवध्यामवाप्नोति शूद्रयोनौ च जायते ॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतः शुचिः ।
यतिचान्द्रायणं कृत्वा तस्मात्पापात् प्रमुच्यते ॥

'एनः' पापं । यतिचान्द्रायणं नाम चान्द्रायणविशेषः । तदेतदङ्गीकृतकेतनस्य भोजनयोग्यस्य निराकरणे सति द्रष्टव्यं ।

यमः ।

आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजयेत् ।
अतिकृच्छ्रासु घोरासु तिर्य्यग्योनिषु जायते ॥

हारीतः ।

दैवे वा यदि वा पित्र्ये निमन्त्र्य ब्राह्मणं यदि ।
तर्पयेन्न यथान्यायं स तत्तस्य फलं हरेत् ॥
प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनञ्च यत्नतः ।
तर्पयित्वा विशेषेण सर्वं तत्फलमाप्नुयात् ॥

गौतमस्तु श्राद्धकर्त्तुर्वृषलीगमने दोषाधिक्यमाह ।

सद्यः श्राद्धी शूद्रातल्पगस्तत्पुरुषे मासं नयते पितॄन् ।

श्राद्धं करिष्यमाणं कृतं वास्य विद्यत इति 'श्राद्धी' दाता । 'सद्यः' तत्क्षणमारभ्य, मासं नयतीत्यर्थः ।

निमन्त्रणप्रभृति श्राद्धकर्मसमाप्तिपर्यन्तं श्राद्धकर्तुर्निराहारत्वमाह्यापस्तम्बः ।

आरब्धे चाभोजनमासमापनादिति ।

निमन्त्रणदिने तु भोजननियममाह जातूकर्णः ।

निरामिषं सकृद्भुक्त्वा भुक्तसर्वजने गृहे ।
निमन्त्रयीत पूर्वेद्युरुपगम्य द्विजोत्तमान् ॥

एतेषां नियमानामवश्यकार्यत्वमुक्तमग्निपुराणे ।

अमैथुनादयः सर्वे नियमाः श्राद्धकारिणा ।
अप्रमत्तेन कर्त्तव्याः प्रमाद्य निरयं व्रजेत् ॥

गुरुतरकार्याद्युपनिपाते तु स्वयमपारयन् यदि कदाचित्पुत्र-शिष्यर्त्विगादिनान्येन श्राद्धं कारयेत् तदानेन यजमानेन चेत्युभाभ्यामपि ब्रह्मचर्यादिनियमा यथावदनुष्ठेयाः ।

तदुक्तं वाराहपुराणे ।

न शक्नोति स्वयं कर्तुं यदा ह्यनवकाशतः ।
श्राद्धं शिष्येण पुत्रेण तदान्येनापि कारयेत् ॥
नियमानाचरेत्सोऽपि विहितांश्च वसुन्धरे ।
यजमानोपि तान् सर्वानाचरेत् सुसमाहितः ॥
ब्रह्मचर्यादिभिर्भूरिनियमैः श्राद्धमक्षयं ।
अन्यथा क्रियमाणन्तु मोघमेव न संशयः ॥

इति श्राद्धकर्त्तुर्नियमाः ।

अथोभयनियमाः ।

तत्र हारीतः ।

आमन्त्रिताः आमन्त्रयिता च शुचयस्तां रात्रिं वसेयुः ।

निमन्त्रणानन्तरं शातातपः ।

वसेत्तु प्रयतो नित्यं सह विप्रैः कृतव्रतः ।

ब्राह्ममार्कण्डेय-नागरखण्डेषु ।

तैश्च संयमिभिर्भाव्यं यस्य श्राद्धं करिष्यति ।

मनुर्यमश्च ।

निमन्त्रितो द्विजः पित्र्ये नियतात्मा भवेत्सदा ।

न च छन्दांस्यधीयीत यस्य श्राद्धञ्च तद्भवेत् ॥

पित्र्ये श्राद्धे निमन्त्रितो नियतात्मा भवेत् संयतात्मा ब्रह्मचर्यं परिरक्षेत् । अन्यांश्च यम-नियमाननुतिष्ठेत् । अत्र स्नातकव्रतादीनां पुरुषव्रतादीनां नृत्यगीतादिप्रतिषेधानां कर्माङ्गता विधीयत इति मेधातिथिः । तथा कर्त्तव्यं श्राद्धकृता यथासौ ब्राह्मणो निमन्त्रणात् प्रभृति संयतेन्द्रियो भवति अन्यथा श्राद्धं दुष्येत । न च 'छन्दांसि' वेदान्, अधीयीत वाचा वेदाक्षरोच्चारणमध्ययनं । जपस्तु मन्त्रोपासनादावप्रतिसिद्धः । यस्य च तत्कर्त्तव्यं श्राद्धं भवेत् सोऽपि नियतात्मा भवेदिति योजना । अतो भोक्तुः कर्त्तुश्च निमन्त्रणात्प्रभृति तुल्यो नियमोऽनध्ययनञ्च ।

कात्यायनः ।

तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्व-मैथुन-श्रम-स्वाध्यायांश्च वर्ज्जयेदावाहनादि वाग्यत आोपस्पर्शनादामन्त्रितांश्चैवमिति ।

'आवाहनादि' आवाहनप्रभृति, उपस्पर्शनपर्यन्तं यजमानः 'वाग्यतः' मौनी स्यादिति । 'आमन्त्रितांश्चैवमिति' आमन्त्रिता ब्राह्मणाश्चाप्येवं शुचित्वादि-वाग्यमादिनियमवन्तो भवेयुः ।

कूर्मपुराणे ।

तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्‌द्विजः ।
अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ॥

आदित्यपुराणे ।

तां निशां ब्रह्मचारी स्याच्छ्राद्धकृच्छ्राद्धकैः सह ।
अन्यथा वर्त्तमानौ तौ स्यातां निरयगामिनौ ॥

पाद्म-मात्स्ययोः ।

पुनर्भोजनमध्वानम्भारमायास-मैथुनं ।
श्राद्धकृच्छ्राद्धभुक् चैव सर्वमेतद्विवर्जयेत् ।
स्वयञ्च कलहञ्चैव दिवास्वापन्तथैव च ॥

विष्णुपुराणे ।

ततः क्रोधव्यवायादि नायासञ्च द्विजैः सह ।
यजमानो न कुर्वीत दोषस्तत्र महानयं ॥

अत्रादिशब्देन हिंसा-द्यूतानृतादीनि गृह्यन्ते ।

तथा श्राद्धे नियुक्तो वा भोजयित्वा नियुज्य च ।
व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन् ॥

'नियुक्तः' निमन्त्रितो ब्राह्मणः, श्राद्धभोजनात्प्राक् भुक्त्वा श्राद्ध-भोजनोत्तरकालं वा यदि 'व्यवायी' मैथुनकर्त्ता, स्यात्तदासौ स्वपितॄन् रेतोगर्त्ते मज्जयेत्। एवं यजमानोपि 'नियुज्य' निमन्त्रणं कृत्वा ब्राह्मणभोजनात् पूर्वं, तथा 'भोजयित्वा' ब्राह्मणभोजनानन्तरमपि भुक्तान्नपरिणामपर्यन्तं यदि 'व्यवायी' स्यात्तदा सोप्युक्तदोषं प्राप्नुयात्। तथा च प्रचेताः ।

स्यादन्नपरिणामान्तं ब्रह्मचर्यं द्वयोस्ततः।

तत इति निमन्त्रणात् प्रभृतीत्यर्थः। ब्रह्मचर्य्यग्रहणं द्वयोर्निमन्त्रित-यजमानयोर्विहितनियमोपलक्षणार्थं, "भुक्तान्नपरिणामान्तं नियमान्न विवर्जयेत्। निषिद्धं कुर्वतां दोषास्तद्वद्वैधमकुर्वतां" इति बृहस्पतिस्मरणात्।

ब्रह्म:।

निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः।
श्राद्धं दत्त्वा च भुक्त्वा च युक्तः स्यान्महतैनसा॥

नागरखण्डे।

श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं योऽनुतिष्ठति(१)।
पितरस्तस्य तं मासं तस्मिन् रेतसि शेरते॥
गत्वा तु योषितं श्राद्धे यो भुङ्क्ते यस्तु गच्छति।
रेतोमूत्रकृताहारास्तं मासं पितरस्तयोः॥

ब्रह्मवैवर्त्त-वायुपुराणयोः।

श्राद्धदाता च भोक्ता च मैथुनं यदि गच्छतः।
पितरस्तु तयोर्मासं रेतोऽश्नन्ति न संशयः॥

उभयोर्नियमाचरणे हेतुमाह हारीतः।

पूर्वेद्युरामन्त्रितान्विप्रान् पितरः संविशन्ति ह।
यजमानञ्च तां रात्रिं वसेयुर्नियतास्ततः॥

इत्युभयनियमाः।

अथ श्राद्धभोक्तृनियमाः।

---

(१) योऽनुगच्छतीति ख०।

तत्र प्रचेताः ।

पीलापोशानमश्नीयात् पात्रे दत्तमगर्हितं ।

सर्व्वेन्द्रियाणां चापल्यं न कुर्यात् पाणि-पादयोः ॥

इन्द्रियादिषु चापल्यं भोजनार्थव्यापाराद्भ्यधिकव्यापारः ।

मनुः ।

अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंस्तेव वाग्यताः ।

नच द्विजातयोब्रूयुर्दात्रा पृष्टा हविर्गुणान् ॥

ईषदुष्णम् 'अत्युष्णं'। उष्णत्वेऽपि यथा मुखे सुखस्पर्शं भवति । यस्योष्णस्य भोजनमुचितं तत्रैवेदमुष्णताविधानं न तु दध्योदनादेस्तौष्ण्यं व्याधिकरमप्रीतिकरं च। तादृशस्य च प्रदाने हर्षयेत् ब्राह्मणानिति विरुध्यते । उष्णभोजनविधानाच्च न सर्वमन्नं सकृत्परिवेष्टव्यं । तथा हि बहुभोजिनः शीतलीभवेदन्नं तस्मात् पूर्वपरिविष्टे भुक्ते पुनरन्यद्दद्यात्। न च भुञ्जानेभ्य उच्छिष्टत्वाद्दानमयुक्तमिति वाच्यम् । भोजनविधिरेवं रूप एव। आ तृप्तेर्भोजयितुर्व्यापारः। न ह्यत्र ओदनादिप्रतिग्राह्यतया सम्बध्यते । अतएव न तत्र प्रतिग्रहमन्त्र ओदनादिषु युज्यते। "इष्टमुष्णं हविष्यञ्च दद्यादन्नं शनै शनैः" इति जावालिस्मरणाच्च। 'वाग्यताः' नियमितवाचः । व्यापारनिरोधः 'नियमनं'। वाचस्य व्यापारः शब्दोच्चारणं । तन्निरोधविधानात् । व्यक्ताव्यक्तं शब्दोच्चारणं न कर्त्तव्यमित्युक्तं भवति । दात्रेत्यविवक्षितं। अन्येनापि पृष्टैर्हविर्गुणा न वक्तव्याः । ननु वाङ्नियमादेवैतत्सिद्धं । सत्यं । अभिनयादिनापि न कर्त्तव्यमिति प्रतिपादयितुं भविष्यति । न ब्रूयुरिति कथञ्चिद्व्याख्येयं ।

तथाचात्रिः।

हुङ्कारेणापि योब्रूयाद्धस्ताद्वापि गुणान् वदेत्।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत्॥
प्रौढ़पादो बहिःकच्चोबहिर्जानुकरोऽथवा।
अङ्गुष्ठेन विनाश्नाति मुखशब्देन वा पुनः॥
पीत्वावशिष्टतोयानि पुनरुद्धृत्य वा पिबेत्।
खादितार्द्धात् पुनः खादेन्मोदकानि फलानि वा॥
मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेऽपि वा।
इत्यमश्नन्द्विजः श्राद्धं दत्त्वा गच्छत्यधोगतिं॥

'प्रौढ़पादः' आसनारोपितपादः। "आसनारूढ़पादस्तु प्रौढ़पादः स उच्यते" इति भविष्यत्पुराणेऽभिधानात्। 'बहिःकच्चः' उत्तरीयवासोबहिर्भूतकचद्वयः। भूतलात्पात्रोद्धरणे दोषोऽन्नाद्याधारमहाभाजनविषयः। पानाद्याधारलघुपात्रस्य "पुनरुद्धृत्य वा पिबेत्" इत्यनेनोद्धाराभ्यनुज्ञावगमात्।

यत्तु देवलेनोक्तं।

अन्न-पानक-शीतोदं ददद्भ्योह्यवलोकितः।
वक्तव्ये कारणे संज्ञां कुर्वन् भुञ्जीत पाणिना॥ इति।

अपेक्षानुसारेणान्न-पान-शीतलवार्य्यादि दातृभिरपेक्षां ज्ञातुमवलोकितः, क्षुत्पिपासालक्षणे अपेक्षादेः कारणे वक्तव्ये पाणिना संज्ञां सङ्केतमपेक्षादिसूचकं कुर्वन् भुञ्जीतेति तस्यार्थः प्रत्येतव्यः। न तु स्वादुत्वादिहविर्गुणरूपे अपेक्षाकरणे संज्ञां कुर्वन्निति। एवंविधार्थपरिग्रहे पूर्वोक्तवचनविरोधापत्तेः।

अत्युष्णं सर्वमन्नं स्यादित्यादिविधेरर्थवादमाह मनुः ।

यावदन्नं भवत्युष्णं यावदश्नन्ति वाग्यताः ।
तावदश्नन्ति पितरो यावन्नोक्ता हविर्गुणाः ॥

वायुपुराणेऽपि ।

यावन्न स्रूयते चान्नं यावदौष्ण्यं न मुञ्चति ।
तावदश्नन्ति पितरो यावदश्नन्ति वाग्यताः ॥

प्रभासखण्डे ।

रसा यत्र प्रशस्यन्ते भोक्तारो बन्धुगोत्रिणः ।
राजवार्त्तादिसंक्रन्दो रक्षःश्राद्धस्य लक्षणं ॥

हविर्गुणकथनप्रतिषेधस्तु श्राद्धसमाप्तेः प्रागेव ।

श्राद्धसमाप्तौ तु हविर्गुणप्रशंसा कर्त्तव्येत्याह वृद्धवसिष्ठः ।

श्राद्धावसाने कर्त्तव्या द्विजैरन्नगुणैः स्तुतिरिति ।

शङ्खलिखितौ ।

ब्राह्मणा अन्नगुणं दोषं नाभिवदेयुः नानृतं ब्रूयुरन्योन्यं न प्रशंसेयुरन्नपानं न प्रभूतमिति ब्रूयुरन्यत्र हस्तसंज्ञायाः ।

अभ्यधिकस्यान्नस्याप्रतिग्रहार्थं पूर्वपरिविष्टं प्रभूतमत्रास्ति किमन्येनेति भोक्तृभिर्न वक्तव्यं किन्तु हस्तसङ्केतेन सूचनीयमित्यर्थः ।

निगमोऽपि ।

नान्नपानादिकं श्राद्धे वारयेन्मुखतः क्वचित् ।
अनिष्टत्वाद्बहुत्वाद्वा वारणं हस्तसंज्ञया ॥

एवमभीष्टयाचनमपि न मुखतः कुर्यात् मौनभङ्गप्रसङ्गात् । तेन तदपि हस्तसंज्ञया कार्य्यं ।

अपेक्षितं चावश्यं याचनीयमेवेत्याह वृद्धशातातपः ।

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितं ।
न याचते द्विजोमूढ़ः स भवेत्पितृघातकः ॥

यत्तु वायुपुराणेऽभिहितं ।

याचते यदि दातारं ब्राह्मणो ज्ञानवर्ज्जितः ।
पितरस्तस्य रुष्यन्ति दातुर्भोक्तुर्न संशयः ॥

यच्च यमेन ।

कृच्छ्रद्वादशरात्रेण मुच्यन्ते कर्म्मिणस्ततः ।
तस्माद्द्विजो नैव दद्यान्न याचेन्न च दापयेदिति ॥

तच्छ्राद्धार्थमननुकल्पितवस्तुविषयं । सामान्येनाभिधानात् । श्राद्धार्थमुपकल्पितमप्यन्नादिकमत्यन्ताधिकं दाता न दद्यात् भोक्ता च न प्रतिगृह्णीयात् तदाहतुः शङ्ख-लिखितौ ।

नाग्रासनस्थः पूर्वमश्नीयान्नाधिकं दद्यान्न प्रतिगृह्णीयात् ।

वृद्धशातातपः ।

आसने पादमारोप्य यद्भुङ्क्ते तु द्विजोत्तमः ।
हन्ति दैवञ्च पित्र्यञ्च तदन्नञ्च प्रजाः पशून् ॥

बौधायनः ।

पादेन पादमाक्रम्य यो भुङ्क्तेऽनापदि द्विजः ।
नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः ॥

तथा तूष्णीं भुञ्जीरन्नविलोकयमाना अनुद्धृत्य पात्रमिति । अविलोकयमाना इतस्तत इति शेषः ।

पात्रोद्धरणे दोषान्तरमुक्तं वाराहपुराणे ।

उद्धरेद्यदि पात्रन्तु ब्राह्मणो ज्ञानवर्ज्जितः ।
हरन्ति राक्षसास्तस्य भुञ्जतोऽन्नञ्च सुन्दरि ॥

मनुः ।

यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥

वेष्टितमुष्णीषादिना । दक्षिणाभिमुखस्य दोषवचनादनवकाशे देशे दक्षिणेतरयत्किञ्चिदभिमुखानामपि भोजनमनुमतं भवतीति ज्ञायते । अन्यथोदङ्मुखानां विधानात् कुतो दक्षिणाभिमुखत्वप्राप्तिः । 'उपानहौ' चर्मपादुके ।

देवलः ।

योऽप्रसन्नमना भुङ्क्ते सोपानत्कोऽपि वा पुनः ।
प्रलापशीलः क्रुद्धो वा स विप्रः पितृदूषकः ॥

विष्णुः ।

अश्नीयुर्ब्राह्मणा न सोपानत्का न पीठोपनिहितपादाः ।

शङ्खः ।

एकवासाश्च योऽश्नीयान्निराशाः पितरो गताः ।

प्रभासखण्डे ।

यस्तु सूत्कारवद्भुङ्क्ते यश्च पाणितले द्विजः ।
न तदश्नन्ति पितरो यश्च वायुं समुत्सृजेत् ॥

'सूत्कारवत्' सूत्कार-फुत्कारादिशब्दवत् ।

पाणितले निषेधादङ्गुल्यग्रेण ग्रासो ग्राह्यः । ग्रासं गृहीत्वा उष्णस्यान्नस्य निर्वापणार्थं यो वायुं मुखमारुतमुत्सृजेत् ।

यमः ।

यस्तु पाणितले भुङ्क्ते यश्च वायुं समुत्सृजेत् ।
न तस्य पितरोऽश्नन्ति यश्चैवाग्रे प्रशंसति ॥

'अग्रे' श्राद्धसमाप्तेः पूर्वं।

हारीतः।

ऊर्द्धपाणिः प्रविहसन् सक्रोधो विस्मयान्वितः।
श्राद्धकाले तु यद्भुङ्क्ते न तत्प्रीणाति वै पितॄन्॥

शातातपः।

भग्नपृष्ठस्तु योभुङ्क्ते बहिर्जानुकरस्तथा ।
हसते वक्ति चाजस्रं स ज्ञेयः पितृघातकः ॥

तथा।

अभ्युष्णाविरसं सर्वमनिवारितमद्रुतं।
अलोलुपो जितक्रोधो भुञ्जीतान्नं मनोहितं ॥

कार्ष्णाजिनिः।

भुञ्जीत चापरिश्रान्तो दम्भाहङ्कारवर्जितः।
क्रोधं लोभं तथा मोहं वर्जयेच्छ्राद्धकर्मणि ॥

वह्वृचपरिशिष्टे ।

यच्च पाणितले दत्तं यच्चान्नमुपकल्पितं।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

पाणितले दत्तमग्नौकरणान्नं। 'उपकल्पितं' द्विजभाजनेषु पित्रुद्देशेनोत्सृष्टं। एतद्द्वयमपि मिश्रयित्वा भोक्तव्यं।

प्रचेताः।

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो वस्तिं पदा न भाजनं स्पृशेत् ॥

यमः ।

यत्तु भुक्त्वा पुनर्भुङ्क्ते यच्च तैलाभिघारितं ।
रजस्वलाभिर्यद्दृष्टन्तद्वै रक्षांसि गच्छति ॥

रजस्वलादिभिरिति व्याख्येयं बहुवचनोपदेशात् ।

वायुपुराणे ।

श्राद्धे नियुक्ता ये विप्रा दम्भं क्रोधञ्च चापलं ।
अन्योन्यस्पर्शनं कामात् वर्जयेयुर्मदन्तथा ॥

कामग्रहणाद्बुद्धिपूर्वमन्योन्यस्पर्शपरिहारं कुर्युः ।
प्रमादादितरेतरस्पर्शे तु यत् कर्त्तव्यं तदाह शङ्खः ।

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।
तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

वशिष्ठः ।

नियुक्तस्तु यदा श्राद्धे दैवे वा मांसमुत्सृजेत् ।
यावन्ति पशुरोमाणि तावन्नरकमृच्छति ॥

मांसग्रहणमुपलक्षणार्थं यतोऽन्यदपि श्राद्धे परिविष्टमन्नमपरित्याज्यमेव ।

तदाह यमः ।

नियुक्तश्चैव यः श्राद्धे यत् किञ्चित् परिवर्जयेत् ।
पितरस्तस्य तं मासं नैराश्यं प्रतिपेदिरे ॥

बृहस्पतिः ।

दैवे नियुक्तः श्राद्धे वा नियमं न विसर्जयेत् ।
निषिद्धं कुर्वतां दोषस्तद्वै द्वैधमकुर्वतां ॥

जातूकर्ण्यः ।

भाजनं परिविष्टान्नं हस्तेन ब्राह्मणः स्पृशेत् ।
रक्षोभ्यस्त्रायते यस्माद्धारणीयं प्रयत्नतः ॥

श्राद्धान्नमपहर्त्तुकामेभ्यो रक्षोभ्यो हस्तेन पात्रं स्पृशन् ब्राह्मणस्त्रायते "ब्राह्मणोहि रक्षसामपहन्ता" इति शतपथश्रुतेः । अतः परिवेषणात्प्रभृति हस्तेन पात्रन्धारणीयं ।

वशिष्ठः ।

उभयोर्हस्तयोर्मुक्तं पितृभ्योऽन्नं निवेदितं ।
तदन्तरं प्रतीक्षन्ते ह्यसुरा दुष्टचेतसः ॥
तस्मादशून्यं हस्तेन कुर्यादन्नमुपागतं ।
भाजनं वा समालभ्य तिष्ठेदोच्छेषणाद्विजः ॥

उभयोर्ब्राह्मणहस्तयोरन्यतमेनापि यदा तदन्नमनधिष्ठितं भवति तदन्तरालमसुराः सर्वदा प्रतीक्षन्ते लब्धान्तराश्च तदन्नमपहरन्तीत्यर्थः । तस्माद् यदैवान्नमुपागतं भवति । ततः प्रभृत्योच्छेषणात् भुक्तशिष्टान्नस्य भाजनाद्बहिःकरणपर्यन्तं वामहस्तेन भाजनं विधृत्य तिष्ठेत् । कण्डूयनाद्यर्थं वामहस्तव्यापारसमये तु दक्षिणहस्तेन भाजनं समालभ्य वर्त्ततेति तात्पर्यार्थः ।

देवतोद्देशेन त्यागात् पूर्वं परिविष्टमन्नं हस्तेन न स्प्रष्टव्यमित्याहात्रिः ।

असङ्कल्पितमन्नाद्यं पाणिभ्यां य उपस्पृशेत् ।

अभोज्यं तद्भवेदन्नं पितॄणां नोपतिष्ठते ॥

निगमः ।

मांसापूपफलेक्ष्वादिदन्तच्छेदं न भक्षयेत्।
ग्रासशेषं न पात्रेऽस्येत्पीतशेषन्तु नो पिबेत् ॥

'दन्तच्छेदं न भक्षयेत्' हस्तेन मांसादि धृत्वा स्वल्पं स्वल्पं दन्तैः छित्त्वा न भक्षयेत् । 'ग्रासशेषं' मुखार्पितग्रासशेषं, पुनर्भोजने नास्येत्' न निक्षिपेत् ।

प्रचेताः ।

दन्तच्छेदं हस्तपानं वर्जयेच्चातिभोजनं ।

'हस्तपानं' हस्तेन पानीयादिपानं, वर्जयेत् । अपि तु लघुपात्रेणैव कुर्यात् । 'अतिभोजनं' तृप्तौ सत्यामपि भोजनं ।

शातातपः ।

अर्द्धं भुक्त्वा तु यो विप्रस्तस्मिन् पात्रे जलं पिबेत् ।
यद्भुक्तं तत्पितॄणान्तु शेषं विन्द्यादथासुरं ॥

जमदग्निः ।

न छिंद्युर्नावशेषयेयुः ।

नावशेषयेयुरिति निषेधो तृप्तस्य क्रोधमदादिवशात् स्वेच्छया यदवशेषणं तद्विषयः ।

यतः आह सुमन्तुः ।

आ तृप्तेर्भोजनं तेषां कामतो नावशेषणं ।

तृप्तौ जातायां दध्यादीनि विहाय यत्किञ्चिदवशेषणीयं ।

तदाहोशनाः ।

भोजनन्तु न निःशेषं कुर्यात् प्राज्ञः कथञ्चन ।
अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च॥

'क्षौद्रं' मधु।

जमदग्निरपि ।

अन्यत् पुनरुत्स्रष्टव्यं। तस्यासंस्कृतप्रमीतानां भागधेयत्वात् । 'अन्यत्' दध्यादिभ्यः ।

इति श्राद्धभोक्तृनियमाः ।

अथ भोजयितृनियमाः ।

तत्राह मनुः ।

हर्षयेद्ब्राह्मणांस्तुष्टो भोजयेच्चाशनं शनैः ।
अन्नाद्येनासकृच्चैनान् गुणैश्च परिचोदयेत्॥

तुष्ट इति सत्यपि निमित्ते न स्वदुःखं दीर्घश्वासोच्छ्वासादिना केनचित् प्रकारेण प्रकटयेत्। अपि तु हृष्टवत्स्यात्। ब्राह्मणान् हर्षयेत्। गीतादिना परप्रयुक्तेन। अविरुद्धेन स्वयं प्रयुक्तेन वा। प्रसङ्गागतेन परिहासेन वा। तेन चिरकालं स्वाध्याये पठ्यमाने यदि कश्चिदुद्विजेत् ततो वीरस्याख्यानैः गीतादिभिर्व्वा रञ्जयेत् । 'शनैर्भोजयेत्' कतिचिद्ग्रासान् गृहीत्वा तत् स्वाद्वेतत्सम्यग्व्यञ्जन-मित्येवमादिभिः प्रियवचनैरसंरम्भेन वदन् भोजयेत् । 'अन्नाद्येन' पायसादिना, ,गुणैः' व्यञ्जनैः। 'असकृत्' पुनः पुनः, 'परिचोदयेत्' साध्वत्र इमाः शष्कुल्यः घरसेयं क्षीरिणीति पात्रस्थमेवमादि हस्तेन गृहीतं कृत्वा पुरः स्थितः पुनः पुनर्ब्रूयादित्येषा परिचोदना ।

तथा ।

यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात् पितॄणामेतदीप्सितं ॥

ब्राह्मणैरुद्यन्ते कथ्यन्ते यास्ताः ब्रह्मोद्याः । देवासुरयुद्धं, वृत्रवधः, स्मरमादूतमित्याद्याः । अथवा कश्चिदेकाकी चरतीत्याद्याः । ब्रह्माद्या इति वा पाठः, ब्रह्मप्रधाना वा मन्त्रार्थवादनिरूपणाद्याः, 'कथाः' संलापान् लौकिकैः शब्दैः कुर्यात् । पितॄणामेतदीप्सितमित्यर्थवादः ।

याज्ञवल्क्यः ।

अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः ।

'इष्टं' ब्राह्मणानां प्रियं । वाचं यमत्वादकथयत्स्वपि ब्राह्मणेषु तेषामादरातिशयाद्वा तत् कृतहस्तसङ्केतेन वानुमाय यद्यदभीष्टं जानीयात्तत्तत्प्रयत्नेन दद्यादित्यर्थः ।

सुमन्तुरपि ।

अक्रोधनो रसान् सम्यग्दद्याद्यद्यस्य रोचते ।

अपेक्षिताप्रदाने दोषमाह वृद्धशातातपः ।

अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितं ।
कृपणोमन्दबुद्धिस्तु न स श्राद्धफलं लभेत् ॥

न केवलं श्राद्धफलालाभः अपि तु कष्टतरजन्मप्राप्तिरपि ।

तथाच निगमः ।

अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितं ।
अधःकृच्छ्रासु घोरासु तिर्य्यग्योनिषु जायते ॥

यम-शातातपौ ।

यावद्धविष्यम्भवति यावत् स्विष्टं प्रदीयते ।

तावदश्नन्ति पितरो यावन्नाह ददाम्यहं॥

'नाहेत्यादि'। भुञ्जानेषु ब्राह्मणेषु पुनरन्नदानसमये नाभ्यधिकं भविष्यतीति ज्ञापनार्थमीषद्ददामीति दात्रा मुखतो न वक्तव्यं किन्तु तूष्णीं किञ्चित्प्रदर्शनाभ्यनुज्ञासूचकहस्तसङ्केते सत्यन्नाद्यगुणाननुकीर्त्त्य दातव्यं।

यत आह बृहस्पतिः।

भक्ष्य-भोज्यगुणानुक्ता भोजयेत् ब्राह्मणान् शनैः।

आख्यानैः सेतिहासैश्च पूर्ववृत्तैश्च हर्षयेत्॥

तांश्च हविर्गुण-दोषौ न पृच्छेदित्याह शङ्खः।

श्राद्धे नियुक्तान् भुञ्जानान् न पृच्छेल्लवणादिषु।

उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः।

दातुः पतति वाक्षुर्वै जिह्वा भोक्तुस्तु भिद्यते॥

लवणादिषु न्यूनाधिक्याभावेन हविषः साद्गुण्यं पुनरपि प्रदानार्थं न पृच्छेत्। न च पृष्ट्वा सम्यक्तेन ज्ञातं दद्यात्। दातुः पतति वाक्षुरिति दोषस्मरणात्। जिह्वा भोक्तुस्तु भिद्यत इति निन्दाबलाद्धविषः साद्गुण्यं सङ्केतेनापि भोक्ता न सूचयेदिति निषेधविधिर्गम्यते।

ब्रह्मपुराणे।

एकाग्रः पर्य्युपासीत प्रयतः प्राञ्जलिः स्थितः।

तत्परः श्रद्दधानश्च कामानाप्नोति मानवः॥

यमः।

निरोङ्कारेण यद्भुक्तं परिविष्टं समन्युना।

दुरात्मना च यद्भुक्तं तद्वै रक्षांसि गच्छति॥

अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्द्विजातयः ।
मन्त्रवत् परिविष्यन्ते तद्वै रक्षांसि गच्छति ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणं ।
अश्रद्धया कृतं जप्तं तद्वै रक्षांसि गच्छति ॥

मनुः ।

नास्रमापादयेज्जातु न कुप्येन्नानृतं वदेत् ।
न पादेन स्पृशेदन्नं न वै तदवधूनयेत् ॥

'अस्रं' रोदनं न कुर्यात् । प्रायेण प्रेतश्राद्धादाविष्टवियोगजनितः दुःखानुस्मरणादश्रुपातो जायते तस्य निषेधः नानन्दाश्रुणः । अनृतवदनस्य पुरुषार्थतया निषिद्धस्य कर्मार्थीयं निषेधः । उच्छिष्टमनुच्छिष्टं वा अन्नं पादेन न स्पृशेत् । वस्त्रेण चान्नं नावधूनयेत् । अस्यार्थवादः ।

अस्रङ्गमयति प्रेतं कोपोऽरीननृतं शुनः ।
पादस्पर्शस्तु रक्षांसि दुष्कृतीनवधूननं ॥

ब्रह्माण्डपुराणे ।

नचाश्रु पातयेज्जातु न शुक्लाङ्गिरमीरयेत् ।
न चोद्वीक्षेत भुञ्जानान् न च कुर्वीत मत्सरं ॥

'शुक्लां' शोकवतीं परुषाञ्च ।

देवलः ।

नाश्रु वा पातयेच्छ्राद्धे न जल्पेन्न हसेन्मिथः ।
न विभ्रमेन्न संक्रुद्धो नोद्विजेच्चात्र कर्हिचित् ॥
प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुच्चरेत् ।

आश्रितः खिन्नगात्रो वा न तिष्ठेत्पितृसन्निधौ ॥
न चात्र श्येन-काकादीन् पक्षिणः प्रतिषेधयेत् ।
तद्रूपाः पितरस्ते हि समायान्तीति वैदिकं ॥

'क्रोधं' न सृजेत् नोत्पादयेत् । सह मुदा वर्त्तेत इति समुत् ।

अश्रुपातादिकारणे सत्यपि सहर्ष एव स्यादित्यर्थः । 'आश्रितः' भित्ति-स्तम्भादौ निहितशरीरभागः । श्येन-काकादिनिवारणप्रतिषेधस्तीर्थश्राद्धविषयः । अन्यथा "क्रव्यादाः पक्षिणः श्राद्धं नेक्षेरन्" इत्यादिवचनविरोधः स्यात् । तीर्थे च काकादिनिवारणं न कार्य्यमिति तीर्थश्राद्धे वक्ष्यते ।

विष्णुः ।

नान्नमासनमारोपयेन्न पदा स्पृशेन्नावक्षुतं कुर्य्यात् ।

आसनग्रहणमाधारोपलक्षणार्थं । ततश्चान्नपात्रमाधारोपरि न स्थापयेदित्यर्थः ।

यमः ।

इष्टं निवेदितं दत्तं भुक्तं जप्तं तपः श्रुतं ।
यातुधानाः प्रलुम्पन्ति शौचं भ्रष्टं द्विजन्मनः ॥
तथा क्रोधेन यद्दत्तं भुक्तं यत्त्वरया पुनः ।
उभयं तद्विलुम्पन्ति यातुधानाः सराक्षसाः ॥
पितॄनावाहयित्वा तु नायुक्तप्रभवो भवेत् ।
तस्मान्नियम्य वाचञ्च क्रोधञ्च श्राद्धमाचरेत्(१) ॥
न क्रोधं कस्यचित्कुर्य्यात् कस्मिंश्चिदपि कारणे ।

---

(१) क्रोधं श्राद्धं समाचरेदिति ग० ।

अक्रुद्धपरिविष्टं हि श्राद्धे प्रीणयते पितॄन् ॥

बौधायनः ।

अश्रद्धा परमः पाप्मा पाप्मा ह्यज्ञानमुच्यते ।
अज्ञानो लुप्तधर्मः स्याल्लुप्तधर्मोऽधमः स्मृतः ॥
श्रद्धया शोध्यते[१] बुद्धिः श्रद्धया शोध्यते मतिः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रमोचनी ।
तस्मादश्रद्दधानस्य हविर्नाश्नन्ति देवताः ॥

कात्यायनः ।

श्रद्धान्वितः श्राद्धं कुर्वीत शाकेनापि ।

मनुः ।

यद्यद्ददाति विधिवत्सम्यक् श्रद्धासमन्वितः ।
तत्तत् पितॄणां भवति परत्रानन्तमक्षयं ॥

आपस्तम्बः ।

प्रयतः प्रसन्नमनाः तुष्टो भोजयेद् ब्राह्मणान् ।

इति भोजयितृनियमाः ।

अथ गन्धादिदानसम्प्रदाननिर्णयः ।

तत्रायं संशयः । किं गन्ध-पुष्प-धूप-दीपाच्छादनानि ब्राह्मणेभ्यो देयान्युत पितृभ्य इति । तत्र तावद्वचनार्थदर्शनन्यायोपलब्धेर्ब्राह्मणेभ्यो देयानीति महार्णवप्रकाशकारो मन्यते ।

वचनन्तावदाह मरीचिः ।

गन्धान् ब्राह्मणसात्कृत्वेति । अत्र सातिप्रत्ययश्रवणाद्गन्धादीनां

(१) साध्यते इति ख० ।

ब्राह्मणस्वामिकत्वं कर्त्तव्यमित्येतस्यार्थस्य विधानमुपलच्यते। तदधीनवचने इत्येतस्मिन् हि सूत्रे सातिप्रत्ययस्य तत्स्वामिकद्रव्यवचनत्वेनानुशासनात्। ब्राह्मणस्वामिकत्वञ्च तेभ्य एव दीयमानेषूपपद्यते नान्यथा। ब्रह्मपुराणवचनं।

अयं वो धूप इत्युक्ता तदग्रे च दहेत्तत इति।

अत्र तच्छब्दस्य सर्व्वनामत्वेन प्रकृतवचनत्वादयं व इत्यत्र ये वःशब्देनोक्तास्त एव तदग्र इत्यत्र तच्छब्देनोच्यन्ते। ते च पितरो यदि विवचितास्तर्हि तेषाममूर्त्तत्वादग्रपदार्थविशेषणत्वं नोपपद्यते। अतस्तच्छब्दस्य मूर्त्तिमद्ब्राह्मणवचनत्वे तत्परामर्शनीयस्य वःशब्दार्थस्य ब्राह्मणरूपत्वे ब्राह्मणेभ्यो धूपदानं सिध्यति। उपलक्षणञ्चैतत् गन्धादीनामर्चनद्रव्याणां। अन्यार्थदर्शनानि तु पुराणेषु।

तच महाभारते।

इत्युक्ता धर्म्मराजस्तु वासुदेवस्य धीमतः।
मातुलस्य च वृद्धस्य रामादीनां तथैव च॥
श्राद्धान्युद्दिश्य सर्व्वेषाञ्चकार विधिवत्तदा।
ददौ रत्नानि वासांसि ग्रामानश्वान् रथानपि॥
स्त्रीश्चैव द्विजमुख्येभ्यस्तथा शतसहस्रशः।
अलङ्कारांस्तथाश्वांश्च गाश्च काम्या वरस्त्रियः॥
आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तमः।
द्रोणं सात्यञ्च भीष्मञ्च सोमदत्तञ्च वाह्लिकं॥
दुर्य्योधनञ्च राजानं पुत्रांश्चैव पृथक् पृथक्।
जयद्रथपुरोगांश्च सुहृदश्चैव सर्वशः॥

आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तमः ॥
तथा सपुत्रपौत्राणां पितॄणामात्मन स्तथा ।
गान्धारस्य महातेजाः प्रददौ चौर्द्धदेहिकं ॥

दशरथस्य लोकान्तरगमनानन्तरं रामायणे ।

समतीते दशाहे तु कृतशौचो विधानतः ।
चक्रे द्वादशकं श्राद्धन्त्रयोदशकमेव च ॥
ततश्चोद्दिश्य पितरं ब्राह्मणेभ्यो ददौ धनं ।
महार्हाणि च रत्नानि गोऽश्ववाहनमेव च ॥

भरत इति शेषः ।

विष्णुपुराणे च पितृवाक्यं ।

रत्नवस्त्रमहायानं सर्वभोगादिकं वसु ।
विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥

वाराहपुराणे ।

उपविश्यासने शुभ्रञ्छत्रं तत्र प्रकल्पयेत् ।
आवरणार्थञ्च तद् वस्त्रं ब्राह्मणाय प्रदापयेत् ।
ततो वस्त्राणि विप्राय सर्वाण्याभरणानि चेत्यादि ॥

अत्र सर्वत्र ब्राह्मणेभ्य इति श्रवणात्तेभ्य एव देयानीति गम्यते । कात्यायनाश्वलायनप्रोक्ते चार्घ्यपात्रन्युब्जीकरणोत्तरमनन्तरं भवति वचनं । एतस्मिन् काले गन्धपुष्पधूपदीपाच्छादनानां प्रदानमिति । अत्रं पाठक्रमादेव विवक्षितक्रमालाभेपि यदिदमेकस्मिन् काले इति श्रुत्या क्रमविधानं तेनैतद्गम्यते । यदि हि एताभ्यामृषिभ्यामेवमाशङ्कितं यथा पितॄणां श्रेयःसिद्ध्यर्थं क्रियमाणं छत्रोपानत्कमण्डल्वादिदानं

ददाति चोदनाचोदितत्वेन ब्राह्मणसम्प्रदानकत्वेन च सामान्येन दक्षिणादानकाले कुर्वते। एवं गन्धादिदानमपि ददाति चोदनाचोदितं ब्राह्मणसम्प्रदानकञ्चेति साम्यात्। पाठक्रममतिक्रम्यापि दक्षिणादानं काले करिष्यतीति तच्च मा भूदित्येतदर्थं शब्देन क्रम उक्तः। अतस्तयोर्गन्धादिदानं ब्राह्मणसम्प्रदानकमेवेति अभिप्रायो गम्यते। अन्यथा एतत्काल इत्यनर्थकं स्यादिति। अपिच न्यायोऽप्यत्र भवति। यदि हि पितॄनुद्दिश्य गन्धादिदानं स्यात् तर्हि तेषां विग्रहाद्यभावेन प्रतिग्रहीतृत्वासम्भवे सम्प्रदानत्वाभावात् गन्धादीन् ददानीत्यत्र सत्यामपि गतौ ददातिशब्दे स्वार्थैकदेशलक्षणाप्रसङ्ग इति। यदि च गन्धादीनि पितृभ्यो दीयेरन् द्विजेभ्यस्तदा गन्धादीनां देवद्रव्यत्वापत्तिः। चतुर्थ्यन्तेन हि नाम्ना किञ्चिदुद्दिश्य न ममेदमिति यत् द्रव्यन्त्यज्यते तदेव द्रव्यमुच्यते। न पुनर्यत्प्रतिमाद्युद्देशेनैव त्यज्यते यत्र वा विष्ण्वादिदेवस्य स्वत्वबुद्धिस्तदेव देवद्रव्यं। अमूर्त्तदेवतोद्देशेन त्यक्तस्यादेवद्रव्यत्वप्रसङ्गात्। यद्यपि च स्वोद्देशत्यक्तद्रव्यविषयत्वबोधवती देवता तथाप्यर्थवादावगतचेतनत्वानुरोधेन हरि-हर-हिरण्यगर्भादिवद्देवपितॄणामपि स्वत्वबोधोपपत्तेः।

उक्तञ्चापस्तम्बेन।

पितॄणामपि देवतात्वं। तत्र पितरो देवता ब्राह्मणास्त्वाहवनीयार्थमिति।

अतः पितृभ्यस्त्यक्तं गन्धादिकं देवद्रव्यमेव भवति, विश्वेभ्यस्तु देवेभ्यस्त्यक्तं स्पष्टमेव देवद्रव्यं। तथा च तत्र स्वत्वबुद्धिं बद्ध्वा तद्द्रव्यमुपयुञ्जानो द्विजः सर्वोत्तमदेवद्रव्यचौर्य्यान्महापातकी महासाहसोक्तेन दण्डेन दण्ड्यश्चापद्येत। तत्र देवस्वस्योत्तमद्रव्यत्वम्।

तच्चौर्य्यस्य लक्षणं चाह नारदः ।

हिरण्य-रत्न-कौशेय-स्त्री-पुंग-गज-वाजिनः ।
देव-ब्राह्मण-राज्ञां च ज्ञेयन्तु द्रव्यमुत्तमं ॥
उपायैर्विविधैरेषां चालयित्वापकर्षणं ।
सुप्तमत्त-प्रमत्तेभ्यस्तेयमाहुर्मनीषिण इति ॥

स्तेयपापन्तु मनु-यमावाहतुः ।

देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥
देवद्रव्यापहर्त्तारं ब्रह्मस्वहरणं तथा ।
पुरुषं पापकर्माणं नरकः प्रतिपद्यते ॥

दण्डप्रकरणे चोक्तं ।

साहसेषु च यः प्रोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेपि द्रव्येषु त्रिष्वनुक्रमात्(१) ॥
पुरुषाणां वधश्चात्र पुरान्निर्वासनं तथा ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥

आह बृहस्पतिः ।

स्त्री-पुंग-हेम-रत्नानि देव-विप्रधनं तथा ।
कौशेयञ्चोत्तमं द्रव्यन्तेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैरिति ।

अतः पितृभ्यस्त्यक्तैर्गन्धादिभिर्यजमानेन ब्राह्मणाभ्यर्चनं कार्यमित्येतावति विहिते सति यजमानेन तयागतेऽभ्युपगतत्तृणैस्त्यज्यमान-

(१) स्तेये तु पितृद्रवेष्वनुक्रमादिति ग० ।

श्राद्धीयद्रव्यप्रक्षेपणाधिकरणभूतैर्द्रव्यैरभ्युपगम्य कियत्पापं यावत्प्रयोगसमाप्तिं गन्ध-पुष्प-वासांस्युपादाय प्रयोगसमाप्तौ यजमानवेश्मन्येव मन्त्यज्य गन्तव्यं स्यात्। नचैतच्छिष्टसम्मतं, तस्माद्ब्राह्मणेभ्य एव गन्धादीनि प्रदेयानीति ।

अत्रोच्यते।

पितृतृप्ति-प्रीतिकरं कर्म श्राद्धमुच्यते। दीयमानेन चान्नालङ्कारणादिना तृप्ति-प्रीती सम्पाद्यमाने दृष्टे। अतो यच्छ्राद्धे देयत्वेनोच्यते तावत्प्रायेण पितृभ्यो देयमित्यवगम्यते। भवति चैवं गन्धादि। अतस्तत्पितॄनुद्दिश्य देयं। पैत्रेण कर्मणा पितॄणां तृप्तिप्रीती च मन्त्रलिङ्गादवगम्येते ।

अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वमिति ।

अस्य च व्याख्यानं शतपथे। अप आनीय निनयति 'अक्षन् पितर इति। अन्नाद्यमेवैषु दधाति 'अमीमदन्त पितर इति। मदयत्येवैतान् 'अतीतृपन्त पितर इति। तर्पयत्येवैतान् 'पितरः शुन्धध्वमित्यनुपूर्वमेवैतान् सर्वान् पावयतीति हर्षयति ।

तथा।

अत्र पितरो मादयध्वं यथाभागमावृषा यध्वं। अमीमदन्त पितरो यथाभागमावृषा यिषतेति।

अनयोर्व्याख्यानं शतपथे ।

तत्र जपति 'अत्र पितरो मादयध्वं यथाभागमावृषा यध्वमिति। यथाभागमश्नीतेत्येवैतदाह तथा। अथोपायम्य जपति 'अमीमदन्त

पितरो यथाभागमावृषा यिषतेति यथाभागमाशिषुरित्येवैतदाहेति । साक्षात्प्रत्ययस्त्वनिषिद्धोपभोग्यत्वलक्षणस्वत्वफलसद्भावाभिप्रायेण पितृभ्यस्त्यक्ते गन्धादौ द्विजानां स्वाम्यविधानार्थत्वेन चास्मिन्नपि पक्षे व्याख्यातो न क्षुभ्यति । चशब्दनिर्देशस्तदग्रवचनञ्चाधिष्ठानभूतेषु ब्राह्मणेषु पित्राद्यावेशाद्भेदबुद्धिमाश्रित्य पितृसन्निधिमाश्रित्य वा पितरेतत्तेऽर्घं पितरयन्ते पिण्ड इतिवत्प्रवर्त्तते । पिण्डोपचारेषु चैतद्वः पितरो वास इत्यस्मिन् यजुषि वःशब्देन साक्षात् पितॄनेवोद्दिश्य वस्त्रदानं दृश्यते । श्रूयते च पुराणादिषु साक्षात् पितृभ्य एव गन्धादिदानं ।

तथाच वाराहपुराणे ।

> गन्धाः पुष्पाणि वस्त्राणि धूपदीपाक्षतानि च ।
> पितृकृत्ये प्रशस्तानि स्वाद्वन्नं सलिलं हिमं ॥
> एतानि श्रद्धयोपेतः पितृभ्यो यो निवेदयेत् ।
> स एव धर्मशीलो मे प्रियकारी वसुन्धरे । इति ॥

यानि पूर्वं गन्धादिदानस्य ब्राह्मणसंप्रदानकतालिङ्गत्वेन दर्शितानि महाभारतादिवचनानि तानि तानि गन्धादिश्रुतिशून्यत्वात्तद्विषयाण्येव न भवन्तीत्यन्यार्थदर्शनभ्रमेणैवोपन्यस्तानि । तत्प्रतिपाद्यानान्तु रत्नग्रामादिदानानां ब्राह्मणसंप्रदानकत्वं न प्रत्याचक्ष्महे । कात्यायनाश्वलायनयोस्त्वेतस्मिन् काल इतिवचनमनियतकालप्रदेयगवादिसाम्यनिवृत्त्या कालनियमार्थं । एतत्क्रमपठितान्यपि हि गवादीनि भोजनात्प्राक् तदुत्तरकाले वेत्यनियमेन दीयमानानि दृश्यन्ते । ददातिशब्दोप्यन्नादाविविकदेशलक्षणार्थोपि सन्न विरुध्यते । तथाचायमेक-

देशलक्षणार्थं एवास्मिन् प्रकरणे बहुशो दृश्यते। तथाच शतपथे।

तद्वा एतस्मिन्नासि मास्येव पितृभ्यो ददतो यदेव न पुरस्तान्न पश्चाद्दृश्येऽथैभ्यो ददात्येष वै सोमो राजा देवानामन्नं यच्चन्द्रमाः स एवं रात्रिं क्षीयते तस्मिन् क्षीणे ददाति तथैवेभ्यो समदं करोत्यथ यदक्षीणे दद्यात्समदꣳ ह कुर्य्याद्देवेभ्यश्च पितृभ्यश्च तस्माद्यदेवैष न पुरस्तान्न पश्चाद्दृश्येऽथैवेभ्यो ददाति स वा अपराह्णे ददाति पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणान्तस्मादपराह्णे ददातीति। पिण्डनिर्वापेपि तत्रैव स ददात्यसावेतत्त इत्येव यजमानस्य पित्रे ये च त्वामन्विहेक आहुस्तदु तथा न ब्रूयात् स्वयं वै तेषाꣳ सह येषाꣳ सह तस्मादु ब्रूयादसावेतत्त इत्येव यजमानस्य पित्रे असावेतत्त इति पितामहाय असावेतत्त इति प्रपितामहायेति।

यदि च पित्राद्युद्देशे त्यक्तेषु गन्धपुष्पादिषु स्वीक्रियमाणेषु द्विजानां देवस्वापहारदोषः स्यात्। स तर्हि वैश्वदेविकद्विजानां दुर्वार एव स्यात्। तत्र हि ब्रह्मपुराणोक्ते गन्धादिदानवाक्ये विश्वेषां देवानां साक्षादुद्देशदर्शनात्।

इदं वः पाद्यमर्घ्यञ्च पुष्प-धूप-विलेपनं।
अयं दीपप्रकाशश्च विश्वेदेवान् समर्प्यत इति॥

अथैवमुच्येत। विश्वान् देवानुद्दिश्य गन्धादिदानं बोधयतानेन वाक्येन वाक्यान्तरीयब्राह्मणसम्प्रदानगन्धादिदानप्रतिपत्तेर्बोधयितुमशक्यत्वादन्यदेवेदं विश्वेभ्यो देवेभ्यो गन्धादिदानं बोध्यते। अतोवैश्वदेविके गन्धपुष्पादिकं विश्वेभ्यो देवेभ्यो दत्त्वा पृथग्ब्राह्मणेभ्यो देयं। कुर्वन्ति च तथैव शिष्टाः। अतएवास्मिन् ब्रह्मपुराणवाक्ये ब्राह्मणै-

कभोग्यत्वेन निश्चितं वस्त्रं नोपात्तं। कथं पुनर्विशेषविषयेण विशिष्टार्थेन ब्रह्मपुराणवाक्येन सामान्यविषया स्पष्टार्थवाक्यान्तरीया प्रतिपत्तिर्न बाध्यते। अथैवमुच्येत। आपाततः सन्दिग्धार्थस्य सामान्यशास्त्रस्य वाक्यगतपौर्व्वापर्य्यालोचनन्यायोन्नीतार्थविशेषस्य नियतैकार्थविषयेणापि विशेषशास्त्रेण बाधनं। विशेषशास्त्रस्य च विशेषमात्रपरत्वं दृष्टं। यथा प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्स पर्य्यदीर्यत। स एतं वारुणञ्चतुःकपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतः चतुःकपालान्वारुणान्निर्वपेदित्यत्र पौर्व्वापर्य्यापर्य्यालोचनप्रसूताया दातृकर्तृकेष्टिप्रतीतेः प्रतिग्रहीतृकर्तृकेष्टिविधायकेन स एषोऽश्वः प्रतिगृह्यत इति मैत्रायणीयवाक्येन बाधो न ह्यतः किन्तु प्रतिग्रहीतुरपीष्टिर्विहिता। तदुक्तं वार्त्तिककृता। प्रतिग्रहीतरि स्पष्टं यदि वाक्यान्तरं ततः भवेत्तस्यापि तेनेष्टिर्दातुस्तु न निवार्यत इति। प्रकृते त्वेष विशेषः। यद्ब्राह्मणसम्प्रदानकदानप्रतिपादकानि बहूनि स्पष्टतराणि वाक्यान्युपलभ्यन्त इति। तत्र अतश्च प्रतिग्रहेष्टौ हि परस्परपरिहारावस्थितदातृ-प्रतिग्रहीतृरूपविशेषद्वयविषयत्वाच्छास्त्रद्वयस्य बाध्य-बाधकभावेनास्ति। प्रकृते तु देवपितृभ्योभयविशेषव्यापकमेकं वाक्यं। अपरन्तु वैश्वदेविकरूपविशेषविषयं। अतोऽविशेषविषयेणान्यवादोपपत्तौ न वैश्वदेविके पृथग्गन्धादिदानं। किञ्च। यद्विश्वेभ्यो गन्धादि दीयते, न हि तेन ब्राह्मणार्चनमकृत्वा अन्यत्र तत्त्यज्यते। अतस्तदपि ब्राह्मणैः स्वीक्रियमाणं कथं देवस्वापहारदोषं नापादयेत्। यदप्युक्तं शिष्टास्तथैव कुर्वन्तीति तदपि उपेक्षा-

मात्रं कुत्राप्यदर्शनात्। अतः पितॄनेवोद्दिश्य गन्धादीन् साक्षाद्ब्राह्मणेभ्योऽर्पयेदित्युपपन्नं। किञ्च यथा पित्राद्युद्देशेन त्यक्तेन्ने भुज्यमानेऽपि ब्राह्मणानां न देवस्वापहारदोषः। तथा गन्धाद्युपयोगेपि नास्त्येव। अथैवमुच्येत। अनिन्द्येनामन्त्रितो नापक्रामेदिति कात्यायनवचनेनानपक्रमणस्य विधानात्तस्य च भोजनप्रयोजनकत्वेन तत्पर्य्यन्तत्वाद्वचनेन भोजने विहिते तत्करणे पापं नोत्पद्यते। यथा "तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरन् द्विजः। गो-ब्राह्मणार्थं गृह्णन्वै न स पापेन लिप्यते" इति यमेन विशेषविहिते चौर्ये। तत्र निन्द्यश्राद्धभोजने तर्हि देवस्वापहारदोषः प्रसज्येत। अस्त्येवेति चेत्। न। निन्द्यभोजननिबन्धनोऽसौ न देवस्वापहारनिबन्धनः। तस्य श्राद्धभोजनादन्यस्मिन् देवस्वभक्षणरहितेपि निन्द्यभोजने सद्भावात्। दोषान्तरस्य तु निन्द्यश्राद्धभोजनेप्यस्मरणात्। अथ यत्र देवस्वीयत्वबुद्धिं कृत्वोपयोगः क्रियते तत्रापहारनिमित्तको दोषः। यत्र तु श्राद्धसाधनमन्नं स्वीयबुद्धिमकृत्वैवोपयुज्यते तत्रासौ न जायते। न चायं नियमो यदुपयुज्यते तत्र स्वबुद्ध्यैवोपयुज्यत इति। न हि गङ्गायां स्नानं कुर्वंश्चैतामात्मीयामवगच्छतीति। उच्यते। एवं तर्हि प्रसिद्धमपि देवस्वं स्वबुद्धिमकृत्वा देवस्वबुद्ध्यैवोपयुञ्जानः पापी न स्यात्। अपि च अन्नवदेव गन्धादावपि स्वत्वबोधमन्तरेणैवोपयोगसम्भवान्न पापसम्बन्धः।

नन्वस्तु गन्धादावेवं, आच्छादने तु चिरकालोपभोग्ये कथं स्वीयत्वबुद्धिमन्तरेणोपयोगस्य सम्भवः। मैवं। चिरकालोपभोग्येऽपि गङ्गाप्रवाहादौ स्वीयत्वबुद्ध्यदर्शनात्।

ननु स्वत्वबुद्धिमन्तरेणैवाच्छादनस्योपभोगेऽभिमतेऽन्येन तदपहारे क्रियमाणे मदीयमिदं वासो न त्वदीयमिति नाभिदधीत ।

मैवं । राजाश्वपालकस्याश्वेषु कारावरुद्धस्य च तत्कोणदेशे स्वीयताव्यपदेशवत्तद्व्यपदेशोपपत्तेः ।

ननु तर्ह्यश्वादिवदेवाच्छादनस्य यथेष्टविनियोगो न स्यात् ।

मैवं । अदृष्टदोषस्य सूक्ष्मन्यायप्रमेयत्वेनानुपलक्षितत्वाद् दृष्टदोषस्याभावाद्दानस्वरूपेण समर्पणात् स्वेन कर्मणा सम्बध्यमानत्वेनानुपलभ्यमानस्वाम्यन्तरत्वेन च स्वत्वाभ्रमात्तदुपपत्तेः ।

अथास्त्येव श्राद्धीयान्नभोजनेपि देवस्वभक्षणनिमित्तको दोषः । अतएव शिष्टाः श्राद्धभोजने गर्हां कुर्वन्ति । न चैतावता भोक्तुरव्यवहार्य्यत्व-दण्ड्यत्व-महाप्रायश्चित्तानां प्रसक्तिः । अनपक्रमणवाक्येन भोजनविधेः पापलाघवात् । अस्त्यवशिष्टेपि निषेधे निषिद्धक्रियैक्येपि केनचिद्विशेषेण पापगौरवव्यवस्था । यथा प्रकाशकृते ब्रह्मवधे द्वादशवार्षिकव्रतविनाश्यत्वोपदेशात्पापगौरवं । तस्मिन्नेव रहःकृतेऽघमर्षणादिसूक्तजपमात्रापनोद्यत्वप्रतिपादनात्पापलाघवं । अस्तिच प्रकृतेऽपि प्रायश्चित्तोपदेशोलघुश्च ।

यदाह शातातपः ।

दशकृत्वः पिबेदापोगायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयात्तथेति ॥

एवं तर्हि गन्धाद्युपयोगेप्युक्तदोषानवकाश एव ।

इति गन्धादिदान-सम्प्रदान-निर्णयः ।

अथ दक्षिणा ।

तत्र तावद्दक्षिणाशब्दनिर्वचनं शतपथश्रुतौ ।

स एष यज्ञो हतो न ददक्षे तं देवा दक्षिणाभिरदक्षयंस्त-द्यदेनं दक्षिणाभिरदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्ध एव यज्ञो भवति। तस्माद्दक्षिणां ददाति ।

हननं च यज्ञस्योलूखल-मुसल-दृषदुपलादिक्रियमाणावहनन-पेषणादिरूपं शतपथ एव निरन्तरपूर्ववाक्ये प्रतिपादितं। देवतोद्देशेन द्रव्यत्यागो यज्ञः। एतल्लक्षणयोगाच्छ्राद्धस्यापि यज्ञत्वं। अतो यज्ञस-मृद्धिकरणत्वाच्छ्राद्धेऽपि दक्षिणादानमावश्यकमेव। दक्षिणावश्यकत्वेऽपि शतपथ एव श्रुत्यन्तरं। "नादक्षिणं हविः स्यात्" इति।

चतुर्विंशतिमते तु श्राद्धमेवाश्रित्य दक्षिणादानस्यावश्यकत्वमुक्तं।

दर्भहीना वृथा सन्ध्या वृथा दानं विनोदकं।
वृथा जप्तमसंख्यातं वृथा श्राद्धमदक्षिणं॥

स्मृतिकृदाश्वलायनोऽप्याह।

हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः।
तस्मात्पणं काकिणीं वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तथा स सफलो भवेत् ॥

पणं काकिणीं वेत्यनुकल्पः। मुख्यकल्पस्तु "गो-भू-हिरण्य-वासांसि नव्यानि शयनानीत्यादिभिः स्मृतिपुराणे द्रव्यप्रकरणे द्रष्टव्यः।

देवव्यवस्था तु नागरखण्डे।

हिरण्यं देवतानान्तु पितॄणां रजतं तथा ।

यद्धमनुः ।

हिरण्यं वैश्वदेवे तु दद्याद्वै दक्षिणां बुधः ।
पित्र्ये तु रजतं देयं शक्त्या भूमि-गवादिकं ॥

आह पारस्करः ।

हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्योऽन्यच्च गो-कृष्णाजिनादिकं यावच्छक्नुयादिति ।

अत्र विश्वेभ्यो देवेभ्यो दीयमानाद्रजतात्तेभ्यो दीयमानं हिरण्यं गुणवत्तरमित्येव तात्पर्य्यार्थः। न पुनर्विश्वेभ्यो देवेभ्यो रजतं न देयं पितृभ्यश्च हिरण्यं न देयमिति । गो-भू-हिरण्य-वासांसीत्यादिषु पितृभ्योऽपि हिरण्यदानविधानात् ।

अतएव ब्रह्माण्डपुराणे पितृसम्बन्धिनो रजतदानस्य गुणवत्तरत्वमेवोच्यते।

अनन्तमक्षयं स्वर्ग्यं राजतं दानमुच्यते ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युतेति ॥

यदुक्तं यावच्छक्नुयादिति तदनेकजातीयगो-भू-हिरण्यादिदेय-द्रव्यसङ्ख्यापरिमाणकल्पनस्य शक्तिमात्रपरिच्छेद्यतां वक्तुं । सम्भावित-भविष्यद्द्रव्यालाभात् पूर्वकालीनानामावश्यकानां लौकिक-वैदिकानां चिकीर्षितकाम्यानाञ्च यावता निष्पत्तिः स्यात् तद्व्यतिरिक्तद्रव्य-सद्भावः 'शक्तिः', अशक्तिस्त्वेवंविधद्रव्याभावः ।

दक्षिणादाने वैषम्यमप्यनुजानीते पारस्करः।

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धभोजने ।
भक्ष्यं भोज्यं समन्देयं दक्षिणा त्वनुसारतः ॥

पात्रगुणतारतम्यानुसारेण, सम्बन्ध-सम्बन्धितारतम्यकल्पितपितृ-गौरवजनितदित्सानुसारेण वेत्यर्थः ।

बृहस्पतिरपि।

दद्यात्तु दक्षिणान्तेषां सर्वेषामनुरूपतः।
गो-भू-हिरण्य-वासांसि तुष्टिर्भुक्तवतां यथा।
भवेत्तथैव कर्त्तव्यं समर्थेन विशेषतः॥
सर्वमेतत्तु यो दद्यात् द्विजपात्रानुसारतः।
अन्येषां दक्षिणादानं शक्तितः श्राद्धसम्पदे॥

दक्षिणादानस्य कालमाह शातातपः।

ब्राह्मणान् भोजयित्वा तु दद्याच्छक्त्या च दक्षिणां।
अभिप्रेतार्थसिद्ध्यर्थमिष्टान् कामांश्च वाचयेत्॥

अत्र शुचिभ्यो देयमिति दानसामान्यविधेः प्रकृतत्व-योग्यताभ्यां चाचान्तेभ्यः श्राद्धभोक्तृभ्य एव च दद्यादिति गम्यते।

तदाह देवलः।

आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदथ दक्षिणामिति।

अनेनाचमनोत्तरकालत्वमात्रमुक्तं न पुनराचमनाव्यवहितोत्तर-कालत्वं। आचमनोत्तरकालन्तु स्वस्तिवाचनादीन् कियतः पदार्थान-भिधाय स्मृतिपुराणादिषु दक्षिणादानविधेर्दर्शनात्।

तथाहि सौरपुराणे।

हस्तप्रक्षालनं कृत्वा कुर्याद्वै स्वस्तिवाचनं।
दद्यात्तु दक्षिणां शक्त्या स्वधाकारमुदीरयेदिति॥

मत्स्यपुराणेऽपि।

स्वधानिनयनं कुर्याद्दत्त्योदकमेव च।
सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणामिति॥

नागरखण्डेऽपि पिण्डदानादिस्वधावाचनान्तान् पदार्थानभिधाय दक्षिणादानमुक्तं ।

उत्तानमर्घ्यपात्रन्तु कृत्वा दद्याच्च दक्षिणामिति ।

सा चेयं दक्षिणा प्रथमं वैश्वदेविकद्विजेभ्यस्तदनन्तरं पितृद्विजेभ्यः प्रदेयेति तावत् प्रतीयते । श्राद्धकर्मणि विसर्जनवर्जितानां सर्व्वेषां पदार्थानां दैवपूर्वकत्वविधानात् ।

तथाच मनुः ।

दैवाद्यन्तं समीहेत पित्राद्यन्तं न तद्भवेत् ।

विसर्जनात् प्राचीनाः पदार्था दैवादयो वैश्वदेविकपूर्विका यस्मिं-स्तद्दैवादि । तथा दैवः पदार्थोऽन्ते यस्मिंस्तद्दैवान्तं । सर्वान् पदार्थान् वैश्वदेविकादीन् कृत्वा विसर्जनन्तु वैश्वदेविकमन्ते कर्त्तव्यमित्यर्थः ।

मार्कण्डेयोऽपि ।

श्राद्धे प्रयत्नतः सर्वं दैवपूर्वं समाचरेदिति ।

तदेवं सामान्यवचनैर्दक्षिणायां प्रतीयमानस्य दैवपूर्वकत्वस्यापवा-दमाह वृद्धमनुः ।

दक्षिणां पितृविप्रेभ्यो दद्यात् पूर्वं ततो द्वयोरिति ।

पूर्वं पितृविप्रेभ्यो दत्त्वा तदनन्तरं द्वयोर्वैश्वदेविकविप्रयोर्दद्यात् । तयोश्च सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी व्याख्येया ।

दक्षिणादाने प्रकारमाह जमदग्निः ।

सर्व्वकर्मापसव्येन दक्षिणादानवर्जितमिति ।

अनेन दक्षिणायां सव्यमुक्तं ।

अपसव्यपक्षोऽपि तेनैवोक्तः ।

अपसव्यन्तु तत्राह मत्स्योहि भगवान्मनोः ।

सव्यं प्रदक्षिणं यज्ञोपवीतञ्च । अपसव्यमप्रदक्षिणं प्राचीनावीतञ्च । अतः सव्यापसव्ययोर्विकल्पः । अथवा दक्षिणादाने यदा ब्राह्मणानां सम्प्रदानत्वं इति पक्षस्तदा सव्यं । यदा पितॄनुद्दिश्य दानमित्येष पक्षस्तदापसव्यमिति व्यवस्था । वक्ष्यते च पक्षद्वयमिदं ।

आह जमदग्निः ।

सतिलं नामगोत्रेण दद्याच्छक्त्या च दक्षिणामिति ।

अत्र पितॄनुद्दिश्य दक्षिणादानमित्येतस्मिन् पक्षेऽपसव्यं कृत्वा कुश-तिल-जलसहितं रजतादिद्रव्यं करे गृहीत्वा देयद्रव्यमन्त्रं दक्षिणा-मन्त्रं चोच्चार्य्य पितॄणां नामगोत्रसम्बन्धांश्चतुर्थ्यन्तैः पदैः सङ्कीर्त्त्ये-दममुकद्रव्यं दक्षिणात्वयरूपेण स्वधा सम्पद्यतां नम इति तत्तत्पित्र-धिष्ठानभूतविप्रहस्ते पितृतीर्थेनार्पयेत् । ततः सव्यं कृत्वा यव-कुश-कुसुम-सलिलसहित-हिरण्यादिद्रव्यं करे गृहीत्वा मन्त्रद्वयमुच्चार्य्य च चतुर्थ्यन्तं विश्वेदेवनाम सङ्कीर्त्त्यदममुकं दक्षिणात्वयरूपेण स्वाहा सम्पद्यतां नम इति तदधिष्ठानविप्रहस्ते देवतीर्थेनार्पयेत् । ब्राह्मणेभ्यो दक्षिणादानमित्येतस्मिंस्तु पक्षेपसव्यं कृत्वा तिल-कुश-कुसुमाक्षत-सलिलसहितं रजतादिद्रव्यं करे गृहीत्वा देयद्रव्यमन्त्रं दक्षिणामन्त्र-ञ्चोच्चार्य्य पितॄणां नामगोत्रसम्बन्धांश्चतुर्थ्यन्तैः पदैः सङ्कीर्त्त्येदम-मुकद्रव्यं दक्षिणात्वयरूपेण स्वधा सम्पद्यतां नम इति तत्तत्पि-त्रधिष्ठानभूतविप्रहस्ते पितृतीर्थेनार्पयेत् । ततः सव्यं कृत्वा यव-कुश-कुसुम-सलिलसहितहिरण्यादिद्रव्यं दक्षिणात्वयरूपेण स्वाहा सम्पद्यतां नम इति तदधिष्ठानविप्रहस्ते देवतीर्थेनार्पयेत् । ब्राह्मणेभ्यो

दक्षिणादानमित्येतस्मिंस्तु पक्षे सव्यङ्कृत्वा तिल-कुसुमाक्षत-कुश-सलिल-सहितं रजतादिद्रव्यं करे गृहीत्वा देयद्रव्यमन्त्रं दक्षिणामन्त्रं चोच्चार्य्य ब्राह्मणस्य चतुर्थ्यन्ताभ्यामात्मनस्तु प्रथमान्ताभ्यां पदाभ्यां नाम-गोत्रे सङ्कीर्त्त्यास्यामुकशर्म्मणः प्रतिष्ठार्थं तुभ्यममुकं दक्षिणां सम्प्रददे मम इति पित्र्यविप्रहस्ते देवतीर्थेनार्पयित्वा वैश्वदेविकद्विजेभ्योऽप्येवमेव हिरण्यादि दद्यात्।

इति दक्षिणानिर्वचनावश्यकत्वमुख्यकल्पानुकल्पव्यवस्था-
परिमाणवैषम्यकालक्रमनिरूपणं ।

अथ दक्षिणासम्प्रदाननिर्णयः ।

तत्र तावदेके पितृभ्यो दक्षिणा देयेति मन्यन्ते। ते ह्याहुः। दक्षिणादाने जमदग्निना तिलापसव्यसम्बन्धस्य पितृनामगोत्राभिधानस्य च विधानात् ब्रह्माण्डपुराणे च दक्षिणाद्रव्याण्यनुकीर्त्य सर्वं पितॄणां दातव्यमिति पितृसम्बन्धाभिधानाच्च पितॄनुद्दिश्य दक्षिणा देयेत्यवगम्यत इति ।

अत्र स्मृतिचन्द्रिकाकारेणाक्षेपस्तत्समाधानं चोक्तं। तत्र तावदाक्षेपः। यदि पित्राद्युद्देशेन द्रव्यत्यागः न पुन र्द्विजोद्देशेन कथं तर्हि ब्राह्मणानां दक्षिणाद्रव्ये स्वाम्यं। समाधानन्तु। यथा दार्शपौर्णमासिके दक्षिणादाने ब्राह्मणाश्रयस्य ओदन इत्युक्त्वा यजमानेनोदने समर्पिते सति ब्राह्मणोद्देशेनौदनत्यागाभावेऽप्यृत्विजां कर्मकरत्वेनैवौदने स्वाम्यमुत्पद्यते तथेहापि हिरण्य-रजतादिसमर्पणे कर्मकरत्वेनैव तत्र ब्राह्मणानां स्वाम्यमिति । यथा वा प्रतिष्ठादौ प्रतिष्ठायां देवतामुद्दिश्य त्यक्ते वस्त्राभरणादौ प्रतिष्ठान्ते सर्वमुपकरणमाचार्य्यो गृह्णा-

तीत्येतद्वचनानुगृहीतकर्मकरत्वेनाचार्यस्य स्वाम्यं भवति तथेहापि "ब्राह्मणान् भोजयित्वा तु दद्याच्छक्त्या च दक्षिणां" इत्येतद्वचनानुगृहीतकर्मकरत्वेनैवान्योद्देशेन त्यक्तायामपि दक्षिणायां ब्राह्मणानां स्वाम्यं सम्पद्यत इति तदेतन्मतमयुक्तमिवाभाति। तथा हि द्विजानामपि सम्प्रदानत्वे दक्षिणादानस्य पित्र्यकर्माङ्गत्वेन पित्र्यत्वान्नित्यापसव्यसम्बन्धो घटत एव। सतिलं नामगोत्रेणेत्येतस्मिन् वचने ब्राह्मणसम्बद्धयोर्नाम-गोत्रयोर्विवक्षापि सम्भाव्यते।

स्मर्यते च दानविधौ।

नाम-गोत्रे समुच्चार्य्य सम्प्रदानस्य चात्मनः।
सम्प्रदेयं प्रयच्छन्ति कन्यादाने तु पुंस्त्रयमिति॥

पितॄणां दातव्यमित्यत्रापि लक्षणया पितृविप्रेभ्यो दातव्यमिति कल्पयितुं शक्यते। अतः पूर्वोक्तैर्हेतुभिरेकान्ततः पितॄणामुद्देश्यत्वमवगन्तुं न पार्य्यते।

यच्चोक्तं। अदत्त एव दार्शपौर्णमासिके ओदने कर्मकरत्वेनैवर्त्विजां स्वाम्यमिति। तन्न। दत्त एव ह्यसावोदनः।

अतएवाहापस्तम्बः।

तेभ्योन्वाहार्यं ददाति ब्राह्मणा अयम्‌ ओदन इति।

अतएव च प्रतिगृहीत इति ब्राह्मणानामुत्तरं देवतोद्देशेन त्यक्ते तु द्रव्ये प्रतिष्ठाचार्यायादत्तेऽप्याचार्यो गृह्णीतेति तस्य स्वाम्यवचनादविरुद्धं स्वाम्यं। प्रकृते तु न तादृशं वचनमस्ति। स्थितञ्चैतत्। यज्ञकर्मकारिणामनतिकरी भृतिर्दक्षिणेति। अतो दक्षिणाशब्दसामञ्जस्यार्थं लोकप्रसिद्धत्वनिर्वाहार्थञ्च ब्राह्मणेभ्य एव दक्षिणा देयेत्येतन्न्याय्यमिति प्रतीयते।

वचनानि चात्र भवन्ति ।

आचान्तेभ्यो द्विजेभ्यस्तु प्रयच्छेदथ दक्षिणामिति ।

तथा ।

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोरिति ।

दक्षिणादानस्य ब्राह्मण-सम्प्रदानकत्वेपि पित्र्यकर्माङ्गत्वनिवृत्त्य-भावादपसव्य एव प्राप्ते वचनं ।

सर्वं कर्मापसव्येन दक्षिणादानवर्जितमिति ।

अपसव्यापवादेन सव्यस्यैकान्तिकत्वं माभूदिति पुनस्तत्रैवापसव्य-विधिः। अतो विहितप्रतिषिद्धत्वाद्विकल्पः । अपसव्यविधेस्तार्थवत्त्वमिति। आचान्तेभ्यो द्विजेभ्य इत्यादिना श्राद्धभोजिभ्यो दक्षिणा देयेत्युक्तं ।

बृहस्पतिस्त्वन्येभ्योऽपि श्राद्धार्थपाकशेषभोजिभ्यस्तदन्येभ्योऽपि तत्कालोपस्थितेभ्यो दक्षिणा देयेत्याह ।

ज्ञातयो बान्धवा नित्यास्तथा चातिथयोऽपरे ।
प्रदद्याद्दक्षिणान्तेषां सर्वेषामनुरूपतः ॥

'ज्ञातयः' पितृसम्बद्धाः । 'बान्धवाः' मातृसम्बद्धाः ।

इति दक्षिणासम्प्रदाननिर्णयः ।

इति दक्षिणानिरूपणं ।

अथ वैश्वदेवनिर्णयः ।

तत्र पाककालौ सांशयिकावर्थौ । तत्र तावत्पाके संशयः । किं वैश्वदेवाद्यर्थः श्राद्धार्थस्यैक एव पाकः उत भिन्न इति । तत्र तावत्पञ्च महायज्ञान्तर्गतस्य नित्यश्राद्धस्य वैश्वदेवादेस्यैक एव पाकः। आन्व-हिकस्य हि पाकस्यान्वहमनुष्ठीयमानान्न निष्पाद्यसर्वकर्मार्थत्वात् ।

आशौचविशेषे त्वेकादशाहात्पूर्वं वैश्वदेवाद्येव नास्तीति तदानीन्तन-नवश्राद्धेषु पाकैक्यशङ्कैव नास्ति। एकादशाहिके तु श्राद्धे वैश्वदेवस्य पाकान्तरेणैवानुष्ठानं "एकोद्दिष्टेषु शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत्" इति देवलेन नवश्राद्धसंज्ञकेष्वेकोद्दिष्टेषु सर्वस्याप्यन्नशेषस्य ब्राह्मणेभ्यो देयत्वविधानात् प्रेतश्राद्धेषु चैतदुच्यते । अमावास्याश्राद्धविकृति-भूतेषु सांवत्सरिकादिषु तु प्रकृतिनिर्णयेनैव निर्णय इत्यमावास्या-श्राद्धार्थे पाके संशयः कुतः विप्रतिपत्तेः ।

ननु विप्रतिपत्तेः किं मूलं हेतु-तदाभासोत्थापितौ भिन्नप्रति-पत्तृसमाश्रयौ यथार्थायथार्थाध्यवसायौ । क्रियते हि प्रतिवास-रिकं श्राद्धं वैश्वदेवार्थेन पाकेनातोऽन्यदपि कर्त्तव्यमिति हेत्वाभास-जनितोऽयथार्थोऽध्यवसायः । कारणविशेषं विनान्यार्थस्यान्यत्र विनि-योगो नास्त्यतो न वैश्वदेवार्थेन पाकेन दर्शश्राद्धमिति यथार्थोऽध्यवसायः संशये मूलं । अथवा विशेषमपश्यतोयमुभयथा दर्शनात् संशयः । दृश्यते ह्यनेकेषामपि कर्मणामेकानेकपाकसाध्यत्वनियमः ।

तत्र तावत्कर्कोपाध्यायो वैश्वदेवार्थेनैवान्नेन श्राद्धं कर्त्तव्यमिति स्वसिद्धान्तं प्रतिज्ञाय पाकान्तरेण कर्त्तव्यमित्येवं रूपं परसिद्धान्तं पूर्वपक्षतयोपन्यस्तवान् । तथा हि । न हि वचनमन्तरेणान्यत्रोपयुक्त-मन्नं कर्म्मान्तरोपयोगमर्हति। ज्ञायते चेदं शेषमन्नमनुज्ञाप्योच्छिष्ट-समीपे पिण्डान् दद्यादिति पिण्डदानेऽनुज्ञावचनात्। किञ्च। यदि ह्यन्यत्रोपयुक्तं कर्मान्तरोपयोगयोग्यं स्यात् । तर्हि ब्राह्मणभोजनोप-योजितमन्नं स्वत एव पिण्डदानक्रियार्हमित्यनुज्ञापनमनर्थकं स्यात् ।

किञ्च। यदि वैश्वदेवार्थादन्नात् श्राद्धमपि स्यात् तर्हि ततो गृह-

बलिं कुर्यादित्येतद्वचनं विरुध्यते। अत्र हि श्राद्धोत्तरकालं गृहबलिर्विहितः। स च वैश्वदेवाख्यकर्मैकदेशः। अतो वैश्वदेव एवायं श्राद्धोत्तरकालमुक्तो भवति। श्राद्धञ्चैतस्मात्पूर्वं, न चैतद्घटते, स्वप्रयुक्तपाकसाध्येन वैश्वदेवेन हि पूर्व्वं भवितव्यं। परप्रयुक्तोपजीवकेन श्राद्धेन च पश्चात्। न च श्राद्धार्थमेव पक्का श्राद्धमनुष्ठाय तेनैव पाकेन वैश्वदेवानुष्ठानं करिष्यत इत्येकपाकत्वमुभयोरिति वाच्यं। एकपाकत्वे ह्यन्नसाध्यसर्वक्रिया-सम्पादन-समर्थ-वैश्वदेवार्थोपकल्प्यमानान्नोपजीवकत्वेनाप्यन्यस्य सिद्धेर्नारम्भान्तरप्रयोजकतेति वैश्वदेवार्थाद्भिन्न एव श्राद्धार्थः पाक इति। एवं पूर्व्वपक्षतयोपन्यस्य स्वसिद्धान्तमुक्तवान्। सर्व्वकर्म्मार्हस्य वैश्वदेवार्थस्य पाकस्य विद्यमानत्वात् पृथक्पाकस्य वा वचनाद्वैश्वदेवार्थेनैव श्राद्धमपि कर्त्तव्यमिति। अतएव पितृयज्ञन्तु निर्व्वर्त्त्येत्यादिना वचनेन पितृयज्ञोपलक्षितं पित्र्योदकतर्पण-वैश्वदेवहोमादिपञ्चमहायज्ञ-निर्व्वपनं श्राद्धात् पूर्व्वमेवोपदिष्टं। ततः श्राद्धं। सोयं क्रमः श्राद्धस्य वैश्वदेवार्थान्नोपजीवकत्वे घटते। अन्यथा(१) स्वतन्त्रपाकसाध्यत्वात् श्राद्धस्य वैश्वदेवात् पूर्व्वमप्यनुष्ठानं स्यात्। न च वाच्यं पिण्डपितृयज्ञेन सह श्राद्धस्यायं क्रमो न तु पितृतर्पणादिभिः पञ्चमहायज्ञैः सहेति। पिण्डपितृयज्ञस्य केवलेन पितृयज्ञशब्देनानभिधानात्।

यत्तु ततो गृहबलिं कुर्यादिति श्राद्धोत्तरकालं गृहबलेर्विधानं न तत्पाञ्चयज्ञीयस्य वैश्वदेवात्मकस्य बलेः किन्त्वन्यस्यैव वास्तुदेवतापूजात्मकस्य।

---

(१) अथवेति ग०।

यत्तु पिण्डदानेनुज्ञावचनं तत्तृप्तप्रश्नवददृष्टरूपान्नसंस्कारार्थं मन्नन्यार्थस्य कर्मान्तरोपयोज्यत्वरूपदोषपरिहारार्थमिति ।

स एष कर्कोपाध्यायसिद्धान्तः सह पूर्वपक्षहेतुभिस्तद्दूषणैश्चापि साईमयुक्तः। न हि पिण्डदानार्थं तदनुज्ञापनं किन्तु यथेष्टविनियोगार्थं। अतएवेष्टैः सह भुज्यतामित्येवानुज्ञादानं न तु पिण्डार्थमुपयुज्यतामिति। किञ्चैवं सति यदा ब्राह्मणभोजनात् पूर्वं कदाचित् पिण्डदानं क्रियेत तदा ब्राह्मणभोजनारम्भे शेषमन्नं इति प्रश्नेनानुज्ञापनं ब्राह्मणभोजने उपयुज्यतामित्यनुज्ञा च प्रसज्येत।

यच्चोक्तं स्वप्रयुक्तपाकसाध्यत्वे पूर्वं गृहबलिना भवितव्यमिति तदपि नैयायिकस्य क्रमस्य वचनमहिम्नान्यथाभावसम्भवादयुक्तमिति पूर्वपक्षोऽनुपपन्नः। यच्चोक्तं सर्वार्थस्य विद्यमानत्वादिति तदपि न। आन्वहिकस्य हि पाकस्यान्वहमनुष्ठीयमानकर्ममात्रार्थतावधारणान्नामावास्यादिश्राद्धार्थता। यच्चोक्तं पितृयज्ञन्तु निर्वर्त्येत्यादिना पित्र्योदकतर्पणादिपञ्चमहायज्ञानां श्राद्धात् पूर्वमनुष्ठेयत्वमुक्तमिति। तन्न। पितृयज्ञशब्देनात्र पिण्डपितृयज्ञाभिधानात्। केवलस्यापि पितृयज्ञशब्दस्याप्येतत्पितृयज्ञेनेवाचारीदित्यादिशतपथवाक्येषु पिण्डपितृयज्ञाभिधायकत्वेन दर्शनात्। यत्तु वचनं पितृयज्ञन्तु निर्वर्त्य तर्पणाख्यमिति तदपि पिण्डपितृयज्ञमेव तृप्तिसाधनत्वात्तर्पणाख्यमनुवदतीत्यविरुद्धं।

अतोवैश्वदेवार्थेनैव पाकेनामावास्यादिश्राद्धं कर्त्तव्यमित्ययं सिद्धान्तोऽनुपपन्नः। तत इदमुच्यते। वैश्वदेवार्थात् पृथग्भूत एवामावास्यादिश्राद्धार्थः पाक इति। यतः निरूप्य हविरन्यस्मै

अन्यस्मै न हि ह्रूयते । यत्तु कर्कोपाध्यायेनोक्तं पृथक् पाकस्य चावचनादिति तन्न ।

यत आह लौगाक्षिः ।

पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदेविकं ॥

अत्र यद्यपि पूर्वार्द्धे एकमेव पाकमुभयार्थं निर्वपेदित्यपि प्रतिभाति । तथाप्युत्तरार्द्धेन पाकभेदः स्फुटीक्रियते । वैश्वदेवं न पित्रर्थमिति । वैश्वदेवार्थं नित्यहोमार्थं पक्वमन्नं वैश्वदेवं तन्न पित्रर्थं, दर्शश्राद्धार्थमपि न भवात । अन्वहमनुष्ठीयमानानां देव-पितृ-भूत-मनुष्योपपदानां यज्ञानामेकपाकसाध्यत्वनिश्चयात् दर्शश्राद्धार्थं न भवति । दर्शश्राद्धार्थं पक्वमन्नं दार्शं तद्वैश्वदेवार्थं न भवति । दर्शशब्देन चात्र दर्शश्राद्धेतिकर्त्तव्यतावलान्नित्यनैमित्तिककाम्यान्येकोद्दिष्टान्तानि श्राद्धानि लक्ष्यन्ते । वैश्वदेवशब्देन भूतयज्ञ-पितृयज्ञ-मनुष्ययज्ञा अप्युपलक्ष्यन्ते । कथं पुनरन्यार्थस्य सतोऽन्यार्थताशङ्का । अधिष्ठानलक्षणयापि विना कारणं विनियुक्त-विनियोगानभ्युपगमात् । सत्यं । नचात्रान्यार्थस्य सतोऽन्यार्थत्वमाशङ्कितं निषिद्धं वा, किन्तु निर्वापपाकयोस्तन्त्रताशङ्का निराकृता । अन्यार्थस्य सतोप्यन्यत्र प्रसङ्गिताचेति तत्र प्रसङ्गः शङ्का च प्रत्यासन्नकालानां कर्मणां एकपाकसाध्यत्वोपपत्तौ साधनोपादानलाघवादिति । अत्र न दार्शं वैश्वदेविकमिति यल्लौगाक्षिवचनैकदेशेनोक्तं तद्वैश्वदेवस्य श्राद्धात् पूर्वं मध्ये वानुष्ठाने क्रियमाणे सत्येव वेदितव्यं न तदुत्तरकालमिति ।

यत आह पैठीनसिः ।

पितृपाकात् समुद्धृत्य वैश्वदेवं करोति यः।
आसुरन्तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ इति।

ननूद्धृत्येत्यनर्थकं, नह्यनवदाय शक्यो होमः कर्त्तुम्। अवदानञ्च समुदायादेकदेशस्योद्धरणमेव। मैवं। अत्र हि पितृपाकशब्देन संकल्पितपितृदेवत्यत्वावस्थः पाकोऽभिधीयते। तदवस्थाच्चोद्धरणमेकदेशस्य तदवस्थता प्रच्यावनमेव। न विभागमात्रं तदवस्था। प्रच्यावनञ्च पूर्वदेवतासम्बन्धापनयने सत्येवोपपद्यते। अतः पितृरूपदेवताभ्योऽपनयएवायमुद्धरति नाप्रतिपाद्यते। स चायं निर्वापकालीनं पितृदैवत्यममुं पाकं करिष्यामीत्येवंविधानुसन्धानरूपं संकल्पविशेषं बाधित्वा श्राद्धात् पूर्वं तन्मध्ये वा शक्यः, न तूत्तरकालं। न हि पितॄनुद्दिश्य त्यक्तस्य तत आच्छेदः शक्यः तद्दैवत्यत्वस्य निष्पन्नत्वात्। न हि निष्पन्नमनिष्पन्नं शक्यं कर्त्तुं। ननु न ब्रूमो निष्पन्नमनिष्पन्नं क्रियतइति किन्तर्हि तन्नाश्यत इत्युच्यते। मैवं। नाशकासम्भवात्। अन्यदेवतोद्देशेनोद्धरणं नाशकमिति चेत्। न। तस्योत्तरदेवतासम्बन्धमात्रपरत्वेन पूर्व्वदेवतासम्बन्धनाशकत्वे प्रमाणाभावात्। ननु पूर्वसम्बन्धनाशमन्तरेणोत्तरसम्बन्धासिद्धेः पूर्वनाशकत्वमनुमीयते, न सम्बन्धद्वयस्यैकत्राविरोधात्। वचनोपदिष्ट आच्छेदो नाशक इति चेत्। मैवं। तदुद्देशेन त्यज्यमानत्वमेव हि तद्दैवत्यत्वं। तच्च त्यागनिष्पत्त्युत्तरकालमेव भूत्वा विनष्टं। अतः किमाच्छेदेन विनाश्यं किञ्चोद्धृत्यवादस्याभिधेयं। नन्वेवं प्रतिमाद्यधिष्ठातृदेवतोद्देशेन त्यक्तस्यापि द्रव्यस्य त्यागोत्तरकालमेव देवतासम्बन्धो भूत्वा विनष्टः ततश्च द्रव्यस्य प्रक्षीणत्वे तदपहारे देव-

स्यापहारदोषो न स्यात्। मैवं। यत्तावन्नित्यं प्रतिमाद्युपभोग्यत्वाय द्रव्यन्त्यक्तं तत्र तद्दैवत्यत्वस्योपभोगफलकत्वाद्यावदुपभोगमविनाशात्। विनाशे हि निमित्तनिवृत्ते नैमित्तिकानुवृत्तिर्दुर्घटा स्यात्।

यत्तु परिसमाप्तोपभोगं द्रव्यं तत्र देवस्वतामुपलक्षणीकृत्य निर्माल्यवद्ग्रहणनिषेधोऽस्तु, अतः श्राद्धोत्तरकालं पाकस्य पितृसम्बन्धो भूत्वा विनष्टः इति किमाच्छेदो विनाशयेत्। वस्तुतस्तु श्राद्धशेषे नास्त्येव पितृसम्बन्धः को विनाश्यः। उपभुक्तशेषे ह्युपलक्षणभूत एवासौ। न चायं तदवस्थो निवर्त्तनमर्हति। अथ कस्मात्पितृपाकशेषादुद्धृत्य विभज्येति न व्याख्यायते। तत्तूद्धरणानर्थक्यादित्युक्तप्रायमेव। अतोऽनारब्ध एव पित्र्ये प्रारब्धापरिसमाप्ते वा यः पित्रर्थात् पाकात् समुद्धृत्य वैश्वदेवं करोति तस्य तच्छ्राद्धमासुरं भवेदिति वचनार्थः। युक्तञ्चैतत्। यदर्थं यदुपकल्प्यते तददत्त्वैव तस्मै परस्मै दीयमानञ्च यत्किञ्चित् लौकिकमप्युपहतं मन्यमानाः पृथग्जना अपि तस्य कर्मणो युक्ततां मन्यन्ते किमुत यत् पित्रर्थं देवतार्थं वोपकल्प्यते तस्मिन् प्रागेव परस्मै दीयमाने। यदा तु तत्तस्मै दत्त्वान्यस्मै दीयते न तदा कश्चिदुपहतत्वमयुक्ततां वा मन्यते। उक्तस्य श्राद्धोत्तरकाले श्राद्धार्थस्यापि वैश्वदेवे विनियोगः।

तथा च पैठीनसिः।

श्राद्धं निर्वर्त्त्य विधिवद्वैश्वदेवादिकं ततः।
कुर्य्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथेति॥

अत्राद्येन तत इति शब्देन पूर्व्वश्लोकार्थो हेतुत्वेनोच्यते। द्वितीयेन श्राद्धावशिष्टादन्नादित्युच्यते। तेनायमर्थः। यतः श्राद्धात्

पूर्व्वं पितृपाकात् समुद्धृतेनान्नेन वैश्वदेवे क्रियमाणे तच्छ्राद्धमासुरं स्यात् ततः कारणात् श्राद्धं निर्वर्त्त्य ततस्तच्छ्राद्धावशिष्टादन्नात् किञ्चिदादाय वैश्वदेवादिकं कुर्य्यादित्यर्थः। न चात्रान्नस्याप्रकृतत्वेन तच्छब्दपरामर्शायोग्यत्वं वाच्यं। पितृपाकात् समुद्धृत्येत्यस्मिन् पूर्व्वश्लोकेऽन्नप्रक्रमात्। सन्निहितं सर्व्वनाम्ना परामृश्यते। न चोपन्यासेनैव सन्निधिरिति नियमः। बुद्धिसन्निधिस्तु सन्निधिरित्यभ्युपगमात्।

अत्रादिशब्देन सर्व्वमन्नसाध्यं नैत्यकं कर्म गृह्यते। तेन नित्यश्राद्धमपि दर्शश्राद्धोपयुक्तपाकशेषात् कर्त्तव्यं। तदेवं यदि ब्राह्मणविसर्जनान्ते वैश्वदेवं कुर्य्यात् तदा श्राद्धार्थेनैव पाकेनेति। यदा तु वक्ष्यमाणप्रकारेण ब्राह्मणविसर्जनात् प्राचीनकालत्रयान्यतमकाले वैश्वदेवं कुर्य्यात् तदा पृथक् पाकेनेति।

अत्र स्मृतिचन्द्रिकाकारः।

पित्रर्थं निर्वपेत् पाकमित्यादि न दार्शं वैश्वदेविकमित्यन्तं लौगाक्षिवचनं पठित्वा दर्शश्राद्धार्थं निरुप्तमन्नं कृतेपि श्राद्धे न वैश्वदेवार्थं भवतीति च व्याख्यायैतदग्निमद्दर्शश्राद्धविषयमिति चाभिधायात्र न्यायमुक्तवान्। साग्निकस्य हि दर्शश्राद्धात् प्रागेव वैश्वदेवविधानेन श्राद्धान्ते श्राद्धशिष्टेन वैश्वदेवायोगादिति। स एष न्यायस्तद्विवक्षितार्थविपरीतमेवार्थं साधयति। उत्तरकालं वैश्वदेवाभावे श्राद्धशेषसाध्यत्वप्रसक्तिविरहान्निषेधानुपपत्तेः पूर्व्वकाल एवायं निषेध इति साग्निकानग्निकविषय एव स्यादिति। अथ प्रसक्त्याभावान्निषेधविधित्वानुपपत्तावपि यदि नित्यानुवादः स्यादित्युच्यते। तदा ताव-

दनुवादत्वमानर्थक्यञ्चेति दोषद्वयं प्रसज्येत वषम्यञ्च । अयं हि साग्निकैकविषयो भवन् पूर्वकालीनमुत्तरकालीनञ्च वैश्वदेवमाश्रयते । तत्र पूर्वकालीने निषेधविधिरुत्तरकालीने च निषेधानुवाद इति । अतो ब्राह्मणविसर्जनात् प्राचीनेषु कालेषु विहितस्य वैश्वदेवस्य श्राद्धेन सह पाकैक्यनिषेधाल्लौगाक्षिवचनं साग्निकानग्निकविषयमेवास्तु । यस्तु मन्यते "श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः" इत्यादिना श्राद्धशेषेण वैश्वदेवादिकर्त्तव्यताविधायकानाञ्च वचनानां दर्शश्राद्ध-विकृतिभूतेषु प्रतिसांवत्सरिकादिषु श्राद्धेषु निवेशः, "न दार्शवैश्वदे-विकं" इत्यादेस्तु दर्शश्राद्ध एव निवेश इति, स एवं प्रतिबोध्यः । सर्व एवैते सामान्यविधयो दर्शश्राद्धमेवारभ्याम्नायन्ते । न कश्चिद-प्यत्रानारभ्यवादोऽस्ति । अस्तु वा सोऽपि तथापि प्रकृतौ वा द्विरुक्तत्वा-दिति न्यायेन यस्य पर्णमयी जुहूर्भवतीतिवत्तस्य प्रकृतिगामित्वनिय-माद्दर्शश्राद्ध एव निवेशः । अथोच्येत आरभ्याधीतविरुद्धधर्मावरुद्धायां प्रकृतावनारभ्यवादस्य विकृतौ विनिवेश इति तन्न । पूर्वोक्तया विषय-व्यवस्थया आरभ्याधीतविरोधस्य परिहृतत्वात् । अतोऽत्रायं दर्शश्राद्ध-विषयो विधिरयं नेति वक्तव्यं ।

पिण्डदानात् प्राक् पाकभेदे स्मृत्यन्तरं ।
आतुरेभ्यः प्रहीणेभ्यो बालेभ्यो यत्र पच्यते ।
वैश्वदेवं न तत्कुर्याच्छ्राद्धार्थं यत्र पच्यते ॥

तथा ।

गृह्याग्नि-शिशु-देवेभ्यो यतये ब्रह्मचारिणे ।
श्राद्धपाकः(१) न दातव्यो यावत् पिण्डान्न निर्वपेत् ॥

(१) पितृपाक इति ग० ।

प्रचेतसाप्युक्तं ।

गृह्यपाकाद्बलिं कृत्वा निर्वर्त्य पितृयज्ञियं ।
ततो निरुप्तमन्नं यत्तेभ्योऽग्रे तन्निवेदयेत् ॥

गृह्यकर्मार्थः 'गृह्यः', बलिरत्र वैश्वदेवः, 'पितृयज्ञियं' साङ्गं पिण्डपितृयज्ञं, 'निर्वर्त्य' समाप्य, 'ततः' तदनन्तरं, श्राद्धार्थनिरुप्तं यदन्नं तत् 'तेभ्यः' श्राद्धोद्देश्येभ्यः, 'अग्रे' पूर्वं, 'निवेदयेत्' दद्यात् । अर्थादुत्तरकालमन्येभ्योऽपि दद्यात् ।

इति वैश्वदेवकपाकनिर्णयः ।

अथ वैश्वदेवककालनिर्णयः ।

तत्र तावदनग्निकेन श्राद्धात् पूर्वं वैश्वदेवः कार्य्यो न वेति संशये पूर्वपक्षः । वैश्वदेवहोमं कुर्य्यादिति वैश्वदेवविधिनैवानग्निककर्तृकस्य वैश्वदेवस्य कस्मिंश्चित् काले कर्त्तव्यतायां श्राद्धात् पूर्वकालेऽपि पाक्षिकी कर्त्तव्यता प्राप्तैव । यस्तु षट्त्रिंशन्मते पूर्वकालतायाः प्रतिषेधः ।

प्रतिवासरिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यञ्च पितरस्तथेति ॥

यश्च गौतमकृतः प्रतिषेधः ।

पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः ।
अकृतन्तद्भवेत् श्राद्धं पितॄणां नोपतिष्ठत इति ॥

स तु श्राद्धपाकेनैव वैश्वदेवस्य पूर्वकालमनुष्ठाने वेदितव्यः न तु पाकान्तरेणाप्यनुष्ठाने । अतएव वैश्वदेवे कृते अन्नशेषस्यैव श्राद्धानर्हतामाह वशिष्ठः ।

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः ।

लौकिकेग्नौ कृते शेषः पितॄनां नोपतिष्ठत इति ।

दर्शितञ्चास्मिन्नेवार्थे श्राद्धपाकात् समुद्धृत्येत्यादिपैठीनसिवचनं।

न ह्येतच्छ्राद्धोत्तरकाले श्राद्धपाकात् समुद्धृत्य वैश्वदेवानुष्ठानस्य निषेधकं। श्राद्धपाकात् समुद्धृत्येत्यत्रोद्धरतेर्विभागमात्राभिधायकत्वं मन्यमानस्यापि मते श्राद्धं निर्वर्त्त्य विधिवदित्यादिवचनप्रतिपादितश्राद्धशेषकर्त्तव्यताविरोधापत्तेः। अतोऽनग्निकस्य पाकान्तरेण श्राद्धात् पूर्वं वैश्वदेवहोमो न केनचित् प्रतिषिद्धोऽतस्तेनापि कर्त्तव्यः। उच्यते। तथा श्राद्धोत्तरेकाले श्राद्धशेषेणान्नेन वैश्वदेवस्य विहितत्वाच्छ्राद्धपाकात् समुद्धृतेनैकदेशेन कर्त्तव्यताया निषेधात्तदन्यकालविषया व्याख्यायन्ते। तथा श्राद्धात् पूर्वकाले वैश्वदेवस्य सर्वथा निषिद्धत्वात्तदन्यकालविषया अपि ते व्याख्येयाः। तथाचानग्निकेन श्राद्धोत्तरकालं श्राद्धपाकेनापि वैश्वदेवः कर्त्तव्यः। श्राद्धमध्ये तु न कदाचिच्छ्राद्धपाकेन किन्तु पाकान्तरेणैव। श्राद्धात् पूर्वन्तु सर्वथा न कर्त्तव्य एवेति। ननु सर्वेषामेकपाककर्त्तव्यतानिषेधानां श्राद्धमध्यकालिकवैश्वदेवैकविषयत्वेनानग्निकैकविषयत्वे च सङ्कोचत्रयमापद्यते। तथा हि क्रियासामान्याक्षिप्तमाख्याताभिधेयं सङ्ख्याक्षिप्तं चाख्याताभिहितं वा साग्निकानग्निकविषयद्वयव्यापकं कर्तृसामान्यमनग्निककर्तृरूप एवैकस्मिन्विशेषे व्यवस्थाप्यते। साग्निककर्तृकस्य वैश्वदेवस्य पूर्वकालत्वनियमेन मध्यकालत्वाभावादिति कर्तुः सङ्कोचः। केवलं वैश्वदेवशब्दावगतस्य पूर्वमध्यमकालीनानेकवैश्वदेवक्रियाव्यक्तिव्यापकस्य वैश्वदेवरूपक्रियासामान्यस्य मध्यकालीनवैश्वदेवव्यक्त्यैकविषयत्वे क्रियासङ्कोचः। अतएव कालसङ्कोच इति

सङ्कोचत्रयमापद्यते । किञ्च एवं सति साग्निककर्तृकस्य वैश्वदेवस्य श्राद्धपाकसाध्यता न निवर्त्तेत । पूर्वकालतानिषेधवाक्यस्य चानग्निकैकविषयत्वे कर्तृसङ्कोचः स्यादिति । अत्राभिधीयते । तत्रेदन्तावद्विचार्य्यं । किं श्राद्धात् पूर्व्वं वैश्वदेवहोमो न कर्त्तव्य इत्येष निषेधः क्रियासामान्यावगतकर्तृसामान्यान्वयनिर्वाहार्थं श्राद्धपाकादुद्धृत्य न कर्त्तव्यमिति वाक्यान्तरेण सहैकवाक्यतया श्राद्धपाकेन न कर्त्तव्य इत्येवं साग्निकानग्निकविषयत्वेन व्याख्येयः । उत यथा श्रुतत्वानुग्रहाय वैश्वदेवस्य स्वरूपमात्रनिषेधतयानग्निकैकविषयत्वेनेति तत्र

नैरपेच्याच्छ्रुतत्यागाद्विधेयान्तरसंक्रमात् ।
आनर्थक्यप्रसङ्गाच्च नान्येनास्यैकवाक्यता ॥
न वास्याः पूर्वमेवास्य साग्निकेन सहान्वयः ।
पूर्वकालोपदेशेन बाधितत्वात् प्रतीयते ॥
अन्योन्याश्रयदोषोऽत्र प्रसज्येतान्वये स्फुटः ।
अन्वयो ह्येकवाक्यत्वे तच्चापि प्रमितेऽन्वये ॥
न च भाव्येकवाक्यत्वप्रतिसन्धानतोऽन्वयः ।
योग्यः कर्तुमुपन्यस्तदोषजातं विजानता ॥
न च प्रत्यक्षबाधेन कल्प्यस्यानुग्रहो मतः ।
कल्प्यं हि कर्तृसामान्यं निषेधं बाधते श्रुतं ॥

वैश्वदेवस्वरूपनिषेधेनाप्युपपद्यमानं वाक्यं न वाक्यान्तरेण सहैकवाक्यतामपेक्षते । वाक्यान्तरमपि तथा । एकवाक्यत्वे च श्रुतवैश्वदेवस्वरूपनिषेधपरत्वहानेन श्राद्धपाकसाध्यतानिषेधपरत्वं निषेधविधेः कल्प्येत । एवञ्च सत्यानर्थक्यमपि एकपाककर्त्तव्यतानिषेध-

कैरेव कृतार्थत्वादित्याद्यश्लोकार्थः। द्वितीयादयस्तु व्यक्तार्था एव श्लोकाः। अतः श्राद्धात् पूर्वं वैश्वदेवो न कर्त्तव्य इत्येष निषेधस्तावदनग्निकमेवाश्रयते। श्राद्धपाककर्त्तव्यतानिषेधास्तु सर्वे साग्निकमनग्निकञ्चाश्रयन्ते। तत्रानग्निकं प्रति श्राद्धपूर्वकाले सर्वथा वैश्वदेवस्य निषिद्धत्वादनग्निकं मध्यकाले वैश्वदेवकर्त्तृभूतमाश्रयन्ते साग्निकन्तु पूर्वकाले कर्त्तृभूतं। अतो न पूर्वोक्ताः सङ्कोचदोषाः। अनग्निकपूर्वकालान्तु तेषां सङ्कोचो वचनाद्युक्त एव अतोऽनग्निकेन सर्वथा श्राद्धात् पूर्वकाले वैश्वदेवो न कर्त्तव्यः। मध्यमोत्तरकालतानियमविधिरप्यनग्निकैकविषयैस्तस्य पूर्वकाले वैश्वदेवोनिवर्त्तितः। न चैवं प्रतिषेधस्यानर्थक्यं वाच्यं स्मृतिग्रन्थान्तस्थत्वादिति, तदेवं यत्र कर्त्तृसामान्यान्वयवादितापि वाक्यान्तरैकवाक्यता न लभ्या कुतस्तत्रानग्निकरूपैकविशेषान्वयवादितामवाप्स्यति।

श्राद्धमध्ये वैश्वदेवकर्त्तव्यता तु ब्रह्माण्डपुराणे।

वैश्वदेवाहुतीरग्नावर्वाक् ब्राह्मणभोजनात्।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम्॥ इति।

'अर्वाक्ब्राह्मणभोजनात्' इत्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तं। 'श्राद्धं कृत्वा भूतयज्ञादि स्मृतं' इत्यनेन भूतयज्ञस्यैव श्राद्धान्ते कर्त्तव्यतेतिकृतार्थाद्वैश्वदेवाहुत्यनन्तरमेव वलिहरणं कार्यमिति दर्शितमिति स्मृतिचन्द्रिकाकारः।

अयमेकोऽनग्निकवैश्वदेवस्य कालः, द्वितीयोऽपि भविष्यत्पुराणे।

पितॄन् सन्तर्प्य विधिवद्वलिं दद्याद्विधानतः।
वैश्वदेवं ततः कुर्यात् पश्चाद्ब्राह्मणवाचनम्॥

बलिशब्दोपि तत्रैव व्याख्यातः ।

ये अग्निदग्धा मन्त्रेण भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदेति ॥

अनेन विकिरसंज्ञकबलिप्रदानानन्तरं स्वस्तिवाचनात् पूर्वं वैश्वदेवं कुर्यादित्युक्तं भवति । अयं द्वितीयकालः । तृतीयोपि स्मृतिपुराणाद्यावुक्तः । तत्राह मनुः ।

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्ज्जिताः ।
ततो गृहबलिं कुर्यादिति धर्मो व्यवस्थितः ॥

अस्य मेधातिथिकृता व्याख्योच्यते । भुञ्जानेषु द्विजेषु यद्भुज्यधिकरणपात्रलग्नं भूमौ च पतितमन्नं तस्माद्देशात्तावन्न मार्ष्टव्यं यावत् ब्राह्मणा न निष्क्रान्ताः । ततो निष्पन्ने श्राद्धकर्मणि अनन्तरं वैश्वदेवहोमान्वहिकातिथ्यादिभोजनञ्च कर्त्तव्यं । बलिशब्दस्य प्रदर्शनार्थत्वात् । अन्ये त्वाहुः । भूतयज्ञ एव बलिशब्देन प्रसिद्धतरः ततश्चाग्नौ होमः श्राद्धात् प्राक् न विरुद्ध्यत इति । न चैतद्वाच्यं, पित्र्ये कर्मणि प्रारब्धे कथं तन्मध्ये कर्मान्तरस्य करणं । यतो यथा पूर्वेद्युर्निमन्त्रितेषु ब्राह्मणेषु श्राद्धमकृत्वैव सायं प्रातर्होमकरणं न विरुद्ध्यते एवमौपसदिकस्य वैश्वदेवहोमस्याप्यन्तराकरणं न विरुद्ध्यत एव । अतोभूतयज्ञे समुत्कृष्यमाणे तदायुत्कर्षन्यायाद्भूतयज्ञात्पराश्च एव पदार्था उत्कृष्यन्ते नावाञ्चोपि वैश्वदेवादय इति । अत्रोच्यते । यदि श्राद्धात् प्राक् वैश्वदेवहोमः क्रियते ततः श्राद्धं ततो बलिहरणं तदा देवयज्ञभूतयज्ञौ व्यवधीयेयातां । तथा च वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव चेत्यादिवचनप्रतिपाद्यमानस्तयोरव्यवहितपौर्व्वापर्य्यात्मकः क्रमः

क्रमो बाध्येत । तदन्तोत्कर्षनयोपि हि क्लृप्तक्रमाबाधयैवाश्रीयते । अतस्तदबाधयैव तदन्तोत्कर्षोपि क्वचिदाश्रयनीयः । न चैवं सति तदाद्युत्कर्षनियमविरोधः । यत्र हि पूर्वोत्कर्षे तदीययोः क्रम-काल-योर्बाधः तत्रासौ नियतः । न च कृतेऽपि श्राद्धेऽनुष्ठीयमाने वैश्वदेवे तदीययोः क्रम-कालयोर्बाधः । तस्मात् सर्वमहायज्ञानुष्ठानं श्राद्धा-दौत्तरकालिकमिति । समाप्ताच मेधातिथिकृता व्याख्या ।

अयमेवार्थी मत्स्यपुराणे ।

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्ज्जिताः ।
वैश्वदेवं ततः कुर्य्यान्निवृत्ते पितृकर्मणीति ॥

भविष्यत्पुराणे ।

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसर्ज्य च ।
वैश्वदेवादिकं कर्म्म ततः कुर्य्यान्नराधिप ॥

स्मृत्यन्तरे ।

यदा श्राद्धं पितृभ्यस्तु दातुमिच्छति मानवः ।
वैश्वदेवं तदा कुर्य्यान्निवृत्ते श्राद्धकर्मणि ॥

आह पैठीनसिः ।

श्राद्धं निर्वर्त्त्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्य्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथा ॥ इति ।

श्राद्धसमाप्तौ मार्कण्डेयः ।

ततो नित्यक्रियां कुर्य्याद्भोजयेच्च तथातिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ॥

नित्यक्रियां वैश्वदेवहोम-बलिहरण-नित्यश्राद्धादिरूपां । तदेव-

मनग्निकर्तृकस्य वैश्वदेवादेस्त्रयः कालाः। एकोऽग्नौकरणानन्तरं। अन्यो विकिरादुपरि। तृतीयो ब्राह्मणविसर्जनात्पश्चादिति।

इत्यनग्निक-कर्तृक-वैश्वदेवकाल-निर्णयः।

अथ साग्निककर्तृक-वैश्वदेव-निर्णयः।

अस्य न श्राद्धमध्ये श्राद्धान्ते वानुष्ठानं किन्त्वकृत एव श्राद्धे। यतः श्राद्धात् पूर्वं पिण्डपितृयज्ञो विहितः तस्मादपि पूर्वं वैश्वदेवः। तथा च देवलः।

अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्त्तिताः।
अन्यत्र पिण्डयज्ञात्तु सोऽपराह्णे विधीयते॥

अत्र स्थालीपाकसाध्यानि कर्म्माणि स्थालीपाकशब्देनोच्यन्ते। तानि पिण्डपितृयज्ञादन्यानि अकृत एव वैश्वदेवे क्रियन्ते। पिण्डपितृयज्ञस्तु कृते वैश्वदेवे पश्चादपराह्णे क्रियते।

पितृयज्ञश्च श्राद्धात् पूर्वमुक्तो मनुना।

पितृयज्ञन्तु निर्वर्त्त्य विप्रश्चन्द्रक्षयेऽग्निमान्।
पिण्डान्वाहार्यकं श्राद्धं कुर्य्यान्मासानुमासिकमिति।

अमुमेवार्थं स्पष्टमेवाह लौगाक्षिः।

पक्षान्तं कर्म्म निर्वर्त्त्य वैश्वदेवं च साग्निकः।
पिण्डयज्ञं ततः कुर्य्यात्ततोऽन्वाहार्य्यकं बुध इति॥

'पक्षान्तं कर्म' अग्न्यन्वाधानं। 'अन्वाहार्य्यं' दर्शश्राद्धम्।

ननु पक्षान्त-पिण्डपितृयज्ञयोर्मध्ये विधानादेव वैश्वदेवस्य साग्निककर्तृकत्वावगमात् किमर्थं साग्निकग्रहणं, पक्षादिस्थालीपाकपिण्डपितृयज्ञकर्तुर्निरग्निकस्य औपासनाग्नेर्निवृत्त्यर्थं। अतस्तेनाप्यनग्नि-

कान्तरवत्पूर्वप्रकरणोक्तेषु कालेषु वैश्वदेवः कर्त्तव्यः। गोभिलेनापि पित्र्यस्य वा स्वस्त्ययनवाक्यार्थस्य वेत्यत्र सूत्रे सर्वप्रकारस्यापि श्राद्धस्यादावेव वैश्वदेव इत्युक्तं। श्रुतावपि साग्निकस्यादावेव वैश्वदेवः श्रूयते। नाकृतस्याश्नीयुर्नाकृतं दद्युरिति। साग्निकस्यापि श्राद्धविशेषे पश्चादेव वैश्वदेवः।

तथा च परिशिष्टे।

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि॥

अत्र पार्वणग्रहणमनेकदैवत्योपलक्षणार्थं। ततश्चैकादशाहिकव्यतिरिक्तेषु श्राद्धेषु साग्निकस्य पूर्वमेव वैश्वदेवः। एकादशाहिक एव तु पश्चादिति निर्णयः।

तदाह शाखङ्कायनः।

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवन्तु साग्निकः।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयत इति॥

इति साग्निककर्त्तृकवैश्वदेवकालनिर्णयः।

अथ भूतयज्ञादिकालनिर्णयः।

तत्र कर्कोपाध्यायो मन्यते। यदैव वैश्वदेवस्तदैव तदनन्तरं भूतयज्ञसंज्ञकोबलिः। यस्तु ततो गृहबलिं कुर्य्यादिति मनुना श्राद्धान्ते बलिरुक्तः स तु वास्तुदेवताभ्यः न भूतयज्ञाख्यः। अतएव ब्राह्मणविसर्जनमभिधायाह पारस्करः।

विसृज्य बलिदानेन पूजयेद्गृहदेवता इति।

मङ्गधरोऽपि।

यदैव वैश्वदेवस्तदैव तदनन्तरं भूतयज्ञोऽपि। न कदाचिदपि वैश्वदेव-भूतयज्ञयोर्मध्ये कर्मानुष्ठानेन व्यवधानं कर्त्तव्यं। अव्यवधान-वचनात्।

तथा हि।

देवयज्ञः स्मृतः पूर्वं भूतयज्ञस्तथापर इति।

तथा।

देवेभ्यस्तु हुतादन्नाच्छेषाद्भूतबलिं हरेदिति।

यत् पुनः पूर्वं कृते वैश्वदेवे श्राद्धभूतयज्ञस्य वचनं तद्वैश्वदेवानन्तरमेव भूतयज्ञे कृतेपि श्राद्धाङ्गतया तावन्मात्रस्य पुनरनुष्ठानं कर्त्तव्यमित्येवं परं। यदपि पूर्वं कृते वैश्वदेवे श्राद्धान्ते गृहबलेर्वचनं तदपि वैश्वदेवकाल एव कृतस्यापि गृहबलेः श्राद्धाङ्गतयैव तावन्मात्रस्य पुनः करणार्थमिति। तदेतदनुपपन्नं। भूतयज्ञादेः पुरुषार्थश्राद्धाङ्गविरोधात्। अथ संयोगपृथक्त्वविधिवदेकस्योभयार्थता न विरुध्यत इति मन्यसे। तन्न। श्रुत्यादेः श्राद्धाङ्गतापादकस्यादर्शनात्संयोगपृथक्त्वस्यासिद्धेः। अथ कर्मान्तरमेवेदं प्रकरणापादित-श्राद्धाङ्गभावं विधीयत इत्युच्यते तदपि न। पुरुषार्थस्यैव भूतयज्ञस्य वैश्वदेववत्प्रत्यभिज्ञानात्। अन्यथा वैश्वदेवं ततः कुर्यादित्यत्रापि श्राद्धाङ्गतया वैश्वदेवान्तरविधिप्रसङ्गः। न चैतद्युज्यते, गौरवात्। क्रममात्रविधौ हि लाघवं प्रत्यभिज्ञानुग्रहश्चेति गुणः, अतो वचनाद्व्यवधानमपि कदाचिदभ्युपेयं। वचनञ्च स्मृतिचन्द्रिकाकारेण दर्शितं।

वैश्वदेवाहुतीरग्नावर्वाक् ब्राह्मणभोजनात्।

जुहुयात् भूतयज्ञादि श्राद्धं कृत्वा तु तत् स्मृतमिति॥

न चात्राकृतिमात्रश्रवणाद्वैश्वदेवाङ्गं बलिहरणं पश्चान्न कर्त्तव्यमिति मन्तव्यं । उत्तरार्द्धे भूतयज्ञादेरेव श्राद्धानन्तरकाले विधानात् । अतएव वैश्वदेवं प्रकुर्वीत नैत्यकं बलिमेव चेति श्राद्धप्रकरण एव मत्स्येनानयोर्नैरन्तर्यमुक्तं ।

इति भूतयज्ञादिकालनिर्णयः ।

अथ नित्यश्राद्धकालनिर्णयः ।

भूतयज्ञादिप्रकरणनिर्णीतमपि नित्यश्राद्धं किञ्चिद्विशेषाभिधानाय पुनः प्रस्तूयते ।

तत्र मार्कण्डेयः ।

ततो नित्यक्रियां कुर्य्याद्भोजयेच्च तथातिथीन् ।
ततस्तदन्नमुञ्जीत सह भृत्यादिभिर्नरः ॥

'ततः' तेन श्राद्धशेषान्नेन, 'नित्यक्रियां' अन्नसाध्यां, अतोनित्यश्राद्धमपि तेनैव कर्त्तव्यं । अथ वा नित्यश्राद्धं पृथक्पाकेन कार्य्यं । तस्य श्राद्धात्मकत्वेन श्राद्धकर्मभूतस्य पाकस्य पृथक्प्रयुक्तिसम्भवात् ।

अत एव नित्यश्राद्धमधिकृत्य मार्कण्डेयपुराणेऽभिहितं ।

पृथक्पाकेन नैत्यमिति ।

अस्यार्थः । दर्शादिश्राद्धपाकात् पृथक्पाकेन नित्यश्राद्धं कर्त्तव्यं ।

अन्ये त्वेतन्नेत्याहुः । दर्शादिश्राद्धपाकशेषेण नित्यश्राद्धमपि कर्त्तव्यमिति मन्यन्त इत्यर्थः ।

एतच्च श्राद्धान्तरे कृते सत्यनियतं । यदुक्तं तत्रैव ।

नित्यक्रियां पितॄणाञ्च केचिदिच्छन्ति मानवाः ।
न पितॄणां तथैवान्ये शेषं पूर्व्ववदाचरेत् ॥

पितॄणां 'नित्यक्रियां' नित्यश्राद्धं, अस्य च नित्यश्राद्धविकल्पस्यैवं व्यवस्था । अमावास्यादिसाधारणकालिकेषु श्राद्धेषु तथा नान्दीमुख-तीर्थश्राद्धेषु च नित्यश्राद्धदेवतानामिष्टत्वात् प्रसङ्गसिद्धतया नित्य-श्राद्धं न कर्त्तव्यं । सांवत्सरिकैकोद्दिष्टादिषु तु सर्वासां नित्यश्राद्ध-देवतानां इज्यानियमाभावान्नित्यश्राद्धमवश्यं कर्त्तव्यं । 'शेषं' वैश्वदेवा-दिकं, 'पूर्ववदाचरेत्' नियमेनैव कुर्य्यादित्यर्थः ।

तदुक्तं चमत्कारखण्डे ।

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिध्यति ।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वात्तन्न हापयेत् ॥

इति नित्यश्राद्धकालनिर्णयः ।

अथ जप्यानि ।

तत्र तावच्छ्राद्धभोक्तृब्राह्मणानां जप्यानि आह, भृगुः ।

आमन्त्रितो जपेद्दोग्ध्रीमासीनस्तु निषङ्गिणः ।
भुक्का तु वामदेव्यञ्च श्राद्धे भोक्ता न दुष्यति ॥

'आमन्त्रितः' निमन्त्रणाभ्युपगमानन्तरं, 'दोग्ध्रीमिति' दोग्ध्री धेनुरित्यादिपदोपलक्षितानि आब्रह्मन् ब्रह्मणो ब्रह्मवर्चसी जायता-मित्यादीनि योगक्षेमो नः कल्पतामीत्यन्ता नित्यं यजूंषि जपेत् । 'आसीनः' श्राद्धदेशोपकल्पितसदर्भासनोपविष्टः । निषङ्गिण इति । नमः कृत्स्नायतया धावते सत्वानां पतय इत्याद्येकं यजुः, नमो वञ्चते परिवञ्चते स्तायूनां पतय इत्यादि द्वितीयं, नमो धृष्णवे च प्रमृशाय चेत्यादि तृतीयं, ये तीर्थानि प्रचरन्तीत्यादि चतुर्थं, स इषुहस्तैः स निषङ्गिभिरित्यादि पञ्चमं, एवमेतान्निषङ्गिपदयुक्तान् पञ्चमन्त्रान्

जपेत्। वामदेव्यं कयानश्चित्र आभुव इत्यादि तृचं। 'भुक्ता' कृत-श्राद्धान्नभोजनः, विसर्जनानन्तरं जपेत्। सामविशेषो वामदेव्यं कयानश्चित्र आभुव इत्यादि तृचं।

गोभिलः।

आमन्त्रितो जपेद्दोहान्नियुक्तस्तृषभान् जपेत्।
अनिषङ्गांश्च तत्रैव जप्त्वाश्नीयात् द्विजोत्तमः॥
भुक्ताचम्य पदस्तोभान् जपेत्तत्र समाहितः।
गोसूक्तञ्चाश्वसूक्तञ्च मध्ये तस्य मनीनरं॥
गत्वासीनः शुचौ देशे वामदेव्यं ततो जपेत्।
एवं साममिराच्छन्नो भुञ्जानस्तु द्विजोत्तमः॥
श्राद्धभोजनदोषैस्तु महद्भिर्नोपलिप्यते।
अन्यथैव हि भुञ्जानो हव्य-कव्येष्वमन्त्रवित्।
आत्मानमन्नदातारङ्गमयत्यासुरीं स्थितिम्॥

इति श्राद्धभोक्तृब्राह्मणजप्यानि।

अथ यजमानजप्यानि।

तत्राह मनुः।

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि।
आख्यानानीतिहासांश्च पुराणानि खिलानि च॥

'स्वाध्यायः' वेदः। 'धर्मशास्त्राणि' मन्वादिप्रणीता ग्रन्थाः। 'आख्यानानि' सौपर्ण-मैत्रावरुण-पारिप्लवादीनि, वाहृचे पठ्यन्ते। अन्यान्यपि पितृसम्बन्धीनि पौराणानि सप्तव्याधाख्यानप्रभृतीनि। 'इतिहासाः' महाभारतादयः। 'पुराणानि' सर्गादिपञ्चलक्षणलक्षितानि शास्त्राणि तद्यथा।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चेति पुराणं पञ्चलक्षणमिति ॥

'खिलानि' श्रीसूक्तमहानाम्निकादीनि। एतानि भुञ्जानान् ब्राह्मणान् श्रावयेत्।

पाद्म-मात्स्य-प्रभासखण्डेषु।

स्वाध्यायं श्रावयेत् पैत्र्ये पुराणानि खिलानि च।
ब्रह्म-विष्णवर्क-रुद्राणां स्तोत्राणि विविधानि च ॥

अत्र विशेषमाहतः शङ्ख-लिखितौ।

पवित्रपाणिर्दर्भेष्वासीनो मधुवाता इति जपेत्।

'पवित्रपाणिः' दर्भहस्तः। 'दर्भेष्वासीनः' दर्भोपर्य्युपविष्टः। मधुवाता ऋतायत इति तिस्रः ऋचोजपेत्। एतच्च विहितसमस्तजपोपलक्षणार्थम्। कुशपाणिः कुशासीन उपवीती जपेत्ततः। वेदोक्तानि पवित्राणि पुराणानि खिलानि चेति ॥ ब्रह्माण्डपुराणेऽभिधानात्।

अत्र मधुवाता इत्यादिजपः प्राचीनावीतिनैव कार्यः। यस्तु भुञ्जानानां ब्राह्मणानामग्रे यजमानेन क्रियते स यज्ञोपवीतिनैव-कार्य इत्युपरिष्टाद्वक्ष्यते।

अग्रे कर्त्तव्यत्वञ्च जपस्य यमेनोक्तं।

स्वाध्यायं श्रावयेत्सम्यक् धर्मशास्त्राणि चासकृत्।
इतिहासांश्च विविधान् कीर्त्तयेत्तेषु चाग्रतः।
हर्षयेद् ब्राह्मणान् हृष्टोभोजयेदशनं शनैः ॥

'तेष्वग्रतः' तेषां पुरतः।

पुरतः स्थितेनाप्यभिमुखेनैव कर्त्तव्यमित्याह, प्रचेताः।

भुञ्जानेषु तु विप्रेषु ऋग्यजुःसामलक्षणं।
जपेदभिमुखो भूत्वा पित्र्यञ्चैव विशेषतः॥

'ऋग्यजुःसामलक्षणं' जप्यमिति शेषः। तेषामृग्यत्रार्थवशेन पाद-व्यवस्था। गीतिषु सामाख्या शेषे यजुःशब्दः। 'पित्र्यं' पितृदेवत्यं।

निगमः।

भुञ्जत्सु जपेत्पवित्रमन्त्रान् ऋग्यजुःसामेतिहासपुराणानि रक्षो-घ्नीपावमानीरुदीरतामवरमध्वन्वतीश्च मन्त्रान द्वादशाष्टाक्षर-प्रभृतीन्।

'रक्षोघ्नीः' कृणुष्वपाजः प्रसितिं न पृथ्वीमित्याद्याः पञ्चदशर्चः। रक्षोहणं वाजिनमाजिघर्मीति पञ्चविंशतिः। इन्द्रासोमातपतं रक्ष उब्जलमिति पञ्चविंशतिः। अग्ने हंसिन्यत्रिणमिति नव पावमान्यः। पुनन्तु मा पितर इत्याद्याः षोड़षर्चः। तरत्समन्दीति वर्गः। पवस्व विश्वचर्षण इति त्रिंशदृचः। त्वं सामासीतिद्वात्रिंशतित्येताः। उदीरतामवर इत्याद्याश्चतुर्दश। मधुमत्यः मधुवाता ऋतायत इत्याद्याः। तद्वा नरासनयेदमित्येवं प्रकारश्च। अन्नवत्यः पितुं नुस्तो षमित्याद्याः एकादशर्चः।

बौधायनः।

मध्वृचोऽथ पवित्राणि श्रावयेदाशयेच्छनैः।

'मध्वृचः' मधुमत्य ऋचः'। 'पवित्राणि' पुरुषसूक्तादीनि सूक्तानि।

हारीतः।

यद्यत् पूतं मन्येत पुनन्तु मा पितर इति षोड़शपावमानीर्जपेदा-दितस्तीन्। पूर्वं पावनलिङ्गकं यद्यन्मन्येत तज्जपेत्। पुनन्तु मा

पितर इत्येता षोड़श पावमानीश्च। तासामादितस्त्रीन् मन्त्रान् विशेषेण जपेत्।

प्रचेताः।

यजूंषि चैव रुद्रांश्च रक्षोघ्नीः ऋच एव च।
पावमानीः पुराणञ्च धर्म्मशास्त्राणि चैव हि॥

'रुद्रान्' शतरुद्रियप्रभृतीन् रुद्रप्रकाशकान् मन्त्रान् जपेदिति-शेषः।

जपेदित्यनुवृत्तौ शङ्ख-लिखितौ।

पवित्रं धर्मशास्त्रमप्रतिरथं मध्ये गायत्रीमनुश्राव्य।

'अप्रतिरथं' सामेति भाष्यकारः। आशुः शिशान इत्यादिद्वादशर्चमित्यन्ये।

विष्णुः।

ततस्तदस्तु ब्राह्मणेषु ये मे प्रकामा अहोरात्रैर्यद्‌ः क्रव्यादिति जपेदितिहासपुराणं धर्मशास्त्राणि च।

अस्यार्थवाद आदित्यपुराणेऽभिहितः[१]।

वहन्त्यमृतनद्यस्तु पितृलोके महाद्भुताः।
इतिहासपुराणैस्तु पठितैः पितृकर्म्मणीति॥

विष्णुधर्मोत्तरे।

यन्मे प्रकामाहोरात्रैर्यद्‌ः क्रव्यात्तथैव च।
इतिहासपुराणानि धर्मशास्त्राणि चाप्यथ।
सप्तार्चिः परमं मन्त्रं श्रावयेदश्नतो द्विजान्॥

(१) दर्शित इति ग०।

सौरपुराणे ।

धर्मशास्त्रं पुराणानि तथाथर्वशिरस्तथा ।
ऐन्द्रञ्च पौरुषं सूक्तं श्रावयेद्ब्राह्मणांस्ततः ॥

पाद्म-मात्स्य-प्रभासखण्डेषु ।

इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः ।

सुरूपकृत् नु सुतय इत्यादि सूक्तत्रयं प्रत्येकं दशर्चं, इन्द्रमिद्गाथिन इत्यादिसूक्तत्रयञ्च । एतान्यैन्द्राणि । [१]इमा रुद्राय तवसे कपर्दिने इत्येकादशर्चं । कद्रुद्राय प्रचेतस इति नवर्चं । आ ते पितर्मरुतां सुम्नमेत्विति पञ्चदशर्चं । इमा रुद्राय स्थिरधन्वने गिर इति चतुर्ऋचं । एवमादीन्यैशानानि सूक्तानि । स्वादिष्ठयेत्यादीनि चत्वारि सूक्तानि सौम्यानि ।

भविष्योत्तर-भविष्यत्पुराणयोः ।

शुद्धवत्यश्च कूश्माण्ड्यः पावमान्यस्तरत्समाः ।
रचोघ्नानि च सूक्तानि पितृसूक्तान्यथापि च ।
भुञ्जानेषु द्विजेष्वन्यानपि मन्त्राञ्छुभांस्तथा ॥

याज्ञवल्क्यः ।

आहृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ।

पूर्वजपं सव्याहृतिकाङ्गायत्रीमित्यादि पूर्वोक्तं । तद् यथा ऋक्-शाखामग्निमील इति नवर्चं सूक्तं । वायवाया हि दर्शतेति च । अश्विना यज्वरीरिष इति द्वादशर्चं । गायन्ति त्वा गायत्रिण इति च । इन्द्रं विश्वा अवीवृधन्नित्यष्टौ ऋचः । अस्य वामस्य पलितस्य होतुरिति

(१) वाजसनेयसंहिता १६. ४८.

द्विपञ्चाशदृचं सूक्तं। आरण्यकं विदा मघवन् विदा गातुमिति खण्डं। शाङ्खायनीयानान्तु नवा उ देवाःतुधमिद्धन्दुरिति नवर्चं। अग्निमीळे पुरोहितमित्यादीन्येकादश सूक्तानि।

अथ यजुर्वेदिनां जप्यानि।

तत्र हारीतः।

अत्र पितर इति यजुः। नमो वः पितर इति यजुः स्मान्तं। [१]मधु वाता ऋतायत इति तिस्रः। [२]पुनन्तु मा पितर इत्यनुवाकः। त्वं सोम प्रचिकित इति चैषा पित्र्या संहिता। एताञ्जपन् पितॄन् प्रीणाति पितॄणां चास्याक्षयं भवति।

'स्मान्तं' वयन्तेषां वसिष्ठा भूयास्मेत्येतदन्तं। यजुःप्रकरणादस्मताम्यतो जपतः पितृप्रीतिः। अस्यान्नं च पितॄणामक्षयं भवति।

बौधायनः।

रक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च।

'रक्षोघ्नानि' रक्षोहननलिङ्गानि देवव्रतसंज्ञानि। लौकिकानि सामानि। अथवा इा उत्विश्यति श्रिता इति प्रस्तावं ऊहो वाहो इडा इति निधनकं साम रक्षोघ्नं। सनादग्न इति आहोवोहासनादग्ना इह मृणसि यातुधानानिति प्रस्तावं, विश्वपाया इति निधनकञ्च। 'स्वधावन्ति' स्वधाशब्दयुक्तानि, स्वधाविभ्यः स्वधानम इतिप्रकाराणि यजूंषि।

मात्स्य-पाद्म-प्रभास-खण्डेषु।

---

(१) वाजसनेयसंहिता १३. १७.

(२) वाजसनेयसंहिता १२. ३७.

तथैव शान्तिकाध्यायं मधुब्राह्मणमेव च ।
मण्डलब्राह्मणं तद्वत् प्रीतिकारि च यत् पुनः ॥
विप्राणामात्मनश्चापि तत्सर्वं समुदीरयेत् ।
भारताध्ययनं कार्य्यं पितॄणां परमं प्रियं ॥

शन्नोवातः पवतामित्यादिः शान्तिकाध्यायः । इयं पृथिवीत्यादि मधुब्राह्मणं । यदेतन्मण्डलं तपतीत्यादि मण्डलब्राह्मणं । तथा भुञ्जानानां विप्राणां आत्मनश्चापि यत्प्रीतिकरमितिहासाख्यानादि वीणा-वेणुध्वन्यादिकं, 'तद्वत्' वेदजपवत्, श्रद्धापूतेन मनसा तदपि कारयेत् । तथा च ब्रह्मपुराणे ।

वीणा-वंशध्वनिं वाथ विप्रेभ्यः सन्निवेदयेत् ।

अन्यान्यपि समाचारात् पवित्राणि जप्यानि । तद्यथा तैत्तिरीयाणां । दिवो वा विष्णव उत वा पृथिव्या इत्यादि विष्णवेत्यन्तानि यजूंषि । अग्न उदधियात इषुर्युवानामेत्यादि वन्यपश्चम इत्यन्तानि च । रक्षोहणो वो बलगहनो वैष्णवान् खनामीत्यनुवाकः । सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपेदित्यनुवाकः । उशन्तस्त्वा हवामह उशन्तः समिधीमहीत्यनुवाकः । असौ वा आदित्योऽस्मिन् लोके आसीदित्यनुवाकः । [१]ध्रुवासि धरुणास्तृतेत्यनुवाकः । इन्द्रो वृत्रं हत्वेत्यनुवाकः । वैश्वदेवेन वा प्रजापतिः, प्रजा असृजत तावरुणप्रघासैर्वरुणपाशादमुञ्चतेत्यनुवाकद्वयं । अयं वा वयः पवत इत्यनुवाकत्रयं । अर्चां प्राची महती दिगुच्यत इत्यनुवाकः । अमृतोपस्तरणमसीत्यादयः पञ्चानुवाकाः । ब्रह्ममेतुमामितित्रिसुपर्णाद्यनुवाकत्रयं ।

(१) वाजसनेयसंहिता १३. १६.

अणोरणीयान्महतोमहीयानित्यनुवाकः। मेधाम इन्द्रो ददातु मेधा देवी सरस्वतीत्यादयश्चत्वारोऽनुवाकाः। न कञ्चन वसतौ प्रत्याचक्षीतेत्यादि। य एवं वेद इत्युपनिषदित्यन्तं खण्डं।

वाजसनेयिनान्तु। सप्रणवां सव्याहृतिकाङ्गायत्रीन्तिः सकृद्वा पठित्वा, राचोघ्नीः कृणुष्व पाजः इति पञ्चर्चः। अग्नये कव्यवाहनाय स्वाहेत्याद्याः षट्कण्डिकाः। सुरावन्तमित्याद्याः सप्तदश। [१]आद्या-जान्वित्याद्यानव पित्र्यमन्त्रान्। पुरुषसूक्तं[२] सहस्रशीर्षेति षोड़शर्चं। [३]आशुः शिशान इत्यादि सप्तदशर्चं। अप्रतिरथं यज्जाग्रत इत्यादि षट्चर्चं। शिवसङ्कल्पं प्रजापतिं वै भूतानीत्यादि पिण्डपितृयज्ञब्राह्मणं। महाहविषेति पितृयज्ञब्राह्मणं। पञ्चैव महायज्ञा इत्यादि ब्रह्मयज्ञब्राह्मणं। इन्द्रस्य वै यत्रेत्यादि सुरादि सुराहोमब्राह्मणमिति।

मैत्रायणीयानान्तु। इषेत्वा सुभूताय वायवः स्थ देवोवः सवितेत्यादयः पञ्चानुवाकाः। कठानान्तु। सोमाय पितृमध्वाज्यं पितृभ्यो वर्हिषद्भ्य इत्यनुवाकः। उशन्त स्त्वा हवाम इत्यनुवाकाः। न प्रातकितपात् पितृयज्ञ इत्याद्यनुवाकः।

अथ छन्दोगानां जप्यानि।

तत्र गोभिलः।

अश्नतु जपेद्व्याहृतिपूर्व्वां सावित्रीं तस्याञ्चैव गायत्रं पित्र्याञ्च संहितां माधुछन्दसञ्च स्वर्लोके महीयते इत्यञ्चास्याचयं भवति।

---

(१) वाजसनेयसंहिता १९—३०.
(२) वाजसनेयसंहिता ३१. १.
(३) वाजसनेयसंहिता १७. ३३.

'अमृतु' भुञ्जानेषु। 'सावित्री' सवितृदेवत्या सा च गायत्र्येव। व्याहृतयश्च महः जन इति इयन्त्यक्षा इतराः पञ्च जप्याः। ताश्च प्राणायामपूर्विकाः। प्राणायामपूर्व्वकं पञ्च सत्यान्तं कृत्वा गायत्रीं सप्रणवां सव्याहृतिं पठेदिति वरतन्तुस्मरणात्। ॐभूः ॐभुवः ॐस्वः ॐतपः ॐसत्यमिति पञ्च सत्यान्तं कृत्वा भूर्भुवः स्वः इति प्रणव-व्याहृतिपूर्वां गायत्रीं जपेदित्यर्थः। तस्याञ्च गायत्र्यां गायत्रं साम गायेत्। तत्सवितुर्वरेण्यमिति प्रस्तावः, आ इति निधनं। यद्वा उवि-ष्यतिः सनादग्ने अच्चन्न गामदन्तही अभिनी पृष्ठः अर्कं समुद्रः कनि-क्रन्तीति द्वे एषा पित्र्या संहिता। माधुच्छन्दसन्त्वामिदाह्यो नर इति साम। तस्य प्रस्तावः लामिदाहे। इहोयेनराए। निधनं रसा गाः हा इनु इडा इदं ह्यन्वोजसेति प्रथमोत्तमे द्वे च। प्रथमस्य प्रस्तावः इद-मेहियान्न ओजा असा, निधनं वासा। द्वितीयस्य प्रस्तावः ओजसा। निधनं घृतश्चुताः, सुरूपकृत्नुमिति च। प्रस्तावः सुरूपकृत्नु मूतये सुदुग्धामा। निधनं, ज्योतीः पवस्व सोममधुमंश्रतावेति च। प्रस्तावः हा हिंडहाइ इहापवस्व सोममधुमाऋतावा। निधनं द्रायानाः। मात्स्य-पाद्म-प्रभास-खण्डेषु।

बृहद्रथन्तरे तद्वज्ज्येष्ठसाम सरौरवं।

जपेदिति शेषः। 'बृहत्' बृहत्संज्ञकं साम। प्रस्तावः लामिद्धि हवामहाए। निधनं हस्सुरथन्तरं। प्रस्तावः अभिला प्रूरनोनुमोवो। निधनं अप्सु। ज्येष्ठसामानि मूर्द्धानन्दिव इत्यस्यामृचि गीयमानानि त्रीणि। तत्र प्रथमस्य प्रस्तावः आज्यदोहं मूर्द्धानन्दाइ। निधनं आज्यदोहं। द्वितीयस्य प्रस्तावः लिदोहं मूर्द्धानं। निधनं व्योहं

मूर्द्धाद। तृतीयस्य प्रस्तावः व्योहं मूर्द्धादाइ। निधनं ऋतं। रौरवाख्यसाम्नः प्रस्तावः पुनानः सोमाधाराया। निधनं एया ऊहो वा।

प्रचेताः।

पुरुषव्रतानि ज्येष्ठसामानि विविधानि च।

'पुरुषव्रतानि' पुरुषसूक्ते गीयमानानि पञ्चसामानि। तत्र प्रथमस्य प्रस्तावः। सहस्रशीर्षा पुरुषः। निधनं इट् इडा। द्वितीयस्य प्रस्तावः त्रिपादूर्द्धं उदैत्पुरुषः। निधनंऊ। तृतीयस्य प्रस्तावः पुरुष एवेदं सर्वं। निधनं इट्। चतुर्थस्य प्रस्तावः। एतावानस्य महिमा। निधनं इट् इडा। पञ्चमस्य प्रस्तावः। ततोविराडजायत। निधनं ईट्।

ब्रह्माण्डपुराणे।

आदित्य-ब्रह्मणोश्चैव विष्णोरुद्रस्य चैव हि।
सामानि श्रावयेच्छ्राद्धे तथान्यान्यपि भूरिशः॥

'आदित्यसामानि' आदित्यव्रताख्यान्येकविंशतिः सामानि। (१)ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रस्तावः। इडा इति निधनकं। विष्णुरुद्रयोः सामानि छन्दोगानामेव पुष्पग्रन्थे दर्शितानि। इदं विष्णुः प्रत्नस्य वृष्णः प्रकाव्यमुशनेव च ब्रुवाण इति वाराहमन्त्यं पुरुषव्रते चैषा वैष्णवी नाम संहितैतां प्रयुञ्जन् विष्णुं प्रीणाति। आवोराजा तद्वोवर्गः, आज्यदोहानि देवव्रतानि चैषा रौद्री नाम संहितैतां प्रयुञ्जन् रुद्रं प्रीणाति। अन्यान्यपि सामाचारात्सामानि गेयानि। तद्यथा शार्दूलशाखिनां। स पूर्वोमहानामिति मधुश्च्युन्निधनं। प्रस्तावः

(१) वाजसनेयसंहिता १३. ३.

स पूर्व्वामिहानामिति। निधनं मधुश्रुताः। पुराम्भिन्दुर्युवाकविरिति मारुतं। प्रस्तावः पुरां भिन्दुर्युवाकविः । निधनं पुरुष्टुताः। हो इडा उपप्रक्षे मधुमती क्षियन्त इति वाचः सामां। प्रस्तावः ॐ वा उपप्रक्षे मधुमती क्षियन्तः ॐ वा। निधनं ऊपा। ताद हो वाचेत्यादि-सप्तखण्डानि कौथुमशाखिनां। यद्वा उविर्शतिरित्यादीनि पञ्चदश-सामानि असौ वा आदित्योदेवे मध्वेत्यध्यायः। राणायनीयशाखिनां। महानाम्नीसाम। प्रस्तावः ए विदामघवन् विदा। निधनं एवा हि देवाः।

अथाथर्ववेदिनां जप्यानि।

इन्द्रस्य वाहु इत्यप्रतिरथं सूक्तं। प्राणाय नम इत्यादीनि त्रीणि प्राण-सूक्तानि। सहस्रवाहुः पुरुष इति पुरुषसूक्तं। कालोऽश्वो वहतु सप्तरश्मि-रिति कालसूक्तं। उपनिषदमध्यात्मं। प्राणाग्निहोत्रमहोपनिषदं।

उक्तसर्वप्रकारजपासम्भवे प्रकारान्तरमुक्तं मत्स्यपुराणे।

अभावे सर्वविद्यानां गायत्रीजपमारभेत्।

अथ पुराणोक्तान्यन्यापि जप्यानि।

तत्र सप्तार्चिमन्त्रः विष्णुधर्मोत्तर-भविष्यत्पुराण-ब्रह्मवैवर्त-ब्रह्म-पुराण-वायुपुराण-प्रभासखण्ड-भविष्योत्तरेषु।

पाप्मापहं पावनीयमश्वमेधसमं तथा।
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितं॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वधायै स्वाहायैः नित्यमेव नमो नमः॥
आद्यावसाने श्राद्धस्य त्रिरावर्त्तं जपेत्सदा।
अश्वमेधफलं ह्येतद्द्विजैः सत्कृत्य पूजितं॥

पितरस्तृप्तिमायान्ति राक्षसाः प्रद्रवन्ति च।
पितॄंश्च त्रिषु लोकेषु मन्त्रोऽयं तारयत्युत ॥
पठ्यमानः सदा श्राद्धे नियतैर्ब्रह्मवादिभिः ।
राज्यकामो जपेदेतं सदा मन्त्रमतन्द्रितः ॥
वीर्य्यसर्वार्थशौर्यादिश्रीरायुष्यविवर्द्धनं(१) ।
प्रीयन्ते पितरोऽनेन जप्येन नियमेन च ॥

इति सप्तार्चिमन्त्रः ।

अथ विष्णुहृदयमन्त्रः ।

गारुडपुराणे ।

यो विष्णुहृदयं मन्त्रं श्राद्धेषु नियतः पठेत् ।
पितरस्तर्पितास्तेन पयसा च घृतेन च ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतं ॥
आदिमध्यावसानेषु श्राद्धस्य नियतः शुचिः ।
जपन् विष्णुहृदं मन्त्रं विष्णुलोकं समश्नुते ॥
न्यूनञ्चैवातिरिक्तञ्च यत् किञ्चित् कर्मणोभवेत् ।
सर्वं यथावदेव स्यात् पितॄंश्चैव समुद्धरेत् ॥

ॐ आवयेति चत्वारि अक्षराणि, अस्तु श्रौषडिति चत्वारि,

---

(१) वीर्य्यसर्व्वार्थशौर्य्यादिश्रीरायुर्बुद्धिवर्द्धनमिति ग० ।

यजेति द्वे । ये यजामहे इति पञ्च । वौषडिति द्वे । एतैर्यो ह्रयते स यज्ञपुरुषो विष्णुर्मम प्रसीदत्वित्यर्थः ।

तथा चैतदर्थानुसारि शतपथेऽपि वाक्यं दृश्यते ।

तदेतद्यज्ञस्यायातयामो आवयास्तु औषट् यजये यजामहे वौषडिति । एतासां व्याहृतीनां सप्तदशाक्षराणि । ॐ आवयेति चतुरक्षरमस्तु औषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिः अधिदैवतञ्चाध्यात्मञ्च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिः अस्मिंल्लोकेऽमृतत्वेनामुष्मिन्निति ।

इति विष्णुहृदयमन्त्रः ।

अथ सप्तार्चिस्तोत्रं ।

प्रभासखण्ड-ब्रह्माण्डपुराण-विष्णुधर्मोत्तरेषु ।

सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभं ।
अमूर्त्तीनां समूर्त्तीनां पितॄणां दीप्ततेजसां ।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषां ॥
इन्द्रादीनां जनेतारः[१] दक्ष-मारीचयोस्तथा ।
सप्तर्षीणां पितॄणाञ्च तान् नमस्यामि कामदान् ॥
मन्वादीनां जनेतारः सूर्याचन्द्रमसोस्तथा ।
तान्नमस्यामि सर्वान् वै पितॄनप्स्वर्णवेषु च ॥
नक्षत्राणां ग्रहाणाञ्च वाय्वग्नि-पितरस्तथा ।
द्यावापृथिव्योश्च सदा नमस्यामि कृताञ्जलिः ॥
देवर्षीणां जनेतारः सर्वलोकनमस्कृताः ।

(१) जनेतारः इत्ययं पाठः आर्षः । जनयितारः इत्येव समीचीनः पाठः ।

त्रातारो ये च भूतानां नमस्ये तान् पितामहान् ॥
प्रजापतेर्गवां वह्नेः सोमाय च यमाय च ।
योगेश्वरेभ्यश्च सदा नमस्ये तान् कृताञ्जलिः ॥
पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु ।
स्वयम्भुवे नमस्कृत्य ब्रह्मणे लोकचक्षुषे ॥
एतत्तदुक्तं सप्तार्चिर्ब्रह्मर्षिगणपूजितं ।
पवित्रं परमं ह्येतत् श्रीमद्रक्षोविनाशनं ॥
एतेन विधिना युक्तस्त्रीन् वरान् लभते नरः ।
अन्नमायुः सुतांश्चैव ददते पितरो भुवि ॥
भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः ।
सप्तार्चिषञ्जपेद्यस्तु नित्यमेव समाहितः ।
सप्तद्वीपसमुद्रायां पृथिव्यामेकराट् भवेत् ॥

इति सप्तार्चिस्तोत्रं ।

अथ पितृस्तवः ।

मार्कण्डेयपुराणे ।

ब्रह्मा चाह रुचिं विप्रं श्रुत्वा तस्याभिवाञ्छितं ।
प्रजापतिस्त्वं भविता स्रष्टव्या भवता प्रजाः ॥
सृष्ट्वा प्रजास्तु त्वं विप्रः समुत्पाद्य क्रियास्तथा ।
कृताकृताधिकारस्त्वं ततः सिद्धिमवाप्स्यसि ॥
स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहं(१) ।
कामञ्चेममनुध्याय कुरु तत्पितृपूजनं ॥

(१) कुरु दारोद्यसंग्रहमिति ग०।

एवं च तुष्टाः पितरः प्रदास्यन्ति तवेप्सितं।
पत्नीः सुतांश्च सन्तुष्टाः किन्न दद्युः पितामहाः॥

मार्कण्डेय उवाच।

इत्यृषेर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः।
नद्या विविक्ते पुलिने चकार पितृतर्पणं॥
तुष्टाव च पितॄन् विप्रस्तवैरेभिरथादृतः।
एकाग्रः प्रयतो भूत्वा भक्तिनम्रात्मकन्धरः[१]॥

रुचिरुवाच।

नमस्येऽहं पितॄन् भक्त्या[२] ये च सन्त्यधिदेवताः।
देवैरपि हि तर्प्यन्ते ये श्राद्धेषु[३] स्वधोत्तरैः॥
नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः।
श्राद्धैर्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः॥
नमस्येऽहं पितॄन् स्वर्ग्यान् सिद्धाः सन्तर्पयन्ति यान्।
श्राद्धेषु दिव्यैः सकलैरुपहारैः[४] अनुत्तमैः॥
नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि।
तन्मयत्वेन वाञ्छद्भिर्ऋद्धिमात्यन्तिकीं शुभां॥
नमस्येऽहं पितॄन् मर्त्यैरर्च्यन्ते भुवि ये सदा।
श्राद्धेषु श्रद्धयाभीष्टलोकप्राप्तिप्रदायिनः[५]॥
नमस्येऽहं पितॄन् विप्रैरर्च्यन्ते भुवि ये सदा।

---

(१) भक्तिनम्रात्मको रुचिरिति क०।
(२) श्राद्धे इति ग०।
(३) ये च श्राद्धे इति ग०।
(४) सकलैरुपहारैरिति ख०।
(५) श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः इति ख०।

वाञ्छिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥
नमस्येऽहं पितॄन् भक्त्याभ्यर्च्यन्ते भुवि ये[१] सदा।
धन्यैः श्राद्धैर्यताहारैस्तपोनिर्द्धूतकिल्बिषैः ॥
नमस्येऽहं पितॄन् विप्रैर्नैष्ठिकव्रतचारिभिः।
ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥
नमस्येऽहं पितॄन् श्राद्धे राजन्यास्तर्पयन्ति यान्।
कव्यैरशेषैर्विधिवत् लोकद्वयफलप्रदान् ॥
नमस्येऽहं पितॄन् वैश्यैरर्च्यन्ते भुवि ये सदा।
स्वकर्मनिरतैर्नित्यं[२] पुष्प-धूपान्न-वारिभिः ॥
नमस्येऽहं पितॄन् श्राद्धे ये शूद्रैरपि भक्तितः।
सन्तर्प्यन्ते जगत्यत्र नाम्ना ख्याताः सुकालिनः ॥
नमस्येऽहं पितॄन् श्राद्धे पाताले ये महासुरैः।
सन्तर्प्यन्ते सुधाहारैः[३] त्यक्तदम्भमदैः सदा ॥
नमस्येऽहं पितॄन् श्राद्धैरर्च्यन्ते ये रसातले।
भोगैरशेषैर्विविधैर्नागैः[४] कामानभीप्सुभिः ॥
नमस्येऽहं पितॄन् श्राद्धे सर्पैः सन्तर्पितान् सदा।
तत्रैव विविधैर्मन्त्रैर्भोगसम्पत्समन्वितैः ॥

पितॄन्नमस्ये निवसन्ति साक्षात्
ये देवलोकेषु महीतले वा।

(१) नमस्येऽहं पितॄन् ये वै तर्प्यन्तेऽरण्यवासिभिरिति ग०।
(२) स्वकर्म्माभिरतैर्नित्यमिति ख०।
(३) स्वधाहारा इति ख०।
(४) विधिवन्नागैरिति ग०।

तथान्तरीक्षे च सुरादिपूज्या-
स्ते सम्प्रतीच्छन्तु मयोपनीतं॥
पितृन्नमस्ये परमाणुभूताः[१]
ये वै विमानेषु वसन्त्यमूर्त्ताः।
यजन्ति यानस्तमलैर्मनोभि-
र्योगीश्वराः क्लेशविमुक्तिहेतोः॥
पितृन्नमस्ये दिवि ये च मूर्त्ताः
स्वधाभुजः काम्यफलाभिसन्धौ।
प्रदानशक्ताः सकलेप्सितानां
विमुक्तिदा येऽनभिसंहितेषु॥
तृप्यन्तु येऽस्मिन् पितरः समस्ताः
इच्छावतां ये प्रदिशन्ति कामान्।
सुरत्व-मिन्द्रत्व-मतोधिकत्वं
वस्त्रात्मजान् द्व्यामबलां गृहाणि॥
सूर्य्यस्य ये रश्मिषु चन्द्रविम्बे
शुक्ले विमाने च सदा वसन्ति।
तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोये-
र्गन्धादिना तुष्टिमतो व्रजन्तु॥
येषां हुतेऽग्नौ हविषा च तृप्ति-
र्ये भुञ्जते विप्रशरीरसंस्थाः।
ये पिण्डदानेन मुदं प्रयान्ति

(१) परमात्मभूता इति ख०।

तृप्यन्तु तेऽस्मिन् पितरोऽन्नतोयैः ॥
ये खड्गिमांसेन सुरैरभीष्टैः
कृष्णैस्तिलैर्दिव्यमनोहरैश्च[१] ।
कालेन शाकेन महर्षिवर्यैः
सम्प्रीणितास्ते मुदमत्र यान्तु ॥
कव्यान्यशेषाणि च यान्यभीष्टा-
न्यतीव तेषाममरार्चितानां ।
तेषान्तु सान्निध्यमिहास्तु पुष्प-
गन्धाम्बुभोज्येषु मयाहृतेषु ॥
दिने दिने ये प्रतिगृह्णतेऽर्चां
मासान्तपूज्या भुवि येऽष्टकासु ।
ये वत्सरान्तेऽभ्युदयेषु पूज्याः
प्रयान्तु ते मे पितरोऽद्य तृप्तिं ॥
पूज्या द्विजानां कुमुदेन्दुभासो-
ये क्षत्रियाणाञ्च नवार्कवर्णाः ।
तथा विशां ये कनकावभासाः
नीलीनिभाः शूद्रजनस्य ये च ॥
तेऽस्मिन् समस्ता मम पुष्प-गन्ध-
धूपान्न-तोयादिनिवेदनेन ।
तथाग्निहोमेन च यान्तु तृप्तिं
सदा पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥

---

(१) दैत्य-महोरगैश्चेति ग० ।

ये देवपूर्वाण्यपि तृप्तिहेतो-
रश्नन्ति कव्यानि शुभाहृतानि ।
तृप्तास्तु ये भूमिसृजो भवन्ति
तृप्यन्तु तेऽस्मिन् प्रणतोऽस्मि तेभ्यः ॥
रक्षांसि भूतान्यसुरांस्तथोग्रान्
निःसारयन्तस्त्वशिवं प्रजानां ।
आद्याः सुराणाममरेशपूज्या-
स्तृप्यन्तु तेऽत्र प्रणतोऽस्मि तेभ्यः ॥
अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ।
व्रजन्तु तृप्तिं श्राद्धेऽस्मिन् पितरस्तर्पिता मया ॥
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशं ।
तथा बर्हिषदः पान्तु याम्यां ये पितरस्तथा ॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ।
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥
सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे ।
विश्वो विश्वभुगाराध्यो धन्यो धर्मः सनातनः ।
भूतिदो भूतिदा भूतपितृणां ये गणा नव ॥
कल्याणः कल्पदः कर्त्ता कल्पः कल्पतराश्रयः ।
कल्पताहेतुरनघः षडित्येते गणाः स्मृताः ॥
वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ।
विश्वधाता तथा दाता सप्त चैते तथा गणाः ॥
महान् महात्मा महितो मतिमांश्च महाबलः ।

गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ॥
सुखदो धनदश्चान्यो धर्मदोन्यश्च भूतिदः ।
पितॄणां कथ्यते चैतत् तथा गणचतुष्टयं ॥
एकत्रिंशत्पितृगणाः यैर्व्याप्तमखिलं जगत् ।
ते मेऽत्र तृप्ताः पुष्यन्तु यच्छन्तु च सदा हितं ॥

मार्कण्डेय उवाच ।

एवन्तु स्तुवतस्तस्य तेजसां राशिरुच्छ्रितः[१] ।
प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥
तद्दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ।
जानुभ्यामवनीं गत्वा रुचिस्तोत्रमिदं जगौ ॥

रुचिरुवाच ।

मूर्त्तितानाममूर्त्तानां पितॄणाममितौजसां ।
नमस्यामि सदा तेषां ध्यायिनां दिव्यचक्षुषां[२] ॥
इन्द्रादीनां जनेतारो दक्ष-मारीचयोस्तथा ।
सप्तर्षीणां तथान्येषां तान्नमस्यामि कामदान् ॥
मन्वादीनाञ्जनेतॄंश्च[३] सूर्याचन्द्रमसोस्तथा ।
तान्नमस्याम्यहं सर्वान् पितरश्चार्णवेषु च ॥
नक्षत्राणां ग्रहाणाञ्च वाय्वग्नि-नभसां तथा ।
द्यावा-पृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥

---

(१) राशिरुत्थित इति क०, राशिरुच्छ्रित इति ख० ।
(२) ध्यानिनां योगचक्षुषामिति क० ।
(३) मन्वादीनां मुनीन्द्राणामिति ग० ।

देवर्षीणां जनेतॄंश्च सर्वदेवनमस्कृतान्।
अभयस्य सदा दातॄन् नमस्येऽहं कृताञ्जलिः॥
प्रजापते कश्यपाय सोमाय वरुणाय च।
योगेश्वरेभ्यश्च तथा नमस्यामि कृताञ्जलिः॥
नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु।
स्वयम्भुवे नमस्यामि ब्रह्मणे योगचक्षुषे॥
यदाधाराः पितृगणा योगमूर्त्तिधरा हि ते।
नमस्यामि ततः सोमं पितरं जगतामहं॥
अग्निरूपांस्तथैवान्यान्नमस्यामि पितॄनहं।
अग्नीषोममयं विश्वं यत एतदशेषतः॥
ये तु तेजोमयास्चैते सोम-सूर्य्याग्निमूर्त्तयः।
जगत्स्वरूपिणश्चैव तथा ब्रह्मस्वरूपिणः॥
तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः।
नमो नमो नमस्ते मे प्रसीदन्तु स्वधाभुजः॥

मार्कण्डेय उवाच।

एवं स्तुतास्ततस्तेन तेजसो मुनिसत्तम।
निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश॥
निवेदितञ्च यत्तेन गन्धमाल्यानुलेपनं।
तद्भूषितानथ स तान् ददृशे पुरतः स्थितान्॥
प्रणिपत्य पुनर्भक्त्या पुनरेव कृताञ्जलिः।
नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः॥
ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तमं।

वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥

रुचिरुवाच ।

साम्प्रतं सर्गकर्तृत्वमादिष्टं ब्रह्मणा मम ।
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीं ॥

पितर ऊचुः ।

अद्यैव सद्यः पत्नी ते भविष्यति मनोरमा ।
तस्याञ्च पुत्रो भविता रुचिरो मुनिसत्तमः ॥
मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः ।
रुचे रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये ॥
तस्यापि बहवः पुत्त्रा भविष्यन्ति महात्मनः ।
महाबला महावीर्य्याः पृथिवीपरिपालकाः ॥
त्वञ्च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्विधाः ।
क्षीणाधिकारो धर्मज्ञः ततः सिद्धिमवाप्स्यसि ॥
स्तोत्रेनानेन हि रुचे योऽस्मांस्तोष्यति भक्तितः ।
तस्य तुष्टा वयं भोगान् दास्यामो ज्ञानमुत्तमं ॥
शरीरारोग्यमैश्वर्य्यपुत्त्र-पौत्त्रादिकं तथा ।
वाञ्छन्ति सततं स्तव्याः स्तोत्रेणानेन यत्नतः ॥
श्राद्धे च य इमं भक्त्या अस्मत्प्रीतिकरं स्तवं ।
पठिष्यति द्विजाग्र्याणां भुञ्जतां पुरतः स्थितः ॥
स्तोत्रश्रवणसम्प्रीत्या सन्निधाने परे कृते ।
अस्माकमक्षयं श्राद्धं तद्भविष्यत्यसंशयं ॥
यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ।

अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥
अश्राद्धार्हैरुपहृतैरुपहारैस्तथा कृतं ।
अकालेऽप्यथवाऽदेशे विधिहीनमथापि वा ॥
अश्रद्दधानैः पुरुषैर्दम्भमाश्रित्य वा कृतम्
अस्माकं तृप्तये श्राद्धं तथाप्येतदुदीरणात् ॥
यत्रैतत् पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहं ।
अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी ॥
हेमन्ते द्वादशाब्दानि तृप्तिमेतत् प्रयच्छति ।
शिशिरे द्विगुणाब्दानि तृप्तैः स्तोत्रमिदं श्रुतं ॥
वसन्ते षोड़शसमास्तृप्तये श्राद्धकर्मणि ।
ग्रीष्मे च षोड़शैवैतत् पठितं तृप्तिकारकं ॥
विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन शोधिते ।
वर्षासु तृप्तिरस्माकमक्षया जायते ध्रुवे ॥
शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ।
अस्माकमेतत् पुरुषैस्तृप्तिं पञ्चदशाब्दिकीं ॥
यस्मिन् गृहेऽपि लिखितमेतत्तिष्ठति नित्यदा ।
सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति ॥
तस्मादेतत्त्वया श्राद्धे विप्राणां भुञ्जतां पुरः ।
श्रावणीयं महाभाग अस्माकं प्रीतिहेतुकं[१] ॥

अथान्यान्यपि जप्यानि ।

भविष्योत्तर-वाराह-विष्णुपुराणेषु ।

---

(१) पुष्टिहेतुकमिति ग० ।

श्लोकानिमांश्च पौराणां श्रावयेद्ब्राह्मणान् बुधः ।
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
मम तृप्तिं प्रयान्त्वग्निहोमाप्यायितमूर्त्तयः ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिमायान्तु पिण्डेन मया दत्तेन भूतले ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिमायान्तु मे भक्त्या यन्मयैतदुदाहृतं ॥
मातामहस्तत्पिता च पिता तस्यापि तृप्यतु ।
द्विजानां तर्पणाद्धोमात् पिण्डदानाच्च मे सदा ॥

मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तस्य पिता तु योऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधानाः ॥
यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो
रक्षांस्यशेषाण्यसुराश्च सर्व्वे ॥

अत्र ब्रह्मवैवर्त्त-वाराहपुराणोक्तानि गयाप्रशंसावचनान्यपि शिष्टाः पठन्ति।

गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयं ॥

गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥
शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ।
उद्धरेत् सप्तगोत्राणि कुलमेकोत्तरं शतं ॥
भूमिष्ठास्तु दिवं यान्ति स्वर्गस्था मोक्षगामिनः ।
स्वर्ग-पाताल-मर्त्त्येषु नास्ति तीर्थं गयासमं ।
पितरो यान्ति देवत्वं दत्ते पिण्डे गयाशिर इति ॥

कालिकापुराणे ।

स्वाध्यायमीरेत पुराणमाद्यं
स्वधर्मशास्त्रं पितृसम्मतञ्च ।
कथां विरिञ्च्यादिचरित्रविप्र
तुष्ट्यै च तेषामितिहासमेव ॥

कूर्मपुराणे ।

स्वाध्यायं श्रावयेदेषां धर्मशास्त्राणि चैव हि ।
इतिहासपुराणानि श्राद्धकल्पांस्तु शोभनान् ॥

नारदीयपुराणे ।

आख्यानानि पितृणाञ्च श्राद्धेष्वक्षयतृप्तये ।
गाथाश्च पितृभिर्गीता भुञ्जानान् श्रावयेद्द्विजान् ॥

पितृणामाख्यानानि श्रावयेदित्युक्तं, तत्र सप्तव्याधाख्यानं श्राद्धप्रशंसाप्रकरणे द्रष्टव्यं । पौरूरवसमाख्यानममावास्याप्रकरणे विलोकनीयं। अच्छोदाख्यानमष्टकाप्रकरणे प्रतिपादितं विज्ञेयं । अन्यान्यपि ब्रह्मपुराणोक्ताख्यानमार्कण्डेयपुराणोक्तमरीच्याख्यानप्रभृतीन्यतिप्रसङ्ग-

भयादिहालिखितानि पित्र्याख्यानानि तत्तत्पुराणेषु विलोक्य श्रा-
वणीयानि। सप्तव्याधाख्यानपठनासमर्थस्तु तत्सङ्क्षिप्तरूपं मात्स्य-
पद्मपुराणोक्तमिदं श्लोकद्वयं पठेत्।

सप्तव्याधा दशारण्ये मृगाः कालञ्जरे गिरौ।
चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।
प्रस्थिता दीर्घमध्वानं यूयन्तेभ्योऽवसीदतेति॥

पितृगाथास्तु नानास्मृतिपुराणेभ्यः समाहृत्य प्रदर्श्यन्ते।
तत्र यमस्मृतौ।

गाथाश्च पितृभिर्गीताः कीर्त्तयन्ति पुराविदः।
अपि नः स कुले भूयाद् यो नो दद्यात्त्रयोदशीं॥
पायसं मधुसंयुक्तं प्राक्छाये कुञ्जरस्य च।
अजेन सर्व्वलोहेन वर्षासु च मघासु च॥

आह विष्णुः। अथ पितृगीते गाथे भवतः।

अपि जायेत सोऽस्माकं कुले कश्चित् नृपोत्तम।
प्रावृट्कालेऽसिते पक्षे त्रयोदश्यां समाहितः॥
मधूत्कटेन यः श्राद्धं पायसेन समाचरेत्।
कार्त्तिकं सकलं वापि प्राक्छाये कुञ्जरस्य वा॥

पैठीनसिः।

छागेन सर्व्वलोहेन वर्षासु च मघासु च।
पुत्त्रो वा यदि वा पौत्त्रो यो नो दद्यात् त्रयोदशीम् इति॥

बृहस्पतिः।

काङ्क्षन्ति पितरः पुत्रान् नरकापातभीरवः ।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ॥
करिष्यति वृषोत्सर्गमिष्टापूर्त्तं तथैव च ।
पालयिष्यति गार्हस्थ्यं श्राद्धं दास्यति चान्वहं ॥

याज्ञवल्क्यः ।

कुलेऽस्माकं स जन्तुः स्यात् यो नो दद्याज्जलाञ्जलिं ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥
अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षवटे श्राद्धं यो न कुर्य्यात् समाहितः ॥

यम-याज्ञवल्क्य-विष्णुधर्मोत्तर-ब्रह्मवैवर्त्त-भविष्योत्तर-कूर्मपुराणेषु ।

एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

मत्स्यपुराण-विष्णुधर्मोत्तरयोः ।

अतः परं प्रवक्ष्यामि पितृभिर्याः प्रकीर्त्तिताः ।
गाथाः पार्थिवशार्दूलकामयद्भिः स्वके पुरे ॥
अपि स्यात् स्वकुलेऽस्माकं यः श्राद्धं नित्यमाचरेत् ।
पयोमूल-फलैः पुष्पैस्तिलतोयेन वा पुनः ॥
अपि स्यात् स्वकुलेऽस्माकं यो नो दद्याज्जलाञ्जलिं ।
नदीषु बहुतोयासु शीतलासु विशेषतः ॥
अपि स्यात् स्वकुलेऽस्माकं हेममिश्रं जलाञ्जलिम् ।
तिल-माक्षिकसंयुक्तं यो नो दद्यात् समाहितः ॥
अपि स्यात् स्वकुलेऽस्माकं यो नो दद्यात्त्रयोदशीं ।

पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥
अपि स्यात् स्वकुलेऽस्माकं खड्गमांसेन यः सकृत् ।
श्राद्धं कुर्य्यात् प्रयत्नेन कालशाकेन वा पुनः ॥
कालशाकं महाशाकं मधु मुन्यन्नमेव च ।
विषाणवर्ज्जा ये खड्गा आसूर्य्यादाशयामहे ॥
गयायां दर्शने राहोः खड्गमांसेन योगिनम् ।
भोजयेद्वै कृतेऽस्माकं छायायां कुञ्जरस्य तु ।
आकल्पकालिकी तृप्तिस्तेनास्माकं भविष्यति ॥
दाता सर्वेषु लोकेषु कामचारी भविष्यति ।
आभूतसंप्लवं कालं नात्र कार्य्या विचारणा ॥
यदेतत् पञ्चकं तस्मादेकेनापि वयं सदा ।
तृप्तिं यास्यामहेऽनन्तां किं पुनः सर्व्वसम्पदा ॥
अपि स्यात् स्वकुलेऽस्माकं वृषभं यः समुत्सृजेत् ।
प्रसूयमानां वै धेनुं दद्याद्ब्राह्मणपुङ्गवे ॥
अपि स्यात् स्वकुलेऽस्माकं कश्चित् पुरुषसत्तमः ।
सर्वोपकरणैर्युक्तं गृहं यः सम्प्रदास्यति ॥
अपि स्यात् स्वकुलेऽस्माकं दद्यात् कृष्णाजिनञ्च यत् ।
सुवर्णशृङ्गं सखुरं विधिना च नरोत्तम ॥
अपि स्यात् स्वकुलेऽस्माकं कश्चित् पुरुषसत्तमः ।
सर्वत्रणं हयं दद्याच्छुक्लनीलं विशेषतः ॥
अपि स्यात् स्वकुलेऽस्माकं यः कुर्य्याच्छ्रद्धयान्वितः ।
सुवर्णदानं गोदानं पृथिवीदानमेव च ॥

अपि स्यात् स कुलेऽस्माकं कश्चित् पुरुषसत्तमः ।
कूपारामतड़ागानां वापीनां यश्च कारकः ॥
अपि स्यात् स कुलेऽस्माकं सर्वभावेन यो हरिं ।
प्रयायाच्छरणं विष्णुं देवेशं मधुसूदनं ॥

वायुपुराण-ब्रह्माण्डपुराणयोः ।

अत्र गाथाः पितृगीताः कीर्त्तयन्ति पुराविदः ।
तास्त्वहं सम्प्रवक्ष्यामि यथावच्च निबोधत ॥
अपि नः स कुले जायात् यो नो दद्यात् त्रयोदशीं ।
पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य च ।
अजेन सर्व्वलोहेन वर्षासु च मघासु च ॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥

प्रभासखण्डे ।

अब्रुवन् पितरस्त्वेतां गाथां पौराणिकीं प्रिये ।
गयां गन्तुं न शक्नोति यदि पुत्रः कथञ्चन ॥
तदा यत्नेन गन्तव्यं गोष्पदं तीर्थमुत्तमं ।
कन्दैर्मूलैः फलैर्वापि पिण्याकेङ्गुदकेन वा ।
अपि नः स कुले भूयाद्योऽत्र श्राद्धं प्रदास्यति ॥

मार्कण्डेयपुराणे ।

पितृगाथाः सदैवात्र गीयन्ते ब्रह्मवादिभिः ।
या गीताः पितृभिः पूर्व्वं रहस्यासन्महीपते ॥
कदा नः सन्ततावग्र्यः कस्यचिद्भविता सुतः ।

यो योगिभुक्तशेषान्नैर्भुवि पिण्डं प्रदास्यति॥
गयायामथवा पिण्डं खड्गमांसं महाहविः।
कालशाकं तिलाद्यं वा कृसरं समहप्रये॥
वैश्वदेव्यञ्च सौम्यञ्च खड्गमांसं परं हविः।
विषाणवर्जं ये खड्गा आसूर्य्यादाशयामहे॥
तथा वर्षात्रयोदश्यां मघासु च यथाविधि।
मधुसर्पिःसमायुक्तं पायसं दक्षिणायने॥

महाकालखण्ड-वराहपुराणयोः।

पितृगीतास्तथैवात्र श्लोकांस्तान् शृणु सत्तम।
श्रुत्वा तथैव भवता भाव्यश्चैव धृतात्मना॥
अपि धन्यः कुले जायादस्माकं भक्तिमान्नरः।
अकुर्व्वन् वित्तशाठ्यं यः पिण्डान्नो निर्व्वपिष्यति॥
रत्न-वस्त्र-महायान-सर्व्वभोगादिकं वसु।
विभवे सति विप्रेभ्यस्त्वस्मानुद्दिश्य दास्यति॥
अन्नेन वा यथाशक्त्या कालेऽस्मिन् भक्तिनम्रधीः।
भोजयिष्यति विप्राग्र्यान् तन्मात्रविभवो नरः॥
असमर्थोऽन्नदानस्य धान्यशाकं स्वशक्तितः(१)।
प्रदास्यति द्विजाग्र्येभ्यः स्वल्पाल्पां वापि दक्षिणां॥
तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान्।
प्रणम्य द्विजमुख्याय कस्मैचिद्द्विज दास्यति॥
तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिं।

(१) स्वभक्तित इति ग०।

भक्तिनम्रः समुद्दिश्य यद्यस्माकं प्रदास्यति ॥
यतः कुतश्चित् संप्राप्य गोभ्यो वापि गवाह्निकं ।
अभावे प्रीणयन्नस्मान् भक्तियुक्तः प्रदास्यति ॥
सर्व्वाभावे वनं गत्वा कन्दमूलप्रदर्शकः ।
सूर्य्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥
न मेऽस्ति वित्तं न धनं न चान्यत्
श्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मया नुतौ
कृतौ भुजौ वर्त्मनि मारुतस्य ॥
सयवं पायसं वापि श्यामाकं सन्निवारकं ।
सक्तून् चौद्रतिलैर्युक्तान् कृत्वा पिण्डान् प्रदास्यति ॥
तेन पिण्डप्रदानेन वासोऽस्माकं त्रिपिष्टपे ।
तर्पणञ्चैव योऽस्माकमिह कुर्य्यात् समाहितः ।
तिलैः सप्ताष्टभिर्वापि सोऽपि तृप्तिं परां नयेत् ॥

कूर्मपुराणे ।

गायन्ति पितरोगाथास्तृप्यन्ति च मनीषिणः ।
एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः॥
तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत् ।
गयां प्राप्यानुषङ्गेण यदि श्राद्धं समाचरेत् ॥
सन्तारिता वयन्तेन स याति परमाङ्गतिं ।
वराहपर्व्वते चैव गयायां वै विशेषतः ॥
वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ।

नन्दिपुराणे ।

अपि तेषां शृणु मतं पितॄणां निश्चितं तदा ।
रहस्यं तैरिदं प्रोक्तं मुनीनां भावितात्मनां ॥

शाकानि मूलानि फलानि वापि
ये श्राद्धमुद्दिश्य तु निर्वपन्ति ।
सिक्तानि तोयेन सुतीर्थजेन
ते पुत्त्रिणां पुत्त्रफलं सुपुण्यं ॥

न यज्ञयाजी न च सर्ववेदी
प्रियः पितॄणां न गयां प्रयातः ।
प्रियः स पुत्त्रोऽभिमतः पितॄणां
यः सादरोऽम्भः सकृदेव दद्यात् ॥

अलं हि दानाध्ययनैस्तपोभि-
स्तथापरैः संयमधर्म्मकैश्च ।
सुतीर्थमेकं परमं पवित्रं
पापापहं प्राप्य निरस्तदोषं ॥

पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं येन समासहस्रं
रहस्यमेतत् पितरो वदन्ति ॥

इति जप्यानि ।

अथ विभक्तयः ।

गोत्र-सम्बन्ध-नामानि यथावत्प्रतिपादयेत् ।

इति वचनात् गोत्रप्रतिपत्तिहेतोः शब्दस्योच्चारणं कर्त्तव्यं, तथा-विभक्ति कर्तुमशक्यमिति विकल्पमानासु यस्यां विभक्तौ प्राप्तायां शास्त्रेण नियमः क्रियते तत्र विभक्तिविशेषैरेव श्राद्धे देयमित्याह नारायणः।

विभक्तिभिस्तु संयुक्तं दीयते पितृदैवतं।
दत्तमक्षय्यतां याति विपरीतमनर्थकं॥

'पितृदैवतं' पित्रर्थं देवतार्थं च द्रव्यं विभक्तिभिः संयुक्तं इति। विभक्तिभिर्व्यासादिधर्मशास्त्रप्रणेतृनियमिताभिश्चतुर्थ्यादिभिः सम्बद्धम्। तच्चोद्दिश्यमानदेवताभिधायिपदस्य विभक्तिसम्बन्धेन परम्परया त्यज्यमानस्य द्रव्यस्य सम्बन्धाभिप्रायेण। न तु साक्षाद्द्रव्यवाचकस्य पदस्य विभक्तिसम्बन्धो विधेयदर्शयिष्यमाणैर्वचनैरुद्दिश्यमानाभिधायिपदस्य चतुर्थ्यादिविभक्तिनियमविधानावगमात्। क्रियाविशेषणपक्षे तु न किञ्चिदनुपपन्नं। ततश्चतुर्थ्यादिविभक्त्यन्तैः पदैर्देवान् पितृनुद्दिश्य गन्धादिद्रव्यं देयमित्यर्थः। 'विपरीतं' यथाविहितविभक्तिरहितं। 'अनर्थकं' निष्फलं।

नागरखण्डेऽपि।

विभक्तिरहितं श्राद्धं क्रियते यद्विपर्य्ययात्।
अकृतं तद्विजानीयात् पितॄणां नोपतिष्ठते॥
तस्मात् सर्व्वप्रयत्नेन ब्राह्मणेन विजानता।
विभक्तिभिर्यथोक्ताभिः श्राद्धं कुर्य्यात्त्रिभिः सदा॥

'विपर्य्ययात्' भ्रान्तेः। 'यथोक्ताभिः' यथाशास्त्रविहिताभिः। 'त्रिभि-रिति छान्दसं विभक्तीनां विशेषणम्। अतस्तिसृभिर्विभक्तिभिः सर्व्वदा

श्राद्धं कर्त्तव्यं। एतच्च तिसृणां विभक्तीनां सर्व्वदा श्राद्धमात्रसम्बन्धाभिप्रायेण न तु तिसृणामेव श्राद्धमात्रसम्बन्ध इति मन्तव्यं विभक्तिचतुष्टयस्य वक्ष्यमाणत्वात्। कथं तर्हि चतसृणां न श्राद्धमात्रसम्बन्धः एकोद्दिष्टे आवाहनाभावेन द्वितीयाया मन्त्रभावात्। का पुनस्ता विभक्तयः इत्यपेक्षायामुक्तं तत्रैव। प्रथमा च चतुर्थी च षष्ठी स्याच्छ्राद्धसिद्धये।'प्रथमा चेति चशब्देन तद्विशेषः सम्बुद्धिरुपादीयते। उत्तरेण चकारेण द्वितीया, तेन प्रथमा-सम्बुद्धि-द्वितीया-चतुर्थी-षष्ठीनां यथौचित्यं प्रयोगेण श्राद्धं साधयेत्।

उक्तविभक्तीनां विनियोगमाह व्यासः।

चतुर्थी चासने नित्यं सङ्कल्पे च विधीयते।
प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः॥

'चतुर्थी चासने नित्यं' इति भूयोदर्शनाभिप्रायेण न तु तन्नित्यार्थं तस्यापाक्षिकस्य दर्शयिष्यमाणत्वात्। अथवा नित्यमित्युपरितनेन सम्बध्यते अन्नसङ्कल्पे तस्यानियतत्वात्। 'तर्पणं' पित्राद्युद्देशेन जलदानं। तत्रामुकगोत्राः अस्मत्पितरः तृप्यन्त्विति प्रथमया अमुकगोत्रा अस्मत्पितरः तृप्यध्वमिति सम्बुद्ध्या वा प्रयोगः कर्त्तव्यः। सम्बुद्धिमित्यादेर्वाक्यान्तरत्वम्। 'अपरे' अपरस्मिन् अर्घ्यदानादौ, कर्त्तव्यं। सम्बुद्धिप्रयोज्यं शास्त्रविदः प्राहुः।

आह धर्मः।

पृच्छाक्षय्यासने षष्ठी चतुर्थी चासने मता।
अर्घ्यावनेजनं पिण्डं तथा प्रत्यवनेजनं।
सम्बुद्ध्यैतानि कुर्व्वीत सर्वशास्त्रविशारदः॥

'पृच्छा' अनुज्ञा ब्राह्मणार्थं श्राद्धारम्भे प्रश्नवाक्यं, 'अक्षय्यं' अक्षय्योदकदानं ।

भृगुः ।

पृच्छासने तु वै षष्ठी तथैवाक्षय्यदानके ।
आवाहने द्वितीया स्यादेष शास्त्रविनिश्चयः ॥
अर्घ्यावनेजने पिण्डे तथा प्रत्यवनेजने ।
सम्बुद्धितां प्रयुञ्जीत शेषे षष्ठी विधीयते ॥
गन्धं माल्यञ्च धूपञ्च दीपमन्नं सदक्षिणं ।
अपृथक्त्वेन दातव्यं चतुर्थ्या विधिमिच्छता ॥

'अपृथक्त्वेन' अविशेषेण अवैषम्येणेति यावत् ।

प्रचेताः ।

अप्रदक्षिणमेतेषामेकैकन्तु पितृक्रमात् ।
सम्बोध्य गोत्रनामभ्यामेष तेऽर्घ्य इतीरयेत् ॥

एतेषां पितृ-पितामह-प्रपितामहानां मध्ये पितृक्रमादेकैकं गोत्र-नामभ्यां सम्बन्धप्रतिपादकेन च पित्रादिशब्देन सम्बोध्यैष तेऽर्घ्य इति कीर्त्तयेत् ।

ब्रह्मपुराणे ।

इदं वः पाद्यमर्घ्यञ्च चतुर्थ्यन्तं निवेदयेत् ।

अत्रापि नाम-गोत्र-पित्रादिशब्दान् सम्बुद्ध्यन्तानेव सङ्कीर्त्त्य व इति युष्मदिव चतुर्थ्यन्ता विधेया इत्यर्थः ।

नागरखण्डे ।

अक्षय्यं सतिलं देयं षष्ठ्या चैव ततः परं ।

पवित्राणि समादाय स्वधेति च प्रकीर्त्तयेत्॥

संग्रहकारोऽप्यर्घ्यदाने षष्ठीमाह।

अर्घ्यासनयोः षष्ठी द्वितीयावाहने स्मृता।
अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः॥

भविष्योत्तरेऽपि।

चतुर्थी सर्वकार्य्येषु प्रथमा तर्पणे स्मृता।
षष्ठी विभक्तिरर्घ्ये पितृकार्य्ये यथाविधि॥

अत्र विकल्पे यथास्वशाखं व्यवस्था।

आवाहने तु द्वितीयानियमो विभक्त्यन्तरनिषेधश्चोक्तो नागरखण्डे।

आवाहनन्तु कर्त्तव्यं विभक्त्याद्य द्वितीयया।
ये नागच्छन्ति ते सर्वे समाहूताः पृथक् पृथक्॥
अन्यथा तु विभक्त्या च पितॄन्नावाहयेत् क्वचित्।
नागच्छन्ति महाभागा यद्यपि स्युर्बुभुक्षिताः॥

अथेत्यासनदानानन्तरं पितॄणामावाहनं करिष्ये आगच्छन्तु पितरः पितर आगच्छेति विभक्त्यन्तरसम्भवादन्यनिषेधोऽयमुच्यते। अन्यैस्तु सविभक्तिकपदप्रयोगदर्शनेनैव विभक्तीनां विनियोग उक्तः।

तत्र तावद्गोत्रसंबन्धनामानि यथावत् प्रतिपादयेदित्युक्तक्रमेणैव प्रयोग उक्तो वह्वृचपरिशिष्टे।

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि।
गोत्रस्य तर्पणे कुर्य्यादेवं दाता न मुह्यति॥

'गोत्रं' गोत्रशब्दः, 'स्वरान्तं' अजन्तं। सर्वत्र स्वापवादव्यतिरेकेण,

अजन्तता च गोत्रशब्दस्य। सप्तम्यर्थासम्भवात् प्रयोगायोग्यतयैव सप्तमीव्युदासो भविष्यति। अथवा स्वरान्तमिति यत्किञ्चित्स्वरान्तताप्राप्तौ प्रथमं वा नियम्येतेति न्यायाद्वर्णसमाम्नाये प्रथमनिर्दिष्टस्याकारस्यैवान्त्यावयवता तथा चाकारान्तः गोत्रशब्द उच्चारणीय इति गम्यते। अथवा स्वरान्तमित्युदात्तस्वरान्तं वर्णधर्मरूपेषु स्वरेषु प्रथमत्वात् प्रधानत्वाच्च निर्विशेषणेनापि स्वरशब्देन निर्दिश्यते, तस्यैव विज्ञातुं शक्यत्वात्। ततश्चोदात्तताविशिष्ट एव वर्णो यस्यान्तो न वर्णान्तरं। तदत्र स्वरान्तता च गोत्रशब्दस्य सम्बुद्धावेव घटत इति। अत्रैकवचनपुंलिङ्गपित्रादिशब्दाः प्रदर्शनार्थाः बहुवचनस्त्रीलिङ्गमातृमातामहादिशब्दानामिति तत्र प्रयोजकत्वात्। एवञ्चात्र प्रयोगो भवति अमुकगोत्र पितरमुकशर्मन्नेतत्तेऽर्घ्यमिति। एवं पितामहादिष्वपि। अक्षय्ये त्वमुकगोत्रस्य पितुरमुकशर्मणोऽक्षय्यमस्त्विति प्रयोगः। एवं पितामहादिष्वपि। तर्पणे तु अमुकगोत्रः पिता अमुकशर्मा तृप्यत्विति प्रयोगः। एवं पितामहादिष्वपि। एवमासनदानादावपि स्वयमूह्यं। विस्तरेण तु प्रतिविभक्तिप्रतिपदार्थत्वप्रयोगवाक्यान्यपराह्णकृत्यप्रतिपादने दर्शयिष्यन्ते।

वृद्धप्रचेतापि।

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि।
गोत्रस्तु तर्पणे प्रोक्तः एवं कर्त्ता न मुह्यति॥
सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि।
पितुरक्षय्यकाले तु पितॄणां दत्तमक्षयं॥

नागरखण्डे तु विभक्त्यन्तपित्रादिपदपूर्वकप्रयोगपूर्वकं तद्विनियोग उक्तः।

सर्वत्रैव पितः प्रोक्तः पिता तर्पणकर्मणि।
पित्र्ये सङ्कल्पकाले तु पितुरक्षय्यदापने॥
गोत्रं स्वरान्तं सर्वत्र गोत्रस्तर्पणकर्मणि।
शर्मणे स्वधादाने तु शर्मणोऽक्षय्यके विधौ॥

'संकल्पकाले' अन्नत्यागकाले। 'स्वधादाने' अन्नदाने। स्त्रीलिङ्गेऽपि विभक्त्यन्तपदप्रयोगदर्शनेन तद्विनियोगस्तत्रैव।

मातुर्मात्रे तथा मातः आसने कल्पनेऽक्षये।
गोत्रे गोत्राश्च गोत्रायाः प्रथमाद्या विभक्तयः॥
देवि देव्यै तथा देव्या एवं मातुश्च कीर्तयेत्।

गोभिलोऽपि।

गोत्रायास्त्वासने कुर्य्यात् गोत्रे चैवार्घ्य-पिण्डयोः।
गोत्रायास्त्वाक्षय्यकाले गोत्रायै त्याग एव च।
गोत्रामावाहने कुर्य्यात् स्त्रीलिङ्गे तु न संशयः॥

अन्यान्यपि नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखेभ्योऽपि निवेदये-दित्येवम्प्रायाणि विभक्त्यादिवचनानि प्रयोगसमवायात्तत्रैव दर्शयिष्यन्ते।

॥ इति विभक्तयः॥

॥ अथ प्राचीनावीत-यज्ञोपवीतनिर्णयः॥

तत्र तत्सामान्येन इह खलु चतुर्विधं कर्म भवति किञ्चित् पित्रेक-सम्बन्धित्वात् पित्र्यं स्वधानिनयनादि। किञ्चिद्दैवैकसम्बन्धित्वाद्दैवं यथा विश्वेदेवाः प्रीयन्तामिति वाचनं। किञ्चिदुभयसम्बन्धित्वादुभयात्मकं यथा पाकप्रोक्षणादिस्तन्मात्राद्यनुवादेन शमीमयादिचोदितम्। ज्ञायते लिङ्गप्रधानार्थं पूर्वं सिद्धान्तपक्षयोरित्यादौ दृश्यते चाङ्गप्रधानयोः

साधारणधर्मत्वं । किञ्चिच्च देव-पितृसम्बन्धरहितत्वाल्लौकिकमेव । यथा स्वागतप्रश्नादि । तत्र यत्पित्र्यं यच्चोभयात्मकं तत्प्राचीनावीतिना कार्य्यमित्याह मनुः ।

प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा ।
पित्र्यमानिधनात्कार्य्यं विधिवद्दर्भपाणिना ॥

'प्राचीनावीतिना' दक्षिणस्कन्धोपरि वामकक्षाया अधस्ताच्च विन्यस्त-ब्रह्मसूत्रेण, 'आनिधनात्' आसमाप्तेः । दर्भपाणिनेति दर्भपाणित्वस्य पित्र्ये अयोगव्यावृत्त्यर्थं न तु दैवमानुषेभ्यो निवृत्त्यर्थं श्राद्धदेशं प्रोक्ष्य दर्भपाणिः सर्वं कुर्य्यादिति विष्णुना तस्य सर्वार्थत्वेनोपदेशात् । अत्र पित्र्य-ग्रहणात् पितृसम्बन्धि यावत् किञ्चित्कर्म तत्रैव प्राचीनावीतित्वं विधीयते । अतो यत्पित्रेकसम्बद्धं यच्च देवपितृसाधारणं तत्प्राचीनावीतिना कार्य्यं । साधारणेपि हि पित्र्य एव धर्मो न्याय्यो न तु कदाचिद्दैवधर्मः विप्रतिषिद्धप्रधानाप्रधानधर्मसमवाये प्रधानधर्मस्य बलीयस्त्वात् । यत्त्वग्नौकरणस्य दैवपित्र्योभयात्मकत्वपक्षे यज्ञोपवीत-प्राचीनावीतयोर्विकल्पाभिधानं तत्कस्यचिदेव मत इति न विरुद्धम् । अतः साधारणेऽपि प्राचीनावीतमेव कार्य्यं दैवेषु तु यज्ञोपवीतमेव कार्य्यं अतएवाश्वलायनः ।

सव्येनैव च देवानां कर्त्तव्यं श्राद्धमुत्तमं ।
अपसव्यं पितृणाञ्च कुर्य्याच्छ्रुतिनिदर्शनात् ॥

देवानां श्राद्धं पित्राङ्गभूतं वैश्वदेविकं अन्यच्च श्राद्धभेदप्रकरण-प्रदर्शितमभीष्टदेवदेवत्यं तत्सव्येन प्रादक्षिण्येन यज्ञोपवीतिना च कार्य्यं। श्राद्धशब्दश्चात्र होमादिदेवदेवत्यकर्ममात्रोपलक्षणार्थः । पितृणाञ्च

श्राद्धमपसव्यमप्रदक्षिणं प्राचीनावीतिना च कर्तव्यं। श्राद्धशब्दश्चात्र पित्र्यकर्ममात्रोपलक्षणार्थः। 'श्रुतिनिदर्शनादिति प्राचीनावीतं पितॄणामुपवीतं देवानामित्युपवीतविधिवाक्यशेषे दर्शनादित्यर्थः।

प्रभासखण्डेऽपि।

यज्ञोपवीतिना कार्य्यं दैवं कर्म विजानता।
प्राचीनावीतिना चैव पितॄणामप्यशेषतः॥

नागरखण्डे तु प्राचीनावीतस्य क्वचिदपवादोदर्शितः।

एवं सर्वाः क्रियाः कार्य्या दैविक्यः सव्यपूर्विकाः।
पैतृकस्यापसव्येन मुक्त्वैकं स्वस्तिवाचनमिति॥

'स्वस्तिवाचनं' पितृब्राह्मणान् प्रति यः स्वस्तिवाचनप्रैषः, यानि तु ब्राह्मणैकसम्बद्धानि प्रत्युत्थानस्वागतप्रश्नादीनि विशिष्टपुरुषसत्कारतया श्राद्धानङ्गत्वाल्लौकिकानि तेषु नित्योदकी नित्ययज्ञोपवीतीत्यादिभिरुत्सर्गतः प्राप्तं यज्ञोपवीतमेवानुसन्धेयम्।

इति सामान्येन प्राचीनावीतिनिर्णयः।

अथ विशेषतः प्राचीनावीतादिनिर्णयः।

तत्र यद्यपि पित्रपाकादिसाधनीभूतव्रीह्यादिद्रव्यसम्बन्धिनां क्रयादीनां कथञ्चित् पितृसंबन्धेन मनुवाक्यगतपित्र्यपदवाच्यत्वं वक्तुं शक्यं तथाप्यत्र विहितमेव तद्धितश्रुत्यादि पितृसम्बन्धित्वेन विवक्षितं न पितृसम्बन्धिमात्रं इति प्रसङ्गनिवृत्त्यर्थमवच्छेदाकाङ्क्षायां शब्दसन्निधापितान्तरङ्गपदार्थग्रहणस्य न्याय्यत्वात्। न च क्रयादयोविहिताः, तेषामनुष्ठानं तु विहितव्रीह्यादिसिद्धिकरत्वेनार्थादेव प्राप्तं क्रियते अतस्तेषां न प्राचीनावीतधर्मकत्वं। अथ प्राचीनावीतिना कार्य्यमित्येतस्मिन्

मनुवचने विधिवच्छब्दस्य पित्र्यमित्यनेन सह सम्बन्धः क्रियते, अतश्च विधिवद्विधियुक्तं विहितं यत्पित्र्यं तत्प्राचीनावीतिना कार्य्यमित्येवं विधानार्थनिष्पत्तावविहितेषु क्रयादिषु न प्राचीनावीतप्राप्तिः । अविहितत्वादेव प्रयोगान्तःपातिनां क्रयकृषिप्रतिग्रहादीनां यदा कदाचिदनुष्ठानं न प्रधानप्रत्यासत्तिनियमः । अवघात-निष्पवनफलीकरण-पेषण-संयमनादीनामप्यविधानादेव प्राचीनावीतयोगः । ननु पश्वादिस्थालीपाक इव श्राद्धेष्ववघातादीनामतिदेशतः प्राप्ते कथं न विधानम् । उच्यते । धान्यस्य हि निरुप्तस्यावघातो विहितः । न चात्र धान्यावस्थस्य निर्वापोऽस्ति । सोऽप्यतिदेशतोऽस्त्विति चेत् । न । "अग्निमानिर्वपेत् पैत्रपाकं वा सक्तुमुष्टिभिः । पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत्" इति पद्मपुराणवचने पाकग्रहणात् पाकसाधनप्रत्यासन्नतण्डुलावस्थस्यैव द्रव्यस्य निर्वापावगमनात् । अतोऽतिदेशागतो धान्यावस्थस्य निर्वापो बाध्यते, अतोऽवघातादिषु न प्राचीनं "अग्निमानिति ग्रहणादतिदेशेन सामान्येन प्रापितोऽपि निर्वापः साग्निक एव नियम्यते । अस्तु तर्हि वस्त्रशौचादिकर्त्तव्यमिति विहिते दैवपित्र्यसाधारणे वस्त्रशौचरूपेऽङ्गे प्राचीनावीतं । मैवं । शुद्धद्रव्यविधेरर्थप्राप्ताया वस्त्रशौचभावनायाः कालमात्रं विधीयते न भावनास्वरूपं, अतोऽत्र न प्राचीनावीतप्रसङ्गः । उपहतभाण्डादिपदार्थशौचेऽपि न प्राचीनावीतं । न हि द्रव्येषु शौचभावनाविधिरस्ति । तथा सुलभशुचिद्रव्यान्तरस्याशुचौ द्रव्ये त्यागेच्छया शुद्धिमकुर्वतः प्रत्यवायः स्यात् । अस्याः शुद्धेरप्राकरणिकत्वाच्च न प्राचीनावीतं । पानभोजनभाण्डशौचं कुलत्याद्या संमार्गद्रव्यसंस्कारार्थप्रकरणे भाण्डशुद्धिरा-

स्नायते तस्या अपि नियतयजमानकर्तृकत्वानवगमान्न नित्यवत्तत्र प्राचीनावीतान्वयः। श्राद्धभूपलेपनभावनापि शुचित्वविशिष्टश्राद्ध-देशविधेरेवार्थात् प्राप्तानूद्यत एव न विधीयते। अतएव येन केनापि समीकरणोपलेपनादिभिः संस्कृतेषु गृहेषु सुत-शिष्य-पत्नीप्रमुखेन केनचित्सम्मार्जितेषु शुचिषु प्रदेशेषु कुर्वन्त्येवानियमेन शिष्टाः श्राद्धानि। अस्तु तर्हि निरामिषं सकृद्भुक्तेतिवचनेन विहिते पूर्व्वदिने निमन्त्र-णाङ्गभूते भोजने प्राचीनावीतं। मैवं। न ह्यत्र भोजनविधिरस्ति। किन्तु रागतः प्राप्त एव भोजने निरामिषत्वादिनियमो विधीयते। ननु तर्हि नियमस्य पित्र्याङ्गत्वेन विहितत्वात् तद्विशिष्टभोजनानुष्ठाने प्राचीनावीतं कर्त्तव्यमेव। तन्न। द्रव्यक्रियागुणादीनां ह्यप्राप्तांश-प्राप्तिः कृत्स्नप्रयोगव्याप्यपरपर्य्यायानियमः। न चासावेकस्मिन् प्रयोगे अनवस्था शक्येति, नैकैकप्रयोगषाड्गुण्यादनवस्था स्यात्। अतो नियमस्य विधावपि नियमस्वरूपाधिकस्यानुष्ठेयस्य विरहान्न तत्प्रयुक्तया प्राची-नावीतप्राप्तिः। नन्वेवं तर्हि एकस्य कर्तुरनेकस्य वासः सर्वप्रकर-णासम्भवादनुष्ठेयार्थत्वमेव विधेः प्रसज्येत। नियमविधितः प्रागेव प्राप्तनियमस्वरूपातिरिक्तानुष्ठेयविरहे चानर्थकमेवापद्येत। अतः प्रतिप्र-योगं पक्षीभूतद्रव्याद्युपादानपक्षे यः प्राप्तिविरहस्तदुपमर्द्देन तत्रापि या प्राप्तिः स नियमः स च नियम्यधर्मस्तदतिरिक्तः प्रतिप्रयोगमनुष्ठेय एवेत्यभ्युपगन्तव्यं। ततश्च तत्प्रयुक्तया प्राचीनावीतप्राप्तिः। आह। नियम्यस्वरूपव्यतिरिक्तानुष्ठेयविरहेपि पाक्षिकत्वापादकद्रव्यनिवृत्त्यर्थत्वं विधेः। न च निवृत्तौ किञ्चिदनुष्ठेयमस्ति। प्रवृत्त्यात्मकत्वादनुष्ठा-नस्य। अतो न तत्प्रयुक्तया प्राचीनावीतकरणं। मैवं। अस्ति निवृ

त्तावपि विधायकप्रयत्नानुवृत्तिरूपमनुष्ठेयं। तत्रापि विधिनैव प्रवृत्तत्वात्। निषेधस्यापि विधिमन्तरेणानिष्पत्तेः। अथ केषुचित्प्रयोगेष्वप्राप्तिव्यावृत्त्या तत्स्वरूपमात्रानुष्ठापकत्वेनैव विधेरर्थवत्त्वमिति मन्यसे तर्हि तत्स्वरूपानुष्ठानस्य विहितत्वात् सुतरां तत्र प्राचीनावीतप्राप्तिः। अथोच्यते। केषु प्रयोगेष्वप्राप्तिं व्युदस्य विधिना प्राप्तिः क्रियते केषु पुनः प्राप्तिरिति विवेकाभावान्न विभागेन प्राचीनावीतानुष्ठानपरिनिष्ठेयत्वं तर्ह्याशङ्कितवैगुण्यपरिहारार्थं सर्वत्र प्राचीनावीतमेव कर्त्तव्यं। न। चाशङ्किताविहितपदार्थकरणभयाद्वैपरीत्यमेव किं न स्यादिति वाच्यं। यतो विहितत्यागाद्वरमविहितोपादानम् अधिकं नैव दुष्यतीत्यादेरेवंविधविषयसावकाशत्वात्। तस्मात् भोजनाश्रितत्वेन विहितस्य निरामिषत्वादिनियमस्यानुष्ठाने प्राचीनावीतं कर्त्तव्यमिति। अत्रोच्यते। भोजनस्वरूपस्य रागतः प्राप्तत्वात्पुरुषार्थं तदाश्रितो निरामिषत्वादिनियमः श्राद्धीयनिमन्त्रणार्थत्वात् कर्म्मार्थः कर्म्मार्थाच्च पुरुषार्थं बलीयः अतः कर्म्मार्थनियमविधिप्रयुक्तप्राचीनावीतबाधेन पुरुषार्थस्वरूपभोजनप्रयुक्तं यज्ञोपवीतमेव कार्य्यं। किञ्च धर्म्मिरूपं हि भोजनं तदाश्रितो नियमस्तु धर्म्मरूपः धर्म्म-धर्म्मिणोर्धर्म्मी बलीयान् अतो भोजनप्रयुक्तमत्र यज्ञोपवीतमेवाश्रयणीयं। किञ्च "सोत्तरच्छादनश्चैव यज्ञोपवीती भुञ्जीतेत्यापस्तम्बवचनात् भोजनाश्रितस्य यज्ञोपवीतस्य पुरुषार्थत्वेन प्रधानत्वं निरामिषत्वनियमाश्रितस्य प्राचीनावीतस्य निमन्त्रणाङ्गत्वेनाप्रधानत्वं प्रधानाप्रधानयोर्विरोधे च प्रधानस्य बलीयस्त्वेनाप्रधानबाधो न्याय्यः। अतो न निरामिषत्वादिनियमप्रयुक्तस्य प्राचीनावीतस्यानुष्ठानं। किञ्च पित्र्य-

त्वेन प्राप्तस्य प्राचीनावीतस्य तत्रापसव्यपूर्वकं पितृपूर्वं निमन्त्रयेदित्यादिना सङ्कल्पात्प्रभृति निमन्त्रणे पुनर्विधिना कृते पूर्वकृते निरामिषभोजनादौ प्राचीनावीतं परिसङ्ख्यायते। अत्र निमन्त्रणाय सुतशिष्यादिप्रेषणमादरार्थं निमन्त्रणीयस्थानोपसर्पणञ्च लोकतः प्राप्तप्रमादार्थमनूद्यत इत्यतोऽपि न प्राचीनावीतहेतुतामवगाहते अतो वाक्यशुद्ध्यर्थं पुरश्चरणरूपेण सद्भिराचर्यमाणानां विशिष्टेष्टदेवतासंस्मरण-कीर्त्तन-प्राणायामानां श्राद्धाङ्गत्वान्न प्राचीनावीतप्रयोजकत्वं देशकालं संकीर्त्तनपूर्वकं श्राद्धं सङ्कल्पवाक्यं परिसङ्ख्याङ्गत्वविरहात् प्राचीनावीतिनैव प्रयोज्यं वैश्वदेविकं द्विजनिमन्त्रणञ्च यज्ञोपवीतिना कार्य्यं। तदाह स एव सव्येन वैश्वदेवार्थान् प्रणिपत्य निमन्त्रयेदिति। 'सव्येन' यज्ञोपवीतेन विशिष्टः, विस्तरो निमन्त्रणप्रकरणे जान्वालम्भादिनियमश्रावणान्तयोर्दैवपित्र्यनिमन्त्रणेतिकर्त्तव्यतयोरपि यथास्वं सव्यापसव्यसम्बन्धोऽनुसन्धेयः। ब्रह्मचर्यादिनियमपालनञ्च श्राद्धार्थत्वेन विहितत्वात् पित्र्यमपि यज्ञोपवीतधर्मकदैवमानुषानेककार्यसङ्कीर्णत्वात् भूयसां स्यात् स्वधर्मत्वमिति न्यायेन यज्ञोपवीतवतैव कार्यं। ब्राह्मणकर्तृकेषु स्तुतिवचन-मन्त्रजप-दन्तधावन-नख-श्मश्रुकर्त्तनोद्वर्त्तनाभ्यञ्जनप्रतिपाद्यमानस्वीकरणाभ्यवहरणवमनादिषु पदार्थेषु पित्र्यत्वात् प्राचीनावीतिरस्त्विति चेत्। न। उक्तरीत्यैव प्रायो निरस्तत्वात्। सर्वेषां प्राचीनावीतिना सम्यगित्यादीनां प्राचीनावीतिविधिवाक्यानां श्राद्धकर्त्तृकसंबद्धत्वात् को वा ब्राह्मणेषु प्रसङ्गः। पाकभूम्यापलेपनप्रोक्षणोल्मुकोपनयन-तिलसर्षपाविकिरण-वस्त्रबन्धनापासनीयनिरसनभाण्डादिमेलन-चालन-तण्डुलाद्यधिश्रायण-श्रयणावश्रायणोद्वासनादीनि तु

दिव्यपितृसाधारणत्वेन विहितत्वात् पित्र्यत्वेऽपि पत्न्यादिकर्तृकाण्यपि भवन्तीति न प्राचीनावीतधर्मनियतत्वेन शक्यानि वक्तुं। अतो यजमानेनापि क्रियमाणान्यौत्सर्गिकयज्ञोपवीतधर्मकाण्येव कर्त्तव्यानि । वक्ष्यमाणतन्दुलादिनिर्वापस्तु पितृभ्यो वोजुष्टं निर्वपामि पितामहेभ्यो वोजुष्टं निर्वपामीत्येवमादिमन्त्रकरणको यजमानकर्तृक एवेति प्राचीनावीतयुक्त एव युक्तः । अत्र पित्रर्थो वैश्वदेविकार्थश्चैक एव पाक इति न वैश्वदेवार्थः । पृथक्निर्वापेऽपि न तत्प्रयुक्तमपि यज्ञोपवीतत्वं वाच्यं । ननु तर्हि कथं पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव चेति पृथक् वैश्वदेवनिर्वापवचनं । मैवं । वैश्वदेवशब्दमात्रपञ्चमहायज्ञान्तर्गतदेवयज्ञत्वे प्रसिद्धवैश्वदेवाभिधानात् ।कथमिति। चेत् ।न। दार्शवैश्वदेविकमित्यनेन सहैकवाक्यत्वात् । अत्र हि दार्शस्य वैश्वदेविकत्वं निषिध्यते, न च तद्दार्शश्राद्धाङ्गवैश्वदेविके घटते तस्यापि दार्शशब्दार्थान्तर्गतत्वात् । न च दार्शस्यैव दार्शनिषेधः सम्भवतीति । ब्राह्मणनखरोमकर्त्तनदन्तधावनतैलामलकादिस्नानार्थद्रव्यप्रापणानि तु दैवपित्र्यधर्मविभागशून्यत्वादौत्सर्गिकयज्ञोपवीतवतैव कार्य्याणि । उक्तधर्मविशेषे विभागशून्यत्वं त्विह पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवत्यपूर्वकमित्युत्तरपदार्थे तद्विभागविधेरवगम्यते । दाने च वैश्वदैवत्यपूर्वकमिति दैवपित्रधर्मविशेषोपदेशलिङ्गाद्यज्ञोपवीतप्राचीनावीतादिधर्मविभागोऽपि गम्यते । नित्यकर्माङ्गस्नानयोस्तन्त्रेणानुष्ठाने क्रियमाणे तद्धर्मयोर्यज्ञोपवीतप्राचीनावीतयोर्विरुद्धत्वादवश्यमन्यतरस्मिन् हातव्ये सत्यागन्तुकप्राचीनावीतं हित्वौत्सर्गिकं यज्ञोपवीतमेवाश्रयणीयं। ननु कर्माङ्गस्नानस्य तावन्नित्यस्नानविहितेतिकर्त्तव्यताग्राहकतया तद्विकृतित्वम्, अस्ति च यज्ञो-

पवीतिना कर्त्तव्यं दक्षिणान्तरेण कर्त्तव्यमित्येवमादिवाक्यैरनारभ्य विहितं प्रकृतत्वान्नित्यस्नाने यज्ञोपवीतं, अतोऽतिदेशतः प्राप्तस्य यज्ञोपवीतस्यौपदेशिकं प्राचीनावीतं बाधकं भविष्यात। न च क्रियाङ्गस्नानं परिहृत्यान्यस्मिन्पात्रे प्राचीनावीतविधानसम्भवात् तस्योपदेश एव नास्तीति वाच्यम्। अतिदेशानुरोधेनोपदेशसङ्कोचस्यान्याय्यत्वात्। न च नित्यस्नान-कर्माङ्गस्नानयोस्तन्त्रानुष्ठाननियमोऽप्यस्ति, धर्मभेदात्। अतः पृथगनुष्ठीयमाने कर्माङ्गस्नाने सुतरां प्राचीनावीतं प्रसज्यमानं केन वार्य्यते। उच्यते। पित्र्यमानिधनादित्यनुवाक्येन तावत् पित्र्यमात्रे प्राचीनावीतं विधीयते। सम्भवति च प्रेतक्रियायामपि पितृमेधशब्दप्रयोगात् पित्र्यपदव्यपदेश्यत्वं एकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधेति वैजवापगणविहितस्वधाशब्दलिङ्गाच। अतस्तदङ्गभूते स्नाने पित्र्यत्वात् सामान्याकारेण प्राचीनावीतेः प्राप्तिरस्ति, दृश्यन्ते च पुनर्व्विशेषतोऽपि तत्र प्राचीनावीतविधयः।

तथा च शङ्ख-लिखितौ। प्रेतस्य बान्धवा यथापवृद्धमुदकमवतीर्य्य नोद्वर्षयेरन्नपः प्रसिञ्चेरन् सकृत्प्रादक्षिणाभिमुखा राजन्यवैश्यावप्येवमेवापसव्यं वासोयज्ञोपवीते कृत्वेति।

'प्रेतस्य' प्रमीतस्य, 'बान्धवाः' सपिण्डसमानोदकादयः, 'यथावृद्धं' वृद्धक्रममनतिक्रम्य 'उदकमवतीर्य्य' जलाशयस्थमुदकमवगाह्य, अङ्गानि करेण वा वाससा वान्येन वा केनचिन्नोद्वर्षयेरन्, पुनस्तीरमागत्य तत्राञ्जलिना 'सकृत्' एकवारं, प्रादक्षिणाभिमुखाः, सकृदित्यादिविशेषणमुदकावतरेणापि सम्बध्यते, राजन्यवैश्यावप्येवं। ब्राह्मणवद्देवोदकमवतीर्य्य अपः प्रसिञ्चेरन्, 'अपसव्यं' वासोयज्ञोपवीते कृत्वा 'वासः' उत्त

रीयं, 'यज्ञोपवीतं' ब्रह्मसूत्रं, ते उभे अपसव्यं यथा स्यातां तथा कृत्वा तथा प्रयत्नं विधाय प्राचीनावीतरूपेणावस्थाप्येत्यर्थः। राजन्य-वैश्ययोस्तु पृथगभिधानात् दिगन्तराभिमुख्यमपि गम्यते। अतएव प्रचेताः।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्घर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्यैः यज्ञोपवीतवाससी दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखा राजन्य-वैश्ययोः।

तत्रापसव्यस्य प्रसेकेनैव सम्बन्ध इति वाच्यं यतः स्पष्टमेव स्नानेनाप्यस्य सम्बन्धः।

बौधायनेनोच्यते। मरणे तु यथावृद्धं पुरस्कृत्य यज्ञोपवीतान्यपेशलानि कृत्वा तीर्थमेवावतीर्य्य सकृत्त्रीन्निमज्ज्योन्मज्ज्य तत्प्रत्ययमुदकं निषिच्य ततोवतीर्य्याचामन्ति।

'अपेशलानि' अमङ्गलानि प्राचीनानीत्यर्थः।

बान्धवमरणं प्रकृत्य पारस्करोप्याह।

एकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयापनोद्यापो नः शोशुचदघमिति दक्षिणामुखा निमज्जन्ति।

'एकवस्त्राः' उत्तरीयशून्याः, एतच्चापसव्यं वा यज्ञोपवीते कृत्वेत्यनेनोत्तरीयदर्शनेन सह विकल्पते शाखाविशेषे व्यवतिष्ठते वा, सव्यपाणेरनामिकयोपकनिष्ठिकयाङ्गुल्या जलावयवांस्तत्रत्यश्यामलत्वादि 'अपनोद्य' अपसार्य्य, आपोनः शोशुचदघमित्यनेन मन्त्रेण दक्षिणाभिमुखा ज्ञातयः स्नानं कुर्युः। तदेवं प्रेतस्नाने पुनः प्राचीनावीतविधेः पार्व्वणश्राद्धादिरूपकामार्थस्नाने प्राचीनावीतपरिसङ्ख्याध्यवसीयते। ननु

प्राचीनावीतिनेत्यादिमनुवचनं दर्शश्राद्धप्रकरणे समाम्नातं तत् प्रकृतादन्यत्र न स्यादेवेति प्रेतस्नाने प्राचीनावीतप्राप्तिविरहात् कथं परिसङ्ख्या । नचास्यानारभ्यवादस्थितत्वेन साधारणप्राप्तिरिति वाच्यं । अनारभ्यवादानां प्रतिगामित्वनियमात् । उच्यते । दर्शश्राद्धाङ्गभूतस्यापि प्राचीनावीतस्यातिदेशेन प्रेतक्रियायां प्राप्तौ तदङ्गभूते स्नाने प्रकृतवत् प्राप्तिरस्त्येव । अतोऽतिदेशतः प्राचीनावीतप्राप्तौ स्नानविशेषे पुनर्विधानात् भवत्येव परिसङ्ख्या । अथवा प्राचीनावीतिपितॄणामिति वैदिकलिङ्गदर्शनात् सामान्याकारेण पित्र्यमात्रे प्राचीनावीतप्राप्तिः । तस्मात् प्रेतक्रियाङ्गस्नानादन्यस्मिन् दर्शादिश्राद्धाङ्गभूते पित्र्येऽपि स्नाने न प्राचीनावीतं किन्त्वौत्सर्गिकं यज्ञोपवीतमेव कार्य्यमिति सिद्धं । पित्र्यकर्माङ्गस्नानार्थमाचमनं यज्ञोपवीतिनैव कार्य्यं यज्ञोपवीती स्नायादित्यत्र सेतिकर्त्तव्यताके स्नाने यज्ञोपवीतविधानात् । यानि च श्राद्धारम्भब्राह्मणपादशौचार्चनविकिरपिण्डदानश्राद्धान्तेषु कर्माङ्गान्याचमनानि तान्यपि यज्ञोपवीतविधानात् यज्ञोपवीतयुक्तानि कार्य्याणि ।

अतएवाह यज्ञोपवीतकरणे गौतमः ।

यज्ञोपवीत्यामणिबन्धनात् पाणी प्रक्षाल्य वाग्यतो हृदयं स्पृशंस्त्रिश्चतुर्वाप आचामेदिति ।

अत्र शिष्टाचारदार्ढ्याद्यज्ञोपवीतशब्देन पूर्वव्याख्यातसंस्थानविशेषयुक्तं ब्रह्मसूत्रं विवक्षितं न ब्रह्मसूत्रमात्रम् ।

आचमनं प्रकृत्य तत्र यज्ञोपवीतित्वनिषेधभङ्ग्या यज्ञोपवीतविधिमाह हारीतः ।

नायज्ञोपवीती न मुक्तशिख इत्यादि ।

शङ्खोऽप्याह नाधौतपादो नायज्ञोपवीती इति ।

ननु सामान्यवचनान्येतानि पित्र्यं कर्म प्राचीनावीतिना कार्य्यमित्यनेन विशेषवचनेन स्वविषये वाध्यन्ते। मैवं। पित्र्यमिति तद्धितश्रुतिस्तावत् पितृसम्बन्धितया विहितं कर्माभिधत्ते। तत्र किञ्चित्साचात् पितृसम्बन्धितया विहितं पित्र्यम्भवति यथा पितृब्राह्मणगन्धादिदानादि किञ्चित्पितृकर्माङ्गत्वात् पित्र्यं यथा पाकप्रोक्षणादि तत्राचमने साक्षात् पितृसम्बन्धात् प्रकरणाख्यप्रकरणारभ्यप्रमाणावगतान्याल्लानुसन्धानेन पितृत्वं भवतीति तद्विषये प्राचीनावीतशास्त्रं विलम्बेन प्रवर्तते। यज्ञोपवीतशास्त्राणि त्वन्तरा प्रमाणान्तरव्यापारानुसन्धानमन्तरेणैव झटिति सर्वस्मिन्नाचमने प्रवर्तते। अतः क्रियाङ्गेप्याचमने प्रथमं प्राप्तं यज्ञोपवीतं पश्चात् प्राप्यमानेन प्राचीनावीतेनाचमनव्यतिरिक्तविषये सावकाशेन न बाध्यते। तस्मात् तत्रापि यज्ञोपवीतमेव कार्य्यं दक्षिणामुखत्वं तु वचनात् कर्तव्यं। तथा चाचमनाधिकारे देवलः।

प्रथमं प्राङ्मुखं स्थित्वा पादौ प्रक्षालयेच्छनैः।
उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुख इति॥

यानि तु प्रयोगमध्ये क्षुतादिनिमित्तकान्याचमनानि तेषां कर्माङ्गत्वाभावादेव तत्र प्राचीनावीतविरहः। ननु तेषामपि वैगुण्यहेतुभूताशुचित्वनिवृत्त्या षाड्गुण्यापादकशुचित्वजननद्वारेण च कर्माङ्गत्वमस्त्वेव एतदेवानुसन्धाय स्मार्तशुद्ध्यर्थाचमनप्रवेशे श्रौतकर्मकालादिविरोधं परिहरद्भिराचार्य्यैरुक्तम्।

वेदं कृत्वा यदा वेदिमकृत्वाचामति क्षुते।
वेदिमेव करोतीति स वक्तुं शक्यते तदेति॥

उच्यते। शुचिना कर्म कर्तव्यमित्यनेन वाक्येन शुद्धेः कर्माङ्गत्वमवगमितं सा च पुरुषार्थतया विहितेनाचमनेन क्रतुप्रयोगमध्ये निष्पाद्यमाना तन्त्रेण क्रतुनापि सम्बध्यते। न च पुरुषार्थस्याप्याचमनस्य खादिरत्वादिवत् क्रत्वर्थत्वमस्त्विति वाच्यं। संयोगपृथक्त्वाभावात्। आचार्योक्तिराचमनजनितायाः शुद्धेरव्यवधायकत्वमित्येवंपरा, यतः शुद्धिमात्रस्याव्यवधायकत्वमित्येवं परा, यतः शुद्धिमात्रस्याव्यवधायकत्वमुक्तं तैरेव।

वेदिमेव ह्यनाचम्य कुर्वीत विगुणीभवेत्।
तामेव सगुणीकर्तुं शुद्ध्या न व्यवधास्यत इति॥

शुद्ध्यर्थाचमने यज्ञोपवीतविरहे दोषमाह शङ्खः।

विना यज्ञोपवीतेन तथा मुक्तशिखो द्विजः।
अप्रक्षालितपादस्तु आचान्तोऽप्यशुचिर्भवेदिति॥

यानि पुनरिहाशुचित्वमनापदद्भिरेव निमित्तैः प्रयुक्तान्याचमनानि तेषु प्राचीनावीतशङ्कैव नास्तीति सर्वमनवद्यं। दर्भच्छेदनाहरणयोर्दर्भविधिनैवार्थप्राप्तयोरनुवादात् प्रयोगवहिर्भावाच्च कृषिक्रियादिवदौत्सर्गिकयज्ञोपवीतधर्मकत्वं। किञ्च। गृहाहृतस्य श्राद्ध देशं प्रत्याहरणे प्राचीनावीतोपदेशाहृतं प्रत्याहरणे तन्निवृत्तिरवसीयते। वरुणस्तुत्यादीतिकर्तव्यतासहितस्याभ्युक्षणाहरणस्य च पञ्चमहायज्ञादिसर्वकामार्थित्वाङ्गूयसां स्यात् सधर्मत्वमित्यनेन न्यायेन यज्ञोपवीतकर्तव्यत्वं श्राद्धार्थद्रव्याणां, श्राद्धप्रदेशं प्रत्याहरणं प्राचीनावीतेन कार्य्यम्। आहरेदपसव्येन सर्वं दक्षिणतः शनैरिति मत्स्यपुराणवचनात्। द्रव्यप्रोक्षणस्य च दैवपितृसाधारणत्वेन पित्र्यत्वादित्यप-

सव्यं नानुष्ठानं । ब्राह्मणाक्कानस्य चार्थप्राप्तस्यानुवादात् पूर्ववद्यज्ञोपवी-
तिकर्त्तव्यत्वं । प्रत्युत्थानस्वागतप्रश्नाशनोपवेशरथ्यारजोपनयनार्थपाद-
प्रक्षालनादीनि गन्धमाल्याद्यलङ्करणं चेति लौकिकत्वात् सव्येनैव
कार्य्याणि । पुनर्निमन्त्रणद्वयं च पूर्वनिमन्त्रणवद्दैवपित्र्यस्थाने सव्यापस-
व्यविभागेनैवानुसन्धेयं । यथाप्रथममेकं द्वितीयं तृतीयं चेत्यापस्तम्ब-
वचनात् मण्डलकरणनदर्चनब्राह्मणचरणक्षालनतदभ्यर्चनार्घ्यदानादीनि
दैवानि पित्र्याणि च पूर्वप्रकरणस्थं मत्वाश्वलायनप्रोक्तसामान्यवचन-
प्रतिपादितेनोपवीतधर्मविभागेन कार्य्याणि । इह केषुचित्पदार्थेषु
विभागेन सव्यापसव्यधर्मप्रतिपादका नागरखण्डोक्ताः श्लोकाः प्रयो-
गप्रतिपादने प्रदर्शयिष्यन्ते । देवपित्र्यपादप्रक्षालनार्चनाद्युपयुक्तद्रव्य-
शेषप्रतिपत्तिः । सव्यापसव्यविभागेनैव श्राद्धभूम्यागमनमप्यर्थप्राप्तं यज्ञो-
पवीतयुक्तस्यैव श्राद्धसिद्धिवाचनं चोभयात्मकत्वाद्विहितत्वाच्च प्राची-
ना वीतिना कार्य्यं ननु जपाशीःस्वस्तिवाचनमित्यनेनाशिषि यज्ञोप-
वीतिविधानादस्य चार्षरूपत्वात् कथं प्राचीनावीतमिति । मैवं ।
अभ्यर्थनात्मकत्वेनास्य तृप्याशीःसारूप्ये कर्मस्वरूपसम्पत्त्यर्थत्वेन कर्मैक-
संबद्धत्वात् तत्प्रयुक्तं प्राचीनावीतमिति । एतेनैव पैतृकाभ्यर्चनपिण्ड-
दानश्राद्धानि पैतृकब्राह्मणे सङ्कल्पसिद्धिवाचनमच्छिद्रवाचनं चेत्येतेषु
प्राचीनावीतमनुसन्धेयं । गोमयगोमूत्रोपलेपनोल्लुकपरिभ्रमणकुशति-
लविकिरणवस्त्रबन्धनादयः श्राद्धभूसंस्काराः प्राचीनावीतवन्त एव ।
आसनोपकल्पनं तेषु च द्विजपादयोरधस्ताच्च कुशनिधानं द्विजोपवेश-
नमपहता इति तिलविकिरणं भाजनदीपिकादिस्थापनं पङ्क्तिभेदार्थं
भस्मादिमर्यादाकरणं भाजनचालनं करशौचदानं तयोरुदकस्य प्रति-

भाजनेष्वाज्योपस्तरणं चेत्येतानि देवपित्र्यस्थाने यथायथं यज्ञोपवीत-प्राचीनावीतवता कार्य्याणि । अतिथ्युपवेशनपृथिव्यादिस्तुतिदेवता-स्तुतिप्राणायामाः सव्येनैव देशकालसङ्कीर्त्तनादि युष्मदनुज्ञया करिष्ये इत्येवं प्रश्नवाक्यं प्राचीनावीती समुच्चारयेत् ।

एतदुच्चारणपूर्वभाविनो मन्त्रविशेषजपस्यापि प्राचीनावीतधर्मकत्व-माह प्रचेताः ।

अपसव्यं ततः कृत्वा जप्त्वा मन्त्रन्तु वैष्णवं ।
गायत्रीं प्रणवञ्चापि ततः श्राद्धमुपक्रमेदिति ॥

'ततः' इति ब्राह्मणोपवेशनानन्तरकालीनप्राणायामोत्तरकाल-मित्यर्थः । श्राद्धोपक्रमस्य श्राद्धसङ्कल्पकरणं ब्राह्मणभोजनकाला-दन्यत्र सप्तार्च्चिरादिजपस्तु प्राचीनावीतेनैव भुक्ता यत्स्वश्नतां जप इत्यनेन भोजनकालीन एव जपे प्राचीनावीतापवादवचनानामुप-संहारात् । नीवीबन्धस्यापसव्येनैव कर्त्तव्यः पितृदेवत्या वै नीविरिति पि-तृकल्पश्रुतेः । दर्भासनदानाद्याच्छादनान्तं वैश्वदेविकं यज्ञोपवीतिनां कर्त्तव्यं ।

पित्र्यञ्च तदादितदन्तं प्राचीनावीतिनेत्याह बृहस्पतिः ।

ऋजून् सव्येन वै दत्त्वा देवे दर्भान् प्रदक्षिणं ।
द्विगुणानपसव्येन दद्यात् पित्रेपसव्यवत् ॥

अत्र सव्यापसव्याभ्यां यज्ञोपवीतप्राचीनावीतयोर्ग्रहणं न तु प्रद-क्षिणत्वाप्रदक्षिणत्वयोः । प्रदक्षिणापसव्यवच्छब्दाभ्यां तयोः पृथगुपा-दानात् । दर्भानिति दर्भासनं एतच्च सव्यमाच्छादनदानान्तेषु वैश्वदेवि-कपदार्थकाण्डसमाप्त्यनन्तरं ।

प्राचीनावीतमुपदिश्यंस्तावत्कालं यज्ञोपवीतानुवृत्तिं सूचयति याज्ञवल्क्यः ।

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणं ।

द्विगुणांस्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ॥

आवाहयेदित्युत्तरेण सम्बन्धः । एतच्च प्राचीनावीतमर्घ्यसंस्रवविनियोगं विहायाच्छादनान्तमनुवर्त्तते । अतएव दर्भासनाद्याच्छादनान्तक्रियाकाण्डमध्यवर्त्तिषु केषुचित्पदार्थेषु कण्ठोक्त्यैव प्राचीनावीतवचनं दृश्यते । तथा च ब्रह्माण्डपुराणे ।

अपसव्यं ततः कृत्वा तिलानादाय संयतः ।

पितॄणावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥

अर्घ्यपात्राण्यधिकृत्य वैजवापकृतसूत्रे

प्राचीनावीतपात्राणपूर्णानि सदर्भाणि सतिलानि पश्चादग्नेर्दर्भेषु निधायेति ।

'अग्नेः' अन्वाहार्य्यपचनादेः, अतो दर्भासनदानाद्याच्छादनान्तं पित्र्यं कर्मकाण्डमपसव्येन कर्त्तव्यं । न च गन्ध-पुष्प-धूप-दीपाच्छादनं ब्राह्मणेभ्य एव क्रियते, पितृभ्य इति तस्य लौकिकत्वाद्यज्ञोपवीतधर्मकत्वमिति वाच्यम् । ब्राह्मणाधिष्ठानकं पितृभ्य एव तद्दानमित्युक्तत्वात् । अग्नौकरणन्तु कात्यायनमतानुसारिभिरनुज्ञाभ्यर्थनात्प्रभृत्येव प्राचीनावीतिभिः कार्य्यं । आश्वलायनमतानुसारिभिश्चानुज्ञाभ्यर्थनात्प्रभृति तदुत्तरकालभाविपदार्थात्प्रभृति वा प्राचीनावीतिभिरेव कार्य्यं । अथवा सर्वैरेवादितः प्रभृति प्राचीनावीतेन यज्ञोपवीतेन वा कार्य्यमिति । एतत् सर्वमग्नौकरणप्रयोगान्तर्वर्त्तिप्राचीनावीतादिनिर्णय-

प्रकरणे प्रपञ्चेनोपपादयिष्यते । कृतशेषप्रतिपत्तिस्तु सर्वैः प्राचीनावीतेनैव कार्य्या यतोऽत्र साधारणेनापसव्यमाह शौनकः ।

कृत्वाग्नौ परिशिष्टन्तु पितृपात्रेष्वनन्तरम् ।
निवेद्यैवापसव्येन परिवेषणमाचरेत् ॥

इत्येवंविधोऽन्वयः प्रतिपत्तव्यः । यत आह कार्ष्णाजिनिः ।

अपसव्येन कर्त्तव्यं पित्र्यं कृत्यमशेषतः ।
अन्नदानादृते सर्व्वमेवं मातामहेष्वपि ॥

अन्नदानमत्र परिवेषणं विवक्षितं । न तु पित्राद्युद्देशेनान्नत्यागः । तस्य साक्षात् पितृसम्बद्धत्वेन मुख्यतया पित्र्यशब्दवाच्यत्वात् प्राधान्येन प्राचीनावीतविधिविषयत्वात् ।

अपसव्येनान्नपरिवेषणे दोषमाह स एव ।

अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
विष्ठामश्नन्ति पितरः ते च सर्व्वे द्विजोत्तमाः ॥

पात्रालभनाङ्गुष्ठनिवेशनान्नत्याग-भोजन-प्रैषा वैश्वदेविके सव्येन पित्र्ये अपसव्येन कार्य्याः। अतिथेः सर्व्वं यज्ञोपवीतयुक्तमेव पिता पितामहस्तेत्यादिः श्लोकजपो भोजनात् प्रागुत्तरकालीनो गायत्रीमधुवातेत्यादिजपश्चापसव्येन । यद्यपि चात्र प्रदक्षिणं शिवा आपो जपाशौरित्यादिजमदग्निवचनसामान्येन जपमात्रे यज्ञोपवीतित्वमुक्तं, तथापि स्मृत्यन्तरे सूक्तस्तोत्रजपं मुक्त्वेति, मुक्त्वा यत्नश्नतां जप इति च, जपविशेष एव प्राचीनावीतित्वापवाददर्शनात् आपोशानन्तु नित्यभोजनविहितमेवानुष्ठीयते इत्यस्य पितुः सम्बन्धविरहाद्यजमानकर्तृकमपि तस्य दानं पित्र्यमेवेति यज्ञोपवीतिनैव कार्य्यं । भुञ्जानेषु ब्राह्मणेषु पित्र्यसूक्तस्तोत्रमन्त्रगाथाख्यानादिजपो यज्ञोपवीतिना कार्य्यः ।

तथा च मरीचिः ।

प्रदक्षिणं शिवा आपोजपाशीः-स्वस्तिवाचनं ।

विप्रेषु दक्षिणादानं षट् सव्यानि प्रचक्षते ॥

'प्रदक्षिणं' विसर्जनानन्तरं वहिर्निर्गत्य मण्डलोपर्य्यवस्थितानां ब्राह्मणानां प्रदक्षिणीकरणं । 'शिवा आपः' सन्त्वित्यादिभिर्मन्त्रैः क्रियमाणं जलकुसुमाक्षतक्षेमात्मकं कर्म लक्ष्यते । अदृष्टार्थं मन्त्राद्युच्चारणं 'जपः' । 'आशीश्च यजमानगतफलप्रार्थनात्मिका दातारोनोऽभिवर्द्धन्तां इत्यादिकाभिप्रेता, न पुनः कर्मस्वरूपमात्रसम्बन्धिधर्मसम्पत्तिप्रार्थनारूपा । 'स्वस्तिवाचनं' स्वस्ति भवन्तो ब्रुवन्त्विति वाचनं । 'विप्रेषु दक्षिणादानं' यत्पित्राद्युद्देशमन्त्रेण विप्रेभ्य एव दक्षिणादानं क्रियते तदत्राभिमतं । न तु यत्पित्राद्युद्देशेन विप्ररूपाधिष्ठाने क्रियते तदपि, विप्रशब्देन विशेषितत्वात् । एतानि षट्कर्माणि 'सव्यानि' सव्यधर्मकानि यज्ञोपवीतधर्मकाणीत्यर्थः ।

जमदग्निरपि ।

अपसव्येन कर्त्तव्यं सर्वं श्राद्धं यथाविधि ।

सूक्तस्तोत्रजपं मुक्त्वा विप्राणाञ्च विसर्जनम् ॥

सूक्तस्तोत्राणि व्याख्यातानि । वाजे वाज इत्यनया कुशाग्रेण यत् क्रियते तत् 'विसर्जनं', तत्पितृसम्बन्ध्यपि सव्येनैव कार्य्यं । सूक्तस्तोत्रग्रहणं भुञ्जानेषु ब्राह्मणेषु यद्यज्जप्यं तस्य सर्वस्योपलक्षणार्थं ।

तथा च वृद्धशातातपः ।

कृतापसव्यः कुर्वीत मुक्त्वा यत्त्वश्नताञ्जपः ।

अश्नतामित्यश्नत्सु ब्राह्मणेषु यजमानेन क्रियमाणो जप इत्यर्थः । अश्नतामितिग्रहणाद् ब्राह्मणभोजनकालादन्यत्र योजपस्तत्र प्राचीना-

कीतमेव कर्त्तव्यं। प्राच्योदीच्याग्रेषस्वकीयाङ्गसहितं विकिरदानमपसव्येन। भाजनविमोचनार्थं सकृत् गण्डूषदानमापोशानदानसमानन्यायत्वाद्यज्ञोपवीतिना कार्यं। तृप्ताः स्थेति प्रश्नः, शेषान्नविनियोगप्रश्नश्च। दैवपित्र्यसाधारणेनेष्टत्वादपसव्येन कार्य्यः। आचान्तेषु च द्विजेषु सुप्रोक्षितमस्त्विति श्राद्धदेवप्रोक्षणमाशिषा सह समानरूपेणाभ्यर्थनेनानुविद्धमपि कर्म्मैकसम्बन्धाच्छ्राद्धविधिसम्पूर्णताभ्यर्थनवत् प्राचीनावीतिनानुष्ठेयं। ब्राह्मणपाणिषूदकपुष्पाक्षतदानानि तु स्मृत्याचारप्रमाणकशिवाआपःसन्त्वित्यादियजमानसम्बन्धयोग्याशीःप्रतिपादकमन्त्रानुविद्धत्वात् सर्व्वमङ्गल्यकर्म्मसम्बन्धात्पित्राद्युद्देशमन्तरेण क्रियमाणत्वाच यज्ञोपवीतिना कार्याणि।

तथाचात्र शङ्खधरेण च्छागलेयस्मृतिः दर्शिता।

इतः पुष्पाणि सव्येन सोदकानि पृथक् पृथक्।
दर्भपाणिः प्रदद्यात्तु वाङ्मनःकायसंयत इति॥

अतोऽध्यापककर्क आह।

आचान्तेषूदपुष्पाक्षतदानान्तञ्च दैवपूर्व्वं ततोऽपसव्यं पित्र्ये केचित्तु सव्येनेच्छन्ति। तन्न दानसंयोगात्। पिण्डपितृयज्ञवदुपचारः पितृत्वोपदेशादिति।

तन्निरन्तरं प्रदर्शितन्यायवचनाभ्यां दूषितमित्यनादेयमिवोपलक्ष्यते। अर्घ्योदकञ्च देवोद्देशेन पित्राद्युद्देशेन विहितमिति दैवेषु यज्ञोपवीतेनापित्र्येषु प्राचीनावीतिना कार्य्यं। अघोराः पितरः सन्तु गोत्रं नोवर्द्धतां दातारोनोऽभिवर्द्धन्तां इत्येवमादिकानामाशिषां जपाशीःस्वस्तिवाचनमित्यादिपूर्व्वप्रदर्शितजमदग्निवचनाद्यज्ञोपवीतिक-

र्त्तव्यत्वं। स्वधावाचनञ्च श्राद्धं पितृत्वात् प्राचीनावीतधर्मकं पात्रस्यार्घ्य-संस्रवमोचनं न्युब्जपात्रोत्तानीकरणञ्च प्राचीनावीतिना कार्यं।

अतएवाशीःप्रतिग्रहानन्तरमाहात्रिः।

अपसव्यं ततः कृत्वा पिण्डपार्श्वे समाहितः।
क्षिप्वा दर्भपवित्राणि मोचयेत् संस्रवांस्ततः॥

इति दक्षिणादानन्तु कैश्चित् ब्राह्मणेभ्य एवानत्यर्थं क्रियते, कैश्चिद् ब्राह्मणरूपाधिष्ठाने पितृभ्य एव तत्प्रीत्यतिशयकामैः क्रियते, तत्र पूर्वैर्यज्ञोपवीतेन कार्य्यं, उत्तरैस्तु प्राचीनावीतेन।

अतएव जमदग्निना पक्षद्वयं दर्शितम्।

सर्वं कर्मापसव्येन दक्षिणादानवर्जितम्॥

तथा। सर्वं कर्मापसव्येन यत्किञ्चिदिह कीर्त्तितं।
विहाय दक्षिणामेकां तथा विप्रविसर्जनं इति॥

विश्वदेवप्रीतिवाचने च यज्ञोपवीतं पूर्वमेवोक्तं। भोजनपात्रचालनस्य दैवपित्र्यस्थानकस्य सव्यापसव्यविभागेनानुष्ठानं। स्वस्तिवाचनं केचित् पितृसम्बन्धितया कुर्वन्ति, केचित्तु यजमानसम्बन्धितया, तदुभयमपि जपाशीःस्वस्तिवाचनमितिवचनाद्यज्ञोपवीतिनैव कार्यं। दैवे पित्र्ये च विसर्जनं यज्ञोपवीतिना कार्यमित्यपि प्रागेव दर्शितम्।

शौनकोऽप्याह।

उपचीय स्वधेति विसृजेदस्तु स्वधेति चेति अनुव्रजनन्तु प्राचीनावीतिनैव कार्य्यं।

ब्राह्मणप्रदक्षिणकरणे यज्ञोपवीतिकार्य्यत्वं। ब्राह्मणदत्तपुष्पाक्षतग्रहणाद्य मे सफलं जन्मेत्यादिप्रियभाषण-मनुचारण-संवाहन-स्वस्थानग-

मनार्थानुज्ञापन-सीमन्तानुगमनानि तु प्रस्थाप्यमानविशिष्टपुरुषसुक्तिरूपत्वेन लौकिकत्वाद्यज्ञोपवीतिना निष्पाद्यानि। उच्छिष्टाच्छादनस्य च नित्यभोजन इव कार्यप्रयुक्त्यैवानुष्ठीयमानस्य लौकिकत्वेनैव यज्ञोपवीतनिर्वर्त्यत्वं। योऽयत्रोच्छेषन्तु तत्तिष्ठेदित्यादिभिर्विहितः कालनियमो दृश्यते सोऽस्य लौकिकत्वेऽपि न विरुध्यते। पत्नीकर्तृकस्य मध्यमपिण्डभक्षणस्य पुत्रकामसम्बन्धेन विधानात् काम्यैकस्वरूपत्वे यजमानकर्तृकपत्नीसम्प्रदानकपिण्डदानस्य पितृसम्बन्धराहित्यात्। यज्ञोपवीतधर्मकत्वं। या तु पिण्डांस्तु गोऽजविप्रेभ्य इत्यादिका नित्यत्वश्रुता पिण्डनिर्वापाङ्गभूता प्रतिपत्तिस्तस्याः पित्र्यकर्मसम्बन्धेन पित्र्यत्वात् प्राचीनावीतिधर्मवत्त्वं। अस्याश्च प्रतिपत्तेः कामसम्बन्धाम्नानेऽपि नित्य-काम्योभयरूपत्वात् पित्र्यत्वसद्भावेन प्राचीनावीतिकर्त्तव्यत्वमेवाध्यवसातुं युक्तं, न तु काम्यप्रयुक्त्यानुष्ठीयमाने प्राचीनावीतं निवर्त्तेत। स्वजनकर्तृकस्य यजमानकर्तृकस्य च श्राद्धशेषभोजनस्य शेषाश्रितत्वेन श्राद्धोपकारकत्वेऽपि प्रयोगसामाद्युत्तरकालविहितपञ्चमहायज्ञानुष्ठानानन्तरकालीनत्वेन प्रयोगवहिर्भावं मन्यमानाः सर्वेऽपि शिष्टा यज्ञोपवीतधर्मकत्वमाचरन्तो दृश्यन्त इति तस्य तद्धर्मकत्वमाश्रयणीयम्।

इति विशेषतो निर्णयः।

इति प्राचीनावीतिनिर्णयः।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे परिभाषाप्रकरणं नाम दशमोऽध्यायः॥०॥

## अथ एकादशोऽध्यायः ।

दाने दानवपुङ्गवं बलिमथ द्वैपायनं वाङ्मये
सर्वानप्यजयन्मुनींस्तपसि यः प्रज्ञाप्रकर्षे गुरुं ।
सोऽयं प्रारभते पयोधितनयाप्राणेश्वरं संस्मरन्
हेमाद्रिर्विहितं प्रयोगमधुना श्राद्धस्य वक्तुं सुधीः ॥
आदौ तत्र निमन्त्रणप्रकरणं प्रस्तौति विस्फारित-
प्रज्ञालोकसमुद्धृतक्रतुलसत्सूत्रार्थसार्थो विधिः ।
यस्मिन्निर्मलितप्रयोगविततिश्चालोचिता सज्जनै-
रानन्दामृतमेदुरीभवदभिप्रायास्पदैः स्थास्यति ॥

अथ निमन्त्रणं ।

इह किल श्राद्धप्रयोगे प्रारिप्सितेऽर्थान्निमन्त्रणमन्तरेणापि तदुपयोगिब्राह्मणोपादाने प्रसज्यमाने निमन्त्रणप्रकारेणैव ब्राह्मणोपादानं कर्त्तव्यं इत्येवंविधनियमार्थो निमन्त्रणीयविशिष्टो निमन्त्रणविधिः प्रतिपाद्यते ।

तत्र वायुपुराणे ।

सर्ववेदव्रतस्नाताः पङ्क्तीनां पावना द्विजाः ।
ये च भाष्यविदो मुख्या ये च व्याकरणे रताः ॥
अधीयानाः पुराणञ्च धर्मशास्त्रं तथैव च ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षड़ङ्गवित् ॥

ब्राह्मदेयसुतश्चैव छन्दोगो ज्येष्ठसामगः।
पुण्येषु देवतीर्थेषु अभिषेककृतव्रताः॥
मुख्येषु ये च सत्रेषु भवन्त्यवभृथप्लुताः।
ये च सत्यव्रता नित्यं स्वकर्मनिरताश्च ये।
अक्रोधनाः शान्तिपरास्तान् वै श्राद्धे निमन्त्रयेत्॥
ये चापि नित्यन्दशसु सुकृतेषु व्यवस्थिताः।
स्वकर्मनिरता नित्यं तान् श्राद्धेषु निमन्त्रयेदिति॥

'सर्वे वेदः' मन्त्रब्राह्मणात्मिका एका समग्रा शाखा, तत्सम्बन्धानि च सर्व्वाणि व्रतानि अन्यान्यपि च कृच्छ्रादिरूपाणि, अथवा सर्व्ववेदाः ऋग्यजुःसामसंज्ञकानां वेदानां शाखात्रयं तत्सम्बन्धीनि शास्त्राणि व्रतानि। तत्र 'स्नाताः' पारङ्गताः, तेषु निष्णाताः निषण्णा इति वा। 'पङ्क्तीनां' भोजनार्थोपविष्टब्राह्मणपरम्पराणां, मध्ये समुपविष्टाः 'पावनाः' पवित्रतापादका भवन्ति। द्विजशब्देन विप्रा विवक्षिताः। 'ये च भाष्यविदः' वेद-तदर्थविषयाणां भाष्यनामधेयानां ग्रन्थानामर्थस्य सम्यग्वेत्तारः। 'ये च व्याकरणे रताः'। 'अधीयानाः पुराणं च' ब्राह्मादिपुराणमध्ये किंचिदेकमधीतमधीयते वा एतेपि पङ्क्तिपावनाः। 'धर्मशास्त्रं' मनुयाज्ञवल्क्यादिप्रणीतं स्मृतिशास्त्रं। तृणाचिकेतादिशब्दानामर्थः पूर्व्वमेव व्याख्यातः। 'पुण्येषु' पावनेषु, विश्वेश्वरादिदेवविशेषोपलक्षितेषु वाराणस्यादितीर्थेषु, अभिषेकैरङ्गभूतैः कृतानि निष्पादितान्यङ्गानि व्रतानि यैस्तीर्थस्थाने कृतनियमा वा ते तथा,अभिषेककृतश्रमा इति वा पाठः। 'सत्राणि' अहर्गणनिष्पाद्याः बहुयजमानकाः आसनोपायिचोदनाचोदिताः द्वादशाहगवामयनकुण्डपायिनामयनादिसंज्ञकाः सोमविकारभूताः

यागविशेषास्तेषु योऽवभृथः जलाशयसमीपे क्रियमाणः समाप्त्यङ्गात्मकः कर्मविशेषस्तत्र ये 'स्नाताः' कृतजलाप्लवनाः, ये च 'सद्योव्रताः' सद्यस्तदानी-मेव समापितव्रतपवित्रीकृताः, अथवाज्ञान-प्रमादादिभिः प्रत्यवायलेशे समुत्पन्ने सद्यस्तदानीमेव तत्प्रक्षालनाय कृच्छ्रादिव्रताचरणशीलाः, 'स्वकर्मनिरताः' स्वाधिकारविहितनित्य-नैमित्तिककर्मानुष्ठाननिष्ठाः, ये च 'दशसु सुकृतेषु व्यवस्थिताः' दशलक्षणे धर्मे विशेषेण स्थिताः आदर-विशेषेण नित्यं तदनुष्ठानप्रवृत्ताः । दशलक्षणश्च धर्मो मनुनोक्तः। धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणं॥ 'धृतिर्नाम धनादिसंक्षये सत्त्वाविनाशः' यदीदं क्षीणं ततः किं स्यात् शक्यं हि मयान्यदप्यर्जयितुमिति । एवमिष्टवियो-गादौ संसारगतिरियमीदृशीति चित्तस्य यथापूर्वमवस्थापनञ्च। 'क्षमा' अपराधमर्षणं, कस्मिंश्चिदपराधे प्रत्युद्वेजनानारम्भः । 'दमः' अनौद्धत्यं विद्यामदादित्यागः। 'अस्तेयं' प्रसिद्धं । 'शौचं' आहारादिशुद्धिः । 'इन्द्रियसंयमः' अप्रतिषिद्धेष्वपि विषयेष्वप्रसङ्गः । 'धीः' सम्यक्ज्ञानं, प्रतिपक्षीभूतसंशयादिनिराकरणसमर्था बुद्धिः । 'विद्या' आत्मज्ञानं । कर्माध्यात्मज्ञानभेदेन धीविद्ययोर्भेदः। 'सत्यं' यथार्थवचनं। 'अक्रोधः' रोषाभावः । 'स्वकर्मरताः' परकर्मार्जनपरत्वादस्यापौनरुक्त्यं । एवंवि-धलक्षणान् ब्राह्मणान् श्राद्धेषु निमन्त्रयेत्।

महाभारते ।

ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
अक्रोधना अचपलाः क्षान्ता दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥

ब्रह्माण्डपुराणे।

ये वेदभाष्यवेत्तारो ये वै व्याकरणे श्रुताः।
धर्मशास्त्र-पुराणानि मीमांसां येऽप्यधीयते॥
पुण्यतीर्थाप्लुता ये च तपसा क्षीणकिल्बिषाः।
ये पीतसोमाः सत्यस्थाः व्रतोपव्रतसंयुताः।
रहिताः क्रोध-लोभाभ्यान्तांस्तु श्राद्धे निमन्त्रयेत्॥

'पीतसोमाः' इत्यत्र सोमपानकर्तृत्वेन सोमयागकर्तृत्वं लक्ष्यते। 'व्रतानि' धर्माः, 'उपव्रतानि' नियमाः, ते च पूर्व्वं दर्शिताः।

नागरखण्डे तु निमन्त्रणविधौ निमन्त्रणीयानामाश्रमक्रमेण कल्पानुकल्पविभागोऽपि दर्शितः।

निमन्त्रयेद्यतीन् पूर्वं वनस्थान् वर्णिनस्तथा।
तदभावे गृहस्थांश्च ब्रह्मज्ञानपरायणान्॥
अग्निहोत्रयुतान् वापि वेदविद्याविचक्षणान्।
श्रोत्रियांश्च तथा वृद्धान् स्वधर्मनिरतान् सदा॥
बहुभृत्यकुटुम्बांश्च दरिद्रान् कुलसंयुतान्।
अव्यङ्गानतिरिक्ताङ्गान् यथार्थज्ञांस्तथा शुचीन्॥

'वर्णिनः' नैष्ठिकब्रह्मचारिणः।

इति निमन्त्रणीयविशिष्टो निमन्त्रणविधिः।

अथ विहितेऽपि निमन्त्रणे तत्कालविशेषे चाविहिते यस्मिन् कस्मिंश्चित् काले चाङ्ग-प्रधानप्रत्यासत्त्यतिशयानुग्रहाय प्रयोगकाल एव वा निमन्त्रणे प्रसक्ते कालविशेषः प्रतिपाद्यते। स च स्थूल-सूक्ष्मविभागेन द्विधा। तत्र तावत् स्थूलः प्रतिपाद्यते।

आह विष्णुः ।

अथ श्राद्धेप्सुः पूर्व्वेद्युः ब्राह्मणानुपनिमन्त्रयेत् ।

'श्राद्धेप्सुः' श्वोभूते श्राद्धं कर्त्तुमिच्छुः श्राद्धकर्त्ता तत्प्रेषितो वा सवर्णः, 'पूर्व्वेद्युः' पूर्व्वस्मिन् दिवसे, श्राद्धभोजनार्हान् ब्राह्मणान् 'उपनिमन्त्रयेत्' निमन्त्रणेन संयोजयेत् । निमन्त्रणं नाम देवपितृकार्य्यार्थोऽप्रत्याख्येयो नियोग इति स्मृतिचन्द्रिकाकारः । अध्येषणपूर्व्वकमभ्युपगमसम्पादनमिति मेधातिथि-महार्णवप्रकाशकारौ । एते निमन्त्रिताः श्राद्धाङ्गतामापद्यन्ते ।

तथा च वसिष्ठः ।

पितृभ्यो दद्यात् पूर्व्वेद्यु र्ब्राह्मणान् सन्निपात्येति ।

श्राद्धदिनात् पूर्व्वेद्यु र्ब्राह्मणान् 'सन्निपात्य' निमन्त्रणेनैकक्रियाङ्गभावतां नीत्वा(१), सन्निपातनमेकक्रियाङ्गभावनानयनमिति मेधातिथि-हरिहराभ्यां व्याख्यातत्वात् । अतो निमन्त्रणात् प्रभृति तेषां शौचादिगुणलोपेऽङ्गापचाराच्छ्राद्धवैगुण्यं ज्ञेयं ।

आह देवलः ।

श्वः कर्त्तास्मीति लक्षणात् दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्व्वभुक्तजने गृहे ॥
असम्भवे परेद्युर्वा ब्रह्मणांस्तान् निमन्त्रयेत् ।
अज्ञातीनसमानार्षानयुग्मानात्मशक्तितः ॥

'अज्ञातीन्' यजमानभिन्नगोत्रान् । 'असमानार्षान्' भिन्नप्रवरान् ।

---

(१) निमन्त्रणात्मकक्रियाङ्गभावतां नीत्वेति ग० ।

'अयुग्मान्' विषमसंख्यान्। याज्ञवल्क्येन विशेष उक्तः। निमन्त्रणकर्त्ता च शौचादिमता भाव्यं।

अतएव श्राद्धस्तुत्यन्तरमाह हारीतः।

यत्नेनैवं विद्वान् श्राद्धमाचरिष्यन् पूर्व्वेद्युर्ब्राह्मणान्निमन्त्रयेदिति। 'एवं विद्वान्' श्राद्धस्य महाफलतां जानन् 'यत्नेन' शौचादिगुणलोपप्रमादवर्जनार्थेन प्रयत्नेन, संयुक्तः। एते तु निमन्त्रणकर्त्तुर्निमन्त्रणीयद्विजानाञ्च शौचादिगुणा याज्ञवल्क्येन व्यक्तमेवोक्ताः।

निमन्त्रयीत पूर्व्वेद्युर्ब्राह्मणानात्मवाञ्छुचिः।
तैश्चापि संयतैर्भाव्यं मनोवाक्कायकर्म्मभिः॥

'आत्मवान्' संयतेन्द्रियः क्रोध-मद-मात्सर्य्यादिवर्जित इत्यर्थः। 'शुचिः' कृतयथोक्तबाह्यशौचः स्नानोदकोपस्पर्शनादिभिश्च शुद्धकायः, 'तैः' च निमन्त्रणीयैर्ब्राह्मणैः, मनोवाक्कायकर्म्मभिः 'संयतैः' संयमकारिभिः, भवितव्यं। संयमो नाम विहितक्रियानुष्ठानपूर्व्वकनिषिद्धक्रियावर्जनं। विष्णुधर्म्मोत्तरेऽपि।

वक्ष्यमाणगुणान् विप्रान् पूर्व्वेद्युरुपमन्त्रयेत्।
कर्त्ता समेतैस्तैर्भाव्यं संयतैश्च निमन्त्रितैः॥

पूर्व्वेद्युर्ब्राह्मणनिमन्त्रणं कार्य्यमित्युक्तं।

श्राद्धदिनेऽपि कदाचित् निमन्त्रणं कार्य्यमित्याहतुः शङ्खलिखितौ।

जन्म-शरीरलक्षणगुणोपेतान् ब्राह्मणानुपनिमन्त्रयेत् श्वोऽद्य वा श्राद्धमाचरिष्य इति।

श्वोऽद्य वा श्राद्धमाचरिष्य इत्येवमाकलय्य ब्राह्मणानुपनिमन्त्रयेत्। 'जन्मलक्षणैः' श्रोत्रियपुत्रत्व-गौरीसुतत्व-धर्म्मपत्नीजत्व-गर्भाधान-पुंसव-

नादिभिः, उपेतान् ब्राह्मणान् उपनिमन्त्रयेत्। 'शरीरलक्षणैः' काण-कुब्ज-कुनखिकुष्ठि-श्वित्रि-श्यावदन्तत्व-हीनातिरिक्ताङ्गत्वादिदोषविपरीतैः शरीरधर्मैः, उपेतान्, 'गुणैः' श्रोत्रियत्व-सदाचारत्व-वेदतदङ्गार्थवेदित्व-त्रिमधु-त्रिसुपर्ण-त्रिणाचिकेत-ज्येष्ठसामगत्वादिभिश्च, उपेतान्, श्वोऽद्य वा श्राद्धमाचरिष्य इति ब्राह्मणानुपमन्त्रयेदित्येतस्माद्वाक्याच्छ्राद्धदिनात् पूर्व्वेद्युः श्राद्धदिने वा निमन्त्रणं कार्य्यमिति गम्यते।

तदेतद्व्यक्तमाह कात्यायनः।

तदहर्ब्राह्मणानामन्त्रयीत पूर्व्वेद्युर्व्वेति।

मनुरप्याह।

पूर्व्वेद्युरपरेद्युर्वा श्राद्धकर्म्मण्युपस्थिते।
निमन्त्रयीत त्र्यवरान् सम्यग्विप्रान् यथोदितान्॥

'पूर्व्वेद्युः' यदहः श्राद्धं कर्त्तव्यममावास्यायां वा त्रयोदश्यां वा ततः पूर्वस्मिन्नहनि चतुर्द्दश्यां द्वादश्यां वा, अपरेद्युरिति श्राद्धदिने एव। विकल्पश्चात्र शक्त्यपेक्षः। यो निमन्त्रणप्रयुक्तान्नियमान् पूर्वदिनादारभ्य शक्नोति पालयितुं स पूर्व्वेद्युर्निमन्त्रणं कुर्य्यात्, अशक्तस्तु तदहरेवेति। अधिकनियमानुपालनाच्च फलातिशय इति तस्यार्थवत्ता। अन्ये तु पूर्वमेव संस्कृते श्राद्धदिने पूर्व्वेद्युर्निमन्त्रणमसंस्कृते तु तदहरिति विकल्पं व्याचक्षते। अन्ये तु च असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेदिति देवलवचनात् येन केनचित् कारणेन पूर्व्वेद्युरसम्भवे तदहर्निमन्त्रणमिति व्याचक्षते। अन्ये च गृहस्थानां पूर्व्वेद्युर्निमन्त्रणं यति-ब्रह्मचारिणोस्तु तदहरिति व्यवस्थां वर्णयन्ति। एतत्तु न युक्तं अन्ये च परेद्युरिति वचनविरोधात् यतः परेद्युरेव निमन्त्रणं न पूर्व्वेद्युरित्येवं-

विधयोर्नियम-निषेधयोरभावाच्च। यत्त्वेतद्व्यवस्थाप्रमाणत्वेनोद्भावितं मधुशर्मणा। अप्राप्तौ तद्दिने वापि हित्वा योषितप्रसङ्गिनं। भिक्षार्थमागतान् वापि काले संयमिनो यतीनिति॥ न तत् यत्यादेः परेद्युरेव निमन्त्रणं कर्त्तव्यं न पूर्वेद्युरित्येवं परं, गृहस्थं पूर्वेद्युरेव निमन्त्रयेन्न परेद्युरेवंपरं वा, किन्तु पूर्वस्यां रात्रौ कृतमैथुनविप्रवर्जनमात्रपरमिति। 'त्र्यवरान्' संख्यया कृत्वा त्रयः अवरे हीना येषान्ते त्र्यवरा इति तद्गुणसम्विज्ञानो बहुब्रीहिः। तेन त्रीन् वा पञ्च वा सप्त वेत्यादि वेदितव्यं। एतच्च निमन्त्रणीयब्राह्मणसंख्याप्रकरणे विवरिष्यते।

पद्मपुराणेऽपि।

विप्रान् पूर्वे परे वाह्नि विनीतात्मा निमन्त्रयेत्।
शील-वृत्त-गुणोपेतान् वयोरूपसमन्वितान्॥

भविष्योत्तरेऽपि।

पूर्वेद्युस्तद्दिने वा स्यात् ब्राह्मणानां निमन्त्रणं।
न वाप्नुवन्ति पितरः श्राद्धं हीननिमन्त्रनं॥

अत्र ब्राह्म-मार्कण्डेयपुराणयोः पूर्वदिननिमन्त्रणे कारणमुक्त्वा पूर्वदिनातिक्रमे श्राद्धदिनेऽपि निमन्त्रणकर्त्तव्यतामभिधाय तत्र ब्राह्मणविशेषवर्जनमनिमन्त्रितानामपि श्राद्धकालागतानां यतीनां श्राद्धभोजित्वमुक्तं।

निमन्त्रयीत पूर्वेद्युः पूर्वोक्तान् द्विजसत्तमान्।
दैवे नियोगे पित्र्ये च तांस्तथैवोपकल्पयेत्॥
गत्वा तु योषितं श्राद्धे यो भुङ्क्ते यश्च भोजयेत्।
रेतोमूत्रकृताहारास्तं मासं पितरस्तयोः।

तस्मात्तु प्रथमं कार्य्यं प्राज्ञेनोपनिमन्त्रणं॥
अप्राप्तौ तद्दिने वापि हित्वा योषित्प्रसङ्गिनं।
भिक्षार्थमागतान् वापि काले संयमिनो यतीन्।
भोजयेत् प्रणिपाताद्यैः प्रसाद्य यतमानसः।

'दैवे नियोगे' वैश्वदेविककर्मार्थनियोगे, 'पित्र्ये' पितृ-पितामहादि-देवत्यकर्मार्थे च नियोगे, विभागेन तान् ब्राह्मणानुपकल्पयेत् त्वं दैवे निमन्त्रितोऽसि त्वं पित्र्ये निमन्त्रितोऽसि त्वं पितामहार्थे त्वं प्रपितामहार्थे इत्यादि कथयेदित्यर्थः। गत्वा तु योषितमित्यादिना कृतमैथुनस्य श्राद्धभोजननिषेधात् पूर्वस्यां रात्रौ कृतमैथुनेन निमन्त्रणनिषेधः कर्त्तव्य इति गम्यते।

वैष्णव-वाराहपुराणयोरपि।

प्रथमेऽह्नि बुधः शस्तान् श्रोत्रियादीन्निमन्त्रयेत्।
कथयेच्च तदैवैषां नियोगान् पितृदैविकान्॥
श्राद्धे नियुक्तो यो भुक्त्वा भोजयित्वा नियुज्य च।
व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन्॥
तस्मात् प्रथममत्रोक्तं द्विजाग्र्याणां निमन्त्रणं।
अनिमन्त्र्य द्विजान् गेहमागतान् भोजयेद्यतीन्॥

कूर्मपुराणे।

श्वोभविष्यति मे श्राद्धं पूर्व्वेद्युरभिपूज्य च।
असम्भवे परेद्युर्वै यथोक्तैर्लक्षणैर्युतान्॥
तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितं(१)।

(१) श्राद्धकालमुपागतमिति ख०।

अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवाः ॥
तैर्ब्राह्मणैः सहाश्नन्ति पितरोह्यन्तरीक्षगाः ।
वायुभूतास्तु तिष्ठन्ति भुक्त्वा यान्ति परां गतिं ॥

आपस्तम्बस्त्वेकैकस्य ब्राह्मणस्य निमन्त्रणत्रयमुक्तवान् ।

पूर्वेद्युर्निवेदनं अपरेद्युर्द्वितीयं तृतीयमामन्त्रणं त्रिप्रायमेके श्राद्धमुपदिशन्ति । यथा प्रथममेवं द्वितीयं तृतीयञ्च सर्व्वेषु वृत्तेषु ।

अस्यार्थः । पूर्वेद्युः रात्रौ ब्राह्मणेभ्यो भोजननिवेदनं कर्त्तव्यं । पुनश्चापरेद्युः स्वागतप्रश्नानन्तरं तृतीयं चासनदानानन्तरमिति । अत्रार्थवादः । यतः श्राद्धं 'त्रिप्रायं' त्रिसंख्यापदार्थबहुलं, तत्र हि तिस्रो देवताः, त्रीणि पवित्राणि, त्रीणि पात्राणि, त्रिः सावित्रीजपः, त्रयः पिण्डाः, त्रिराञ्जनाभ्यञ्जनादीनीति । तेषु पदार्थेषु यथा प्रथमस्तथैव द्वितीय-तृतीयाविति ।

इति निमन्त्रणस्थूलकालाः ।

अथ निमन्त्रणसूक्ष्मकालाः ।

तत्र नागरखण्डे ।

पूर्वेद्युः सायमासाद्य श्राद्धार्हाणां द्विजन्मनां ।
गृहं गत्वा शुचिर्भूत्वा संयतस्तान्निमन्त्रयेत् ॥

ब्राह्मनाणां गृहङ्गत्वेत्यनेन स्वगृहं प्रति समाहूतान् न प्रसङ्गान्तरेणागतान्न रथ्यामिलितान् नान्यवेश्मगतानिति गम्यते । अनेनैव च स्वगृहरहितयोरपि यति-ब्रह्मचारिणोः ग्रामान्तरगतस्य च गृहस्थस्य निवासस्थानं गत्वेति सूच्यते । यदि पुनर्ग्रामान्तराद्यजमानगृहं प्रत्येवागतः श्राद्धार्हो भवेत्तदा स्वगृह एव निमन्त्रणीयः । निमन्त्रणीयगृहगमनस्यावज्ञानिवृत्तिद्वारेणोपयोगित्वात् स्वगृहाभावेऽवज्ञाप्रसङ्गविरहा-

यतीन् गृहस्थान् साधूंश्च श्रोत्रियान् ब्रह्मचारिणः॥

'तां रात्रिमिति तस्यां रात्रावित्यर्थः। 'केतयेत्' निमन्त्रयेत्। रात्रावपि प्रदोषात्परतो निमन्त्रणं कर्त्तव्यं। यतः स एवाह।

जाति-क्रियावबोधाद्यैर्गुणैर्युक्तानलोलुपान्।
प्रार्थयीत प्रदोषान्ते भुक्तानशयितान् द्विजान्॥

'जातिः' ब्राह्मणत्वं। 'क्रिया' स्वाचारः। 'अवबोधः' वेद-तदङ्गाद्यर्थज्ञानं, आदिशब्देन शरीरकुनखित्वादिदोषराहित्यसंग्रहः क्रियते। 'अलोलुपान्' अतितृष्णाकुलितहृदयेभ्योऽन्यान्। उपलक्षणं चैतत् क्रोधादिमानसावद्यवर्जितानां, 'प्रार्थयीत' भोक्तृत्वेन देव-पितृकार्य्यसम्पादनसाहाय्यायाभ्यर्थयीत। 'प्रदोषान्ते' रजनीमुखं प्रदोषः। 'भुक्तान्' कृतभोजनान्। ये द्विवारं भोजिनस्तान् दिवा रात्रौ च भुक्तान्। ये त्वेकवारभोजिनस्तान् दिवा रात्रौ वा भुक्तान्। उपवासिनस्त्वकृतभोजनानेव। यतोनात्र भोजनं विधीयते किन्तु क्षुधितानां निमन्त्रणोपर्य्युपभुञ्जानानां शरीरपीडनाद्भुक्ता श्राद्धं न भुञ्जीतेति निमन्त्रणादूर्ध्वं श्राद्धान्नव्यतिरिक्तभोजनप्रतिषेधाच्च रागतः प्राप्तस्यैव भोजनस्यायं क्रमोविधीयते। शयितानां व्यवहारमजानतां निमन्त्रणप्रसक्त्यभावात्पर्य्युदासानर्थक्याऽशयितानित्यनेन शयितान् प्रबोध्य न निमन्त्रयेदित्युक्तं भवति। प्रदोषान्तेऽपि सर्वस्मिन् स्वगृहजने भुक्तवत्येव निमन्त्रणं कार्य्यं। सर्वभुक्तजने गृह इति वचनस्य दर्शयिष्यमाणत्वात्। यदा तु पूर्वदिने निमन्त्रणं न कृतं तदानीमभुक्तेवाभुक्ते च गृहजने अकृतभोजनानेव ब्राह्मणान् श्राद्धदिने एव स्वत्याचारसौकार्य्यानुसारात्सति सम्भवे प्रातरेव निमन्त्रयेत्।

इति निमन्त्रणसूक्ष्मकालः ।

अथ निमन्त्रणकर्त्तारः ।

तत्र तावत्स्वयमेव निमन्त्रणं कुर्य्यात् । दाता विप्रान्निमन्त्रयेदिति देवलवचनात् । असम्भवे त्वन्येनापि निमन्त्रणं कारयितव्यं, तच्च साधुना पुरुषेण ।

तथा च कूर्मपुराणे ।

गोमयेनोदकैर्भूमिं शोधयित्वा प्रयत्नतः* ।
समामन्त्र्य द्विजान् सर्वान् साधुभिः सन्निमन्त्रयेत् ॥

'समामन्त्र्य' निमन्त्रणाय प्रेषणीयान् साधून् सम्बोध्य मदीयश्राद्धोपयोगिनः सर्वान् ब्राह्मणान्निमन्त्रयेति प्रेषं दत्त्वा, निमन्त्रणं सम्पादयेत् । अथवा 'समामन्त्र्य' निमन्त्रणीयानेव सविनयमभ्यर्थनेनाभिमुखीकृत्येत्यर्थः । साधुभिरिति बहुवचनमविवक्षितं । सवर्णं प्रेषयेदाप्तमित्येकत्वस्यापि दर्शनात् ।

यमोऽप्याह ।

साधुभिः सन्निमन्त्रयेत् ।

साधुभिरपि सवर्णैरेव निमन्त्रणं कारयितव्यं ।

अतएव प्रचेताः स्मृति-प्रभासखण्डयोः ।

सवर्णं प्रेषयेदाप्तं द्विजानामुपमन्त्रणे ।

सवर्णशब्दोऽत्र सजातीयोपलक्षणार्थः ।

असवर्णप्रेषणे दोषमाह नारायणः ।

अभोज्यं ब्राह्मणस्यान्नं क्षत्त्रियाद्यैर्निमन्त्रितं ।

---

(१) समाहित इति ग० ।

तथैव क्षत्त्रियादीनां वृषलेन निमन्त्रितं ॥

क्षत्त्रियाद्यैरिति क्षत्त्रिय-वैश्य-सङ्करजाति-शूद्रैः, 'निमन्त्रितं' परम्परया निमन्त्रणेन योजितं, 'निमन्त्रितं' उपकल्पितं, इति भाउलाचार्य इति हरिहरः। एतस्मिन्नपि व्याख्याने निमन्त्रितशब्दस्यासामञ्जस्यं तदवस्थमेवेति को विशेषाग्रहः। 'क्षत्त्रियादीनामिति क्षत्त्रिय-वैश्य-सङ्करजातीनां, 'वृषलेन' शूद्रेण। सवर्णं प्रेषयेदित्येतन्नियमसामर्थ्यात् वृषलशब्दस्यात्र भिन्नजात्युपलक्षणपरत्वं मन्तव्यं। शूद्राद्यन्नभोजनार्थं ब्राह्मणेन तु निमन्त्रणे क्रियमाणे दोषोऽयं शातातपस्मृतिप्रभासखण्डेषूक्तः ।

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितं।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितं॥

अत्र पूर्वोक्तादेव हेतोर्ब्राह्मणशब्दस्य भिन्नोत्तमजात्युपलक्षणत्वं वेदितव्यं। यत्तु स्मृतिचन्द्रिकाकारेणोक्तं सवर्णाभावे त्वसवर्णमपि शूद्रव्यतिरिक्तं निमन्त्रणाय प्रेषयेदिति तन्नारायणप्रोक्तवचनविरोधादुपेक्षणीयं। निमन्त्रणाय च प्रेषणीयेषु साधुषु सर्वेषु सुतशिष्याद्योन्तरङ्गाः। स्वयं शिष्योऽथवा सुत इति वृहस्पतिवचने विशेषतस्तदुपदेशात्। शिष्यादपि सुतोऽन्तरङ्गः, यथैवात्मा तथा पुत्त्र इत्यादिदर्शनात् ।

इति निमन्त्रणकर्त्तारः ।

अथ निमन्त्रणीयब्राह्मणसंख्या ।

तत्र तावन्निमन्त्रयीत ब्राह्मणानित्यनुवृत्तावाह देवलः ।

अयुग्मान् विषमसंख्यकान् ।

इयं चाभ्युदयिकश्राद्धव्यतिरिक्तेषु श्राद्धेषु पित्र्यब्राह्मणसंख्या। आभ्युदयिके वैश्वदेविके तद्विकृतिभूतेऽन्यस्मिन् वैश्वदेवत्ये युग्मसंख्यका एव ब्राह्मणा निमन्त्रणीयाः। तच्चाभ्युदयिके वचनानि दर्शयिष्यन्ते। वैश्वदेविकविषये युग्मब्राह्मणविधिं पित्र्यविषये च युग्मनिषेधमाहाङ्गिराः।

अयुजो भोजयेच्छ्राद्धे न समा दैविके समाः।

'न समाः' समसंख्यकाः पित्र्यर्थे न ग्राह्या इत्यर्थः।

याज्ञवल्क्यः।

दैवे युग्मान् यथाशक्ति पित्र्येऽयुग्मांस्तथैव चेति।

'युग्मान्' समसंख्यकान्।

मार्कण्डेयपुराणे ब्रह्मपुराणे च।

पितॄणामयुजः कामं युग्मान् दैवे द्विजोत्तमान्।
एकैकं वा पितॄणाञ्च देवानाञ्च स्वशक्तितः॥

विष्णुपुराणे।

पितॄणामयुजोयुग्मान् देवानामिच्छया द्विजान्।
देवानामेकमेकं वा पितॄणाञ्च नियोजयेत्॥

अत्र यथाशक्त्ययुग्मान् पित्र्य इत्युक्तेप्येकैकस्य पित्रादेः शक्तिमतापि नवभ्योऽधिका न निमन्त्रणीया इत्याह गौतमः।

नवावरान् भोजयेदयुजोवा यथोत्साहम्मूर्ध्वन्त्रिभ्यो गुणवन्तमिति।

नवभ्यः संख्याधिक्येन वराः वरिष्ठा दशादिसंख्यकाः तद्व्यतिरिक्ता अवराः इत्यर्थः।

नन्वेतदनुपपन्नं प्रतिषेधपक्षे तावन्नञः क्रियान्वयित्वादवरशब्देनासम्बन्धात्समासानुपपत्तिः पर्युदासाश्रयणेऽपि नवशब्दोत्रावधिवचनः,

स च साक्षात् अवधिमद्वचनेनैवान्वेतुं शक्यः । न चावरशब्दोऽवधिमद्वचनः । अथ नञ्समासान्तर्गतस्य वरशब्दस्यावधिमद्वचनत्वं । तन्न । तथा सति सापेक्षत्वाद्वरशब्दो न नञा समस्येत । न च नवभ्योन्यूनसंख्याभिधाने विवक्षितेप्येवंविधसमासानुपपत्तावरशब्दप्रयोग एव न स्यादिति वाच्यं । निरवयवस्यैवावरशब्दस्य तत्राभिमतत्वात् । उच्यते । असूर्यम्पश्यादिवत्प्रतिषेधकस्यापि नञः समासोदृश्यते पर्युदासपक्षेऽपि नित्यसापेक्षत्वान्नवाधिकादिशब्दवदुपपद्यत एव समासः । तानेतान्नवावरानेकैकस्य पित्रादेः स्थाने भोजयेत् । प्रत्येकमेव देवतानान्यज्यमानहविरधिष्ठानापेक्षित्वात् ।

नवावरेष्वपि संख्याविशेषार्थमाह अयुज इति । 'अयुजः' विषमसंख्यान् । तेनैकैकस्य स्थाने नव सप्त वा पञ्च वा त्रीन् वैकैकं वा निमन्त्रयेत् । ततश्चैकैकस्मिन् पित्र्यप्रयोगे उत्तमपक्षे सप्तविंशतिः सप्तविंशतिः सम्पद्यते, मध्यमपक्षे एकविंशतिरेकविंशतिः, किञ्चिद्धीनपक्षे पञ्चदश पञ्चदश, हीनपक्षे नव नव, हीनतरपक्षे त्रयस्त्रयः, हीनतमपक्षे एकैक इति ।

अतिसम्पद्धं प्रत्यधिकाभ्यनुज्ञानार्थमाह. 'वा यथोत्साहमूर्ध्वमिति । 'उत्साहः' शक्तिः, सा चेत् तर्हि 'ऊर्ध्वं' पूर्वोक्तसंख्याया उपरिष्टात् । ततश्च यथाशक्त्यधिकानपि भोजयेदित्युक्तं भवति । यत्र पित्रादित्रयस्थाने एकस्यैव निमन्त्रणं तत्र गुणविधानार्थमाह, 'त्रिभ्योगुणवन्तमिति । पित्रादित्रयस्यार्थे 'गुणवन्तं' अध्यात्मविद्यादिसर्वोत्कृष्टगुणयुक्तं, भोजयेत् । अत्र ब्राह्मणबाहुल्येऽपि सत्क्रियादेश-काल-शौचगुणवद्ब्राह्मणसम्पादनसमर्थेन सम्पद्भूतमेन यजमानेन पित्रादिवर्गे सप्त-

विंशतिः मातामहादिवर्गे सप्तविंशतिरित्यमावास्यादौ चतुःपञ्चाशद्-ब्राह्मणाः सम्पादनीयाः। सुसमृद्धतरेण तु पित्रादिवर्ग एकविंशतिः मातामहादिवर्गे चैकविंशतिरित्येवन्द्विचत्वारिंशत्सम्पादनीयाः। सुसमृद्धेन तु पित्रादिवर्गे पञ्चदश मातामहादिवर्गे पञ्चदशेत्येवं त्रिंशत्सम्पादनीयाः। समृद्धेन तु पितृद्वयेऽष्टादश। मध्यमसमृद्धिना तु षट्। दरिद्रेण द्वौ। दरिद्रतमेन त्वेक इत्येवं सम्पादनीयाः। अत्रोत्तमादिपक्षेषु यथौचित्यं क्रमेण दशाष्ट-षट्चतुर्द्व्येकसंख्या वैश्वदेविकब्राह्मणा निमन्त्रणीयाः। तत्र वैश्वदेविकैकब्राह्मणपक्षः, पित्र्येकब्राह्मणपक्षः। इयं च वैश्वदेविकब्राह्मणसंख्यामावास्यादिश्राद्धेषु वैश्वदेविकतन्त्रानुष्ठानपक्षे वेदितव्या। पृथग्वैश्वदेविकानुष्ठानपक्षे तु द्वैगुण्येनेति। यदा तु दरिद्रतमेन यजमानेन ब्राह्मणानलभमानेन वा पितृद्वयेऽप्येक एव ब्राह्मणो निमन्त्र्यते तदा वैश्वदेविकासने देवतार्चान्दर्भबटुं वा निवेश्य तत्पुरस्तात्पात्रोद्धृतमन्नं वैश्वदेवोद्देशेन त्यक्त्वाग्नौ प्रास्येद्ब्रह्मचारिणे वा निवेदयेत्।

अत्र पित्रादेरेकैकस्य स्थाने सप्त सप्त पञ्च पञ्च वा निमन्त्रणीया इत्येतौ पक्षावाह पैठीनसिः।

श्वः श्राद्धं करिष्यामीति सङ्कल्प्य ब्राह्मणान् सप्त पञ्च वा श्रोत्रियान् निमन्त्रयेदिति।

अन्ये तु गौतमवचनमेवं व्याचक्षते। नव अवराः संख्यया कृत्वा न्यूनाः येषु ते नवावराः, तद्गुणसंविज्ञानो बहुव्रीहिः। तेन नवप्रभृत्ययुजो भोजयेदित्युक्तं भवति। इयं च पित्रादित्रयस्थाने भोजनीयानां ब्राह्मणानां मिलितानां संख्या। ततश्चैकैकस्य पित्रादेः

स्थाने त्रिषु त्रिषु निमन्त्रितेषु सङ्कलनया नव ब्राह्मणाः सम्पद्यन्ते। स चायमवरः पक्षः। पञ्चसु पञ्चसु निमन्त्रितेषु सङ्कलनया पञ्चदश सम्पद्यन्ते। स एव पूर्वोक्तपक्षापेक्षया मध्यमः। तथा सप्तसु सप्तसु निमन्त्रितेषु सङ्कलनया एकविंशतिः सम्पद्यते। अयञ्च प्राचीनपक्षद्वयोत्तमः। ब्राह्मणनवकपक्षमवरत्वेनाभिदधानस्य तदुत्तरं मध्यमोत्तमाख्यं पक्षद्वयमेवाभिमतमिति गम्यते। ततश्च सप्तद्धतमेनाप्येकविंशतेः परतो न निमन्त्रणीया इति सिध्यति। अवरपक्षानुष्ठानेऽप्यसमर्थं प्रत्याह, 'अयुजोवा यथोत्साहमिति। अत्र पदार्थस्तु यथाव्याख्यातः। अनेन चैकैकस्य स्थाने एकैक इत्येवं त्रयः सर्वेषाञ्चैक एवेत्युक्तं भवति। यदि पुनः श्राद्धकाले गुणवान् कश्चिदागच्छेत्तदा तं चतुर्थमप्यतिथिरूपेण श्राद्धीयरूपेण वा भोजयेदित्याह, 'ऊर्ध्वं त्रिभ्योगुणवन्तमिति।

अत्र स्मृतिचन्द्रिकाकारमतेन पैठीनसिवचनस्यैवं व्याख्या। तद्यथा सप्त पञ्च वेति पैतृक-वैश्वदेविकब्राह्मणानां मिलितानां संख्या। अस्यैव वाक्यस्यान्यभागे प्राङ्मुखान् वैश्वदेवानुपवेशयेत्पितॄन् दक्षिणपूर्वेणेत्यभिधानात्। अत्र पञ्चसंख्यापक्षे द्वौ देवे त्रयः पित्र्य इति विभागो द्रष्टव्यः। द्वौ देवे पितृकृत्ये त्रीनित्यादिवचनदर्शनात्। सप्तसंख्यापक्षे तु चत्वारो दैवे त्रयः पित्र्य इति विभाग ऊह्यः। ननु द्वौ दैवे पञ्च पितृकृत्य इति विभागोहः कस्मान्न भवति। अनुपपन्नत्वान्न भवति। तथा हि दैवे युग्मानयुग्मान् यथाशक्ति पित्र्य एकैकस्येति कात्यायनेन पित्र्ये एकैकस्य यथाशक्ति अयुग्मानिति वदता पितृ-पितामह-प्रपितामहानां प्रत्येकमयुग्मब्राह्मणकल्पनं न पुनः समुदायस्येति दर्शितं।

ततश्च पञ्चानां समं स्यादश्रुतित्वादिति न्यायेन प्रत्येकमयुग्मसंख्यायाः समो विभाग ऊहनीयः । न च पित्रादिषु त्रिषु पञ्चानां समतया विभागः सम्भवति, सम्भवति तु त्रयाणां । तस्माच्चत्वारो दैवे त्रयः पित्र्य इति विभागः कार्य्य इति ।

पित्रादेरेकैकस्य स्थाने त्रयस्त्रयो निमन्त्रणीया इत्येतं पक्षमाहाश्वलायनः ।

अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा ब्राह्मणान् श्रुत-शील-वृत्तसम्पन्नानेकेन वा काले ज्ञापितान् स्नातान् कृतपच्छौचानाचान्तानुदङ्मुखान् पूर्वं विश्वेभ्यो देवेभ्यः पितृवदुपवेश्यैकैकस्य द्वौ द्वौ त्रींस्त्रीन् वा वृद्धौ फलभूयस्त्वं न त्वेवैकं सर्वेषां पिण्डैर्व्याख्यातं काममनाद्ये ।

'अथशब्दः आनन्तर्यार्थः । 'अतःशब्दो हेत्वर्थः, यस्मादुक्तं श्राद्धमस्मै दद्युरिति अतः पिण्डपितृयज्ञानन्तरं पार्वणादिश्राद्धचतुष्टयविधिं वक्ष्यामीति शेषः। पर्वशब्देनामावास्योच्यते तत्र भवं 'पार्वणं' । कर्मशब्देन काम्यमानं पुत्रादिरूपफलं तल्लाभोपायभूतं 'काम्यं' । अभ्युदयः पुरुषार्थश्रौत-स्मार्त्तकर्मारम्भः गर्भाधानादयः संस्काराश्च तेषामङ्गभूतं 'आभ्युदयिकं' । एक एवोद्देश्यो यस्मिंस्तत् 'एकोद्दिष्टं' । 'वाशब्दः समुच्चये । श्रुतशीलवृत्तानि प्रागेव व्याख्यातानि । श्रुतादित्रयसमुदायेनोपेतान् ब्राह्मणांस्तदलाभे त्वेकेन श्रुतादिना गुणेनोपेतान् । 'काले' पूर्वेद्युस्तदहर्वा, 'ज्ञापितान्' निमन्त्रितान्, 'स्नातान्' समावृत्तानाप्लुतान् वा। अहरहः स्नायादितिसामान्यस्त्यैवाप्लवनस्य प्राप्तत्वात्तद्ग्रहणं तैलाभ्यङ्गादियुक्तस्य तस्य प्राप्त्यर्थं।' कृतपच्छौचान्' प्रयोगकाले श्राद्धकर्त्ता

क्षतपादप्रक्षालनान्। 'आचान्तान्' कृताचमनान्। सामान्यस्तथैव भोजने प्राप्तस्याचमनस्य श्राद्धाङ्गत्वार्थं पुनर्वचनं। तेन प्रमादात्तदकरणे प्रायश्चित्तं कर्तव्यं। 'पूर्वं विश्वेभ्यो देवेभ्य इति वैश्वदेविकान् पूर्वमुपवेश्य तदनन्तरं, उदङ्मुखान् उत्तराभिमुखोपवेशनीयान् पितृब्राह्मणानुपवेश्य 'पितृवत्' पितृतुल्यवयस्कान् वृद्ध-वृद्धतर-वृद्धतमानित्यर्थः, अथवा 'पितृवत्' पित्रादिक्रमेण। एकैकस्य पित्रादेः स्थाने द्वौ द्वौ ब्राह्मणौ, एतच्चाभ्युदयिकश्राद्धविषयं। उपक्रमे आभ्युदयिकस्याप्युपक्षेपात्। अमावास्यादिश्राद्धे पित्रादेरेकैकस्य स्थाने एकैकं त्रीन् त्रीन् वोपवेशयेत्। फलभूयस्त्वकामस्त्वधिकानपीत्याह, 'वृद्धौ फलभूयस्त्वमिति, 'वृद्धौ' ब्राह्मणसंख्याधिक्ये, 'न त्वेवैकं सर्वेषां पिण्डैर्व्याख्यातं' यथा सर्वेषां पितृणामेकः पिण्डो न दीयते किन्तु प्रतिपुरुषमेकैकोदीयते तथा ब्राह्मणोऽपि प्रतिपुरुषं निमन्त्रणीयः न सर्वार्थमेकमिति। एनमपि पक्षं सपिण्डीकरणव्यतिरिक्ते श्राद्धेऽभ्यनुजानाति। 'काममनाद्य इति आद्यादन्यस्मिन् श्राद्धे सर्वेषां स्थाने काममिच्छया एकमपि ब्राह्मणमुपवेशयेत्। पार्वणधर्मिकाणां श्राद्धानां आद्यं सपिण्डीकरणं तस्मादन्यत् 'अनाद्यं'। अथवा अन्नमाद्यन्तदभावोऽनाद्यं तस्मिन् सति। यद्वा अनाद्यं साक्षाददनीयद्रव्यवर्जितं आमद्रव्यकं श्राद्धमपीत्यर्थः।

एकैकस्य पितृवर्गस्य स्थाने एकैकः एकैकस्मिंश्च दैविके एकैक इति पितृवर्गद्वयं वैश्वदेविकद्वयवत्यमावास्यादिश्राद्धे चत्वारो ब्राह्मणा निमन्त्रणीयाः इत्येवं पक्षमाहोशनाः।

ब्राह्मणान्निमन्त्रयेच्चतुरवरानिति।

वैश्वदेविकतन्त्रतामाश्रित्य श्राद्धद्वये त्रयो निमन्त्रणीया इत्याह

मनुः ।

पूर्वेद्युरपरेद्युर्वा श्राद्धकर्मण्युपस्थिते ।
निमन्त्रयीत त्र्यवरान् सम्यक् विप्रान् यथोदितान् ॥

सम्यक् निमन्त्रयीतेत्यन्वयः ।

ननु दैवे युग्मान् दैविके समा इत्यादिवचनविरोधात् कथं वैश्वदेविकद्वयार्थमेको ब्राह्मण इति युज्यते । मैवं । एकैकमुभयत्र वेत्यनेन अयुग्मासु संख्यासु वैश्वदेविके एकत्वस्याप्यनुज्ञातत्वात् । अतो दैवे युग्मानीत्यादीनि वचनानि एकैकमुभयत्र वेत्यमुं पक्षं परिगृह्य व्यवतिष्ठन्ते । अत्र केचित् त्र्यवरानित्येकैकस्य स्थाने एकैक इत्येवं पित्रादित्रयस्य ब्राह्मणत्रयविधानमेतदित्याहुः । तदयुक्तं । द्वौ दैवे पितृकृत्ये त्रीनिति श्लोके पौनरुक्त्यप्रसङ्गात् । एतद्दोषपरिहारार्थमेकैकस्य पित्रादेस्त्रीन् त्रीनिति स्मृतिचन्द्रिकाकारो व्याख्यातवान् तदध्याहारद्वयमलीमसत्वादसमञ्जसं ।

पित्रादीनां षसामपि स्थाने एक एव ब्राह्मण इत्येवं पक्षमाह देवलः ।

एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ।
षडर्घ्यान्दापयेत्तस्मै षड्भ्योदद्यात्तथासनं ॥

वसिष्ठस्मृति—कूर्मपुराणयोः ।

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगं ।
श्रुत-शील-वृत्तसम्पन्नं सर्वालक्षणवर्जितमिति ॥

श्रुत-शील-वृत्तानि पूर्वमेव व्याख्यातानि । 'अलक्षणानि' कुनखिश्वित्रादीनि, तैर्वर्जितं ।

अस्मिंश्च पक्षे वैश्वदेविकनिर्णयमाह स एव ।

यद्येकं भोजयेत् श्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ॥
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् ।
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ॥

ब्रह्माण्डपुराणे ।

एक एव यदा विप्रो द्वितीयो नोपपद्यते ।
पितॄणां ब्राह्मणे योज्यो दैवे त्वग्निं(१) नियोजयेत् ॥

भृगुरप्याह ।

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनं ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥

दैवे वैश्वदेविकस्थाने नैवेद्यं पात्रे समुद्धृतस्यान्नस्य तदुद्देशेन त्यागं कृत्वा पश्चात्तस्य ब्राह्मणस्य परिवेशितमन्नं पित्रुद्देशेन त्यजेत् ।

अत्र चतुरवरान् त्र्यवरानित्यादिवचनाच्च निर्णयसमर्थवचनमाह वृद्धवसिष्ठः ।

श्राद्धद्वयं करिष्यंस्तु दश वा चतुरोऽथवा ।
त्रीन् वा निमन्त्रयेद्विप्रानेकं वा ब्रह्मवादिनं ॥

अत्रैकैकस्मिञ्छ्राद्धे दशादीनां समोविभागः कर्त्तव्यः ।

तमेवाह धर्मः ।

पञ्चभिः पञ्चभिर्विप्रैः द्वाभ्यां द्वाभ्यामथापि वा ।
श्राद्धं देयं त्रिभिर्वा स्यादेकेनैवाथ वा पुनरिति ॥

---

(१) दैवेऽप्यपीति ग० ।

पञ्चानामप्यत्रान्तरो विभागः। त्रयः पित्र्ये द्वौ दैवे द्वयोश्च एकः पित्र्ये एको दैव इति वेदितव्यं।

तदुक्तं कूर्म्मपुराणे।

द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा।
एकैकं तत्र दैवन्तु पितृ-मातामहेष्वपि॥

बृहस्पतिरपि।

एकैकमथ वा द्वौ त्रीन् दैवे पित्र्ये च भोजयेत्।
सत्क्रियाकालपात्रादि न सम्पद्येत विस्तरात्॥
दैवे पित्र्ये च कर्मणि एकैकं वा भोजयेत्।

एकं दैवे एकं पित्र्य इत्यर्थः। 'द्वौ त्रीन् वा' द्वौ दैवे त्रीन् पित्र इत्यर्थः। सर्वेषां ब्राह्मणसंख्याविकल्पानां मध्ये एतावेव कल्पौ सत्क्रियाद्यविघातकत्वात् प्रशस्ताविति विस्तरनिन्दाभिप्रायः।

अयमेवार्थो व्यक्त उक्तो वसिष्ठेन।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि विस्तरन्तु विवर्जयेत्॥

मनु-शातातप-बौधायन-स्मृति-पद्मपुराणेष्वप्युक्तः।

द्वौ दैवे पितृकृत्ये त्रीनेकैकमुभयत्र वा।
भोजयेत्सुसमृद्धोऽपि न प्रसज्येत विस्तरे॥

त्रीनिति प्रत्येकं त्रींस्त्रीनिति। एकैकमिति एकस्य पित्रादेरेकैकमिति यन्मेधातिथिना व्याख्यातं तदध्याहारदोषोद्भावनेन प्रागेव निरस्तं। यदप्येकैकमुभयत्र वेत्ययं विधिरेव न भवतीति तेनैवोक्तं तत्तु शम्भुप्रभृतिभिर्निबन्धकारैः पराकृतमित्यस्माभिर्नाद्रियते। 'सुस-

महद्धोपि' अत्यर्थमाढ्योपि, 'न प्रसज्येत' न प्रवर्त्तेत, विस्तरे। न चाय-मदृष्टार्थो विस्तरप्रतिषेधः, किन्तु सत्क्रियादिसम्पत्त्यविघातार्थः। अतएव सत्क्रियादिविघातकत्वेन विस्तरनिन्दा तेषु कूर्मपुराणोक्ता।

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदं।
पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरं॥

'सत्क्रिया' अन्नसंस्कारविशेषः, ब्राह्मणानां मनोवाक्कायकर्मभिः परितोषातिशयजननं वा। 'देशः' दक्षिणाप्रवणादिः, अवकाशवान् वा उष्णत्वादिगुणयोगी। 'कालः' कुतपापराह्णादिः। 'शौचं' यजमानब्राह्मणप्रेष्यगतमुक्तलक्षणं शुचित्वं। 'ब्राह्मणसम्पत्' गुणवद्ब्राह्मणलाभः। एतान् पञ्च पदार्थान् 'विस्तरः' ब्राह्मणबाहुल्यं, 'हन्ति' नाशयति। तस्मात्तं 'नेहेत' न कुर्य्यात्। यस्तु ब्राह्मणबाहुल्येऽपि सत्क्रियादिसम्पादनसमर्थः स गौतमादिवचनोक्तं प्रथमकल्पिकं विस्तारपक्षमेवाश्रित्य श्राद्धं कुर्य्यात्।

अतएव ब्रह्मपुराणे देश-कालादिसम्पादनासमर्थं प्रत्येव संक्षेपपक्षोभिहितः। मौननाशादिदोषशङ्कया च विस्तरनिन्दा कृता। तथाहि।

देश-काल-धनालाभादेकैकमुभयत्र वा।
शेषान् वित्तानुसारेण भोजयेदन्यवेश्मनि॥
यस्माद्ब्राह्मणबाहुल्याद्दोषो बहुतरो भवेत्।
श्राद्धनाशो मौननाशः श्राद्धतन्त्रस्य विस्मृतिः॥
उच्छिष्टोच्छिष्टसंस्पर्शो निन्दा दातुर्न भोक्तृषु।
वितण्डया परीवादो जल्पाश्चैव पृथग्विधाः॥

ब्राह्मणबाहुल्ये यस्मादेते दोषाः सम्भवन्ति तस्मादेतद्दोषपरिहारा-

समर्थेनोभयत्रैकैक एव भोजनीय इत्यर्थः। शेषानभ्यागत-प्रतिवेश्यादी-नवश्यभोजनीयान् श्राद्धानन्तरं भोजयेत्। श्राद्धदेशादासायमुच्छिष्टानि नापसारणीयानीति वक्ष्यते, ततश्च श्राद्धदेशस्योच्छिष्टावरुद्धत्वादन्यवेश्मनीत्युक्तं॥

इति निमन्त्रनीयब्राह्मणसंख्या॥

अथैवं निरूपितेषु कालादिषु निमन्त्रणे निरूपणीये प्रथमानुष्ठेयत्वात्तत्पूर्वकालकृत्यं प्रतिपाद्यते।

तत्र वाराहपुराणे।

वस्त्रशौचादिकर्त्तव्यं श्वः कर्त्तास्मीति जानता।
स्थानोपलेपनं भूमिं कृत्वा विप्रान्निमन्त्रयेत्॥

पित्रादिक्षयाहसंस्मरणयत्नेन तिथिद्वैधे श्राद्धार्हतिथिसंशोधनेन च 'श्वः' परेद्युः, श्राद्धस्याहं कर्त्ता भविष्यामीति निश्चित्य श्राद्धकर्त्ता वस्त्रशौचादिकं कर्त्तव्यं। अत्र धौतवस्त्रः सदा भवेदिति वचनात्तद्दिनोपयोगिवस्त्रक्षालनस्यार्थप्राप्तत्वाद्वचनानर्थक्यं। उत्तरदिनोपयोगिनामपि वस्त्राणां शौचविधानं न युज्यते।

काषायं मलिनं वस्त्रं कौपीनञ्च परित्यजेत्।
अधौतं कारुधौतञ्च पूर्वेद्युर्धौतमेव चेति॥

भविष्यत्पुराणे श्राद्धकर्त्तुः पूर्वधौतवस्त्रपरिधाननिषेधात्। अतो वस्त्रशौचादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः। आदिशब्दश्च प्रकारवचनः। तेन श्राद्धोपयोगिसम्भारसम्पादनभाण्डमेलनशोधनादि गृह्यते। श्राद्धभूमिं परिगृह्य मृद्गोमय-गोमूत्रैः तामुपलिप्य समीकृत्य श्राद्धार्हान् विप्रान्निमन्त्रयेत्।

एतच्च व्याख्यातमर्थं स्फुटमाह शौनकः ।

तत्र गोमयोदकैर्भूमिभाजनभाण्डशौचं कृत्वा श्वः कर्त्तास्मीति ब्राह्मणान्निमन्त्रयेच्चतुरवरान् । अनुपहतानां भूमिभाजनादीनां गोमयोदकैः कर्मार्थं संस्कारं कुर्य्यात् । उपहतानान्तु तैस्तैर्द्रव्यशुद्धिप्रकरणोक्तैर्लोकतोऽवगतसामर्थ्यैश्च द्रव्यैः शुद्धिं विधाय संस्कारं कुर्यात् ।

'भाजनानि' भोजनसाधनान्यर्घ्यादिसाधनानि च । 'भाण्डानि' पाकार्थानि पिठराणि । एतच्चान्यच्च वक्ष्यमाणं सर्वं कृत्वा ब्राह्मणान्निमन्त्रयेत् । 'चतुरवरान्' चत्वारः अवरा येषान्ते चतुरवराः । एतच्च निमन्त्रणीयसंख्याप्रकरणे विवृतं ।

आह देवलः ।

श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्निमन्त्रयेत् ।
निरामिषं सकृद्भुक्त्वा सर्वभुक्तजने गृहे ॥
असम्भवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ।
अज्ञातीनसमानर्षीनयुग्मानात्मशक्तितः ॥

यदि पूर्वेद्युर्निमन्त्रणं कुर्यात्तदामिषेण मांसेन रहितं 'सकृत्' एकवारं, भुक्त्वा कुर्य्यात् । एतच्चानुपवासदिनविषयं । उपवासदिने त्वभुक्त्वापि कुर्य्यात् । निमन्त्रणात् पूर्वं भोजने सकृत्त्वविधानात् आरब्धे न भोजनमासमापनादित्यापस्तम्बेन निमन्त्रणादूर्ध्वं भोजननिषेधाच्च तद्दिने द्वितीयभोजनं न कर्त्तव्यमिति निश्चीयते । पूर्वेद्युर्निमन्त्रणस्य तद्दिने सकृन्निरामिषभोजनमङ्गमिति महार्णवप्रकाशकारः । तन्मते तु भोजनस्यावश्यकत्वादुपवासदिनेऽवघ्राणं विधेयं । शिष्यादावपि निमन्त्रयितरि यजमानस्यैव तन्नियमानुष्ठानं तत्सम्बन्धितयैव श्रूयमाणत्वात्

'सर्व्वभुक्तजने गृहे' सर्वे भोज्या गृहजना भुक्ताः कृतभोजना यस्मिन् गृहे तत्तथा। गृहशब्दस्य सम्बन्धिशब्दत्वान्निमन्त्रणदिने स्वगृह एव भोक्तव्यमिति गम्यते। यत्तु श्राद्धदिने विहितं निमन्त्रणं तद्भुक्तेवाभुक्तजने च गृहे विध्यन्तरानुसाराद्विधेयं। 'अज्ञातीन्' भिन्नगोत्रान्। 'असमानर्षीन्' भिन्नप्रवरान्। 'अयुग्मान्' विषमसंख्यकान्। निमन्त्रणात्पूर्वंचणकृत्यमाह, 'श्वः कर्त्तास्मीति निश्चित्येति' श्वोभूते श्राद्धमहङ्करिष्य इति 'निश्चित्य' दृढमध्यवस्य सङ्कल्पं कृत्वेत्यर्थः। सुव्यक्तञ्चैतत्पूर्व्वलिखिते पैठीनसिवचने।

तद्यथा। श्वः श्राद्धं करिष्यामीति सङ्कल्प्य ब्राह्मणान् सप्त पञ्च वा श्रोत्रियान्निमन्त्रयेदिति।

अत्राचारानुसाराद्यज्ञोपवीती विष्णुस्मरणपूर्वकं प्राणायामत्रयं विधाय प्राचीनावीती देशकालानुकीर्त्तनपुरःसरं सङ्कल्पवाक्यमुच्चारयेत्। तद्यथा।

इह पृथिव्यां जम्बुद्वीपे भारतवर्षे कुमारिकाखण्डे प्रजापतिक्षेत्रे दण्डकारण्ये अमुकस्मिन् प्रदेशे इत्यादिदेशमनुकीर्त्त्य ॐ अद्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे इत्यभिधाय प्रभवादिसंवत्सरपञ्चकात्मकमवान्तरयुगमनुकीर्त्तयेत्। तानि च युगानि द्वादशैवमाहुः।

वैष्णवं प्रथमं तत्र बार्हस्पत्यं ततः परं।
ऐन्द्रमाग्नेयमेतस्माद्दाहिर्बुध्न्यं च पैतृकं॥
वैश्वदेवञ्च सौम्यञ्च प्राजापत्यञ्च मारुतं।
आश्विनं भाग्यमित्येवं युगानि द्वादशैव हीति॥

ततः स्वः संवत्सर-परिवत्सरेदावत्सरानुवत्सरोदावत्सरेषु वर्त्तमानं युगमनुकीर्त्त्य वर्त्तमानसंवत्सरायनर्तु-मास-पक्ष-तिथि-वार-नक्षत्रयोग-करण-कुतपादिकाल-नामानि सप्तम्यन्तानि संकीर्त्त्य अत्र पार्वणश्राद्धनामधेयकर्मणि अमुकगोत्रा अस्मत्पितृ-पितामह-प्रपितामहा अमुकामुकशर्माणः सपत्नीका वसु-रुद्रादित्यरूपा अमुकगोत्रा अस्मन्मातामह-प्रमातामह-वृद्धप्रमातामहाः अस्मन्मातामहमातुः पितामहमातुः प्रपितामहा इति वा अमुकामुकशर्माणः सपत्नीका वसुरुद्रादित्यरूपा अग्निश्च सोमश्चेत्येताः प्रधानदेवताः पूरूरवोमार्द्रवःसंज्ञका विश्वेदेवाः अङ्गदेवता यथोक्तलक्षणं अन्नं हविर्ब्राह्मणआहवनीयार्थे अमुकगोत्राणामस्मत्पितॄणाममुकशर्मणां सपत्नीकानां वसुरूपाणाममुकसगोत्राणामस्मत्पितामहानाममुकशर्मणां सपत्नीकानां रुद्ररूपाणाममुकसगोत्राणामस्मत्प्रपितामहानाममुकशर्मणां सपत्नीकानामादित्यरूपाणां तथा अमुकगोत्राणामस्मन्मातामहानाममुकशर्मणां सपत्नीकानां वसुरूपाणाममुकसगोत्राणामस्मत्प्रमातामहानाममुकशर्मणां सपत्नीकानां रुद्ररूपाणाममुकगोत्राणामस्मद्वृद्धप्रमातामहानाममुकशर्मणां सपत्नीकानामादित्यरूपाणां पृथग्वैश्वदेविकसहितं सपिण्डनिर्वापं पार्वणश्राद्धद्वयं पितृतृप्तिकामोऽहं करिष्य इति सङ्कीर्त्तयेत्। अन्यकर्तृके तु श्राद्धेऽस्मच्छब्दस्थाने यजमानशब्दः प्रयोक्तव्यः। अग्नौकरणदेवताधिक्ये तु यावद्दैवतं देवतानुकीर्त्तनं। वैश्वदेविकतन्त्रपक्षे तु वैश्वदेविकसहितमित्यनुकीर्त्तनीयं। अपिण्डके तु पिण्डनिर्वापरहितमिति वाच्यं। एवं सङ्कल्पं विधाय निमन्त्रणमारभेत।

इति निमन्त्रणपूर्वकालकृत्यं।

## अथ निमन्त्रणेतिकर्त्तव्यता ।

तत्र चमत्कारखण्डे ।

तथैवामन्त्रयेद्विप्रांस्तान् विद्वान्नृपसत्तम ।
श्राद्धार्थं श्रद्धया युक्तः प्रसादः क्रियतामिति ॥

प्रचेतःस्मृति-प्रभासखण्ड-भविष्योत्तरेषु ।

कृतापसव्यः पूर्व्वेद्युः पितृन् पूर्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्य्यं नः श्वः सम्पाद्यं नः प्रसीदत ।
सव्येन वैश्वदेवार्थान् प्रणिपत्य निमन्त्रयेत् ॥

'कृतापसव्यः' कृतप्राचीनावीतः, 'पूर्वेद्युः' श्राद्धदिनात् पूर्वदिने, 'पितृन्' पित्रर्थान् ब्राह्मणान्, 'पूर्वं' वैश्वदेविकब्राह्मणेभ्यः पुरस्तात्। अत्र पित्र्यब्राह्मणान् प्रतिनिमन्त्रयितुरभ्यर्थनवाक्यं 'भवद्भिः पितृकार्य्यं श्वः सम्पाद्यं नः प्रसीदतेति। अत्र यजमानश्चेत् स्वयं निमन्त्रणकर्त्ता तदेवं प्रयोगः। ॐ श्वः करिष्यमाणे श्राद्धे भवद्भिरस्यमानहविराधारत्वेनाहवनीयस्थाने भूत्वास्माकं पितृकार्य्यं सम्पादनीयं इत्येतस्मिन्नर्थे प्रसादङ्कुरुतेति। यजमानप्रेषितश्चेन्निमन्त्रणकर्त्ता तदास्माकमित्यस्य स्थानेऽमुकस्य यजमानस्येतिपदं प्रयुज्य शेषं तथैव वाक्यं प्रयुञ्जीत। एवमभ्यर्थनेन ब्राह्मणान् सम्प्रसादनपूर्वकमुन्मुखीकृत्य निमन्त्रणवाक्यं प्रयोक्तव्यं तद्यथा श्वोऽद्य वा करिष्यमाणे अमुकगोत्रस्यामुकशर्मणोऽस्मत्पितुर्यजमानपितुर्वा सपत्नीकस्य वसुरूपस्य श्राद्धे क्षणः क्रियतामिति पैतृके निमन्त्रणे, ॐ अमुकगोत्रस्यामुकशर्मणोऽस्मत्पितामहस्य यजमानपितामहस्य वा सपत्नीकस्य रुद्ररूपस्येति पैतामहे, ॐ अमुकगोत्रस्यामुकशर्मणोऽस्मत्प्रपिताम-

इत्यु यजमानप्रपितामहस्य वा सपत्नीकस्यादित्यरूपस्येति प्रपितामहे, एवमेव गोत्राद्युच्चारणं कृत्वा मातामहाद्यर्थानां निमन्त्रणं कृत्वा एवं पित्रर्थान्निमन्त्र्यानन्तरं सव्येन सव्यस्कन्धस्थितयज्ञोपवीतेन विशिष्टः सन्निमन्त्रणकर्त्ता वैश्वदेवार्थान् ब्राह्मणान्निमन्त्रयेत्। तत्र च पितृकार्य्यशब्दस्थाने वैश्वदेविकार्थशब्दं निधाय पूर्ववत् प्रसादनवाक्यमुच्चार्य्य दैवे चणः क्रियतामिति निमन्त्रणवाक्यं प्रयोक्तव्यं। ततः पित्र्यैर्वैश्वदेविकैश्च ब्राह्मणैः ॐ तथेति निमन्त्रणाभ्युपगमवाक्यमुच्चारणीयं। अथ भूयोऽपि प्राप्नोतु भवानिति निमन्त्रयित्रोक्ते प्राप्नवानीति निमन्त्रणीयेन प्रयोज्यं। एतच्चोभयेषां निमन्त्रणं नमस्कारपूर्वकं कर्त्तव्यं।

तदेतत्सर्वमुक्तं नागरखण्डे।

ब्राह्मणानां गृहङ्गत्वा तान् प्रार्थ्य विनयान्वितः।
अमुकस्य त्वया श्राद्धे चणो वै क्रियतामिति॥
वदेदभ्युपगच्छेयु विंप्रास्तेवं तथेति च।
भूयोऽपि व्याहरेत् कर्त्ता तं प्राप्नोतु भवानिति।
द्विजस्तु प्राप्नुवानीति विधिरेष निमन्त्रणे॥

अत्र पित्रर्थानां ब्राह्मणानां पूर्वं वैश्वदेविकानां पश्चान्निमन्त्रणमित्युपक्रमः प्रतिपादितः सचानुपपन्न इव लक्ष्यते। यतोनिमन्त्रयेदित्यनुवृत्तौ क्रमान्तरमुक्तं वार्हस्पत्यस्मृति-भविष्योत्तरयोः।

उपवीती ततो भूत्वा देवतार्थं द्विजोत्तमान्।
अपसव्येन पित्र्येऽथ स्वयं शिष्योऽथवा सुत इति॥

'उपवीती' सव्यस्कन्धस्थितब्रह्मसूत्रः, भूत्वा, 'द्विजोत्तमान्'

द्विजेष्वनूचानत्वादिभिर्गुणैः प्रशस्ततरान् 'दैवतार्थं' वैश्वदेविककर्म्मार्थं पूर्व्वं निमन्त्रयेत्। 'अथ' अनन्तरं 'अपसव्येन' दक्षिणस्कन्धस्थितेन ब्रह्मसूत्रेण, तथा युक्तः, भूत्वा 'स्वयं' श्राद्धाधिकार्य्येव, तत्प्रेषितस्तदीयः सुतः शिष्यो वा ब्राह्मणोत्तमान् 'पित्र्ये' पितृ-पितामहादिदैवत्ये कर्मणि, निमन्त्रयेत्। अनेन च वैश्वदेविकानां पूर्वं पित्र्याणान्तु पश्चान्निमन्त्रणमुक्तं, कथं पाटक्रमादिति चेत्। तन्न। प्रचेतोवाक्यगतेन श्रौतेन तद्बाधात्। अथाथशब्दावगतानन्तर्य्यात्क्रम इति चेत्। तदपि न। अथ शब्दस्यानेकार्थत्वादर्थान्तरत्वेनाप्युपपत्तेः। अथापेक्षितविध्यनुग्रहानन्तर्य्यार्थत्वं मन्यसे। तन्न। प्रचेतोवाक्यगतश्रौतक्रमविरोधपरिहारार्थमथशब्देऽर्थान्तरपरत्वस्यैवापेक्षितत्वात्।

ननु तथापि कथं पित्र्याणां पूर्वं निमन्त्रणं। यतो मनुर्वैश्वदेविकपूर्वं निमन्त्रणमाह।

दैवाद्यन्तं तदीहेत पित्राद्यन्तं न तद्भवेत्।
पित्र्याद्यन्तन्त्वीहमानः क्षिप्रंनश्यति सान्वय इति॥

दैवो वैश्वदेविकः पदार्थ आदिरादिमः दैव एव चान्तोऽन्तिमः पदार्थो यत्र श्राद्धे तद्दैवाद्यन्तं श्राद्धे चादिमः पदार्थो निमन्त्रणमेव अतो दैवं निमन्त्रणमादौ कर्त्तव्यमिति वचनाद्गम्यते। मैवं। विप्रपादक्षालनमादिमः पदार्थो न निमन्त्रणं, निमन्त्रणस्य प्रयोगवहिर्भावात्। ननु निमन्त्रणस्यापि पादक्षालनादिवच्छ्राद्धाङ्गत्वात् कथं प्रयोगवहिर्भावः। उच्यते। माभूत् प्रयोगवहिर्भावः किन्तु निमन्त्रणात् पूर्वं महासङ्कल्पस्तावद्विहितोऽस्ति अतस्तस्यैवादिमत्वात्तद्विषयं मनुवचनं न प्रचेतोवचनोपदिष्टनिमन्त्रणक्रमविरोधीति स एव निमन्त्रणे क्रमो

न्याय्यः । एवं स्थितेऽप्येतयोर्मनु-बृहस्पतिवाक्ययोर्निमन्त्रणक्रमपरत्वं मन्यमानाः पूर्वे निबन्धकाराः क्रमविकल्पमवर्णयन् ।
तथा च विप्रान्निमन्त्रयेदित्यनुवृत्तौ नागरखण्डे ।

कुलाचारसमोपेतान् गृहीत्वा चरणौ ततः ।
प्रसादयेच्च सव्येन विश्वेदेवार्च्चने पुरा ॥
युग्मानेव यथाशक्त्या मन्त्रमेतदुदीरयेत् ।
आगच्छन्तु महाभागा विश्वेदेवास्ततो तव ॥
भक्त्याहूता मया चैव त्वं चापि व्रतभाग्भव ।
एवं युग्मान् समामन्त्र्य वैश्वदेवकृते द्विजान् ।
अयुग्मानपसव्येन पित्रर्थं चापि मन्त्रयेत् ॥
ब्राह्मणञ्च यथाशक्त्या एकैकस्य पृथक् पृथक् ।
एकैकञ्च त्रयाणां वाप्येकमेव निमन्त्रयेत्॥
द्विजं मातामहानामप्येष एव विधिः स्मृतः ।
ततः पादौ परिस्पृश्य द्विजस्येदमुदीरयेत् ॥
श्रद्धापूतेन मनसा पितृभक्तिपरायणः ।
पिता मे तव कार्य्येऽस्मिंस्तथैव च पितामहः ।
स्वपित्रा सहितोऽभ्येतु त्वञ्च व्रतपरोभव ॥
एवं पितॄन् समाहूय तथा मातामहानथ ।
सत्यं कृत्वा नमस्कृत्य तान् विप्रान् स्वगृहं व्रजेत् ॥

अत्र प्रचेतोवाक्ये प्रणिपत्य निमन्त्रयेदित्युक्तं, तत्तु स्मृतिचन्द्रिकाकारः शूद्रकर्तृविषयमित्यभिधाय ब्रह्माण्डपुराणवाक्यं प्रमाणत्वेन दर्शितवान् ।

दक्षिणं चरणं विप्रः सव्यं वै क्षत्रियस्तथा ।
पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्व्वकं ।
निमन्त्रयीत पूर्व्वेद्युः श्राद्धकर्त्ता द्विजोत्तमानिति ॥

दक्षिणचरणोपादाने प्रदेशविशेषो निमन्त्रणीयं प्रति निमन्त्रयितृप्रयोज्यं वाक्यं नियमश्रावणं च पाद्म-मात्स्ययोः पुराणयोर्दर्शितं ।

पूर्व्वेद्युरपरेद्युर्व्वा विनीतात्मा निमन्त्रयेत् ।
दक्षिणं जानुमालभ्य त्वं मयात्र निमन्त्रितः ॥
एवं निमन्त्र्य नियमान् श्रावयेत् पितृबान्धवः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मयाच श्राद्धकारिणा ॥

'पितृबान्धवः' प्रकृतश्राद्धसम्बन्धिपितृसपिण्ड-समानोदकादिस्तत्-प्रेषितो वा निमन्त्रणकर्त्ता । अत्र केचिद्दक्षिणजान्वालभनं वैश्वदेविकद्विजनिमन्त्रणविषयमाहुः । तदयुक्तं । तत्पुराणस्थितनिमन्त्रणविषय-निखिल-वचनपौर्वापर्य्य-पर्य्यालोचनायां साधारणस्यैव प्रतीयमानत्वात्। अत्रिरपि नियमश्रावणमाह ।

प्रथमेऽह्नि निवासस्थान् श्रोत्रियादीन्निमन्त्रयेत् ।
कथयेच्च तदैवैषां नियोगान् पितृदैविकान् ॥
सर्व्वायासविनिर्मुक्तैः कामक्रोधविवर्ज्जितैः ।
भवितव्यं भवद्भिर्वै श्वोभूते श्राद्धकर्मणीति ॥

'प्रथमेऽह्नि' पूर्व्वेद्युरित्यर्थः । एवं निमन्त्रणकर्त्रा वाक्येऽभिहिते निमन्त्रणीयब्राह्मणाभिधेयमाह स एव ।

ततस्तथेत्यविघ्नेन गतेयं रजनी यदि ।

यथाश्रुतं प्रतीक्षेरन् श्राद्धकालमतन्द्रिताः ॥

तेन निमन्त्रिता विप्रास्तं निमन्त्रणकर्त्तारं तथास्तु यद्यविघ्नेनेयं रजनीगतेत्युक्त्वा धर्मशास्त्रादौ यथानियमजातं श्रुतं तथैव तन्नियमजातं 'प्रतीक्षेरन्' परिपालयेयुः। 'श्राद्धकाले' खादितान्नपरिणामपर्य्यन्तमित्यर्थः ।

यमेनापि । निमन्त्रणीयाभिधेयमुक्तम् ।

तेनोँ तथेत्यविघ्नेन गतेयं रजनी यदीति ।

'तेन' निमन्त्रणीयेन, ॐ तथेत्याद्यभिधेयमित्यर्थः ।

देवलः ।

कामं प्रतिश्रवस्तेषामनिन्द्यामन्त्रणे कृते ।

'तेषां' ब्राह्मणानां अनिन्द्येनामन्त्रणे क्रियमाणे कामं निकामं अत्यर्थं, 'प्रतिश्रवः' अभ्युपगमः, कर्त्तव्यो भवति। अभ्युपगतनिमन्त्रणस्तु आब्रह्मणो ब्रह्मवर्चसी जायतामित्यादीनि योगक्षेमो नः कल्पतामित्यन्तानि यजूंषि जपेत् ।

आमन्त्रितो जपेद्दोग्ध्रीमिति भृगुस्मरणात् ।

इति निमन्त्रणेतिकर्त्तव्यता ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-समस्तकरणाधिपति-
पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-
खण्डे श्राद्धकल्पे निमन्त्रणप्रकरणं नाम
एकादशोऽध्यायः ॥०॥

---

# अथ द्वादशोऽध्यायः ।



गोष्ठीशालाकलानां कुलगृहमलघुः श्लाघ्यपुण्योदयानां
विद्यानां पर्वदायो मधुमधुरवचः सम्पदां यश्च कोषः ।
सोऽयं हेमाद्रिसूरिः कुश-मुकुलशिखातीक्ष्णबुद्धिः प्रसिद्धः
श्राद्धे पूर्वाह्णकृत्यं निगदति दलयन् संशयं तत्पराणाम् ॥

अथ श्राद्धदिनपूर्वाह्णकृत्यं ।

तत्र पाकादिकृत्यं ।

अथ श्राद्धकर्त्ता ब्राह्मे मुहूर्त्ते उत्थाय यथोपदेशं शौचविधिं विधायाचामेत् । दन्तधावनन्तु न कुर्य्यात् ।

तथाच श्रुतिः ।

क्लिन्नदन्तः पितॄन् यजेतेति ।

'क्लिन्नदन्तः' अनपनीतमललेपदन्तः ।

शातातपोऽपि श्राद्धदिने दन्तधावननिषेधमाह ।

शुद्ध्यर्थं प्रातरुत्थाय भक्षयेद्दन्तधावनं ।
श्राद्धे यज्ञेऽथ नियमे पत्यौ च प्रोषिते न तु ॥

श्राद्धादौ निष्पाद्यत्वेन प्रस्तुते सति दन्तधावनं न कुर्य्यादन्यत्र कुर्य्यादित्यर्थः ।

प्रभासखण्डे ।

उपवासे तथा श्राद्धे न खादेद्दन्तधावनं ।
दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि वै ॥

अयञ्च निषेधः श्राद्धकर्त्तुरेव न पुनः श्राद्धभोक्तुरपि ।
अतएव प्रचेतःस्मृति-भविष्योत्तरयोः ।

श्राद्धभुक् प्रातरुत्थाय प्रकुर्य्याद्दन्तधावनं ।
श्राद्धकर्त्ता न कुर्वीत दन्तानां धावनं बुधः ॥

अतः श्राद्धकर्त्ता दन्तधावनमकृत्वैव शौचाचमनविधिं निष्पादयेत् । ततो नद्यादौ यथालाभं मुख्यकल्पिके वा जलाशये यथोक्तस्नानं कुर्य्यात्, स्नातोऽधिकारी भवतीत्यादिविष्णुवचनात् । ततः पूर्वोक्तविधिना तर्पणं विधाय जलादवतीर्य्य स्वयं वा सुतशिष्यादिना धौते अहते सिते वाससी परिधानाद्बहिःकच्छावन्धमकुर्वन् परिदधीत । अनन्तरं सन्ध्यामुपास्य प्रोक्षणमादाय गृहं गत्वा नैत्यिकं प्रातर्होमं कृत्वा पाकभूमिमुपलेपनादिभिः संस्कुर्य्यात् ।
तथा च ब्रह्माण्डपुराणे ।

भूमिः श्राद्धे पञ्चगव्यैः लिप्ता शोध्या तथोल्मुकैः ।
गौरमृत्तिकयाच्छन्ना प्रकीर्णतिलसर्षपा ॥

देवलस्मृति-कूर्मपुराणयोः ।

तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् ।
असुरोपहतं सर्वं तिलैः शुध्यत्यजेन चेति ॥

अनन्तरं पाकारम्भं चिकीर्षन् पाकभूमेः सकाशादपासनीयप्रकरणोक्तान् वीभत्स-मत्सरि-मत्त-धूर्त्त-शूद्र-शूद्री-पतित-पाषण्ड-षण्ड-काण-कुणि-भ्रूणहन्तृ-श्वित्रि-कुष्ठि-रजस्वला-स्वैरिणी-सङ्कीर्णयोनि-कुब्ज-वामन-छिन्नहीनातिरिक्ताङ्ग-पङ्गु-विड्वराह-खर-करभ-करट-कुक्कुट-शुनक-नकुल-विडाल-चण्डाल-नीलीकषायवाससो दूरतरमु-

त्मार्य्य भोजनभाण्डादीनि यथार्हं चालयेत्। अथैवं संस्कृतायां भुवि शोधितेषु नवेषु च भाण्डेषु पाकं कर्तुमुपक्रमेत्।

तथा च देवलः।

तथैव यन्त्रितो दाता प्रातः स्नात्वा सहाम्बरः।
आरभेत नवैः पात्रैरन्वारम्भञ्च बान्धवैः॥

अयमर्थः। स्नातः स्नातया परिहिताधावकधौतश्वेतवाससा पत्न्या सह शक्तियुक्तः स्वयमेव समस्तपाकारम्भ-समाप्तीकुर्यात्। अशक्तस्त्वय-मारम्भमात्रं कृत्वा अन्वारम्भं बान्धवैः स्वजनैः कारयेत्। अत्र पाठान्तरं अन्वारम्भञ्च बान्धवैरिति। पाठान्तरं च अन्वारम्भवतां विधिरिति।

पत्न्या स्वहस्तेन पाकः कर्त्तव्य इत्यत्रार्थे लिङ्गदर्शनं चमत्कारखण्डे।

ततश्च अपचामास तदर्थं जनकोद्भवा।
रामादेशात्स्वयं साध्वी विनयेन समन्विता॥

प्रभासखण्डेऽपि।

अथैतानि पपाचाशु सीता जनकनन्दिनी।

अयञ्च पाकारम्भोऽग्निमता मन्त्रवन्निर्वापपूर्वकः कर्त्तव्यः।

तथा च पाद्म-मात्स्यपुराणयोः।

अग्निमान्निर्वपेत्पित्र्ये चरुञ्चासममुष्टिभिः।
पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत्॥

चरुग्रहणादोदन एव निर्वापो विज्ञायते न सूप-शाकादिषु। 'असममुष्टिभिः' विषमसंख्यकैर्मुष्टिभिः।

अत्र नवैः पात्रैरित्यस्य सांवत्सरिक एवावश्यकत्वं नान्यत्रेतिवदन्तः केचिद्वचनं दर्शयन्ति।

नूतनामत्रकरणं ब्राह्मणाभ्यञ्जनं तथा ।
श्राद्धात् पूर्वंमदानञ्च प्रत्यब्दे त्रितयञ्चरेदिति ॥

तदयुक्तं । प्रत्यब्दग्रहणस्यादरातिशयार्थत्वेनाभ्युपपत्तेः दर्शश्राद्ध-प्रकरणाम्नातानां नूतनभाण्डादीनां उत्कर्षापत्तेश्च ।

भूभाण्डसंस्कारानन्तरमुक्तं देवलस्मृति-कूर्म्मपुराणयोः ।

ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनभक्ष्यवत् ।
चोष्य-पेयसमृद्धञ्च यथाशक्ति प्रकल्पयेत् ॥

अस्यार्थः। विचित्रसंस्कारमतिचमत्कारिबहुप्रकारवेसवरसारं ब्रीहि-यव-गोधूमविकारप्रायमभिप्रायानुकूल-मूल-मुकुलफल-कुसुम-कन्द-कन्दल-प्रकलकल्पिताल्पव्यञ्जनमतिरुच्यकूर्च्चिकापानकपायस-रसाला-रसारं असित-तिल-मुद्ग-खड्ग-च्छाग-मेषामिष-माषविरचितरुचिर-पाकविशेषं उपचितमरीच-गुडखण्ड-मात्स्यण्डिका-हिङ्गु-सैन्धव-कर्पूर-कुङ्कुमैला-धूपादिसाधितं भक्ष्य-भोज्य-लेह्य-चोष्य-पेयादिभेदभिन्नं गन्धवर्णरससम्पन्नमन्नं निष्पादयेत् । एतच्च यथाशक्ति सम्पादनीयं । अतएवाह गौतमः ।

शक्तितः प्रकर्षयेद्गुणसंस्कारविधीनन्नस्येति ।

अन्नानां समीचीन-जाति-रूप-रस-गन्ध-स्पर्शवत्त्वं 'गुणाः' । द्रव्य-क्रियादिभिरतिशयाधानं 'संस्कारः', एतयोः 'विधीन्' प्रकारान्, यथाशक्ति 'प्रकर्षयेत्' शक्त्यनुसारेण प्रकृष्टात् सम्पादयेदित्यर्थः । आह पराशरः ।

इष्टापूर्त्त-मृताहेषु(१) पर्व-वृद्ध्यष्टकासु च ।

(१) इष्टापूर्त्तहतोयेष्विति ग० ।

पात्रेभ्यस्तु यथाशक्ति स्वादन्नं प्रतिपादयेत् ॥

अत्र साग्निकेन वैश्वदेवार्थं पृथक्पाकः कर्त्तव्य इति वैश्वदेवादि-प्रकरणेऽभिहितं ।

समाप्ते च पाके श्राद्धभूमिसंस्कारः कर्त्तव्यः । तत्र श्राद्धयोग्या भूमिर्विष्णुधर्मोत्तरे ।

गोमयेनोपलिप्तेषु श्राद्धकार्य्यगृहेषु च ।
मनोज्ञेषु विचित्रेषु रुचिरेषूत्तमेषु च ।
उद्यानेषु विचित्रेषु सैकतेषु समेषु च ॥

पद्मपुराणे ।

तीर्थायतन-गोष्ठेषु द्वीपोद्यान-गृहेषु च ।
विविक्तेषूपलिप्तेषु श्राद्धं देयं विजानता ॥

यमः । दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणं ।
शुभन्देशं परीक्ष्याशु गोमयेनोपलेपयेत् ॥

मत्स्य-पाद्मपुराणयोः ।

गोमयेनोपलिप्ते तु दक्षिणाप्रवणे स्थले ।
श्राद्धं समारभेद्भक्त्या गोष्ठे वा जलसन्निधौ ॥

अत्र प्रयत्नेनापि दक्षिणाप्रवणत्वं सम्पादयेदित्याह मनुः ।

शुचिन्देशं विविक्तञ्च गोमयेनोपलेपयेत् ।
दक्षिणाप्रवणञ्चैव प्रयत्नेनोपपादयेत् ॥

'शुचिः' भस्मास्थिकपालिकाद्यनुपहतः । 'विविक्तः' विस्तीर्णः बहुभिर्जनैरनाकीर्णश्च, 'दक्षिणाप्रवणः' दक्षिणस्यां दिश्यवनतः, तादृशं देशं प्रयत्नेन सम्पादयेत् । तच्च गोमयेनोपलेपयेत् ।

कूर्म्मपुराणे ।

दक्षिणाप्रवणं स्निग्धं विविक्तं शुभलक्षणं ।
शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥

पैठीनसिः ।

शुचौ देशे गवां गोष्ठेऽग्न्यागारे वा गोमयेनोपलिप्य पुष्पोपहारं कृत्वा ।

पुष्पाणां 'उपहारः' उपहरणं विकिरणमिति यावत्, द्विजानुपवेशयेदित्युत्तरेण सम्बन्धः ।

आह विष्णुः ।

संवृते च श्राद्धं कुर्य्यात् न रजस्वलां पश्येन्न श्वानं न विड्वराहं न ग्राम्यकुक्कुटं प्रयत्नाच्छ्राद्धमजस्य दर्शयेत् ।

रजस्वलादिग्रहणमपासनीयप्रकरणोक्तानां सर्वेषां नग्नादीनां उपलक्षणार्थं । 'अजः' छागः । स यथा सन्निधौ निबद्धः क्रियमानं श्राद्धं पश्येत्तथा प्रयत्नेन कर्त्तव्यं ।

विष्णुधर्मोत्तरे ।

रजस्वला च षण्ढश्च श्वानः शूकर-कुक्कुटाः ।
यथा श्राद्धं न पश्यन्ति तथा कार्य्यं विजानता ।
रक्षार्थञ्चास्य वै तेषां गुप्तिः कार्य्या नरेश्वर ॥

तथा ।

वस्त्रसंदर्शनं शस्तं श्राद्धे नित्यमरिन्दम ।
कुतपस्य च सान्निध्यं तथा कृष्णाजिनस्य च ॥

ब्रह्माण्डपुराणे ।

तस्मात् परिवृते दद्यात्तिलैश्चान्ववकीरयेत् ।

राक्षसानां तिलरक्षा शुनां वै संवृतेन च।

महाभारते।

श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन् कथञ्चन।

तस्मात् परिवृते दद्यात्तिलांश्चान्ववकीरयेत्॥

ब्रह्मपुराणे।

जघान दानवौ विष्णुः पूर्वन्तु मधु-कैटभौ।

वृत्रं महेन्द्रश्च ततः पृथ्वी तन्मेदसावृता॥

ततोऽर्थं मेदिनी सा तु लोके वै ख्यायते जनैः।

तस्माच्छ्राद्धे पञ्चगव्यैर्लेप्या शोध्या तथोल्मुकैः।

गोरमृत्तिकयाच्छन्ना प्रकीर्णा तिलसर्षपैः॥

'उल्मुकैः' समन्तादुल्मुकनिधानेन, तत्र "ये रूपाणीति पिण्डपितृयज्ञोपदिष्टो मन्त्रश्च प्रयोज्यः।

कोलायां वराहकृतं श्राद्धमधिकृत्य ब्रह्मपुराणे।

दंष्ट्रयोल्लिख्य च महीमभ्युक्ष्य सलिलेन च।

धर्म्मोद्भवेनोपलिप्य कुशैरुल्लिख्यतां पुनः।

परिणीयोल्मुकेनैनामभ्युक्ष्य च पुनः पुनः॥

अत्र श्राद्धं कुर्वता वराहेणैवंविधो भूसंस्कारः कृत इत्यतो लिङ्गदर्शनादन्येनाप्येवमेव कर्त्तव्य इत्यवगम्यते। श्राद्धप्रकृतिभूतेऽपि पितृयज्ञे वज्रस्योल्लेखनसाधनत्वेन विधानाद्दंष्ट्राग्रहणमविवक्षितं। 'धर्म्मोद्भवः' गोमयं। 'परिणीय' समन्तादप्रदक्षिणपरिभ्रमितेनोल्मुकेन परिगतां कृत्वेत्यर्थः।

एवं समाप्ते गृहकर्म्मणि गृहजनकृत्यमाह हारीतः।

कृतकर्म्माणः सस्त्री-बाल-वृद्धाः सुरभिस्नाताः शुचयः शुचिवाससः स्युः ।

'सुरभिस्नाताः' सुगन्धितैलादिद्रव्यस्नाताः । एतच्च प्रायेणाभ्युदयिकविषयं भवितुमर्हति ।

भविष्यत्पुराणे ।

स्त्री-बाल-वृद्धैः स्नातव्यं तद्दिने श्राद्धकारिभिः ।
नियतैश्चैव तैर्भाव्यं यावच्छ्राद्धं समाप्यते ॥

अथाह्नः सार्द्धप्रहरे व्यतीते निमन्त्रितानां ब्राह्मणानां नख-रोम-कल्पनं कारयेत् ।

वाराहपुराणे ।

प्रभातायां तु शर्व्वर्य्यां उदिते च दिवाकरे ।
दिवाकीर्त्तिं समानीय विप्राय विधिपूर्व्वशः ॥
श्मश्रुकर्म च कर्त्तव्यं नखच्छेदस्तथैव च ।
स्नापनाभ्यञ्जनं दद्यात्पितृभक्तास्तु सुन्दरि ॥

'दिवाकीर्त्तिः' नापितः ।

भविष्यपुराणे ।

तैलमुद्वर्त्तनं स्नानं दद्यात् पूर्व्वाह्न एव तु ।
श्राद्धभूमौ नख-श्मश्रुच्छेदनञ्चापि कारयेत् ॥

तैलोद्वर्त्तनादिदाने पात्रविशेषो देवलस्मृति-कूर्म्मपुराणयोर्दर्शितः ।

ततो निवृत्ते मध्याह्ने लुप्तरोम-नखान् द्विजान् ।
अभिगम्य यथामार्गं प्रयच्छेद्दन्तधावनं ॥
तैलमुद्वर्त्तनं स्नानं स्नानीयञ्च पृथग्विधं ।
पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्व्वकं ॥

'लुप्तरोमनखान्' छत्तरोमनखान्। 'यथामार्गं' यथाविधि। 'स्नानं' स्नानार्थं उष्णोदकं, 'स्नानीयं' स्नानोपकरणभूतं सुरभिद्रव्यादि। 'औदुम्बरैः' ताम्रमयैः। उदुम्बरादियज्ञियवृक्षजैर्वा। तैलदानञ्चनिषिद्धतैलासु तिथिषु वेदितव्यं। "ततोऽनिवृत्ते मध्याह्न इत्यत्र अनिवृत्ते मध्याह्ने इत्यकारप्रश्लेषो द्रष्टव्यः। अन्यथा प्रधानकर्मकालातिपातः स्यात् पूर्वोक्तपूर्वाह्णकालविरोधश्च।

अतएव मार्कण्डेयः।

अह्नः षट्सु मुहूर्त्तेषु गतेषु लघ तान् द्विजान्।
प्रत्येकं प्रेषयेत् प्रेष्यान् स्नानायामलकोदकान्॥

द्वादशघटिकाभ्य ऊर्ध्वं निमन्त्रितब्राह्मणानां स्नानार्थं परिचारकाणां हस्ते आमलककल्कं प्रदाय निमन्त्रितब्राह्मणेभ्यः प्रत्येकं दीयतामिति तान् प्रति परिचारकान् प्रेषयेदित्यर्थः। एतदामलककल्कदानं प्रतिषिद्धतैलासु तिथिषु द्रष्टव्यं। तास्वप्यमावास्यादिव्यतिरिक्तासु देयमिति स्मृतिचन्द्रिकाकारः। धात्रीफलैरमावास्यायां न स्नायादित्यामलकोदकस्नानस्यामावास्यायां निषेधात्। अनिषिद्धतैलायान्तु तिथौ स्नानार्थं तैलादि देयमिति देवलवचने दर्शितमेव। कात्यायनस्मृति-प्रभासखण्डयोरपि।

तैलमुद्वर्त्तनं स्नानं दन्तधावनमेव च।
छत्तरोम-नखेभ्यस्तु दद्यात्तेभ्योऽपरेऽहनि॥

छत्तरोमनखेभ्यो निमन्त्रितेभ्यस्तैलादिकं स्नानसाधनं दन्तधावनसाधनञ्च काष्ठादिकं दद्यादित्यर्थः।

यत्तु प्रचेतसोक्तं।

तैलमुद्वर्त्तनं स्नानं दद्यात् पूर्वाह्ण एव तु ।
श्राद्धभुग्भ्यो नख-श्मश्रुच्छेदनं न तु कारयेदिति ॥

तत्र श्राद्धभुजां नखादिच्छेदननिषेधो निषिद्धक्षुरकर्मतिथिविषयः। अथवा श्राद्धकर्त्ता श्राद्धभुग्भ्यः तैलादिकं दद्यात्। आत्मनश्च नखादिच्छेदनं न कारयेदिति व्याख्येयं। ब्राह्मणानां गृहं प्रति तैलोद्वर्त्तनादि प्रेषणीयमित्युक्तं। येषान्तु ग्रामान्तरादागतानां गृहं नास्ति तेषां यजमानेन स्वगृहमागतानां श्मश्रुकर्माभ्यञ्जनादि कारयितव्यमित्याह यमः ।

श्राद्धकाले समाहूतानलङ्कुर्वीत तान् द्विजान् ।
श्मश्रुकर्म-शिरःस्नान-धूपनाभ्यञ्जनाञ्जनैः ।
आसनं कुतपं दद्यादितरद्वा पवित्रकं ॥

श्राद्धार्थानाञ्च भाजनासन-गन्ध-पुष्प-धूपादीनां द्रव्याणां पूर्वाह्ण एव सम्भरणं कर्त्तव्यं । अथ यजमानो यथालाभं तीर्थे माध्याह्निकं कर्माङ्गञ्च स्नानं तन्त्रेण निर्वर्त्तयेत् ।

उक्तं हि कर्मारम्भे स्नानं मत्स्यपुराणे ।

नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते ।
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते ॥

नागरखण्डेऽपि ।

पितॄनुद्दिश्य यद्द्रव्यं ब्राह्मणेभ्यः प्रदीयते ।
स्नातैर्धौताम्बरैर्मर्त्त्यैस्तद्भवेत्तृप्तिदं महत् ।
पितॄणां सर्वदेवेश इत्येषा वैदिकी श्रुतिः ॥

अत्र श्राद्धमधिकृत्य विशेषो भविष्यत्पुराणे ।

कर्त्तुः स्नानं भवेत्तीर्थे प्रातर्मध्याह्न एव तु ।
उष्णोदकेन वाशक्तः कुर्वीत सकृदेव तत् ॥

ततो देवर्षि-पितृतर्पणं कृत्वा जलादवतीर्य्याहते धौते श्वेते वाससी पूर्ववत् परिदधीत ।

तथा च वसिष्ठः ।

जप-होमोपवासेषु धौतवस्त्रः सदा भवेत् ।
अलङ्कृतः शुचिर्मौनी श्राद्धादौ विजितेन्द्रियः ॥

आह प्रचेताः ।

श्राद्धकृच्छुक्लवासाः स्यादिति ।

यत्तु वस्त्रप्रकरणोक्तव्यासवचने धातुरक्तस्यापि पवित्रत्वं स्मर्य्यते तत् श्राद्धव्यतिरिक्तविषयं क्षत्रियादिविषयं वा ।

काषायरक्तस्य निन्दामाह बौधायनः ।

काषायवासाः कुरुते जप-होम-प्रतिग्रहान् ।
न तद्देवगमं भवति हव्यकव्येष्वयो हविरिति ॥

'हव्य-कव्येष्विति तत्साध्येषु कर्मस्वित्यर्थः ।

विशेषान्तरं भविष्यत्पुराणे ।

अवाग्यतो धौतपादः पाटिताम्बरसंयुतः ।
तस्माद्दहिर्बद्धकच्छो वहिर्जानुकरस्तथा ॥

एवं वाससी परिधाय द्विराचम्य माध्याह्निकं सन्ध्याविधिं विधाय कर्मार्थं तीर्थोदकान्याहरेत् ।

ब्रह्माण्डपुराणे ।

उदकानयनं कृत्वा पश्चाद्विप्रांश्च भोजयेत् ।

अत्र विशेषसहितं जलाहरणं कुशाहरणञ्च कूर्म्मपुराणे।

श्वोभूते दक्षिणां गत्वा दिशं दर्भान् समाहितः।

समूलानाहरेद्वारि दक्षिणाग्रन्तु निर्मलं॥

'दक्षिणाग्रं' दक्षिणप्रवाहं जलाशयं दक्षिणभागस्थितं वा। पूर्व्वेद्युर्निमन्त्रणं विधायाह हारीतः।

अथ श्वोभूते दक्षिणां दिशं गत्वा दक्षिणाग्रणतान् समूलान् दर्भानाहरेत्। अपरिगृहीतांश्चाप इति।

'अपरिगृहीताः' पूर्वमन्येनास्वीकृताः।

आह यमः।

समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि।

मूलेन लोकान् जयति शक्रस्य तु महात्मनः॥

अत्र विस्तरेण दर्भलक्षणं जललक्षणं तदुभयाहरणे विधिश्च पूर्व्वोक्तः। श्राद्धार्थोदकाहरणे विशेषो महाभारते।

उदकानयने चैव स्तोतव्यो वरुणः प्रभुः।

अत्र स्तुतिस्वरूपविशेषानभिधानादिमं मे वरुण इत्यादिना येन केनचिद्वरुणदैवत्येन मन्त्रेण स्तोतव्य इति गम्यते। तीर्थादभ्युक्षण-जलाहरणासम्भवे मणिकादपि तदाहरणं पूर्वमेव प्रतिपादितं। तीर्थान्मणिकादेर्वा समाहृतस्योदकस्य कार्य्यमाह योगयाज्ञवल्क्यः।

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे।

ततः कर्म्माणि कुर्वीत विहितानि च कानिचित्॥

प्रोक्षणेतिकर्त्तव्यता तु पृथिवीस्तुत्यादिकृत्यप्रकरणे वक्ष्यते। ततो नृवराहपूजां कुर्य्यादित्युक्तं विष्णुधर्म्मोत्तरे

श्राद्धाह्नि प्रयतः स्नातः स्वाचान्तः सुसमाहितः।
शुक्लवासाः समभ्यर्च्य नृवराहं जनार्दनं॥

श्राद्धमारभेतेति शेषः।

शिवपुराणे।

पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत्।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितं॥

अत्र साग्निकोऽमावास्याश्राद्धं करिष्यन् पूर्व्वं वैश्वदेवं पिण्डपितृयज्ञञ्च क्रमेण कुर्य्यात्। श्राद्धान्तरं करिष्यंस्तु पूर्वं वैश्वदेवबलिहरणादि कुर्य्यादिति पूर्वं प्रपञ्चितं।

इति पाकादिकृत्यं।

अथ श्राद्धसम्पदः।

तत्र सम्पादनीयोद्देशः।

मनु-वशिष्ठ-यम-हारीत-शातातपाः।

अपराह्णस्तिला दर्भा वास्तुसम्पादनं तथा।
सृष्टिर्मृष्टिर्द्विजाश्चाग्र्याः श्राद्धकर्म्मसु सम्पदः॥

अत्रापराह्णतिल-दर्भाः पूर्वमेव स्वप्रकरणे व्याख्याताः। 'वास्तु' श्राद्धार्थं वेश्म, तस्य 'सम्पादनं' अविद्यमानस्योत्पादनं विद्यमानस्य च परकीयस्य क्रयाद्युपायेन स्वीकरणं दक्षिणाप्रवणत्व-समीकरणोपलेप-संमार्जनादीनां संस्करणञ्च। 'सृष्टिः' उत्सृष्टिरुत्सर्गस्त्याग इत्यनर्थान्तरं अकार्पण्येनान्न व्यञ्जनादिदानमिति यावत्। 'मृष्टिः' मार्जनं स्वादुता वा। 'अग्र्याः' श्रोत्रियत्वादिविशेषशालिनः। एतानि वस्तूनि

'श्राद्धसम्पदः' श्राद्धार्थं द्रव्यसमृद्धयः। सम्पच्छब्दाच्च श्राद्धार्थिना सर्व्वाण्येतानि सम्पादनीयानीति सूचितं।

एवं पित्र्यकर्म्मसम्पदोऽभिधाय दैविककर्म्मसम्पदोऽपि त एवाहुः।

दर्भाः पवित्रं पूर्वाह्णो हविष्याणि च सर्वशः।
पवित्रं यच्च पूर्वोक्तं विज्ञेया हव्यसम्पदः॥

अत्राद्यपवित्रशब्देन मन्त्रा जलादिगालनार्थं वस्त्रं वा कुशपवित्राणि वा। 'पूर्वाह्णः' पूर्व्वमेव व्याख्यातः। 'पवित्रं' पावनं शुच्याचारतादि। यच्च पूर्वोक्तं वास्तुसम्पादनादि हव्यशब्देन दैविकं कर्म तत् सम्बन्धिब्राह्मणभोजनादि चोपलक्ष्यते।

महाभारते।

श्राद्धस्य ब्राह्मणः कालः पात्रं दधि घृतं पयः।
सोमक्षयश्च मासश्च तदारण्यं युधिष्ठिर॥

श्राद्धस्येत्यत्रैताः सम्पद इति पूरणीयं।

आह पराशरः।

कालः पात्रं तथा देशो द्रव्यं कर्त्ता पितामहः।
निष्पत्तिकारणान्याहुः कर्म्मणोऽस्य विपश्चितः॥

सत्यव्रतः।

पितृप्रीतिनिमित्तानि द्रव्यं पात्रं सुतो विधिः।
प्रधानपात्रमेतेषां पात्रसिद्धौ यतेदतः॥

ब्रह्मपुराणे।

उपमूलं सकृल्लूनान् कुशांस्तत्रोपकल्पयेत्।
यवांस्तिलान् व्रीहीः कांस्यं आपः शुद्धैः समाहृताः॥

पार्ण-राजत-ताम्राणि पात्राणि स्युः समिन्मधु ।
पुष्प-धूप-सुगन्धादि चौमसूत्रञ्च मेचणं ॥

'तत्र' श्राद्धदेश इत्यर्थः। 'वृषी' व्रतियोग्यानि कुशादिनिर्मितान्यासनानि। 'कांस्यं' कंसमयं अग्नौकरणाद्यर्थं भाजनं 'शुद्धैः' श्राद्धर्द्भिः,'समाहृताः' इत्यपां विशेषणं। अनेन च निषिद्धानामपामुपकल्पननिषेधः सूच्यते। 'पार्ण-राजत-ताम्राणि' पर्ण-रजत-ताम्रनिर्मितानि।यथासामर्थ्यञ्चैतान्युपकल्पनीयानि।'चौमसूत्रं' दुकूलसूत्रं,'मेचणं' यज्ञियदारुमयी दर्वी, वृषीणां भोजनभाजनानाञ्चोपकल्पनं प्रतिब्राह्मणं कर्त्तव्यं। सुगन्धादीत्यत्रादिग्रहणादक्षत-दीपाच्छादनादिकं गृह्यते। ब्रह्माण्डपुराणे।

यतिस्त्रिदण्डी करुणा राजतं पात्रमेव च ।
दौहित्रः कुतपः कालश्छागः कृष्णाजिनं तथा ॥
गौराः कृष्णास्तथारण्यास्तथैव त्रिविधास्तिलाः ।
पितॄणां तृप्तये सृष्टा दशैते ब्रह्मणा स्वयं ॥

अत्र त्रिदण्डीति यतेर्विशेषणं राजतमिति पात्रस्य, कुतप इति कालस्य। गौरास्तिलाः कृष्णास्तिलाः आरण्यास्तिला इति गुणानुरूपेण त्रयः पदार्थाः, एवञ्च दशसंख्या घटते ।
आह देवलः।

प्रधानञ्च पवित्रञ्च शौचमेवाष्टकाविधौ।
पितरः शौचकामा हि निःस्पृहा धौतकल्मषाः ॥
दर्भास्तिला गजच्छाया दौहित्रो मधुसर्पिषी।
कुतपोनीलषाण्डश्च पवित्राण्याह पैतृके ॥

'अष्टकाविधौ' श्राद्धविधौ। अष्टकाविधिशब्दः पित्र्यकर्म्मोपलक्षणार्थं मिति हरिहरः। 'नीलषाण्डः' नीलवृषः।

पैठीनसिः।

तिला दौहित्रकुतपा इति पवित्राणि श्राद्धे सत्यञ्चाक्रोधञ्च शौचं चाचारञ्च प्रशंसन्तीति।

विष्णुः।

कुतप-कृष्णाजिन-तिल-सिद्धार्थाक्षतानि पात्राणि रक्षोघ्नानि वा दद्यात्।

आह मनुः।

त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरां॥

पद्मपुराणे।

पितृणामम्बरस्थानां दक्षिणा दिक् प्रशस्यते।
प्राचीनावीतमुदकं तिलाः सव्याङ्गमेव च॥
दत्तं स्वधां पुरोधाय पितॄन् प्रीणाति सर्व्वदा।
यव-नीवार-मुद्गेक्षु-शुक्लपुष्प-घृतानि च।
वल्लभानि प्रशस्तानि पितृणामिह सर्व्वदा॥

मत्स्यपुराणे।

प्राचीनावीतमुदकं तिलाः सव्याङ्गमेव च।
यवनीवारमुद्गाश्च शुक्लपुष्पघृतानि च।
वल्लभानि प्रशस्तानि पितृणामिह सर्व्वदा॥

कूर्म्मपुराणे।

स्थलोदुम्बर-वस्त्राणि रजतं खड्गमेव च ।
श्राद्धे महापवित्राणि फलानि समिधस्तथा ॥

'स्थलोदुम्बरः' स्थलोदुम्बरमयानि पात्राणि ॥

अत्र श्राद्धे पवित्रतया पितृवल्लभतया चोक्तानि वस्तूनि श्राद्धात् पूर्व्वं श्राद्धदेशे सम्पादनीयानि ।

तत्र चैषां समाहरणविधिः मात्स्य-पाद्मयोः ।

उदपात्रञ्च कांस्यञ्च मेचणञ्च समित्कुशं ।
तिलाः पात्राणि सद्वासोगन्ध-धूप-विलेपनं ।
आहरेदपसव्येन सर्व्वं दक्षिणतः शनैः ॥

'अपसव्येन' प्राचीनावीतेन अप्रादक्षिण्येन वा । अत्रोदपात्रादि-ग्रहणमन्येषामपि पुष्पादीनां श्राद्धोपयोगिनामुपलक्षणार्थं ।

श्राद्धसम्भारान् प्रकृत्य ब्रह्माण्ड-भविष्यपुराणयोः ।

उत्तरेणाहरेद्वेद्या दक्षिणेन विसर्जयेत् ।

'वेदिः' श्राद्धभूमिः । श्राद्धदेशात् देशान्तरं प्रति नयनं 'विसर्जनं' ।

इति श्राद्धसम्पादनीयोद्देशाः ।

अथ तेषां श्राद्धसम्पादनीयेषु केषाञ्चित् स्वरूपसम्पादनीयेषु केषाञ्चित् स्वरूपप्रशंसाविनियोगाः कथ्यन्ते ।

तत्र प्रभासखण्डे ।

ब्राह्मणाः कम्बलो गावो रूप्याग्न्यतिथयस्तथा ।
तिला दर्भाश्च कालश्च नवैते कुतपाः स्मृताः ॥

पैठीनसिना तु कम्बले विशेषः कुतपशब्दनिर्वचनं चोक्तं ।

मध्याह्नः खड्गपात्रञ्च तथा नेपालकम्बलः ।

रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥
पापं कुत्सितमित्याहुस्तस्य सन्तापकारिणः ।
अष्टावेते यतस्तस्मात् कुतपा इति विश्रुताः ॥

नेपालदेशप्रभवकम्बलः 'नेपालकम्बलः'। हरिहरेण तु पार्वतीयाजलोमसूत्रैर्निर्मितः कम्बलाकारः पट उदीच्येषु प्रसिद्ध इत्येवं व्याख्यातः।

शातातपः ।

दिवसस्याष्टमे भागे मन्दीभवति भास्करः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयं ॥

पैठीनसिः !

कुतोऽपि श्राद्धवेलायां श्रोत्रियो यदि दृश्यते ।
श्राद्धं पुनाति वै यस्मात् कुतपस्तेन संज्ञितः ॥

वृद्धशातातपः ।

दुहित्रं खड्गशृङ्गन्तु ललाटे यत्तु दृश्यते ।
तस्य शृङ्गस्य यत् पात्रं दौहित्रमिति कीर्त्तितं ॥
क्षीणेन्दपः पिवेद् या गौस्तत्क्षीराद् यत् घृतं भवेत्।
तद्दौहित्रमिति प्रोक्तं दैवे पित्र्ये च पूजितं ॥

क्षीणेन्दावमावास्यायां या गौर्या अपः पिवेत् तस्या गोस्तत्परिणामजन्यात् क्षीरात् यद् घृतं जायते तद्दौहित्रशब्देनोच्यत इत्यर्थः । अचाप इत्यौषधीनाममुपलक्षणार्थं, अमावास्यायां ह्योषधीष्वप्सु च सोमः प्रविशति। "स इहापश्चौषधीश्च प्रविशतीतिश्रुतेः ।

अमावास्याव्यतिरेकेणापि गोविशेषप्रभवस्य घृतस्य दौहित्रत्वमुक्तं षट्त्रिंशन्मते ।

अपत्यं दुहितुश्चैव खाङ्गं पात्रं तथैव च ।
धृतञ्च कपिलाया गोर्दौहित्रमिति कीर्त्तितं ॥

उशनाः ।

कुशा दर्भाः समाख्याताः कुतपाः वृषयस्तथा ।
दुहितुश्चैव ये पुत्रा दौहित्रास्ते प्रकीर्त्तिताः ॥

कुशाख्या दर्भाः, कुतपशब्दवाच्याश्च पदार्थाः, वृषयाः, दुहितुः पुत्रास्त्वेते दौहित्राः ।

आह यमः ।

यत्नेन भोजयेच्छ्राद्धे दौहित्रं व्रतिनं शिशुं ।
दत्त्वासनन्तु कुतपं तिलैरन्ववकीर्य्य च ॥

शिशुत्वेन विद्याद्यतिशयानाधारभूतमपि व्रतस्थमुपनीतं दुहितुः पुत्रं 'यत्नेन' आदरविशेषेण, भोजयेत् । 'कुतपं' प्रागुक्तं कम्बलविशेषं तस्यासनन्दद्यात् । न चास्यासनस्य तिलानां वा दौहित्रेणैव सम्बन्ध इति मन्तव्यं । यतोऽमुमेव श्लोकं पठित्वा एतामेव शङ्कां निवर्त्तयितुं "त्रीणि श्राद्धे पवित्राणि दौहित्रं कुतपस्तिलाः" इत्याद्यन्यतरश्लोके सामान्येनैव कुतपादेः श्राद्धसम्बन्धो मनुनोक्तः ।

विष्णुः । तिलैश्च सर्षपैर्वापि यातुधानान् विसर्जयेत् ।
परितो विकीर्णैरिति शेषः ।

यमः ।

रक्षन्ति दर्भा असुरांस्तिला रक्षन्ति राक्षसान् ।
वेदविद्रक्षति लक्ष्मं यतयेद्दत्तमक्षयम् ॥

हारीतः ।

तिला रक्षन्ति दैतेयान् दर्भा रक्षन्ति राक्षसान् ।

रक्षन्ति श्रोत्रियाः पङ्क्तिं सर्व्वं रक्षति चातिथिः ॥

प्रभासखण्डे ।

विष्णोर्द्देहसमुद्भूताः कुशाः कृष्णतिलास्तथा ।

श्राद्धस्य रक्षणार्थाय एतत् प्राहुर्दिवौकसः ॥

हारीतः ।

दर्भैरद्भिस्तिलैर्द्दत्तं तूष्णीमप्याप्नुते दिवं ।

विधिना चानुपूर्वेण अक्षयं परिकल्पते ॥

काञ्चनादिषु दर्भाद्यैर्मन्त्रवत्प्रतिपादिताः ।

पितॄणामक्षया यान्त्यमृता भूत्वा महोर्म्मिभिः ॥

ब्रह्मपुराणे ।

दर्भैर्मन्त्रैस्तिलैर्हैम्ना रजतेन विना जलं ।

दत्तं हरन्ति रक्षांसि तस्माद्दद्यान्न केवलं ॥

दर्भादिभि र्जलेन च विना दत्तं तद्रक्षांसि हरन्तीत्यर्थः ।

वायुपुराणे ।

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव च ।

रक्षोघ्नं ब्रह्मवर्चस्यं पशून् पुत्त्रांश्च दापयेत् ॥

शेषाणान्तु स्वरूप-प्रशंसा-विनियोगास्तत्तत्प्रकरण एव द्रष्टव्याः ।

इति श्राद्धसम्पादनीयानां स्वरूप-प्रशंसा-विनियोगाः ।

इति श्राद्धसम्पदः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे पूर्व्वाह्णकृत्यं नाम द्वादशोऽध्यायः ॥ ० ॥

---

# अथ त्रयोदशोऽध्यायः ।

निःशेषसामन्तकिरीटकूट-
रत्नाङ्कुरोपासितपादपीठः ।
हेमाद्रिसूरिः सगुणं तनोति
श्राद्धेऽपराह्णाश्रितकृत्यजातं ॥

## अथापराह्णकृत्यं ।

तत्र ब्राह्मणस्नानादिश्राद्धसिद्धिवाचनान्तं इह ब्राह्मणेभ्यः स्नानोपकरणप्रेषणं तस्य च दृष्टार्थत्वेनार्थात् स्नानकरणं चाभिधायोक्तं । प्रभासखण्डे ।

ततोऽपराह्णसमये श्राद्धकर्त्ता समाहितः ।
स्वयं समाह्वयेद्विप्रान् सवर्णैर्वा समाप्लुतान् ॥

'समाप्लुतान्' स्नातान् ।

वाराह-विष्णुपुराणयोः ।

पादशौचादिना गेहमागतानर्च्चयेद्द्विजान् ।

'अर्च्चयेत्' सत्कुर्य्यात् । आदिशब्दादाचमनीयदानेनापि ।

तथा च देवलस्मृति-कूर्मपुराणयोः ।

ततः स्नानान्निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः ।
पाद्यमाचमनीयञ्च सम्प्रयच्छेद्यथाक्रमं ॥

'स्नानान्निवृत्तेभ्य इति स्नानसमाप्त्युत्तरकालमाह्वानेन यजमान-गृहमागतेभ्यः, 'प्रत्युत्थाय' अञ्जलिमाबध्य स्वागतं भवतामिति प्रश्नं कृत्वा रथ्याप्रसर्पणनिबन्धनाऽप्रायत्यनिवृत्तये पादप्रक्षालनार्थमाचमनार्थं चोदकं प्रयच्छेत् । पादप्रक्षालनं कृत्वाचमनं दद्यादित्यर्थः ।

अत्राह्वानाद् गृहमागतेभ्यः पृथक् पृथक् स्वागतप्रश्नकरणमाह मार्कण्डेयः ।

स्नातः स्नातान् समाहूतान् स्वागतेनार्चयेत् पृथगिति ।

'स्वागतेन' भवतां स्वागतमिति प्रश्नवाक्येन, 'अर्चयेत्' सम्मानयेत् । 'पृथक्' एकैकं ब्राह्मणं, प्रश्नस्य चोत्तरापेक्षित्वादेवंविधे च विषये प्रतिवचनस्य साधुकर्त्तव्यत्वस्मरणात् सुस्वागतमस्माकमिति प्रतिवचनं प्रत्येकं ते ब्रूयुः ।

स्वागतप्रश्नश्चायं प्रयतत्वादिविशेषणवता कर्त्तव्य इत्याहतुः शङ्खलिखितौ ।

प्रयतोऽपराह्णे शुचिः शुक्लवासाः दर्भेषु तिष्ठन् स्वागतमिति ब्रूयादिति ।

प्रयतः शुचिरिति पदद्वयं वाह्याभ्यन्तररूपद्विविधशुद्धियुक्तो यथास्यादित्येवमर्थं ।

अत्र यादृग्विधदेशावस्थितानां स्वागतप्रश्नः कार्य्यस्तथाविधदेशमुपदिशन् स्वागतादेरपराह्णकृत्यत्वं स्फुटीकरोति धर्मः ।

स्थितान् देशे विविक्ते तु प्रकीर्णतिलबर्हिषि ।
अपराह्णे समभ्यर्च्य स्वागतेनागतांस्तु तान् ॥

'तान्' स्नातानागतान् विप्रान् यजमानगृहमागतान् अपराह्णे

द्विधाविभक्तस्याह्नो द्वितीये भागे त्रिधाविभक्तस्य वा तृतीये भागे पञ्चधाविभक्तस्य वा चतुर्थे सार्द्धयामद्वयादुपरितने यामार्द्धे वा स्वागतेन यथोक्तेन समभ्यर्च्य आसनेषूपवेशयेदिति वक्ष्यमाणेन सम्बन्धः।
मार्कण्डेयपुराणे ब्रह्माण्डपुराणे च।

सम्पूज्य स्वागतेनैतानभ्युपेतान् गृहे द्विजान्।
पवित्रपाणिराचान्तानासनेषूपवेशयेत्॥

अस्मिन्नवसरे पूर्वेद्युर्निवेदनमित्याद्यापस्तम्बवचनं प्रमाणयता पूर्वदिननिमन्त्रितानामपि ब्राह्मणानां पूर्ववद्द्वितीयं निमन्त्रणमाचरणीयं। "सुखोपविष्टांश्च ब्राह्मणान् श्राद्धकाले समाहूतानलङ्कुर्वीतेति यमवचनाद्गन्धमाल्याञ्जन-धूपैरलङ्कुर्य्यात्।
उक्तञ्च देवलस्मृति-कूर्मपुराणयोः।

यथोपविष्टान् सर्वांस्तानलङ्कुर्य्याद्विभूषणैः।
स्रग्दामभिः शिरोवेष्टैर्धूप-दीपानुलेपनैः॥

निगमः।

श्वः स्वनापिताभ्यङ्गोद्वर्त्तन-स्नान-दन्तधावनादिभिरभ्यर्च्य स्नातान् पाद्याचमनीय-सदर्भासनानुलेपन-धूप-सुमनोभिरभ्यर्च्य पितॄनावाहयिष्य इति पृच्छतीति।

'श्वः' निमन्त्रणादुत्तरदिने। अभ्यङ्गग्रहणं नखादिकल्पनोपलक्षणार्थं। तच्च 'स्वनापितेन' मूल्यादि प्रदाय यजमानोपकल्पितेन नापितेन। एतच्च प्रत्युत्थानात्प्रभृति निमन्त्रणं वर्जमलङ्करणान्तं मनुष्यसत्कारादिरूपत्वान्मानुषमेव न पित्र्यं अतो यथालोकं यज्ञोपवीतादिधर्मवतैव कार्य्यं न पित्र्यधर्मवता।

यत्तु वक्ष्यमाणमण्डल-तदर्चन-पादप्रक्षालनादितत्परिभाषाप्रकरणोक्तेन वैश्वदेविकेन पैतृकेण वा धर्मेण युक्तं कर्त्तव्यं, तत्र तावत् मण्डलकरणं आह बौधायनः ।

उपलिप्ते समे स्थाने शुचौ शुक्लसमन्विते ।
चतुरस्रन्त्रिकोणन्तु वर्त्तुलञ्चार्द्धचन्द्रकं ।
कर्त्तव्यमानुपूर्व्वेण ब्राह्मणादिषु मण्डलं ॥

'ब्राह्मणादिषु' यजमानेषु । आनुपूर्व्वेणेत्यस्यायमर्थः । ब्राह्मणे यजमाने चतुरस्रं, क्षत्रिये त्रिकोणं, वैश्ये वर्तुलं, शूद्रेऽर्द्धचन्द्राकारमिति ।

अत्र शूद्रं प्रति विशेष उक्तः सौरपुराणे ।

चतुरस्रं ब्राह्मणस्य क्षत्रियस्य त्रिकोणकं ।
वर्त्तुलञ्चैव वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतं ॥

अत्र विशेषमाह शम्भुः ।

सम्मार्जितोपलिप्ते तु द्वारि कुर्व्वीत मण्डले ।
उदक्प्लवमुदीच्यं स्याद्दक्षिणं स्याद्दक्षिणाप्लवं ॥

द्वारीति गृहद्वाराभिमुखस्थिते अङ्गणप्रदेशे । मण्डले इति द्विवचनात् द्वे, तत्रैकमुत्तरतः, तस्य दक्षिणतोऽपरं । तत्र यदुत्तरतस्तदुदक्प्लवं । उदीचीप्रवणं उदीच्याभिमुख्येन क्रमनिम्नमित्यर्थः । एवमितरद्दक्षिणाप्लवं । तत्रादावुत्तरं ॐ वैश्वदेविकमण्डलं करोमीति वैश्वदेविकधर्म्मेण कुर्य्यात् । तदनन्तरं दक्षिणं ॐ पित्र्यमण्डलं करोमीति पित्र्यधर्म्मेण कुर्य्यात् ।

एते च गोमूत्र-गोमयाभ्यां कर्त्तव्ये, तदुक्तं मात्स्यपाद्मयोः पुराणयोः ।

एवमासाद्य तत्सर्वमवनस्याग्रतो भुवि ।
गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले ॥

'एवं' "आहारदपसव्येन सर्व्वं दक्षिणतः" इति पूर्वोक्तेन प्रकारेण, 'सर्व्वं' श्राद्धोपकरणं, 'आसाद्य' श्राद्धप्रदेशे स्थापयित्वा, 'अनुलिप्तायामग्रतोभुवि' गोमयोपलेपनादिसंस्कृते गृहद्वारसम्मुखावस्थितेऽङ्गणप्रदेशे, गोमयेन गोमूत्रेण च मण्डले कुर्य्यात् ।

अत्र गोमये विशेषमाह जाबालिः ।

अमेध्याशनशून्यानां नीरुजानां तथा गवां ।
अव्यङ्गानाञ्च सद्यस्कं शुचि गोमयमाहरेत् ॥

गोमयविशेषे निषेधमाह भृगुः ।

अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः ।
आर्त्ताया नवसूताया न गोर्गोमयमाहरेत् ॥

मण्डलपरिमाणमाह लौगाक्षिः ।

हस्तद्वयमितं कार्य्यं वैश्वदेविकमण्डलं ।
तद्दक्षिणे चतुर्हस्तं पितॄणामङ्घ्रिशोधने ॥

एतयोर्मण्डलयोः क्रमेणाक्षतकुशादिभिरर्च्चनमाह व्याघ्रपात् ।

दक्षिणप्रवणे कार्य्यं मण्डलद्वयमेव च ।
उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत् कुशान् ।
दक्षिणे दक्षिणाग्रांश्च सतिलान् विन्यसेद्द्विजः ॥

अक्षतादिग्रहणं गन्धपुष्पोपलक्षणार्थं वक्ष्यमाणमत्स्यपुराणवचनात् । अत्रोदीचीस्थितत्वादिना वैश्वदेविकधर्मेण उत्तरस्य मण्डलस्य वैश्वदेविकत्वं ज्ञायते । दक्षिणास्थितत्वादिना पैतृकधर्मेण

दक्षिणस्य पितृत्वं। अतश्च गन्ध-पुष्प-यवैराजवविमिश्रैः प्रागग्रैः कुशैश्च प्राङ्मुख उदङ्मुखो वा यज्ञोपवीती दक्षिणं जान्वाच्य ॐवैश्वदेविक-मण्डलमर्चयामि इत्युत्तरतः स्थितं मण्डलमर्च्चयेत्। एवं गन्ध-पुष्पतिलैर्द्विगुणभुग्नैर्दक्षिणाग्रैः कुशैश्च दक्षिणामुखः प्राचीनावीती सव्यं जान्वाच्य ॐपित्र्यमण्डलमर्चयामीति दक्षिणतः स्थितं मण्डलमर्चयेत्। ब्राह्मणाह्वानात्प्रभृति मण्डलार्चनान्तं किञ्चिद्विशेषसहितमुक्तं नागरखण्डे।

प्रणम्यामन्त्रिता ये च श्राद्धार्थं ब्राह्मणोत्तमाः।
आनीय कुतपे काले तान् सर्वान् प्रार्थयेत्ततः॥
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते॥
अपसव्यं ततः कृत्वा पितृंस्तान् प्रार्थयेत्ततः।
ये मया मन्त्रिताः पूर्वं पितरो मातृपक्षजाः।
आश्रित्य पितृकार्य्येषु सावधाना भवन्तु ते॥
एवमभ्यर्च्य तान् सर्वांस्ततः कृत्वा प्रदक्षिणं।
जानुनी भूतले न्यस्य ततश्चार्घ्यं प्रदापयेत्।
मन्त्रेणानेन राजेन्द्र सपुष्पाक्षतचन्दनैः।
अर्घ्यमेनं प्रगृह्णन्तु मया दत्तं द्विजोत्तमाः।
पादप्रक्षालनार्थाय प्रकुर्वन्तु मम प्रियं॥
एवमुक्त्वा महीपृष्ठे अनुलिप्ते ततःपरम्।
साक्षतान् प्रक्षिपेद्दर्भान् विश्वेदेवान् प्रकीर्त्तयेत्॥
अपसव्यं ततः कृत्वा दर्भांस्तिलसमन्वितान्।
द्विगुणान् प्रक्षिपेत्तत्र पितृनुद्दिश्य चात्मनः॥

एवमभ्यर्चितयोर्मण्डलयोर्ब्राह्मणपादप्रक्षालनं कर्त्तव्यमित्युक्तं सौर-पुराणे।

प्रक्षालयेत्ततः पादावर्चिते मण्डले शुभे।

मात्स्य-पद्मपुराणयोरपि।

अक्षताभिः सपुष्पाभिस्तदभ्यर्च्यापसव्यवत्।
विप्राणां क्षालयेत्पादानभिवन्द्य पुनः पुनः॥

अक्षताभिः सपुष्पाभिरिति देवमण्डलार्चनं देवधर्मयुक्तत्वात्। एतच्च तिलैः सपुष्पैरित्यादिकस्य पित्र्यमण्डलार्चनस्योपलक्षणार्थं। अपसव्यवद्विप्राणां क्षालयेत्पादाविति पित्र्यधर्मकत्वात् पित्र्यविप्रपाद-प्रक्षालनं कर्त्तव्यं। तच्च पूर्व्वभाविनो वैश्वदेविकपादप्रक्षालनस्योपलक्षण। तत आदावुत्तरतोऽवस्थिते मण्डले वैश्वदेविकविप्रपादप्रक्षालनं कर्त्तव्यं।

तथा च ब्रह्मनिरुक्ते।

पाद्यञ्चैव तथार्घ्यञ्च दैव आदौ प्रदापयेदिति।

वाराहपुराणेऽपि।

स्वागतं ह्यर्घ्य-पाद्यञ्च दद्याद्दर्भासनं द्विजः।
वैश्वदेवकृते पूर्वं तर्पयित्वा हुताशने॥

ब्रह्माण्डपुराणे।

इदं वः पाद्यमर्घ्यञ्च चतुर्थ्यन्तं निवेदयेत्।

पादप्रक्षालनमन्त्रो ब्रह्मनिरुक्ते।

शन्नोदेवीतिमन्त्रेण पाद्यञ्चैव प्रदापयेदिति।

भविष्यत्पुराणेऽपि।

प्रक्षालयेद्द्विजपादान् शन्नोदेवीरिति त्वृचा ।
पादप्रक्षालनं कुर्य्यात् स्वयमेव विनीतवत् ॥

सत्यां शक्तौ स्वयमेव असत्यान्तु कर्चन्तरेणापीति ।

अथ पादप्रक्षालनप्रयोगः । यज्ञोपवीति दक्षिणं जान्वाच्योदङ्मुखः शन्नोदेवीरभिष्टये आपोभवन्तु पीतये । शंयोरभिस्रवन्तु न इति मन्त्रमुच्चार्य्य ॐ पुरूरव आर्द्रवःसंज्ञका विश्वेदेवाः इदं वः पाद्यं स्वाहा नमः इति प्रयुज्यैकैकस्यैव ब्राह्मणस्योत्तरमण्डलावस्थापितासनोपविष्टस्य मण्डलमाक्रम्य तिष्ठतो वा स्वाचारानुसारेण गन्ध-पुष्पाक्षत-कुशजलोपेतमञ्जलिं देवतीर्थेन पादयोर्निनीयान्येन जलेन पादौ प्रक्षालयेत् । अत्र चकारेण पादप्रक्षालनानन्तरं अर्चनं अर्घ्यदानं सूच्यते । अतः प्रत्येकं गन्ध-पुष्पाक्षतैर्वक्ष्यमाणप्रकारेण पादादि मूर्द्धान्तं सहस्रशीर्षेत्यभ्यर्च्य गन्ध-पुष्पाक्षत-कुशादिप्रशस्तद्रव्यमिश्रजलपूर्णेन यथालाभं सुवर्णादिपात्रेण पाद्यवत्प्रयोगवाक्यमुच्चार्य्यार्घ्यं दत्त्वा "मण्डलादुत्तरे देशे दद्यादाचमनीयकमिति लौगाक्षिस्मरणान्मण्डलादुत्तरत उपविष्टानामाचमनीयं दद्यात् । ब्राह्मणैश्च तथाचान्तव्यं यथा तदाचमनोदकं पादप्रक्षालनोदकेन न संबध्यते । तत्सङ्गमे नारदीयपुराणे दोषाभिधानात् ।

यत्राचमनवारीणि पादप्रक्षालनोदकैः ।
सङ्गच्छन्ते बुधाः श्राद्धमासुरं तत् प्रचक्षत इति ॥

अत्राहतुः शङ्ख-लिखितौ ।

पाद्यार्घ्याचमनीयोदकानि दत्त्वा ब्राह्मणानुपसंगृह्योपवेशयेदासनमन्वालभ्येति ।

'आचमनीयोदकं' आचमनार्थमुदकं। 'उपसंगृह्य' दक्षिणकरेण गृहीत्वा, 'अन्वालभ्य' वामहस्तेन श्राद्धदेशावस्थापितमासनमुपस्पृश्य, तत्रोपवेशयेत्। अथ वैश्वदेविकब्राह्मणानामाचमनीयदानानन्तरं दक्षिणमण्डलावस्थापितासनेषु पश्चिमादिप्रागपवर्गं पित्र्यादिक्रमेणो-दङ्मुखोपविष्टानां दक्षिणामुखः प्राचीनावीत्यन्वाचितसव्यजानुः पित्र्यब्राह्मणानां पाद्यादिदानमारभेत। देवताप्रकरणोक्तदिव्य-मानुष-पितृभेददृष्टिन्यायात् द्विजः सोमपाख्यपितृरूपेण, क्षत्रियो हविर्भुदाख्यपितृरूपेण, वैश्यस्त्वाज्यपाख्यपितृरूपेण, शूद्रस्तु सुकाल्या-ख्यपितृरूपेण सर्वान् पितॄन् ध्यायन् कीर्त्तयंश्च ब्राह्मणादिर्य्यः कोऽपि वा श्राद्धकर्त्ता पितृ-पितामह-प्रपितामहान् क्रमाद्वसु-रुद्रादित्यरूपेण ब्रह्म-विष्णु-महेश्वररूपेण वा प्रद्युम्न-सङ्कर्षण-वासुदेवरूपेण वा मास-र्तुसंवत्सररूपेण वा ध्यायन् कीर्त्तयंश्च पाद्यार्चनार्घ्य-सङ्कल्प-दर्भा-सनदानादीन् सर्व्वान् पैतृकान् पदार्थान् कुर्य्यात्। तत्र च "नाम-गोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः" इतिवचनात् "सम्बन्ध-नाम-गोत्राणि पितॄणां प्रतिपादयेत्" इतिवचनाच्च प्रत्येकं पित्रादीन् गोत्र-सम्बन्ध-नामभिः संबुध्य तैः सङ्कीर्त्त्य यथोक्तविभागेन संबुद्धान्तैरेव आज्यपादिनामभिः कीर्त्तयन् गन्ध-पुष्प-तिल-कुश-जलपूर्णमञ्जलिं पित्र्यस्यैकैकस्य ब्राह्मणस्य पादयोर्निनीयाभिवन्द्यान्येन जलेन पादौ प्रक्षालयेत्। तत्र प्रयोगवाक्यं। शन्नोदेवीरित्याद्युच्चार्य्य ॐ अमुक-गोत्रा अस्मत्पितरोऽमुकशर्माणः सपत्नीका वसुरूपा इदं वः पाद्यं स्वधा नम इति पितृस्थाने, शन्नोदेवीरित्युच्चार्य्य ॐ अमुकगोत्रा अस्मत्-पितामहा अमुकशर्म्माणः सपत्नीकाः रुद्ररूपा इदं वः पाद्यं स्वधा

नम इति पितामहस्थाने, शन्नोदेवीरित्याद्युच्चार्य्य ॐअमुकगोत्रा अस्मत्प्रपितामह्यः अमुकशर्म्माणः सपत्नीकाः आदित्यरूपाः इदं वः पाद्यं स्वधा नम इति प्रपितामहस्थाने समुच्चारयेत्।

अथ यथोक्तप्रकारेण शन्नोदेवीरिति मन्त्रान्ते ॐअमुकगोत्रा अस्मन्मातामहाः अमुकशर्म्माणः सपत्नीका वसुरूपाः इदं वः पाद्यं स्वधा नम इति मातामहस्थाने, शन्नोदेवीरित्यादिमन्त्रमुच्चार्य्य ॐअमुकगोत्रा अस्मत्प्रमातामहाः मातुः पितामहाः इति वोच्चार्य्य अमुकशर्म्माणः सपत्नीकाः रुद्ररूपाः इदं वः पाद्यं स्वधा नम इति प्रमातामहस्थाने, अथ तथैव शन्नोदेवीरित्यादिमन्त्रं पठित्वा ॐअमुकगोत्रा अस्मद्वृद्धप्रमातामहाः मातुः प्रपितामहाः इति वाभिधायामुकशर्म्माणः सपत्नीका आदित्यरूपा इदं वः पाद्यं स्वधा नम इति वृद्धप्रमातामहस्थाने समुच्चारयेत्।

पादप्रक्षालनानन्तरं च गन्ध-पुष्प-तिलैर्वक्ष्यमाणप्रकारेण मूर्द्धादिपादान्तं पितृभ्यः स्वधा पितृभ्य इत्यादिना मन्त्रेण प्रत्येकं क्रमात् पितृवर्गीयब्राह्मणानर्चयेत्। एवमेव नमो वः पितर इत्यादिना मन्त्रेण मातामहवर्गीयान्। तदनन्तरं गन्ध-पुष्प-तिल-कुशादिप्रशस्तद्रव्यमिश्रजलपूर्णेन यथालाभं राजतादिपात्रेण पाद्यवत्प्रयोगवाक्यमुच्चार्य्य पाद्यक्रमेणैवार्घ्यं दत्त्वा वैश्वदेविकमण्डलादुत्तरत उपविष्टानां द्विजानामाचमनीयं दद्यात्। तेऽप्याचमनोदकपादप्रक्षालनोदकान्यसङ्कमयन्त आचमेयुः।

अथ मण्डलार्चन-पादप्रक्षालनाद्याचमनान्तपदार्थोपयुक्तद्रव्यशेषाननतिनिपुणशिष्टसम्प्रदायानुसारात् तत्तन्मण्डलोपरि निक्षिपेत्। ततो

दर्भपाणिर्द्विराचम्येत्यादिवक्ष्यमाणक्रतुवचनाद्यजमानो ब्राह्मणचरण-क्षालनोदकसंसर्गमकुर्वन् स्वपादप्रक्षालनपूर्वकं द्विराचम्य ब्राह्मणैः सह श्राद्धभूमिमागत्य श्राद्धसिद्धिरस्त्विति भवन्तोब्रुवन्त्विति ब्राह्मणान् प्रत्युक्त्वा तैश्चास्तु श्राद्धसिद्धिरित्युक्ते तदुपवेशनार्थमासनान्युपकल्पयेत्। तथा च यमः।

ततः सिद्धिमिति प्रोच्य कल्पितेष्वासनेषु च।

आध्वमित्यादिनोत्तरेण सम्बन्धः।

इति ब्राह्मणाह्वानादिश्राद्धसिद्धिवाचनान्तं।

अथ ब्राह्मणोपवेशनार्थमासनोपकल्पनं।

आश्वलायनः(?)।

तत्रासनानि देयानि तिलांश्चैव कुशैः सह।
पृथक् पृथगासनेषु तिलतैलेन दीपिकाः॥

तत्र श्राद्धदेशे आसनानि देयानि कुशैः सहितास्तिलाश्च देयाः श्राद्धभूमौ प्रक्षेपणीया इत्यर्थः। पृथक् पृथगेकैकस्यासनस्य समीपे एकैका दीपिकेत्येवमेताः देयाः, अयञ्च देयानीत्यस्य विपरिणतस्यानु-षङ्गः। अथवा तेष्वासनेषु पृथक् पृथक् कुशैः सह तिला देया इति संबन्धः। तिलतैलग्रहणं घृतादिप्रशस्तस्नेहोपलक्षणार्थं। वसाद्यप्रशस्त-स्नेहनिवृत्त्यर्थं च। आसनानि च प्रशस्ततरत्वात् सति सम्भवे कुतपा-ख्यकम्बलमयानि वृषीरूपाणि वा देयानि। प्रशस्ततरत्वं च तेषां श्राद्धसम्पत्प्रकरणेऽभिहितं, तदलाभे प्रशस्तश्वेतकम्बल-श्रीपर्ण्यादिदारु-मयाणि तदलाभेऽप्यनिषिद्धदारुमयाणि।

आसनविशेषे निषेधमाह गार्ग्यः।

गोशकृन्मृन्मयं भिन्नमाक्षं पालाशमेव च ।
लोहबद्धं सदैवार्कं वर्जयेदासनं बुधः ॥

गोशकृन्मयं मृन्मयञ्च, 'भिन्नं' स्फुटितं । यत्किञ्चित्प्रकृतिकस्यायं निषेधः । 'आक्षं' विभीतकमयं । 'पालाशं' किंशुकवृक्षमयं । 'लोहबद्धं' कालायसपट्टिकाकीलकादियुक्तं । अनेन च सर्वायसस्य सुतरां निषेधः सूचितः । लोहशब्दश्चाप्रशस्तसीसकादिधातूपलक्षणार्थः । 'आर्कं' रूपिकामयं । सदैववर्जयेदित्यन्वयः ।

कालिकापुराणे ।

उपलिप्ते द्विजान् स्थाने पित्र्यर्थं शुद्धियोजिते ।
कुशोत्तरे तिलास्तीर्णे अभिन्ने लोहवर्जिते ॥
दाता च स्वासने पूते विप्रानावेशयेत्सुधीः ।
कृतासने समाचान्तान् प्रविष्टः पूर्वमेव तु ॥

दैविकपैतृकासनस्थापने प्रकारभेदो देवलस्मृति-कूर्मपुराणयोः ।

ये चात्र विश्वेदेवानां विप्राः पूर्वं निमन्त्रिताः ।
प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि च ॥
दक्षिणामुखयुक्तानि पितॄणामासनानि च ।
दक्षिणाग्रैकदर्भाणि प्रोक्षितानि तिलोदकैः ॥

प्राङ्मुखानि दक्षिणामुखयुक्तानीत्यत्र मुखशब्दो वृषी-पीठादिषु मुखस्थानीयकल्पितावयवाभिप्रायेण, कम्बलादिषु दशादिरूपाग्राभिप्रायेण प्रयुक्त इति वेदितव्यं, 'द्विदर्भोपहितानि' प्रत्येकमुपरिस्थापितपूर्वाग्रदर्भशिखायुगलानि, 'दक्षिणाग्रैकदर्भाणि' उपरिस्थापितदक्षिणाग्रैकैकदर्भशिखानि ।

महाभारतेऽपि वृषीं प्रकृत्य श्राद्धकर्त्तारं निमिं प्रत्याह ।

कुरु चैनां पूर्वशीर्षां भव चोदङ्मुखस्तथा ।

त्वं दैवे इति शेषः ।

तथा दानधर्मेषु श्राद्धकल्पे ।

अमावास्यां महाप्राज्ञोविप्रानानाय्यपूजितान् ।
दक्षिणावृत्तिकाः सर्वा वृषीः स्वयमथाकरोत् ॥
दक्षिणाग्रास्ततोदर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ।

'आनाय्य' आह्वानेन स्वगृहं प्रवेश्य। 'पूजितान्' पूजार्हान्, अञ्जनाभ्यञ्जनादिभिरलङ्कृतान्वा। दक्षिणावृत्तीनि शिरांसि यासान्ता दक्षिणावृत्तिकाः दक्षिणस्यान्दिशि कृतशीर्षा इत्यर्थः, दक्षिणबाहु-भागे कृतशीर्षा इति केचित्। विष्टरेषु वृष्याद्यासनोपरि द्विजपा-दयोश्च स्थापनार्थं दक्षिणाग्रा दर्भा निवेशिताः। अतोलिङ्गदर्शना-दन्येनाप्येवं कर्त्तव्यमिति गम्यते। तानि चासनानि तथा विविक्तानि स्थापनीयानि यथा तत्रोपविष्टानां ब्राह्मणानां परस्परस्पर्शो न स्यात् ।

अतएवाह क्रतुः ।

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।
परिश्रिते शुचौ देशे गोमयेनोपलेपिते ॥
दक्षिणाप्रवणे सम्यगाचान्तान् प्रयताञ्छुचीन् ।
आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ॥

'लघुवासाः' प्रक्षालनेन मलादिकृतगौरवरहितवस्त्रः सूक्ष्मवस्त्रो

वा। 'परिश्रिते' परितः पटादिनाऽऽवरणद्रव्येणावृते। 'विविक्तेषु' उपविष्टानामन्योन्यस्पर्शपरिहारक्षमान्तरालवत्सु। 'शेषं' गतार्थं।

अत्र हेतुमाह गार्ग्यः।

स्पर्शे स्पर्शे भवेत्पापमेकपङ्क्तिनियोगतः।

हीनवृत्तादिपङ्क्तौ तु युक्तं तस्मात् विवेचनं॥

यावत्कालोह्युत्तमवृत्तानां एकपङ्क्त्युपविष्टहीनवृत्तस्पर्शो भवेत् तावत्कालस्तेषामप्रायत्यं। अप्रयतानाञ्च कर्म्मणि व्यवहरतां तेषां प्रत्यवायः। प्रकृतस्य कर्मणो वैगुण्यं चेत्युभयविधपापं स्यात्, अतः कारणाद्विवेचनं कर्त्तव्यं। तच्च हीनवृत्तत्वानिर्द्धारणे सत्यासनानां तन्निर्द्धारणे तु पङ्क्तेरेवेति।

पङ्क्तिभेदसाधनान्याह बृहस्पतिः।

एकपङ्क्त्युपविष्टा ये न स्पृशन्ति परस्परं।

भस्मना कृतमर्यादा न तेषां सङ्करो भवेत्॥

परस्परास्पर्शनमन्तराले भस्मलेखाकरणञ्चेत्युभयमिह पङ्क्तिभेद-साधनत्वेनोपदिष्टं।

बार्हस्पत्यस्मृति-प्रभासखण्डयोः।

अग्निना भस्मना वापि स्तम्बेनाप्युदकेन वा।

द्वारसंक्रमणेनापि पङ्क्तिभेदः प्रकीर्त्तितः।

'स्तम्बं' गुल्मं, स्तम्भेनेति क्वचित्पाठः, द्वारसंक्रमणञ्चेति साधनद्वयं। 'संक्रमणं' मार्गः।

इति ब्राह्मणोपवेशनार्थमासनोपकल्पनं।

अथ ब्राह्मणोपवेशनं।

तत्राहतुर्मनु-बृहस्पती ।

आसनेषु तु क्लृप्तेषु बर्हिष्मत्सु पृथक् पृथक् ।
उपस्पृष्टोदकान् सम्यग् विप्रांस्तानुपवेशयेत् ॥

'क्लृप्तेषु' स्थापितेषु । 'बर्हिष्मत्सु' दर्भान्तरेषु । पृथक् पृथगिति प्रतिब्राह्मणं विविक्ततया च । 'उपस्पृष्टोदकान्' कृताचमनान् ।

वाराह-विष्णुपुराणयोः ।

पवित्रपाणिराचान्तानासनेषूपवेशयेत् ।

अत्र विशेषमाह शाट्यायनिः ।

पाणिपादमुखार्द्रांश्च स्वाचान्ताः सुसमाहिताः ।
तेष्वासनेषु संस्थाप्या विप्रास्तेन क्रमेण तु ॥

'पाणिपादमुखेष्वार्द्राः अप्रशुष्कप्रक्षालनाचमनसंलग्नजलाः' यावन्मुख-पाणि-पादमार्द्रतां न जहाति तावदविलम्बितमुपवेशनीया इत्यर्थः।

तथा च विष्णुः ।

अपराह्णे विप्रान् सुस्नातान् स्वाचान्तान् यथाभूयोविद्यं क्रमेण कुशोत्तरेष्वासनेषूपवेशयेत् ।

'यथाभूयोविद्यं' विद्याबाहुल्यानुसारेण । एतच्च तपोबाहुल्यादीनामुपलक्षणार्थं ।

यत आह सुमन्तुः ।

विद्या-तपोधिकानां वै प्रथमासनमुच्यते ।
एकपङ्क्त्युपविष्टानां समं गन्धादिभोजनं ॥

'प्रथमं' प्रथमस्थाने स्थापितं गुणैश्च श्रेष्ठं । अन्यदन्येषाङ्गन्ध-पुष्पादिकं भोज्यं चान्नं सर्वेषां 'समं' तुल्यं, नोत्कृष्टापकृष्टविभागेन विषमं देयं ।

आश्रमविशेषेणाप्यग्र्यासनार्हत्वमाह यमः ।

यस्य वै यजमानस्य नाग्रे भुङ्क्ते यतिस्तथा ।
अनिष्टमहुतं तस्य हरते रक्षसां गणः ॥
तस्मादग्रासने भोज्यो यजतां संयतो यतिः ।
श्रोत्रियो ब्रह्मचारी वा यज्ञस्तेन न लुप्यते ॥

उक्तक्रमातिक्रमे दोषमाह सुमन्तुः ।

अर्हेषु विद्यमानेषु नानर्हाय भवेद्वरं ।
दुष्कृतं हरते पङ्क्त्या आयुषा च वियुज्यते ॥

'अर्हेषु' योग्येषु, 'अनर्हाय' अयोग्याय, 'वरं' वरिष्ठमासनं न भवेत् । अयोग्यो वरिष्ठमासनं नाध्यासीतेत्यर्थः । यदि पुनरध्यासीत तर्हि पङ्क्त्याः दुष्कृतं 'हरते' प्राप्नोति । 'आयुषा च' जीवितेन, परित्यज्यते । हारीतोऽपि ।

सन्तिष्ठमानेष्वर्हत्सु योऽनर्होऽग्रासनं श्रयेत् ।
गृह्णाति स मलं पङ्क्तेरायुषा च वियुज्यते ॥

'सन्तिष्ठमानेषु' विद्यमानेषु । 'मलं' दुष्कृतं ।

यमः ।

प्रायेण मूर्खः स्मृति-मन्त्रहीनो
योऽग्रासनं गच्छति मुख्यभावात् ।
नान्यद्भयं पश्यति मूढचेताः
देहप्रनाशे नरकं सुघोरं ॥
यो वै न विद्वान्न च ब्रह्मचारी
न चाश्रमस्थो न च मन्त्रपूतः ।

हवींषि चाश्नाति धुरि स्थितस्तु
सोऽश्नाति पङ्क्त्या मलकिल्विषाणि॥

'धुरिस्थितः' अग्रासने स्थितः ।

अर्हणापीहास्यतामित्येवं यजमानाभ्यनुज्ञातेनैवाग्रासने उपवेष्टव्यं नाननुज्ञातेन ।

तथा च पङ्क्तिपावनानन्तरं पैठीनसिः ।

तेषामेकैकः पुनाति पङ्क्तिनियुक्तो मूर्द्धनि सहस्रैरप्युपहतां तस्मान्नानियुक्तोऽग्रासणं गच्छेत् यदि गच्छेत् पङ्क्त्या हरति दुष्कृतं ।

सहस्रैरपि पङ्क्तिदूषकैः उपहतां पाङ्क्तं तेषां पूर्वोक्तानां पङ्क्तिपावनानां मध्ये एकैकोपि यजमाननियुक्तः सन् मूर्द्धन्यग्रिमासने समुपविष्टः पुनाति पावयतीति।

शङ्ख-लिखितौ ।

नानियुक्तोऽग्रासनं गच्छेत् ।

अत्र वैश्वदेविकानामादावुपवेशनं कार्य्यं पित्र्याणान्तु पश्चात् । उच्छिष्टावलिप्तहस्तक्षालनं विसर्जनञ्च वर्जयित्वा सर्वेषां श्राद्धीयपदार्थानां वैश्वदेविकपूर्वकत्वात् ।

तत्राह कात्यायनः ।

दैवपूर्व्वं श्राद्धं पिण्डपितृयज्ञवदुपचारः पित्र्य इति ।

कर्त्तव्य इति शेषः ।

दैवपूर्वकत्वकारणमाहतुः शङ्ख-लिखितौ ।

देवादिश्राद्धमात्मानं च रक्षन्ति पितॄणामग्रे नियुक्ताः पूर्वमुपवेशिताः ।

हारीतोऽपि ।

अमृतं दैवमित्याहुर्मृतं पित्र्यं विधीयते ।
तस्माद्दैवात् प्रवर्त्तन्ते तिष्ठन्ति ह्यमरेषु च ॥

'अमृताः' अमरा देवाः, तत्सम्बन्धित्वात् कर्माप्यमृतं । मृता हि पितरः, तत्सम्बन्धित्वात् कर्मापि मृतं । अतः कारणाद्दैविकात्प्रभृति श्राद्धक्रियाः 'प्रवर्त्तन्ते' प्रारम्भणीयाः । तथा अमरेषु वैश्वदेविक एव कर्मणि 'तिष्ठन्ति' संस्थापनीया इत्यर्थः । एवं कृते सति मृताख्यममङ्गलं कर्म मङ्गलरूपेणामृतेन कर्मणोभयतः परिवेष्टितं मङ्गलमेव भवतीति भावः। उक्तदैव-पित्र्यपौर्वापर्य्यविपर्ययदोषः "दैवाद्यन्तं तदीहेतेत्यादि मनुवाक्ये दर्शितः ।

यमोऽप्याह ।

आसुरन्तद्भवेच्छ्राद्धं पूर्वं दैवविवर्जितं ।
तस्माच्छ्राद्धेषु सर्वेषु पित्र्यं पूर्वं विवर्जयेत् ॥
दैवं पूर्वं नियुञ्जीत पश्चात् पित्र्यं यथाविधि ।
पूर्वं पित्र्यं नियुञ्जानः क्षिप्रं पश्यति सान्वयः ॥

'आसुरं' असुरोपभोग्यं । असुरनिवारकाणां वैश्वदेवानां पूर्वमनिवेशितत्वात् । अतो वैश्वदेविकानां पूर्वमुपवेशनं पश्चात् पित्र्याणां । तच्च यथाक्रमं पूर्वाभिमुखानामुत्तराभिमुखानां च कर्त्तव्यं । तथा ब्रह्माण्डपुराणे ।

विप्रौ तु प्राङ्मुखौ दैवौ द्वौ तु पूर्वं निवेशयेत् ।
उत्तराभिमुखान् विप्रांस्त्रीन् पितृभ्यश्च सर्वदा ॥

द्वाविति वैश्वदेविकार्थनिमन्त्रितब्राह्मणसंख्यायाः उपलक्षणार्थं ।

त्रीनिति च पित्र्यार्थनिमन्त्रितब्राह्मणसंख्यायाः।

अतएव वाराह-विष्णुपुराणयोः।

प्राङ्मुखान् भोजयेद्विप्रान् देवानामुभयात्मकान्।
पितृ-पैतामहानाञ्च भोजयेच्चाप्युदङ्मुखान्॥

'उभयात्मकान्' पित्रादि-मातामहादिश्राद्धद्वयार्थे वैश्वदेविकद्वयसम्बन्धिनः।

पृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप।
एकत्रैकेन पाकेन कुर्वन्त्यन्ये महर्षयः॥

'तयोः' पितृ-मातामहवर्गयोः।

मार्कण्डेयपुराणे ब्रह्मपुराणे च।

प्राङ्मुखो दैवसङ्कल्पान् पितॄन् कुर्यादुदङ्मुखः।

याज्ञवल्क्यः।

पवित्रपाणिराचान्तानासनेषूपवेशयेत्।
द्वौ दैवे प्राक्त्रयः पित्र्ये उदगेकैकमेव वा॥

विष्णुरपि।

द्वौ दैवे प्राङ्मुखौ त्रीन् पित्र्ये उदङ्मुखान् एकैकमुभयत्र वा।

शङ्खोऽपि।

द्वौ दैवे प्राक्त्रयः पित्र्ये ब्राह्मणांस्तु उदङ्मुखान्।
भोजयेद्विधिवद्विद्वानेकैकमुभयत्र वा॥

विष्णुधर्मोत्तरे।

द्वौ दैवे प्राक्त्रयः पित्र्ये एकैकमुभयत्र वा।
उदङ्मुखांश्च पित्रर्थान् स्नातान् विद्यागुणक्रमात्।

।तलदर्भावकीर्णेषु आसनेषूपवेशयेत् ।

कात्यायनोऽपि ।

स्नातान् शुचीनाचान्तान् प्राङ्मुखानुपवेश्य दैवे युग्मानयुग्मान् यथाशक्ति पित्र्य एकैकस्योदङ्मुखान् ।

उशनाः ।

कृप्तश्मश्रु-नख-रोमाणः शुचौ देशे प्राङ्मुखा वैश्वदेविका उदङ्मुखाः शेषा दर्भासनेषूपवेश्या इति ।

वेदविशेषेणोपवेशनविशेषः

शातातपस्मृति-प्रभासखण्डयोः ।

द्वौ दैवेऽथर्वणौ विप्रौ प्राङ्मुखानुपवेशयेत् ।
पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान् ॥

अत्राह पैठीनसिः ।

प्राङ्मुखान् विश्वेदेवानुपवेशयेत् बर्हिश्मत्स्वासनेषु पितॄन् दक्षिणपूर्वेणेत्युक्तं ।

'विश्वेदेवान्' वैश्वदेविकान् ब्राह्मणान्, प्राङ्मुखानुपवेशयेत्, 'पितॄन्' पित्र्यर्थान् ब्राह्मणान्, 'दक्षिणपूर्वेण' दक्षिणपूर्वाभिमुखान् । अथोपविष्टान् वैश्वदेविकानपेक्ष्य दक्षिणापूर्वस्यामाग्नेय्यान्दिशि निवेशितपङ्क्तीनुत्तराभिमुखान् इत्येतत्सर्वं 'उक्तं', गृह्य इति शेषः ।

हारीतस्तूत्तराभिमुखानां पित्र्यब्राह्मणानामुपवेशनमित्यस्य पक्षस्य निन्दां कृत्वा तेषां पूर्वाभिमुखतया वैश्वदेविकानाञ्चोत्तराभिमुख्येनोपवेशनमुक्तवान् । शुभानुपस्पृष्टाचमनीयान् शुचौ दक्षिणाग्रेषु दर्भेषु प्राङ्मुखान् ब्राह्मणान् भोजयेत् उदङ्मुखानित्येकेन वा प्राङ्निर्देशात्

क्रूरा ह्येतेभिमुखा हिंसका भवन्तीति मैत्रायणिः। तस्मात् प्राङ्मुखान् ब्राह्मणान् भोजयेत्। अत्र प्राधान्याद्दक्षिणाग्रदर्भलिङ्गाच्च पित्र्यर्था एव ब्राह्मणा विवक्षिताः। एके तु मन्यन्ते तानुदङ्मुखान् भोजयेदिति। अथवैतत् पित्र्याणामुदङ्मुखत्वं न कर्त्तव्यं। अत्र हेतुः प्राक्निर्देशादित्यादिः। यत एते ब्राह्मणाः पूर्वनिमन्त्रणेन पित्रादिस्थाने भोक्तृत्वेन निर्दिष्टाः परिकल्पिताः ततश्च "निमन्त्रितान् हि पितर उपतिष्ठन्ति तान् द्विजान्" इतिवचनात् ते क्रूरात्मकपित्रधिष्ठिताः सन्त उत्तराभिमुखाः पित्र्यं कर्म कुर्वतो दक्षिणाभिमुखस्य यजमानस्याभिमुखाः सन्तो हिंसका भवन्तीति मैत्रायणिराचार्य्योमन्यते। तस्मात् पूर्वाभिमुखानेव भोजयेत्। वैश्वदेविकांस्तु उदङ्मुखान् यतस्ते दक्षिणादिगभिमुखस्य यजमानस्य कर्म कुर्वतः आद्युरक्षकविश्वेदेवाधिष्ठितत्वादभिमुखाः सन्तो रक्षका भवन्ति।

बौधायनोऽपि।

सदर्भोपक्लृप्तेष्वासनेषु द्वौ दैवे त्रीन् पित्र्य एकैकमुयत्र वा प्राङ्मुखानुपवेशयेत् उदङ्मुखान् वा।

तदेवमत्र दिग्विशेषाभिमुख्ये पञ्च पक्षा भवन्ति। तत्र वैश्वदेविकाः प्राङ्मुखाः पित्र्या उदङ्मुखा इत्येकः, वैश्वदेविका उदङ्मुखाः पित्र्याः प्राङ्मुखा इति द्वितीयः, उभये उदङ्मुखा इति तृतीयः, उभये प्राङ्मुखाः इति चतुर्थः, दैविकाः प्राङ्मुखाः पित्र्यास्त्वाग्नेयाभिमुखा इति पञ्चमः, एतेषु च वैश्वदेविकानां प्राङ्मुखत्वं पित्र्याणाञ्चोदङ्मुखत्वमित्ययमेव पक्षोबहुभिराश्रितः। अत्र च "प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणं" इति बौधायनवचनाद्यद्यद्देवानां कार्य्यं तत्तत्प्र-

दक्षिणप्रचारेण कर्त्तव्यं। ततश्च दक्षिणादिगुपक्रममुदगपवर्गं वैश्व-
देविकानां उपवेशनं कार्य्यं पश्चिमोपक्रमं सर्वदिगपवर्गञ्च पैतृकाणां।
यत्तु यमेनोक्तं, "दक्षिणासंस्था आसीरन् स्पृशेयुः परस्परः" इति।
तत्र दक्षिणबाहुभागे संस्था येषान्ते दक्षिणसंस्था इति विग्रहः।
एतच्च पङ्क्तेः पश्चिमोपक्रमप्रागपवर्गत्वे घटते।

अतएव छागलेयः।

प्रतीच्यां समुपक्रम्य प्राच्यां निष्ठा यदा भवेत्।
दक्षिणासंस्थता ह्येषा पितॄणां श्राद्धकर्मणि॥

अथवा पित्र्याणां प्राङ्मुखोपवेशनमाश्रित्येदं दक्षिणासंस्थित-
त्वाभिधानं।

उपवेशनप्रकारस्तु शङ्ख-लिखिताभ्यामुक्तः।

ब्राह्मणानुपसंगृह्योपवेशयेदासनमन्वालभ्येति।

अत्र ब्राह्मणोपसंग्रहे आसनस्पर्शे चाकाङ्क्षितं विशेषमुपवेशन-
वाक्यञ्चाह यमः।

आसनं संस्पृशन् सव्येन पाणिना दक्षिणेन ब्राह्मणानुपसंगृह्य
समाध्वमिति चोक्तोपवेशयेत्।

श्लोकेनोपवेशनवाक्यान्तरमपि स एवाह।

आसध्वमिति तान् ब्रूयात् आसनं संस्पृशन्नपि।

कूर्म्मपुराणेऽपि।

तेषूपवेशयेदेतानासनं संस्पृशन्नपि।
आसध्वमिति सञ्जल्प्य आसीरंस्ते पृथक् पृथक्॥

व्यासस्तु वाक्यान्तरमाह।

आस्यतामिति तान् ब्रूयादासनं संस्पृशन्नपि ।
उपस्तीर्णेषु चासीरन्न स्पृशेयुः परस्परं ॥

'उपस्तीर्णेषु' उपरि समीपे वा आस्तीर्णदर्भेषु ।

उपवेशने मन्त्रमाह धर्म्मः ।

अन्वालभ्य ततोदेवानुपवेश्य ततः पितॄन् ।
समस्ताभिर्व्याहृतिभिरासनेषूपवेशयेत् ॥

अत्र पैतृकाणामेवोपवेशने व्याहृतय इत्यपरार्क-स्मृतिचन्द्रिका-काराभ्यां व्याख्यातं । तत्र विशेषाग्रहणादुभयेषामप्युपवेशने व्याहृतिप्रयोग इति सूचितं । अन्वारभ्येत्यत्र जान्वारभ्येति पठित्वा ब्राह्मणस्य जानूपस्पर्शनपूर्वकमुपवेशनं स्मृतिचन्द्रिकाकारेणोक्तं । तत्तु बहुष्वपि मूलस्मृतिपुस्तकेष्वनुपलभ्यमानं कुतस्तेन समानीतोऽयं पाठ इति न विद्मः । अविसंवादेन ब्राह्मणस्य दक्षिणं पाणिं उपसंगृह्णानाः शिष्टास्तु कथं न दृष्टा इति।

भविष्यत्पुराणेपि ।

ॐभूर्भुवः स्वरित्युक्त्वा तान् सम्यगुपवेशयेदिति।

अत्र समन्त्रकमुपवेशनप्रयोगवाक्यं। ॐभूर्भुवः स्वः समाध्वमिति वा अत्रास्यतामिति वा यजमानेनोच्चारणीयं। तदनन्तरं द्विजैरपि सुसमास्महे इति प्रतिवद्भिरुपवेष्टव्यं । एवं पित्र्यादिश्राद्धार्थान् ब्राह्मणानुपवेश्य मातामहश्राद्धार्थानप्युपवेशयेत् ।

तथा च पित्र्यादिश्राद्धार्थब्राह्मणोपवेशनं प्रतिपाद्याह, याज्ञवल्क्यः ।

मातामहानामप्येवं तन्त्रं वा वैश्वदेविकं ।

'एवं' पितृश्राद्धार्थदैवपित्र्यवत्, मातामहश्राद्धार्थानपि पृथग्दैव-

पित्र्यान् ब्राह्मणानुपवेशयेत्। अथवा पित्र्यानेव पृथगुपवेशयेत्। देवांस्तूभयत्र तानेव कल्पयेत्। तदेतदाह, 'तन्त्रं वेति। 'वैश्वदेविकं' विश्वेदेवदैवत्यं कर्म सकृदनुष्ठाय श्राद्धद्वयाङ्गतां नेयमिति।

मार्कण्डेयपुराणे ब्रह्मपुराणे च ।

तथा मातामहानाञ्च तन्त्रं वा वैश्वदेविकं ।
पृथक्तयोस्तथा चान्ये केचिदिच्छन्ति मानवाः ॥

आसनासीनानां कर्त्तव्यमाह सुमन्तुः ।

पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।
उच्छिष्टोच्छिष्टसंस्पर्शं वर्जयन्तः परस्परं ॥

ते विप्राः सर्वे देवार्थाः पित्रर्थाश्च पवित्रपाणयो मौनव्रतान्विताः प्रमादसम्भवमुच्छिष्टोच्छिष्टसंस्पर्शं वर्ज्जयन्तः आ भोजनसमाप्तेर्वर्त्तेरन्नित्यर्थः। चशब्दात् श्राद्धकर्त्तापि मौनव्रतान्वितो वर्त्तेतेति गम्यते। प्रमादान् मौनलोपे तु प्रायश्चित्तमुक्तं नियमप्रकरणे। एतच्च पूर्वोक्तानां नियमानामुपलक्षणार्थं।

मौनव्रतान्वयस्य क्वचिदपवादमाह यमः ।

ब्रह्मोद्याश्च कथाः कुर्युः पितॄणामेतदीप्सितं।

एवमुपवेशितेष्वपि ब्राह्मणेष्वागतमतिथिमपि श्राद्धपङ्क्तावुपवेशयेदिति प्रागेवोक्तं।

इति ब्राह्मणोपवेशनं।

अथ पृथिवीस्तुत्यादिकृत्यं ।

तत्र तावदासनोपविष्टानां ब्राह्मणानां पुरतः कुशोपस्कृतायां भुवि यज्ञोपवीती प्राङ्मुख उपविश्य प्रमादकृताविज्ञाताशुचित्वनिवृत्त्यर्थं

शुचित्वातिशयार्थं वा प्रथमतः पुण्डरीकाक्षस्मरणं कुर्यात्।

यतः।

पुण्डरीकाक्षस्मरणस्य शुचित्वापादकत्वमाह क्रतुः।

अपवित्रः पवित्रोवा सर्वावस्थां गतोपि वा।

यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः।

अनन्तरं च पृथिवीस्तुतिः कर्त्तव्या। तथा च महाभारतीयश्राद्धकल्पे निमन्त्रितं प्रत्यचित्राक्यं।

स्तोतव्या चेह पृथिवी निवापास्योतधारिणी।

वैष्णवी काश्यपी चेति तथैवेह चयेति च॥

'निवापे' पितृदेवत्ययागे, यः 'आस्योतः' प्रक्षिप्तव्यं द्रव्यं, तस्याधारभूता यस्मात्तस्मात् पूर्वं पृथिवीस्तोतव्या। 'इति' करणे, वैष्णव्यादिनाम्नां स्तुतौ करणत्वप्रदर्शनार्थं। ततश्च स्तुत्यभिव्यक्त्यर्थं वैष्णव्यसीत्येवमादीनि नामान्युच्चारणीयानि, आराधनवचनो वा स्तौतिः। तस्मिन् पक्षे प्रणवादीनि नमोऽन्तचतुर्थ्यन्तानि वैष्णव्यादिनामानि प्रयोज्यानि। ॐवैष्णव्यै नमः। ॐकाश्यप्यै नमः। ॐचयायै नम इति। चयेति चीनिवास-गत्योरित्यस्य धातोरूपं।

वाराहपुराणे।

प्रणम्य शिरसा भूमिं निवापस्य च धारिणीं।

वैष्णवी काश्यपी चेति अक्षयेति च नामतः॥

पृथिवीं प्रति वराहवाक्यमपि तत्रैव।

प्रणम्य शिरसा देवि निवापस्थानमागतः।

स्तुवीतानेन मन्त्रेण त्वाञ्च भक्त्या व्यवस्थितः॥

मेदिनी लोकमाता च चितिरुर्व्वी धरा मही ।
भूमिः शैलशिला च त्वं स्थिरा तुभ्यं नमो नमः ॥
धरणी काश्यपी चौणी रसा विश्वम्भरा च भूः ।
जगत्प्रतिष्ठा[१] वसुधा त्वं हि मातर्नमोऽस्तु ते ।
वैष्णवी भूतदेवी च पृथिवी त्वं नमोऽस्तु ते ॥

ततः श्राद्धप्रदेशं गयात्मकत्वेन तदेकदेशस्थितं गदाधरञ्च ध्यात्वा तयोश्च नमस्कारं कृत्वोत्तरं कर्म प्रवर्त्तयेत् ।

तदुक्तं ब्रह्माण्डपुराणे ।

श्राद्धभूमिं गयां ध्यात्वा ध्यात्वा देवं गदाधरं ।
ताभ्याञ्चैव नमस्कृत्य ततः श्राद्धं प्रवर्त्तयेत् ॥

'ताभ्यामिति चतुर्थी द्वितीयार्थे । 'नमस्कारश्च मनोवाक्कायैर्विधेयः । तत्र वाचिकस्तन्नामभ्यां एवं कर्त्तव्यः । ॐभगवत्यै गयायै नमः । ॐभगवते गदाधराय नम इति ।

श्राद्धारम्भात्पूर्वं जपमाह प्रचेताः ।

अपसव्यं ततः कृत्वा जप्त्वा मन्त्रं तु वैष्णवं ।
गायत्रीं प्रणवं वापि ततः श्राद्धमुपक्रमेत् ॥

'वैष्णवमन्त्राः' तद्विष्णोः परमं पदमित्यादयः ।

ब्रह्मपुराणे ।

उपवेश्य जपेद्धीमान् गायत्रीं तदनुज्ञया ।

अथ स्थूल-सूक्ष्मविभागावस्थितयोः कर्माङ्गभूतयोर्देशकालयोः

---

(१) जनात्प्रसूतेति ग० ।

शिष्टाचारप्रामाण्येन सङ्कीर्त्तनं कृत्वा ब्राह्मणाभ्यनुज्ञाग्रहणार्थं वक्ष्यमाणेतिकर्त्तव्यतायां पृच्छां कुर्यात्।

तत्र वराहकृतं श्राद्धं प्रस्तुत्य लिङ्गदर्शनं ब्रह्मपुराणे।

कुशानादाय प्रागग्रान् रोमकूपान्तरस्थितान्।
ऋषीणां हृदि पप्रच्छ करिष्ये पितृतर्पणं॥

'प्रागग्रान्' पुरतोऽग्रान् स्वाभिमुखीभूतदिक्सम्मुखाग्रानित्यर्थः। 'रोमकूपान्तरस्थितान्', यज्ञवराहस्य वर्हिर्मयरोमत्वादिदमुच्यते। मनसा ध्यातान् ऋषीन् 'हृदि' मनस्येव, पप्रच्छ।

अपृच्छायां दोषः कालिकाखण्डे।

अपृच्छन् प्रचरेद्यस्तु नरो विप्रांश्च पार्व्वति।
तस्य प्रियं मत्प्रमुखा नाचरन्ति दिवौकसः॥

इतिकर्त्तव्यता ब्रह्माण्डपुराणे।

उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरे स्थितौ।
सप्रश्रयश्चोपविष्टान् सर्वान् पृच्छेत् द्विजोत्तमान्॥

'सप्रश्रयः' विनयान्वितः, पृच्छेत्। विनयाभिव्यक्तये शरीरसंस्थानमाह। 'उभावित्यादि।' जानुभ्यां जानुनोरन्तरं द्वावपि पाणी 'समौ' समदेशौ समसंस्थानौ स्थितावाभिमुख्येनावस्थितौ बद्धाञ्जलिं कृत्वेत्यर्थं। अथवा 'जानुभ्यां समौ' जानुद्वयेन तुल्यसंस्थानौ, जानुनोरेवान्तरे कृत्वा पृच्छेत्। एतच्च संस्थानमुपविष्टस्यैव सम्भवति। सप्रश्रयो ब्राह्मणान् पृच्छेदित्यनेन ब्राह्मणाभिमुखीभावोपि कर्त्तव्यं इति गम्यते। ततश्च ब्राह्मणाभिमुख्येनैवमुपविष्टस्तान् सर्वान् पृच्छेत् सर्व्वप्रश्नपक्षश्च वैकल्पिकः।

अत एव कात्यायनः ।

प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान्वेति ।

'प्रश्नेष्विति' बहुवचननिर्देशात् सर्वप्रश्नविषयत्वमस्य विज्ञायते । 'पङ्क्तिमूर्द्धनि' पङ्क्त्यादौ, उपविष्टः 'पङ्क्तिमूर्द्धन्यः' । अत्रैकं प्रति प्रश्ने स एव प्रतिब्रूयात, सर्वान् प्रति प्रश्ने सर्वे प्रतिब्रूयुः । असाधारण्येन तत्तत्पङ्क्तिकर्त्तव्ये कर्मणि योयस्यां पङ्क्तौ मूर्द्धन्यः स एव प्रष्टव्यः । तत्तत्पङ्क्तिस्था एव वा सर्वे प्रष्टव्याः ।

अत्र श्राद्धकर्त्तुः प्रश्नवाक्यं ब्रह्मपुराणे ।

पितॄन् पितामहान् यक्ष्ये भोजनेन यथाक्रमं ।
प्रपितामहान् सर्वांश्च तत्पितॄंश्चानुपूर्वशः ॥

'पितॄनित्यादिबहुवचनं पूजार्थं । एवमन्यत्रापि समाचारानुसारात् क्वचित् बहुवचनं प्रयोज्यं।

द्विजोत्तरवाक्यसहितं प्रश्नवाक्यं ब्रह्माण्डपुराणे ।

श्राद्धं करिष्य इत्येवं पृच्छेद्विप्रान् समाहितः ।
कुरुष्वेति स तैरुक्तो दद्याद्दर्भासनन्ततः ॥

अत्र यज्ञपुरुषपरब्रह्मरूपश्रीविष्णुस्मरणपूर्वकप्राणायामत्रितयानुष्ठानानन्तरं प्राचीनावीती दक्षिणाग्रेषु दर्भेषु पूर्वोक्तसंस्थानेन पित्र्यद्विजाभिमुखमुपविष्टः शिष्टाचारप्राप्तेन वाक्येन पृच्छेत् । इह सर्वत्र प्रश्नोत्तरेषु प्रणवपूर्वकाः प्रयोगा विधेयाः ।

तथा च महाभारते श्रीभगवद्गीतासु ।

तस्मादोमित्युदाहृत्य यज्ञ-दान-तपःक्रियाः ।
प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां ॥

प्रश्नवाक्यरचना तु ॐ इह पृथिव्यामित्यादि पितृतृप्तिकामोऽहमित्यन्तं निमन्त्रणप्रकरणे प्रदर्शितं सङ्कल्पवाक्यमुच्चार्य्य युष्मदनुज्ञया करिष्ये इत्यन्तेऽनुकीर्त्तयेदिति, अयमेव च प्रश्नः स्मृतिचन्द्रिकाकारेणावान्तरसङ्कल्पशब्देनोक्तः प्रश्नानन्तरं कुरुष्वेति ब्राह्मणैरभ्यनुज्ञातो वैश्वदेविकपूर्व्वकं दर्भासनानि दद्यात्। दर्भासनदानात् पूर्व्वं त्रिवारं जप्यः सप्तार्च्चिर्मन्त्र उक्तः विष्णुधर्म्मोत्तर-ब्रह्मवैवर्त्त-ब्रह्मपुराण-वायुपुराण-प्रभासखण्ड-भविष्योत्तरेषु।

पापापहं यावतीयमश्वमेधसमन्तथा।
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्म्मितं॥
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वधायै स्वाहायै नित्यमेव नमो नम इति॥
आद्यावसाने श्राद्धस्य त्रिरावर्त्तं जपेत्सदा।
पिण्डनिर्व्वपणे वापि जपेदेनं समाहित इति॥

अन्यमपि प्रभासखण्ड-ब्रह्मपुराण-विष्णुपुराणोक्तस्य सप्तार्च्चिःस्तोत्रस्य प्रथमश्लोकं श्राद्धस्यादि-मध्यावसानेषु श्रोत्रियास्त्रिरावर्त्तयन्ति।

अमूर्त्तीनां समूर्त्तीनां पितॄणान्दीप्ततेजसां।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषामिति॥

अन्ये तु व्यासोक्तं मन्त्रान्तरमप्यनुकीर्त्तयन्ति।

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदत्विति।

अत्रावसरे नीवीबन्धो विधेयः, "पितृदेवत्या वै नीविरिति शतपथीयलिङ्गदर्शनेन पितृदैवत्यं कर्म्म नीविमता कर्त्तव्यमित्यवगमात्।

भविष्यत्पुराणे।

बध्नीयात्तु तथा नीवीं न च प्रेक्षेत दुर्जनं।
स्यात्कर्त्ता नियतस्त्वेवं यावच्छ्राद्धं समाप्यते॥

तथा श्राद्धप्रकृतिभूतपिण्डपितृयज्ञप्रकरणान्तर्वर्त्ति "नीविं विस्रंस्य नमो व इत्यञ्जलिं करोति" इति कात्यायनसूत्रं व्याचक्षाणेनोपाध्यायकर्केणैवमभिहितं। अत्र नीवीविस्रंसनविधानात्कर्मारम्भे नीवीबन्धः कर्त्तव्य इत्यर्थाद्गम्यत इति। इह निबद्धा चेयं वचनाद्वैश्वदेविककर्मावसरेष्वनुन्मोच्यमाना पिण्डनमस्कारपर्य्यन्तमनुवर्त्तते, नीविर्नामात्र तिल-कुशान्वितानां परिहितवस्त्रोत्तराञ्चलदशानां वामकटिसंलग्नवस्त्रबहिर्भागेन सम्वेष्ट्य गोपनं। नीवीबन्धे श्रद्धालवः श्राद्धज्ञाः "निहन्मि सर्वं यदमेध्यवत्" इत्यादिकं तिलविकिरणे दर्शयिष्यमाणं मन्त्रं पठन्ति, तदनन्तरं च रक्षार्थं प्रथमं वैश्वदेविकप्रदेशे यवान् विकिरेत्।

उक्तं हि ब्रह्मपुराणे वराहकृतं श्राद्धं प्रकृत्य यवानां देवरक्षार्थत्वं।

अक्षतैर्देवतारक्षां चक्रे चक्रगदाधरः।
अक्षतास्तु यवौषध्यः सर्वदेवास्तसम्भवाः॥
रक्षन्ति सर्वा स्त्रिदशान् रक्षार्थं निर्मिता हि ते।
देव-दानव-दैत्येषु यक्ष-रक्षःसु चैव हि॥
न हि कश्चित् क्षतं तेषां कर्त्तुं शक्तश्चराचरे।
देवानान्ते हि रक्षार्थं नियुक्ता विष्णुना पुरा॥

एवं च सति वैश्वदेविकस्थानेऽपि तिलानामेव विकिरणं कर्त्तव्यं, न तु यवानां तेषामनुपदेशात्। न च तिलैः क्रियमाणमदैवं भवतीति

यदुपाध्यायकर्कोक्तं तत् पुराणापर्य्यालोचनमूलमिति ज्ञेयं। एवं दैवप्रदेशे यवान् विकीर्य्य पैतृकप्रदेशे परितस्तिलान् गौरसर्षपांश्च विकिरेत्।

तथा च मार्कण्डेयपुराणे।

रक्षोघ्नांश्च पठेन्मन्त्रांस्तिलैश्च विकिरेन्महीं।
सिद्धार्थकैश्च रक्षार्थं श्राद्धे हि प्रचुरं छलं॥
'छलं' यातुधानादिकृतो विघ्नः।

सौरपुराणे।

उपवेश्य ततो विप्रान् दत्त्वा चैव कुशासनं।
पश्चात् श्राद्धस्य रक्षार्थं तिलांश्च विकिरेत्ततः॥

कुशासनं दत्त्वोपवेश्येति सम्बन्धः। तिलाश्चात्र कृष्णा ग्राह्याः।

तथा भविष्यत्पुराणे।

सिद्धार्थकैः कृष्णतिलैः कार्य्यञ्चाप्यवकीरणं।
कुरु सूर्य्याग्नि-वस्त्राणां दर्शनञ्चापि यत्नतः॥

विष्णुधर्मोत्तरे।

तिलावकिरणं कार्य्यं यातुधानविनाशनं।

तथा।

अपयन्त्वसुरा ह्यभ्यां यातुधानविवर्जनं।
तिलैः कुर्य्यात् प्रयत्नेन अथवा गौरसर्षपैः॥

"अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति परापूरोनिपुरोये भयन्त्यग्निष्टान् लोकान् प्रणुदात्वस्मात्"। "अपयन्त्वसुरा ये पितृषदः उदीरतामवर उत्पराम उन्मध्यमाः पितरः

सौम्याश्च असुं च ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु" इति ।

तथा ।

निहन्मि सर्वं यदमेध्यवद्भवे-
द्धताश्च सर्वेऽसुर-दानवा मया ।
ये राक्षसा ये च पिशाच-गुह्यकाः
हता मया यातुधानाश्च सर्वे ॥

एतेन मन्त्रेण सुसंयतात्मा तिलान् क्षिपेद्दिक्षु च सर्षपांश्च ।
यस्मिन्देशे पठ्यते ह्येष मन्त्रस्तं वै देशं राक्षसा वर्जयन्ति ॥

ब्रह्माण्डपुराणे ।

तत्र सिद्धार्थकान् भूमौ क्षिपेद्रक्षोऽपनुत्तये ।
दिक्षु सर्वासु च तिलान् मन्त्रेणानेन निक्षिपेत् ॥

निहन्मि सर्वं यदमेध्यवद्भवे-
द्धताश्च सर्वेऽसुर-दानवा मया ।
रक्षांसि यक्षाः सपिशाचगुह्यका
हता मया यातुधानाश्च सर्व्वे इति ॥

द्वारदेशे तिल-कुशप्रक्षेपणे मन्त्रः स्कन्दपुराणोक्तः शिष्टाचारे दृश्यते ।

तिला रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान् ।
पङ्क्तिं वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षक इति ॥

श्राद्धप्रदेशस्य परितः प्राच्यादिदिक्षु मध्ये च तिलावकिरणे मन्त्राः भविष्यत्पुराणे ।

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशं।
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः॥
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः।
अधोर्ध्वमपि कोणेषु विकोणेषु च सर्वशः॥
रक्षोभूत-पिशाचेभ्यस्तथैवासुरदोषतः।
सर्वतश्चाधिपस्तेषां यमोरक्षां करोतु मे।
वायुभूतपितृणाञ्च तृप्तिर्भवतु शाश्वती॥

इत्येतान्मन्त्रान् यथालिङ्गं विभज्य प्राच्यादिदिक्षु अध ऊर्द्धं कोणेषु सर्वतश्च तिलान्विकिरेत्।

तद्यथा।

अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशमिति प्राच्यां। तथा वर्हिषदः पान्तु याम्यां ये पितरः स्थिता इति दक्षिणस्यां। प्रतीचीमाज्यपास्तद्वदिति प्रतीच्यां। उदीचीमपि सोमपाः इत्युदीच्यां।

अधोर्ध्वमपि कोणेषु विकोणेषु च सर्वशः।
रक्षोभूत-पिशाचेभ्यस्तथैवासुरदोषतः॥
सर्वतश्चाधिपस्तेषां यमोरक्षाङ्करोतु मे।
वायुभूतपितृणाञ्च तृप्तिर्भवतु शाश्वती॥

इत्यधस्तादूर्ध्वं कोणेषु सर्वतश्च तिलान्विकिरेत्।

ब्रह्माण्डपुराणे।

रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतोदिशं।
तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्य्यापहता इति॥

अस्यार्थवादोऽपि तत्रैवोक्तः ।

य इदं श्राद्धकाले तु कुर्य्याद्वै पितृपूजनं ।
अक्षयं तत् भवेच्छ्राद्धं पितृभिः परिरक्षितमिति ॥

निगमे तु तिलादिविकिरणे मन्त्रान्तरमुक्तं ।

अपहतासुररक्षांसि वेदिषद इति तिलान् गौरसर्षपांश्च श्राद्धभूमौ घनं विकिरेदिति ।

'घनं' निविड़ं ।

स्मृतिचन्द्रिकाकारादयस्तु निगमवाक्यमेवंविधं पठितवन्तः । अपह तिलान्विकिरेदिति । अत्र प्रतीकेन गृहीतं मन्त्रं च प्रदर्शितवन्तः । अपहता असुरा रक्षांसि पिशाचायेक्षयन्ति पृथिवी । मनु ।

अक्षेतो गच्छन्तु यत्रैषां गतं मन इति ।

मन्त्रान्तरमपि ब्रह्माण्डपुराणे ।

परितः पितृविप्राणामपेतो यन्त्वितीरयन् ।
असुं य ईयुरिति चापसव्यं विकिरेत्तिलान् ॥

अपेतो यन्तु पणयोऽसुम्नादेवपीयवः चुभिरह्नोभिरक्तुभिर्व्यक्तं यमोददात्वसानमस्मै इत्येकोमन्त्रः । असुं य ईयुरित्येतः पदैरुपलक्षित उदीरतामवर इत्यादिरपरः ।

तद्यथा ।

उदीरतामवर उत्पराप्त उन्मध्यमाः पितरः सौम्यासः । असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेष्विति तिलादिविकिरणानन्तरं प्रमादोपजातस्य प्रमितस्य शङ्कितस्य वा मार्जारादिदृष्टिदोषस्य निवृत्तये कस्मिंश्चित्पात्रे निधाय कुशशुद्धवत्यादिभिश्च मन्त्रितेन

प्रागुक्तेनाभ्युक्षणजलेन दुष्टदृष्टिनिपातादिदूषितः पाकः पूतो भवतीति मन्त्रीस्त्याशेषपाकप्रोक्षणं कृत्वा श्राद्धदेशासादितानन्यानप्युपयोगिनः कुश-कुसुमादीन् सर्वान् पदार्थान् प्रोक्षेत।

तथा च वशिष्ठः।

शुद्धवतीभिः कुष्माण्डीभिः पावमानीभिश्च पाकादि प्रोक्षेत्।

शुद्धवत्यादयो व्याख्याताः। छन्दोगो यजमानः शुद्धवतीभिः। यजुर्वेदाध्यायी कूष्माण्डीभिः। बह्वृचः पावमानीभिरिति। उपलक्षणञ्चैतत्पाकशुद्धिप्रकरणोक्तानान्तरमन्त्रीनां। आदिशब्देनान्येषामपि श्राद्धोपयोगिनां पुष्पादीनां ग्रहणं।

अत एव ब्रह्माण्ड-भविष्यत्पुराणयोः।

पुष्पादीनां तृणानाञ्च प्रोक्षणं हविषां तथा।
पराहृतानां द्रव्याणां(१) निधायाभ्युक्षणं पुनः॥
नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्येऽथवा पुनः।
उच्चावचाः श्राद्धधर्माः साधारण्यात् प्रकीर्त्तिताः॥

'उच्चावचाः' अनेकप्रकाराः।

उक्तनिषेधातिक्रमे दोषं प्रदर्शयन् प्रोक्षणविधिमाह याज्ञवल्क्यः।

अनभ्युक्ष्यानुपस्पृश्य जुहोति च ददाति च।
नैर्ऋतं भागधेयं स्यात्तस्मात् प्रोक्षणमाचरेत्॥

इति पृथिवीस्तुत्यादिकृत्यं।

हेमाद्रिणा गुणश्रेणिशोभमानश्रियाधुना।
वैश्वदेवार्चनस्येदं काण्डमेवं वितन्यते॥

(१) पुष्पानामिति ख०।

अथ दर्भासनादयः पदार्थाः ।

ते च सर्वस्य दैवपूर्वकत्वात् पूर्वं देवद्विजेष्वनुष्ठेयाः । ततः पैत्र्यद्विजेषु । तत्र यद्यपि प्रयोगविध्यनुमतप्रधानप्रत्यासत्त्यनुग्रहरूपन्यायपर्य्यालोचनया दैवपित्र्यक्रियासमवायिनः सर्वेऽपि पदार्थाः पदार्थानुसमयेनानुष्ठेया इत्यवगम्यते । तथापि याज्ञवल्क्यादिवचनप्रामाण्याद्दर्भासनदानाद्याच्छादनान्ता दैवेषु पित्र्येषु च काण्डानुसमयेनानुष्ठेया इति पूर्वमेवोक्तं । तत्र तावद्दर्भासनदानं तच्चिकीर्षन् जानुपातनं कुर्य्यात् ।

तथा च च्यवनः ।

दक्षिणं पातयेज्जानु देवान् परिचरन् सदा ।
पातयेदितरज्जानु पितॄन् परिचरन्नथ ॥

जानुपातनानन्तरमासनदानाच्च पूर्वं द्विजहस्ते जलं प्रक्षिपेत् ।

तथा च याज्ञवल्क्यः ।

पाणिप्रक्षालनन्दत्त्वा विष्टरार्थान् कुशानपि ।

यद्यपि चात्र पाणिप्रक्षालनार्थमुदकं ब्राह्मणहस्ते दत्त्वा विष्टरार्थाः कुशा अपि तत्रैव देया इत्यापाततोऽपिशब्दात् प्रतिभाति, तथापि विष्टरार्थान् कुशानासने दत्त्वेति विष्टरार्थशब्दप्रयोगात् प्रत्येतव्यमिति स्मृतिचन्द्रिकाकारः ।

अतएवोक्तं काठके ।

प्रदद्यादासने दर्भान्न तु पाणौ कदाचनेति ।

प्रचेतसाप्युक्तं ।

दर्भांश्चैवासने दद्यान्न तु पाणौ कदाचन ।

पितृ-देव-मनुष्याणां स्यात् इष्टिः शाश्वती तथेति ॥

'इष्टिः' कलहः। ब्राह्मणहस्ते देव-पितृ-मनुष्य-प्रजापत्यग्नितीर्थानां मङ्गावाङ्गुलविन्यस्तेषु दर्भेषु ममेदं ममेदमिति देवादीनां कलहः स्यात्।

अतएव नागरखण्डे हस्ते दर्भासनदानस्य वैफल्यमुक्तं।

हस्ते तोयं परिक्षेप्यं नोदर्भास्तु कथञ्चन।
योहस्ते चासनं दद्यात्तं दर्भं बुद्धिवर्जितः।
पितरो नासने तत्र प्रकुर्वन्ति निवेशनं ॥

यत्तु प्रचेतसोक्तं गृह्णीयुस्ते तु तान् कुशानिति, तदपि मनसा स्वीकुर्य्युरिति व्याख्येयं न तु हस्ते गृह्णीयुरिति, अतो न विरोधः। देवस्वामी तु मन्यते। यः पाणौ दर्भदानप्रतिषेधः स आसनास्तरणार्थदर्भविषयः। यस्तु ग्रहणविधिः स याज्ञवल्क्यवचनान्तस्य पर्य्यालोचनया पाणावेव विष्टरार्थं कुशविषय इति। तदयुक्तं। आसनास्तरणार्थानां दर्भाणां विप्रहस्ते प्रदानाप्रसक्तेः प्रतिषेधानवकाशात्।

अत्र कुतुपाद्यासनोपरि प्रदेयस्य कुशासनस्य प्रदेशविशेषो ब्रह्माण्डपुराणे दर्शितः।

आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वेति।

वामेति ब्राह्मणस्य आसनावस्थितस्य वामभागावस्थिते आसनप्रदेशे, एवं दक्षिणे। अत्र दक्षिण इति वैश्वदेविकविषयं। वाम इति पैतृकविषयं।

तथा च तत्रैवानन्तरमुक्तं।

पितृकर्मणि वामे वै दैवे कर्मणि दक्षिण इति ।

एतच्चासनं देवानां यद्यवसहितैर्दर्भैर्देयं पितॄणां तु तिलसहितैः ।
अत एव प्रदद्यादासने दर्भानित्यभिधायोक्तं काठके ।

देवानां सयवा दर्भाः पितॄणाञ्च तिलैः सहेति ।

बौधायनेन तु विशेषान्तरमप्युक्तं ।

प्रदक्षिणन्तु देवानां पितॄणामप्रदक्षिणं ।

देवानां सयवा दर्भाः पितॄणां द्विगुणास्तिलैः ॥

सहिता इति शेषः ।

भविष्यत्पुराणे ।

प्रदद्यादासने दर्भान् पितॄणां द्विगुणांस्तिलैः ।

'द्विगुणान्' मध्यभङ्गेन द्विगुणीकृतान् ।

अतएव शौनकः ।

अपः प्रदाय दर्भान् द्विगुणभग्नानासने प्रदायेति ।

अनेन भङ्गपर्यन्तं द्विगुणीकरणमुक्तं । अपः हस्तक्षालनार्थाः ।

ब्रह्मपुराणे वराहकृतश्राद्धप्रयोगे ।

श्लिष्टमूलाग्रदर्भांस्तु सतिलान् वेदवादवित् ।

तानारोप्यासने तत्र ददौ सव्येन वासनं ।

द्विगुणीकरणेन श्लिष्टानि परस्परं संलग्नानि मूलान्यग्राणि च येषान्ते 'श्लिष्टमूलाग्राः' ।

सव्येन उपविष्टब्राह्मणवामभागे पितॄणां द्विगुणा इति वदता बौधायनेनार्थात् देवानामृजव इत्यभिहितं भवति ।

अत एवाह बृहस्पतिः ।

ऋजून् सव्येन वै कृत्वा दैवे दर्भाः प्रदक्षिणं।
द्विगुणानपसव्येन दद्यात्पित्र्येऽपसव्यवत् ॥

'ऋजवः' द्वैगुण्यरहिताः।

'सव्येन' सव्यस्कन्धस्थितयज्ञोपवीतेन, 'अपसव्येन' तद्विपरीतेन, 'अपसव्यवत्' अप्रदक्षिणं।

नागरखण्डे।

ऋजुभिः साक्षतैर्दर्भैः सोदकैर्दक्षिणादिशि।
देवानामासनं दद्यात् पितॄणान्त्वनुपूर्वशः।
विषमैर्द्विगुणैर्दर्भैः सतिलैर्वामपार्श्वगैः।

'दक्षिणादिशि' ब्राह्मणस्य दक्षिणभागे 'विषमैः' विषमसंख्यैः। तेन देवानां समसंख्यैर्दर्भैरासनं देयं।

प्रचेतास्तु वैश्वदेविकासनदर्भाणां दानं प्रति ब्राह्मणमुपदिशन् प्रतिग्रहमन्त्रमाह।

दैवे तु ऋजवो दर्भाः प्रदातव्याः पृथक् पृथक्।
धर्मोऽसीत्यथ मन्त्रेण गृह्णीयुस्ते तु तान् कुशान् ॥

धर्मोऽस्मि विशि राजा प्रतिष्ठितः इत्यनेन मन्त्रेण यजुषा वैश्वदेविकब्राह्मणाः कुशान् गृह्णीयुः। अत्र गृह्णीयुरित्यस्यार्थः पूर्वमेव व्याख्यातः। केचित्तु धर्मासीतिपाठान्तरमाहुः। तस्मिन् पक्षे अयं मन्त्रः। धर्मासि सुधर्मा मेऽन्यस्मै ब्रह्माणि धारय क्षत्राणि धारय विशन्धारय तेन लाचान्तः स्कन्दयात् इति।

आसनादिदाने दिङ्नियममाह क्रतुः।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः।

आसनार्घ्यादिकं दद्यात् सव्यमेव यथाविधि ॥

आसनदाने विभक्तिविशेषस्तु अक्षय्यासनयोः षष्ठीत्यादिना चतुर्थी त्वासने नित्यमित्यादिना च वैकल्पिकः पूर्वमेव दर्शितः ।

षष्ठीं प्रकृत्य नागरखण्डेऽप्युक्तं ।

विभक्त्या पूर्वया तेषां आसनञ्च प्रदापयेदिति ।

इष्टिश्राद्धे क्रतुर्दक्ष इत्यादिवचनावगतैः श्राद्धविभागेन व्यवस्थितैर्विश्वेषां देवानां नामभिरासनदानादिकं प्रदेयं। तदेवमेतावद्वचनसन्दर्भसम्पन्नो वैश्वदेविकासनदानप्रयोग उच्यते। उदङ्मुखो दक्षिणं जान्वाच्य यज्ञोपवीत्यन्तर्जानुकरो द्विजदक्षिणहस्तमुत्तानं निजवामहस्तेन धृत्वा जल-यवसमन्वितं दर्भशिखाद्वयं स्वज्येवादाय पुरूरव-आर्द्रवःसंज्ञकानां विश्वेषां देवानां इदमासनं पुरूरव-आर्द्रवःसंज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमासनमिति वोच्चार्य्य द्विजहस्ते तदुदकमासिच्य कम्बलाद्यासनदक्षिणभागस्योपरि देवतातीर्थेन तद्दर्भशिखाद्वयं प्रक्षिपेत् । विप्रोऽपि धर्म्मोऽस्मिविश्रि राजा प्रतिष्ठित इति यजुरुच्चार्य्य स्वासनमस्त्विति ब्रूयात् ।

तथा च नागरखण्डे ।

गन्ध-माल्यासनादीनां प्रदानेषु द्विजोत्तमः ।

सुगन्धोऽस्तु सुदीपोऽस्तु चेत्यादि समुदाहरेत् ॥

अत्रासनदानानन्तरं द्विजकरे जलमासिञ्चेत्। तथा चाश्वलायनगृह्यसूत्रं ।

अपः प्रदाय दर्भान्द्विगुणभुग्नानासनं प्रदाय अपः प्रदायेति ।

इति दर्भासनदानं ।

अथ तृतीयनिमन्त्रणं।

तथा च पाद्म-मात्स्ययोरुक्तं।

आसनेषूपक्लृप्तेषु दर्भवत्सु विधानतः।
उपस्पृष्टोदकान् विप्रानुपवेश्य निमन्त्रयेत्॥

तत्रासनेषूपवेश्येत्यनेन कम्बलादिमयासनोपवेशनस्य निमन्त्रणात् पूर्वकालतोच्यते न पुनर्दर्भासनदानस्येति बहुसम्मतं। अतो यदि कम्बलाद्यासनोपवेशनानन्तरमन्तरा दर्भासनदानं कृत्वा निमन्त्रणं क्रियेत तदोपवेश्येत्येषा पूर्वकालताश्रुतिर्बाध्येत। मैवं। भुक्ता गच्छेदित्यादौ भोजन-गमनयोः पदार्थान्तरव्यवधानेपि पूर्वकालताश्रुतेर्विरोधादर्शनात्। क्त्वाप्रत्ययानुशासनमपि पुर्वकालतामात्रे न पुनरव्यवहितपूर्वकालतायां। अस्तु वा तस्यामपि तत् तथाप्यत्रान्तरापदार्थान्तरविधायकवाक्यानुग्रहार्थं व्यवहितायामेव पूर्वकालतायान्तात्पर्यं परिकल्पनीयं। शक्यते चासनश्रुतिसाधारण्यादनेन वचनेन दर्भासनोपवेशनानन्तर्य्यमप्यभिधातुं। अतएव दर्भासनदानानन्तरमाह गृह्यसङ्ग्रहकारः। ततः पुनरपोदत्त्वा निमन्त्रयेद्दैवे क्षणः क्रियतामिति, तत ॐ तथेति विप्रो ब्रूयात्, प्राप्नोतु भवानिति कर्त्ता पुनर्ब्रूयात्, प्राप्नवानिति विप्रः पुनर्ब्रूयात् इति। बौधायनस्तु विश्वेभ्यो देवेभ्यः क्षणः कर्त्तव्य इति निमन्त्रणवाक्यं दर्शितवान्। यत्तु निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेदित्यस्य ब्रह्मपुराणवचनस्य निरङ्गुष्ठं विप्रकरं गृहीत्वा निमन्त्रणे कृते तदनन्तरं विश्वेदेवाह्वानं कर्त्तव्यमिति व्याख्यानं कृत्वा निमन्त्रणे निरङ्गुष्ठद्विजहस्तग्रहणं कर्त्तव्यमिति स्मृतिचन्द्रिकाकारोभिहितवान्। तदयुक्तं। अत्र निमन्त्रणरूपपदार्थाध्याहारे प्रमाणा-

भावात् । ब्रह्मपुराणे च देवानावाहयिष्य इत्यावाहनं प्रकृत्य निरङ्गुष्ठ-ग्रहणस्योक्तत्वात् पदार्थान्तरोपन्यासशून्ये च निरङ्गुष्ठवाक्ये अन्यसम्बन्धित्वेनानवभासादावाहनेनैवास्य सम्बन्धोऽवगम्यते । अतः पूर्ववत् ब्राह्मण-जानुविन्यस्तहस्तेनैवेदमपि निमन्त्रणं विधेयमिति ।

इति तृतीयनिमन्त्रणं ।

अथावाहनं ।

तत्रावाहनविधिप्रश्नानुज्ञाः कालिकापुराणे ।

रक्षणाय ततो देवान् विश्वाख्यांस्तत्र योजयेत् ।

रक्षणाय श्राद्धस्येति शेषः । 'तत्र योजयेत्' तेषु ब्राह्मणेषु आवाहनेन सन्निधापयेत् । 'ततः' तृतीयनिमन्त्रणानन्तरं । केचित्तु ब्राह्मणानां पुरतोऽर्घ्यपात्रस्थापनानन्तरमावाहनं कुर्वते ।

तथा च मार्कण्डेयपुराण-विष्णुपुराणयोः । विष्टरार्थं कुशान् दत्त्वा सम्पूज्यार्घ्यं विधानतः । कुर्य्यादावाहनमिति ।

नागरखण्डेऽपि । गन्धपुष्पैश्च सम्पूज्येत्याद्यभिधायावाहनमुक्तं । निमन्त्रणानन्तर्य्यन्तु बहुशास्त्रसम्मतमित्याद्रियते ।

आह छागलेयः ।

विष्टरार्थमृजून्दर्भान् प्रदायापस्तथैव च ।
आवाहयेदनुज्ञातो विश्वेदेवाननुस्मरन् ॥

अत्र दर्भान् प्रदायेत्यनेन दर्भासनदानस्यावाहनात् पूर्वकालतायामभिधीयमानायामपि स्मृत्यन्तरानुसारान्मध्ये निमन्त्रणानुष्ठानेऽपि पूर्वकालताश्रुतिविरोधाभावः पूर्ववदत्राप्यनुसन्धेयः । 'अनुस्मरन्' इति विश्वेषां देवानामुत्पत्ति-महिम-स्वरूपाणि पूर्वोक्तानि अनुचिन्तयन् ।

'अनुज्ञात इत्यत्र सन्निधानादावाह्याधिष्ठानभावादौचित्याच्च वैश्वदेविकैर्द्विजैरिति विशेषोऽवगम्यते।

उक्तञ्च विष्णुपुराणे।

कुर्य्यादावाहनं प्राज्ञो देवानान्तदनुज्ञया।

तदनुज्ञयेत्यावाहनीयदेवाधिष्ठानभूतद्विजानुज्ञया। तथा च यजमानकर्त्तृकः प्रश्नोऽपि लभ्यते प्रश्नाभावेनुज्ञाप्रसङ्गाविरहात्। प्रश्नानुज्ञयोः स्वरूपन्तु ब्रह्मपुराणे दर्शितं।

देवानावाहयिष्ये तं प्राहुरावाहयेति च।

निरङ्गुष्ठं गृहीत्वा तु विश्वान् देवान् समाह्वयेत्।

'निरङ्गुष्ठमित्यत्र द्विजहस्तमितिशेषः। अन्ये तु विप्राङ्गुष्ठमिति पाठान्तरमाहुः। दक्षिणाचारेण कर्त्तव्यमिति वचनाच्च दक्षिणाङ्गुष्ठमिति ज्ञेयं। 'गृहीत्वा' निजदक्षिणकरेण धृत्वा। 'देवानावाहयिष्य इति यजमानेन वैश्वदेविकद्विजान् प्रति प्रश्ने कृते तं यजमानं प्रत्यावाहयेति ते विप्रा ब्रूयुरित्यर्थः। अतः प्रश्नवाक्ये देवानित्येतस्मात् पूर्वं विश्वानिति पदं प्रयोज्यं।

यत आह कात्यायनः।

आसनेषु दर्भानास्तीर्य्य विश्वान् देवानावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञात इति।

पृच्छति यजमानः, अनुज्ञातोद्विजैः।

अत्र चेष्टिश्राद्धे क्रतुर्दक्षः सङ्कीर्त्त्यौ वैश्वदेविक इत्येवमादिवचनार्थवत्त्वार्थं विश्वान् देवानित्येतस्मात् पूर्वं क्रतुदक्षादिके द्वे द्वे विश्वेषां देवानां विशेषनामनी तत्तच्छ्राद्धकर्त्ता प्रयोज्ये, ते च द्वन्द्वसमासेनेति

देवताप्रकरणे वर्णितं द्वितीयया च विभक्त्येति विभक्तिप्रकरणे स्थितं । बहुवचनान्ते चेति देवताप्रकरण एवोक्तं। इहापि विश्वान् देवानिति बहुवचनान्तपदसामानाधिकरण्यार्थं तदन्ते एवेति गम्यते । तथा च पार्वणादिषु पुरूरव आर्द्रवःसंज्ञकान् विश्वान् देवानावाहयिष्ये इत्यादि-प्रकारकं प्रश्नवाक्यं निष्पद्यते । येषान्तु विशेषनामज्ञानं नास्ति तैस्तु विश्वान् देवानावाहयिष्य इत्येतावन्मात्रं प्रयोज्यं।

सहितानां देव-पितृणां आवाहनप्रश्नोत्तरे प्रार्थनाविशेषञ्चाह पैठीनसिः ।

देवांश्च पितृंश्चावाहयिष्य इत्यनुज्ञाप्य सौम्याः सन्त्वित्युक्त्वा अग्नौ करिष्यामीति अनुज्ञाप्येति ।

सौम्याः सन्त्विति प्रार्थनानुरूपं सौम्याः सन्त्वित्येव द्विजानां प्रतिवचनमनुमीयते ।

तथा च शौनकसूत्रे ।

ततोऽनुज्ञापयेद्देवांश्च पितृंश्चावहयिष्यामीत्यावाहयेत् । सौम्यास्ते सन्त्वित्यनुज्ञातः पूर्वं देवानावहयेत् ।

अनुज्ञातो द्विजैरिति शेषः ।

पिप्पलादसूत्रेऽपि ।

देवांश्च पितृंश्चावाहयिष्य इत्यनुज्ञाप्यावाहयेत् सौम्याः सन्त्वि-त्युक्ते पूर्वं देवानावाहयेत् ।

अयञ्च प्रश्नो यवहस्तेन यजमानेन कार्य्य इत्याह यमः ।

यवहस्तस्ततोदेवान् विज्ञाप्यावाहनं प्रति ।
आवाहयेदनुज्ञातो विश्वेदेवा स इत्यृचा ॥

देवान् विज्ञाप्येति वैश्वदेविकद्विजान् सविनयं यथोक्तप्रकारेन पृच्छेदित्यर्थः। अत्र देवानां सयवा दर्भा इति परिभाषया सदर्भयवयुक्तहस्त इति ज्ञेयं। तद्युक्तता च हस्तस्य तेषामावाहने साधनत्वं कर्त्तुं। आवाहनञ्च प्रादक्षिण्येन कार्य्यं।

अतएवोक्तं भविष्यत्पुराणे।

आवाहयेद्यवैर्द्देवानपसव्यं तिलैः पितॄन्।

यवैरिति तृतीयया यवानामावाहने साधनत्वमुक्तं। तच्च वक्ष्यमाणावाहनाङ्गभूतविकिरणद्वारा। अपसव्यमित्यनेन पितृव्यप्रादक्षिण्यविधानात् प्रादक्षिण्येन देवानिति सूचितं। अत्र विनाशप्रतिबन्धार्थं शिष्टाचारपरिपालनाय आर्जवेन परमसम्बोधनरूपकार्य्यनिष्पत्त्यये च प्राङ्मुखोपविष्टवैश्वदेविकद्विजसम्मुखतया प्रश्नकर्त्तव्यता यद्यपि प्रतिभाति तथाप्युदङ्मुखत्वविधिबलेन सा त्याज्या। उक्तं हि कूर्मपुराणे।

ततस्त्वावाहयेद्देवान् ब्राह्मणानामनुज्ञया।
उदङ्मुखो यथान्यायं विश्वेदेवास इत्यृचा॥

अत्र ह्युदङ्मुखत्वस्यावाहनभावनया साङ्गया सह सम्बन्धोऽवगम्यते अतः प्रश्नोऽप्युदङ्मुखेनैव कार्य्यः। स चायं वैश्वदेविकपङ्क्तिमूर्धन्यमेकं तत्पङ्क्तिभाजः सर्वान् वा प्रति कार्य्यः।

इत्यावाहनविधि-प्रश्नानुज्ञाः।

अथ मन्त्रादयः पदार्थाः।

तत्र मार्कण्डेयपुराणे।

पवित्रकाणि दत्त्वा च तेभ्योऽनुज्ञामवाप्य च।

कुर्य्यादावाहनं प्राज्ञो देवानां मन्त्रतो द्विजः॥

'पवित्रकाणि' अर्घ्यपात्रस्थितानि, दत्त्वा द्विजपाणाविति शेषः। एतच्च येषां द्विजाग्रतोऽर्घ्यपात्रस्थापनानन्तरमावाहनं तन्मतेनेति वेदितव्यं। 'मन्त्रत' इति मन्त्रेण।

केन मन्त्रेणेत्यपेक्षायामाह याज्ञवल्क्यः।

आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा।

'यवैरन्ववकीर्य्येति' आवाहनं नाम देवतायाः स्वस्थानात् कर्मदेशं प्रति प्रेषणानयनं, तस्य च प्रकाशिकेयमृक् 'यवैरन्ववकीर्य्येति' ब्राह्मण-हस्तमङ्गुष्ठस्थोन्मुच्य स्वकरस्थितं कुश-यवं द्विजानां पुरतोभुवि प्रदक्षिणं विकीर्य्येत्यर्थः। केचित्त्वावाहनमन्त्रं पठन्तो ब्राह्मणशरीर एवार्च्चन-प्रकारेण यवविकिरणं कुर्वन्ति।

तथा च भर्तृयज्ञः।

विश्वेदेवास आगतमन्त्रेणानेन पार्थिव।
तेषामावाहनं कार्य्यमक्ततैश्च शिरोऽन्तत इति॥

दक्षिणपदात् प्रभृति शिरःपर्य्यन्तमित्यर्थः, तत्प्रकारस्तु वक्ष्यते। आह कात्यायनः।

विश्वेदेवास आगतेत्यनयावाह्यावकीर्य्य विश्वेदेवाः शृणुतेममिति जपित्वेति।

विश्वेदेवास आगत शृणुताम इमं हवं इदं वर्हिर्निषीदतेत्यन-याचा, 'आवाह्य' आवाहनं कृत्वा, तदनन्तरं विश्वेदेवाः शृणुतेमं हवं मे ये अन्तरिक्षे ये उपद्यविष्ठ ये अग्निजिह्वा उतवा यजत्रा आसद्या-स्मिन् वर्हिषि मादयध्वं इत्येतामृचं कृताञ्जलिर्जपेत्।

पाद्ममात्स्ययोस्तु पुराणयोरेतन्मन्त्रजपानन्तरं समन्त्रकं यव-विकिरणमुक्तं ।

विश्वेदेवास इत्याभ्यामावाह्य विकिरेद्यवान् ।
यवोसि धान्यराजस्त्वं वारुणो मधुमिश्रितः ।
निर्णोदः सर्वपापानां पवित्रमृषिसंस्तुतं ॥

अत्राभ्यामिति द्विवचनात् ऋग्द्वयमावाहनसाधनत्वेनोक्तमिति गम्यते । तदनन्तरं यवविकिरणं । यवप्रकाशनद्वारकस्य तद्विकिरणे यवोसीत्यादि मन्त्रोप्युक्तः ।

यमेन तु विकिरणे प्रादक्षिण्यं मन्त्रान्तरञ्चोक्तं ।
विश्वेदेवाः शृणुतेति जप्त्वादाय ततोऽक्षतान् ।
ओषधय इति मन्त्रेण विकिरेत्तु प्रदक्षिणं ॥

अत्र प्रतीकेन ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसीत्येव मन्त्रो दर्शितः ।

ब्रह्मपुराणे चावाहने मौनं मन्त्राश्चोक्ताः ।

ततो मन्त्रं जपेन्मौनी विश्वेदेवास आगत ।
द्वितीयञ्च जपेन्मन्त्रं विश्वेदेवाः शृणुतेति च ॥
जपेत्तृतीयं मन्त्रन्तु पौराणं पुण्यवर्द्धनं ।
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ।
ये यत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

अत्र यस्तृतीयो मन्त्र उक्तः स वैश्वदेविकोत्पत्तिविशेषनामान-भिज्ञं प्रति वेदितव्यः । तथा च विश्वेषां देवानां उत्पत्तिध्यानं नामानुकीर्त्तनं चाभिधायोक्तं भविष्यत्पुराणे ।

अजानन् श्लोकमेकन्तु पठेद्विप्रसमीपतः ।
सदैवेषु तु सर्वेषु श्राद्धेष्वादौ सकृद्बुधः ॥

आगच्छन्तु महाभागा इत्यादि पूर्ववत्। 'अजानन्निति वैश्वदेविकीमुत्पत्तिं विशेषनामानि वा अजानन्निति व्याख्येयं।
तथा च शङ्खः ।

नामश्चैव तथोत्पत्तिं न विदुर्ये द्विजातयः ।
श्लोकमेतं पठेयुस्ते ब्राह्मणानां समीपगाः(१) ॥

आगच्छन्तु महाभागा इत्यादि। अनेन चैतद्विज्ञायते, यैरेषामुत्पत्तिर्विशेषनामानि च ज्ञायन्ते तैरुत्पत्तिमनुस्मरद्भिर्विशेषनामानि च प्रयुञ्जानैरावाहनं कार्य्यमिति। उत्पत्तिस्त्वेषां "दक्षकन्यायां विश्वायां धर्माज्जातेति देवताप्रकरणे दर्शिता। नामप्रयोगस्त्वेवं। पुरुरव-आर्द्रवःसंज्ञका इत्युच्चार्य्य विश्वेदेवास आगतेत्यादिमन्त्रोच्चारणं कर्त्तव्यमिति । मानवे श्राद्धकल्पे "विश्वान् देवानावाहयिष्ये इत्युक्त्वा ब्राह्मणैरभ्यनुज्ञातः "विश्वेदेवा ऋतावृधः-विश्वेदेवासो अस्त्रिध इति यवान् प्रकिरेत्। एतन्मन्त्रद्वयं लिख्यते। विश्वेदेवा ऋतावृध-ऋतुभिर्हवनश्रुतः जुषन्तायु । ज्यम्पयः, विश्वेदेवासो अस्त्रिध एहि मायासो अद्रुहः मेधं जुषन्त वह्नय इति। अत्र वैश्वदेविकब्राह्मणानेकत्वेऽपि न प्रतिब्राह्मणमावाहनावृत्तिः सकृदावाहनेनैवानेकब्राह्मणाधिष्ठाने देवतासन्निधानसम्भवात्। आवाहनादूर्ध्वन्तु प्रतिब्राह्मणं देवतासन्निधानात् ब्राह्मणभेदेन देवताया अप्यौपाधिको भेदो भवति, तेनावाहनोत्तरकाले देवताराधनार्थं यवावरोपणादिसन्निपत्योपकारकं

(१) समीपत इति ग० ।

क्रियते तत्सर्वं पुरोडाशप्रथनादिवत् प्रतिब्राह्मणमावर्त्तनीयं। सन्निपत्योपकारके आवृत्तिं विना ब्राह्मणान्तरे कार्य्यासिद्धेः। "विश्वेदेवाः शृणुतेत्यादिमन्त्रजपस्त्वावाहनोत्तरकाले क्रियमाणोऽयारादुपकारकत्वेन सकृत्क्रियमाण एव सर्वोपकारजननसमर्थो भवतीति नावर्त्तत इति।

इति मन्त्रादयः पदार्थाः। इत्यावाहनं।

अथोपवेशन-संवेशन-पाद्यार्घ्याचमनीयानि देवानां।

महाभारते।

विश्वान् देवान् समाहूतान् प्राक्प्रदत्ते कुशासनं।
मनसा निर्दिशन् विद्वान् प्रणिपत्योपवेशयेत्॥
इहासने महाभागाः समाध्वमिति कीर्त्तयन्।
संवेशयेत्ततस्तान् वै सुखं संविशतेति च॥

संवेशनमिह दूराध्वलङ्घनात् श्रान्तस्य विश्रान्तये क्षणमात्रं निर्निमेषं शयनं।

अत्रैवं प्रयोगः।

यज्ञोपवीती प्राङ्मुखो दक्षिणं जान्वाच्य आवाहनविहितसन्निधानात् द्विभुजान् शरशरासनसनाथपाणीन् मनोहरहार-केयूर-किरीट-कटक-कुण्डलादिमण्डितावयवान् परिहितमहार्हपरिधानान् सुरभिसन्तानप्रसूनपरिष्कृतान् विविधगन्धानुलेपननेपथ्यान् विजितजातरूपसम्पदुपहसितकन्दर्पदर्पान् पुरतः पश्यन्निव पूर्वोपकल्पितं दर्भासनं बुद्ध्वा समुद्दिश्य ॐ इहासने महाभागाः पुरूरव-आर्द्रवः-संज्ञका विश्वेदेवाः समाध्वमित्यनेन मन्त्रेणोपवेशयेत्। ततः ॐपुरूरव-आर्द्रवःसंज्ञका विश्वेदेवा इह सुखं संविशतेति संवेशयेत्।

केचित्तु "इदं बर्हिर्निषीदत मादयध्वमिति लिङ्गादेतयोरेव मन्त्रयो र्विनियोगं मन्यन्ते। पाद्यादीनि तु शौनकाथर्वणस्वीकृते कौशिकप्रणिते श्राद्धकल्पे आवाहनानन्तरमुक्तानि। अथ यज्ञोपवीती सावित्र्योदपात्रमभिमन्त्र्य विश्वेभ्यो देवेभ्यः पाद्यमर्घ्यमाचमनीयमिति ब्राह्मणहस्तेषु निनयेत्। उदकपूर्णपात्रं 'उदपात्रं'। उदकपूरणञ्च "शन्नोदेवीरित्यादिना मन्त्रेण कर्त्तव्यं। तथा च पिप्पलादाथर्वणसूत्रे शन्नोदेवीरितिपूर्णं सावित्र्योदपात्रमभिमन्त्र्य विश्वेभ्यो देवेभ्यः पाद्यमर्घ्यमाचमनीयमिति द्विजकरे निनयेदिति। 'सावित्री' तत्सवितुर्वरेण्यमित्यादिका सवितृदेवत्या ऋक्। शन्नोदेवीरितिप्रतीकगृहीतोमन्त्रः संलिख्यते। शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु न इति।

अथ विस्तरेणार्घ्यनिरूपणं।

अर्घ्योनामार्हणीयानां पुरतः सम्माननार्थः प्रशस्तद्रव्यप्रक्षेपः। तत्र द्रव्यविशेषविशिष्टो वैश्वदेवार्घ्यविधिर्वाराहपुराणे।

विष्टरार्थं कुशान् दत्त्वा सम्पूर्य्यार्घ्यं विधानतः।
यवाम्बुना तु देवानां दद्यादर्घ्यंविधानवित्॥

'सम्पूर्य्यार्घ्यं' अर्घ्यार्थं द्रव्यं पात्रे संभृत्य। अत्र याज्ञवल्क्यादिभिरावाहनोत्तरकालमर्घ्यपात्रसम्पूरणमुक्तं। वैजवापादिभिस्त्वावाहनात पूर्वकालं।

विष्णुपुराणेऽपि पूर्वमुक्तं।

विष्टरार्थं कुशान् दत्त्वा सम्पूर्य्यार्घ्यं विधानतः।
कुर्य्यादावाहनं प्राज्ञो देवानां तदनुज्ञया।
यवाम्बुना च देवानां दद्यादर्घ्यं विधानवित्॥

मार्कण्डेयपुराणेऽपि ।

विष्टरार्थं कुशान् दत्त्वा सम्पूर्ण्यार्घ्यान् विधानतः ।
पवित्रपाणिः(१) दत्त्वा च तेभ्योऽनुज्ञामवाप्य च ॥
कुर्य्यादावाहनं प्राज्ञो देवानां मन्त्रतो द्विजः ।
यवाम्भोभिस्ततश्चार्घ्यं दद्याद्वै वैश्वदेविके ॥

अत्रार्घ्यपात्रोपरि पवित्राणि स्थापनीयानीति वक्ष्यते । तानि पवित्राणि ब्राह्मणहस्तेषु दत्त्वा ब्राह्मणेभ्यश्चावाहनानुज्ञां लब्ध्वा आवाहनं कुर्य्यादित्यर्थः ।

इति द्रव्यविशिष्टोऽर्घ्यदानविधिः ।

अथ पात्रादिसंस्कारः ।

तत्र तावत्पात्रसंस्कार्य्यता उक्ता ब्रह्माण्डपुराणे ।

सौवर्णराजतताम्रोजमणिपात्राण्यथापि वा ।
अर्घ्यार्थं संस्करोत्येव शुभम्पत्रपुटादि वा ॥

'सौवर्णं' सुवर्णनिर्मितं, 'राजतं' रजतसम्भवं । तच्च पित्र्य एव कर्मणि प्रयोज्यं दैवे तन्निषेधदर्शनात् ।

तथा च राजतमधिकृत्य मत्स्यपुराणे ।

शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभं ।
अमङ्गलं तद्यत्नेन देवकार्य्येषु वर्जितं ॥

'शिवनेत्रोद्भवं' रुद्राश्रुसम्भवं । "यदश्रु अशीर्य्यत तद्रजतं हिरण्यमभवदिति तैत्तिरीयश्रुतेः । अश्रुप्रभवत्वादेवामङ्गलं ।

अतएव पित्र्य एव कर्मणि राजतस्य प्राशस्त्यमाह वैजवापः ।

(१) पवित्रकाणीति ख० ।

राजतानि प्रशस्तानि पित्र्ये हैमानि दैविके ।
अपिवा ताम्रपात्राणि दैवे पित्र्येऽर्घ्यकर्मणि ॥

अत्रोत्तरार्द्धेऽपि प्रशस्तानीत्यनुषज्यते ।

'आब्जं' ताम्रमयं । रसशास्त्रे कमलनाम्नां ताम्रवाचित्वप्रसिद्धेः । 'मणिपात्राणि' माणिक्य-मरकत-स्फटिकादिरत्ननिर्मितानि पात्राणि । 'पत्रपुटाः' पलाशपत्रकृतानि पात्राणि । 'यज्ञियं' यज्ञियवृक्षमयं । पलाशाश्वत्थोदुम्बर-विकङ्कत-काश्मर्य्य-विल्व-खदिर-शमीप्रभृतयो यज्ञियवृक्षाः । आदिशब्दादन्यान्यपि पात्रप्रकरणोक्तानि पात्राणि संगृह्यन्ते । 'संस्करोति' संस्कुर्य्यात् । वर्त्तमानापदेशस्याप्यप्राप्तेऽर्थे । अग्निहोत्रं जुहोतीत्यादिवद्विधायकत्वाभ्युपगमात् । 'अर्घ्यार्थमित्यर्घ्यं निष्पादयितुं । अत्र यद्यप्यसंस्कृतैरपि पात्रैरर्घ्यस्वरूपं निष्पद्यते, तथापि तद्विशिष्टं कर्त्तुमसंस्कृतैर्न शक्यत इति तदर्थं संस्कारः कर्त्तव्यः, स च सम्मार्जनासादन-प्रोक्षण-पवित्रोपधानस्वरूपः । आसादिते च पात्रे जलादिभिः सम्पूरणीये ।

तदाह प्रजापतिः ।

सौवर्णं राजतं खाड्गं ताम्रं मणिमयं तथा ।
यज्ञियं चमसं वापि अर्घ्यार्थं पूरयेद्बुधः ॥

सौवर्णमित्याद्येकवचनमविवक्षितं । पात्रानेकत्वस्य प्रतिपात्रञ्च पूरणविधेर्वक्ष्यमाणेषु स्मृत्यन्तरवचनेषु दर्शनात् । पात्रानेकत्वेप्येकैकस्य पृथक् पृथक् पूरणकर्त्तव्यतापरश्चैकवचनं । एतच्च पात्रपूरणं पात्रयोर्दर्भ-पवित्रे निधाय कर्त्तव्यमिति पात्रद्वित्वसहितपूरणेतिकर्त्तव्यताविधिपूर्वकमाह याज्ञवल्क्यः ।

यवैरन्ववकीर्य्याथ भाजने सपवित्रके ।

शन्नोदेव्या पयः क्षिप्त्वा यवोसीति यवांस्तथा ॥

यवैरन्वकीर्य्येत्यावाहनेतिकर्त्तव्यताप्रतिपादकत्वेन पूर्वमेव व्याख्यातं। अथवा भाजने सपवित्रक इत्येतच्छम्भुना व्याख्यातं। सपवित्रे भाजने कर्त्तव्ये वैश्वदेविकार्घ्यार्थं। तत्र च शन्नोदेवीरभिष्टय इत्यनयार्चा उदकं निक्षिप्य यवोसीतिमन्त्रेण यवान्निक्षिपेत्।

अत्र केचिदाहुः।

अर्हणीयदेवतैक्यादर्घ्यैक्ये तदर्थस्य पात्रस्यैकत्वमेव न्याय्यं। तथा च भाजने इति सप्तम्येकवचनमेवोचितं न विभक्त्यन्तरद्विवचनमिति तदयुक्तं।

देवतैक्येपि तदधिष्ठानभूतब्राह्मणानेकत्वे प्रत्यधिष्ठानं देवताध्यासादौपाधिके तद्भेदे पात्रभेद एव न्याय्यः। नन्वेवं तर्हि द्विब्राह्मणपक्ष एवार्घ्यपात्रद्वित्वं ब्राह्मणाधिक्ये तु तदाधिक्यमपि प्राप्नुयात्। भवेदेवं यद्यधिष्ठानोपाधिकदेवताभेदस्य स्वतन्त्रस्यैव पात्रभेदहेतुत्वमुच्यते। न तु तदिहोच्यते। किन्तु पात्रैकत्वापादकदैवतैक्यरूपन्यायनिराकरणद्वारा संख्याविशेषविशिष्टपात्रभेदप्रतिपादकप्रमाणानुग्राहकत्वेन परतन्त्रस्यैव सतः। तच्चानुग्राह्याविरोधेन व्यवतिष्ठते। अतो द्विब्राह्मणपक्षे तदधिकद्विजपक्षेऽपि वा "भाजने सपवित्रक इति द्विवचनात् पात्रद्वित्वमेव।

स्पष्टं च पात्रद्वित्वं पाद्म-मात्स्ययोरुक्तं।

विश्वेदेवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकं।

पूरयेत् पात्रयुग्मन्तु स्थाप्यदर्भ-पवित्रके।

शन्नोदेवीत्यपोदद्याद्यवोसीतियवानपि ॥

एवञ्च सत्येकब्राह्मणपक्षेऽप्यर्घ्यपात्रद्वित्वमेव । न चानुग्राहकन्यायविरहात्तन्नेति वाच्यं। वचनस्यानुग्राहकापेक्षाविरहात्। नापि चाचारात्तत्र पात्रैकत्वं, आचारात् स्मृतेर्बलीयस्त्वात्। न चैकैकस्य तु विप्रस्य अर्घ्यपात्रं विनिक्षिपेदिति प्रचेतोवचनेनापि ब्राह्मणसंख्यया पात्रसंख्योपादानमवगम्यते, अस्य प्रतिब्राह्मणमर्घ्योदकप्रक्षेपमात्रविधिना कृतार्थत्वात्। अर्घ्यं पात्रे विनिक्षिपेदित्यस्मिंस्तु पाठे दैवे द्विब्राह्मणविषयत्वेन पित्र्ये त्रिब्राह्मणविषयत्वेन चरितार्थत्वात्।

मानवमैत्रायणीयास्त्वेकमपि पात्रमामनन्ति ।

त्रीणि पात्राण्युपकल्पयेत् द्वे वैश्वदेविके एकैकमुभयत्र वेति ।

अयञ्च पात्रैकत्वविधिरेकब्राह्मणपक्षे अनेकब्राह्मणपक्षेऽप्यनेकपात्रालाभविषयत्वेन व्याख्येयः । अत्र पवित्रकरणे मन्त्रमर्घ्यपात्रोपरि पवित्रनिधानञ्चाह पारस्करः ।

पवित्रे स्थ इति पवित्रं कृत्वा पात्रे निधाय च ।
शन्न इत्यपोऽनिनयेत् यवान् पित्र्ये तिलांस्ततः ॥

तत एव वैश्वदेविकानन्तरं करिष्यमाणे पैत्रे कर्मणीत्यर्थः ।

प्रचेता अपि ।

पवित्रे स्थ इति मन्त्रेण पवित्रे कारयेद्बुधः ।
ते निधायार्घ्यपात्रेषु शन्नोदेवीत्यपः क्षिपेत् ॥

पवित्रे इति प्रतीकोपदिष्टं शाखाभेदेन व्यवस्थितं मन्त्रद्वयं समग्रं दर्भप्रकरणे दर्शितं । अत्र पवित्रप्रातिपदिकं विधिविशेषच्छिन्नायां दर्भशिखायां वर्त्तते, ततश्च तदुपरि प्रयुज्यमानं द्विवचनन्तद्गतं द्वित्वमेवाभिधत्ते, अतः पवित्रे स्थ इति द्विवचनयुक्तो मन्त्रोयद्यपि द्वित्व-

युक्ते वैश्वदेविक एव पवित्रे मुख्यत्वान्वितः त्रितयुक्ते पित्र्ये, तथापि तत्करणेऽप्यसौ प्रयोज्य एव, तत्रापि कात्यायनेनैतद्विनियोगस्य प्रतिपादितत्वात्। "कुशौ समावप्रकीर्णावग्रानन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति त्रीन् वेति। वाजसनेयिब्राह्मणेऽपि तत्र विनियोगो दृश्यते। तत्र "अथ पवित्रे करोति पवित्रे स्थो वैष्णव्यावित्युक्ता अथापि त्रीणि स्युरित्युक्तं। पवित्रत्रये प्रयुज्यमानस्यायं बहुवचनोहमन्तरेणैव प्रयोज्यः न प्रकृतावपूर्वत्वादिति कात्यायनेन प्रकृतौ प्रयुज्यमानेषु मन्त्रेषूहस्य निषिद्धत्वात्। एकोद्दिष्टे त्वेकस्मिन्नेव पवित्रेऽतिदेशप्राप्तत्वादूहितैकवचनयुक्त एवायं मन्त्रः प्रयोज्यः। अत्र पात्रेष्विति बहुवचनं न विकल्प्यमानसौवर्णादिनानाजातीयपात्रबहुत्वापेक्षया। एतच्च पवित्रद्वयं प्रतिपाद्यमन्यदन्यन्निधेयं। तथा च चतुर्विंशतिमते।

द्वे द्वे शलाके देवानां पात्रे कृत्वा त्वपः क्षिपेत्।

कूर्मपुराणे।

द्वे पवित्रे गृहीत्वास्य भाजने क्षालिते पुनः।
शन्नोदेवीर्जलं क्षिप्ता यवोऽसीति यवांस्तथा॥

भाजने अस्य क्षिप्ता क्षालिते सम्मार्ज्याद्भिः प्रक्षालिते, शन्नोदेवी रित्ययं जलप्रक्षेपमन्त्रः पूर्वं दर्शितः।

मानव-मैत्रायणीयसूत्रे मन्त्रान्तरमप्युक्तं। "समं न्यायन्तीत्यप आसिच्येति। समन्यायन्त्युपयन्त्यन्याः समानपूर्वं नद्यः पृणन्ति। तमशुचिशुचयो दीदिवांसमपान्नपातं परितस्थुरापः। यवोऽसीत्ययन्त्वेकेन प्रकारेणावाहनोत्तराङ्गभूते यवविकरण एवोक्तः।

तमेव पाठान्तरेणाह गोभिलः।

यज्ञीयवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो-देवीरित्येकैकस्मिन्नेव यवानावपति यवोसि सोमदेवत्यो गोसवो देव-निर्मितः प्रत्नमद्भिः पृक्तः स्वाहया विश्वान् देवान् प्रीणाहि नः स्वाहेति।

अत्र पात्रभेदादेकैकस्मिन्नेव जलादिप्रक्षेपे सिद्धे प्रतिपात्रं मन्त्रा-वृत्त्यर्थोऽयं विधिरिति गम्यते ।

नागरखण्डे तु यवोसीत्यादिरन्य एव मन्त्रोदर्शितः ।

शन्नोदेवीतिमन्त्रेण अर्घ्यपात्रे विनिक्षिपेत् ।
यवोऽसि यवयास्मेति अक्षतांस्तत्र निर्वपेत् ॥

'अक्षतान्' यवान् । 'तत्रेति निक्षिप्तार्घ्योदकपात्रे। यवोऽसि यव-यास्म द्वेषो यवयारातिरित्यनेन मन्त्रेण निक्षिपेत्।

यवप्रक्षेपानन्तरं गन्ध-पुष्पप्रक्षेपः सौरपुराणेऽभिहितः ।

शन्नोदेव्या जलं क्षिप्त्वा सपवित्रे तु भाजने ।
यवान् यवोऽसीति तथा गन्ध-पुष्पञ्च निक्षिपेत् ॥

गन्ध-पुष्पप्रक्षेपे गन्धद्वारां श्रीश्च त इत्यनयोर्मन्त्रयोर्विनियोग-स्तुविंशतिमते दर्शितः।

द्वे द्वे पवित्रे देवानां पात्रे कृत्वा पयः क्षिपेत् ।
शन्नोदेवीति वै तोयं यवोऽसीति च वै यवान् ॥
श्रीश्च तेति च वै पुष्पं गन्धद्वारेति चन्दनं ।
पुष्प-धूपादिभिः पूज्यदेवपात्राणि मानवः ॥

अत्रादिशब्देन दीपोऽपि संगृह्यते। गन्धाद्युपचारानन्तरमुत्पवन-मुक्तं मानव-मैत्रायणीयसूत्रे ।

सुमनसश्चोत्पूय यवान् प्रक्षिप्येति ।

उदकप्रक्षेपानन्तरं यवोऽसीत्यादिना मन्त्रेण तत्र यवान् प्रक्षिप्य श्रीश्च त इत्यनेन सुमनसः पुष्पाणि निधाय प्रोक्षणीवदुत्पवनं कृत्वा वक्ष्यमाणप्रकारेणार्घ्यदानं कुर्य्यादित्यर्थः। अनन्तरञ्चैतान्यर्घ्यपात्राणि सावित्र्याभिमन्त्रणीयानि, "सावित्र्योदपात्रमभिमन्त्र्य"तिवचनात्। मत्स्य-मात्स्ययोः।

शन्नोदेवीत्यपो दद्यात् यवोऽसीति यवानपि।

गन्ध-पुष्पैस्तु सम्पूज्य वैश्वदेवं प्रति न्यसेत्॥

'वैश्वदेवं प्रति' वैश्वदेविकब्राह्मणानां पुरतः, 'न्यसेत्' अर्घ्यपात्रं स्थापयेत्तच्च स्थापनमर्घ्यपात्रसम्पत्तिरस्त्विति प्रश्नपूर्वकं स्वाहार्घ्या इत्यनेन वाक्येनेत्याह जातूकर्ण्यः।

ततोऽर्घ्यपात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान्।

तदग्रे चार्घ्यपात्रन्तु स्वाहार्घ्या इति विन्यसेत्॥

अस्यार्थः।

दैवार्घ्यपात्रसम्पत्तिरस्त्विति कृताञ्जलिर्दैवब्राह्मणान् पृच्छेत्। ॐ अस्तु दैवार्घ्यपात्रसम्पत्तिरिति ब्राह्मणैः प्रतिवचने कृते सत्यास्तीर्ण-दर्भसहितमेकैकं पात्रमुद्धृत्य स्वाहार्घ्या इत्यनेन वाक्येन वैश्वदेविक-ब्राह्मणानां पुरतः स्थापयेत्। अनन्तरञ्च वैश्वदेविकद्विजहस्ते तत्पात्र-स्थितोदकनिक्षेपः कर्त्तव्यः।

तञ्च समन्त्रकमाह प्रचेताः।

यवोऽसीति यवान् कीर्य्य गन्ध-पुष्पैः सुपूजितं।

या दिव्या इतिमन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्॥

'कीर्य्य' अर्घ्यपात्रे प्रक्षिप्य, गन्ध-पुष्पादिभिः सुपूजितं तत्पवित्र-

स्थितमर्घ्यमर्घार्थमुदकं "या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्ष्या उत पार्थिवीर्या हिरण्यवर्णा यज्ञीयास्ता न आपः संस्योनाः सुहवा भवन्त्वित्यनेन मन्त्रेण श्राद्धकर्त्ता द्विजहस्ते प्रक्षिपेत् । अत्र यदि वैश्वदेविके द्वौ विप्रौ द्वे चार्घ्यपात्रे तदा समं स्यादिति न्यायात् प्रथमविप्रकरे प्रथमपात्रेणार्घ्यः द्वितीयकरे द्वितीयेनार्घ्यो देयः। यदि तु चतुःसंख्यका विप्रास्तदा प्रथमार्घ्यस्थितं पवित्रं प्रथमद्विजकरे दत्त्वा तत्रत्यमर्घ्योदकं स्तोकं तत्करे निक्षिप्य तत्पवित्रमादाय द्वितीयविप्रहस्ते दत्त्वा तत्पात्रस्थितं शेषमुदकं तत्र निक्षिपेत्। एवं द्वितीयार्घ्यपात्रस्थितं पवित्रं तृतीयविप्रकरे दत्त्वा तेन पात्रेण चतुर्थं पूर्ववत् कुर्य्यात् । एवमष्टसंख्यकेषु वैश्वदेविकेषु समं विभज्य पात्रद्वयस्थितमर्घ्योदकं प्रक्षेप्यं । यदा त्वेकमेवार्घ्यपात्रं अनेके च विप्रास्तदा तत्पात्रस्थितमर्घ्योदकं सर्वेषामपि हस्ते पृथक् पृथक् स्तोकं स्तोकं प्रक्षेप्यं । तत्र च प्रतिप्रक्षेपं मन्त्रावृत्तिः ।

अत्र केचिदाहुः ।

सकृदुच्चारणेनैवार्घ्यपात्रस्थद्रव्यप्रकाशनस्य कृतत्वात् पुनः प्रकाशनप्रयोजनाभावेन सकृदेव मन्त्रप्रयोग इति ।

तन्न ।

एकया मन्त्रोच्चारणक्रिययैकब्राह्मणहस्तप्रदेयद्रव्यैकदेशस्य संस्कृतत्वादेकदेशान्तरसंस्कारार्थं मन्त्रावृत्तेर्युक्तत्वात् । प्रतिद्रव्यञ्चास्यावृत्तिः(१) प्रक्षेपकरणमन्त्रत्वे । अनुमन्त्रणमन्त्रत्वे तु सकृदेव प्रयोग इत्येतत् पित्र्यार्घ्यप्रकरणे वक्ष्यमाणन्यायवशात् प्रत्येतव्यं । अथञ्च

(१) इयञ्च स्यादावृत्तिरिति ख० ।

मन्त्रो याज्ञवल्क्यस्मृति-सौर-कूर्मपुराणेष्वप्यस्मिन्नेवार्थे विनियुक्तः। मानवमैत्रायणीयसूत्रे त्वर्घ्यपात्रस्थितयोः पवित्रयोरर्घ्यनिनयनात् पूर्वं विप्रपाणावर्पणमर्घ्यदाने च मन्त्रान्तरं सम्बुद्धियुक्तं वाक्यञ्चोक्तं। पवित्रपाणौ प्रदाय हिरण्यवर्णाः शुचय इत्युक्ता विश्वेदेवा एष वो अर्घ्य इति। हिरण्यवर्णाः शुचयः पावकाः यत्। सुजातः कश्यपो-यास्विन्द्रः। अग्निर्या गर्भं दधिरे विरूपास्ता न आपः संस्योनाः सुहवा भवन्तु। द्विजहस्ते चार्घ्यप्रक्षेपो द्विजस्य पूजां कृत्वा कर्त्तव्यः। अतएव गन्ध-पुष्पैश्च संपूज्येत्यर्घ्यपात्रपूजनमभिधायोक्तं याज्ञ-मात्स्ययोः।

गन्ध-पुष्पैरलङ्कृत्य या दिव्येत्यर्घ्यमुत्सृजेदिति।

अस्य च पूजनस्यार्घ्यपात्रस्थितपवित्रदानानन्तर्य्यं प्रकारविशेषञ्चाह गार्ग्यः।

दत्त्वा हस्ते पवित्रञ्च कृत्वा पूजाञ्च पादतः।
या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्॥

इह "दत्त्वा हस्ते पवित्रन्तु हस्तेष्वर्घ्यं विनिक्षिपेत्" इत्यत्रोपक्र-मोपसंहारगतैकवचन-बहुवचनयोर्विरोधेऽनुपजातविरोधित्वादुपक्रम-स्य तदनुसारेणैवोपसंहारवर्णने न्याय्ये बहुवचनमविवक्षितं। 'पादतः' पादप्रभृतिमूर्द्धान्तं।

तथा च प्रचेताः।

पादप्रभृतिमूर्द्धान्तं देवानां पुष्पपूजनं।

पूजासम्प्रदायस्तु प्रथमं दक्षिणपादे ततः सव्यपादे दक्षिणे जानु-नि सव्यजानुनि दक्षिणे करे सव्यकरे दक्षिणांशे सव्यांशे शिरसीत्येवं

क्रमेण पुष्पनिक्षेपः क्रियत इति । अर्घ्यनिक्षेपश्च मन्त्रान्तेऽर्घ्यवाक्य-मुच्चार्य्य कर्त्तव्यः । तच्च पुरूरवार्द्रवौ वै सङ्कीर्त्त्यौ वैश्वदेविक इत्या-दिवचनात् पुरूरव आदिनामयुक्तं विभक्तिप्रकरणोक्तवैकल्पिकसंबुद्धि-चतुर्थीयुक्तं च प्रयोज्यं ।

चतुर्थीप्रयोगे च लिङ्गदर्शनं ब्रह्मपुराणे ।

कुश-गन्ध-यवैः पुष्पैरर्घ्यं दत्त्वा च सूकरः ।
विश्वेभ्यो देवेभ्य इति ततस्तान् पर्य्यपृच्छत ॥

पितॄनावाहयिष्यामीति, इदं वः पाद्यमर्घ्यञ्चेति वचनादिदं व इत्यपि प्रयोज्यं ।

स्वाहाशब्दश्चात्र प्रयोक्तव्य इत्युक्तं गार्ग्येण ।

स्वधेति चैव मन्त्रान्ते पितॄणां वचनं यथा ।
स्वाहेति चैव देवानां होमकर्मण्युदाहरेत् ॥

'मन्त्रान्ते' इति मन्त्रान्ते प्रयुज्यमानवाक्यावयवत्वेनेत्यर्थः । होम-शब्दोऽत्र त्यागप्रक्षेपरूपत्वादर्घ्येऽपि वर्त्तते ।

नागरखण्डे ।

चन्दनं गन्ध-पुष्पाणि धूपं दत्त्वा यथाक्रमं ।
सपवित्रेषु हस्तेषु दद्यादर्घ्यं समाहितः ।
या दिव्या इति मन्त्रेण स्वाहाकारसमन्वितं ॥

स्वाहान्ते नमःशब्दोऽपि प्रयोज्यः । "नमो देवानामिति श्रुतेः । एतच्च सर्वं वैश्वदेविकमुदङ्मुखेन कार्य्यं ।

तथा च भविष्योत्तरे ।

उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ।

आसनार्घ्यादिकं दद्यात् सर्वमेव यथाविधि ॥

इति विस्तरेणार्घ्यनिरूपणं ।

इह शिष्टाचारानुगृहीतैतद्वचनसन्दर्भनिष्पन्नः पाद्यादिप्रयोगोऽभिधीयते । यथालाभं सुवर्णाद्यन्यतमजातीयद्रव्यनिर्म्मितानि पात्राणि क्षारमृदादिभिः सम्मार्ज्य(१) गुणवतीभिरदोषाभिरद्भिः प्रक्षाल्य वैश्वदेविकद्विजसमीपे प्रोक्षितायां भुवि यज्ञोपवीती निपातितदक्षिणजानुः कर्त्ता प्रागग्रं प्रागपवर्गमुदगपवर्गं वा दर्भप्रकरणोक्तलक्षणान् दर्भानास्तीर्य्य तत्र न्युब्जे द्वे पात्रे समासाद्य प्रोक्ष्योत्ताने कुर्यात् । उत्ताने एव वासादयेत्, अनन्तरञ्चैकैकस्मिन् पात्रे प्रागग्रमुदगग्रं वा पवित्रशब्दवाच्यमृज्वेव कुशद्वयं निधाय शन्नोदेवीरिति देवतीर्थेन शुचि सलिलं निषिच्य पूर्व्वोक्तेन यवोऽसीतिमन्त्रेण यवान्निक्षिप्य ।

गन्धद्वारां दूराधर्षां नित्यपुष्टां करीषिणीं ।

ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियमिति ॥

गन्धं निधाय श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तं इष्टं निषाणामुन्मइषाण सर्वलोकं मइषाणेति पुष्पाणि निधाय तत्पात्रं धूप-दीपाभ्यां संस्कृत्योत्पूय सावित्र्याभिमन्त्र्य ब्राह्मणाभिमुखः कृताञ्जलिः पात्रसम्पत्तिरस्त्विति वदेत् । विप्रैश्चास्तु पात्रसम्पत्तिरित्युक्ते सत्यास्तीर्णदर्भसहितं सपवित्रमेकैकं पात्रं उद्धृत्य स्वाहार्घ्या इत्यनेनार्घ्यनिवेदनवाक्येन वैश्वदेविकद्विजपुरःप्रदेशे स्थापयित्वा पात्रस्थितं पवित्रद्वयं प्रागग्रतयोदगग्रतया वा द्विजकरे निवेश्योक्तप्रकारेण द्विजमभ्यर्च्य कराभ्यां दक्षिणेनैव करेण पात्र-

(१) सम्पूज्येति ग० ।

मुद्धृत्य पूर्ववद्विश्वान् देवाननुध्यायन् या दिव्या इत्यादिकं मन्त्रमुच्चार्य्य पुरूरव-आर्द्रवःसंज्ञका विश्वेदेवाः इदञ्च वः पाद्यं स्वाहा नम इत्येतद्वाक्यं प्रयुज्य देवतीर्थमन्ववनामितेन पात्रेणैकैकस्य द्विजस्य करे तत्पात्रस्थमुदकं निनयेदिति। एवमेवेदं वोऽर्घ्यमेष वोऽर्घ्य इति वा प्रयुज्यार्घ्यं कुर्य्यात्। एवमेवेदं वः आचमनीयमित्याचमनीयं दद्यात्।

इत्युपवेशन-संवेशन-पाद्यार्घ्याचमनीयानि।

---

## अथ गन्धादिदानम्।

तत्र तावद्विधिः।

कूर्म्मपुराणे।

प्रदद्यात् गन्ध-माल्यानि धूपादीनि च शक्तितः।

आदिशब्देन दीपोऽपि गृह्यते।

तथा च विष्णुपुराणे।

सुगन्ध-धूप-दीपांश्च दत्त्वा तेभ्यो यथाविधि।
पितॄणामपसव्येन[१] सर्वमेवोपकल्पयेत्॥

'तेभ्य इति विश्वेभ्यो देवेभ्यः। एतच्च गन्धादिदानमर्घ्यदानोत्तरकालं कर्त्तव्यं।

तथा च वाराहपुराणे।

यवाम्बुना तु देवानां दत्त्वा चार्घ्यं विधानवित्।
सुगन्ध-धूप-दीपांश्च दत्त्वा तेभ्यो यथाविधि॥

मार्कण्डेयपुराणेऽपि।

---

(१) पितॄणामपसव्यञ्चेति ख०।

यवाम्भोऽभिस्ततश्चार्घ्यं दत्त्वा वै वैश्वदेविके ।
गन्ध-माल्यञ्च धूपञ्च दत्त्वा सम्यक् सदीपकं ॥

याज्ञवल्क्येन तु गन्धादिदानस्योदकपूर्वकत्वमुक्तं ।

दत्त्वोदकं गन्ध-माल्यं धूपदानं सदीपकं ।

अत्र "भिक्षादानमपूर्वं ददातिषु चैवं धर्म्येष्विति गौतमेन विष्णुपदिष्टानां सर्वदानानामुदकपूर्वकत्वमुक्तं । अतः करिष्यमाणगन्धादिदानस्योदकपूर्वकतासिद्ध्यर्थोपदेशे ददातिः प्रक्षेपमात्रार्थोऽवगन्तव्यः। अतो दानवाक्यमन्तरेणैव द्विजहस्ते जलं प्रक्षिप्यानन्तरं गन्धं माल्यञ्च दत्त्वा प्रक्षेपमात्रार्थत्वेन प्रयुक्तोऽपि दत्त्वेतिशब्दोऽनुषज्यमानः स्वरूपेण विपरिणतोऽपि परिणतार्थो ग्राह्यः। दत्त्वेत्यस्य प्रयोगान्तरस्यानुसन्धेयं। अतोविश्वान् देवानुद्दिश्य दर्शयिष्यमाणेन वाक्येनानुलेपनार्थं ब्राह्मणकरे चन्दन-कुङ्कुमादिविहितसुरभिद्रव्यकल्कः प्रदेयः। गन्धादिदानञ्च देवतोद्देशेनैव तदधिष्ठानभूतद्विजकरे कर्त्तव्यं। न तु द्विजसम्प्रदानकमिति पूर्वमेव विस्तरेणाभिहितं । गन्धानन्तरमुदकं दत्त्वा मल्लिकादिविहितमाल्यं प्रदेयं। उपलक्षणञ्चैतत् पुष्पवदुपयोज्यानां विहितपात्राणां। अनन्तरं चोदकं दत्त्वा तथैव गुग्गुलुप्रभृतिविहितद्रव्यजन्मनो धूपस्य दानं कर्त्तव्यं। 'सदीपकं' दीपदानसहितं। एतदप्युदकपूर्वकं कर्त्तव्यं । अस्यानन्तरमाच्छादनदानं कर्त्तव्यं। अत एवाह शौनकः ।

एतस्मिन् काले गन्ध-माल्य-धूप-दीपाच्छादनानां सम्प्रदानं ।

एतस्मिन् काल इत्यर्घ्यदानानन्तरक्रमेण गन्धादीनां आच्छादनान्तानां दानं कर्त्तव्यं। 'आच्छादनं' वस्त्रं ।

सौरपुराणेऽप्युक्तं ।

प्रदद्याद्गन्ध-माल्यानि धूप-वासांसि शक्तितः ।

विष्णुधर्म्मोत्तरे लाच्छादनदानानन्तरं भूषणानामपि दानमुक्तं ।

निवेद्य विप्रेषु ततः पाद्यार्घ्यौ प्रयतः क्रमात् ।
गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः ।
अर्चयेद् ब्राह्मणान् भक्त्या श्रद्दधानः समाहितः ॥
आदौ समर्चयेद्विप्रान् वैश्वदेवे निवेशितान् ।
निवेशितांश्च पित्रर्थे ततः पश्चात् समर्चयेत् ॥

विहित-निषिद्धगन्ध-पुष्पादिविवेकस्तु परिभाषायामेव कृतः ।

इति गन्धादिदानविधिः ।

अथ गन्धादिदानेतिकर्त्तव्यता ।

तत्र तावत् प्रदत्तस्य गन्धस्य ब्राह्मणोपलेपनोपयोज्यत्वमुक्तं ब्रह्मपुराणे ।

श्वेतचन्दन-कर्पूर-कुङ्कुमानि शुभानि तु ।
विलेपनार्थं दद्यात्तु यच्चान्यत् पितृवल्लभं ॥

विलेपनञ्च द्विजानां श्राद्धकर्त्ता कुर्य्यात् त एव वा कुर्य्युः । अत्र मन्त्रविधिविशेषञ्चाह व्यासः ।

विपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।

गन्धद्वारेतिमन्त्रेण ब्राह्मणहस्ते गन्धान् प्रदाय तैर्गन्धैर्विगतपवित्रकरः श्राद्धकर्त्ता विप्रान् पूजयेत् । भाल-गल-वक्षः-कुक्षि-कक्षा-द्यङ्गेषु विलिम्पेदित्यर्थः । पवित्रशून्यताविधिश्चायं विलेपनं कुर्वतः श्राद्धकर्तुरेव न पुनः करगृहीतगन्धैः स्वाङ्गविलेपनं कुर्वतां द्विजाना-

मपि। अतएव वृद्धशातातपेन श्राद्धकर्त्तर्य्येव विलेपनकारिणि सपवित्र-करे दोषोऽभिहितः।

पवित्रन्तु करे कृत्वा यः समालभते द्विजान्।
राक्षसानां भवेत् श्राद्धं निराशाः पितरो गता इति॥

'समालम्भनं' गन्धैर्विलेपनं।

अत्र कश्चिदाह।

पवित्रन्तु करे कृत्वेत्यत्र सग्रन्थिकपवित्रधारणस्य निषेधः। न तु ग्रन्थिरहितस्यापि यतो विपवित्रकरैरिति व्यासवचनेन विविधपवि-त्रता विधीयते न तु विगतपवित्रतेति। तदेतदयुक्तं। कल्पनामात्र-प्रसूतत्वात्। यदपि तेनैवोक्तं। ब्राह्मणा अपि स्वाङ्गविलेपनं कुर्वाणाः सग्रन्थिकं पवित्रमपकुर्य्युरिति तदप्यमूलत्वादुपेक्षणीयं।

श्राद्धकर्त्तुर्गन्धै ब्राह्मणाङ्गविलेपनं कुर्वतो नियमान्तरमुक्तं देवल-स्मृति-भविष्यत्पुराणयोः।

यज्ञोपवीतं विप्राणां स्कन्धान्नैवावतारयेत्।
गन्धादिपूजासिद्ध्यर्थं दैवे पित्र्ये च कर्मणि॥

विप्राणां यज्ञोपवीतं गन्धाद्यनुलेपनसिद्ध्यर्थमनुलेपको नावतार-येदित्यर्थः।

शातातपोऽपि।

कट्यान्त्रिपुष्करं कृत्वा गन्धैर्य्यस्तु विलिम्पति।
पितृयज्ञे भवेच्छिद्रं निराशैः पितृभिर्गतैः॥

'छिद्रं' श्राद्धविध्वंसिराक्षसादिप्रवेशद्वारं, 'त्रिपुष्करं' उपवीतं। अतोऽनुलेपनशोकार्य्यार्थं स्कन्धादवतार्य्य यज्ञोपवीतं कटिप्रदेशे न

स्थापनीयं । उपलक्षणञ्चैतत्तदुत्तरीयावतारणस्य। तदवतारणे ह्येक-वस्त्रता स्यात्। सा च निषिद्धा।

सव्यादंसात्परिभ्रष्टमम्बरं यस्तु धारयेत् ।
एकवस्त्रन्तु तं विद्याद्दैवे पित्र्ये च वर्जयेत् ॥

तथा ।

नैकवासा न च द्वीपे नान्तराले कदाचन ।
श्रुति-स्मृत्युदितं कर्म कुर्य्यान्नाप्यशुचिः क्वचिदिति ॥

श्राद्धकर्त्तरि ब्राह्मणे वा विलेपनकारिणि येन केनचिदपि ब्राह्मणयज्ञोपवीतावतारणे कृते दोषः शङ्खेनोक्तः ।

उपवीतं कटौ(१) कृत्वा कुर्य्याद्वाचानुलेपनं ।
एकवासास्तु योऽश्नीयान्निराशाः पितरो गता इति ॥

अत्र वर्त्तुलमर्द्धचन्द्राकारं वा तिलकं न कार्य्यं ।

तथा च क्रतुः ।

ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे मालान्तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिं ॥

इह दोषश्रुतिबलेन कल्प्यस्य निषेधस्य कृतोर्द्धपुण्ड्रविध्यबाधेन कल्प्यत्वाद्वर्त्तुलादिपुण्ड्रविषयत्वमेव न्याय्यं । स्कन्धे मालाधारणे दोष स्मरणात् शिरसि धारणाभ्यनुज्ञा गम्यते । शिरस्यपि धार्य्यमानाया माल्यमालायाः प्रदेशविशेषमाह वृद्धमनुः ।

उपवीतित्वमुत्सृज्य कारयेन्नानुलेपनं ।
न नियुक्तः शिखावर्जं माल्यं शिरसि धारयेदिति ॥

---

(१) करे इति ग० ।

'नियुक्तः' श्राद्धे निमन्त्रितोविप्रः ।

विष्णुस्तु पुष्पदानमन्त्रमाह, पुष्पवतीरिति पुष्पमिति । दद्यादिति पूर्व्ववाक्यश्रुतमिहानुषज्यते । पुष्पवतीरितिमध्यप्रतीकेन मन्त्रो विनियुक्तः ।

स च ॐ ओषधयः प्रतिमोदध्वमेनं पुष्पवतीः सुपिप्पलाः । अयं वोगर्भ ऋत्वियः प्रत्नं सधस्थमासदन्निति ।

धूपदाने मन्त्रमाह व्यासः ।

धूपञ्च धूरसीत्युक्त्वेति । धूरसि धूर्व्व धूर्व्वन्तं धूर्व्वन्तं योऽस्मान् धूर्व्वति तं धूर्व्वयं धूर्व्वाम स्त्वेतद्यजुरुक्त्वा धूपं दद्यादित्यर्थः । यद्यपीदं यजुर्धूरभिधाने सामर्थ्याद्दर्शपौर्णमासिकशकटधूरभिमर्शने विनियुक्तं । तथापि धूपदानेऽपि वचनविनियुक्तत्वात् गार्हपत्यमुपतिष्ठत इतिवत् कयाचित् वृत्त्या प्रकृतार्थप्रकाशनं कार्य्यं ।

ब्रह्माण्डपुराणे तु मन्त्रान्तरमुक्तं ।

वनस्पतिरसो दिव्यो गन्धाढ्यः सुमनोहरः(१) ।
आघ्रेयः(२) सर्व्वदेवानां धूपोऽयं प्रतिगृह्यतामिति ॥

धूपस्य व्यजनादिवातेन देयो न हस्तवातेन ।

अतएव शातातपः ।

हस्तवाताहृतं धूपं ये पिबन्ति द्विजोत्तमाः ।
वृथा भवति तच्छ्राद्धं तस्मात्तं परिवर्जयेत् ॥

---

(१) गन्धाढ्यो मधरप्रिय इति ग० ।
(२) आहार इति ग० ।

एवं धूपदानं कृत्वा यथोक्ततैलवर्त्त्यादिप्रवर्त्तितः प्रदीपो दातव्यः। तत्राह व्यासः।

इदं ज्योतिरिति प्रोच्य दीपं दद्यात् समाहितः।

अस्यानन्तरमाच्छादनं दत्त्वा यज्ञोपवीतञ्च यथाशक्त्यलङ्करणञ्च-कमण्डल्वादीनि देयानि। उपानद्दाने तु संकल्पमात्रं तदा, सम्पादनन्तु ब्राह्मणप्रस्थापनकाले एव कर्त्तव्यं। तत्राच्छादनदाने मन्त्रमाच्छाद-नाभावे प्रतिनिधिञ्चाह शातातपः।

युवा सुवासा इति वस्त्रं दद्यात्तदभावे च औपवीतकमिति। युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः तं धीरासः कवय उन्नहन्ति साध्यो३मनसा देवयन्त इत्यनेन मन्त्रेण वस्त्रं दद्यादित्यर्थः।

अत्रिस्तु मन्त्रान्तरमाह

युवं वस्त्राणि मन्त्रेण दद्याद्वस्त्राणि भक्तितः।

मन्त्रस्तु।—युवं वस्त्राणि पीवसा वसाथेयुवोरच्छिद्रामन्तवो ह सर्गाः। अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे इति।

एतेषां च गन्धादिमन्त्राणां दैवे पित्र्ये च साधारण्यमुक्तं भवि-ष्योत्तरे।

गन्धद्वारामित्यनेन गन्धं दद्यात् प्रयत्नतः।
पुष्पवत्या च पुष्पाणि धूरसीति च धूपकं॥
दीपं चेदं ज्योतिरिति दैवे पित्र्ये च कर्मणि।
युवं वस्त्रानीत्यनेन दद्याद्वासांसि भक्तित इति॥

अत्र च मन्त्रोच्चारणानन्तरं गन्धादिदानवाक्यान्युच्चारणीयानि।

तानि च ब्रह्मपुराणे दर्शितानि ।

इदं वः पाद्यमर्घ्यञ्च पुष्प-धूपविलेपनं ।
अयं दीपप्रकाशश्च विश्वेदेवाः समर्प्यते ॥

तथा ।

अयं वो गन्ध इत्युक्ता गन्धं दद्यात् सुशोभनं ।
इदं व. पुष्पमित्युक्ता पुष्पाणि च निवेदयेत् ॥
अयं वो धूप इत्युक्ता तदग्रे तु दहेत्ततः ।
अयं वो दीप इत्युक्ता दीपं हृद्यं निवेदयेत् ॥
अनग्निदग्धं यद्वस्त्रं भवेत् यत्तद्युगं शुभं ।
इदं वो वस्त्रमित्युक्ता वितयं वा निवेदयेत् ।
इदं वो माल्यमित्युक्ता दद्यान्माल्यं सुशोभनमिति ॥

'माल्यं' ग्रन्थितपुष्पाणि ।

अत्र दीयमानगन्धादिस्वीकारकाले ब्राह्मणाभिधेयं देवलेनोक्तं ।

इदं ज्योतिरिति ज्योतिः सुज्योतिरिति तेऽपि च ।
इदं ज्योतिरिति ज्योतिः श्राद्धकर्त्ता निवेदयेत् ॥

'तेऽपि' विप्राः, सुज्योतिरिति ब्रूयुरित्यर्थः । स्वीकारकाले स्वासनं, सुगन्धः, सुपुष्पाणि, सुधूपः, सुदीपः, स्वाच्छादनमिति ब्रूयुरिति च शब्दात् सूचितं ।

अत्र हि गन्धादिदानप्रयोगः ।

यथोक्तोपवीतितिलादिदैवधर्मयुक्तः कर्त्ता प्रथमोपविष्ट-वैश्वदेविक-ब्राह्मणकरे तूष्णीं जलमासिच्य स्वकरेण सुगन्धचन्दनादिकल्क-मादाय गन्धद्वारामित्यादिकं मन्त्रमुच्चार्य्य पुरूरव-आर्द्रवःसंज्ञका

विश्वेदेवा अयं वो गन्ध इत्यभिधाय सिक्तोदके ब्राह्मणहस्तेऽर्पयेत् । एवमेव द्वितीयादिद्विजकरेषु क्रमेणार्पयित्वा पुनः प्रथमद्विजकरे अपो दत्त्वा प्रशस्तं कुसुमाद्युपादाय पूर्वोक्तां पुष्पवतीमृचमुच्चार्य्य पुरूरव आर्द्रवःसंज्ञका विश्वेदेवा इदं वः पुष्पञ्चेत्यभिधाय तत्करे दत्त्वैवमेव क्रमेण द्वितीयकरे दद्यात् । एवमेव पुनरपो दत्त्वा गुग्गुलुप्रभृतिद्रव्यदारुप्रसूतं धूपं धूरसीत्यमुं मन्त्रमुच्चार्य्य पुरूरव-आर्द्रवःसंज्ञका विश्वेदेवा अयं वो धूप इत्यभिधाय क्रमाद्व्यजनादिवातेन ब्राह्मणघ्राणं प्रापयेत् । एवमेव हस्ते जलं प्रदाय इदं वो ज्योतिरिति अयं वो दीपप्रकाश इति वाभिधाय महालोकमण्डलेन दीपमर्पयेत् । एवमेवोदकं दत्त्वा युवा सुवासा इत्यादिकं मन्त्रमुच्चार्य्य पुरूरव-आर्द्रवःसंज्ञका विश्वेदेवा इदं व आच्छादनमित्यभिधाय प्रत्येकमाच्छादनं दद्यात् । अनन्तरं यज्ञोपवीतं दत्त्वा यथाशक्त्याङ्गुलीयकादीनि भूषणानि छत्रादीनि चार्पयेदिति । तदनन्तरं कृताञ्जलिः कर्त्ता विश्वेषां देवानां अर्चनं सम्पूर्णमस्त्विति वैश्वदेविकद्विजान् प्रति वदेत् । तैश्चास्त्वर्चनं सम्पूर्णमिति प्रतिवचने कृते सङ्कल्पसिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति कर्त्ता ब्रूयात् । अस्तु सङ्कल्पसिद्धिरिति विप्रा ब्रूयुः । एतच्च स्मृतिचन्द्रिकाकारेण संग्रहकारोक्तत्वेन प्रमाणीकृतं । अनन्तरं भविष्यत्पुराणोक्तं प्रार्थनाश्लोकमत्यन्तं विनीतः सन् पठेत् ।

मन्त्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां मम ॥

'सम्पूर्णतां यातु' विधिवदस्त्वित्यर्थः । यस्य स्मृत्येत्यादिकं श्लोकं जप्त्वा(१)

(१) पठित्वेति ग० ।

देवताभ्यः पितृभ्यश्चेत्यादिकन्त्रिर्जपेत्। अनन्तरं श्राद्धाङ्गाचमनप्रकरणोक्तमाचमनं कुर्य्यात्।

इति गन्धादिदानेतिकर्त्तव्यता।

इति गन्धादिदानं समाप्तं वैश्वदेवार्चनकाण्डम्,

हेमाद्रिणा श्रियोयेन विनयेन विभूषिताः।
पितृविप्रार्चनस्यैवं काण्डं तेन निगद्यते॥

अथ पित्र्यदर्भासनदानादि।

तत्र याज्ञवल्क्यादिवचनानुसाराद्दर्भासनदानाच्छादनान्तवैश्वदेविकपदार्थकाण्डसमाप्त्युत्तरकालमारम्भणीयमिति पूर्व्वमेवोक्तं। अत्र च वैश्वदेविकद्विजानुज्ञाग्रहणपूर्व्वकत्वमुक्तं पाद्म-मत्स्यपुराणयोः।

अभ्यर्च्य ताभ्यामुत्सृष्टः पितृयज्ञं समारभेदिति।

'अभ्यर्च्य' गन्ध-पुष्प-धूप-दीपाच्छादनैः वैश्वदेविकद्विजौ सम्पूज्य ताभ्यां 'उत्सृष्टः' अनुज्ञातः सन्, कर्त्ता 'पितृयज्ञं' दर्भासनदानाद्यात्मिकां पितृपूजां, अत्रानुज्ञावचनात् प्रश्नोऽपि गम्यते। अतश्च युष्मदनुज्ञया पितृणामर्चनं करिष्य इति कर्त्ता वैश्वदेविकद्विजौ प्रति प्रश्ने कृते कुरुष्वेति ताभ्यां सोऽभ्यनुज्ञातः पित्र्यविप्रेषु पितृ-पितामहादीनामर्चनमारभेत।

तत्र पित्रादिविप्रान् प्रति यथास्वं प्रश्नविशेषो ब्रह्मपुराणे।

आवाहनादितः पूर्वं विश्वेदेवान् प्रपूज्य च।
वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः।
सूर्य्येभ्यस्त्वामहं विप्र भोजयामीति तान् वदेत्॥

'पूर्वं' प्रथमं। 'आवाहनादितः' आवाहनात् प्रभृत्याच्छादना-

क्तेन क्रियाकलापेन, विश्वान् देवान् सम्पूज्य पित्रादिब्राह्मणान् पृच्छेत्। तत्र पितृब्राह्मणं प्रति वसुभ्यस्त्वामहं विप्र भोजयामि, पितामहब्राह्मणं प्रति रुद्रेभ्यस्त्वामहं भोजयामि। प्रपितामहब्राह्मणं प्रति ओँआदित्येभ्यस्त्वामहं विप्र भोजयामीति पृष्ट्वा क्रमेण तथैव मातामहादिविप्रान् पृच्छेत् । सर्वत्र च प्रश्नानुरूपं ओँभोजयेति प्रतिवचनमनुसन्धेयं। अत्र भोजयामीत्यनेन साङ्गभोजनविषय-प्रश्नकरणाद्दर्भासनदानात् पूर्वकालतास्य युक्तैव ।

## तत्र दर्भासनदानं ।

इह स्मृति-पुराणविकल्पसूचोक्तानि पित्र्यासनदानविषयाणि वच-नानि दैविकासनदानवचनैर्विभागानर्हत्वात्तदासनप्रतिपादनावसर एव दर्शितानि ।

गोत्र-सम्बन्ध-नामानुकीर्त्तनकर्त्तव्यतामाह बृहस्पतिः ।

आसने चार्घ्यदाने च पिण्डदानेऽवनेजने ।
सम्बन्ध-नाम-गोत्राणि यथार्हमनुकीर्त्तयेत् ॥

आसनादिग्रहणमावाहनादिपित्र्यकर्मणामुपलक्षणार्थं। सम्बन्धाव-बोधकः पितृ-मात्रादिशब्दः । 'गोत्रं' काश्यप-कौण्डिन्यादि प्रसिद्धं । 'नाम' साङ्केतिकश्चैत्र-मैत्रादि । 'यथार्हं' यथायोग्यं । पित्रादिषु गुरुषु बहुवचनेनेति षष्ठी-चतुर्थीवैकल्पिकप्रयोगस्तु विभक्तिप्रकरणे स्थितः। पित्रादीनां वस्वादिरूपतया ध्यानमनुकीर्त्तनञ्च देवताप्रकरणे च साधितं । "पातयेदितरत् जानु पितृनित्यादिना सव्यजान्वाच्य अर्चनमुक्तं ।

प्राचीनावीतन्तु मार्कण्डेयपुराणे ।

अपसव्यं पितॄणाञ्च सर्वमेवोपकल्पयेत् ।

वाराह-विष्णुपुराणयोरपि ।

पितॄणामपसव्येन सर्वमेवोपकल्पयेत् । उदङ्मुखस्तु देवानामित्यादिना दक्षिणामुखत्वमुक्तं ।

देवलोऽप्याह ।

द्विजातयो यथोद्दिष्टा नियताः स्युरुदङ्मुखाः ।
पूजयेद्यजमानस्तु विधिवद्दक्षिणामुख इति ॥

प्रयोगपद्धतिस्त्वभिधीयते । दक्षिणामुखः प्राचीनावीत्याचितसव्यजानुः द्विजहस्तं वामहस्तेन धृत्वा जल-।तलसमन्वितान् मध्यभङ्गेन द्विगुणीकृतांस्त्रीन् कुशानादाय ॐअमुकगोत्राणाममुकशर्मणामस्मत्पितॄणां सपत्नीकानां वसुरूपाणामिदमासनमित्युच्चार्य्य पितृस्थानोपवेशितानां ब्राह्मणानां प्रत्येकं हस्ते जलमासिच्य कम्बलाद्यासनवामभागस्योपरि पितृतीर्थेन तान् कुशान् प्रक्षिप्य पुनर्द्विजहस्तेऽपः प्रदद्यात् । एवं पितॄणामित्यस्य स्थाने पितामहानामिति, वसुरूपाणामित्यस्य स्थाने रुद्ररूपाणामिति च प्रयुज्योक्तेनैव वाक्येन पितामहेभ्यासनं दद्यात् । एवं पितृनामस्थाने षष्ठीबहुवचनान्तमेकैकस्य मातामहादेर्नाम समुच्चार्य्य स्वस्थाने चैकैकं क्रमेण वस्वादिनाम प्रयुज्य निष्पादिते वाक्यत्रये क्रमेणैवैकैकस्य मातामहादेः स्थाने निवेशितेषु ब्राह्मणेष्वेकैकेन वाक्येनासनं दद्यात् । अत्र कुशप्रक्षेपानन्तरं ॐस्वासनमस्त्विति ब्राह्मणेन प्रतिवचनं कर्त्तव्यं । इह सपत्नीकानामिति तु प्रमीतायामेव पित्रादिपत्न्यां प्रयोज्यं नान्यथा ।

षष्ठीबहुवचनस्थाने तु केचित्तदेकवचनं प्रयुञ्जते तत्पुनर्यथाचारं व्यवस्थया वेदितव्यमित्युक्तं ।

इति पित्र्यासनदानं ।

अथ तृतीयनिमन्त्रणं ।

तदपि च दैवे निमन्त्रणप्रकरणोक्तैरेव वचनैः पित्र्येऽपि विहितं। तच्च प्रथमनिमन्त्रणवद्देवेत्यपि "यथा प्रथममेवं द्वितीयं तृतीयञ्चेत्यापस्तम्बवचनात् सिद्धं। दक्षिणं जानुमालभ्य त्वमयच(१) निमन्त्रित इति मत्स्यपुराणवचनाज्जान्वालम्भपूर्वकमित्यवगतं। अतः पित्र्यविप्रदक्षिणजानुमुपस्पृशन् अमुकगोत्रस्य अमुकशर्मणोऽस्मत्पितुः सपत्नीकस्य वसुरूपस्य श्राद्धे क्षणः क्रियतामित्यादिना पूर्वप्रदर्शितेन वाक्येन पित्रादिस्थानोपवेशितान् ब्राह्मणान् क्रमेण प्रत्येकं निमन्त्रयेत् ।

इति तृतीयं निमन्त्रणं ।

अथावाहनं ।

तत्रावाहनविधिप्रश्नानुज्ञा मार्कण्डेयपुराणे ।

दर्भांस्तु द्विगुणान् दत्त्वा तेभ्योऽनुज्ञामवाप्य च ।
मन्त्रपूर्वं पितॄणाञ्च कुर्य्यादावाहनं बुधः ॥

दर्भान् द्विगुणान् यथोक्तप्रकारेण विष्टरार्थे दत्त्वा द्विजकरे जलञ्च प्रदाय स्मृत्यन्तरविहितं तृतीयनिमन्त्रणञ्च कृत्वा विप्रकर्तां दर्शयिष्यमाणस्वरूपावाहनानुज्ञाञ्च लब्ध्वा वक्ष्यमाणमन्त्रपूर्वकं पितॄणां लोकान्तरगतानां पितृ-पितामहादीनामावाहनं कुर्य्यात् ।

---

(१) त्वं मयाद्य निमन्त्रित इति क०।

वाराह-विष्णुपुराणयोः ।

अनुज्ञाञ्च ततः प्राप्य दत्त्वा दर्भान् द्विधाकृतान् ।

मन्त्रपूर्वं पितॄणान्तु कुर्य्यादावाहनं बुधः ॥

अत्र दर्भान् दत्त्वा तदनन्तरमनुज्ञां प्राप्यावाहनं कुर्य्यादित्यन्वयः । इह पदार्थानुसमयं पुरस्कृत्य वैश्वदेविकावाहनानन्तरं पित्र्यमावाहनं प्रतिपादयन्तौ प्रश्नानुज्ञयोः स्वरूपमाहतुः गोभिल-कात्यायनौ ।

अथ पितॄनावाहयिष्य इति पृच्छत्यावाहयेत्यनुज्ञात इति । पृच्छति यजमानः । अनुज्ञातो द्विजैः ।

एतदेव प्रश्नोत्तरयोरीषद्विकारप्रदर्शनपूर्वकं विष्णुधर्मोत्तरे स्फुटमभिहितं ।

पितॄनावाहयामीति स्वयमुक्त्वा समाहितः ।

आवाहयस्वेति ततो द्विजैरुक्तोऽथ तन्मनाः ॥

अत्र भविष्यत्कालीनस्याप्यावाहनस्य वर्त्तमानसामीप्ये वर्त्तमानवद्वेतिविहितप्रत्ययान्तेन शब्देन व्यपदेशः । 'स्वयमिति कर्त्ता, 'तन्मनाः' करिष्यमाणकर्मैकाग्रमनाः, अस्य चावाहयेदित्यनेन वक्ष्यमाणेन सह सम्बन्धः प्रत्येतव्यः ।

ब्रह्मपुराणे तु वैश्वदेविकाभ्यर्च्चनसमाप्त्युत्तरकालं प्रत्यावाहनप्रश्नः कियता विशेषान्तरेण प्रयुक्तोदर्शितः ।

कुश-गन्ध-यवैः पुष्पैरर्घ्यं दत्त्वा तु सूकरः ।

विश्वेभ्यो देवेभ्य इति ततस्तान् पर्य्यपृच्छत ॥

पितॄनावाहयिष्यामि ये दिव्या ये च मानुषाः ।

आवाहयस्वेति परैरुक्तस्त्वावाहयच्छुचिः ॥

अत्र 'विश्वेभ्योदेवेभ्यः' इत्येतदन्तं वाक्यं वैश्वदेविकार्चनसम्बद्धं, ततस्तानित्यादिपित्र्यावाहनप्रश्नोत्तरसम्बद्धं, 'तान्' पित्र्यविप्रानित्यर्थः । 'सूकरः' यज्ञवराहः ।

स पुरा कोकामुखे श्राद्धं कुर्वन् 'परैः' श्राद्धभोक्तृभिर्द्विजैः, 'आवाहयस्वेत्येवमनुज्ञातः पितॄनावाहयन् पितॄणामावाहनं कुर्य्यात् । अनेन लिङ्गदर्शनेनैतद्गम्यते, यदन्येनापि श्राद्धं कुर्वन् "पितॄनावाहयिष्यामि ये दिव्या ये च मानुषा इत्यनेन वाक्येन पित्र्यविप्रान् प्रति प्रश्नं कृत्वा यथोक्तेन चोत्तरेण तैरनुज्ञातः सन् पितॄणामावाहनं कुर्य्यादिति । 'ये दिव्या इत्यादि, वसु-रुद्रादित्यरूपेण ये दिव्याः, यजमानजनकत्वादिरूपेण ये मानुषाः तान् पितॄनावाहयिष्य इति सम्बन्धः । एतत्पुराणमते दर्भासनदानात् पूर्वमावाहनमित्यवगन्तव्यं । तत्र हि "आवाहयस्त्विति रित्यावाहनमभिधाय तदनन्तरं "ददौ सव्येन चासनमित्यासनदानाभिधानात् । निगमेऽपि "पितॄनावाहयिष्य इत्याद्युक्त्वा दर्भान् द्विगुणानासनेषु प्रदाय पादेभ्योन्यांस्त्येत्युक्तं । कठसूत्रेऽपि हविरर्चानुपवेश्य पितॄनावाहयिष्यामीत्युक्त्वेति द्विजोपवेशनानन्तरं दर्भासनदानात् पूर्वमावाहनमुक्तं । पितॄनावाहयामीत्याद्युक्त्वा विश्वेभ्यो देवेभ्यः क्षणः क्रियतामित्यादिवदता बौधायनेन क्षणदानात् पूर्वकालत्वमावाहनस्योक्तं । यमेन पुनरग्नौकरणानन्तरमावाहनमुक्तं । तच्चाहिताग्निश्राद्धे दर्शयिष्यते । वैजवापगृह्ये तु पूरितार्घ्यपात्रनिधानानन्तरमुपदिष्टं तद्वचनन्त्विहैव प्रकरणे दर्शयिष्यते । पाद्ममात्स्यपुराणयोस्तु द्विजकरेर्घ्यपात्रस्थितपवित्रनिधानानन्तरमुक्तं । "पितॄनावाहयिष्यामि तथेत्युक्तस्तु तैः पुनः" । अत्रावाहये-

दित्युत्तरेण सम्बन्धः। एषाञ्च पक्षाणां यथाखशाखं व्यवस्था।

अत्र प्रदर्शितेषु "पितृनावाहयिष्ये इत्येवमादिषु प्रश्नवाक्येषु पितृशब्दस्तत्तच्छ्राद्धोद्देश्यमृतमनुष्यसम्बन्धाभिधायकपित्रादिशब्दोपलक्षणार्थः। तदुक्तं मानवे श्राद्धकल्पे। पितॄन् पितामहानावाहयिष्यामीति उक्त्वा ब्राह्मणैरनुज्ञात इति। अतत्यः पित्रादिशब्दप्रयोगोऽपि देवदत्तादिविशेषनामप्रयोगोपलक्षणार्थः। मन्त्रादिप्रकरणे नामभिराबाह्येति वैजवापगृह्यवचनस्य दर्शयिष्यमाणत्वात्। देवसम्बन्ध-नाम्नोः प्रयोगे सिद्धे गोत्र-सम्बन्ध-नामानीति ताभ्यां साहचर्य्यदर्शनात् काश्यपादिगोत्रसङ्कीर्त्तनमपि कर्त्तव्यमित्यनुमीयते।

तथा च श्लोकगोभिलः।

आवाहनेऽमुकगोत्रानस्मत्पितॄन् पितामहान्।
प्रपितामहान् विप्रेन्द्र शर्मणोऽथ भवेत्तदा॥

पित्रावाहनरूपे पदार्थेऽनुष्ठाप्यमाने तदङ्गभूतप्रश्नवाक्यप्रयोगकरणेऽमुकगोत्रानस्मत्पितॄनमुकशर्मण इत्येतत्पदजातं 'भवेत्' तद्भावं प्राप्नुयात् उच्चारणीयमित्यर्थः। एतानि दर्शितप्रकाराणि सर्वाण्यपि प्रश्नवाक्यानि प्रणवपूर्वकाण्युच्चारणीयानि।

तथा मैत्रायणीयसूत्रे।

प्रणवमुक्त्वा पितॄनावाहयिष्यामीति ब्राह्मणानामन्त्र्यावाहयेत् यथा पिण्डं पितृयज्ञ इति।

दक्षिणामुखत्वादिधर्मप्राप्त्यर्थो निर्देशः।

ब्रह्मपुराणे च प्रश्नोत्तरयोः स्वरूपं प्रतिपाद्य प्रैषान्तरोपदेशं कुर्वता वाक्येन पितृविप्रान् प्रति प्रश्नकर्त्तव्यतोक्ता।

पितॄनावाहयिष्येऽहं शेषान् विप्रान् वदेत्ततः ।

आवाहयस्वेत्युक्तस्तैः सावधाना भवन्त्विति ॥

येषु वैश्वदेविकेषु विप्रेष्वावाहनं कृतं तदितरे 'शेषाः' पित्र्यविप्रा इत्यर्थः । इहावाहनप्रश्नोत्तरानन्तरं तान् विप्रान् भवन्तः सावधाना भवन्त्विति यजमानो ब्रूयात् । अनेन च भवामः सावधाना इति द्विजानां प्रत्युत्तरं गम्यते ।

ब्रह्माण्डपुराणे तु प्राचीनावीतिना तिलहस्तेन यजमानेन पितृविप्रान् प्रति च प्रश्नः कर्त्तव्य इत्युक्तं ।

अपसव्यं ततः कृत्वा तिलानादाय संयतः ।

पितॄनावाहयामीति पृच्छेद्विप्रानुदङ्मुखान् ॥

उदङ्मुखान् पित्र्यानित्यर्थः ।

अत्र पितॄणां द्विगुणैस्तिलैरिति परिभाषया द्विगुणीकृतदर्भसहितांस्तिलानादायेति गम्यते आवाहनाङ्गे तिलविकिरणे ब्रह्मपुराणोक्तस्य "उच्चरंस्तिलवर्हिंषौति वचनस्य दर्शयिष्यमाणत्वात् । तिलहस्तता चात्रावाहने तिलान् साधनीकर्त्तुं ।

तथा च नागरखण्डे ।

उशन्तस्त्वेति च तिलैः पितॄनावाहयेत्ततः ।

तिलैरिति तृतीयान्तेन पदेन तिलानामावाहने साधनता प्रतिपादिता। साधनता च यववद्विकिरणद्वारैव ।

प्रचेतसापि तिलानां साधनत्वमप्रादक्षिण्यं चोक्तं ।

तिलैरावाहनं कुर्य्यादनुज्ञातोऽप्रदक्षिणं ।

प्रदक्षिणादन्यत् 'अप्रदक्षिणं',प्रदक्षिणं नामाभिमुखपुरुषवामाङ्गो-

पलक्षितं प्रदेशं प्रति कर्मणोनिर्वहणं, यथा पूर्वाभिमुखोपविष्टदैविकपङ्क्तिमूर्द्धन्यद्विजादारभ्य तत्पङ्क्तिचरमद्विजापवर्गता, उक्तविपरीतलक्षणलक्षितमप्रदक्षिणं। यथोदङ्मुखोपविष्टपित्र्यविप्रपङ्क्तिमुख्यद्विजादारभ्य तत्पङ्क्तिनिविष्टान्तिमद्विजपर्यवसायितेति तिष्ठता चायं प्रश्नः कर्त्तव्यः।

तथा चार्घ्यद्रव्यपूरितपात्रनिधानानन्तरमुक्तं वैजवापगृह्ये।

तिष्ठन् पितॄनावाहयिष्यामीत्यामन्त्र्येति।

'तिष्ठन्' ऊर्ध्वजुः। अनेनानुज्ञाग्रहणमपि तिष्ठतैव कार्य्यमिति मन्तव्यं। यतः तिष्ठन्नामन्त्र्येत्यनेन अनुज्ञाग्रहणरूपस्वप्रयोजनशिरस्कस्यामन्त्रणस्य सम्बन्धावगमात्।

आवाहनप्रश्नादिकञ्च दक्षिणामुखेन कार्य्यं।

तथा च कूर्मपुराणे।

अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः।

आवाहनं तदा कुर्य्यादिति।

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः।

तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठता॥

इति भविष्यत्पुराणवचनात् प्रश्नोत्तरसमाप्युत्तरकालमुपविश्यावाहनादि कुर्य्यात्। अथैतद्वचनसन्दर्भसम्पन्नः प्रश्नोत्तरप्रयोगोऽभिधीयते। प्राचीनावीती द्विगुणभग्नकुशसम्मितांस्तिलान्दक्षिणहस्ते समादाय दक्षिणामुख ऊर्ध्वजुः कृताञ्जलिर्भूत्वा "पितॄनावाहयिष्यामि ये दिव्या ये च मानुषाः" इत्युक्त्वा ॐअमुकगोत्रानस्मत्पितॄनमुकशर्म्मणः सपत्नीकान् वसुरूपान्, ॐअमुकगोत्रानस्मत्पितामहान् अमुकशर्म्मणः सपत्नीकान् रुद्ररूपान्, अमुकगोत्रानस्मत्प्रपितामहा-

नमुकशर्म्मणः सपत्नीकानादित्यरूपानावाहयिष्ये आवाहयामि आवाहयिष्यामि इति वा पित्र्यादिद्विजान् प्रति प्रश्नवाक्यमुच्चारयेत् । तैरपि ॐआवाहय ॐआवाहयस्वेति वा प्रतिवचनमुच्चारणीयं । अथ तथैव मातामहद्विजाभिमुखो भूत्वा "पितॄनाह्वयिष्यामि ये दिव्या ये च मानुषाः" इत्युक्त्वा ॐअमुकगोत्रानस्मन्मातामहानमुकशर्म्मणः सपत्नीकान् वसुरूपान्, ॐअमुकगोत्रानस्मत्प्रमातामहान् मातुः पितामहानिति वा अमुकशर्म्मणः सपत्नीकान् रुद्ररूपान्, ॐअमुकगोत्रानस्मद्वृद्धप्रमातामहान् मातुः प्रपितामहानिति वा अमुकशर्म्मणः सपत्नीकानादित्यरूपानावाहयिष्ये आवाहयामि आवाहयिष्यामि इति वा प्रश्नवाक्यमुच्चारयेत् । द्विजवाक्यं तु पूर्व्ववत् । तदनन्तरञ्च ॐभवन्तः सावधाना भवन्त्विति पुनर्यजमानेन प्रैषः कार्य्यः, विप्रैश्च ॐभवामः सावधाना इति प्रतिवचनं कर्त्तव्यं ।

इत्यावाहनप्रश्नानुज्ञाः ।

अथ मन्त्रादयः पदार्थाः ।

तत्र शङ्ख-लिखितौ ।

ब्राह्मणाननुज्ञाप्य पितॄनावाहयिष्यामीत्युशन्तस्त्वेति आवाह्येति । पितॄनावाहयिष्यामीति प्रतिवचनेनावाहयेति ब्राह्मणैरनुज्ञां कारयित्वा उशन्तस्त्वा निधीमहीत्यनयर्चावाहयेत् ।

पाद्म-मात्स्ययोः पुराणयोः ।

उशन्तस्त्वायन्तु ऋग्भ्यामावाहयेत् पितॄन् ।

'पितॄन्' पित्रादीन् मातामहादींश्च । एतच्च ऋग्द्वयं गोभिलवचनस्थितं दर्शयिष्यते । अत्र यद्यपि द्वयोरपि ऋचोस्तृतीयाश्रुत्यावाहने

करणे मन्त्रत्वं प्रतीयते तथाप्याद्याया एव करणत्वं द्वितीयस्यास्त्व-नुमन्त्रणमन्त्रत्वमेव विज्ञेयं ।

उक्तञ्च कूर्मपुराणे ।

आवाहनं ततः कुर्य्यादुशन्तस्त्वेत्यृचा बुधः ।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥

'ततः' वैश्वदेविकार्चनानन्तरं । 'तदनुज्ञातः' पित्र्यविप्रानुज्ञातः, आवाहनं कुर्य्यात् । आवाह्य चायन्तु न इति जपेदित्यन्वयः । अत्र पितृ-पितामह-प्रपितामहानावाह्यायन्तु न इति मन्त्रं सकृज्जपेत् । एवं मातामहाद्यावाहनानन्तरमपि ।

आवाहनञ्चापसव्येन कर्त्तव्यमित्युक्तं सौरपुराणे ।

अपसव्यं ततः कृत्वा पितॄनावाहयेद्द्विजः ।
उशन्तस्त्वेति च ऋचा आवाह्य तदनुज्ञया ।
जपेदायन्तु न ऋचमिति ।

अत्राधिष्ठाननिर्द्देशार्थं द्विजजानुनि हस्तनिवेशनं पित्रादीनां ध्यानञ्च दर्शितं ब्रह्मपुराणे ।

तथैव जानुसंस्थेन करेणैकेन तान् पितॄन् ।
आवाहयद्वराहस्तु तदनुध्यानपूर्वकं ॥

जानुसंस्थेन करेणेत्यत्र एकैकस्य ब्राह्मणस्य जानूपर्य्युत्तानतया स्थापितेनेति विशेषः समाचारादवगन्तव्यः । 'एकेन' दक्षिणेनैव पितॄणामप्रदक्षिणेनैव । पितॄनामप्रदक्षिणोपचारत्वाद्द्विजजानुनोर्वामत्वम-नुसन्धेयं । नन्वेवं तर्हि यजमानहस्तस्यापि वामस्यैव पितृकर्मसाधनत्वं प्रसज्येत । सत्यं । इमामेव शङ्कां निराकर्त्तुमपसव्येन हस्तेन निर्वपेदुदकं

शुचीत्यत्र मनुवाक्ये सामानाधिकरण्येन व्याख्यां कुर्वता मेधातिथिना अपसव्येन दक्षिणेन उदकं निर्वपेदिति वर्णितं । उदकनिर्वापग्रहणञ्च पित्र्यकर्ममात्रोपलक्षणार्थं । सव्योपगृहीतेन दक्षिणेनेति वदद्भिः[(१)] शौनकाश्वलायनादिभिः दक्षिणहस्तस्यैव तत्र तत्र पितृकर्मसाधनत्वेन प्रदर्शितत्वात् ।

यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते ।

दक्षिणास्तत्र विज्ञेयः कर्मणां पारगः करः ॥

इति भविष्यत्पुराणवचनेन दक्षिणकरस्यैव सकलकर्मसाधनत्वप्रतिपादनाच्च।

अत्र पित्र्ये जानुग्रहणदर्शनाद्दैवेऽपि केचित्तद्ग्रहणं मन्यन्ते । तदयुक्तं, पित्र्यसम्बन्धेनोपदिष्टस्य दैवसम्बन्धे प्रमाणाभावात् । अन्यथा पित्र्यसम्बन्धेन विहितस्य प्राचीनावीतादेरपि दैवसम्बन्धप्रसङ्गः स्यात् । अतोनिरङ्गुष्ठद्विजकरग्रहणेनैव दैविकमावाहनं जानुग्रहणेन तु पैतृकमावाहनं कार्य्यमिति व्यवस्थैव युक्ता । 'तदनुध्यानपूर्वकमिति तेषां पित्रादीनां तत्तत्प्रातिस्विकमानुषरूपेण वस्वादिरूपेण च यदनुध्यानं तत्पूर्वकमित्यर्थः ।

न केवलमनुध्यानपूर्वकमेवावाहनं किन्तु पित्रादिसम्बन्धनामोच्चारणपूर्वकमपि कार्य्यमित्युक्तं बैजवापगृह्ये ।

उशन्तस्त्वेत्यनया यजमानस्य पितरं पितामहं प्रपितामहं नामभिरावाह्यायन्तु न इति जपित्वा पात्राण्यनुदिशति ।

अत्र पितरं पितामहमित्यादिपृथङ्निर्देशात् प्रत्यधिष्ठानपृथगावाहने कर्त्तव्ये तावत्कृत्वः करणमन्त्रोप्यावर्त्तयितव्यः ।

---

(१) विदद्भिरिति ग० ।

अत्रावाहनं प्रकृत्य गोत्रानुकीर्त्तनमप्याह यमः ।

कीर्त्तयेत् पितरन्त्वादौ तथैव च पितामहं ।
पितुः पितामहञ्चैव नाम-गोत्रैरतन्द्रितः ॥

अत्रोशन्तस्त्वेतिमन्त्रान्ते ॐ अमुकगोत्राः अस्मत्पितरोऽमुकशर्माणः सपत्नीका वसुरूपा इहागच्छतेत्यादिभिः पित्रादीन्मातामहादींश्चावाहयेत् । तत्तदावाहनानन्तरं तत्तदधिष्ठानभूतद्विजस्य पुरस्तादप्रादक्षिणेन तिल-कुशान् विकिरेत् ।

तदुक्तं ब्रह्माण्डपुराणे ।

आवाहयेदनुज्ञात उशन्तस्त्वेत्यृचा पितॄन् ।
क्षिप्त्वापसव्यञ्च तिलान् पितॄन् ध्यायन् समाहितः ।
जपेदायन्तु न इति मन्त्रं सम्यगशेषतः ॥

'अपसव्यं' अप्रादक्षिण्येन, तिलान् क्षिप्त्वेत्यत्र पूर्व्वगृहीतांस्तिल-कुशानिति वेदितव्यं ।

तथा च मन्त्रसहितमेतदुक्तं ब्रह्मपुराणे ।

अपयन्त्वन्तरे ये वा उत्तरंस्तिलवर्हिषः ।
वराहः पितृविप्राणामपेतोयन्त्वितीरयन् ॥
असुं य ईयुर्ऋचा चैव रक्षणञ्चापसव्यतः ।
कृत्वा चावाहनञ्चक्रे पितॄणां नाम-गोत्रतः ।
एतत्पितरोमनोजवा आगच्छत इतीरयन् ॥

'वर्हिषः' कुशाः । अपयन्त्वन्तरे ये वेति मन्त्रद्वयं कपिञ्जल-कठशाखायां प्रसिद्धं । अपेतोयन्तु असुं य ईयुरितिमन्त्रद्वयं पूर्वं दर्शितं । एतत्पितर इत्याद्यावाहने करणमन्त्रद्वयं वक्ष्यमाणप्रचेतोवच-

नगतबहुवचनस्य मन्त्रान्तरसमुच्चयपरत्वादुशन्तस्त्वेत्यनेन समुच्चीयते। तच्चैवं। एतत्पितरो मनोजवा आगच्छत पितरोजवैः ये निखाता ये परोप्ता गर्भा ये च पेदिरे इत्येकः। आगच्छत पितर इत्येतत्पदद्वयोपलक्षितोऽपरः। स चैवं। सर्वांस्तानग्न आवाहयत् पितॄन् हविषे अत्तवे। आगच्छत पितरो मनोजवसः पितरः शुधध्वमिति। बौधायनस्त्वावाहने मन्त्रान्तरं दर्शितवान्। पितॄनावाहयत्यायात पितरः सौम्या गम्भीरैः पथिभिः पूर्व्यैः। प्रजामस्मभ्यन्ददतोरयिञ्च दीर्घायुत्वञ्च शतशारदञ्चेति। आश्वलायनादिगृह्याद्यनुसारिणस्तु "चिप्रापसव्यञ्च तिलानित्येतदप्रादक्षिण्येन द्विजाङ्गेषु तिलान् क्षिप्त्वेति व्याचक्षते। ते च उशन्तस्त्वेति मन्त्रेण द्विजाङ्गेषु तिलानावपन्तः पितॄनावाहयन्ति। तथा च नागरखण्डे।

उशन्तस्त्वेति तिलैः पितॄनावाहयेत्ततः।
आयन्तु न इतिजपेत्ततः पार्थिवसत्तमाः॥

अत्रेति करणेन तृतीयया यत्र मन्त्र-तिलयोः करणत्वं तत्र चकारात्समुच्चितयोरिति। मानवमैत्रायणीयसूत्रे तु मन्त्रान्तरमप्युक्तं। उशन्तस्त्वा हवामहे परेत नः पितरः सोम्यास इति तिलान् विकिरेत्। परेत नः पितरः सोम्यासोगम्भीरेभिः पथिभिः पूर्व्विणेभिः दत्त्वास्मभ्यन्द्रविणेह भद्रं रयिञ्च नः सर्व्ववीरं नियच्छतेति। स्मृतिचन्द्रिकाकारस्तु पुष्पपूजने विहितं नमोव इति मन्त्रमत्र दर्शितवान्। तन्निर्मूलत्वादुपेक्षणीयं। तिलप्रक्षेपणे अवयवक्रमस्तु प्रथमं शिरसि ततः सव्ये अंसे, दक्षिणांसे, सव्यहस्ते, दक्षिणहस्ते, सव्यजानुनि दक्षिणजानुनि, दक्षिणपदे चेत्याचारादनुसन्धेयः।

कात्यायनः।

उशन्तस्त्वेत्यनयावाह्यावकीर्य्य आयन्तु न इति जपित्वेति।

अवकीर्य्य तिलानिति शेषः।

याज्ञवल्क्यः।

द्विगुणांस्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन्।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः।
यवार्थस्तु तिलैः कार्य्य इति।

द्विगुणांस्तु कुशानासनार्थे प्रदाय तिलावकिरणं।

आह प्रचेताः।

उशन्तायन्तु नोमन्त्रान् जपेद्वै दक्षिणामुखः।

अत्र मन्त्रानिति बहुवचनेन कल्पसूत्र-स्मृति-पुराणेतिहासोपदिष्टा अन्येपि करणमन्त्रा अनुमन्त्रणमन्त्राश्चाभ्यनुज्ञायन्ते। कठसूत्रे पितॄनावाहयिष्यामीत्युक्त्वा अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतोवकीर्य्य एत पितर आगच्छत पितर आमेयं त्वन्तर्दधे पर्वतैरिति जपित्वावाहयेदिति। अपयन्त्वसुरा इति मन्त्रद्वयं एत पितर इत्यादिमन्त्रद्वयञ्च प्राक्प्रदर्शितं। अवशिष्टं मन्त्रद्वयं लिख्यते। आमेयन्तु पितरोभागधेयं विराजाहृताः सलिलात् समुद्रात्। अस्मिन् यज्ञे सर्वकामान्नभन्तामक्षीयमाणानुपजीवत्वेतानिति। अन्तर्दधे पर्वतैरुत मह्या पृथिव्या दिवाग्निरनन्ताभिरनन्तरान्यान् पितॄन्दधे अन्तर्दधे ऋतुभिरहोरात्रैः ससन्ध्यकैरर्द्धमासैरिति।

आह विष्णुः।

ततो ब्राह्मणानुज्ञातः पितॄनावाहयेदपयन्त्वसुरा इति द्वाभ्या-

न्तिलैः यातुधानविसर्जनङ्कृत्वा एत पितरः सर्वांस्तानग्न आमेयन्त्व-न्तर्दधे इत्यावाहनङ्कृत्वेति ।

विष्णुधर्मोत्तरे ।

एतत्पितर इत्येवं सर्वांस्तानग्न आवह ।

आमेयन्तु तथोदीर्य्य एतद्वः पितरस्तथा ॥

एतद्वः पितरोभागधेयं पात्रेषु दत्तमम्तृतं स्वधावत् । अचीय-माणमुपजीवत्वेनं मया दत्तं स्वधया मदध्वमिति ।

गोभिलः ।

उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि, उशनुशत आवह पितॄन् हविषे अत्तवे, एत पितरः सोम्यासः। ॐआयान्तु नः पितरः सोम्यासो-ऽग्निष्वात्ताः पथिभिर्देवयानैः अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् । अपहता इति तिलान् विकीर्य्येति । एत पितर इत्येष मन्त्रो लिख्यते । एत पितरः सौम्यासोगम्भीरेभिः पथिभिः पितृयानैः आयुरस्मभ्यं दधत प्रजाञ्च रयिञ्च पोषैरभि नः सचध्वं। अपहता इति मन्त्रः पूर्वं प्रदर्शितः। एतच्च तिलविकिरणमावाहनान्ते कर्त्तव्यं ।

तथा च ब्रह्मपुराणे जप्यमन्त्रान्तरसहितमावाहनमुक्त्वा तदनन्तरं गृहगर्भे समन्त्रकं तिलविकिरणमुक्तं ।

उशन्तस्त्वेति च जपन् पितॄनावाहयेत्ततः ।

सोमवन्तोवर्हिषदश्चाग्निष्वात्ताश्च ये परे ।

पितरः पुण्ययशसः सर्वेऽप्यायन्तु नस्त्विति ॥

ततस्तिलान् गृहे तस्मिन् विकिरेच्चाप्रदक्षिणं ।

श्रद्धया परया युक्तोजपन्नपहता इति ॥

तस्मिन् गृहे यत्र श्राद्धं क्रियते। गृह इति श्राद्धदेशोपलक्षणं। अपहता इति मन्त्रः पूर्वं दर्शितः।

अथ प्रयोगपद्धतिरुच्यते।

आवाहनप्रश्नोत्तरपर्य्यवसानान्तरं दक्षिणामुखोऽन्वाचितसव्यजानुः समुपविश्य प्राचीनावीती प्रथमपैतृकद्विजवामजानुनि पूर्वगृहीत-तिल-कुशान्वितं स्वकीयमनुत्तानं दक्षिणकरं विन्यस्य मानुषेण रूपेण च स्वपितरन्ध्यायन् उशन्तस्त्वेत्येतामृचमुच्चार्य्य तदन्ते ॐ अमुकगोत्रा अस्मत्पितरः अमुकशर्माणः सपत्नीका वसुरूपा इहागच्छतेति जानु-ग्रहणनिर्दिश्यमाने स्वकीयाधिष्ठानभूते प्रथमद्विजे पितरमावाह्य तस्य पुरतः कतिपयांस्तिल-कुशानप्रदक्षिणं भूमौ विकीर्य्य तथैव तदधिष्ठानभूते द्वितीयादावावाहयेत्। ततः प्रथमपितामहब्राह्मण-वामजानुनि पूर्ववत्करं निधायोशन्तस्त्वेत्यभिधाय ॐ अमुकगोत्रा अस्मत्पितामहाः अमुकशर्माणः सपत्नीका रुद्ररूपा इहागच्छतेति जानुग्रहणनिर्दिश्यमाने स्वकीयाधिष्ठानभूते प्रथमद्विजे पितामहमा-वाह्य तस्य पुरतस्तथैव तिल-कुशान् विकीर्य्य तथैव तदधिष्ठानभूत-द्वितीयादावावाहन-विकिरणे कुर्य्यात्। अथ प्रथमप्रपितामहब्राह्मण-जानुनि पूर्ववत् करं निधायोशन्तस्त्वेत्यभिधाय ॐ अमुकगोत्राः अस्मत्प्रपितामहा अमुकशर्माणः सपत्नीका आदित्यरूपा इहागच्छतेति जानुग्रहणनिर्दिश्यमाने स्वकीयाधिष्ठानभूते प्रथमद्विजे प्रपिताम-हमावाह्य तस्य पुरतस्तथैव तिल-कुशान् विकीर्य्य तथैव तदधिष्ठानभूते द्वितीयादौ आवाहन-विकिरणे कुर्य्यात्। इत्येवं पित्रादीनावाह्य कृताञ्जलिरायन्तु न इति मन्त्रं सकृज्जपेत्। तदनन्तरमेवोशन्तस्त्वेति

मन्त्रान्ते अमुकगोत्रा अस्मन्मातामहा अमुकशर्म्माणः सपत्नीका वायुरूपा इहागच्छतेति निजाधिष्ठानभूते एकैकस्मिन् द्विजे मातामहावाहनं तिलविकिरणञ्च कृत्वा पूर्वोक्तमन्त्रान्त एव ॐअमुकगोत्रा अस्मत्प्रमातामहा अस्मन्मातुः पितामहा इति वोच्चार्य्य अमुकशर्म्माणः सपत्नीका रुद्ररूपा इहागच्छतेति निजाधिष्ठानेषु तथैव प्रमातामहमावाह्य विकीर्य्य च प्राचीनमन्त्रोच्चारणानन्तरमेव ॐअमुकगोत्रा अस्मदृद्धप्रमातामहा मातुः प्रपितामहा इति वोच्चार्य्य अमुकशर्म्माणः सपत्नीकाः आदित्यरूपा इहागच्छतेति निजाधिष्ठानेषु तथैव प्रत्येकं वृद्धप्रमातामहमावाह्य प्रत्येकमेव तिल-कुशान् विकीर्य्याञ्जलिमाबध्यायान्तु न इत्यादि सकृज्जपेत् । कल्पसूत्रस्मृतिपुराणेतिहासोपदिष्टमन्त्रान्तरोपसंहारशक्तस्तु सोमवन्तो वर्हिषद एत पितरः सोम्यासः सर्वांस्तानग्ने, आमेयन्तु, अन्तर्दधे, आयात पितरः आगच्छत पितरः,एतद्वः पितरः इत्याद्याकारणमन्त्राननुमन्त्रणमन्त्रांश्च यथाशक्ति प्रयुञ्जीत । शौनकाश्वलायन-गृह्याद्यनुसारिणस्त्वावाहनप्रश्नोत्तरानन्तरं ब्राह्मणसमीप उपविश्य प्राचीनावीतं कृत्वा उशन्तस्त्वेत्यनयर्चा शिरःप्रभृतिपादान्तं अप्रदक्षिणं द्विजाङ्गेषु तिलानारोप्य पूर्व्ववत् द्विजजानूपसंगृह्य यथोक्तैरेव वाक्यैस्तत्तदधिष्ठानेष्वावाहनं कृत्वा ब्राह्मणानां पुरतोऽञ्जलिमाबध्यायान्तु न इत्यादिकाननुमन्त्रणमन्त्रान् सकृदेव यथाशक्ति जपेयुः । कठ-विष्ण्वाद्यनुसारिणस्तु प्रश्नोत्तरानन्तरमपयन्त्वसुरा इति द्वाभ्यां श्राद्धदेशे तिलविकिरणं कृत्वाञ्जलिबन्धपूर्व्वकं एतत् पितर इति जपित्वा पूर्व्वोक्तैरेव वाक्यैरावाहनकृत्वानुमन्त्रनमन्त्रान् जपेयुः । सर्व्वैरपि च श्राद्धकर्तृभिरनुमन्त्रण-

मन्त्रजपानन्तरमपहता असुरा रक्षांसीत्यादिना मन्त्रेण गृहगर्भे तिल-विकिरणं कार्य्यं।

इति मन्त्रादयः पदार्थाः।

इत्यावाहनं।

अथोपवेशन-संवेशन-पाद्यार्घ्याचमनीयानि।

तत्रावाहयेदित्यनुवृत्तावुक्तं पिप्पलाथर्वणसूत्रे।

आयात पितर इति पितॄनासीनास इत्युपवेशयेत्।

आयात पितर इत्यनेन पितॄनावाहयेत्। आसीनास इत्यादिनो-पवेशयेदित्यन्वयः। आयात पितरः सोम्यासोगम्भीरेभिः पथिभिः पितृयानैः अधामासः पुनरायात नो गृहं हविरन्तः सुप्रजसः सुवीराः, आसीनासो अरुणीनामुपस्थे रयीं धत्त दाशुषे मर्त्यायापुत्रेभ्यः पितरस्तस्य वसु प्रयच्छत त इहोर्जं दधात।

शौनकसूत्रे तु मन्त्रान्तरसहितमुपवेशनं समन्त्रकं संवेशनञ्चोक्तं।

आयातेति पितॄनावाहयेत्, आच्याजान्वित्युपवेशयेत्, संविश-न्त्विति संवेशयेत्।

अत्राच्याजान्विति संविशन्त्विति च प्रतीकद्वयेन विनियुक्तं मन्त्र-द्वयं आथर्वणप्रसिद्धं लिख्यते। आच्याजानु दक्षिणतो निषद्येतन्नो हविरभिगृणन्तु विश्वे मा हिंसिष्टाः पितरः केनचिन्नो यद्व आगः पुरुषदाकरामः। संविशन्त्विह पितरः स्वानः स्योनं कृण्वन्तः प्रति-रन्त आयुः तेभ्यः शक्केम हविषा नक्षमाणाज्योजीवन्तः शरदः पुरूची-रिति।

अथ पाद्यमाह विष्णुः।

कुश-तिलविमिश्रेण गन्धोदकेन यास्तिष्ठन्त्यमृतावागिति यन्मे मातेति च पाद्यं निवेद्यैवमेवार्घ्यं दद्यात् ।

अस्यार्थः । यावद्दैवतमुपकल्पितेषु खड्गादिषु पात्रेषु द्विगुणीकृतानि त्रीणि त्रीणि कुशपवित्राणि निधाय शन्नोदेवीरित्यनयर्चा पितृतीर्थेन प्रत्येकं जलमासिच्य तिलोऽसि सोमदैवत्यो गोसवोदेवनिर्म्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वधा नम इत्येकैकस्मिंस्तिलान्निक्षिप्य गन्धद्वारामिति गन्धं निक्षिप्य सपुष्पमपसव्यत इति दर्शयिष्यमाणब्रह्मपुराणवचनेऽभिहितत्वात् श्रीश्च ते लक्ष्मीश्चेति पुष्पाणि निक्षिप्य यास्तिष्ठन्तीत्यादिभिर्मन्त्रैरेकैकस्य पित्रादेस्तत्तदधिष्ठानभूतद्विजहस्ते पाद्यं निवेद्य तथैवार्घ्यं दद्यादिति । अत्र यास्तिष्ठन्ति अमृता वागिति प्रतीकद्वयेन पित्रादेरेकैकस्य पाद्ये समुच्चितौ द्वौ मन्त्रौ विनियुक्तौ । यन्मे मातेति चाद्यमन्त्रप्रतीकेन सूचितेषु क्रमपठितेषु त्रिषु मन्त्रेष्वेकैकः पूर्वोक्ताभ्यां समुच्चित्य पित्रादिपाद्ये विभज्य विनियुज्यते । ते चैवं यास्तिष्ठन्ति या धावन्त्यदुग्धाः परि संस्रुषीः । अद्भिर्विश्वस्य धात्रीभिरन्तरन्यान् पितॄन्दधे । अमृता वागमृता आपोऽग्निर्वाचोऽनृतं तत् त्रिवृदेकधाम । ताभिर्मत्यत्तोभिः स्वधया मदध्वमिहास्मभ्यं वसीयोस्तु देवाः ॥ यन्मे माता प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतः पिता वृङ्क्तामाभिरन्योऽवपद्यतां । यन्मे पितामही प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतः पितामहो वृङ्क्तामाभिरन्योऽवपद्यतां ॥ यन्मे प्रपितामही प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतः प्रपितामहो वृङ्क्तामाभिरन्योऽवपद्यतां ॥

ब्रह्मपुराणेऽपि । यास्तिष्ठन्तीत्यादिमन्त्रद्वयमुक्त्वा यन्मे मातेत्यादेः मन्त्रद्वयस्य पित्रादित्रयार्घ्यदाने विभज्य विनियोगो दर्शितः ।

यां स्तिष्ठन्त्यमृतावाक् च यन्मे मातेति वै पितुः ।
यन्मे पितामहीत्येवं ददावर्घ्यं पितामहे ॥
यन्मे प्रपितामहीति ददौ च प्रपितामहे ।
कुश-गन्ध-तिलोन्मिश्रं सपुष्पमपसव्यतः ।
तद्वन्मातामहेभ्यश्च विधिं चक्रे जनार्दनः ॥

'तद्वदिति' यथा पितृ-पितामह-प्रपितामहानां पाद्यादिकं दत्तं तथा मातामहादीनामपि पाद्यादिदानमित्यर्थः । अनेनातिदेशेन मातामहादिपाद्यादावप्येतेष्वेव मन्त्रेषु प्रापितेषु यन्मे मातेत्यादिमन्त्र-त्रये समवेतार्थत्वार्थं मात्रादिपदस्थाने मातामह्यादिपदोहः कार्य्यः । तद्यथा,—यन्मे मातामही प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतो मातामही वृङ्क्तामाभिरन्योऽवपद्यतां ॥ यन्मे प्रमातामही प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतोवृद्धप्रमातामही वृङ्क्तामाभिरन्योऽवपद्यतां ॥ यन्मे वृद्धप्रमातामही प्रलुलुभे यच्चचारानुव्रतं । तन्मे रेतोवृद्धप्रमातामही वृङ्क्तामाभिरन्योऽवपद्यतामिति ॥ विष्णुवाक्ये चैवमेवार्घ्यं दद्यादित्यनेन पाद्येतिकर्त्तव्यतार्घ्यदानेऽतिदिश्यते ।

अतएव विष्णुधर्मोत्तरे मन्त्रादिरितिकर्त्तव्यता पाद्यार्घयोः साधारण्येनैवोक्ता ।

कुशैस्तिलैश्च मिश्रेण वारा गन्धयुतेन च ।
यास्तिष्ठन्ति या धावन्त्यमृतावागिति द्वयं ।
यन्मे मातेति च तथा पाद्यमर्घ्यञ्च कारयेदिति ॥

'वारा' वारिणा ।

कठसूत्रे तु अर्घ्यानन्तरमाचमनीयमप्युक्तं । यास्तिष्ठन्त्यमृता वाक् यन्मे मातेति त्रिभिः पाद्यार्घ्याचमनोदकानि चानयेदिति ।

आनयेत् द्विजहस्तं प्रापयेत् ।

शौनकाथर्वणस्वीकृते श्राद्धकल्पे पाद्यादिषु मन्त्रान्तराण्युक्तानि । त्रीण्युदपात्राणि कल्पयेत् गन्ध-माल्य-तिलैर्मिश्राणि उदीरतामिति तिसृभिरन्वृचं सपवित्रेषु ब्राह्मणहस्तेषु निनयेत् प्रपितामहेभ्यः पितामहेभ्यः पितृभ्यश्चेदं पाद्यमर्घ्यमाचमनीयमिति ।

'त्रीणीति पित्राद्येकवर्गापेक्षया । 'अन्वृचमिति प्रपितामहादिक्रमेणैकैकस्य ब्राह्मणस्य करे क्रमेणैव, 'उदीरतामिति एकैकयर्चा तान्युदपात्रस्थितानि जलानि प्रक्षिपेत्, 'सपवित्रेष्विति पाद्यादिपात्रस्थितदक्षिणाग्रपवित्रयुक्तेषु । एतासु ऋक्षु 'उदीरतामितीयं पूर्वमेव दर्शिता । द्वितीय-तृतीये तु प्रदर्श्येते । अहं पितॄन् सुविदत्रां अवित्सि नपातञ्च विक्रमणञ्च विष्णोः । बर्हिषदोये स्वधासुतस्य भजन्तपित्वस्त इहागमिष्ठाः ॥ इदं पितृभ्योनमः अस्त्वद्य ये पूर्वासो य उपरास ईयुः । ये पार्थिवे रजस्यानिषत्ता ये वा नूनं सुवृजिना सुविक्षु ॥ प्रपितामहात् प्रभृति पितृपर्य्यन्तदेवतोद्देशस्तु तच्छाखीयानामेव ते हि सर्वमपि श्राद्धं तथैव कुर्वते । अन्येषान्तु पित्रादिक्रमेणैव । तथा च पिप्पलादाथर्वणश्राद्धकल्पे ताभिरेव ऋग्भिः पित्रादिक्रमेण पाद्यादिदानमुक्त्वा आच्याजान्वित्यादिनोपस्थानमुक्तं ।

त्रीण्युदपात्राण्युपकल्प्य गन्ध-माल्य-तिलमिश्राणि उदीरतामिति तिसृभिः प्रत्यृचं सपवित्रेषु ब्राह्मणहस्तेषु निनयेत् पितुः पितामहस्य

प्रपितामहस्य च नाम गृह्णन्नाच्याजानु यद्दोरुद्रमित्युपस्थापयेति।

आच्याजान्विति मन्त्रो दर्शितः। इतरस्तु लिख्यते। यद्दोरुद्रं पितरः सोम्यञ्च तेनं सचध्वं स्वयशसोहि भूत। तैर्वाणः कवयः शृणोत सुविदत्राविदथे हूयमानाः॥

अथैतद्वचनप्रबन्धबोधितः शिष्टाचारसंवादी प्रयोगोऽभिधीयते।

दक्षिणामुखः प्राचीनावीती सव्यञ्जान्वाच्य प्रातिस्विकेन मानुषेण वसुसञ्ज्ञकदेवतारूपेण चावाहनसन्निधापितं स्वपितरं पुरतोऽवस्थितमेव चिन्तयन् प्राञ्जलिः प्रणवपूर्वकमासीनास इत्याच्याजान्वित्येतयोर्विकल्पेनैकं मन्त्रं द्वावपि वा समुच्चयेनोच्चार्य्य पूर्व्वोपकल्पितं दर्भासनं बुद्ध्या समुद्दिश्य अमुकगोत्रा अस्मत्पितरोऽमुकशर्म्माणः सपत्नीकाः वसुरूपाः इहोपविशतेति प्रत्यधिष्ठानं पितरमुपवेशयेत्। एवमेव पूर्व्वानुभूतमानुषाकृत्या रुद्रसंज्ञकदेवतारूपेण च पितामहन्ध्यायन् पूर्व्ववदुपवेशनमन्त्रान्ते पूर्व्वोपकल्पितमासनं चोद्दिश्य ॐअमुकगोत्रा अस्मत्पितामहा अमुकशर्म्माणः सपत्नीका रुद्ररूपा इहोपविशतेति प्रत्यधिष्ठानं पितामहमुपवेशयेत्। एवमेवानुभूतमानुषाकारेणादित्यसंज्ञकदेवतारूपेण च प्रपितामहन्ध्यायन् पूर्व्ववदुक्तमन्त्रोच्चारणं कृत्वा आसनमुद्दिश्य ॐअमुकगोत्राः अस्मत्प्रपितामहा अमुकशर्म्माणः सपत्नीका आदित्यरूपा इहोपविशतेति प्रत्यधिष्ठानं पितामहमुपवेशयेत्। अथ यथोक्तविशेषणविशिष्टः कर्त्ता मानुषस्वाकारेण वस्वाकारेण च मातामहमनुध्यायन् पूर्व्ववत् मन्त्रोच्चारणानन्तरमासनमुद्दिश्य ॐ अमुकगोत्राः अस्मन्मातामहाः अमुकशर्म्माणः सपत्नीकाः वसुरूपाः इहोपविशतेति प्रत्यधिष्ठानं मातामहमुपवेशयत्। तथैव स्वरूपेण

रुद्ररूपेण च प्रमातामहमनुध्यायन् मन्त्रावसाने ॐ अमुकगोत्राः अस्मत्प्रमातामहा मातुः पितामहा इति वोच्चार्य्य अमुकशर्म्माणः सपत्नीका रुद्ररूपा इहोपविशतेति प्रत्यधिष्ठानं प्रमातामहमुपवेशयेत्। एवं मानुषस्याकृत्यादित्यरूपेण च वृद्धप्रमातामहमनुचिन्तयन् ॐ अमुकगोत्राः अस्मद्वृद्धप्रमातामहा अस्मन्मातुः प्रपितामहा इति वाभिधाय अमुकशर्म्माणः सपत्नीकाः आदित्यरूपा इहोपविशतेति प्रत्यधिष्ठानं वृद्धप्रमातामहमुपवेशयेत्। अथ यथोक्तधर्म्मकः कर्त्ता पूर्वोक्तरूपद्वयेन स्वपितरं पुरःस्थितमिवानुचिन्तयन् संविशन्त्विह पितरः इत्यमुं मन्त्रमुच्चार्य्य ॐ अमुकगोत्राः अस्मत्पितरोऽमुकशर्म्माणः सपत्नीका वसुरूपा इह सुखं संविशतेति प्रत्यधिष्ठानं पितरं संवेशयेत्। एवमेवोपवेशनोक्तस्वसम्बन्धिरूपद्वयेन पितामहमनुध्यायन् संविशन्त्विहेत्येनमेव मन्त्रमुच्चार्य्य ॐ अमुकगोत्रा अस्मत्पितामहा अमुकशर्म्माणः सपत्नीका रुद्ररूपा इह सुखं संविशतेति प्रत्यधिष्ठानं पितामहं संवेशयेत्। एवमेव स्वेन रूपद्वयेन प्रपितामहमनुध्यायन् संविशन्त्वित्याद्यनुकीर्त्त्य ॐ अमुकगोत्राः अस्मत्प्रपितामहा अमुकशर्म्माणः सपत्नीका आदित्यरूपा इह सुखं संविशतेति प्रत्यधिष्ठानं प्रपितामहं संवेशयेत्। एवमेव स्वेन रूपेण वसुरूपेण च स्वमातामहमनुध्यायन् संविशन्त्विह पितर इत्यमुं मन्त्रमुच्चार्य्य ॐ अमुकगोत्राः अस्मन्मातामहा अमुकशर्म्माणः सपत्नीका वसुरूपा इह सुखं संविशतेति प्रत्यधिष्ठानं मातामहं संवेशयेत्। एवमेव स्वसम्बन्धिरूपद्वयेन प्रमातामहमनुचिन्तयन् संविशन्त्विहेत्येतमेव मन्त्रमुच्चार्य्य ॐ अमुकगोत्रा अस्मत्प्रमातामहा अस्मन्मातुः पितामहा इति वोच्चार्य्य अमुकशर्म्माणः

सपत्नीका रुद्ररूपा इह सुखं संविशतेति प्रत्यधिष्ठानं मातामहं संवेशयेत्। एवमेव स्वेन रूपद्वयेन वृद्धप्रमातामहमनुध्यायन् संविशन्त्वित्याद्यनुकीर्त्य ॐअमुकगोत्रा अस्मद्वृद्धप्रमातामहा मातुः प्रपितामहा इति वा प्रयुज्य अमुकशर्म्माणः सपत्नीका आदित्यरूपाः इह सुखं संविशतेति प्रत्यधिष्ठानं वृद्धप्रमातामहं संवेशयेत्। अथ पूर्वोक्तधर्मविशिष्ट एव भूत्वा सुप्रोक्षितायां भुवि पितृसंख्ययोपकल्पितेषु प्रदक्षिणापवर्गपङ्क्तिरूपतया स्थापितेषु यथालब्धस्वर्ण-रजतादिद्रव्यनिर्म्मितेषु पवित्रतरेषु पात्रेष्वेकैकस्मिन् द्विगुणभग्नं कुशत्रयं दक्षिणाग्रतया निधाय शन्नोदेवीरिति पितृतीर्थेन शुचि जलं निषिच्य तिलोऽसीति मन्त्रेण तिलान्निक्षिप्य गन्धद्वारामिति गन्धं निधाय श्रीश्च त इति पुष्पाणि निक्षिप्य ततो धूपदीपाभ्यां तानि पात्राणि संस्कृत्य सावित्र्याभिमन्त्र्य क्रमेणैकैकं पात्रमुद्धृत्य पित्राद्यधिष्ठानभूतद्विजाग्रे स्थापयित्वा पितृपात्रस्थितान् कुशान् प्रथमपितृद्विजदक्षिणकरे दक्षिणाग्रतया निवेश्य पुरतः स्थितं तत्पात्रं हस्ते गृहीत्वा यास्तिष्ठन्तीति, अमृता वागिति, यन्मे मातेति मन्त्रत्रयमुच्चार्य्य ॐअमुकगोत्रा अस्मत्पितरोऽमुकशर्म्माणः सपत्नीका वसुरूपा इदं वः पाद्यं स्वधा नम इति पात्रस्थितमुदकं तस्य द्विजस्य सपवित्रे दक्षिणकरे पितृतीर्थेन कतिपयं निधाय तत्करस्थितान् कुशानादाय क्रमेण पवित्राधिष्ठानभूतानां द्वितीयादिद्विजानां दक्षिणकरे निधायोदकप्रक्षेपान्तं पूर्ववत्कुर्य्यात्। ब्राह्मणैकत्वे तु पात्रस्थितं सर्वमपि जलमेकस्यैव करे निनयेत्। तदनन्तरं पैतामहपात्रस्थितं कुशत्रयं पितामहाधिष्ठानभूतद्विजदक्षिणकरे दक्षिणाग्रतयावस्थाप्य यास्तिष्ठन्तीति, अमृता वा-

गिति, यन्मे पितामहीति मन्त्रत्रयोच्चारणान्तं कृत्वा ॐ अमुकगोत्राः अस्मत्पितामह्यः अमुकशर्माणः सपत्नीका रुद्ररूपा इदं वः पाद्यं स्वधा नमः इति पैतामहद्विजकरेषु पूर्ववत्तत्पात्रस्थितमुदकं निनयेत् । अनन्तरं तथैव यास्तिष्ठन्तीति, अमृता वागिति, यन्मे प्रपितामहीति मन्त्रत्रयोच्चारणान्ते ॐअमुकगोत्रा अस्मत्प्रपितामह्यः अमुकशर्माणः सपत्नीका आदित्यरूपा इदं वः पाद्यं स्वधा नम इति प्रपैतामहद्विजदक्षिणकरेषु पूर्ववदुदकं प्रक्षिपेत् । अथ यथोक्तप्रकारेण यास्तिष्ठन्तीति, अमृता वागिति, यन्मे मातामहीत्येतन्मन्त्रत्रयमुच्चार्य्य ॐ अमुकगोत्राः अस्मन्मातामहाः अमुकशर्माणः सपत्नीका वसुरूपा इदं वः पाद्यं स्वधा नम इति सपवित्रेषु मातामहाधिष्ठानभूतद्विजदक्षिणकरेषु तत्पात्रस्थितमुदकं पूर्ववन्निषिञ्चेत् । ततो यास्तिष्ठन्तीति, अमृता वागिति, यन्मे प्रमातामहीत्यादिमन्त्रत्रयान्ते ॐ अमुकगोत्रा अस्मत् प्रमातामहाः अस्मन्मातुः पितामहा इति वोच्चार्य्य अमुकशर्माणः सपत्नीका रुद्ररूपाः इदं वः पाद्यं स्वधा नम इति सपवित्रेषु प्रमातामहाधिष्ठानभूतद्विजकरेषु तत्पात्रस्थितमुदकं निदध्यात् । तदनन्तरं यास्तिष्ठन्तीति, अमृता वागिति, यन्मे वृद्धप्रमातामहीत्यादिकं मन्त्रत्रयं पठित्वा अमुकगोत्रा अस्मद्वृद्धप्रमातामहा अस्मन्मातुः प्रपितामहा इति वोच्चार्य्य अमुकशर्माणः सपत्नीका आदित्यरूपा इदं वः पाद्यं स्वधा नम इति सपवित्रेषु प्रमातामहाधिष्ठानभूतद्विजदक्षिणकरेषु तत्पात्रस्थितमुदकमर्पयेत् । तदेवं पित्रादीनां मातामहादीनाञ्च पाद्यदानं निष्पाद्य वक्ष्यमाणेतिकर्त्तव्यताकलापयुक्तमर्घ्यदानमपि तेषां निष्पादयेत् । आचमनीयदानप्रकारस्त्वेवं । दक्षिण-

सुखत्वादिविशेषणविशिष्टः सन् भूमिप्रोक्षणादि यास्तिष्ठन्तीति, अमृता वागिति, यन्मे मातेति मन्त्रत्रयोच्चारणान्तं पाद्यदानवन्निष्पाद्य ॐअमुकगोत्राः अस्मत्पितरोऽमुकशर्माणः सपत्नीका वसुरूपा इदं वः आचमनीयं स्वधा नम इति पात्रस्थितमुदकं सपवित्रेषु द्विजदक्षिण-करेषु पूर्ववन्निक्षिपेत्। ततोयास्तिष्ठन्तीति, अमृता वागिति, यन्मे पितामहीति मन्त्रत्रयोच्चारणान्ते ॐअमुकगोत्रा अस्मत्पितामहा अमुकशर्माणः सपत्नीका रुद्ररूपा इदं वः आचमनीयं स्वधा नम इति पितामहाधिष्ठानभूतद्विजकरेषु तत्पात्रारूढमुदकं पूर्ववन्निषिञ्चेत्। तदनन्तरं यास्तिष्ठन्तीति, अमृता वागिति, यन्मे प्रपितामहीत्यादि-मन्त्रत्रयमुच्चार्य्य ॐअमुकगोत्रा अस्मत्प्रपितामहा अमुकशर्माणः सप-त्नीका आदित्यरूपा इदं वः आचमनीयं स्वधा नम इति प्रपिता-महद्विजकरेषु तत्पात्रस्थमुदकमासिञ्चेत्। अथ यथोक्तप्रकारेण या-स्तिष्ठन्तीति, अमृता वागिति, यन्मे मातामहीत्यादिमन्त्रत्रयमुच्चार्य्य ॐ अमुकगोत्रा अस्मन्मातामहा अमुकशर्माणः सपत्नीका वसुरूपा इदं वः आचमनीयं स्वधा नम इति मातामहद्विजकरेषु पूर्ववज्जलं निषिञ्चेत्। ततो यास्तिष्ठन्तीति, अमृतावागिति यन्मे प्रमातामहीति-मन्त्रत्रयं पठित्वा ॐअमुकगोत्रा अस्मत्प्रमातामहा अस्मन्मातुः पिता-महा इति वोच्चार्य्य अमुकशर्माणः सपत्नीका रुद्ररूपा इदं वः आचम-नीयं स्वधा नम इति प्रमातामहस्थानस्थितद्विजकरे तत्पात्रस्थित-मुदकं दद्यात्। अथ यास्तिष्ठन्तीति, अमृता वागिति, यन्मे वृद्धप्रमा-तामहीत्यादिसहितपूर्वोक्तमन्त्रद्वयोच्चारणानन्तरं ॐअमुकगोत्रा अस्मद् वृद्धप्रमातामहा अस्मन्मातुः प्रपितामहा इति वाभिधाय अमुक-

शर्माणः सपत्नीका आदित्यरूपा इदं वः आचमनीयं स्वधा नम इति वृद्धप्रमातामहाधिष्ठानभूत-द्विजदक्षिणकरेषु तत्पात्रस्थितमुदकं पूर्ववत्प्रक्षिपेत्। यान्येतानि बहुवचनप्रयोगपक्षमाश्रित्य वाक्यानि दर्शितानि तान्येकवचनप्रयोगयुक्तान्यप्याचारानुसारात् प्रयोज्यानि। यानि तु पाद्याचमनीयदानविषये प्रदर्शितानि वाक्यानि तानि पूर्व्वोपन्यस्तकल्पसूत्रानुसाराच्चतुर्थ्यन्तगोत्रादिपदयुक्तानि विकल्पेन प्रयोज्यानि। पिप्पलादाथर्वणास्तु उदीरतामिति मन्त्रं पितृ-मातामहयोः, आहं पितॄनिति पितामह-प्रमातामहयोः, इदं पितृभ्य इति प्रपितामह-वृद्धप्रमातामहयोः पाद्याचमनीयेषु प्रयुञ्जते। शौनकाथर्वणास्तु उदीरतामिति मन्त्रेण प्रथमं प्रपितामहस्य, तदनन्तरमाहं पितॄनिति पितामहस्य ततश्चेदं पितृभ्य इति पितुः पाद्यार्घ्याचमनीयदानं कृत्वा उदीरतामिति प्रथमं वृद्धप्रमातामहस्य, तदनन्तरमाहं पितॄनिति प्रमातामहस्य, ततश्चेदं पितृभ्य इति मातामहस्य पाद्यार्घ्याचमनीयानि प्रयच्छन्ति। ये तु विष्णूदितानां यास्तिष्ठन्तीत्यादीनां त्रयाणां मन्त्राणामाथर्वणसूत्रोक्तस्योदीरतामित्यादेरेकैकस्य मन्त्रस्य पित्राद्येकैकदेवतायाः पाद्यार्घ्याचमनीयदानेषु समुच्चयं मन्यन्ते, यास्तिष्ठन्तीत्यादिमन्त्रत्रयात् पूर्वं पश्चाद्वा उदीरतामित्यादिषु मन्त्रेषु एकैकस्तत्र तत्र समुच्चारणीयः।

इत्युपवेशन-संवेशन-पाद्यार्घ्याचमनीयानि।

अथार्घ्यनिरूपणं।

तथावाहनमुक्त्वा अर्घ्यदानविधिमाह याज्ञवल्क्यः।

यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्व्ववत्।

'पूर्ववत्' वैश्वदेविकार्घ्यादिवत्। 'आदि'शब्देन गन्धपुष्पादिदानं गृह्यते। अस्मिंश्चातिदेशे यज्ञोपवीतस्य प्राचीनावीतेन, प्राङ्मुखत्वस्य दक्षिणामुखत्वेन, प्रादक्षिण्यस्य अप्रादक्षिण्येन, दक्षिणजानुपातनस्य सव्यजान्वाचनेन, पवित्रशिखादित्वस्य त्रित्वेन, यवप्रक्षेपस्य तिलनिर्वपणेन, देवतीर्थस्य पितृतीर्थेन, स्वाहाशब्दस्य स्वधाकारेण पुरूरव आर्द्रव इत्यादिनाम्नः पित्रादिनाम्ना, बलवदुपदेशप्रापितेन बाधोऽनुसन्धेयः, तत्रैतेषु केषाञ्चिदुपदेशः पूर्वमेव दर्शितः, केषाञ्चिदत्रैव प्राचीनावीतोपदेशसहितस्तिलोपदेशो वैश्वावापगृह्ये ।

प्राचीनावीती पात्राण्यपूर्णानि सदर्भाणि सतिलानि पश्चादग्ने दर्भेषु निधापयेत् ।

छान्दोग्यपरिशिष्टे कात्यायनोऽपि ।

अपसव्यं तदा सिञ्चेत् पितृपात्रेषु पूर्ववत् ।
ततस्तिलांस्तिलोसीति गन्धपुष्पाणि चैव हि ॥

'पूर्ववत्' शन्नोदेवीरित्यनेनेत्यर्थः ।

शङ्ख-लिखितस्मृतावपि ।

अपसव्यं वासोयज्ञोपवीते कृत्वा तिलैरवकीर्य्य सर्वसुरभि तिलोन्मिश्रपात्रेषूदकं कृत्वा शन्नोदेवीरिति ।

वाराह-विष्णुपुराणयोः ।

तिलाम्बुना चापसव्यं दद्यादर्घ्यादिकं द्विजः ।

न चैवं मन्तव्यं यवैः सह समुच्चयेनापि तिलानामुपदेशो घटत इति, यतोऽयं यवकार्ये तेषामुपदेशः, यवार्थस्तु तिलैः कार्य्य इत्युक्तत्वात् ।

मार्कण्डेयपुराणेऽप्युक्तं ।

अपसव्यं तथा चार्घ्यं यवार्थञ्च तथा तिलैः ।
निष्पादयेन्महाभाग पितॄणां प्रीणने रतः ॥

चतुर्विंशतिमते तु पित्र्ये चिशिखत्वस्योपदेशः कृतः ।

पितृपात्रे विशेषोऽयं तिलोऽसीति तिलान् क्षिपेत् ।
तिस्रस्तिस्रः शलाकास्तु पितृपात्रेषु पार्व्वणे ।
एकोद्दिष्टे शलाकैकं निधायोदकमाहरेदिति ॥

दक्षिणमुखत्वोपदेशस्तु मनुत्यन्तरेण दर्शयिष्यमाणे दक्षवचने, अप्रादक्षिण्योपदेशोऽपि वृद्धवसिष्ठस्य प्रचेतसश्च वचने, पितृतीर्थोपदेशो ब्रह्मपुराणे, पित्रादिनामोपदेशस्तु बह्वष्वेव वाक्येषु द्रष्टव्यः। अतश्चायं याज्ञवल्कीयः पूर्व्ववदित्यतिदेशः पात्रपवित्रे, 'शन्नोदेवीः' पयःप्रक्षेपे, 'या दिव्याः' द्विजकराधारत्वेष्वेव व्यवतिष्ठते ।

इत्यर्घ्यदानविधिः ।

अथार्घ्यपात्रसंस्कारः ।

तत्र ब्रह्माण्डपुराणोक्ता संस्कारकर्त्तव्यता वैश्वदेविकार्घ्यप्रकरणे दर्शिता । संस्कारस्वरूपं तदुपयोगश्च तत्रैवोक्तः । पात्राणि तु परिभाषायां पात्रप्रकरणेऽभिहितानि । तेषु च पात्रेष्वेकजातीयद्रव्यनिर्म्मितानि भिन्नजातीयद्रव्यनिर्म्मितानि वा यथोपपन्नानि ग्राह्याणि । तत्र च शौनकाश्वलायनावाहतुः ।

तैजसाश्ममय-मृन्मयेषु त्रिषु पात्रेष्वेकद्रव्येषु चेति ।

'तैजसं' सुवर्ण-रजत-ताम्रादिकांस्यमयं। 'अश्ममयं' माणिक्य-मरकत-स्फटिकादिमयं । 'मृन्मयं' मृत्तिकाप्रकृतिकं प्रसिद्धमेव। पित्रा-

दीनां त्रयाणां यथाक्रममेकैकस्य तैजसादिजातीयमेकैकपात्रमित्येवं भिन्नजातीयद्रव्यनिर्म्मितेषु पात्रेषु त्रयाणामपि वा पितॄणां तैजसादिजातीयद्रव्यनिर्म्मितेषु[१] वा त्रिषु ।

गोभिलोऽप्याह ।

सौवर्णराजतोदुम्बरखड्गमणिमयानामन्यतमेषु पत्रपुटेषु वा यानि वा विद्यन्त इति ।

तानि चैतान्यर्घ्यपात्राणि पार्वणे त्रीण्येव ग्रहीतव्यानि ।

तथाच मानवमैत्रायणीयसूत्रे ।

त्रीण्युदपात्राणि कल्पयेत् ।

'उदपात्राणि' अर्घ्यसाधनोदकधारणार्थानि पात्राणि, तानि पितृ-पितामह-प्रपितामहदैवत्ये श्राद्धे त्रीण्येव 'कल्पयेत्' उपाददीत। अत्रायमभिप्रायः यद्यपि पित्रादेरेकैकस्य स्थाने बहवो ब्राह्मणा निमन्त्रिताः सर्वेषामेक एव वा, तथाप्यर्घ्यदानोद्देश्यानां पित्रादीनां त्रिसंख्यकत्वात्पात्राणां त्रित्वमेवोचितं न ब्राह्मणसंख्यापरिच्छेद्यत्वं। अर्घ्यसाधनोपादानस्यार्घ्यार्थत्वात्तस्य चार्घ्यदेवतार्थत्वात् प्रधानभूतदेवताभेदेन तदुपसर्ज्जनीभूतपात्रे भेदो न्याय्यः न त्वर्घ्यदेवताधिष्ठानभूतब्राह्मणभेदेन। अधिष्ठानस्यार्घ्यादिकं प्रत्यप्रयोजकत्वात्। एवं देवतैक्ये पात्रैक्यं न ब्राह्मणैक्य इति। यजमानस्य द्विपितृकत्वे द्विपितामहत्वे द्विप्रपितामहकत्वेपि वा वचनात्त्रीण्येवार्घ्यपात्राणीति हरिहरः ।

शौनकाश्वलायनाभ्यामप्युक्तं ।

त्रिषु पात्रेष्विति ।

(१) तैजसाद्यन्यतमैकजातीयद्रव्यनिर्म्मितेष्विति ख०।

प्रचेतसाप्युक्तं ।

त्रीण्येवोदपात्राणि मृन्मयोदुम्बराश्वत्थीयान्यद्रव्यमयानि वा सतिलानि सपवित्राणि गन्ध-माल्यार्चितानि कुर्य्वेति ।

शङ्खोऽप्याह ।

त्रीण्येव पात्राणि सतिलकुशगन्धोदकानि इति ।

तानि च पात्राणि पितृभ्योमातामहेभ्यश्च त्रीणि त्रीणि क्रियन्ते। तथाहि। एकैकस्यैकैकेन ददाति एकैकस्य पित्रादेर्यत्सम्बन्धि कर्म तदेकैकेन पात्रेण निवर्त्तयितव्यं इति कात्यायनवचनव्याख्यायां उपाध्यायकर्केणोक्तं, तद्वन्मातामहेष्वित्यतिदेशादपि मातामहवर्गे पृथक् पात्रत्रयं कर्त्तव्यं। यत्र निगमवचने मातामहादिवर्गार्थमेकमेव पात्रं दर्शयिष्यते, तद्येषां वृद्धपरम्परया क्रियते तेषामेव नान्येषां। यतो मातामहवर्गेऽपि शिष्टपरम्परया पात्रत्रयोपादानं दृश्यते। तानि च त्रीणि पात्राणि दक्षिणाभिमुखः प्राचीनावीती सव्यं जान्वाच्य प्रोक्षितायाम्भुवि पित्रादिक्रमेणाग्रेषु दर्भेषु दक्षिणापवर्गान्युत्तानान्यासाद्यैकैकत्रिगुणीकृतानि दक्षिणाग्राणि पवित्राणि निधायापोऽनिषिञ्चेत् ।

तदाह विष्णुः ।

दक्षिणाग्रदर्भेषु दक्षिणापवर्गचमसेषु पवित्रान्तर्हितेष्वप आसिञ्चेत् शन्नोदेवीरिति ।

दक्षिणाग्रदर्भोपरि दक्षिणापवर्गतयासादितेषु चमसेषु सार्घ्यपात्रेषु उपरिनिहितपवित्रेषु शन्नोदेवीरिति मन्त्रेण प्रतिपात्रमपोनिनयेदित्यर्थः। अत्र केचित् न्युब्जान्यासाद्य प्रोक्ष्योत्तानानि कृत्वा तेषु पवित्रान्तर्हितेषु जलं निषिञ्चति, तत्तु यथाचारं कैश्चिदेव कर्त्तव्यं। अत्र पवि-

त्राणि त्रिशिखानि कर्त्तव्यानीति प्रागेव चतुर्विंशतिमतोपन्यासे दर्शितं।

अत्र प्रतिपात्रमन्वासेचनं कार्य्यमित्याह प्रचेताः।

यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चेदिति। अत्र पात्रभेदादेकैकस्मिन्नेव जलप्रक्षेपे सिद्धे प्रतिपात्रं मन्त्रावृत्त्यर्थोऽयं विधिरिति गम्यते।

अन्वासेचनानन्तरं तिलप्रक्षेप उक्तः कूर्म्मपुराणे।

शन्नोदेव्योदकं पात्रे तिलोऽसीति तिलांस्तथा।
क्षिप्त्वा चार्घ्यं यथापूर्वं दत्त्वा हस्तेषु वा पुनः॥

अथ प्रतिपात्रं समन्त्रकं तिलावापमाह कात्यायनः।

यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नोदेवीरित्येकैकस्मिन्नेव तिलानावपति, तिलोऽसि सोमदेवत्योगोसवोदेवनिर्म्मितः प्रत्नवद्भिः प्रत्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वधा नम इति।

अत्र पितृतीर्थेन तिलावापः सोमदेवत्य इत्येतस्य स्थाने पितृदेव इत्येति पठित्वा मन्त्रश्च नागरखण्डे दर्शितः।

पितॄणामर्घ्यपात्रेषु तथैव च जलं क्षिपेत्।

तिलोऽसि पितृदेवत्यो गोसवोदेवनिर्म्मितः प्रत्नवद्भिः प्रत्तः स्वधया पितृनिमाल्लोकान् प्रीणाहीति। पृथक् तिलांश्च तत्रैव पितृतीर्थेन यत्नतः।

'तथैव' चेति शन्नोदेवीरित्यनेन मन्त्रेण तिलोसीत्यादिनानुमन्त्रेण पृथक् पृथगेकैकस्मिन् पात्रे तिलान् क्षिपेत्। अत्र प्रीणाहीत्यस्यानन्तरं नः स्वधा नम इति मन्त्रस्य शेषो ज्ञातव्यः।

प्रत्नवद्भिः पृक्त इति पाठान्तरं दर्शयन्नाह गोभिलः।

यज्ञियवृक्षचमसेषु पवित्रान्तर्हितेष्वेकैकस्मिन्नप आसिञ्चति शन्नो-देवीरित्यथ तिलानावपति तिलोऽसि पितृदेवत्योगोसवो देवनिर्म्मितः प्रत्नवद्भिः पृक्तः स्वधया पितॄनिमान् लोकान् प्रीणाहि नः स्वधेति।

आश्वलायनगृह्ये त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः प्रदाय शन्नोदेवीरभिष्टय इत्यनुमन्त्रितासु तिलानावपति, तिलोऽसि सोमदेवत्योगोसवोदेवनिर्मितः। प्रत्नवद्भिः पृक्तः स्वधया पितॄनिमान्लोकान् प्रीणाहि नः स्वधेति प्रसव्येनेतरपाण्यङ्गुष्ठान्तरेणोपवीतत्वाद्दक्षिणेन वा सव्योपगृहीतेनेति ।

अत्र त्रिषु पात्रेष्वेकद्रव्येषु वेत्येतावत्पूर्व्वमेव व्याख्यातं। आधा-राकाङ्क्षापरिपूरणार्थन्तु पुनर्लिखितं दर्भान्तर्हितेष्विति, द्विगुणीकृत-त्रिशिखदर्भपवित्रयुक्तेषु पात्रेषु तूष्णीमपः प्रदाय तासाञ्च शन्नो-देवीरभिष्टय इत्यादिनानुमन्त्रणं कर्त्तव्यं। तच्च पात्रत्रयनिवेशि-तानामप्यपां सकृदेव तन्त्रन्यायेन युगपत्सर्वानुमन्त्रणसम्भवात्तासु चैव-मनुमन्त्रितास्वप्सु तिलोसीत्यादिना प्रतिपात्रं तिलावापः कर्त्तव्यः। अत्र च प्रत्यावापं मन्त्रावृत्तिः, क्रियमाणावस्थस्य हि कर्म्मणः करणमन्त्रो-ऽङ्गं। न च त्रयाणां तिलावापानामेकस्मिन् काले क्रियमाणतोप-पद्यते। अतः कालभेदात् तन्त्रासम्भवे मन्त्रावृत्तिरावश्यकी। अनुम-न्त्रणन्तु निष्पादितेषु कर्म्मसु क्रियमाणमविशेषात् सर्व्वोपकारकम्भवि-ष्यतीति नावृत्तिं लभत इति हरिहराभिप्रायः। अप्तिलादिप्रक्षेपाणां प्रकारमाह 'प्रसव्येनेत्यादिना। 'प्रसव्येन' वामेन हस्तेन, 'इतरस्य' दक्षिणपाणेः, प्रदेशिन्यङ्गुष्ठयोरन्तरागतेन। एतदुक्तं भवति वामस्य कनिष्ठिकामूलप्रदेशे दक्षिणहस्तपितृतीर्थसंयोगः कर्त्तव्य इति। अत्र

हेतुः 'उपवीतत्वादिति। यथा दक्षिणेन कर्म्म कुर्वतो वामस्कन्धस्थिते-न यज्ञोपवीतेन उपवीतिता भवति। तथा वामेन कर्म कुर्वतोदक्षिणस्कन्धस्थितेनोपवीतितेत्यर्थः। दक्षिणेन वा हस्तेन, 'सव्योपगृहीतेन' वामहस्ताग्रस्पृष्टेन, तिलावापनादि सर्वं कार्य्यं ।

अनुपूर्व्वमानुपूर्व्येण कुर्य्यात्, तिलावापानन्तरं गन्ध-पुष्पप्रक्षेपः कार्य्य इत्युक्तं पाद्म-मात्स्ययोः ।

दर्भासनानि दत्त्वादौ त्रीणि पात्राणि पूरयेत् ।
सपवित्राणि कृत्वादौ शन्नोदेवीत्यपः क्षिपेत् ।
तिलोऽसीति तिलान् कुर्य्यात् गन्ध-पुष्पादिकं पुनः ॥

एतच्च गन्ध-पुष्पनिधानं पात्रनिहितानामपाम्पूजनार्थमित्युक्तं ब्रह्मपुराणे।

ततो यज्ञियवृक्षोत्थपात्रेषु सकुशेषु च ।
गृहीत्वापः पवित्राणि शन्नोदेवीर्जपन् क्षिपेत् ॥
विकिरेत्तेषु च तिलान् तिलोऽसीति जपन् क्रमात् ।
अर्घ्याः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च शास्त्रवत् ॥

'ततः' इत्यावाहनोत्तरकालीनतिलविकिरणानन्तरं। 'ताः' पात्रनिहिताः, 'अर्घ्याः' आपः, पुष्पैश्च गन्धैश्च प्रपूज्याः। 'शास्त्रवत्' यथाशास्त्रं।

अत्रैकमेव पात्रं, पात्रस्थापने मन्त्रं, जल-तिलप्रक्षेपयोर्व्युत्क्रमं, स्वधा-निषेचने मन्त्रान्, समन्त्रकगन्ध-पुष्पाक्षतप्रक्षेपमुपरि दर्भैः प्रच्छादनञ्चाह बौधायनः।

दक्षिणेन अग्निं स्वधापात्रं स्थापयेत् आमागन्तु पितरोदेवयानात्। तिलोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः प्रत्नवद्भिः पृक्तः स्वधया पितॄनिमान् लोकान् प्रीणाहि नः स्वधा नम इति तिलानारोप्य, मधु

वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमानस्तु सूर्य्यः। माध्वीर्गावोभवन्तु नः। सोमस्य त्विषिरसि। शन्नोदेवीरभिष्टय आपोभवन्तु पीतये शंयोरभिस्रवन्तु नः। इत्येतैः स्वधा मिश्रीकृत्य निरस्तन्नमुचेः शिर इति किञ्चिन्निरस्य गन्ध-पुष्पाक्षतैः पितृभ्यो नमः पितामहेभ्यो नमः प्रपितामहेभ्यो नम इत्यर्च्चयित्वा दर्भैः प्रच्छादयेत् ।

अस्यार्थः। अग्निदक्षिणेन अन्वाहार्य्यपचनस्यावसथ्यस्य वाग्नेर्दक्षिणतः स्वधापात्रे अर्घ्योदकधारणार्थं पात्रं स्थापयन्नामागन्तु पितरो देवयानादित्यादिकं मन्त्रमुच्चारयेत्। तदनन्तरं तिलोऽसीत्यादिना मन्त्रेण तिलान् प्रक्षिप्य मधुवातेत्यादिभिर्मन्त्रैर्मधु-घृतोदकरूपां स्वधां मिश्रीकुर्य्यात्। तत्र मधुप्रकाशकत्वान्मधुवाता इति तृचेन मधुप्रक्षेपः। त्विषिस्तेजः तेजो वै घृतमितिघृतप्रकाशकत्वात् सोमस्य त्विषिरसीत्यनेन घृतप्रक्षेपः। उदकप्रकाशकत्वाच्छन्नो देवीरित्यनेनोदकप्रक्षेपः। ततो निरस्तं नमुचेः शिर इत्यनेनावकरनिरसनं कुर्य्यात्। पितृभ्यो नम इत्यादिमन्त्रत्रयेण प्रत्येकं गन्ध-पुष्पाक्षतं निक्षिप्योपरि कुशत्रयं निदध्यात् ।

ते च मन्त्राः। आमागन्तु पितरोदेवयानात् पयःसमुद्रात्सरितात् सुवर्गात् अस्मिन् यज्ञे सर्वकामान् लभन्तामक्षीयमाणमुह्यतामिमां पितृभ्योवो गृह्णामीति। मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता मधुमान्नोवनस्पतिर्मधुमानस्तु सूर्य्यः। माध्वीर्गा-

वोभवन्तु नः। सोमस्य त्विषिरसि तवेव मे त्विषिर्भूयादिति यजुः। निरस्तं नमुचेः शिर इत्येतदेतावदेव यजुः ।

हारीतेन त्वपां निषिञ्चने मन्त्रान्तरमुत्पवनञ्चोक्तं ।

आसाद्योदपात्रेषु समन्यायन्तीत्यप आसिच्य सुमनसश्चोत्पूयेति।

अयमर्थः । समन्यायन्तीति प्रथमप्रतीकवता मन्त्रेणार्घ्यपात्रे जलं निषिच्य सुमनसः पुष्पाणि तत्र निधाय हस्तद्वयाङ्गुष्ठोपकनिष्ठाभ्यां कुशपवित्रं गृहीत्वा प्रोक्षणीवदुत्पवनं कुर्य्यात् ।

अत्र प्रतीकगृहीतो मन्त्रो वैश्वदेवार्घ्यप्रकरणे दर्शितः। उत्पवनन्तु तूष्णीमेव कर्त्तव्यं। केचित्तु देवोवः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरित्येतेन यजुषोत्पवनं कुर्व्वते। निगमे तु साग्निककर्तृके षड्दैवत्ये श्राद्धे चत्वार्य्यर्घ्यपात्राणि तेषां च दक्षिणाभिमुखोल्लिखितलेखायां स्थापनं स्रगादिषड्द्रव्योपेतानां अद्भिः प्रपूरणं। तत्र च मन्त्रान्तराण्युक्तानि उल्लिख्य दक्षिणालेखायां कृत्वा लौहांश्चमसांश्चतुरः स्रक्तिल-पयोदधि-मधु-घृतमिश्रान्महाव्याहृत्यापोहिष्ठीय मन्त्रोदेवीरित्यद्भिः प्रपूर्य्येति ।

'स्रक्' पुष्पमाला। 'लौहान्' त्रपु-सीस-कृष्णायसव्यतिरिक्तैस्तैजसधातुभिर्विरचितान् । तांश्चतुःसंख्यकान् यथोक्तायां लेखायां समासाद्य, अत्र चतुर्थस्य मातामहाद्यर्घ्यार्थता वक्ष्यते। तांश्च स्रगादिषड्द्रव्योपेतान् कृत्वा महाव्याहृत्यादिभिर्मन्त्रैरद्भिः प्रपूरयेत्। भूर्भुवःस्वरितिमहाव्याहृतयः। 'आपोहिष्ठीयं' आपोहिष्ठा मयाभुव इत्यादिनवर्चसूक्तं। अन्ये तु जल-तिल-कुश-कुसुम-यव-गन्धाख्यानि षडर्घ्यद्रव्याण्याहुः। तथाचार्घ्यन्दद्यादित्यनुवृत्तौ कालिकापुराणे ।

तिल-गन्ध-यवैः पुष्पैर्जलैर्दर्भैश्च मन्त्रितैः ।

'मन्त्रितैरिति तिल-जलयोरवैव मन्त्रावुक्तौ । यवानान्तु यवोसीति प्रागुक्तः । गन्धपुष्पयोस्तु गन्धद्वारामिति, श्रीश्च ते लक्ष्मीश्चेति मन्त्रद्वयं पाद्यादिप्रकरणे दर्शितं । यच्च पाद्यादिप्रकरणे पात्रपूरणानन्तरं गायत्र्यानुमन्त्रणमुक्तं तेन कुशानां वक्ष्यमाणानां चानुक्तमन्त्रकाणां मन्त्रवत्तानुमन्त्रेया ।

ब्रह्मपुराणे त्वष्टावर्घ्यद्रव्याण्युक्तानि ।

एष तेऽर्घ्य इति प्रोच्य तेभ्यो दद्याद्यथाष्टधा ।
जलं क्षीरं दधि घृतं तिल-तण्डुल-सर्षपान् ।
कुशाग्राणि च पुष्पाणि दत्त्वाचामेत्ततः स्वयं ॥

अष्टधेति क्षीराद्यष्टजातीयद्रव्यसहितं जलं एष तेऽर्घ्य इति वाक्येन पित्रादिभ्यो दत्त्वाचामेदित्यर्थः ।

इति पात्रादिसंस्कारः ।

अथार्घ्यदानं ।

तत्र पात्रेऽर्घ्यद्रव्यनिधानानन्तरं ॐपित्र्यार्घ्यपात्राणां सम्पत्तिरस्त्विति कृताञ्जलिः पितृब्राह्मणान् पृच्छेत् । ॐअस्तु पित्रर्घ्यपात्राणां सम्पत्तिरिति तैः प्रत्युक्ते तेष्वर्घ्यपात्रेष्वधोनिहितदर्भैः सह पाणिभ्यामेकैकमुद्धृत्य ॐस्वधार्घ्या इति मन्त्रेण पित्रादिब्राह्मणानां पुरतो यथाक्रमं दक्षिणाग्रतया स्थापयेत् ।

तदाह जातूकर्ण्यः ।

ततोऽर्घ्यपात्रसम्पत्तिं वाचयित्वा द्विजोत्तमान् ।
तदग्रे चार्घ्यपात्राणि स्वधार्घ्या इति विन्यसेत् ॥

तदनन्तरं "दत्तदर्भोदके हस्त इत्यादिदर्शयिष्यमाणब्रह्मपुराणव-चनात् ब्राह्मणहस्ते प्रथममपो निनीयार्घ्यपात्रस्थितं कुशपवित्रञ्च दक्षिणाग्रं निधाय ब्राह्मणमभ्यर्च्यार्घ्यं दद्यात्।

तथा च दक्ष-गार्ग्यावाहतुः।

हस्ते प्रादेशमात्रन्तु त्रिवृद्दत्त्वा पवित्रकं।
अभ्यर्च्य पूर्वतोऽर्घ्यं वै दद्यात्तु पितृदिङ्मुखः॥

'त्रिवृत्' त्रिशलाकं। 'पूर्वतः' आदौ। अत्र यत्पूर्वमर्घ्यपात्रस्था-पितं पवित्रमासीत् तदेव ब्राह्मणहस्ते देयं नान्यदिति गत्यन्तरेण दर्शयिष्यमाणे मानव-मैत्रायणीयसूत्रे द्रष्टव्यं। प्रकृतत्वेनापि तस्यैव बुद्धिस्थत्वात्। केचित्तु तस्य प्रयोजनत्वादन्यदुपाददते। तदयुक्तं। अन्यत्रोपयुक्तानामपि दर्भाणामन्यत्र विनियोगदर्शनादित्युपाध्यायकर्के-णाप्येवमेवाक्षिप्य सिद्धान्तितं।

अर्चनञ्च गन्ध-पुष्पैः कार्य्यमित्युक्तं वाराहपुराणे।

गन्ध-पुष्पार्चनं कृत्वा दद्याद्धस्ते तिलोदकं।

अर्चनप्रकारस्तूक्तः कालिकापुराणे।

अभ्यर्च्य विधिवद्भक्त्या सृष्टिन्यायेन मन्त्रवित्।
अर्घ्यन्दद्यात्ततः पात्रैर्ब्रह्मवृक्षदलोद्भवैः॥

शिरसोऽधोऽधःकरणं सृष्टिन्यायेन करणं, शीर्षतोवाग्रे जायमानो जायत इति शतपथे शीर्षतः सृष्टिश्रुतेः वैकल्पिकञ्चैतत्।

अतएव गार्ग्यश्लोक-गौतमावाहतुः।

शिरसः पादतोवापि सम्यगभ्यर्चयेत्ततः।
पूर्ववत् पृथगेकैकमेकैकेनार्चयेत् क्रमात्॥

अत्र पितृन् पादतः शिरस्तो वा पूजयेद्देवांस्तु पादत एवेति शङ्खधरो व्याख्यातवान्। पूर्ववदिति या दिव्या इत्यनेन मन्त्रेण एकैकं पित्रादिमेकैकेनार्घ्येण पूजयेत्। स्मृतिचन्द्रिकाकारस्तु एकैकं ब्राह्मणमेकैकेनार्घ्येण पूजयेदिति मन्यमानः पितृपक्षे चौनित्येतत्पक्षविषयतामस्वीकृतवान्। पादतोयदभ्यर्चनं तत् मूर्द्धान्तं यच्च शिरस्तः तत्पादान्तं मन्त्रविशेषेण कर्त्तव्यमित्याह प्रचेताः।

पादप्रभृति मूर्द्धान्तं देवानां पुष्पपूजनं।
शिरःप्रभृति पादान्तं नमो व इति पैतृके॥

अत्र नमो व इति मन्त्रोवाजसनेयशाखीयस्तात्र लिख्यते। नमो वः पितरोरसाय नमो वः पितरः शोषाय नमो वः पितरोजीवाय नमो वः पितरः स्वधायै नमो वः पितरोघोराय नमो वः पितरोमन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरोदत्त सतो वः पितरोदेष्मेति। शाखान्तरीयास्तु पिण्डप्रदाने दर्शयिष्यन्ते। पूजायामयमेव क्रम उक्तः।

स्कन्दपुराणे।

शीर्षाणमादितः स्कन्ध-पाणि-जानु-पदद्वये।
सतिलैर्गन्ध-कुसुमैरर्चयीत पितृद्विजान्॥

अस्यार्थः। प्रथमं शिरसि, ततः सव्यांसे, दक्षिणांसे, सव्यकरे, दक्षिणकरे, सव्यजानुनि, दक्षिणजानुनि, सव्यपादे, दक्षिणपाद इति क्रमेण तिल-गन्ध-कुसुमैः पितृविप्रार्चनं कुर्य्यात्। इह प्राचीनावीत्याचितसव्यजानुर्दक्षिणामुखः पितृन् ध्यायन् अर्घ्यपात्रस्थितमुदकं या दिव्या इति मन्त्रेण पित्रादिनाम-गोत्रोच्चारणपूर्वकमेव एष तेऽर्घ्यं

इति सपवित्रेषु ब्राह्मणहस्तेषु पितृतीर्थेन प्रक्षेपणीयमिति क्रियाक्रमः । एतेन प्राचीनावीतादयः पदार्थाः सामान्यवचनप्रापिता अपि यावद्दृष्टवचनसंग्राहिभिरस्माभिर्विशेषतोऽपि स्मृति-पुराणवचनारूढाः प्रदृश्यन्ते तत्र पितृध्यानं प्राचीनावीतं चोक्तं प्रचेतसा ।

पितॄन् ध्यायन् ब्राह्मणेष्वपसव्यं निनयेदिति ।

ब्राह्मणशरीरेषु पितॄन् ध्यायन् प्रक्षिपेदित्यर्थः ॥

दक्षिणाभिमुखत्वं, या दिव्या इति मन्त्रः, प्रक्षेपणीयं, प्रक्षेपाधिकरणं चोक्तं नागरखण्डे ।

पैतृके याम्यवक्त्रेण पितॄणां परितुष्टये ।

या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं प्रदापयेदिति ॥

'याम्यवक्त्रेण' दक्षिणादिक्प्रेक्षकेण मुखेन विशिष्टः कर्त्ता, 'अर्घ्यं' अर्घ्यार्थमुदकं, 'प्रदापयेत्' प्रदद्यात् । या दिव्या इति मन्त्रस्वरूपं कात्यायनादिवचनेषु स्फुटीभविष्यति ।

हस्तानां ब्राह्मणसम्बन्धं तेषु च पवित्रान्तर्हितेष्वर्घ्योदकनिषेचनमाहतुः शङ्ख-लिखितौ ।

पवित्रान्तर्हितेषु ब्राह्मणहस्तेषूदकं निनयेदिति ।

पवित्रान्तर्द्धानञ्च केचित्ब्राह्मणहस्ते पवित्रं निधाय कुर्व्वते, अपरे लर्घ्यपात्रस्याग्रे तिरश्चीनं पवित्रं विधारयन्तस्तत्सम्पादयन्ति । पितृतीर्थविधिस्तु पितृतीर्थेन ततोऽर्घ्यमित्यादौ ब्रह्मपुराणवचने दर्शयिष्यते ।

पित्रादिनामोच्चारणपूर्व्वकत्वमुक्तं साङ्ख्यायनगृह्ये ।

उदपात्राणि तिलैरवकीर्य्यासावेतत्त इत्यनुदिश्य ब्राह्मणानां पाणिषु निनयेदिति ।

असाविति पित्रादिवाचकस्य विशेषनाम्नः परामर्शः क्रियते ।

अतएव नामगोत्रोच्चारणपूर्वकत्वमुक्तं पाद्म-मात्स्यपुराणयोः ।

एवं पात्राणि सङ्कल्प्य यथालाभं विमत्सरः ।
या दिव्येति पितृनाम-गोत्रैर्दर्भकरे न्यसेत् ॥

पित्रादीनां नाम गोत्रञ्चोच्चार्य्य दर्भयुक्ते ब्राह्मणकरेऽर्घ्यं न्यसेदित्यर्थः। करे इत्येकवचनादेकस्मिन् दक्षिण एव द्विजकरेऽर्घ्यदानं कर्त्तव्यमित्यभिमतं ।

वैजवापेन लञ्जलावर्घ्यदानमुक्तं ।

पात्राण्यनुदिशति पितरेतत्तेऽर्घ्यं, पितामहैतत्तेऽर्घ्यं, प्रपितामहैतत्तेऽर्घ्यमिति ब्राह्मणाञ्जलिषु पात्राणि निनयेदिति ।

पात्राणीति पात्रस्थानि जलादीन्यर्घ्यवस्तूनि, अत्र पित्रादिशब्दान् सम्बुद्ध्येकवचनान्तान् प्रयुञ्जानेन नाम-गोत्रयोरपि तदन्तयोरेव प्रयोगः सूचितः ।

तथा च प्रचेतोवृद्धवसिष्ठौ ।

अप्रदक्षिणमेतेषां एकैकन्तु पितृक्रमात् ।
सम्बोध्य नामगोत्राभ्यामेष तेऽर्घ्य इतीरयन् ॥

'एतेषां' पितृ-पितामह-प्रपितामहानां, 'पितृक्रमात्' पित्रादिक्रमात् 'एकैकं', 'नाम-गोत्राभ्यां सम्बोध्य' नाम-गोत्रोच्चारणेन सम्मुखीकृत्य, अनेनार्थात्सम्बोधनविभक्तिप्रयोगोगम्यते । एष तेऽर्घ्य इत्युच्चारयन् पित्राद्यधिष्ठानभूतब्राह्मणहस्तेऽर्घ्यं दद्यादिति-शेषः । ते इत्यनेन सहान्वयोपपत्त्यर्थं नाम-गोत्रयोरेकवचनान्तयोः प्रयोगोऽनुसन्धेयः। अत्र नाम-गोत्रग्रहणं सम्बन्धाभिधानस्योपलक्षणञ्चेति विज्ञेयं।

तथा च व्यासः ।

गोत्र-सम्बन्ध-नामानि पितॄणामनुकीर्त्तयन्।
एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनिक्षिपेत्॥

'एकैकस्य तु विप्रस्येत्येतत् केचिदेवं व्याचक्षते, यद्यप्येकैकस्य पित्रादेः स्थाने बहवो ब्राह्मणा निमन्त्रितास्तथाप्येकदेवताधिष्ठानभूतेषु ब्राह्मणेष्वेकमेव ब्राह्मणं तदुद्देशपरिकल्पितेनार्घ्येण पूजयेत्, न तु तदधिष्ठानभूतद्वितीयादिकमपीति।

अन्ये त्वाहुः।

एकदेवतासम्बन्धेन यावन्तो ब्राह्मणाः सम्पादितास्तावतां हस्तेषु तत्पात्रस्थमर्घ्योदकं प्रदेयं। एकैकस्येति प्रतिब्राह्मणं पृथक्पृथक्क्रियारम्भार्थं। अस्मिंश्च पक्षे हस्तेष्वर्घ्यं प्रदापयेदित्येकस्यार्घ्योदकस्यानेकहस्तसम्बन्धाभिधानमसमञ्जसं स्यात्। प्रत्यधिष्ठानं प्रतिपाद्यमानगन्धपुष्पादिसारूप्यमर्घ्यदानस्य कृतं स्यात्।

सम्बुद्ध्यन्तानां सम्बन्धाभिधानानाम् प्रयोगस्तु मानव-मैत्रायणीयसूत्रेऽभिहितः।

पवित्रं विप्रपाणौ प्रदाय नाम-गोत्रे समुच्चार्य्य मम पितरेतत्तेऽर्घ्यं मम पितामह प्रपितामहेति।

अत्र केचिद्दक्षिणपाणेरेव सकलकर्मसाधनत्वं मन्यमानाः पात्रोदकमर्घ्यदाननिनयनञ्च तेनैवाचरन्ति। अन्ये तु पाणिभ्यां पात्रमुद्धृत्य ताभ्यामेव पात्रेणार्घ्यं निनयन्ति।

तथा च धर्मः।

या दिव्या आप इति पात्रं पाणिभ्यामुद्धृत्य नाम गोत्रञ्च गृहीत्वा सपवित्रे हस्तेऽर्घ्यं दद्यादिति।

ब्रह्मपुराणे त्वन्य एव प्रकारोऽर्घ्यनिनयने दर्शितः ।

ततो वामेन हस्तेन गृहीत्वा चमसान् क्रमात् ।
पितृतीर्थेन तत्तोयं दक्षिणेन च पाणिना ॥
दत्तदर्भोदके हस्ते विप्राणाञ्च पृथक् पृथक् ।
दद्यान्मन्त्रं जपंश्चाथ या दिव्या आप इत्यपि ।
अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकं ॥

वामहस्तगृहीतेन पात्रेण दक्षिणहस्ते जलं स्रावयन् दक्षिणहस्त-पितृतीर्थेन विप्रहस्ते तन्निनयेदिति वचनार्थः। अत्र एष तेऽर्घ्य इत्येतस्य स्थाने एतत्तुभ्यमस्तु तिलोदकमित्युच्चारणीयं। अयञ्च मन्त्रः प्रायेणाग्निमत्कर्तृकश्राद्धविषय इति गम्यते, साग्निकश्राद्धे ह्यर्घ्यशब्दमन्तरेणैवोदकनिषेचनविधेरुपालम्भात् ।

अतएव बौधायनः ।

अथैतास्तिलमिश्रा अपः प्रतिग्राहयिष्यन्नमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति त्रिस्तिलोदकमेके समामनन्ति, पुरोऽन्नं द्विस्तिलोदकं दद्यात्, भुक्तवत्सु च तृतीयमिति ।

'अपः प्रतिग्राहयिष्यन्' ब्राह्मणानपः स्वीकारयिष्यन्, पित्रादि-नामानन्तरं स्वधा नम इत्युच्चारयेत्। 'त्रिरित्यादि, 'एके' सूत्र-काराः, श्राद्धप्रयोगे त्रिवारं तिलोदकमामनन्ति । तत्र कालानाह, 'पुरोऽन्नं द्विः' अन्नत्यागात्पूर्वं द्विवारं। तत्र गोमयमण्डले चरणक्षाल-नानन्तरमेकं, अग्नौकरणात् पूर्वं द्वितीयं। 'भुक्तवत्सु च तृतीयमिति भुक्त्वाचान्तेषु द्विजेष्वक्षय्योदकाख्यं तृतीयमित्यर्थः। अतएव प्रदेशान्तरे स एवाह, पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपिताम-

हेभ्यः स्वधा नम इति स्वधादत्त्वेति। स्वधा पूर्वमेव व्याख्याता, ताः ब्राह्मणहस्ते दत्त्वाग्नौकुर्य्यादित्युत्तरेण सम्बन्धः ।

निगमोऽपि ।

तेभ्योव्यतिषङ्गमवदानवद्धृत्वा हस्तेष्वपोनिषिञ्चत्यमुष्येति नामग्राहं चतुर्थेन मातामहादीनामवनेज्येति ।

'तेभ्यः' चमसेभ्यः, चतुर्थेन मातामहादीनामित्युक्तत्वात् । त्रिभ्यस्त्रमसेभ्यः अपोदत्त्वा हस्तेनोद्धृत्य अमुष्येति षष्ठ्यन्तमेकैकस्य पित्रादेर्नाम गृहीत्वा तत्तद्ब्राह्मणहस्तेषु निषिञ्चेत्। उद्धरणप्रकारमाह । 'व्यतिषङ्गमवदानवदिति । यथा चातुर्मास्येषु पैत्रे महाहविषि व्यतिषङ्गमवदानानि गृह्यन्ते एवमत्रापीति । तद्यथा पैत्रे पितामहप्रपितामहचमसेभ्यो गृहीत्वा प्रथमं पितृब्राह्मणहस्ते निषिञ्चेत् । ततः पैतामह-प्रपैतामह-पैत्रचमसेभ्यो गृहीत्वा पितामहद्विजकरे निषिञ्चेत्। ततश्च प्रपैतामह-पैत्र-पैतामह-चमसेभ्यो गृहीत्वा प्रपितामहद्विजकरे निषिञ्चेदिति । आश्वलायनीयास्तु सार्घ्यपात्रं वामहस्तं दक्षिणहस्ताङ्गुष्ठतर्जन्यन्तराले निवेश्य पात्रान्तरपरिस्रुतेनोदकेनार्घ्यं कुर्वन्ति, सव्योपसृष्टदक्षिणकरगृहीतेन पात्रेण वा । तच्च प्रसव्येनेतरपाण्यङ्गुष्ठान्तरेणेत्यादावाश्वलायनवचने प्रागेव दर्शितं । पात्रानुमन्त्रणमन्त्रादर्घ्यदाने मन्त्रान्तरं, या दिव्या इत्यस्य ब्राह्मणहस्तगलितोदकानुमन्त्रणे विनियोगं चाहाश्वलायनः ।

पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यमित्यनुपूर्वन्ताः प्रतिग्राहयिष्यन् सकृत्स्वधार्घ्या इति प्रसृष्टास्वनुमन्त्रितासु यादिव्या आपः पृथिव्यां संबभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः। हिरण्यवर्णा यज्ञियास्ता न आपः संस्योनाः सुहवा भवन्त्विति ।

अत्र तिलावापानन्तरं पितरिदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यं प्रपितामहेदं तेऽर्घ्यमित्यानुपूर्व्वेण पित्रादिक्रमेण एकैकस्मिन् पात्रे एकैकमन्त्रेणार्घ्यं प्रयोजयेत् न त्वेतान्यर्घ्यदानवाक्यानीति भाष्यकाराः ।

'ताः' पात्रस्था अपः, ब्राह्मणान् प्रतिग्राहयिष्यन् सकृत्सकृत्स्वधार्घ्या इति मन्त्रं जपेत् । अनेन प्रतिग्राहयेदित्यर्थः । सकृत्सकृद्वचनादस्य त्रिरेवोच्चारणं कर्त्तव्यं, ब्राह्मणभेदानुरोधेनावृत्तिः । तासु प्रसृष्टासु ब्राह्मणहस्तेभ्यो भूमिगतासु यादिव्या इत्यनयर्चानुमन्त्रयेत्, अनुमन्त्रणञ्च सकृदेव सर्व्वेषामिति प्रागेवोक्तं । कात्यायनस्तु पृथिव्यामित्येतस्य स्थाने पयसेति पठितवान्, एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु । या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्ता न आपः संस्योनाः सुहवा भवन्त्विति असावेष तेऽर्घ्य इति । गोभिलस्तु शिवा इति पदाधिकममुमेव मन्त्रं पठितवान्, एकैकस्यैकैकेन ददाति सपवित्रेषु हस्तेषु । या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षा उत पार्थिवीर्या हिरण्यवर्णाः यज्ञियास्ता न आपः शिवाः संस्योनाः सुहवा भवन्त्वसावेतत्तेऽर्घ्यमिति । ये विष्णुस्मृति-विष्णुधर्म्मोत्तर-ब्रह्मपुराणेषु यास्तिष्ठन्तीत्यादयोऽर्घ्यमन्त्राः उक्ताः ते पाद्यादिप्रतिपादन एव दर्शिताः ।

मैत्रायणीयसूत्रे एकैकं पित्रे पितामहाय प्रपितामहाय चानुदिश्य ब्राह्मणस्य पाणौ निनयेत् । पित्रे पितामहायेत्यादिचतुर्थ्यन्तनिर्देशात् अमुकगोत्राय अमुकशर्म्मणे अस्मत्पित्रेऽयमर्घ्य इत्यादीन्यर्घ्यदानवाक्यानि प्रयोज्यानि इति गम्यते ।

आह हारीतः ।

ब्राह्मणैरनुज्ञातः समित्वेतीध्ममाबाह्याग्निष्वात्तादीन् ब्राह्मणस्यानुदपात्रैर्यथार्थमर्चयित्वेति ।

अत्र समित्वेति ब्राह्मणकर्तृकानुज्ञाश्रवणादग्निसमिन्धनं करवाणीत्यादिप्रार्थनावाक्यं द्रष्टव्यं। एवमनुज्ञाप्य 'इध्म' अग्नौ समिन्धनार्थं काष्ठं चिप्ता, पूर्वप्रदर्शितैरेत पितर इत्यादिभिर्मन्त्रैः पितॄनावाह्य ततः पूर्वकल्पितैरुदपात्रैरुपविष्टान् ब्राह्मणस्थाग्निष्वात्तादीनादिग्रहणाद्बर्हिषत्प्रभृतीन् यथापूर्वं यस्य वर्णस्य यैरर्चितैरयं श्राद्धं सिध्यति तानर्चयेत्। ते तु "सोमपा नाम विप्राणामित्यादिना मनुवचनेन पूर्वप्रदर्शिताः ।

यद्वा आवाहन एव मृतपित्राद्यधिष्ठातृभावेनाग्निष्वात्तादिसङ्कल्पार्चनन्तु पित्रादित्रयस्यैव नामभिर्यथार्थमिति वचनात् । अनेनैव च जीवत्पितृकादेर्देवार्चनमिति ज्ञायते ।

यमः ।

ततः सलिलमानीय तूष्णीं दद्यात्पवित्रवत् ।

तूष्णीमित्यनेन मन्त्ररहितं तेन या दिव्या इत्यादयोनुमन्त्रणमन्त्रा विकल्पेन करणमन्त्रा वेत्यनुसन्धेयं। अथ वैतदर्घ्यदानेमन्त्ररहितं येषां वृद्धपरम्परया चर्य्यते तेषामेव न सर्वेषामिति व्यवस्थया बोद्धव्यं । 'पवित्रवत्' पवित्रादिसकलार्घ्यद्रव्यसहितं । अस्मिंश्च मते ब्राह्मणहस्तेऽन्ये एव कुशा निधेयाः । एवमेव मातामहादीनामपि अर्घ्यपात्रसंस्कारादि ब्राह्मणहस्तेऽर्घ्यदानं तत्तन्नाम-गोत्र-सम्बन्धाभिधानसहितं पदार्थानुसमयेन कुर्यात्। मातामहानामप्येवमिति श्रुति-

देशस्मरणात् अर्घ्यदानानन्तरमाचमनं कर्त्तव्यमिति पूर्वप्रदर्शितात् ब्रह्मपुराणवचनादवगन्तव्यं ।

इत्यर्घ्यदानं ।

अथ संस्रवविनियोगादि ।

तत्राश्वलायनगृह्ये ।

संस्रवान् समवनीय ताभिरद्भिः पुत्त्रकामोमुखमनक्तीति ।

'संस्रवाः' अर्घ्यपात्रस्थिता जलशेषाः । अत्र लिङ्गदर्शनं शतपथे । संस्रवो ह्येव खलु परिशिष्टो भवतीति । केचित्तु ब्राह्मणकराङ्गुलिविवरविनिःसृतमर्घोदकं संस्रवशब्देनोच्यत इति व्याचक्षते । तन्मते तु अर्घ्यदानसमये एव संस्रवदुदकं प्रथमपात्रे संस्रियते । 'समवनीय' एकत्र सम्भृत्य । तथाच कात्यायनः । एकस्मिन् संस्रवान् समवनीय पुत्त्रकामोमुखमनक्तीति । मुखस्य सम्बन्ध्यपेक्षायां सन्निधानादधिकारिण एव सम्बन्धित्वेनावगमात् पुत्त्रकामो यजमानः स्वमुखमंज्यादित्यवगम्यते । 'एकस्मिन्' प्रथमपितृपात्रे ।

तथा च वृद्धशातातपः ।

प्रथमे पितृपात्रे तु सर्वान् सम्भृत्य संस्रवान् ।
अनक्ति वदनं पश्चात् पुत्त्रकामो भवेद्यदि ॥

पित्रार्घ्यपात्रेषु यत्प्रथमं पात्रं तत्र सर्वान् संस्रवान् सम्भृत्य, अत्र पितृपात्रसन्निधानात् सर्वशब्देन पितृपात्रगता एव संस्रवा गृह्यन्ते, न वैश्वदेवपात्रस्था अपीति ।

श्लोककात्यायनस्तु संस्रवाभिमन्त्रणे मुखाञ्जने च मन्त्रमुक्तवान् ।

अर्घ्यं स्वधाया इत्युक्ता संस्रवानभिमन्त्रयेत् ।

ये देवा इति मन्त्रेण पुत्रकामोमुखं स्पृशेत्।

अत्र प्रतीकगृहीतो मन्त्रोलिख्यते।

ये देवाः पितरो ये च मानुषा ये गर्भेऽस्तु मरुत[१] ये परास्ता। य उद्धृता उत ये निखातास्ते सर्वं इह मादयन्तां।

ब्रह्मपुराणे तु तत्पात्रस्थितेष्वेव संस्रवजलेषु पुत्रकामस्य यजमानस्य स्वमुखप्रतिविम्बावलोकनमुक्तं।

तेषु संस्रवपात्रेषु जलपूर्णेषु तत्र सः पुत्रकामोमुखं पश्येन्मन्त्रं पूर्वमुक्तोजपेत्।

शुन्धन्तां लोकाः पितृसदनाः पितृसदनमसीति च।

नागरखण्डे त्वायुष्कामस्य संस्रवजलेन लोचनावसेचनमुक्तं।

पितृपात्रे समाधाय अर्घ्यपात्राणि कृत्स्नशः।

आयुष्कामस्तु तत्तोयं लोचनाभ्यां परिक्षिपेत्॥

'पितृपात्रे' पितुरर्घ्यपात्रे। अर्घ्यपात्राणीतिलक्षणया पात्रस्थिता जलशेषाः। 'समाधाय' निक्षिप्य, लोचनाभ्यां परिक्षिपेत्। अन्ये तु पितुरर्घ्यपात्रे शेषाण्यर्घ्यपात्राण्येव निधाय तेभ्यस्तदवस्थेभ्यो हस्ते जलं संस्राव्य तेन लोचनप्रक्षणं कार्यमित्याहुः। प्रथमपात्रसम्भृतं संस्रवोदकं हस्ते गृहीत्वा आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति प्राङ्मुखोपविष्टस्य यजमानस्यान्येनाभिषेकः क्रियत इति वाजसनेयिनामाचारः। एतानि च मुखाञ्जनादीनि काम्यानि कर्माणि यज्ञोपवीतिना यजमानेन कार्याणि। पूर्वमुक्तत्वलिङ्गनापैतृककर्मकत्वा-

(१) 'मरुत' इत्ययं आदर्शपुस्तकपाठः, परन्तु न समीचीनः।

वगतेः फलसाधनत्वेन गोदोहनवत् प्रकृतक्रियाङ्गभावाभावाच्च। एव-मिह मुखमार्जनादिषु काम्यक्रियाविशेषेषु विनियोग उक्तः। तत्र यदि तेषूपयुज्यमानानान्तेषां क्रियानंशोवशिष्यते तदा वा काम-विरहे वा प्रतिपत्तिविशेषः कार्यः। सोऽपि तदैव वा स्वधावाचनप-र्यन्तं संगृह्य वा तत्र प्रथमपितृपात्रन्युब्जीकरणपक्षे तदैव उत्तान-धारणपक्षे तु स्वधावाचनाव्यवहितपूर्व्वकाले। यैस्तु कराङ्गुलिगतान्य-र्घोदकानि संस्रवशब्देनोच्यते इति पक्षाश्रयणं क्रियते तैः प्रागुक्त-मुखाञ्जनादिकार्येषु तान्येवोपयोज्यानि। वक्ष्यमाणप्रतिपत्तिस्तु पात्र-स्थानामर्घ्यशेषाणामेव कर्त्तव्या, ये तु संस्रवसहितं पात्रं न्युब्जीकुर्वन्ति तन्मते द्विविधानामपि संस्रवाणां शौचनिष्ठेति।

तत्रार्घ्यदानानन्तरमेव प्रतिपत्तिर्वैजवापगृह्ये ।

पितृभ्योऽर्घ्यमस्त्विति शेषं दर्भेष्ववने जपतीति ।

अर्घ्ये दत्ते यत्पात्रे अवशिष्टञ्जलं तद्भूमावास्तीर्णेषु दर्भेषु निषि-ञ्चेदित्यर्थः। तदनन्तरं तत्पात्रमनुपहते क्वचित् प्रदेशे स्थापयेत्। तथा च मैत्रायणीयसूत्रे "शिष्टं बर्हिषि निनयेदभ्युक्ष्य प्रत्यासादयेत्" इति। अभ्युक्ष्यपात्रं प्रत्यासादनस्थानं वा। 'प्रत्यासादनं' नाम पूर्व-मासाद्य गृहीतस्य कृतकार्यस्य पुनः क्वचित्प्रदेशे स्थापनं। संस्रवाणां संग्रहं कृत्वा स्वधावाचनात् पूर्वकालन्तेषां प्रतिपत्तिस्त्वचिणोक्ता।

अपसव्यं ततः कृत्वा पिण्डपात्रे समाहितः ।

क्षिप्त्वा दर्भपवित्राणि मोचयेत् संस्रवांस्ततः ॥

एतच्च संस्रवधारणं पात्रस्योत्तानतया स्थापने सत्येव नान्यथा, अतोऽनेनार्थादुत्तानतयैव पात्रस्य स्थापनमुक्तं वेदितव्यं। अस्मिंस्तु

पक्षे संस्रवाधारीकृतस्य पितृपात्रस्य पितामहपात्रेण न्युब्जेनोत्तानेन वा पिधानं कर्त्तव्यं।

तथा च यम-कात्यायनौ।

पैतृकं प्रथमं पात्रं तस्मिन् पैतामहं न्यसेत्।
प्रपितामहन्ततो न्यस्य नोद्धरेत् न च चालयेत्॥

अत्रिरपि।

तृतीयेनापिधापयेत्। तृतीयाभावे चान्येनेति।

पितृपात्रं पितामहपात्रेण पिधाय प्रपितामहपात्रेणापिदध्यात्, प्रपितामहपात्राभावे अन्येन येन केनचित् पात्रेण वृद्धप्रपितामहपात्रेण वापिदधीत। प्रपितामहपात्राभावस्तु जीवत्प्रपितामहके श्राद्धेऽनुसन्धेयः। एतच्च पात्रनिधानं विशेषाग्रहणादुत्तानस्थापन-न्युब्जीकरणोभयपक्षसाधारणं। तत्र संस्रवसहितन्युब्जीकरणमन्त्रश्चोक्तः कूर्मपुराणे।

संस्रवांश्च ततः सर्वान् पात्रे कुर्यात्समाहितः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं निधापयेत्॥

'पात्र इति पितुरर्घ्यपात्रे' पितृभ्यः स्थानमसीत्यनेन मन्त्रेण 'न्युब्जं' अधोमुखं, 'निधापयेदिति निदधीतेत्यर्थः।

पितुरर्घ्यपात्रे संस्रवनिधानमुक्तं कात्यायनसूत्रे।

प्रथमे पात्रे संस्रवान् समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोतीति।

पित्रार्घ्यपात्रेषु पितुरर्घ्यपात्रमेव प्रथममिति व्यक्तमेवावगम्यते।

गोभिलस्तु न्युब्जीकरणानन्तरमेतन्मन्त्रजपमाह।

प्रथमे पात्रे संस्रवान् समवनीय पात्रं न्युब्जं कृत्वा पितृभ्यः स्थानमसीति।

जपेदिति शेषः ।

संस्रवपात्रन्युब्जीकरणाय प्रदेशविशेषस्तु नागरखण्डे ।

अधोमुखञ्च तत्पात्रं विजने स्थापयेत्ततः ।

'तदिति यस्मिन् पितृपात्रे संस्रवाः संगृहीताः । 'विजने' श्राद्धीय-द्रव्यानयनापनयन-परिवेषणादिकर्तृजनसञ्चरणदोषरहिते प्रदेशे ।

एवंविधेऽपि न यस्मिन् कस्मिंश्चित् किन्तु वैश्वदेविकद्विजपङ्क्ते-रुत्तरत एवेत्याह प्रचेताः ।

पितृपात्रे निधायाथ न्युब्जमुत्तरतोन्यसेत् ।

पितृभ्यः स्थानमसीति निधायाथार्चयेद्द्विजान् ॥

पितृपात्रे संस्रवान्निधाय तत्पात्रं ब्राह्मणानां पुरतः पितृभ्यः स्थानमसीति अनेन मन्त्रेण न्युब्जमधोमुखं स्थापयेत् । तदनन्तरं गन्धपुष्पादिभिः श्राद्धभोक्तॄनर्चयेत् ।

पाद्म-मात्स्यपुराणयोरप्युक्तं ।

या दिव्येत्यर्घ्यमुत्सृज्य दद्याद्गन्धादिकं ततः ।

वस्त्रोत्तरञ्चानुपूर्वं दत्त्वा संस्रवमादितः ॥

पितृपात्रे निधायाथ न्युब्जमुत्तरतो न्यसेत् ।

पितृभ्यः स्थानमसीति निधाय परिवेषयेत् ॥

अस्यार्थः । या दिव्येत्यनेन मन्त्रेणार्घ्यं 'उत्सृज्य' दत्त्वा, तदनन्तरं 'आदितः' प्रथमं, पितृपात्रे संस्रवान् पितामहार्घ्यपात्रस्थितान् जल-शेषान् निधाय तत्पात्रं पितृभ्यः स्थानमसीत्यनेन मन्त्रेण भोक्तृद्वि-जपङ्क्तेरुत्तरतोन्युब्जं 'न्यसेत्' निदधीत, निधाय च 'गन्धादिकं' गन्ध-पुष्प-धूप-दीपं, 'वस्त्रोत्तरं' वस्त्रमुत्तरं यस्य यस्य दीयते

तदनुपूर्वक्रमेण दत्त्वाग्नौकरणञ्च कृत्वा परिवेषयेदिति।

संस्रवपात्रस्य भूमावेव न्युब्जीकरणं न तु पीठ-वृषी-कुतुपाद्यु-परीत्याह याज्ञवल्क्यः।

दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः।
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः॥

अध इति भूमावेव।

अतएव प्रचेताः।

प्रथमे पितृपात्रे तु सर्वान् सम्भृत्य संस्रवान्।
पितृभ्यः स्थानमित्युक्त्वा कुर्याद्भूमावधोमुखं॥

एतच्च कुशान्तरितायामेव भूमावधोमुखं कर्त्तव्यं।

तथाचात्र भाण्डलाचार्य्येण स्मृतिर्दर्शिता॥

कुर्याद्दर्भेष्वधोमुखमिति।

अस्माभिरप्यत्र कात्यायनवचनं दर्शयिष्यते।

पात्रस्थापनभूमेः समन्त्रकं प्रोक्षणमाह दक्षः।

शुन्धन्तां लोका इति तु सिक्त्वा भूमिं क्षिपेत् कुशान् पितृभ्यस्था-नमसीति।

शुन्धन्तां लोकाः पितृषदना इत्येतावत्परिमाणं यजुः।

शङ्खधरापरार्काभ्यां प्रदर्शिते तु कात्यायनवचने न्युब्जीकरणे मन्त्रान्तरमुक्तं। शुन्धन्तां लोकाः पितृषदना इत्यनेन मन्त्रेण तिलो-दकेनावसिच्य तत्र पितृषदनमसीति अनेन मन्त्रेण तत्पात्रमधोमुखं स्थापयेत्। अत्र द्वारकार्य्यैक्यात् पितृभ्यः स्थानमसीति अनेन सहास्य विकल्प इति शङ्खधरः।

प्रचेतसा तु शुन्धन्तामित्यस्य स्थापयिष्यमाणपात्रस्पर्शने विनियोगः सपवित्रस्य च पात्रस्य न्युब्जीकरणन्तदुपरि कुशनिधानञ्चोक्तं ।

अर्घ्यसंस्रवपात्रन्तु शुन्धन्तामिति संस्पृशेत् ।
पितृभ्यः स्थानमसीति न्युब्जं कुर्यात्पवित्रवित् ॥

तस्योपरि कुशान् दत्त्वेति ।

यान्यर्घ्यपात्रेभ्यः समुद्धृत्य ब्राह्मणहस्तेषु दत्तानि पवित्राण्यासन् तान्यादाय तैः सह न्युब्जं कुर्यात्, तदभावस्त्वेवं । अत्र तेष्वेव पवित्रेषु यैः स्वधानिनयनं क्रियते ते न्युब्जीकृतपात्रपार्श्वे दक्षिणाग्राणि तानि स्थापयन्ति । ये तु तद्व्यतिरिक्तेष्वेव दर्भेषु स्वधानिनयनं कुर्व्वते तेषामेव पवित्राणामुपरि पात्रं न्युब्जीकुर्वन्ति ।

वैजवापोऽपि ।

तस्योपरि कुशान् दत्त्वा प्रदद्याद्देवपूर्वकं ।
प्रदद्यादित्यादिरुत्तरवाक्यस्यावयवः ।

कात्यायन आह ।

अत्र गन्धपुष्पधूपदीपानां प्रदानमिति ।

अत्रेति कृते न्युब्जीकृते पात्रे । केचित्तु अत्रेत्येतस्मिन्नवसरे ब्राह्मणेभ्यो गन्धादीनां प्रदानमिति व्याचक्षते । तदप्यविरुद्धं वचनान्तरसंवाददर्शनात् । अचिन्तु गन्ध-पुष्पादिभिरभ्यर्चित एव देशे पात्रस्य न्युब्जीकरणं । न्युब्जीकृतस्यार्चनमन्त्रेणैवापिधानं ।

पिधायकपात्रस्याप्यर्चनमाह ।

गन्धादिभिस्तदभ्यर्च्य तृतीयेनापिधापयेत् ।
पितृभ्यस्थानमसीति शुचौ देशेऽर्चितेऽर्चयेत् ॥

अत्र द्वितीयेनापिधापयेदित्यवगन्तव्यं ।

ब्रह्मपुराणे तु न्युब्जीकृतेषु पात्रेषु पितॄणां पाद्यादिभिरर्चनमुक्तं।

ततस्तेष्वर्घ्यपात्रेषु सापिधानेषु वै पितॄन् ।

पूजयेत् पितृपूर्वन्तु पाद्यार्घ्यकुसुमादिभिः ॥

यद्यपि सापिधानेषु पूजयेदित्युक्तं तथाप्यपिधानरहिते सर्वोत्तरे पात्रे पूजनं कर्त्तव्यं। सापिधानशब्दस्यानपिधानेपि भूम्ना प्रवृत्तत्वात् । अतोत्रार्घ्यपात्रेषु सापिधानेष्विति वचनार्जवाय नापरमनर्घ्यपात्रमर्घ्य-पात्रपिधायकं कल्पनीयं ।

एतच्च न्युब्जीकृत्यार्चितं पात्रं ब्राह्मणविसर्जनादिकालात् पूर्वं नोद्धरणीयमित्यापस्तम्ब-यमावाहतुः ।

नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितं ।

आवृतास्तत्र तिष्ठन्ति यावद्विप्रविसर्जनं ॥

'प्रथमं' विप्रविसर्जनात् पूर्वं विप्रविसर्जनपूर्वकालात् पूर्वं वा प्रीतिप्रश्नपूर्वकालात्पूर्वं वा। 'पितॄणामर्घ्यपातितं' पितॄणामर्घ्यकर्म्मणि न्युब्जीकृतपात्रं, नोद्धरेत्। यतस्तेन पात्रेण आवृताः सन्तः पित-रस्तत्र तिष्ठन्ति ते तस्योद्धरणे सति प्रध्वस्तगृहा गृहमेधिन इवावृताः सन्तोऽपसरन्तीत्यर्थवादः। अतः पूर्वोक्तकालत्रयात् पूर्वं नोद्धरेत्, विप्रविसर्जनग्रहणस्य कालत्रयोपलक्षणार्थत्वात् ।

आश्वलायनगृह्येऽपि ।

नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितं ।

आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥

उद्धरणे दोषोऽपि तत्रैवोक्तः ।

उद्धरेद् यदि चेत्पात्रं ब्राह्मणोऽज्ञानदुर्बलः ।
अभोज्यं तद्भवेच्छ्राद्धं क्रुद्धे पितृगणे गते ॥

आपस्तम्ब-यमाभ्यामपि दोषोऽभिहितः ।

उद्धरेत यदा पात्रं विवृतन्तु यदा भवेत् ।
अभोज्यं तद्भवेच्छ्राद्धं देवैः पितृगणैः सह ॥

उशनसा तदुद्घाटनेऽपि दोषोऽभिहितः ।

उत्तानं विवृतञ्चापि पितृपात्रं यदा भवेत् ।
अभोज्यं तद्भवेदन्नं क्रुद्धैः पितृगणैर्गतैः ॥

विवृतमित्युद्घाटितं ।

यम-कात्यायनाभ्यान्तु तस्य स्पर्शे दोषोऽभिहितः ।

स्पृष्टमुद्धृतमन्यत्र नीतमुद्घाटितं तथा ।
पात्रं दृष्ट्वा व्रजन्त्याशु पितरः प्रशपन्ति च ॥

'स्पृष्टं' हस्तादिना संयोजितं, 'उद्धृतम्' उत्क्षिप्तं, 'अन्यत्र नीतं' स्थानान्तरं प्रापितं, 'उद्घाटितम्' अपनीतपिधानं, 'पात्रं' अर्घ्यपात्रं, दृष्ट्वा पितरः 'व्रजन्ति' श्राद्धदेशमन्यजन्ति, 'प्रपन्ति च' यजमानं प्रति त्वमसुतोऽनायुरधनो भव इत्यादिप्रकारामनिष्टफलां वाचमुत्सृजन्ति । अत्र स्पर्शनमन्तरेणोद्धरणादिक्रियाकरणसामर्थ्यविरहात् स्पर्शमात्रे दोषाभिधानेनोद्धरणादावपि सिध्यत्येव दोषः, तथापि दोषातिशयार्थन्तेषां पृथगुपन्यासः । अथवा स्पर्शमन्तरेण यष्ट्यादिनाभ्युद्धरणे दोषप्राप्त्यर्थन्तेषां पृथगभिधानमिति ।

इति संस्रवविनियोगादि ।

## अथ प्रयोगपद्धतिः ।

यथोक्तपित्र्यधर्मयुक्तः कर्त्ता प्रोक्षितायां भुवि दक्षिणापवर्गतया-स्तीर्णेषु त्रिषु दर्भेष्वेकैकमित्येवं पितृवर्गे त्रीणि तैजसाश्ममय-मृण्मय-स्थानीत्येवं भिन्नजातीयानि पात्रप्रकरणोक्ततैजसाद्यन्यतमैकजातीयानि वा पात्राणि "आमागन्त्वित्यादिना मन्त्रेण तूष्णीं वा साग्निकोऽग्निस-मीपे अनग्निको ब्राह्मणसमीपे दक्षिणापवर्गं दक्षिणाग्रतया न्युब्जान्या-साद्य तेषां पश्चिमतस्तथैव मातामहवर्गे त्रीण्येकं वासाद्यासादनक्रमेण प्रोक्ष्योत्तानानि कुर्य्यात् उत्तानान्येव वासादयेत्। तेषु च प्रत्येकं त्रिशिखानि द्विगुणीकृतानि दक्षिणाग्राणि पवित्राणि निधाय "शन्नो-देवीरित्यनेन मन्त्रेण "समन्यायन्ती-महाव्याहृत्यापोहिष्ठीयैर्वैकैक-स्मिन् पात्रे दक्षिणपाणिप्रदेशिन्यङ्गुष्ठान्तरालसंयुक्तस्य वामस्य वामोप-स्पृष्टस्य दक्षिणस्य वा करस्य पितृतीर्थेन जलं निषिञ्चेत्। तदनन्तर-मेव "तिलोसीत्यादिना तत्र तिलान् प्रक्षिप्य "गन्धद्वारामित्यादिना मन्त्रेण तूष्णीं वा गन्धं निधाय "श्रीश्च त इत्यादिना तूष्णीं वा पुष्पाणि प्रक्षिपेत्। बौधायनानुसारी तु कर्त्ता "मधु वातेत्यादिभि-र्मन्त्रैर्मधु-घृतप्रक्षेपमपि कुर्य्यात्। गन्ध-पुष्पाक्षतप्रक्षेपन्तु "पितृभ्योनम इत्यादिना मन्त्रत्रयेण निर्वर्त्तयेत्। निगमानुसारी तु पूर्वोक्तानि द्रव्याणि सक्षीर-दधीनि निदधीत। कालिकापुराणं ब्रह्मपुराणञ्चा-द्रियमाणस्तु यव-सर्षप-तिल-तण्डुल-कुशाग्राण्यपि प्रक्षिपेत्। तदनन्तरं सर्वोऽपि कर्त्ता "निरस्तं न मुमुचेरित्यनेनावकरन्निरस्य "देवोवः सविता इत्यादिना मन्त्रेण तूष्णीं वा हस्तद्वयाङ्गुष्ठोपकनिष्ठिकाभ्यां पात्रस्थं कुशपवित्रं गृहीत्वोत्पूय तदुपरि कुशत्रयं निधाय सावित्र्यानुमन्त्र्य

कृताञ्जलिः ॐ पित्रर्घ्यपात्राणां सम्पत्तिरस्त्विति पितृब्राह्मणान् पृष्ट्वा तैश्च ॐ अस्तुपित्रर्घ्यपात्राणां सम्पत्तिरिति प्रतिवचने कृते सत्या-स्तीर्णदर्भसहितानि दक्षिणाग्राण्यर्घ्यपात्राणि स्वधार्घ्या इति द्विजानां पुरतः स्थापयेत्। ततः पितृप्रथमद्विजहस्तेऽपोदत्त्वादिमार्घ्यपात्रस्थं कुशपवित्रञ्च दक्षिणाग्रं तत्करे निधाय स्वेन रूपेण पितरमनुध्यायन् तिल-गन्ध-कुसुमैः शिरस्तः पादान्तं पादतो वा शिरोऽन्तं नमोत्र इति मन्त्रेण ब्राह्मणमभ्यर्च्य पाणिद्वयेनार्घ्यपात्रमुद्धृत्य या दिव्येत्यादिकं मन्त्रमुच्चार्य्य ॐ अमुकगोत्रामुकशर्मन्नस्मत्पितः सपत्नीक वसुरूपे-दन्तेऽर्घ्यं स्वधा नम एष तेऽर्घ्यः स्वधा नम इति वा प्रयुज्य पूर्व्वदत्त-पवित्रसहिते हस्ते तत्पात्रस्थितमर्घ्योदकं दक्षिणहस्तपितृतीर्थमन्ववनतेन पात्रेण किञ्चित् निनयेत्। आश्वलायन-शौनकमतानुसारी तु कर्त्ता सव्यकरेणार्घ्यपात्रमुद्धृत्य दक्षिणकरपितृतीर्थमन्ववनामितेन पात्रेण। वक्ष्यमाणब्रह्मपुराणमाद्रियमाणस्तु सम्बुद्ध्यन्तगोत्राद्युच्चारणानन्तरं एतत्तुभ्यमस्तु तिलोदकमित्युच्चारयन् वामकरेणोद्धृतेन पात्रेण दक्षिणहस्तेन जलं स्रावयन् दक्षिणहस्तपितृतीर्थेनार्घ्यं दद्यात्। तदनन्तरं तस्मात्पवित्रमादाय पित्रधिष्ठानभूतद्वितीयादिद्विजकरे प्रदाय तत्र तत्पात्रस्थितं किञ्चित् किञ्चिदर्घ्योदकं पूर्व्ववन्निषिच्य कियत्संस्रवशब्दवाच्यमवशेषयेत्। ब्राह्मणकरगलितस्य संस्रवशब्दवा-च्यत्वं मन्यमानस्तु नावशेषयेत् किन्तु तत्करगलितं संस्रवकार्य्यार्थं कस्मिंश्चित्पात्रे धारयेत्। ततः पैतामहप्रथमद्विजहस्ते अपोदत्त्वा पितामहपात्रस्थितं कुशपवित्रञ्च दक्षिणाग्रं तत्करे निधाय स्वेन रूपेण च पितामहमनुध्यायन् ब्राह्मणमभ्यर्च्य पात्रमुद्धृत्य "या दिव्येत्याद्युच्चार्य्य

ॐ अमुकगोत्रामुकशर्म्मन्नस्मत्पितामह सपत्नीक रुद्ररूपेत्यभिधाय पितामहार्घ्यपात्रेण पितामहाधिष्ठानभूतद्विजहस्तेषु सर्वं पूर्ववत् कुर्य्यात्। एवं प्रपितामहद्विजहस्तेऽपोदत्त्वा प्रपितामहपात्रस्थितं पवित्रं तत्करे दक्षिणाग्रं निधाय स्वेन रूपेणादित्यरूपेण च प्रपितामहमनुध्यायन् "या दिव्येत्यन्तं कृत्वामुकशर्म्मन्नस्मत्प्रपितामह सपत्नीकादित्यरूपेत्यभिधाय प्रपितामहार्घ्यपात्रेण प्रपितामहाधिष्ठानभूतद्विजकरेषु सर्वं पूर्ववत् कुर्य्यात्। एतदनन्तरञ्च पितृवर्गवन्मातामहवर्गेऽपि तत्तद्गोत्राद्युच्चारणपूर्वकमर्घ्यं दद्यात्। वर्गद्वयेपि च गोत्राद्युच्चारणे सम्बुद्ध्या सह विकल्प्यमानायाश्चतुर्थ्या अपि प्रयोगोऽनुसन्धेयः। निगममतमनुसरंस्तु पैत्र-पैतामह-प्रपैतामहचमसेभ्योऽर्घ्योदकं गृहीत्वा यथोक्तयैवेतिकर्त्तव्यतया प्रथमं पितृब्राह्मणहस्ते षष्ठ्यन्तगोत्राद्युच्चारणपूर्वकं तन्निषिच्य पैतामह-प्रपैतामह-पैत्रचमसेभ्यो गृहीत्वा पितामहद्विजकरेऽवषिच्य प्रपैतामह-पैत्र-पैतामहचमसेभ्यो गृहीत्वा प्रपैतामहद्विजकरे निषिच्य शेषं पूर्ववत् कुर्य्यात्। ततः सर्वोपि यज्ञोपवीती प्राङ्मुखः पित्रर्घ्यपात्रस्थितान् जलशेषान् पित्र्यब्राह्मणकराङ्गुलिगलितान्यर्घ्योदकानि वा पितुरर्घ्यपात्रे समाहृत्य अर्घ्यं स्वधा या इत्यनेन मन्त्रेणाभिमन्त्र्य तत्पात्रस्थं संस्रवोदकं दक्षिणकरे गृहीत्वा ये देवा इति मन्त्रेण पुत्रकामो यजमानः स्वमुखमंज्यात्।

ब्रह्मपुराणमाद्रियमाणस्तु प्राङ्मुखो यज्ञोपवीती पुत्रकाम एव पित्रादितत्पात्रावस्थितेष्वेवार्घ्योदकशेषेषु शुन्धन्तां लोका इत्यादिना मन्त्रेण स्वमुखप्रतिबिम्बावलोकनं कुर्य्यात्। आयुष्कामस्तु यज्ञोपवीतादिधर्मयुक्तः सन् पित्रर्घ्यसंस्रवान् पितुरर्घ्यपात्रे निक्षिप्य पितृपात्रे

वा पितामहपात्रं तस्मिंश्च प्रपितामहपात्रं निधाय तदवस्थेभ्य एव तेभ्यः स्वदक्षिणहस्ते जलं संस्राव्य तूष्णीमेव स्वलोचनाञ्जनं कुर्य्यात् । वाजसनेयिनामाचारमनुसरंस्तु प्राङ्मुखस्यासीनस्य यज्ञोपवीतिनो यजमानस्य प्रथमपितृपात्रसम्भृतैः संस्रवैः "आपः शिवाः शिवतमा इत्यनेन मन्त्रेण पित्र्यब्राह्मणपङ्क्तावुपविष्टः कश्चिदभिषेकं कुर्य्यात् । ततः प्राचीनावीती दक्षिणामुखो मुखाञ्जनादिक्रियोपयुक्तसंस्रवशेषानकामस्तु सर्वानेव संस्रवान् पात्राधोभागनिहितदर्भेषु पितृभ्योऽर्घ्यमस्त्वित्यनेन मन्त्रेण दक्षिणकरपितृतीर्थस्थितेन पात्रेण निनीयानिनीयैव वा वैश्वदेविकद्विजपङ्क्तेरुत्तरतः शुन्धन्तां लोका इत्यनेन जलसञ्चरणदूषितं प्रदेशं प्रोक्ष्य तत्र दक्षिणाग्रान् कुशानास्तीर्य्य पितृभ्यः स्थानमसीति पितृसदनमसीति वा सपवित्रं पितृपात्रं न्युब्जं कुर्य्यात् । तच्च पितामहपात्रेण तदपि प्रपितामहपात्रेण पिधाय तदुपरि कुशान्निदधीत । अथवा शुन्धन्तां लोका इत्यनेन पात्रस्पर्शं कृत्वा न्युब्जीकरणादिकुशनिधानान्तं कुर्य्यात् । स्वधावाचनपर्य्यन्तं संस्रवधारणकारी तु तत्रोत्तानमेव पात्रं स्थापयित्वा पूर्ववत्पिधानादि कुर्य्यात् । अनन्तरञ्च तत्र श्राद्धदेवताभूतान् पित्रादीन् गन्ध-पुष्प-धूप-दीपैरर्चयेत् । एवं मातामहादिश्राद्धेऽपि कुर्य्यात् ।

इत्यर्घ्यनिरूपणं ।

अथ गन्धादिदानं ।

तत्र तावद्विधिमाहतुर्मनु-बृहस्पती ।

उपवेश्य तु तान् विप्रानासनेषु जुगुप्सितान् ।
गन्ध-माल्यैः सुरभिभिरर्चयेद्देवपूर्वकं ॥

अस्यार्थः। उपवेशनानन्तरन्तानुपविष्टान् विप्रान् गन्धमाल्यैरर्चयेत्। 'गन्धान्' कुङ्कुम-कर्पूरादीन् दद्यात्। 'माल्यानि' कुसुमस्रजः। सुरभिग्रहणं माल्यविशेषणं। अतो निर्गन्धानि पुष्पाणि न दद्यात्। गन्धेष्वपीदं विशेषणं असुरभिगन्धनिवृत्त्यर्थं युक्तं। अथवा सुरभिग्रहणं स्वतन्त्रमेव धूपसङ्ग्रहार्थं व्याख्येयं। 'पूर्वकमिति देवेभ्यो ब्राह्मणेभ्यः पूर्वं दत्त्वा ततः पितृभ्योदातव्यं। इदञ्च देवपूर्वकत्वस्य पुनर्ग्रहणं प्रागभोजनप्रवृत्तौ तु पान-व्यञ्जनादिदाने न नियम इत्येवमर्थमाहुः। अन्यथा कोऽर्थः पुनरभिधाने भवेत्। 'अजुगुप्सितान्' अनिन्द्यान् विप्रान्। अनुवादोयं तादृशानामेव विधानात्। अथवा सत्यपि भूतप्रत्ययनिर्देशे प्रकृत्यर्थकर्त्तव्यतानिषेध एवायं। उपविष्टान्न जुगुप्सेत न निन्देदित्युक्तं भवति, प्रत्ययार्थत्यागो वरं न सर्वपदार्थत्याग इति मन्यते। अनुवादे हि कृत्स्नमेव पदमनर्थकं स्यादिति।

बौधायनस्तु गन्धादिदानस्यार्घ्यानन्तर्यमाह।

अथैतांस्तिलमिश्रा अपः प्रतिग्राह्य गन्धमाल्येन चालङ्कृत्येति।

'अथ' उपवेशनानन्तरं,'एतान्' पितृब्राह्मणान्,'अपः' अर्घ्यार्थाः।

धूपस्यापि दानमाहतुः शङ्खलिखितौ।

गन्ध-माल्य-धूपैरलङ्कृत्येति।

नागरखण्डे।

ततस्तु चन्दनादीनि दीपनानि समाददेत्।

'ततः' अर्घ्यदानानन्तरं।

कौशिकसूत्रे लञ्जनादर्शयोरपि प्रदानमुक्तं। गन्ध-माल्य-धूपाञ्जनादर्श-प्रदीपस्याहरणं।

आहरणस्य दृष्टार्थत्वाद् ब्राह्मणेषु तत्सम्पादनकर्त्तव्यतावगन्तव्या ।

आश्वलायनगृह्ये त्वाच्छादनदानमप्युक्तं ।

एतस्मिन् काले गन्ध-माल्य-धूप-दीपाच्छादनानां प्रदानं ।

'एतस्मिन्' अर्घ्यदानानन्तरं ।

बोधायनसूत्रेऽपि ।

अथैतान् वस्त्र-गन्ध-धूप-दीप-माल्यैर्यथोपपादं सम्पूज्य पृच्छत्युद्ध्रियतामिति ।

'यथोपपादं' यथोपपत्तिगुणजातिप्रकर्षम्, 'पृच्छति' उपविष्टान् ब्राह्मणानग्नौकरणार्थं सर्वप्रकारमन्नमुद्ध्रियतामिति प्रश्नं कुर्य्यात्। तथा "स्वधां दत्त्वा वस्त्र-भोजन-गन्ध-पुष्प-धूपादिभिरर्चयित्वा पितॄननुज्ञाप्य" इति 'स्वधा' अर्घ्योदकं। अत्र यद्यपि गन्धादिदानात् पूर्वं वस्त्रप्रदानमाम्नातं तथापि पाठक्रमं बाधित्वा धूपदीपदानानन्तरमेव तत्कार्य्यं ।

तथाचोक्तं कालिकापुराणे ।

ततोऽभ्यर्च्य सुरान् पूर्वं सान्निध्यं कल्प्य वै पितॄन् ।
गन्धाद्यैर्गन्ध-माल्यैश्च विधिवद् यत्नतोऽर्चयेत् ।
धूप-दीपावसाने तु आच्छादनं नियोजयेत् ॥

'सान्निध्यं कल्प्य' आवाहनेन पितॄणां सन्निधानं परिकल्प्य, अथवा विश्वेदेवार्चनानन्तरं पितृब्राह्मणानां सन्निधानं परिकल्प्य कृत्वा तत्र पितॄनर्चयेत्। 'गन्धाद्यैः' सौरभयुक्तैः। 'गन्धैः' चन्दनादिभिः। माल्यैश्चार्चयेत्। 'आच्छादनं नियोजयेत्' पुत्रादिभिः संयोजयेत् तदुद्देशेन दद्यादित्यर्थः ।

पाद्य-मात्स्ययोरपि।

या दिव्येत्यर्घ्यमुत्सृज्य दद्याद्गन्धादिकं ततः।
वस्त्रोत्तरञ्चानुपूर्व्वं दत्त्वा संस्रवमादितः॥

"या दिव्या इत्यनेन मन्त्रेणार्घ्यं दत्त्वा, 'गन्धादिकं' गन्ध-पुष्प-धूप-दीपं, 'वस्त्रोत्तरं' वस्त्रमुत्तरं, यस्य दीयते तत्पितृभ्यो दत्त्वा पात्रस्थं जलशेषं पितृपात्रे निधाय तत्पात्रमुत्तरप्रदेशे न्युब्जं कुर्य्यादित्यनेन सम्बन्धः। 'अनुपूर्व्वं' आनुपूर्व्येण, प्रथमं गन्धं दत्त्वा ततः पुष्पाणि ततो धूप-दीपमाच्छादनं दद्यादिति।

वैजवापेन तु आच्छादनदानान्तरं यज्ञोपवीतदानमुक्तं।

तस्योपरि कुशान् दत्त्वा प्रदद्याद्देवपूर्व्वकं।
गन्धपुष्पाणि धूपञ्च दीपं वस्त्रोपवीतके॥

'तस्य' न्युब्जीकृतपितृपात्रस्य, उपरि कुश-गन्ध-पुष्पाणि दत्त्वा वैश्वदेविकब्राह्मणपूर्व्वकं पित्रादिब्राह्मणकरेषु गन्धादि दद्यात्। अनेन पित्र्यगन्धादिदानस्य दैवगन्धादिदानेन सह क्रमोपदेशेन दैवे पित्र्ये चार्चनं पदार्थानुसमयेन कार्य्यमिति ज्ञायते। तेन याज्ञवल्क्योक्तेन काण्डानुसमयेन सह अस्य पदार्थानुसमयस्य विकल्पो वेदितव्यः। न चायं गन्धादिदानात् प्रभृत्येव तत्पूर्व्वन्तु काण्डानुसमय एवेति वाच्यं। प्रयोगवैरूप्यापत्तेः। देवांश्च पितॄंश्चावाहयिष्य इत्यनुज्ञाप्येत्यादिना गन्धादिदानात् प्रागेवानुष्ठानस्य पैठीनसिना स्मृतत्वाच्च। अस्य च गन्धादिदानस्य न्युब्जीकृतपात्रोपरि कुशनिधानानन्तर्य्यमपि वैकल्पिकं वेदितव्यं। निरन्तरदर्शितमत्स्यपुराणवचने तत्पूर्व्वमेवावश्य-कर्त्तव्यताया अवगमात्। 'वस्त्र-यज्ञोपवीतके' इति। वस्त्रं यज्ञो-

पवीतं च दद्यात् । न चैतत् "वस्त्राभावे यज्ञोपवीतकं" इति वृद्धशातातपविहितं वस्त्रप्रतिनिधिरूपं यज्ञोपवीतमिति मन्तव्यं, समुच्चयाभिधायकसमासविरोधात् यज्ञोपवीतप्रकरणप्रदर्शितस्वतन्त्रयज्ञोपवीतदानोपदेशबाधापत्तेश्च ।

विष्णुना त्वलङ्कारदानमप्युक्तं ।

निवेद्य चानुलेपन-वस्त्र-पुष्पालङ्कार-धूपैः शक्त्या विप्रान् समभ्यर्च्य। निवेद्येत्यनुलेपनादीनि पित्राद्युद्देशेन ब्राह्मणेषु सम्पाद्य तैस्तानभ्यर्च्यालङ्कृत्य वक्ष्यमाणं कुर्यादित्यर्थः ।

इति गन्धादिदानविधिः ।

अथ गन्धादिदानेतिकर्त्तव्यता ।

तत्र तावद्विश्वेदेवगन्धादिदाने प्रदर्शिता मन्त्राः पित्र्यगन्धादिदानेऽपि वेदितव्याः । "दीपश्चेदं ज्योतिर्दैवे पित्र्ये च कर्मणि" इत्यादेर्भविष्योत्तरवचनस्य तत्साधारण्यप्रतिपादकस्य विश्वेदेवगन्धादिदानप्रकरणे प्रदर्शितत्वात्। एवमेव श्राद्धकर्त्ता गन्धेर्गात्रानुलेपने क्रियमाणेऽपि पवित्रकरत्वमङ्गं पुनर्द्विजैः क्रियमाण इति तत्प्रकरणप्रदर्शितवचनवशादिहाप्यवगन्तव्यं । एवमेव गन्धादिपूजासिद्ध्यर्थं श्राद्धकर्त्ता ब्राह्मणेन चोत्तरीयोपवीतयोः ब्राह्मणस्कन्धादनुत्तारणं वर्तुलपुण्ड्राकरणं ब्राह्मणेन शिखायामेव माल्यधारणं गन्धादिदानस्योदकपूर्व्वकत्वमित्येवमादयो नियमाः समाना वेदितव्याः । विशेषस्तूच्यते । गन्धदानादौ गन्धद्वारामित्यादिमन्त्रोच्चारणान्ते पितृ-पितामह-प्रपितामहानां नाम-गोत्रोच्चारणं कर्त्तव्यं।

तथाचोक्तं आदित्यपुराणे।

अतोऽर्थं प्रदद्येद्धूपं पितॄनुद्दिश्य धर्म्मवित् ।
सङ्कीर्त्त्य नाम-गोत्रादि प्रत्येकञ्च प्रकल्पयेत् ॥

यस्माद्धूपदानेन पितॄणामक्षया प्रीतिर्जायते अत एतदर्थं नाम-गोत्राद्युच्चारणपूर्व्वकं पितॄनुद्दिश्य ब्राह्मणानां पुरतो घृत-मधुयुक्तं गुग्गुल्वादिकं धूपप्रकरणोक्तं धूपं प्रदद्येत् तच्च पित्रादिभ्यः कल्पये-त्तदुद्देशेन दद्यादित्यर्थः। अत्र यद्यपि धूपदान एव नाम-गोत्राद्युच्चारणं प्रतीयते तथापि गन्धादिदानादावप्यनुसन्धेयं।

अत आह पैठीनसिः।

नाम-गोत्रे समुच्चार्य्य दद्याच्छ्रद्धासमन्वितः ।
पितॄनुद्दिश्य विप्रेभ्यो गन्धादीन् देवपूर्व्वकं ॥

आदिशब्देन पुष्प-धूपाच्छादनानि संगृह्यन्ते। अतएवाह हारीतः, "गन्धान् पितृगोत्र-नाम गृहीत्वाप उपस्पृश्यैवमेवेतरयोर्धूप-दीप-माल्याच्छादनं" इति। पित्रर्थं ब्राह्मणहस्तेऽपो निनीय गन्धान् चन्द-नकुङ्कुमकर्पूरादीनादाय वक्ष्यमाणप्रकारेण पितुर्नाम-गोत्रे समुच्चार्य्य ब्राह्मणहस्त एव गन्धं दत्त्वाप उपस्पृश्यैवमेव पुष्प-धूप-दीपाच्छादानं दद्यात्। 'इतरयोः' पितामह-प्रपितामहयोः, 'एवमेव' पितुरिव, गन्धाच्छादनान्तं तत्तद्ब्राह्मणहस्ते दत्त्वोदकं संस्पृशेदित्यर्थः। तदेवं गन्धादिदानं कृत्वा कृताञ्जलिः श्राद्धकर्त्ता आदित्या रुद्रा वसव इत्येतामृचं जपेत् ।

तथा च लिङ्गदर्शनं ब्रह्मपुराणे।

तानर्च्य भूयोगन्धाद्यैर्धूपं दत्त्वा च भक्तितः ।
आदित्या रुद्रा वसव इत्यृचमजपत् प्रभुः ॥

'तान्' पित्रादीन्, गन्ध-पुष्पैरभ्यर्च्याच्छादनान्तं कृत्वा "आदित्या रुद्रावसवः सुनिष्ठाद्य वा द्यामा पृथिवीमन्तरिचं। सजोषसोयज्ञं मुञ्चन्तु देवा ऊर्ध्वं कृण्वन्त्वध्वरस्य केतुः" इत्येतामृचं वराहः पठितवान्। अतोऽन्येनापि श्राद्धं कुर्वता गन्धादिदानान्ते ऋक् पठितव्येति गम्यते। विष्णुधर्मोत्तरे तु द्विजानवलोकयन् अमुमेव मन्त्रं जपेदित्युक्तं।

सम्पूज्य गन्ध-पुष्पाद्यैर्ब्राह्मणान् प्रयतः सदा ।
आदित्या रुद्रा वसवो द्विजान् वीचंस्ततोजपेत् ॥

अत्र यद्यपि वीचन् जपेदिति जपावेक्षणयोस्तुल्यकालता प्रतीयते तथापि मन्त्रोच्चारणान्त एव द्विजावेक्षणं कर्त्तव्यं। तत्र तस्य करणमन्त्रत्वात्।

तथा च विष्णुः।

विप्रान् समभ्यर्च्यादित्या रुद्रा वसव इति वीच्य ।

अत्रेतिकरणादिमामृग्भणात् रथनामृतस्येतिवत्करणमन्त्रत्वं प्रतीयते।

कठसूत्रे तु मन्त्रान्तरमुक्तं।

यास्तिष्ठन्त्यमृता वागयन्मे मातेति त्रिभिः पाद्यार्घ्याचमनीयोदकानि चानयेदेताभिरेवादित्या रुद्रा वसव इत्येतान् समीच्याग्नौकरवाणीति पृच्छति।

अत्र एताभिरिति सर्व्वनाम्ना मन्त्रोपादानस्य कृतत्वादादित्या रुद्रा वसव इतीतिकरणस्वरूपमात्रार्थपरोव्याख्येयः।

अत्रैवं गन्धादिदानादौ प्रयोगः। यथोक्तप्राचीनावीतित्वादि-

पितृधर्मयुक्तः कर्त्ता प्रथमोपविष्टपैत्रब्राह्मणकरेण सुगन्धिचन्दना-दिकल्कमादाय गन्धद्वारामित्यादिकं मन्त्रमुच्चार्य्य ॐअमुकगोत्रा अस्मत्पितरः अमुकशर्म्माणः सपत्नीकाः वसुरूपाः अयं वोगन्धः स्वधा नमोनम इत्यभिधाय सिक्तोदके ब्राह्मणहस्तेऽर्पयेत्। ब्राह्मणेन च सुगन्ध इत्युक्ते जलमुपस्पृश्यैवमेव पितृस्थानोपविष्टद्वितीयादिद्विजेषु गन्धदानं प्रवर्त्तयेत्। ततः पितृपदस्थाने पितामहपदं वसुप-दस्थाने रुद्रपदं प्रयुज्य पैतामहद्विजेषु तयोरेव स्थानयोः क्रमेण प्रपितामहपदं आदित्यपदं प्रयुज्य प्रपैतामहेषु द्विजेषु पूर्व्वेणैव वाक्ये न गन्धदानं कुर्य्यात्। तदनन्तरं मन्त्रोच्चारणान्तं कृत्वा अमुकगोत्राः अस्मन्मातामहाः अमुकशर्म्माणः सपत्नीका वसुरूपा इत्युच्चार्य्यायं वो गन्ध इत्यादिना वाक्येन मातामहेषु द्विजेषु गन्धं दत्त्वा मातामहपदस्थाने प्रमातामहपदं मातुः पितामहा इति वा प्रयुज्य वसुपदस्थाने रुद्रपदञ्च प्रयुज्य प्रमातामह-द्विजेषु मातामहपदस्थाने वृद्धप्रमातामहपदं मातुः प्रपितामहा इति वा प्रयुज्य रुद्रपदस्थाने चादित्यपदं प्रयुज्य प्रपैतामहेषु द्विजेषु मातामहवाक्येनैव गन्धं दद्यात्। ततस्तत्करस्थितैर्गन्धैः श्राद्ध-कर्त्ता क्रमेण तान् ब्राह्मणान् भालाद्यङ्गेषु विलिम्पेत्। त एव वा स्वयं लिम्पेयुः। अनन्तरं गन्धवत्प्रशस्तानि पुष्पाणि पत्राणि चादाय पुष्पवतीमृचमुच्चार्य्य गन्धपदस्थाने पुष्पपदं प्रयुज्य पूर्व्ववत् पूर्व्वेणैव वाक्येन ब्राह्मणकरेषु पुष्पं पत्रञ्च दद्यात्। एवमेव धूरसीत्युच्चार्य्य गन्धपदस्थाने धूपपदं प्रयुज्य पूर्व्ववत् पूर्व्वेण वाक्येन धूपं दद्यात्। एवमेव धूपपदस्थाने अयं दीप अयं वो ज्योतिः अयं दीपप्रका॥

इत्येतेषामन्यतमप्रयोगेन(१) दीपं दद्यात् । एवमेव तत्तद्देयद्रव्य-वाचकपदानि दत्त्वा वस्त्रालङ्कारादिकं दद्यात् । तदनन्तरं कृता-ञ्जलिः कर्त्ता पितृणामर्चनं सम्पूर्णमस्त्विति पित्र्यद्विजान् प्रति-वदेत् । तैश्चास्त्वर्चनं सम्पूर्णमिति प्रतिवचने कृते सङ्कल्पसिद्धिर-स्त्वित्यादिकं आचमनान्तं वैश्वदेविकवत् कुर्य्यात् । तदनन्तरमादित्या रुद्रा वसवदृत्यादिकं मन्त्रमुच्चार्य्य ब्राह्मणावेक्षणं कुर्य्यात् । तदेवं गन्धादिदानं निर्वर्त्य श्राद्धभूमिशोधनादिकं कुर्य्यात् । तथा च कालिकापुराणे ।

निर्वर्त्त्य ब्राह्मणादेशात् क्रियामेवं यथाविधि ।
पुनर्भूमिं तु संशोध्य पङ्क्तेरन्तरमाचरेत् ।
भाजनानि ततोदद्याद्धस्तशौचं पुनः क्रमात् ॥

'एवं' अनेन प्रकारेण, 'ब्राह्मणादेशात्' ब्राह्मणानुज्ञया, गन्धा-दिदानान्तां क्रियां निष्पाद्यार्चनप्रसङ्गपतितकुशकुसुमादिद्रव्ययुक्ता-मर्चकपदपातोपहतां भूमिं पतितकुशाद्यपनयनेन करपरिमार्जनेन 'संशोध्य' शुचीकृत्य, 'पङ्क्तेरन्तरं' भोजनपात्रस्थापनपर्य्याप्तप्रदेशं, परितोभस्मादिरेखादिरचितमण्डलैरन्योन्यव्यवधानं कुर्य्यात् । 'भाज-नानि' भोजनपात्राणि, 'दद्यात्' यथोक्तमण्डलमध्ये स्थापयेत्। ततो ब्राह्मणहस्तचालनाय जलं दत्त्वा पात्रचालनं कुर्य्यात् ।

मर्य्यादाकरण-हस्तप्रक्षालनयोः पौर्वापर्य्यविपर्य्यये दोषो मत्स्य-पुराणेऽभिहितः ।

---

(१) धूपपदस्थाने दीपपदप्रयोगेन इति ख० ।

अकृत्वा भस्ममर्य्यादां यः कुर्य्यात्पाणिशोधनं ।
आसुरन्तद्भवेच्छ्राद्धं पितॄणान्नोपतिष्ठते ॥

मर्य्यादाशब्देनात्र यथाव्याख्यातं पङ्क्तेरन्तरमेवोच्यते । भस्मग्रहणं नीवारचूर्णाद्युपलक्षणार्थं।

अतएव ब्रह्मपुराणे ।

मण्डलानि च कार्य्याणि नैवारैश्चूर्णकैः शुभैः ।
गौरमृत्तिकया वापि प्रणीतेनाथ भस्मना ।
पाषाणचूर्णसङ्कीर्णमाहृतञ्च विवर्जयेत् ॥

भृगुणा तु ब्राह्मणादिवर्णविभागे मण्डलानां संस्थापनविशेषस्तत्साधनञ्चोक्तं ।

भस्मना वारिणा वापि कारयेन्मण्डलं ततः ।
चतुष्कोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतं ॥

'मण्डलाकृति' वर्तुलाकारं ।

ब्रह्माण्डपुराणे तु हस्तपात्रक्षालनोदकस्य प्रतिपत्तिरुक्ता ।

प्रक्षाल्य हस्तपात्रादि पश्चादग्निविधानवित् ।
प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपेत् शुचौ ।

एतच्च पादप्रक्षालनमण्डले प्रक्षिप्यत इति शिष्टाचारः ।

इति गन्धादिदानेतिकर्त्तव्यता ।

समाप्तञ्च पित्र्यर्चनकाण्डं ।

महादेवमहीपालमान्योहेमाद्रिरादरात् ।
करोति निपुणं पुण्यमग्नौकरणनिर्णयं ॥

## अथाग्नौकरणनिर्णयः ।

तत्राग्नौकरणहोमः किं प्राचीनावीतिना कार्य्यो यज्ञोपवीतिना वेति सन्देहे चिन्त्यते । तत्र तावत्पितृरूपदेवतायोगमन्त्रगतस्वधाशब्दप्रयोगाभ्यां प्राचीनावीतिना कार्य्यं इति मन्यन्ते । तथाहि । अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति शङ्खलिखितादिप्रदर्शितमन्त्रवर्णप्रकाशस्य कव्यवाहनत्वविशिष्टस्याग्नेः पितृमत्त्वविशिष्टस्य च सोमस्य देवतात्वमवगम्यते । तत्र कव्यं नाम यत्पितृभ्योदीयतेऽन्नादि तदुच्यते । तस्य च देवैरसम्बन्धादग्निना पितृभ्य एव तद्वोढ़व्यं । पित्र्येष्टौ च श्रूयते । "अग्निं कव्यवाहनं यजति य एव पितृणामग्निस्तमेव तद्यजति" इति । शतपथश्रुतिश्चाह "हव्यवाहनोवै देवानां कव्यवाहनः पितृणां तस्मादाहाग्नये कव्यवाहनायानुब्रूहि" इति । अतोऽत्र पितृरूपोग्निर्देवता । ननु येन शब्देन विधीयते देवता तेनैव सा निरूप्या नान्येन, अन्येन निरूप्यमाणान्यैव भवेत् । अतएवेन्द्र-महेन्द्रयोः कर्मसमवायिदेवतास्वरूपं भिन्नमेवेति समर्थयन्ते । अतः कव्यवाहनशब्देन विहिता देवता कथं पितृरूपेत्युच्यते । मैवं । पितृ-पितामहादिशब्दैर्विहितानां यथा पितृशब्देन निरूपणमविरुद्धन्तथा तत्रापि भविष्यति । तत्रापि विरुद्धमिति चेत् । तन्न । एवं हि सति पितामहादिदैवत्ये कर्मणि पित्र्यकर्मविहितधर्मान्वयो न सिध्येत् । अथ वाक्यान्तरेण तेषां पितृत्वाभिधानात् पितृभ्यो दद्यादिति देवतात्वावगमाच्च पितृशब्देन निरूपणं न विरुध्यत इत्युच्यते । तर्हि कव्यवाहनस्याग्नेरपि प्रमाणान्तरेणैव पितृरूपत्वावगतौ पितृशब्देन निरूपणं न मन्दीभवति । पितृमत्त्वं नाम

सोमस्य सोमादिपितृगणाधारत्वं तदुपयोज्यत्वं वा। तदेतदुभयविधं पितृसन्निधानं लिङ्गात्सोमस्य पितृरूपत्वङ्गमयति। तथा च श्रुतिः। "पितृदेवत्योवै सोमः" इति। पितृमत्त्वञ्च न सोमस्योपलक्षणं किन्तु विशेषणं। तच्च दृष्टार्थत्वमालोच्य विशेषणीभूतानां पितॄणां सहभावेन देवतार्थत्वमिति गम्यते। यत्तु "त्वष्टा सोमं पिब" इत्यत्र त्वष्टुर्देवतात्वं निराकृतं तद्देवताविधिवाक्ये कवलपाचीवत् श्रुतेरित्यदोषः। हारीतस्मृतिस्नानयोः पितृरूपत्वं गमयति। "मेचणपाणिरनुज्ञातोयत् सोमाय पितृमते जुहोति सोमज्येष्ठांस्तेन सोमपांश्च पितॄन् प्रीणाति। यद्यमायाङ्गिरस्वते यमज्येष्ठान् बर्हिषदस्तेनाग्निज्येष्ठानग्निष्वात्तांश्च यदग्निं कव्यवाहनं स्विष्टकृतं तेन यन्मेक्षणमादधात्यात्मानं तेन प्रीणाति" इति। किञ्च कव्यवाहनाग्निऽपितृमत्सोमयोश्चातुर्मास्यान्तर्गतायां पित्र्येष्टौ देवतात्वदर्शनात् पितृरूपत्वमवसीयते। इष्टौ चानयोः प्राचीनावीतवतीज्या दृष्टा, अतः पिण्डपितृयज्ञहोमेऽग्नौकरणे च तद्वदेव भवितुमर्हति। तदेवमस्य कर्मणः पितृदैवतत्वे स्थिते "प्राचीनावीतं पितॄणां" इति च स्मृतेः प्राचीनावीतिना होमः कार्य्यः। होममन्त्रे स्वधाशब्दप्रयोगश्च दृश्यते। "सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नमः" इति। स्वधाकारस्यासाधारण्येन पितृतृप्तिहेतुः। तथा च शतपथश्रुतिः। "वाचं धेनुमुपासीत तस्याश्चत्वारस्तनाः स्वाहाकारो वषट्कारोहन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च हन्तकारञ्च मनुष्याः स्वधाकारं पितरः" इति। अतो प्राचीनावीतिना कार्य्यः।

मनुस्मृतिश्च साक्षात् प्राचीनावीतं विदधाति ।

अपसव्यमग्नौ कृत्वा सर्वमावृत्य परिक्रमं ।

अपसव्येन हस्तेन निर्वपेदुदकं शुचि ॥ इति ॥

छन्दोगपरिशिष्टे कात्यायनोऽपि "अग्नौ द्वे आहुती जुहोति देवेभ्यः" इति पिण्डपितृयज्ञप्रकरणाम्नातदेवश्रुतिसामर्थ्यात् पितृयज्ञात्मकस्य होमस्य दैविकत्वमभिप्रेत्य तद्विकृतिभूतस्याग्नौकरणहोमस्यापि दैविकत्वं मन्यमानः "अग्नौकरणहोमस्तु कर्त्तव्य उपवीतिना । प्राङ्मुखेनैव देवेभ्यो जुहोति" इति श्रुतेः यज्ञोपवीतिना कर्त्तव्यत्वं पूर्वमभिधाय न्यायान्तरेण सिद्धान्ततया प्राचीनावीतिकर्त्तव्यत्वमुक्तवान् । "अपसव्येन वा कार्य्यो दक्षिणाभिमुखेन च । निरुप्य हविरन्यस्मा अन्यस्मै नहि हूयते" इति । अस्यार्थः । पिण्डपितृयज्ञे पितृभ्यो वो जुष्टं निर्वपामीति मन्त्रे सकृदेव होमदेवतार्थं पिण्डदेवतार्थञ्च निर्वापः क्रियते । ततश्च निर्वापमन्त्रसामर्थ्यात् पितृरूपयोरेव सोमाग्न्योर्देवतात्वमिति गम्यते । देवरूपयोर्देवतात्वाभ्युपगमे अन्यस्मै निरुप्तमन्यस्मै हूयत इत्ययुक्तमापद्येत । अतः पितृयज्ञहोमः पित्र्यत्वात् प्राचीनावीतादिपित्र्यधर्मयुक्तेन क्रियत इति तद्विकृतिभूतः अग्नौकरणहोमोऽपि तद्धर्मयुक्तेनैव कार्य्य इति अयमेव पक्षः श्रेयानितिमन्यमान आश्वलायनः पिण्डपितृयज्ञसूत्रे स्वमतत्वेन पिण्डपितृयज्ञहोमं पैतृकधर्मयुक्तमुक्त्वा परमतत्वेन दैविकधर्मयुक्तमुक्तवान् प्राचीनावीतीत्वमुपाधाय मेक्षणेनादायावदानसम्पदा जुहुयात् सोमाय पितृमते स्वधानमोऽग्नये कव्यवाहनाय स्वधानम इति स्वाहाकारेणाग्निं पूर्वं यज्ञोपवीतीति । अतोऽयमग्नौकरणहोमः प्राचीनावीतयुक्तेन कार्य्यः ।

अत्रोच्यते। कव्यवाहनत्वादिलिङ्गानुमीयमानपितृत्वयुक्तदेवतानुरोधेन होमस्य पितृत्वमापाद्य प्राचीनावीतमुच्यमानं प्रत्यक्षश्रुतिनिर्दिष्टदेवत्व-युक्तदेवतान्वयनिष्पादितदैवकर्मत्वोपनीत-यज्ञोपवीतप्रतीत्या बाध्यते। तथा च श्रुतिः।

स उदङ्ङासीनोऽग्नौ द्वे आहुती जुहोति देवेभ्यो देवान् वा एष उपावर्त्तते य आहिताग्निर्भवति योदर्शपूर्णमासाभ्यां यजते अथैतत् पितृयज्ञेनैवा-चारीत्तद् देवेभ्यो निह्नुते स देवैः प्रसूतोऽप्येतत्पितृभ्यो ददातीति।

दैवञ्च कर्म यज्ञोपवीतिना कार्य्यं तथा च पिण्डपितृयज्ञे श्रूयते ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्तीति। "अन्यथानुपपत्त्या हि श्रुतेरस्याः सदैव तु। कर्त्तव्यं दैविके सव्यमानर्थ-क्यमतोन्यथा"। अतोऽस्य होमस्य दैविकत्वादयं यज्ञोपवीतिना कार्यः। नन्वस्य दैविकत्वे पितृभ्योजुष्टं निर्वपामीति निर्वापमन्त्रविरोधः। मैवं। यथा दर्श-पूर्णमासयागेऽनेकदेवतासम्बन्धित्वेन निरुप्तेषु व्रीहिषु प्रोक्षितव्येषु अग्नये वोजुष्टं प्रोक्षामीत्यत्र वः इत्येष शब्दः केषुचिदेव व्रीहिषु पर्य्यवस्यति न सर्वेषु। तथा पितृभ्योवोजुष्टं निर्वपामीत्यय-मपि केषुचित्पिण्डार्थेष्वेव पर्य्यवस्यति न तन्मिश्रानपि होमार्थान् व्याप्नोति। तूष्णीमेव सर्वनिर्वाप इत्येतस्मिंस्तु पक्षे मन्त्रविरोधशङ्कैव नास्ति। अस्ति चायमपि पक्षः। तथा चापस्तम्बः मृन्मये निर्वपति पितृभ्योवोजुष्टं निर्वपामीति तूष्णीं वेति। तूष्णीं पृथङ्निर्वाप इत्यस्मिंस्तु पक्षे सुतरां न विरोधशङ्का अस्ति, चायं पक्षः, तथा च चरकाध्वर्युसूत्रकृदत्रः,

पवित्रान्तर्हिते चरुं त्रिर्निर्वपति यज्ञोपवीती दक्षिणेन हस्तेन

त्रिः प्राचीनावीती सव्येन हस्तेन यज्ञोपवीतीमेक्षणेन जुहुयात् सोमाय पितृमते स्वधा यमायाङ्गिरस्वते पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति।

तस्मान्न निर्वापमन्त्रविरोधः। अग्नौकरणप्रकृतिभूते पिण्डपितृयज्ञहोमे चोपवीतोपदेशो दृश्यते।

तत्र तावद्बैजवापः।

आज्यमासिच्योदास्य यज्ञोपवीत्यन्वाहार्यपचने मेक्षणेन द्वे आहुती जुहोत्यग्नये इति पूर्वां सोमायेत्युत्तरामिति।

'अन्वाहार्यपचनः' दक्षिणाग्निः।

आपस्तम्बोऽप्याह।

अध्वर्युरुपवीती दक्षिणं जान्वाच्य मेक्षण उपस्तीर्य्य तेनावदायाभिघार्य्य सोमाय पितृमते स्वधा नम इति दक्षिणाग्नौ जुहोति यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयामग्नये कव्यवाहनाय स्वधा नम इति तृतीयां मेक्षणेन तण्डुलान् हुत्वा तूष्णीं मेक्षणमादधाति न यमाय जुहोतीत्येक इति।

आह सांख्यायनः।

दक्षिणं जान्वाच्य यज्ञोपवीती प्रागासीनो मेक्षणेन जुहोत्यग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति।

ननु सूत्रकारैः पिण्डपितृयज्ञमधिकृत्यैवोपवीतं होमे विहितं तस्य च प्रकृतहोमगृहीतत्वाच्छ्रौतत्वाच्च नाप्रकृतस्मार्त्ताग्नौकरणहोमे तद्भवितुमर्हति। किन्तु स्मृतिविहितं प्राचीनावीतमेव तत्रान्वयं लभते। मैवं। यथा श्रौतोऽपि पिण्डपितृयज्ञोवचनात् स्मार्त्ताग्नौ क्रियते, यथा च

प्रकृताग्नेयादिगृहीतप्रयाजादयोऽप्रकृतसौर्यादियागान्वयं लभन्ते। तथा श्रौतप्रकृतपिण्डपितृयज्ञसम्बन्ध्युपवीतमप्यतिदेशात् स्मार्त्ताप्रकृताग्नौकरणहोमान्वयं लप्स्यते। वाचनिकश्चातिदेशः।

तथाचाश्वलायनगृह्यं।

उद्धृत्य घृताक्तमन्नमनुज्ञापयति अग्नौ करिष्ये करवै करवाणीति वा प्रत्यभ्यनुज्ञाक्रियतां कुरुष्व कुर्विति अथाग्नौ जुहोति यथोक्तं पुरस्तादिति।

'पुरस्तात्' पूर्वं पिण्डपितृयज्ञप्रकरण इत्यर्थः।

कात्यायनगृह्येपि।

उद्धृत्य घृताक्तमन्नं पृच्छति अग्नौकरिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वेति।

अत्र यद्यपि पिण्डसाध्यः पितृयज्ञइति मुख्यया वृत्त्या पिण्डदानस्यैवेदं नामधेयं तथापि दण्डिवल्लक्षणया होमस्यापि कल्पना इत्यूहनीयं, चातुर्मास्ये प्रथमे पर्वणि वैश्वदेवनामवत्। तदेवं पिण्डपितृयज्ञवदित्यनेन होमेतिकर्त्तव्यतातिदेशे सिद्धे यज्ञोपवीतधर्मकताग्नौकरणस्योपपन्ना।

याज्ञवल्क्योऽप्याह।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवदिति।

प्रचेता अपि।

कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवदिति।

पारस्करोऽप्याह।

पैतृकैरभ्यनुज्ञातो जुहोति पितृयज्ञवत्।

अतोतिदेशादुपवीतिनाग्नौकरणहोमः कार्यः । उपदेशश्च भवति ।

तथा च गृह्ये बैजवापः ।

यज्ञोपवीत्यग्नौ करवाणीत्यामन्त्र्याग्नौकरणं कुर्यादिति ।

आह गोभिलः ।

मेक्षणेनोपघातं जुहुयात्स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाग्नये कव्यवाहनायेति द्वितीयां अत ऊर्ध्वं प्राचीनावीतीति ।

छन्दोगगृह्ये ।

अग्नौकरिष्यामीत्यामन्त्रणं होष्यतः कुर्वित्युक्तः कांस्यमये चरोः समवदाय मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमत इति पूर्वां स्वाहाग्नये कव्यवाहनायेत्युत्तरामत ऊर्ध्वं प्राचीनावीतीति ।

अत्र होमोत्तरकाले प्राचीनावीतिवचनाद्धोमकाले यज्ञोपवीत्येतदुक्तं भवति । नन्वेवं तर्ह्यपसव्यमग्नौकृत्वा सर्वमावृत्परिक्रममित्यादिकाया मनुस्मृतेः का गतिः । उच्यते । यदि तावत्प्राचीनावीतप्रतिपादनपरेयं स्मृतिः तदा विरोधे त्वनपेक्ष्यं स्यादितिन्यायात्प्रत्यक्षया श्रुत्या बाध एव । वस्तुतस्तु प्राचीनावीतप्रतिपादकत्वमस्याः स्मृतेर्नास्त्येव । तथा च मेधातिथिनास्य श्लोकस्य स्वमतेन परमतेन चान्यथैव व्याख्यानं कृतं । अग्नये कव्यवाहनाय स्वधा नम इत्याहुतिप्रक्षेपलक्षणं यत्कार्यं तदपसव्यं दक्षिणेन हस्तेन कर्त्तव्यं । न पुनरुभयोर्हस्तयोर्मुक्तमित्यादिनिषेधभयादुभाभ्यां सव्योपसृष्टेन दक्षिणेन वा सव्येन केवलेनेति परमतेन व्याख्याय स्वमतेन व्याख्यानं कृतं या अग्नावाहुतयो हूयन्ते तासां यः आवृत्परिक्रमः आवर्त्तमानानां यः क्रमः तं सर्वमपसव्यं कुर्यात् । दक्षिणसंस्था आहुतीः

कुर्यान्नोदकसंस्था इत्यर्थः। अपसव्येन हस्तेन निर्वपेदुदकं शुचीति अवनेजनाख्योयमुदकनिर्वापः। तत्र चायोदपात्रमादायावने जपतीति वाजसनेयशाखायां पिण्डपितृयज्ञाम्नातस्योदपात्रस्यातिदेशिकीं प्राप्तिं निवर्त्तयितुमिदं दक्षिणहस्तविधानं, अतो न प्राचीनावीतविधायिकेयं स्मृतिः। अथवास्तु शङ्खधरस्मृतिचन्द्रिकाकारानुसारादिधायिकापि तथापि कात्यायनाश्वलायनादिसूत्रानुसारि-कतिपयकर्तृविषयिण्येव भविष्यति। कात्यायनेन हि श्राद्धकल्पेऽग्नौकरणहोमे पिण्डपितृयज्ञवत् कृत्वेत्युक्तं। पिण्डपितृयज्ञहोमे च मेक्षणेन जुहोत्यग्नय इति सोमायेति च तेनैवोक्तं। एतत्सूत्रव्याख्यानावसरे चोपाध्यायकर्केणोक्तं होमस्य यज्ञोपवीतिना प्राङ्मुखेन च कर्त्तव्यः देवत्वात्। स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्य इति श्रुतेः। न वा यज्ञोपवीतिना कर्त्तव्यः किन्तु प्राचीनावीतिनैव पित्र्यकर्माङ्गत्वात् प्रधानन्यायोपचाराच्चाङ्गानां महापितृयज्ञे च दैवाज्यग्रहणे यज्ञोपवीतिविधानात्। स यज्ञोपवीती भूत्वाज्यानि गृह्णातीति। अयञ्च पित्र्यकर्माङ्गत्वेन प्रसज्यमानं प्राचीनावीतं निवर्त्तयितुं विधिर्भवन्नाज्यग्रहणादन्यत्र प्राचीनावीतमभ्यनुजानातीति गम्यते। दैवत्वेन प्राप्तस्यास्य प्राचीनावीतस्यानुवादोऽस्त्विति चेत्। न। अनुवादप्रयोजनाभावाद्वाक्यस्य प्राचीनावीतापवादपरत्वात्। अत्र यद्यपि पक्षद्वयं दृश्यते तथापि प्राचीनावीतपक्षस्य पश्चादुपन्यासाचात्कात्यायनानुयायिभिस्तानुष्ठीयमानत्वात्सिद्धान्तता कल्प्यते तैस्त्वग्नौकरणानुज्ञाभ्यर्थनादारभ्य प्राचीनावीतमाद्रियमाणं दृश्यते। अतो यत् नागरखण्डे प्रश्नादारभ्य प्राचीनावीतमुक्तं, तत्कात्यायनमतानुसारिभिरेवाश्रयणीयं।

ततः पाकं समादाय पृच्छेद्विप्रान्नृपोत्तम।
अहमग्नौकरिष्यामि होमं पितृसमुद्भवं॥
अनुज्ञा दीयतां मह्यमपसव्याश्रितस्य भोः।

'ततः' पितृब्राह्मणार्चनानन्तरं। अपसव्याश्रितस्यानुज्ञा दीयतामिति वचनादभ्यर्थनादारभ्य प्राचीनावीतं गम्यते। आश्वलायनसूत्रन्तु पूर्वमेव दर्शितं। तत्र यद्यपि प्राचीनावीतं पूर्वमुक्तं पश्चाच्च यज्ञोपवीतं तथापि तच्छाखीयैरादृतत्वात् प्राचीनावीतस्यैव सिद्धान्तता व्यवसीयते। केश्चित्पुनरनुज्ञाभ्यर्थनं यज्ञोपवीतिभिरेवानुष्ठाय तदुत्तरभाविनि क्रियाकलापे प्राचीनावीतं क्रियमाणं दृश्यते। मत्स्यपुराणे त्वनुज्ञाभ्यर्थनोत्तरकालीनेष्वपि पर्युक्षणपर्यन्तेषु पदार्थेषु यज्ञोपवीतमुक्त्वा परतः प्राचीनावीतमुक्तं। "यज्ञोपवीती निर्वर्त्य ततः पर्युक्षणादिकं। प्राचीनावीतिना कार्य्यमतः सर्वं विजानता"॥ एतदपि यच्छाखागृह्यादौ विहितं सर्वथा वा येषां यज्ञोपवीतं प्राचीनावीतं वा नाम्नातन्तैरेव ग्रहीतव्यं। यत्तु कव्यवाहनत्वादिलिङ्गेनाग्न्यादेः पितृरूपत्वमुक्तं। तन्न। न हि कव्यवाहनेन पितृमता वा पितृरूपेण भाव्यमित्यत्र किञ्चित्प्रमाणमस्ति, अतो न तद्योगात् पित्र्यत्वं होमस्य। अथ यदग्नौ हुतेन देवस्थाः पितरश्चास्तर्पितैर्द्विजैः। भूमौ दत्तेन तिर्यक्स्थास्तृप्यन्तु पितरः सदेति शातातपादिवचनैर्होमस्य पित्र्यत्वमुच्यते। तन्न। अस्य वाक्यस्यार्थवादरूपत्वेन विधिशक्त्यभावान्नात्र होमादेः पित्र्यत्वं विधीयते। किन्तु प्रमाणान्तरावगतं यथास्थितं श्राद्धं स्तूयते, स्वधाशब्दप्रयोगो पित्र्यत्वे लिङ्गं। वचनाद्दैवेऽपि स्वधाशब्दः ऐन्द्र्यागार्हपत्योपस्थानवत्। पित्र्येपि नान्दीमुखदैव-

त्येयग्नौकरणहोमे स्वधाशब्दप्रयोगोपपत्तेः, विकल्पो वा प्राचीनावीतोपवीतयोः दैव-पित्र्योभयरूपत्वान्मिश्ररूपं होदं कर्म। तत्र दैवेन पित्र्येण वा धर्मेण युक्तं कार्य्यं कथं पुनर्मिश्रं स्वधा नम इति मन्त्रे उभयदर्शनात्। स्वधा हि पित्र्यं लिङ्गं नमो दैवस्य तथा च श्रुतिः।

स्वधाकारः पितॄणां नमस्कारो देवानामुभये होज्यन्त इति।

अत्राहुः उपवीतविधिवचनानां भूयस्त्वात् भूयसां स्यात्सधर्मत्वमिति न्यायेनोपवीतिनैव कार्यो होम इति। अन्ये तु यथाशाखं व्यवस्थामेव प्राचीनावीतोपवीतयोर्मन्यन्ते।

तथा च कात्यायनः।

स्वाहा स्वधा नमः सव्यमपसव्यं तथैव च।

आहुतीनां च या संख्या सा वा गस्या स्वसूचतः॥ इति॥

इति प्राचीनावीतादिनिर्णयः :

अथाग्नौकरणहोमाधिकरणनिर्णयः।

अग्निरूपं अनग्निरूपञ्चेति द्विविधमधिकरणं। तत्र तावदग्निरूपस्य निर्णये केचिदाहुः, पिण्डपितृयज्ञप्रकरणे "दक्षिणाग्नौ जुहोति" इति वचनादग्नौकरणे च "जुहुयात्पितृयज्ञवत्" इति स्मरणादतिदेशप्राप्ते दक्षिणाग्नौ होम इति। अन्ये त्वाहुः, श्राद्धस्य गृह्योक्तत्वात्तदन्तर्भूतस्याग्नौकरणहोमस्य गृह्यत्वे प्रकृतगृह्याग्न्यन्वयावगमादौपासनेऽग्नाविति। किञ्च। स्मार्त्तं होदङ्कर्म अतोगृह्याग्नावेव कर्त्तव्यं। यत आह याज्ञवल्क्यः।

कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।

दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥

'स्मार्त्तं कर्म' वैश्वदेवोपासनाग्नौकरणादिरूपं, 'विवाहाग्नौ' विवाहसमयसमुत्पादिते। 'दायकालाहृते' रिक्थविभागकाले, वैश्यकुलादाहृत्य संस्कृते चौपासनेऽग्नौ कुर्वीत श्रौतं कर्माग्निहोत्रादिरूपं वैतानिकाग्निष्वाहवनीयदक्षिणाग्न्यादिषु कुर्व्वीतेत्यनुषज्यते ।

मनुरप्याह ।

औपासनाग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञानपक्तिञ्च यच्चान्यद्गृह्यकृत्यकमिति ॥

अत्रोपदेशादतिदेशबाधोन्याय्य इत्यौपासनाग्न्यधिकरणत्ववादिनो मन्यन्ते । दक्षिणाग्न्यधिकरणत्ववादिनस्तु बाधलाघवन्यायस्यैरातिदेशिकस्याप्यनुग्रहाभिमतौ प्राप्तबाधस्य चात्यन्तदुष्टत्वात्गतावुपदेशातिदेशयोः परस्पराबाधेनैव सन्निवेशोपपत्तावनन्यगतिन्यायाभ्युपगमस्यातिदेशिकपदार्थबाधस्यान्याय्यत्वमनुसन्दधानाः कर्म स्मार्त्तमित्यादिसामान्यवचनस्योपासनादिकर्मसु सावकाशत्वादग्नौकरणव्यतिरिक्तविषयत्वं मन्यन्ते। ननूपदेशादतिदेशोदुर्व्वलः किमतः। न हि दुर्व्वलः इत्येव बाधः,किन्तु अतुल्यविषयो दुर्व्वलः। किञ्च वाचनिकोऽयमतिदेशः उपदेशान्न भिद्यते, अतः सर्वाधानोपासनाग्न्यभावेऽप्यर्द्धाधानेन तत्सद्भावेऽपि वाहिताग्निनामावास्याश्राद्धे दक्षिणाग्नौ अग्नौकरणहोमः कार्य्यः। तिथ्यन्तरश्राद्धे तु विहरणाभावेन दक्षिणाग्नेरसम्भवे सर्वाधानिना द्विजपाणावर्द्धाधानिना आहिताग्निना चौपासनेऽग्नावग्नौकरणहोमः कार्य्यः । ननु वाचनिकातिदेशोपनीतेन दक्षिणाग्निना सामान्यवचनप्राप्यमाणोगृह्याग्निरग्नौकरणहोमान्निवर्त्तितः कुतः प्रत्यावृत्त्या तदधिकरणतां लभेत। मैवं। विद्यमानो हि दक्षिणाग्निस्तन्निवर्त्तयेन्न

पुनर्वन्ध्यासुतोपमोऽपि अतः सामान्यवचनं दक्षिणाग्निमत्कर्तृकाग्नौ-करणहोमप्रयोगान्निवर्त्तते नानग्निककर्तृकात्तत्प्रयोगात्। अतो दक्षिणाग्न्यभावे स उपासनाग्नौकर्त्तव्यः।

तदेतदाह विष्णुधर्मोत्तरे मार्कण्डेयः।

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः।
अनाहिताग्निस्त्वौपसदेऽन्यभावे द्विजेऽप्सु वा॥

'औपसदः' गृह्याग्निः। अत्राप्सु वेत्यस्य पक्षस्य विषयविशेषः कात्यायनेन दर्शितः।

अग्नौकरणहोमन्तु कुर्य्यादप्स्विति यन्मतं।
स यदापां समीपे स्याच्छ्राद्धे ज्ञेयोविधिस्तदा॥ इति।

यत्तु "औपासनेनान्नसिद्धिरग्नौकरणमेव च" इति प्रजापतिवचनं तत्केवलौपासनाग्निमद्विषयं। तदेवं तावद्दक्षिणाग्नौ होमस्तदसम्भवे तूपासनाग्नाविति शम्भु-शङ्खधरप्रभृतयः। अन्ये उपासनाग्निसद्भावे तत्रैव होमस्तदभावे दक्षिणाग्नावित्याहुः। ते हि "जुहुयात्पितृयज्ञ-वत्" इत्यस्यातिदेशवचनस्यापि सामान्यवचनत्वादुपदेशसामान्यवचना-नुरोधेन दक्षिणाग्निव्यतिरिक्तप्राकृतपदार्थातिदेशविषयतां मन्यन्ते। तथा च वायुपुराणे।

आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः।
अग्न्यर्थं लौकिकं वापि जुहुयात् कर्मसिद्धये॥ इति।

अस्यापरार्केणार्थोव्याख्यातः। अत्र वाक्येऽग्निशब्दः प्रकृतेऽग्नौ वर्त्तते, श्राद्धप्रयोगविधौ च गृह्याग्निः प्रकृतः श्राद्धप्रयोगस्य गृह्यशास्त्रवि-धेयत्वात्। गृह्याग्न्यधिकारेण च गृह्यशास्त्राणां प्रवृत्तिरिति तदभाव

एव तत्कार्य्ये दक्षिणाग्नि-लौकिकाग्न्योर्विधिर्युज्यते, तत्सद्भावे तु तेनैवास्य कार्य्यसिद्धौ किमन्याग्निविधानेन। योऽपि धर्मशास्त्रेषु श्राद्ध-प्रयोगविधिः स गृह्योक्तादभिन्नः प्रत्यभिज्ञानात्। तेन धर्मशास्त्रेष्वपि गृह्य एवाग्निः प्रकृतः। अतोऽग्न्यर्थमित्यत्राग्निशब्दो गृह्यपर एव प्रकृतत्वादिति युक्तमिति। एवमस्य वाक्यस्यार्थं व्याख्याय "आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ" इत्यादेर्मार्कण्डेयवाक्यस्याप्यर्थः स्वमतानुसार्य्येव वर्णितः। तथाहि यदेतदाहिताग्नेर्दक्षिणाग्नौ होमविधानं तत्सर्वाधानेनौपासनाग्न्यभावे अर्द्धाधानपक्षे तु सत्यौपासनाग्नौ तत्रैव होमो न दक्षिणाग्नाविति। यत्पुनरनाहिताग्निस्त्वौपसद इति वचनं तद्दक्षिणाग्नौकरणविधानादनाहिताग्नेर्दक्षिणाग्न्यभावेन होमनिष्पादनशक्तिविरहेऽनधिकार एव पार्वणश्राद्धे भवेदित्याशङ्क्याधिकारप्रतिपादनार्थं। ततस्त्वनाहिताग्निस्त्वौपसदे कुर्य्यान्न त्वनाहिताग्निरेवौपसद इति तस्यार्थ इति। इदन्त्वयुक्तं न ह्याहिताग्निस्तु जुहुयाद्दक्षिणाग्नावित्यस्मिन् वचने सर्वाधान्यौपासनाग्निरहितोवेत्याहिताग्नेर्विशेषणं श्रूयते। नापि कल्पयितुं शक्यं, कल्पकानुपलम्भात्। "कर्म स्मार्त्तं विवाहाग्नावित्यस्य विधेर्बाधोमाभूदित्येवंविधानुयायिका मतिः कल्पिकेति चेत्। न। न हि विशेषविधिविषयेऽपवादशास्त्रविषये वा उत्सर्गशास्त्राण्यनुवर्त्तन्ते, तथाभ्युपगमे हि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्रापि विशेषविध्यपवादयोर्दध्यभावविषयताप्रसङ्गः। अथाहृत्य दक्षिणाग्निमित्येतस्मिन् वचने अग्न्यर्थमित्यभिधानात् गृह्याग्निकार्य्ये दक्षिणाग्निविध्यवगतौ गृह्याग्नेर्मुख्यत्वे दक्षिणाग्निविधिस्तदभावविषयतेत्यभिमतं। तन्न। अविकृतौ तावत्कार्य्येऽपि विधौ

वैकृतेन प्राकृतस्य वाधो दृष्टः प्रकृतावपि फलचमसेन सोमस्य। अतः कार्य्येऽपि विधौ दक्षिणाग्निना गृह्याग्नेर्बाध एव न्याय्यः। वस्तुतस्तु अन्न्यर्थमित्यत्राग्निशब्देनैकवाक्योपात्तो दक्षिणाग्निरेवाभिधातुं न्याय्यो न गृह्याग्निः, बलवान् हि प्रकरणसन्निधर्वाक्यसन्निधिः। अतो दक्षिणाग्निकार्य्ये लौकिकोऽत्र विधीयत इति युक्तं। लौकिकश्चात्र स्मार्त्तो गृह्याग्निरेव विवक्षितो न पुनरसंस्कृतोऽन्यः। तस्य हि न पैतृकयज्ञियोहोमो लौकिकाग्नौ विधीयत इति निषेधात्। यत्तु "शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः। यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते" इत्यङ्गिरोवचने शालाग्निशब्देन गृह्यमग्निमभिधाय तदन्यमसंस्कृतं लौकिकशब्देनोक्ता तत्र होमविधानमुक्तं तद्वैश्वदेवविषयं।

तदाहुः।

शालाग्नाविति यच्चैतद्वाक्यमङ्गिरसोदितं।
वैश्वदेवविधानं तन्नास्य होमस्य युज्यते॥ इति।

अतोलौकिकशब्देन गृह्याग्निरेवोच्यते। तस्य च तदुपलक्षितकार्य्योद्देशेन विधिः प्रयोजनाभावः। न ह्यनुपलक्षिते विधीयमानः पदार्थोऽन्यत्र भवति। न च तदुपलक्षिते विधिः सम्भवति, प्रकृतौ कार्य्ये प्रक्लृप्तेः पदार्थविध्युत्तरकालभावित्वात्। अतोन्न्यर्थमित्यत्राग्निशब्देन दक्षिणाग्निरेवाभिधातुं न्याय्यः। या चात्राहिताग्निश्चौपसद इत्यस्यानधिकारशङ्कानिवृत्यर्थतोक्ता साप्यौपासनाभावे दक्षिणाग्निविधौ शङ्कानुत्पत्तेर्न घटते। अतश्चाहिताग्निश्चेद्दक्षिणाग्नावनाहिताग्निश्चेदौपासने तदुभयान्यसन्निधाने सर्वथा तदभावे पाण्यादावग्नौकरण-

होमः कार्य्य इति स्थितं। अत्रापरार्कमतमेवानुसृत्य स्मृतिचन्द्रि-काकारेणोक्तं । अनाहिताग्नेरौपासनवत आहिताग्नेरप्यर्द्धाधानेनौ-पासनवतः औपासन एवाग्नौकरणहोमः, प्रवासादिना तदसन्निधाने तु द्विजपाणौ जलादौ वा । सर्व्वाधानेनौपासनाधानेनौपसनाग्निरहि-तत्वादाहिताग्ने र्दक्षिणाग्नौ । तदसन्निधाने लौकिकाग्नौ पाण्यादौ वा यः स्वीकृतोपासनतया समुच्छिन्नाग्नितया भार्य्याविधुरतया वाग्निरहितः तस्य द्विजपाणौ जलादौ वा, न जातु लौकि-केऽग्नौ ।

तथा च स्मृतिः ।

साग्निरग्नावनग्निस्तु द्विजपाणौ तथाप्सु वा ।
कुर्य्यादग्नौ क्रियां नित्यं लौकिकेनेति निश्चितं ॥ इति ।

अत्र लौकिकनिषेधोऽनग्निकसाग्निकं चार्द्धाधानिनमेवाश्रयते, न सर्व्वाधानिनं। तं प्रति "अन्यथैं लौकिके वापि जुहुयात् कर्मसिद्धये" इत्यत्र लौकिकाग्निविधेर्दर्शितत्वात् "हस्तेऽग्नौकरणं कुर्य्यादग्नौ वा साग्नि-कोद्विजः" इति पराशरस्मरणाच्च । अत्राग्निशब्देन गृह्याग्निरुच्यते, तस्मिन् विद्यमाने हस्तपक्षानवकाशात् । तेनात्राग्निशब्देन दक्षिणाग्निः लौकिको वाभिधीयते। साग्निकशब्देन च सर्व्वाधान्येवोच्यते इति। तत्र तावदौपासनाभाव एव दक्षिणाग्नौ होम इत्येतावत्पूर्व्वमेव निरा-कृतं, सर्व्वाधानिनस्तु लौकिकाग्नौ होम इत्येतदप्यन्यथैं लौकिकं वेत्यत्र वचने लौकिकशब्दस्य स्मार्त्ताग्निवाचकत्वोक्त्या सर्व्वाधानशब्दश्रवणाभा-वोक्त्या निरस्तमेव। यत्तूक्तं सत्यौपासने हस्तपक्षानवकाशात् पराशर-वचनेऽग्निशब्देन दक्षिणाग्निर्लौकिकश्चोच्यते न पुनरौपासनोपीति,

तद्दक्षिणाग्निसद्भावेऽपि समानं। अथ दक्षिणाग्निसन्निधौ पाणिपचाव-काशः स तर्ह्युपासनाग्निसद्भावेऽपि भविष्यति। अन्यदपि स्मृतिचन्द्रिका-कारेणाभ्यधायि। सर्वाधानेनौपासनासम्भवे त्वापस्तम्बोक्ताग्नौकरणहो-मस्य लोप एव। तत्र हि स्मार्त्तत्वाच्छ्रौतं वैतानिकाग्निष्वित्युपदेशतो दक्षिणाग्निप्राप्तिर्न विद्यते। पिण्डपितृयज्ञधर्मकत्वाभावात् "जुहुयात् पितृयज्ञवत्" इत्यतिदेशतोऽपि नास्ति। अग्नेश्चाप्रतिनिधेयत्वात्प्रति-निधिन्यायेन दक्षिणाग्ने लौकिकस्य वाग्नेः प्राप्तिर्न सम्भवति, अतो-ऽधिकरणाभावाल्लोप एव होमस्य। अतएव सर्वाधानेनौपासनस्या-भावे धूर्त्तस्वामिनोक्तं श्राद्धमूर्द्धं होमात् कर्त्तव्यं ब्राह्मणा आहवनीयार्थ इति तस्यापि प्रधानत्वादिति। सर्वाधानिना होमादुपरितनं ब्राह्मण-भोजन-पिण्डदानात्मकं यावच्छ्राद्धं तदेवानुष्ठेयं "ब्राह्मणा आहवनी-यार्थे" इत्यादिवचनपर्य्यालोचनया ब्राह्मणभोजनस्यापि प्रधानत्वाव-गमादिति। तदेतत् पितृयज्ञधर्मकत्वाभावेऽपि वचनातिदेशेन दक्षिणाग्निप्राप्तिसम्भवादग्निरूपाधिकरणासम्भवेऽपि सर्वसाधारणस्मृति-पुराणविहितपाणिरूपाधिकरणसम्भावाद्विचारणीयमेवेति।

अत्र गृह्यपरिशिष्टं।

अन्वष्टक्यञ्च पूर्वेद्युर्मासि मास्यथ पार्वणं।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमं॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि॥ इति।

अत्र किलाष्टौ श्राद्धानि भवन्ति। अष्टकानां ह्युपरितना नव-म्योऽन्वष्टकाः तन्निमित्तं श्राद्धमन्वष्टक्यं, अष्टकापूर्वदिनरूपासु सप्त-

मीषु क्रियमाणं श्राद्धं पूर्व्वेद्युः । मासि मासीति यस्यां कस्याश्चित्तिथौ प्रतिकृष्णपक्षं क्रियमाणं श्राद्धं अमावास्यानिमित्तकं श्राद्धं पार्व्वणं । पुत्रादिकामनया क्रियमाणं काम्यं । अभ्युदये पुत्रजन्मविवाहादौ, क्रियमाणं अष्टकासंज्ञकायामष्टम्यां क्रियमाणं। मुख्यैकोद्दिष्टेऽग्नौकरणाभावादेकोद्दिष्ट-पार्व्वणोभयात्मकत्वात् सपिण्डीकरणस्यैकोद्दिष्टशब्देन लक्षणया सपिण्डीकरणमुक्तं। तत्राद्येषु चतुर्षु श्राद्धेषु साग्नेरग्नावेव होमः। तत्र यद्यपि कस्यचिदाहिताग्नेरष्टकादिषु श्रौतकर्मार्थविहितदक्षिणाग्निसन्निधिर्न विद्यते सर्व्वाधानेनोपासनाग्निसन्निधिश्च नास्ति तथाप्यग्नौ होमविधानात्तदर्थमेव विहरणं कृत्वा होमः कार्य्यः । येषामिदं परिशिष्टं तेषामेवायं विधिर्व्वेदितव्यो न सर्व्वेषां ।

इत्यग्निरूपहोमाधिकरणनिर्णयः ।

अथ होमाधिकरणभूताग्निलक्षणं ।

ब्रह्मवैवर्त्त-ब्रह्माण्डपुराणयोः ।

बहुशुष्केन्धने वह्नौ सुसमिद्धे विशेषतः ।
विधूमे शुद्धवर्णे च होतव्यं कर्मसिद्धये ॥
अर्च्चिष्मान् पिण्डितः शीतः सर्पिः-काञ्चनसन्निभः ।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात् कीर्त्तिवृद्धये ॥
एवं लक्षणके होमं यस्तु वह्नौ समाचरेत् ।
नरनारीगणेभ्यः स पूजां प्राप्नोति शाश्वतीं ।
अक्षयं पूजितास्तेन भवन्ति पितरस्तथा ॥
अथाबुद्धः सधूमे च जुहुयाद्यो हुताशने ।

यजमानो भवेदन्धः सपुत्र इति च श्रुतिः ॥
अल्पेन्धनोऽथ रूक्षो वा विस्फुलिङ्गावृतोऽथ वा ।
अप्रदक्षिणमावृत्तः स च वह्निरसिद्धये ॥
दुर्गन्धश्चैव नीलश्च कृष्णश्चैव विशेषतः ।
भूमिञ्च गाहते यश्च स तु कुर्य्यात् पराभवं ॥

ब्रह्मपुराणे ।

क्षुत्तृट्क्रोध-जरायुक्तो हीनमन्त्रं जुहोति यः ।
अप्रवृद्धे सधूमेऽग्नौ सोऽन्धः स्यादन्यजन्मनि ॥
स्वल्पे रूक्षे सस्फुलिङ्गे वामावर्त्ते भयानके ।
सार्द्रकाष्ठैश्च सम्पूर्णे फूत्कारवति पावके ॥
कृष्णार्चिषि सदुर्गन्धे तथा लिहति मेदिनीं ।
आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद्ध्रुवं ॥

देवीपुराणे ।

तप्तहाटकवर्णाभः सूर्य्य-सिन्दूरकान्तिधृत् ।
शङ्ख-कुन्देन्दुसङ्काशो घृत-क्षीरनिभः शुभः ॥
जपाभोऽशोकपुष्पाभो लाक्षादरदसन्निभः ।
शुभदः सर्वकार्य्याणां विपरीतोऽह्यसिद्धिदः ॥
मेघ-दुन्दुभि-शङ्खौघ-वेणु-वीणास्वनः शुभः ।
वृषेभ-शिखि-कोकानां पूजितः कोकिलस्वनः ॥
कुङ्कुमागुरु-कर्पूर-सितगन्धिस्तु पूजितः ।
हंसच्छत्रेभगोकुम्भपद्माकृतिधरः शुभः ॥
सिंह-वर्हिण-शैलानां चामराकृतिविग्रहः ।

सधूमोऽमृतगन्धिश्च शूकषट्चरणोपमः ।
छिन्नज्वालोऽथवा रौद्री नेष्टः कर्मसु पावकः ॥
समुन्नतशिखः शस्त ऊर्द्धं वातेऽपि याति यः ।
लेलिहानः शुभः कुण्डं दीप्तिमान् वरदोऽनलः ॥

वह्नृचपरिशिष्टे ।

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चैव जायते ॥
तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन ।
आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीन्तथा ॥

सुसमिद्धे होतव्यमित्युक्तं ।

ततः समिन्धनप्रकारमाह ।

जुह्वंश्च हुते चैव पाणि सूर्प-स्रुवादिभिः ।
न कुर्य्यादग्निधमनं कुर्य्यात्तु व्यजनादिना ॥
मुखेनैव धमेदग्निं मुखाद्ध्येषोऽभ्यजायत ।
नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत् ॥ इति ॥

इत्यग्निलक्षणं ।

अथानग्निरूप-होमाधिकरण-निर्णयः ।

तत्र तावत् साग्निकस्यापि प्रवासादिना कदाचिदग्निसन्निधानाभावेऽनग्निरूपेऽपि द्विजपाणौ होम इति प्रागेवोक्तं "हस्तेऽग्नौकरणं कुर्य्यादग्नौ वा साग्निको द्विजः" इत्यनेन । अधुनानग्निकस्य पाण्यादौ होम उच्यते।

अत्र मनु-शातातपौ ।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।

योह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते॥

योह्यग्निरित्यादिना हेतुवन्निगदेन होमाधिकरणभूताग्निकार्य्यसामर्थ्याविष्कारेण प्रस्तूयते। 'मन्त्रदर्शिभिः' वेदविद्भिरित्यर्थः। तैत्तिरीयश्रुतावपि दृश्यते च स्तुतिः। "एष एवाग्निर्वैश्वानरो यद्ब्राह्मणोऽग्नावेवैनं वैश्वानरे जुहोति" इति। अग्न्यभेदवचनस्य सादृश्यपरत्वादलौकिकाग्निरूपत्वाभिधानस्याप्यारोपैकनिबन्धनत्वाद् ब्राह्मणस्यानुकल्पत्वं न विरुध्यते।

अतएव यमवचनेऽग्निसादृश्येनैव स्तुतिः क्रियते।

यथाग्न्ययस्तथा विप्रा यथा विप्रास्तथाग्नयः।

अग्न्यभावे तु विप्रस्य पाणौ होमोविधीयते॥ इति।

अग्न्यभावोऽत्र भार्य्यापरिग्रहाभावकृत-तत्परिग्रहोत्तरकालिकाग्निस्वीकाराभावकृतः स्वीकृतसमुच्छेदकृतः सन्निधानाभावकृतश्चेति केचिदाहुः।

एके तु समुच्छिन्नाग्नेः पार्व्वणश्राद्धानधिकारेऽग्नौकरणाभावान्न समुच्छेदनिबन्धनेऽग्न्यभावे पाणिविधिरित्याहुः।

अन्ये तु। अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे।

अग्न्यभावः स्मृतस्तावद्यावद्भार्य्यां न विन्दति॥

इति गार्ग्य-जातूकर्ण्ययोर्वचने उपसंहारदर्शनाद्भार्य्यापरिग्रहोत्तरकालिकास्वीकारकृतेऽप्यग्न्यभावे न पाणिविधिरिति मन्यन्ते।

अन्ये तु भार्य्यापरिग्रहात् पूर्वं नियतोऽग्न्यभावः। अतः स्फुटप्रतीतिना तेन भार्य्यापरिग्रहोत्तरकालीनोऽप्यग्न्यभावोवचनेन लक्ष्यते, न पुनरभावश्रुतिरुपसंह्रियत इति।

अपरे तु अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेदित्यत्रैव-

शब्देन यल्लौकिकाग्न्यभावाद्यधिकरणान्तरनिराकरणं क्रियते तद्भार्य्यापरिग्रहाभावकृतेऽग्न्यभावे नान्यस्मिन्निति गार्ग्यवचने प्रतिपाद्यते, न पुनर्विवाहोत्तरकालीनेष्वग्न्यभावेषु पाणेरपि होमाधिकरणत्वं निवर्त्तत इति। अत्राचार्य्यैर्विचार्य्य न्याय्यपक्षपरिग्रहः क्रियतां।

इह जयन्तस्वामिमतं हरिहरेणोपन्यस्तं। अग्न्यभावे तु विप्रस्येतिश्लोकस्य कदाचित्कचिदसन्निहिताग्निः साग्निरेव विषयः। यस्य हि यत्सम्बन्धोऽस्ति तस्य कदाचित् कचिदसन्निधावेवंविधाः प्रयोगाः भवन्ति। सम्भवत्येवाश्वसम्बन्धे यथाश्वाभावेऽश्वतरमारुह्य त्वया गन्तव्यमिति प्रयुञ्जते, न पुनरत्यन्तासम्भवत्यश्वसम्बन्ध इति। तदेतज्जयन्तस्वामिसम्मतं त्रैवर्णिकमात्रविषयत्वमस्य तेनैव दूषितं।

मत्स्यपुराणे ह्यामान्नश्राद्धे कण्ठरवेणाग्नौकरणमुक्तं।

आमश्राद्धं यदा कुर्य्याद्विधिज्ञः श्राद्धदस्तदा।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेदिति॥

तेनैवेत्यामद्रव्येण।

आमश्राद्धस्याग्निसंस्काररहितस्य शूद्रस्य साक्षादुक्तं, अन्यस्य तु पक्वान्नाभावेऽनित्यत्वेन न्यायप्राप्तं, "एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं तथैव च। नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद्बुधः॥" इति। अतोऽनग्नेः शूद्रस्यामान्नश्राद्धे अग्नौकरणानुवादेनामद्रव्यकत्वास्यविधेयविधानादनग्नेर्वाचनिकमग्नौकरणं तदाक्षिप्तश्चानग्निरूपं पाण्यधिकरणमिति। अत्र यद्यपि विप्रस्येति सामान्येनोक्तं तथापि प्रकृतत्वात् सन्निहितपरित्यागे कारणाभावाच्च श्राद्धभोक्तुरेव विप्रस्येति गम्यते। प्रधानस्य प्रत्यङ्गमावृत्तेर्निषेधात् विप्रस्येति विवक्षित-

स्यात् विहितहोमस्य समयोऽपि कृतार्थः स्यात्। अत्र विहितकृतत्वं विधिकृतत्वं विधिकृतार्थत्वं प्रतिहेतुत्वेनोपन्यस्तमितिन्यायानर्थक्यं तस्मादेकस्यैव करे होमः पूर्वोक्तन्यायाच्च प्रथमोपविष्टस्यैव दक्षिण-एव करे होमः। तदेवं पूर्वोक्तया कर्त्तृव्यवस्थया सर्व्वथा समविकल्पेन देवविप्रकरे पित्र्यविप्रकरे वा होमः कार्य्यः। यस्तु "अग्नौकरणवत् कुर्य्याद्‌द्विजातौ वैश्वदेविके। पाणावेव तु तद्दद्यात् न तु पित्र्ये कदाचन" इति पित्र्यपाणिनिषेध इव प्रतीयते स दैवपाणिस्तुत्यर्थेन पित्र्यपाणिनिवृत्त्यर्थः। अथवा दैविकपङ्क्तिमूर्द्धन्यकरे कृत्वा पुनः पित्र्य-पङ्क्तिमूर्द्धन्यकरेऽपि होमो न कर्त्तव्य इत्येवमर्थः। अत्र पित्रादिदेवत्ये पितामहादिदेवत्ये वामावास्याश्राद्धे यदाग्नौ होमः क्रियते यदा वा वैश्वदेविकतन्त्रानुष्ठानवति प्रयोगे वैश्वदेविकद्विजपाणौ तदा देश-काल-कर्त्त्रधिकरणादिकारकैक्याद्वैश्वदेववदग्नौकरणस्यापि तन्त्रेणैवानु-ष्ठानं। अतस्तद्विधवैश्वदेविकपाणौ होष्यन् दैविकपङ्क्तिमूर्द्धन्युपविष्ट-स्यैकस्यैव पाणौ जुहुयात्। यदा तु भेदेन वैश्वदेविकानुष्ठानं तदा वैश्वदेविकद्विजपाणावपि होमं करिष्यन्नधिकरणभेदाद्‌भेदेनैव होमं कुर्य्यात्। तथा च वैश्वदेविकपङ्क्तिद्वयोपविष्टमुख्यद्विजद्वयपाण्योः होमद्वयं कर्त्तव्यं। ननु तथापि तत्प्रयोगसन्निहितदेश-कालेऽग्नौ तन्त्र-वैश्वदेविकार्थद्विजपाणौ वा क्रियमाणो होमः श्राद्धद्वयोपकारको भवति। तथा वैश्वदेविकभेदोऽप्यस्तु। अन्यथाधिकरणाख्यगुणानुरोधेन प्रधानावृत्तिः कृता स्यात्। मैवं। न ह्यधिकरणान्तरं कृतार्थमस्त्वित्येव-मत्र होमोऽभ्यस्यते, किन्तु मातामहश्राद्धाख्यं प्रधानान्तरं कथं नु नाम सगुणं स्यादित्येवं पाणिहोमस्य चानन्यश्राद्धार्थब्राह्मणपाणावनु-

ष्ठितस्यैवोपकारकत्वं निश्चितं। अतः पृथगनुष्ठीयमानवैश्वदेविकद्विजपाणौ होष्यन् द्वितीयवैश्वदेविकद्विजपाणावग्नौकरणमावर्त्तयेदेव। अनेनैव पित्र्यविप्रपाणावपि होमोव्याख्यात इति अपरार्क-स्मृतिचन्द्रिकाकार-मधुमिश्रादयः। तत्र लेष विशेषः। यदापि वैश्वदेविकं तन्त्रं तदाप्यधिकरणभेदावृत्तिरेव होमस्य।

तदाह कात्यायनः।

मातामहस्य भेदेऽपि कुर्य्यात्तन्त्रे च साग्निक इति।

अस्यार्थः। यदा मुख्यपार्वणादौ पित्र्यविप्रकरे होमचिकीर्षेत् तदा पितृ-पितामहादिपङ्क्त्युपविष्टमुख्यद्विजकरे कृत्वा मातामहस्य सम्बन्धी यो ब्राह्मणस्तस्यापि करे पृथक् होमं कुर्य्यात्। एतच्च पृथङ्मातामहसम्बन्धि-द्विजकरे होमानुष्ठानं भेदेन वैश्वदेविकानुष्ठाने तन्त्रेण चानुष्ठाने ज्ञेयं। अस्ति कदाचित्साग्निकस्यापि द्विजपाणौ होमः। साग्निक इत्येतदुपलक्षणं एवंविधाधिकरणकेऽनग्निककर्त्तृकेऽपि पाणिहोमेऽस्यावृत्तिन्यायस्य समत्वात्। पर्य्यवसितः पाणिरूपहोमाधिकरणनिर्णयः।

अथान्यान्यप्यनग्निरूपाणि होमाधिकरणानि।

मत्स्यपुराणे।

अग्न्यभावे तु विप्रस्य पाणौ वाथ जलेऽपि वा।

अजकर्णेऽश्वकर्णे वा गोष्ठे वाथ शिवान्तिके॥

अजकर्णेऽश्वकर्ण इत्यत्र लिङ्गाविवक्षाहेत्वभावाद्विवक्षितमेव पुंस्त्वं। अत्र यद्यपि ब्राह्मणपाणेर्मुख्यकल्पत्वेऽग्नौकरणवति श्राद्धे च तस्यावश्यसम्भवेऽजकर्णादीनामनवकाश एव। तथापि "एष वा अग्निर्वैश्वानरो

यद्ब्राह्मणः” इति प्रत्यक्षश्रुत्या ब्राह्मणस्याग्निलाभिधानात् परोक्षश्रुति-मूलकस्मृतिमात्रदृष्टानामजकर्णादीनां जघन्यत्वेनात्यन्तबाधाय सम-विकल्प एवाभ्युपेयः। ब्राह्मणस्थाने दर्भवटुनिवेशे वाजादीनामव-काशः कार्य्यः।

आह शङ्खः।

अजस्य दक्षिणे कर्णे पाणौ विप्रस्य दक्षिणे।
अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत्।
रजते च सुवर्णे च नित्यं वसति पावकः॥ इति।

अत्राग्निसद्भावप्रतिपादनेनाग्निकार्य्ये विनियोगो दर्शितः। अर्थवाद-मात्रत्वेत्यानर्थक्यापत्तेः।

सौरपुराणे।

अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्।
महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः॥

कूर्मपुराणे।

अग्नेरभावाद्विप्रस्य पाणौ होमो विधीयते।
महादेवस्य पुरतोगोष्ठे वा श्रद्धयान्वितः॥ इति।

इत्यनग्निरूपहोमाधिकरणनिर्णयः।

अथाग्नौकरणहोमाङ्गभूतानि प्रश्नोत्तरद्रव्याणि।

तत्राह याज्ञवल्क्यः।

अग्नौकरिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतं।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाग्नौ पितृयज्ञवत्॥

श्राद्धकर्त्ताग्नौ होमं कर्त्तुमिच्छन् बहुतराज्यसंमिश्रमन्नं प्रशस्ते

दर्व्यादिरूपे पात्रे समादायाग्नौ करिष्य इति श्राद्धभोक्तॄन् ब्राह्मणाननुज्ञापनरूपेण पृच्छेत् । तैश्च ब्राह्मणैः कुरुष्वेत्येवंविधेन वाक्येनाभ्यनुज्ञातः सन् स्वकल्पसूत्रोक्तपिण्डपितृयज्ञहोमवज्जुहुयात् । अत्र वचने अग्नौ करिष्य आदायेत्यपि पठन्ति । तत्र घृतप्लुतमन्नमादायाग्नौ करिष्य इति पृच्छेदित्यन्वयः ।

कात्यायनोऽप्याह ।

उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति कुरुष्वेत्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतशेषं दत्त्वा पात्रमालभ्य जपतीति ।

अत्रान्नमादायाग्नौ करिष्य इति पृच्छतीत्युक्ते अदृष्टार्थत्वमालोच्यान्नस्य होमद्रव्यस्यावगतौ तात्पर्य्यात्तस्यैवान्नस्य ग्रहणेऽवष्टते प्रकृतपाकात् पृथग्भावभावनात्मकस्योद्धरणस्यार्थसिद्धत्वादुद्धृत्येतिवचनमुत्क्षेपणार्थमितिगम्यते ।

आह प्रचेताः ।

अग्नौ करिष्यन्नादाय पृच्छत्यन्नं घृतप्लुतं ।
ॐ कुरुष्वेत्यनुज्ञातो जुहुयात्पितृयज्ञवत् ॥ इति ।

सौरपुराणे ।

अग्नौकरिष्य इत्युक्त्वा कुरुष्वेत्यभ्यनुज्ञया ।
अन्नं घृतप्लुतं वह्नौ जुहुयात्पितृयज्ञवत् ॥

कूर्म्मपुराणे ।

कृत्वा समाहितं चित्तं मन्त्रयेद्दै करोमि च ।
अनुज्ञातः कुरुष्वेति तथेति द्विजसत्तमैः ।
पत्नीमादाय पुत्रांश्च जुहुयाद्धव्यवाहने ॥

निगमः ।

अन्नमुद्धृत्याभिघार्य्याग्नौ करिष्य इति पृच्छतीति ।

विष्णुपुराणे ।

अग्नौकरिष्य इत्युक्त्वा तैरुक्तः क्रियतामिति ।
गृह्योक्तेनैव विधिना कृत्वा पात्रेषु दापयेत् ॥

कृत्वा कृतशेषं पित्र्यविप्रपात्रेषु प्रक्षिपेदित्यर्थः। गृह्योक्तेनैवेत्येवकारो न स्मृति-पुराणोक्तविधिनिवृत्त्यर्थः प्रत्यभिज्ञानात् सर्वत्रैककर्म्ये सर्वशास्त्राणां परस्परसापेक्षत्वे च स्थिते सर्वधर्म्मोपसंहारस्य न्याय्यत्वात्। अतो विधिनैवेत्येवमयमेवकारो योज्यः।

आह बौधायनः।

अथैतांस्तिलमिश्रापः प्रतिग्राह्य गन्धेन माल्येन चालङ्कृत्याग्नौ करिष्यामीत्यनुज्ञातो अग्निमुपसमाधाय सम्परिस्तीर्य्य तिस्र आज्याहुतीः जुहोति। सोमाय पितृमते स्वधा नमः स्वाहा। यमायाङ्गिरस्वते पितृमते स्वधा नमः स्वाहा। अग्नये कव्यवाहनाय स्विष्टिकृते स्वधा नमः स्वाहेति तच्छेषेणान्नमभिघार्य्यास्यैता एव तिस्रो जुहुयात्।

'अथेति ब्राह्मणोपवेशनादनन्तरं। 'एतानिति ब्राह्मणान्। 'अग्निमुपसमाधाय' अग्न्यायतने अग्निं प्रतिष्ठितं प्रज्वाल्य, 'सम्परिस्तीर्य्य' दर्भैः समन्तात् परिस्तीर्य्य। 'इतिशब्द आज्यहोमसमाप्तौ। 'तच्छेषेण' आज्याहुतिशेषेण। 'अन्नं' होमार्थमुद्धृतमोदनं, 'तदभिघार्य्य' तस्योपरि हुतशेषमाज्यं क्षारयित्वेत्यर्थः। अन्नस्यावदाय "एता एवेत्येतैरेव मन्त्रैस्तिस्र आहुतीर्जुहुयात्।

मत्स्यपुराणे ।

अग्नौ कुर्य्यादनुज्ञातो विप्रो विप्रैर्यथाविधि ।
स्वगृह्योक्तेन विधिना कांस्ये कृत्वा चरुन्ततः ॥
अग्नी-षोम-यमानान्तु कृत्वाप्यायनमादितः ।
दक्षिणाग्नौ प्रणीते वा य एकाग्निर्द्विजोत्तमः ॥

हारीतः ।

आसाद्योदपात्रेषु समन्यायन्तीत्यप आसिच्य सुमनसश्चोत्पूय ब्राह्मणैरनुज्ञातः सामिधेन्येध्ममाधायावाह्याग्निष्वात्तादीन् ब्राह्मणस्थानुदपात्रैर्यथार्थमर्च्चयित्वा मेक्षणपाणिरनुज्ञातो यत्सोमाय पितृमते जुहोति सोमज्येष्ठांस्तेन सोमपांश्च पितॄन् प्रीणाति यमायाङ्गिरस्वते यमज्येष्ठान् बर्हिषदस्तेनाग्निज्येष्ठानग्निष्वात्तांश्च यदग्निं कव्यवाहनं स्विष्टकृतं यन्मेक्षणमादध्यादात्मानन्तेन प्रीणाति। हुतोच्छिष्टं ब्राह्मणेभ्यः प्रदाय पिण्डेभ्योऽवशेषयेदिति ।

'सामिधेन्येत्यत्र हरिहरेण समीत्स्वेतीति पाठोदर्शितः । वचनञ्च व्याख्यातं। तद्यथा । "समन्यायन्त्युपयन्त्यन्या इत्यनेन मन्त्रेणार्घ्यपात्रेषु जलं प्रक्षिप्य तदुपरि सुमनसः पुष्पाणि च क्षिप्त्वा प्रोक्षणीवन्मन्त्ररहितमेवोत्पवनं कृत्वा ब्राह्मणैः समीत्स्वेत्येवमनुज्ञातः सन् इध्ममग्निसमिन्धनार्थकाष्ठमग्नौ क्षिपेत् । अनुज्ञावचनदर्शनादर्थात् पूर्वकालेऽग्निसमिन्धनं करवाणीत्यादिप्रार्थनावाक्यं श्राद्धकर्त्ता प्रयोज्यमित्यनुमीयते । एवमिध्ममाधायावाहनमन्त्रैः पितॄनावाह्यानन्तरं पूर्वोपकल्पितैरुदपात्रैर्ब्राह्मणरूपाधिष्ठानस्थितानग्निष्वात्तादीन् आदिग्रहणाद्बर्हिर्भुक्प्रभृतीन् यथार्थं यत्र वर्णश्च यैरर्चितैरर्थः श्राद्ध-

प्रयोजनसम्पत्तिस्तानर्चयेत्। ते च "सोमपा नाम विप्राणामित्यादिना मन्वादिभिर्निर्द्दिष्टाः। यद्वावाहन एव मृतपित्राद्यधिष्ठातृभावेनाग्नि-ष्वात्तादिसङ्कल्पः। अर्च्चनन्तु पित्रादित्रयस्यैव नामभिर्यथार्थमिति वचनात्। एवञ्च जीवत्पितृकादेर्द्दयार्चनमिति सिद्ध्यति। अथ मेक्षणपाणिरग्नौकरिष्यामीत्यादि पृष्ट्वा कुरुष्वेत्यनुज्ञातः सोमादिभ्य आहुतिचयं हुत्वा मेक्षणमन्त्योऽग्नावादध्यात्। हुतावशेषन्तु पित्र्यविप्र-पात्रेषु कियन्निक्षिप्यान्यत् पिण्डार्थमवशेषयेदिति।

उद्धृत्यान्नमित्युक्तं, तत्रान्ने विशेषो ब्रह्मपुराणे दर्शितः।

ततो घृताक्तमन्नन्तु सोष्णमादाय साधितं।
तानग्नौ करिष्य इति प्रयतः प्रार्थयेत् द्विजान्॥

महाभारतेऽपि।

जुहुयाद् व्यञ्जन-क्षारवर्जमन्नं ततो नरः।
अनुज्ञातो द्विजैस्तैस्तु हुत्वा ॐ भरतर्षभेति॥

'व्यञ्जन'शब्देनात्र दधि-पयस्तक्र-गुड़-मरीचादीनि। लवणरस-संस्कार्य्याणां शाक-सूपादीनान्तु लवणरसवर्ज्जनेनैव प्रतिषेधः सिद्धः। 'क्षाराणि' लवणरसवन्ति द्रव्याणि।

यत्तु ब्रह्माण्डपुराणे।

पुष्पाणाञ्च फलानाञ्च भक्ष्याणाञ्च प्रयत्नतः।
अग्रमुद्धृत्य सर्व्वेषां जुहुयाज्जातवेदसि॥

इति पित्रर्थपाकसिद्धलवणादिसंसृष्टशाकादिहोमस्मरणं, तद्येषां गृह्येऽग्नौकरणहोमानन्तरं तदङ्गतया हविर्व्यतिरिक्तेनान्यसंसृष्टेन चा-न्नेनोष्णे भस्मन्यमन्त्रकोहोम उक्तस्तद्विषयमित्यविरोधः।

स च होम आपस्तम्बसूत्रे दर्शितः ।

न चारलवणहोमो विद्यते तथा परान्नसृष्टस्याहविष्यस्य होम उदीचीनमुष्णं भस्मापो ह्येतस्मिन् जुहुयात्तद्धुतमहुतञ्चाग्नौ भवतीति । अथवा अन्नाभावे यदा कन्द-मूल-फलादिभिरेव श्राद्धं तद्विषयमिदं ब्रह्माण्डपुराणवचनं । अत्र पक्वान्नेन यदा श्राद्धन्तदैव होम-पिण्डक्रिये प्रवर्त्तेते। तयोः पक्वान्नद्रव्यकत्वनियमादित्येतज्जयन्तस्वामिमतं हरिहरेणोपन्यस्यामश्राद्धं यदा कुर्य्यादित्यादिपूर्वप्रदर्शितमत्स्यपुराणविरोधमुद्भाव्य दूषितं ।

अग्नौकरिष्यन् पृच्छतीत्युक्तं तत्र सर्व्वान् वैकं वेत्यपेक्षायामाह मनुः ।

तेषामुदकमानीय सपवित्रांस्तिलानपि ।

अग्नौकुर्य्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह ॥

गन्ध-माल्यादिभिः ब्राह्मणानर्चयित्वा 'तेषां' ब्राह्मणानां, हस्ते जलं प्रक्षिप्य पवित्रसहितांस्तिलांश्च दत्वा 'सह' सम्भूय युगपत्सर्व्वैर्ब्राह्मणैरनुज्ञातः सन् कर्त्ताग्नौ होमं कुर्य्यात् । अनुज्ञावचनात् प्रश्नोऽप्यनुमीयते। सहेतिवचनात् सर्वान् प्रति प्रश्नः कर्त्तव्य इति गम्यते । एकं प्रति प्रश्ने कृते सर्वैरभ्यनुज्ञाने क्रियमाणे प्रश्नस्यादृष्टार्थत्वं प्रसज्येत। अयञ्च सर्वप्रश्नपक्षो वैकल्पिकः । अथोद्धृत्याग्निं पङ्क्तिमूर्द्धन्यं सर्वान् पृच्छत्यग्नौ करिष्य इति हारीतवचनात् अत्रैकाभिमुख्येनैकं प्रति सर्वाभिमुख्येन सर्वान् प्रति प्रश्नोऽयमिति सुज्ञेयत्वान्नाभ्यनुज्ञावचने द्विजानामनध्यवसायः प्रश्नाभिप्रायः प्रश्नप्रसङ्गो वा वाच्यः ।

अभ्यनुज्ञातो जुहुयादित्युक्तं कैरभ्यनुज्ञात इत्यपेक्षायामाह पारस्करः।

दत्वा गन्धादि-धूपांश्च सर्पिष्मद्धविरुद्धरेत् ।

पैतृकैरभ्यनुज्ञातो जुहोति पितृयज्ञवदिति ॥

पैतृकैरित्यत्र ब्राह्मणैरिति शेषः। अनेन प्रश्नोऽपि पैतृकान् प्रत्येवेति गम्यते। अत्राग्नौकरिष्ये कुरुष्वेति प्रश्नोत्तरयोः प्रकारोऽवगत एव। प्रकारान्तरमप्याश्वलायनगृह्ये दर्शितं।

उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौकरिष्ये करवै करवाणीति वा प्रत्यनुज्ञा क्रियतां कुरुष्व कुर्वित्यथाग्नौ जुहोति यथोक्तं पुरस्तादिति।

आपस्तम्बस्तूदीच्यानां प्रश्नोत्तरप्रकारमाह।

उदीच्यवृत्तिस्त्वासनगतानां हस्तेषूदकपात्रानयनमुद्धियतां अग्नौ च क्रियतामित्यामन्त्रयते काममुद्धियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्चेति।

अत्र "प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा। विदुषां शब्दसिद्ध्यर्थं सा नः पातु सरस्वती" इति पुरातनानां वाक्यात्सरस्वत्युत्तरदेशसम्बन्धिनो ये ते उदीच्याः तेषां वृत्तिराचारः कथ्यत इति शेषः। 'उदकपात्रानयनं' अर्घ्यप्रदानं। 'ब्राह्मणानामन्त्रयते' अनुज्ञाभ्यर्थनवाक्येनाभिमुखान् कुरुते। 'अतिसृष्टः' ब्राह्मणैरनुज्ञातः।

अत्र पितृयज्ञवदित्यनेन अग्नौकरणहोमे पितृयज्ञेतिकर्त्तव्यतातिदेशः कृतः, सा चेतिकर्त्तव्यता आपस्तम्बादिभिः पिण्डपितृयज्ञप्रकरणे दर्शिता। तत्रापस्तम्बः।

समूलं सकृदाच्छिन्नं वर्हिराहरति सकृदाच्छिन्नानि वा तृणान्युपमूलच्छिनानीति दक्षिणाप्रागग्रैर्दर्भैः दक्षिणमग्निं परिस्तीर्य्य दक्षिणं जान्वाच्य मेक्षणे उपस्तीर्य्य तेनावदायाभिघार्य्य सोमाय पितृमते स्वधा नम इति दक्षिणाग्नौ जुहोति यमायाङ्गिरस्वते पितृमते स्वधा नम

इति द्वितीयां अग्नये कव्यवाहनाय स्वधा नम इति तृतीयां ये मेक्षणे तन्दुलास्तान् हुत्वा तूष्णीं मेक्षणमादधाति इत्यादि ।

आश्वलायनोऽपि ।

प्राचीनावीती इध्ममुपसमाधाय मेक्षणेनावदाय अवदानसम्पदा जुहुयात् । सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वा अग्निं पूर्वं यज्ञोपवीतीति ।

एवमन्यान्यपि पिण्डपितृयज्ञसूत्राणि प्राचीनावीतयज्ञोपवीतनिर्णये द्रष्टव्यानि । अयञ्च पिण्डपितृयज्ञधर्मातिदेशो हारीतवचने विस्तरेण विवृतः । "कुरुष्वेत्यभ्यनुज्ञातः पूर्वाह्नतेऽग्नौ सकृदाच्छिन्नैरुपमूललूनैः परिस्तीर्य समित्तन्त्रेण प्राङ्मुखो मेक्षणेनाहुतिद्वयं हुत्वा मेक्षणमग्नावेव कुर्य्यात्" इति । अस्यार्थः स्मृतिचन्द्रिकाकारेण व्याख्यातः । 'पूर्वाह्नतेऽग्नौ' परिस्तरणकालात्पूर्वमेवोद्बोधितेऽग्नौ, मूलसमीपदेशे सकृदेकयत्नेन च्छिन्नैर्दर्भैः परिस्तीर्य्य समित्तन्त्रेणाहुतिद्वयार्थमेकामेव समिधमादाय मेक्षणेन यज्ञीयकाष्ठकृतेनाहुतिद्वयं हुत्वाग्नावेव मेक्षणं प्रक्षिपेत्। समित्तन्त्रेणेत्यनेन पितृयज्ञधर्म उक्तः पितृयज्ञे समिदाधानस्याभावात् किन्त्विह धर्मान्तरमुपदिष्टमिति ।

ब्रह्माण्डपुराणेऽप्यत्र समिदाधानमुक्तं ।

अन्तर्निधाय समिधं जुहुयात् कव्यवाहनमिति ।

ब्रह्मपुराणे तु घृताक्तप्रादेशमात्रसमित्त्रयाधानमुक्तं ।

ॐकुरुष्वेति तैरुक्तो दक्षिणाग्निं समाहरेत् ।
दक्षिणाग्रांस्तु दिक्षु दर्भानास्तीर्य्य वाग्यतः ॥
दद्यात्तु समिधस्तिस्रस्तस्मिन् प्रादेशमात्रिकाः ।

घृताक्ताः समिधो हुत्वा दक्षिणाग्राः समन्तकाः।
मेक्षणेन घृताक्तेन जुहुयाच्चाहुतित्रयं॥

समिदर्हाश्च द्रुमास्तत्रैवोक्ताः।

पलाश-फल्गु-न्यग्रोध-प्लक्षाश्वत्थ-विकङ्कताः।
उदुम्बरस्तथा विल्वश्चन्दनं यज्ञियाश्च ये॥
सरलो देवदारुश्च शालश्च खदिरस्तथा।
समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः॥
ग्राह्याः कण्टकिनश्चैव यज्ञिया ये च केचन।
पूजिताः समिदर्थेन पितॄणां वचनं यथा॥
समिद्भिस्त्वाज्यलिप्ताभिर्जुहुयाद्यो हुताशनं।
फलं यत्कर्मणस्तस्य तन्मे निगदतः शृणु।
अक्षयं सर्वकामीयं अश्वमेधफलं हि तत्॥

समिदनर्हास्तु।

श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा।
नीपोविभीतकश्चैव श्राद्धकर्मणि गर्हिताः॥
चिरविल्वस्तथा टङ्कस्तिन्दुकाम्रातकौ तथा।
तिल्वकः कोविदारश्च एते श्राद्धे विगर्हिताः॥
निवासश्चैव कीटानां गर्हिताः स्युरयज्ञियाः।
गुल्मैश्च वेष्टिता ये च वल्लीभिश्च समन्ततः॥
शकुनीनां निवासाश्च वर्जयेत्तान् द्विजोत्तमः।
अन्यांश्चैवंविधान् सर्वान् वर्जयेद्वै अयज्ञियान्॥

'पलाश.' किंशुकः। 'फल्गुः' काकोदुम्बरिका। 'न्यग्रोधः' वटः। 'प्लक्ष.'

जटी । 'अश्वत्थः' पिप्पलः । 'विकङ्कतः' स्रुववृक्षः । 'उदुम्बरः' जन्तुफलः । 'विल्वः' श्रीफलः । 'चन्दनं' मलयजं । 'यज्ञियाः' काश्मर्य्यशमीप्रभृतयः । 'सरलः' पीतद्रुमः । 'सालः' सालवृक्षः । 'खदिरः' बालपत्रः । 'कण्टकिनः' इङ्गुदीप्रभृतयः । 'श्लेष्मातकः' सेलुः । 'नक्तमालः' करञ्जः । 'कपित्थः' दधित्थः । 'शाल्मलिः' स्थिरायुः । 'नीपः' कदम्बः । 'चिरविल्वः' पूतिकरञ्जः । 'टङ्कः' अश्मारकः । 'तिन्दुकः' स्फूर्जकः । 'आम्रातकः' कपीतनः । 'तिल्वकः' रोध्रः । 'कोविदारः' काञ्चनारः । 'अयज्ञियाः' पिचुमर्द्द-पारिभद्रादयः ।

आह सुयज्ञः ।

परिसमुह्य पर्य्युक्ष्य परिस्तीर्य्य दक्षिणं जान्वाच्य यज्ञोपवीती प्रागासीनोऽमेक्षणेन जुहोतीति ।

शङ्ख-लिखितौ ।

धूप-गन्ध-माल्यैरलङ्कृत्य ब्राह्मणान् सघृतमन्नमनुज्ञाप्य दर्भैर्दक्षिणाग्रैरग्निं परिस्तीर्य्य जुहुयादिति ।

इत्यग्नौकरणाङ्गभूतानि प्रश्नोत्तरद्रव्याणि ।

अथाग्नौकरणदेवताहुतिसंख्या-मन्त्रविकल्पाः ॥

मनु-वृहस्पती ।

अग्नेः सोम-यमाभ्याञ्च कृत्वाप्यायनमादितः ।
हविर्दानेन विधिवत् पश्चात्सन्तर्पयेत् पितॄन् ॥

अग्नि-सोम-यमाख्यानां देवतानां प्रथमेन होमेनाप्यायनङ्कृत्वा हविर्दानेन यथोक्तान्नप्रदानेन ब्राह्मणाधिष्ठानान् पितॄन् पश्चात्तर्पयेत् । अस्य मेधातिथि-हरिहराभिमता व्याख्या । अग्नेरिति चतुर्थ्यर्थे

षष्ठी। अग्निरेका देवता, सोम-यमरूपाधिष्ठानद्वयनिष्ठैकदेवतात्व-युक्ता द्वितीया। सोम-यमाभ्यामिति द्वन्द्वादग्नीषोमवदेकत्वावगतेः। एतच्च येषां गृह्ये ईदृग्विधं देवतात्वमुक्तं तेषामेव वेदितव्यमिति। अत्र ब्रूमः। यद्यप्यत्र सोम-यमयोः देवतात्वाच्चतुर्थ्यन्ततोचिता, तथापि पोषणपर्य्यायेणाप्यायनशब्देनान्वये क्रियमाणे षष्ठ्यन्ततयैव भाव्यं। अथ देवतात्वान्नात्र षष्ठीत्युच्येत, तर्ह्यग्नेरितीयमपि न स्यात्। चतुर्थ्यर्थे व्याख्याता सेति चेत्। न। आप्यायनपदेनान्वयात्। षष्ठ्यास्तु सम्बन्धसामान्यवाचिन्या विशेषपर्य्यवसायित्वमभ्युपगतमेवेति न देवता-रूपविरोधित्वं। स्वतन्त्रयोः सोम-यमयोर्देवतात्वप्रतिपादकानां वचनानामाहुतिमन्त्राणाञ्च दर्शनान्नान्योन्यसहितयोर्देवतात्वं। न च क्वचिद्गृह्ये तदवस्थयोर्देवतात्वमुपलभन्ते शिष्टाः। दृश्यते चोपनिब-न्धनान्तरेषु पाठान्तरमस्य वचनस्य। "अग्नि-सोम-यमानाञ्च कृत्वाप्यायनमादितः" इति।

यमः।

> अग्नये चैव सोमाय यमाय जुहुयात्ततः।
> अग्नये कव्यवाहनाय स्वाहेति जुहुयाद्धविः॥
> सोमाय पितृमते यमायाङ्गिरसे तथा।
> सोमस्याप्यायनङ्कृत्वा वह्नेर्वैवस्वतस्य च॥
> हुते त्वग्नौ ततः सम्यक् विधिनानेन मन्त्रवित्।
> स्वधेत्येव हविःशेषं आदधीत समीक्ष्य च॥

शङ्ख-लिखितौ।

जुहुयादग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति।

मार्कण्डेयपुराणे ।

अग्नये कव्यवाहनाय स्वाहेति प्रथमाहुतिः ।
सोमाय वै पितृमते स्वाहेत्यन्या तथा भवेत् ॥

वैशब्दः पादपूरणार्थत्वान्न प्रयोगकाले प्रयोज्यः । गोभिलेन त्वेतावेव मन्त्रौ पुरस्तात् स्वाहाकारौ विपरीतेन च क्रमेणोक्तौ ।

मेक्षणेनोपघातं जुहुयात् स्वाहा सोमाय पितृमते इति पूर्वां, स्वाहाग्नये कव्यवाहनायेति द्वितीयामत ऊर्ध्वं प्राचीनावीतीति ।

ब्रह्माण्डपुराणे त्वाहुतित्रयं स्वधा-नमोऽन्तास्त्रयो मन्त्रास्तथा प्रत्याहुत्यधिकरणभूताग्निप्रदेशानां विभज्य विनियोगश्चोक्तः ।

आहृत्य दक्षिणाग्निन्तु होमार्थं वै प्रयत्नतः ।
अग्नये कव्यवाहनाय स्वधा नम इति ब्रुवन् ॥
सोमाय च पितृमते स्वधा नम इति ब्रुवन् ।
यमायाङ्गिरसाम्पत्ये स्वधा नम इति ब्रुवन् ।
इत्येते होममन्त्रास्तु त्रयाणामनुपूर्वशः ॥
दक्षिणतोऽग्नये नित्यं सोमायोत्तरतस्तथा ।
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वते ॥ इति ।

'अङ्गिरसाम्पत्य इति यमविशेषणं ।

ब्रह्मवैवर्त्ते तु वैवस्वतायेति यमस्य, अङ्गिरस इत्यग्नेः सोमस्य च विशेषणं दर्शितं ।

अग्नये कव्यवाहनाय स्वधा चाङ्गिरसे नमः ।
सोमाय च पितृमते स्वधा चाङ्गिरसे नमः ॥
यमाय वैवस्वताय स्वधा नम इति ब्रुवन् ।

इत्येते वै होममन्त्रास्त्रयाणामनुपूर्वशः ॥
दक्षिणेनाग्नये नित्यं सोमायोत्तरतस्तथा।
एतयोरन्तरे नित्यं जुहुयाद्वै विवस्वते ॥ इति।

पिण्डपितृयज्ञमधिकृत्याहाश्वलायनः।

मेक्षणेनादायावदानसम्पदा जुहुयात्सोमाय पितृमते स्वधा नमः अग्नये कव्यवाहनाय स्वधा नम इति स्वाहाकारेण वाग्निं पूर्वमिति।

पिण्डपितृयज्ञप्रकरण एवाहापस्तम्बः।

सोमाय पितृपीताय स्वधा नम इति दक्षिणाग्नौ जुहोति। यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयामग्नये कव्यवाहनाय स्वधा नम इति तृतीयां, न यमाय जुहोतीत्येक इति।

पितृयज्ञमेवाधिकृत्य सांख्यायनः।

मेक्षणेन जुहोत्यग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते पितृमते स्वाहेति।

पितृयज्ञमेवाधिकृत्य वैजवापः।

अन्वाहार्यपचने मेक्षणेन द्वे आहुती जुहोत्यग्नय इति पूर्वां सोमायेत्युत्तरामिति।

अत्र निर्विशेषणयोरेवाग्नीषोमयोर्देवतात्वं। अन्वाहार्यपचनो-दक्षिणाग्निः पिण्डपितृयज्ञोक्ता अप्येते देवताहुतिमन्त्रविकल्पाः अतिदेशतोऽग्नौकरणे भवन्त्येवेति। एते च देवतादिविधयो यदीयेषु कल्पसूत्रगृह्येषूक्तास्ते तदीया एवेति व्यवस्थया बोद्धव्याः। अतश्च यदापस्तम्बेन स्वगृह्ये त्रयोदशाहुतिकमग्नौकरणमुक्तं तदेषां तत्सूत्रं तेषामेवेति स्मृतिचन्द्रिकाकारः। स ह्येवमाह। उद्ध्रियतामग्नौ च

क्रियतामित्यामन्त्रयते काममुद्ध्रियतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्चेत्येवं धर्मशास्त्रसूत्रोक्तप्रश्न-प्रतिवचनानन्तरमन्नमुद्धृत्याग्न्युपसमाधानाद्याज्यभागान्तं कुर्यात् । अत्राग्न्युपसमाधानाद्याज्यभागान्तस्य कर्मणः सर्वप्रधानहोमप्राच्याङ्गकलापत्वेनापस्तम्बीयगृह्योपक्रमेऽभिधानात् । आज्यभागानन्तरमन्नेनाज्येन च द्रव्येण "यन्मे मातेत्यादिभिर्मन्त्रैरग्नौकरणसंज्ञकं प्रधानहोमं कुर्यात् । तथाचापस्तम्बीयगृह्यसूत्रं ।

अन्नस्योत्तराभिर्जुहोत्याज्याहुतीरुत्तरा इति ।

उद्धृतस्यान्नस्य किञ्चित्किञ्चिदवदानधर्मेणावदायावदाय पित्रादित्रयस्य षण्मातामहादित्रयाय षडाहुतीरुत्तराभिर्ऋग्भिर्जुहुयात् । मन्त्रप्रपाठकपठितानां मध्ये याः पूर्वमुक्तविनियोगास्तासामूर्ध्वं पठ्यमाना ऋच उत्तराः अन्नाहुतीनामुत्तराः पाश्चात्याः षडाहुतीश्च जुहुयादित्यर्थः । अत्र यद्यपि षणामुत्तराणामृचां स्वस्वदेवतालिङ्गेन पाठक्रमेण च पित्रादिदेवत्याहुतिविभागेन विनियोगोऽवगम्यत एव, तथापि स्पष्टत्वार्थमाहुतिसंख्याज्ञानार्थं प्रयोगप्रदर्शनार्थञ्च द्वयोर्द्वयो र्विनियोगमाह, यन्मे माता प्रलुलोभ चरति यास्तिष्ठन्ति द्वाभ्यामृग्भ्यां अमुष्मै स्वाहेत्यन्ताभ्यामिति । अत्र जुहोतीत्यनुषज्यते । अमुष्मा इत्यत्र चतुर्थ्यन्तं पितुर्नाम गृहीत्वा द्वे आहुती जुहुयात् । एवं यन्मे पितामही प्रलुलोभ चरति अन्तर्दधे पर्वतैरिति द्वाभ्यामृग्भ्याममुष्मै स्वाहेत्यन्ताभ्यामिति । अमुष्मा इत्यत्र चतुर्थ्यन्तं पितामहस्य नाम गृहीत्वा द्वे आहुती जुहुयात् । यन्मे प्रपितामही प्रलुलोभ चरति अन्तर्दधे ऋतुभिरिति द्वाभ्यामृग्भ्याममुष्मै

स्वाहेत्यन्ताभ्यामिति। अमुष्मा इत्यत्र प्रपितामहस्य नाम गृहीत्वा द्वे आहुती जुहुयादिति। एवं पित्राहुतिविनियुक्ताभ्यामृग्भ्यां मातामहायाहुतिद्वयं, पितामहाहुतिविनियुक्ताभ्यां मातुः पितामहायाहुतिद्वयं, प्रपितामहाहुतिविनियुक्ताभ्यां मातुः प्रपितामहायाहुतिद्वयं जुहुयात्। ऊहस्त्वत्र कार्य्यः। तत्र प्रथममन्त्रे यन्मे मातामही प्रलुलोभ तन्मे रेतोमातामहो वृङ्क्तामित्यूहः। द्वितीये मन्त्रे अन्तरन्यं मातामहाद्वृध इत्यूहः। मन्त्रद्वयेऽप्यमुष्मा इत्यत्र चतुर्थ्यन्तस्य मातामहनाम्नो ग्रहणं कर्त्तव्यं। तृतीये मन्त्रे यन्मे मातुः पितामही प्रलुलोभ तन्मे रेतो मातुः पितामहो वृङ्क्तामित्यूहः। चतुर्थे मन्त्रे अन्तरन्यं मातुः पितामहाद्वृध इत्यूहः। मन्त्रद्वयेऽप्यमुष्मा इत्यत्र चतुर्थ्यन्तस्य मातृपितामहनाम्नो ग्रहणं कर्त्तव्यं। पञ्चमे मन्त्रे यन्मे मातुः प्रपितामही प्रलुलोभ तन्मेरेतो मातुः प्रपितामहो वृङ्क्तामित्यूहः। षष्ठे मन्त्रे अन्तरन्यं मातुः प्रपितामहाद्वृध इत्यूहः। मन्त्रद्वयेऽप्यमुष्मा इत्यत्र चतुर्थ्यन्तस्य मातृप्रपितामहनाम्नो ग्रहणं कर्त्तव्यं।

तदेतदाह गृह्यभाष्यसंग्रहकारः।

योज्यः पित्रादिशब्दानां स्थाने मातामहादिकः।
अन्नहोमे तथा स्पर्शे जलपिण्डादिदानके।
यन्मेमातामहीत्यादि तत्रोदाहरणं भवेत्॥ इत्यादि।

'स्पर्शे' एष ते ततमधु मां ऊर्मिः सरस्वानित्यादिमन्त्रत्रयेण ब्राह्मणभोजनार्थस्यान्नस्य स्पर्शे, ततः पूर्व्ववदवदाय ये चेह पितर इत्यृचा एकामाहुतिं जुहोति। एवमन्नाहुतीर्हुत्वा षडाज्याहुतीर्जुहोति।

तत्र स्वाहा पित्रे इति पुरस्तात्स्वाहाकारेण मन्त्रेण प्रथमद्वितीये, एताभ्यामेव मन्त्राभ्यां तृतीयचतुर्थे आज्याहुतीर्हुत्वा स्वधा स्वाहेति मन्त्रेण पञ्चमीं जुहोति। अग्नये कव्यवाहनाय स्वाहेति मन्त्रेण षष्ठीं। ततः स्विष्टिकृदाहुतिं हुत्वा भक्ष्य-भोज्यादिसर्वविधहविभ्या-त्किञ्चिदादायोदीचीनमुष्णं भस्मापोह्य तस्मिन्नुष्णे भस्मनि तूष्णीं जुहोति। ततो लेपयोः प्रस्तवाभ्यां तूष्णीं बर्हिरङ्गाग्नौ प्रहरतीत्यादिकं परिषेचनान्तमाङ्गेयस्थालीपाकोक्तं यद् होमेष्वतिदेशप्राप्तमुदीच्याङ्गकलापं कृत्वा हुतशेषं ब्राह्मणपात्रेषु निदध्यात्।

तदेतत्सर्वमप्याह गृह्यभाष्यसंग्रहकारः।

अग्नीन्धनादिप्रतिपाद्यकर्म कृत्वाज्यभागान्तमथावदाय यन्मेति-मन्त्रैः प्रतिमन्त्रमग्नौकार्यास्तथा सप्तभिरन्नहोमाः स्वाहादिमन्त्रैरपि सर्पिषा स्युर्होमास्ततः स्विष्टकृतन्तु हुत्वा भस्माप्यपोह्याहविरन्नहोमो-लेपन्तु दर्व्योश्च समञ्जनादिशेषञ्च कृत्वा परिषेचनान्तं पात्रेषु दद्याद्धु-तशेषमन्नमिति।

सप्तभिरन्नहोमा इत्यनूहितमन्त्राभिप्रायेणोक्तं। ऊहितमन्त्र-साहित्ये हि त्रयोदशसंख्यापत्तेः। सप्तभिरित्ययुक्तं स्यात्। अथञ्चा-ग्नौकरणहोमः प्राचीनावीतिना कार्यः पैतृकत्वात्। तथाचापस्तम्बेन स्वगृह्यग्रन्थादावित्युक्तं। "अपरपक्षे पित्र्याणि प्राचीनावीतिनापसव्यं दक्षिणतोऽपवर्गः" इति। अत्रापि यदा पैतृकमाघारसमिन्धनादिकं तदप्यत्रापवीतिना कार्य्यं।

तदाह भाष्यार्थसंग्रहकारः।

आघारदार्व्वग्निमुखाज्यभाग-
प्रदक्षिणानुव्रजनेषु तावत् ।
आघारयोः स्विष्टकृति प्रदिष्टं
यज्ञोपवीतं हि कपर्दिनः स्यात् ।

इत्यग्नौकरणदेवताहुतिसंख्यामन्त्रविकल्पाः ।

अथ पाण्यधिकरणस्य होमस्य प्रश्नादीनि ।

शौनकगृह्ये ।

अनग्निस्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्व्ववत्तथास्त्विति ।

अस्यार्थः आज्यमाज्ययुक्तमन्नन्तदर्व्यादिपात्रे स्थापयित्वा पात्रञ्चोद्धृत्य करे धारयित्वा भवत्स्वेवाग्नौकरणमित्यधिकरणकर्मकारकयोर्निर्देशं कृत्वा शेषं पूर्व्ववत् । अग्न्यधिकरणकहोमवत्करिष्ये करवै करवाणीति वा आख्यातपदं प्रयुञ्जीतेत्यर्थः। तथास्त्विति ब्राह्मणा अनुज्ञान्दद्युरिति यावत् । अत्रापि काकाक्षिगोलकवत् पूर्व्ववदितिसम्बन्धनीयं। तथा च क्रियतां कुरुष्व कुर्व्वित्यभ्यनुज्ञावचनं लभ्यते । तत्राग्नौकरणधर्मान्तरातिदेशोऽपि पाणिहोमे ज्ञातव्यः । तथा च होमार्थेऽन्ने पूर्व्वार्द्धापरार्द्धकल्पना । अभिघारणप्रत्यभिघारणे द्विरवदानं मेक्षणेनावदाय होम इति। अत्र स्मृत्यर्थसारकृता मेक्षणेध्म-विप्रानुज्ञाः न सन्ति परिसमूहन-पर्युक्षणे भवतः[१] इत्युक्तं ।

तत्राह स्मृतिचन्द्रिकाकारः ।

यात्र स्मृत्यर्थसारकर्त्तुर्विप्रानुज्ञाभावोक्तिः सानग्निस्चेदित्यादिनिरन्तरोक्तशौनकवचनादर्शननिबन्धनेत्युपेक्षणीया । मेक्षणाभावोक्तिरपि

(१) परिसमूहन-पर्य्युक्षणे स्त इति ख० ।

मेक्षणकार्य्ये अन्यस्य विध्यदर्शनाच्चिन्त्या, पर्य्युक्षण-परिसमूहनसद्भावो-क्तिश्च पांसुनिरसनलक्षणस्य दृष्टकार्य्यस्य लोपान्नियमादृष्टमात्रस्य चा-प्रयोजकत्वादयुक्ता। यस्य त्वदृष्टरूप एव संस्कारः कार्य्यं परिस्तरणस्य तदस्त्येव ।

तथा च यमः ।

अग्नौकरणवत्तत्र होमो दैवकरे भवेत् ।
पर्य्यस्तदर्भानास्तीर्य्य यतोह्यग्निसमोहि सः ॥ इति ।

'दैवकरः' वैश्वदेविकब्राह्मणपाणिः। दैवग्रहणं पित्र्यस्याप्युपलक्षणार्थं। 'पर्य्यस्तदर्भाः' परितः सर्वतोन्यसनीयाः दर्भाः परिस्तरणदर्भाः इति यावत्। अन्ये तु निबन्धकाराः "पर्य्युक्ष्य दर्भानास्तीर्य्येति पठन्ति। इध्मस्य त्विन्धनार्थं समिद्भवेदिति अग्निसमिन्धनार्थत्वस्मरणात्तदभावे सर्वसम्मत एव लोपः। परिसमूहन-पर्य्युक्षणयोस्तु धर्ममात्रत्वादलोप एव। उपाध्यायकर्कस्तु कुरुष्वेत्यभ्यनुज्ञातः पिण्डपितृयज्ञवद्धुत्वेत्यत्र कात्यायनसूत्रे पिण्डपितृयज्ञवदित्यस्य पिण्डपितृयज्ञवदुपचार इत्यनेन पौनरुक्त्यमाशङ्क्य यथासम्भवं परिस्तरण-परिसमूहनादीतिकर्त्तव्यतापरिसङ्ख्यार्थतामेव समर्थितवान्। ततश्च परिसमूहन-पर्य्युक्षण-मेक्षणादीतिकर्त्तव्यताशून्यहोमसमाचारस्तु तन्मतानुसारिभिरेव प्रवर्त्तित इति जानीमः। यदत्र युक्तं तद्ग्राह्यं।

इति पाण्यधिकरणस्य होमस्य प्रश्नादीनि ।

पाण्यधिकरणकहोमधर्मक एवाजाकर्णाद्यधिकरणकोऽप्यग्नौकरणहोमः। अग्नौकरणं करिष्य इत्येतावानेव प्रश्नोऽत्रेति विशेषः ।

इत्यजकर्णाद्यधिकरणकस्य होमस्य प्रश्नादीनि ।

अथ हुतावशिष्टप्रतिपत्तिः ।

तत्राग्नौ होममुक्ताह याज्ञवल्क्यः ।

हुतशेषं प्रदद्यात्तु भाजनेषु समाहितः ।
यथालाभोपपन्नेषु रौप्येषु तु विशेषतः ॥

अत्र पितृप्रियरौप्यवचनात् पैतृकविप्रभाजनेष्विति गम्यते ।

तथा च यमः ।

अग्नौकरणशेषन्तु पित्र्येषु प्रतिपादयेत् ।
प्रतिपाद्य पितॄणान्तु न दद्याद्वैश्वदेविक इति ॥

अत्राग्नौकरणशब्दाद्वचनस्याग्निहोमविषयत्वं अन्यनग्निरूपोभयविधाधिकरणहोमविषयत्वं वास्तु। अग्नौकरणशब्दस्य नामधेयत्वात्।

तथा च पङ्क्तिमूर्द्धन्यपित्र्यपाणौ होममुक्ताह कात्यायनः ।

हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत् । इति ।

अन्यशब्दस्य प्रकृतसजातीयवचनत्वात् पित्र्यपङ्क्त्युपविष्टविप्रपात्रेष्विति लभ्यते ।

अत एवाह यमः ।

पित्र्यपाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत् ।
अग्नौकरणशेषन्तु न दद्याद्वैश्वदेविके ॥

अत्र पित्र्यपाणिग्रहणमुपलक्षणं । अतो वैश्वदेविकद्विजपाणौ होमेऽपि शेषस्य पितृपात्रेष्वेव प्रक्षेपो न दैवपात्रेषु। अत एव सर्वसाधारण्येनैव हुतशेषस्य वैश्वदेविकपात्रप्रक्षेपः प्रतिषिद्धो ब्रह्माण्डपुराणे।

अग्नौकरणशेषन्तु न दद्याद्वैश्वदेविके ।

न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैरिति ॥

यमेनापि प्रतिषिद्धः ।

अग्नौकरणशेषन्तु पित्र्येषु प्रतिपादयेत् ।

हुतशेषं कदाचित्तु न दद्याद्वैश्वदेविके ॥

न कदाचिदित्यस्यायमर्थः । यदा वैश्वदेविकपङ्क्तिमुख्यविप्रपाणौ होमः तदा तस्यैव वा वैश्वदेविकद्विजान्तरस्य पात्रे हुतशेषप्रक्षेपो न कर्त्तव्यः । यदा वा पित्र्यपाणौ वह्न्यादावधिकरणान्तरे वा होमः तदानीमपि वैश्वदेविकद्विजपात्रे हुतशेषप्रक्षेपो न कर्त्तव्य इति विशेषतश्च वैश्वदेविकपात्रेषु हुतशेषप्रक्षेपस्तेनैव निषिद्धः ।

देवविप्रकरेऽनग्निः कृत्वाग्नौकरणं द्विजः ।

शेषयेत् पितृविप्रेभ्यः पिण्डार्थं शेषयेत्तथेति ॥

वायुपुराणे ।

हुत्वा दैवकरेऽनग्निः शेषं पित्र्ये निवेदयेत् ।

न हि स्मृताः शेषभाजो विश्वेदेवाः पुराणगैरिति ॥

पित्र्ये पात्र इति शेषः । 'पुराणगैः' पुराणज्ञैः । उपलक्षणञ्चैतच्छ्रुति-स्मृतीतिहास-कल्पसूत्राद्यभिज्ञानं ।

वाजसनेयपरिशिष्टनिगमे तु शेषप्रतिपत्तिर्ब्राह्मणहस्तेषूक्ता ।

शेषमन्नं हस्तेन हस्तेषु पिण्डवत्प्रदायेति ।

'पिण्डवदित्यनेन स्वधाकारोच्चारणमात्रमतिदिश्यते । न पुनरवनेजन-प्रत्यवनेजनोल्मुकादीनि । स्वधेत्येव हविःशेषमाददीतेति यमवचने धर्मान्तरपरिसङ्ख्यानात् । अथवैवमस्यार्थः । 'पिण्डवत्' यथा पिण्डेषु, एतदुक्तं भवति यथा पिण्डार्थं पिण्डपात्रेऽग्नौकरणशेषः प्रक्षिप्यते तथा

ब्राह्मणहस्तेष्वपीति। अथवा पिण्डवदिति मतुवन्तं। शेषमन्न कियताप्यंशेन पिण्डवत् पिण्डसम्बन्धि यथा भवति तथा ब्राह्मणहस्तेषु प्रक्षेपणीयं न कृत्स्नमित्यर्थः। पिण्डार्थं शेषयेदित्येतच्च यदाग्नौ पित्र्यविप्रकरादौ वा होमस्तदापि वेदितव्यं। अवशेषणस्य पिण्डार्थत्वावगमात्। ननु दैवपाणिकृतावशेषणस्यैव पिण्डार्थत्वोपदेशात् पित्र्यपाणिकृतावशेषणस्य तादर्थ्यं न लभ्यते। मैवं। दैवकरे हूयमानस्यान्नस्यैकदेशं पिण्डार्थमवशेषयेदित्यत्र दैवकरादिविशेषणविवक्षायां विशिष्टोद्देशप्रसङ्गः। अतोऽग्निपाण्याद्यधिकरणकृतैकदेशेनापि सह शेषयेदित्येतत् सम्बध्यते।

अत एवाह वृद्धवसिष्ठः।

> पित्र्यविप्रकरे हुत्वा शेषं पात्रेषु निक्षिपेत्।
> पिण्डेभ्यः शेषयेत् किञ्चिन्न दद्याद्वैश्वदेविके॥

अत्र यद्यपि पिण्डपर्य्याप्तशेषसम्पादनं कर्त्तुं शक्यं तथापि पिण्डार्थं प्रकृतसर्वरूपान्नोद्धरणस्य वक्ष्यमाणत्वादुद्धृतान्नमिश्रीभावमात्रेणाग्नौकरणशेषस्य पिण्डोपकारकत्वमवगम्यते। एवं च पिण्डपात्रप्रक्षेपोऽस्यार्थादेव सिद्धः। यद्यपि चात्र शेषयेदिति विधिश्रवणात् पिण्डार्थमित्यर्थकर्मत्वावगमाच्च शेषधारणस्यावश्यकत्वं प्रतीयते तथाप्युपयुक्तद्रव्यसंस्कारकत्वेन प्रतिपत्तित्वावगमादनावश्यकत्वं शेषं प्रत्यप्रयोजकत्वञ्चावसीयते। शेषकर्मणामप्रयोजकत्वात्। अर्थकर्मरूपाणामप्याश्रयिकर्मणां प्रस्तरयागादीनां प्रतिपत्तिरूपसम्भेदेन द्रव्यं प्रत्यप्रयोजकत्वमेवाभिमतं।

आह यमः।

हुते लग्नौ ततः सम्यग्विधिनानेन मन्त्रवित् ।
स्वधेत्येव हविःशेषमाददीत समीक्ष्य च ॥

होमावशिष्टमन्नमवलोक्य 'स्वधेत्येवमाददीत' पित्र्यविप्रपात्रेषु किंचत्प्रक्षिप्य शेषं पिण्डार्थमाहरेदित्यर्थः। अतस्तूष्णीं पात्रेषु निक्षिपेदित्यनेनास्य विकल्पः। यथागृह्यं व्यवस्था वेति। अत्र यद्यप्याहुतेरग्निप्राप्तिमात्रेणैव पाणितलप्राप्तिमात्रेण च होमसमाप्तिर्जातैव शेषप्रतिपत्तिसमाप्तिश्च पात्रप्राप्तिमात्रेण जाता तथापि हुत-शेषयोर्वचनाद्ब्राह्मणैर्भोजनं कार्य्यं ।

तदाह गार्ग्यः ।

यदन्नं दीयते पाणौ पात्रे वापि निधीयते ।
भुञ्जीरन् ब्राह्मणास्तत्तु पितृपङ्क्तौ निवेशिताः ॥

तच्च प्रक्षेपकाल एव न भोक्तव्यं। नापि भोजनार्थमुपकल्प्यमानादन्नान्तरात् पृथक्कृत्य ।

तथा च बह्वृचपरिशिष्टे ।

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितं ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

आश्वलायनगृह्ये ।

यदि पाणिष्वाचान्तेष्वन्यदन्नमनुदिशत्यथाग्नौ हुतशेषमन्नं सृष्टं दत्तमर्द्धुकमिति ।

इह होमानन्तरपरिवेषणाच्च पूर्वं विधीयमानमाचमनं स्वनिमि-

त्तमाक्षिपत्तत्काल एव कृतभक्षणमापादयतीति भ्रमो माभूदिति मन्यमानेन हरिहरेणास्यार्थो व्याख्यातः। यदा द्विजपाणिषु जुहुयात्तदा होमाधिकरणीकृतपाणिषु द्विजेष्वाचान्तेषु कृतेषु कृताचमनेषु सत्स्वन्यदन्नं 'अनुदिशात' ददाति। आचमनस्याचाभ्यवहारसंयोगात्। अभ्यवहारस्यात्र "पाण्यास्यो हि द्विजः स्मृत इति वचनादभ्यवहार्य्यस्य पाणितलेन सह संयोगमात्रं न मुख्यं भक्षणं। मुख्ये हि भक्षणे "यत्र पाणितले दत्तमित्यादिवचनविरोधः स्यात्। 'अथ' अनन्तरं, अग्नौ कृतादन्नाच्छेषभूतमन्नं ब्राह्मणेभ्योदद्यात् पित्र्यब्राह्मणपात्रेषु निक्षिपेदित्यर्थः। यतस्तेन संसृष्टं समिश्रं दीयमानं अन्यदन्नं 'अर्द्धुकं' ऋद्धिकृद्भवति विशेषेण पितॄणामुपकारि भवतीत्यर्थः। अत्राग्नावित्युपलक्षणार्थं। वचनान्तरानुरोधात्। पाण्यादावित्यपि ज्ञेयं।

बौधायनेन तु सोमाय पितृमते स्वधा नम इत्यादिमन्त्रत्रयेणाज्याहुतित्रयं विधायाज्यशेषेण अन्नाभिघारणमभिधाय तेनान्नेनाहुतित्रयमुक्त्वान्नशेषभक्षणे कालप्रकारौ दर्शितौ।

अग्नौकरणशेषेण यदन्नमभिघारयेत्।
तस्मिंस्तु प्राशिते दद्याद्यदन्नं प्रकृतम्भवेत्॥

इयञ्च शेषप्रतिपत्तिर्बौधायनोक्ताग्नौकरणविषयैवेति।

इति हुतावशिष्टप्रतिपत्तिः।

इत्यग्नौकरणनिर्णयः।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे श्राद्धदिनापरकृत्ये अग्नौकरणं नाम त्रयोदशोऽध्यायः॥ ०॥

---

# चतुर्दशोऽध्यायः ।

---

## अथ परिवेषणं ।

अथ चाग्नौकरणशेषप्रतिपत्त्युत्तरकाले कर्त्तव्यतामाह प्रचेताः ।

हुतशेषं पितृभ्यस्तु दत्त्वान्नं परिवेषयेत् ।
हविष्यं मधुमांसानि पायसापूपमेव च ॥

पैठीनसिस्त्वाह ।

ब्राह्मणानलङ्कृत्य मांसापूप-दधि-मधु-घृत-पायस-कृसर-फल-विकारानिति भक्ष्यांश्चोपसादयेत् ।

ब्राह्मणान् गन्धपुष्पादिभिरलङ्कृत्य मांसापूपादिकं 'उपसादयेत्' परिवेषयेत् ।

अलङ्कृत्येत्यनेनालङ्करणस्य परिवेषणात् पूर्वकालत्वमात्रमुच्यते, न त्वव्यवहितपूर्वकालत्वं, अतोऽलङ्करणानन्तरमग्नौकरणं कृत्वापि क्रियमाणे परिवेषणे वचनार्थोपपत्तेः पूर्वेण सहाविरोधेनैतद्व्याख्येयं। इतिशब्दः प्रकारवचनोभक्ष्य-भोज्यप्रकाराणां सूप-शाकादीनां सङ्ग्रहार्थः। मत्स्यग्रहणञ्च मांसेषु मत्स्यमांसातिशयितपितृतृप्तिकरत्वद्योतनार्थं। परिवेषणात् पूर्वञ्च यज्ञोपवीत्येव पात्रेणाज्यमादाय तूष्णीमेव देवपूर्वकं भोजनपात्रेषूपस्तरणं कुर्य्यात्। तेषां देवतोद्देशेन त्यज्यमानहविराधारतया स्रुगादितुल्यत्वात् शिष्टाचाराच्च। केचित्तूपस्तरणेऽमुं मन्त्रं प्रयुञ्जते। आमासुपक्कमैरय आसूर्य्यं रोहयोदिवि। धर्म्मं न सामन्तपनता सुवृक्तिभिर्ज्जुष्टङ्गिर्वणसे बृहदिति। ततः परिवेषणसौकर्य्यार्थं श्राद्धदेशं प्रति पाकसंस्कृतभाण्डाहरणं कर्त्तव्यं ।

तत्र प्रकारमाह मनुः।

पाणिभ्यामुपसंगृह्य स्वयमन्नस्य वर्द्धितं।
विप्रान्तिके पितॄन् ध्यायन् शनकैरुपनिक्षिपेत्॥

'अन्नस्य वर्द्धितं' अन्नपूर्णभाजनं, रसवत्यगारात् द्वाभ्याङ्कराभ्यां गृहीत्वा समानीय प्रकृतश्राद्धसम्बन्धिनः पितॄन् उच्छिष्टस्पर्शप्रसङ्गरहिते भोजनीयविप्रसमीपदेशे स्थापयेत्। 'शनकैः' यथा भाण्डभेदः शब्दोवा नोत्पद्यते। 'स्वयमिति मुख्यपक्षत्वेनोक्तं। स्मृत्यन्तरोक्तस्य पत्न्यादेः परिवेषणसहायस्य तदुपकारके भाजनानयने सुतरां सम्भवात्।

स्मृतिचन्द्रिकाकारस्तु 'अन्नस्य वर्द्धितं' अन्नपूर्णपरिवेषणपात्रं, पाणिभ्यामुपसंगृह्य तत्रत्यमन्नं भोजनपात्रेषु निक्षिपेदिति व्याख्यातवान्। मेधातिथिस्तु सह पूर्व्वया व्याख्ययैतदपि व्याख्यानमन्वमन्यत। एकेन तु पाणिना समुद्धृत्यानयने परिवेषणे च दोषमाह स एव।

उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते।
तद्विप्र लुम्पन्त्यसुराः सहसा दुष्टचेतसः॥

उभाभ्यां हस्ताभ्यां 'मुक्तं' अपरिगृहीतं यदन्नं, परिवेषणार्थमुपनीयते तत् 'सहसा' 'बलेन' दुष्टचेतसः पापात्मानः, 'असुराः' देवद्विषः, 'लुम्पन्ति' लुठन्ति। उभयोरित्यधिकरणसप्तमी, मुक्तमित्यनाश्रितमस्थितमिति यावत्। एवं समानीतमन्नं परिवेषणीयमित्याह स एव।

भक्ष्यं भोज्यञ्च विधिवत् मूलानि च फलानि च।
हृद्यानि चैव मांसानि पानानि सुरभीणि च॥
उपनीय सर्वमेतच्छनकैः सुसमाहितः।
परिवेषयेत् प्रयतोगुणान् सर्वान् प्रचोदयन्॥

'भक्ष्यं' शष्कुली-मोदकादि । 'भोज्यं' घृतपूरादि । अत्रान्यान्यपि परिवेषणीयान्यन्नानि ग्राह्याग्राह्यप्रकरणे द्रष्टव्यानि । 'उपनीय' विप्रान्तिकमानीय, 'परिवेषयेत्' भोजनपात्रेषु प्रक्षिपेत् । माधुर्य्यादीन् अन्नगुणान् 'प्रचोदयन्' इदं मधुरमिदमम्लमिदं कषायमिति वचनेनावेदयमानः । अत्र पित्र्यमपि परिवेषणं यज्ञोपवीत्येव कुर्य्यादिति यज्ञोपवीतप्रकरणे प्रतिपादितं ।

कालिकापुराणे ।

नियतो वाग्यतः सोऽथ कराभ्यां चैव भाजनं ।
विप्राग्रे च ततो नीत्वा भक्ष्यांश्च परिवेषयेत् ॥

आह यमः ।

ततो विप्रदमानीय भोजयेत् प्रयतो द्विजान् ।
अन्नं सूपं घृतं शाकं मांसं दधि पयो मधु ।
सर्वमेतत्समानीय प्रीणयेत्तु यथासुखं ॥

सर्वमेतत्समानीय परिवेषणपूर्वकं पितॄनुद्दिश्य त्यक्त्वा यथासुखं ब्राह्मणान् संभोज्य तर्पयेदित्यर्थः । एतच्च परिवेषणं दैवपूर्व्वकं कर्त्तव्यमित्याह शौनकः ।

पाकं सर्व्वमुपानीय संवेद्य च पृथक् पृथक् ।
विधिना दैवपूर्वन्तु परिवेषणमारभेत् ॥

'संवेद्य' इदं मधुरमित्यादिप्रकारकेण वाक्येन ब्राह्मणान् प्रति संविदितं कृत्वा । एतच्च दैवपूर्वकं भोजनारम्भात् प्राचीनपरिवेषणविषयं । तदूर्द्ध्वन्तु यथेष्टं येन केनचित् क्रमेण परिवेषणं कार्य्यं । "यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरी" इति परिवेषणे ब्राह्मणेच्छानु-

मारस्य यमेनोक्तत्वात्। एतच्च यजमानेन भार्य्यया शुचिना परिचारकेण वा कर्त्तव्यं। तत्र यजमानेन क्रियमाणे परिवेषणे फलानन्ततामाह धर्म्मः।

फलस्यानन्तता प्रोक्ता स्वयञ्च परिवेषणे।

'स्वयमिति यजमानेन। अत्र प्रशस्ततरत्वप्रतिपादनपरेण फलानन्त्यवचनेन भार्य्यादिना क्रियमाणस्य प्रशस्तस्यानुज्ञा गम्यते।

तथा च भविष्योत्तरे।

भार्य्यया श्राद्धकाले तु प्रशस्तं परिवेषणं।

वायुपुराणेऽपि।

परिवेषणं प्रशस्तं स्यात् पितृकर्म्मणि भार्य्यया।
पितृ-देव-मनुष्याणां स्त्री सहायोयतः स्मृता॥

इति हेतुवन्निगदान्मुख्यतया यजमानकर्तृक एव परिवेषणे भार्य्यायाः सहकारिमात्रत्वं न तु मुख्यत्वमिति गम्यते। प्रशस्तत्वचनादन्यस्यापि परिचारकस्य परिवेषणेऽनुज्ञा क्रियते। भार्य्यापि सवर्णयैव कर्त्तव्यं नान्यवर्णया।

तथा च नारायणः।

यद्द्रव्यं यत्पवित्रञ्च यत्पित्र्यं यत्सुखावहं।
द्विजातिभ्यः सवर्णायानार्य्याहस्तेन दीयते॥

अत्र गुणातिशयार्थं तिलसहित-दर्भयुक्तपाणिना परिवेषणं कार्य्यमिति पाद्म-मात्स्ययोरुक्तं।

उभाभ्यामथ हस्ताभ्यां आहृत्य परिवेषयेत्।
प्रशान्तचित्तः सतिल-दर्भपाणिर्विशेषतः॥

एतच्च परिवेषणं पित्र्ये सव्योपसृष्टेन दक्षिणेन कर्त्तव्यं। आश्वला-यनादिभिरेवंविधस्य दक्षिणस्य पित्र्यद्रव्यप्रक्षेपे साधनत्वेन विधानादाचाराच्च ।

एवंविधेनापि हस्तेन केवलेन न कार्य्यं किन्त्वयोमयवर्ज्जंद्रव्यादिपरिवेषणपात्रान्तर्हितेन तदभावे पर्णाद्यन्तर्हितेनापीत्युक्तं ब्रह्माण्डपुराणे ।

नापवित्रेण नैकेन हस्तेन न विना कुशं।
नायसेनायसेनैव श्राद्धे तु(१) परिवेषयेत् ॥

'आयसेन' कृष्णायसमयेन, आयसेन वा नैव परिवेषयेत् । अत्र परिवेषणे पात्रान्तर्हितहस्तविधायकानि केवलहस्तनिषेधकानि च सौवर्ण-रजतादिपात्रविधायकान्यायसनिषेधकानि च बहुतराणि वाक्यानि परिवेषणपात्रप्रकरणे द्रष्टव्यानि।

अत्र दर्व्याः कस्यचिदेवान्नस्य परिवेषणे विधिं कस्यचित्तु निषेधमाह कार्ष्णाजिनिः ।

दर्व्या देयं घृतान्नञ्च समस्तं व्यञ्जनानि च ।
उदकं यच्च पक्वान्नं योदर्व्या दातुमिच्छति ।
स चौरः स च पापिष्ठो ब्रह्मघ्नं तं विनिर्दिशेत् ॥

'घृतान्नं' पायसौदनादि। 'पक्वान्नं' मोदकादि। उदकादिदाने दर्वीनिषेधात् पात्रान्तरेण दानं कर्त्तव्यं, केवलहस्तनिषेधस्यापि दर्शितत्वात्।

ब्रह्माण्डपुराणेऽपि ।

हस्तदेयन्तु योदर्व्या दर्व्या देयन्तु हस्ततः ।

(१) श्राद्धेष्विति ग० ।

विपरीतानि योऽश्नीयात् सोऽश्नीयात् पूय-शोणितं ॥

कार्ष्णायसदर्व्वीनिषेधस्तु भविष्योत्तरे दर्शितः ।

कार्ष्णायस्या हि यद्दत्तं दर्व्यान्नं श्राद्धकर्मणि ।

हस्तेनापि हि यद्दत्तं तद्रक्षोभिः प्रयुज्यते ॥

परिवेषणं भूमावेव स्थितेषु पात्रेषु कर्त्तव्यं, न तु दारु-शिला-दिपात्रान्तराद्युपरिस्थितेषु ॥

तदाह मनुः ।

गुणांश्च सूप-शाकाद्यान् पयो दधि घृतं मधु ।

विन्यसेत् प्रयतः सम्यक् भूमावेव समाहितः ॥

'भूमावेवेति भूमावेव निहितेषु भाजनेष्वित्यर्थः । 'गुणान्' गुण-शब्दवाच्यान् । कांस्तानित्यपेक्षायां 'सूप-शाकादीनित्युक्तं । 'सूपं' मुद्गा-दिसाधितं वरान्नशब्दाभिधेयमोदनादिना सह मिश्रीकृत्य भोज्यमन्नं । 'शाकं' पक्वं कन्द-मूल-फल-पत्रादि । चशब्दात् "भक्ष्यं भोज्यञ्च विवि-धमित्यादिना पूर्व्वप्रदर्शितमन्नं समुच्चीयते । एवञ्च सति यानि पायसौ-दनापूपाद्याधारभूतानि महापात्राणि यानि च महाभाजनोपरि-निवेश्यत्वेन प्रसिद्धानि खलु जलकाम्बलिकघृतपयःपानकाद्याधार-भूतानि लघुपात्राणि तेषूभयेषु भूमावेव स्थितेषु परिवेषणं कार्य्यं न पुनराधारान्तरस्थितेष्वित्युक्तं भवति ।

अतएव हारीतः ।

भूमावेव निदध्यान्नोपर्य्युपरिपात्राणीति ।

'उपरिपात्राणि' पात्रान्तरोपरिनिधेयत्वेन प्रसिद्धानि पात्राणि । तान्यपि भूमावेव स्थापयेन्न पात्रान्तरस्य न चाधारान्तरस्योपरीत्यर्थः ।

मानव-मैत्रायणीयसूत्रे तु पायसादिपरिवेषणे मन्त्रा विनियुक्ताः । पयः पृथिव्यामिति पायसं दद्यात् । मधुवाता ऋतायते इति मधु । आयुर्दैति घृतं दद्यात् । अत्र मधुवातेत्ययं मन्त्रः पूर्वं दर्शितः । अवशिष्टन्तु मन्त्रद्वयमेवं । पयः पृथिव्यां पय ओषधीषु पयोदिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यं । आयुर्दा अग्ने हविषा जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान् ॥

कठसूत्रे तु पायसौदनाद्यन्नस्याभिमर्शनं घृत-पयःप्रक्षेपे च मन्त्रान्तरमुक्तं । कल्पितान्नमभिमृश्यैषावोर्म्मामासु पक्वमिति घृतं क्षीरं चासिच्येति ।

स्कान्दे प्रभासखण्डे तु मन्त्रान्तराण्युक्तानि ।

पायसं गुड़संयुक्तं हविष्यं गुड़पूरितं ।
नमोवः पितरोरसाः परिविषन्नभिमन्त्रयेत् ॥
तेजोऽसि शुक्रमित्याज्यं दधिक्राव्णेति वै दधि ।
क्षीरमाप्यायमन्त्रेण व्यञ्जनानि च यानि तु ॥
भक्ष्य-भोज्यानि सर्व्वाणि महानिन्द्रेण दापयेत् ।
संवत्सरोऽसि मन्त्रन्तु जप्त्वा तेनोदकं द्विजः ॥

दापयेदिति सर्वत्र सम्बध्यते ।

अत्र यानि यावन्ति यावद्गुणोत्कर्षशीलान्यन्नान्येकस्य पात्रे परिविष्टानि 'तानि' तावन्ति तावद्गुणोत्कर्षशीलान्यत्रान्यस्यापि पात्रे परिवेष्याणि, न तु वैपरीत्येनेत्याह हारीतः ।

पङ्क्त्यां चैवोपविष्टेभ्यः समं गन्धादिभोजनं ।
न पङ्क्त्यां विषमं दद्यान्न याचेन्न च दापयेत् ॥

वैषम्येण तु दाने दोषमाह यमः।

एकपङ्क्त्युपविष्टानां विषमं यः प्रयच्छति।
दुष्कृतं हरते पङ्क्त्या दाता गृह्णाति यश्च तत्॥
कुनदीसेतुकारस्य कन्याविघ्नकरस्य च।
पङ्क्त्यां विषमदातुश्च निष्कृतिर्नोपपद्यते॥

यम-व्यासावप्याहतुः।

यस्त्वेकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदिवार्थहेतोः।
पूर्वप्रणीतां श्रुतिभिश्च गीतां
तां ब्रह्महत्यामृषयोवदन्ति॥

अत्र यद्यदन्नं ब्राह्मणपात्रे परिवेष्यते तत्तत्काल एव पिण्ड-पात्रेऽपि परिवेषणीयमित्यत्र लिङ्गदर्शनं ब्रह्मपुराणे।

ततोऽन्नं सुरसं स्वादु ददौ पायसपूर्वकं।
प्रत्यग्रमेकदा स्विन्नमपर्युषितमुत्तमं॥
अल्पशाकं बहुफलं षड्रसन्त्वमृतोपमं।
ब्राह्मणानाञ्च प्रददौ पिण्डपात्रे तथैव च॥

इति परिवेषणं।

अथ पात्रालम्भ-जपाङ्गुष्ठनिवेशनानि।

तत्राह कात्यायनः। हुतशेषं दत्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वाहेति वैष्णव्यऽर्चा यजुषा वाङ्गुष्ठमन्नेवगाह्यापहता इति तिलान् प्रकीर्योष्णं स्विन्नमन्नं दद्यादिति।

पृथिवी ते पात्रमित्यादिस्वाहान्तमुच्चार्य्यानन्तरमिदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्य पांसुरे इत्येतां वैष्णवीमृचं जप्त्वानन्तरं विष्णो हव्यं रक्षस्वेति यजुश्चोच्चार्य्य पित्र्यपात्रनिहितेऽग्नौकरणशेषेऽन्नेऽङ्गुष्ठमवगाह्य निवेश्यापहता इत्यादि कृत्वान्नं दद्यात्परिवेषयेदित्यर्थः ।

निगमे त्वङ्गुष्ठावगाहनानन्तरं परिवेषणमुक्त्वा पात्रालम्भ-जपौ पाठान्तरञ्च मन्त्रे दर्शितं ।

शेषमन्नं हस्तेन हस्तेषु पिण्डवत् प्रदायाङ्गुष्ठमन्नेऽवगाह्य सोष्णमन्नं वक्तु च दद्यादभिमृश्य पात्रं जपति । पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणानां त्वा प्राणापानयोर्मध्येऽमृतेऽमृतं जुहोमि स्वाहेति ।

मैत्रायणीयसूत्रे त्वग्नौकरणशेषएवाङ्गुष्ठावगाहनमुक्त्वा पात्रालम्भे मन्त्रान्तरमुक्तं । अवशिष्टेऽन्ने ब्राह्मणाङ्गुष्ठमुपयम्य द्यौः पात्रं स्वधापिधानं ब्राह्मणस्त्वा पितृमुखेऽमृतं जुहोमि स्वधेति । 'अवशिष्टे' अग्नौकरणहोमावशिष्टे, पितृपात्रप्रदत्तेऽन्ने ।

बौधायनसूत्रे तु निवेशनीयस्याङ्गुष्ठस्य नखशून्यत्वरूपो विशेषः पित्रादिस्थानविभागेन मन्त्रान्तराणि चोक्तानि ।

अथेतरद्ब्राह्मणेभ्यो निवेद्य ब्राह्मणस्य अङ्गुष्ठेनानखेनानुदिशति पृथिवीसमन्तस्य तेऽग्निरुपद्रष्टर्चस्ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानां त्वा विद्यावतां प्राणापानयोर्जुहोमि अक्षतमसि मा पितॄणां क्षेष्ठा अमुत्राऽमुष्मिंल्लोके इति । द्वितीयमनुदिशति अन्तरिक्षसमन्तस्य ते वायुरुपश्रोता यजूंषि ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं

द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानान्त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षतमसि मा पितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोके। तृतीयमनुदिशति युष्मन्तस्य ते आदित्योनुख्याता सामानि ते महिमा दत्तस्या प्रमादाय पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि ब्राह्मणानान्त्वा विद्यावतां प्राणापानयोर्जुहोम्यक्षतमसि प्रपितामहानां क्षेष्ठा अमुत्रामुष्मिन् लोक इति।

'इतरत्' अग्नौकरणावशिष्टमन्नं, 'ब्राह्मणेभ्यो निवेद्य' पित्र्यविप्रपात्रेषु प्रक्षिप्य। तदेवमेतेन वचनसन्दर्भेण परिवेषणात् पूर्वमेव पात्रालम्भन-जपौ अग्नौकरणशेषे चाङ्गुष्ठावगाहनमुक्तं।

प्रचेतसा तु पात्रालम्भ-जपाङ्गुष्ठावगाहनानि परिवेषणात्पश्चादेवोक्तानि।

सर्वञ्च प्रकृतं दत्वा पात्रमालभ्य सञ्जपेत्।

'प्रकृतं' प्रस्तुतश्राद्धार्थतया सम्पादितं भक्ष्यभोज्यादिकं सर्वं, 'दत्वा' परिवेष्य, जपेत्। पृथिवी ते पात्रमित्यादीति शेषः।

नागरखण्डेऽपि।

दृष्टमन्नं ततो दत्वा पात्रमालभ्य संजपेत्।

'ततः' इत्यग्नौकरणशेषप्रतिपत्त्युत्तरकालं। 'दृष्टं' पितॄणां द्विजानाञ्च अपेक्षितं।

अत्र जप्यं प्रतीकेनाह याज्ञवल्क्यः।

दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणं।
कृत्वेदं विष्णुरित्यन्ने द्विजाङ्गुष्ठं निवेशयेत्॥

पैठीनसिस्तु समग्रं मन्त्रमाह।

पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतं जुहोमि स्वधा, इदं विष्णुर्विचक्रम इत्यनेनाङ्गुष्ठमन्ने चोदके चावधाय ।

अत्र केचिदन्ने निवेशितस्याङ्गुष्ठस्य प्रक्षालनार्थं उदके अवधानमिति व्याचक्षते । अन्ये तु भोजनार्थं पूर्वमेव परिविष्टेऽन्न इव पानार्थं पूर्वमेवोपनीतं उदकेऽवधानमित्याहुः । तदेतन्मतद्वयमपि दृश्यते । मानवमैत्रायणीयसूत्रे लिदं विष्णुरित्यनयर्चाङ्गुष्ठस्य ग्रहणं, विष्णुर्विचक्रम इति ब्राह्मणानामङ्गुष्ठमादाय विष्णो हव्यं रक्षस्वेति वैश्वदेविके, विष्णो कव्यं रक्षस्वेति पित्र्ये निवेश्योदकं पाणौ प्रदायेति ।

यमस्त्वाह ।

विष्णो हव्यञ्च कव्यञ्च ब्रूयात् रक्षेति च क्रमात् ।
वारिष्वग्रप्रदत्तेषु तमङ्गुष्ठं निवेशयेत् ॥

विष्णो हव्यं रक्षस्वेति दैवे ब्रूयात्, विष्णो कव्यं रक्षस्वेति पित्र्ये ब्रूयादित्यर्थः । 'तमिति पूर्वमन्ने निवेशितं । 'अग्रप्रदत्तेषु' ब्राह्मणाग्रे स्थापितेषु अन्नवत् पूर्वमेव परिविष्टेषु वा ।

अतएव ब्रह्मपुराणे ।

अथ दत्वा समग्रन्तु जलान्तं भोजनं क्रमात् ।
विश्वेभ्यस्त्वथ देवेभ्यः कुर्य्याच्च प्रतिपादनं ॥
द्विजाङ्गुष्ठं गृहीत्वा तु पठेन्मन्त्रञ्च वाग्यतः ।
पृथिवी ते पात्रमित्यन्नममृतं चिन्तयेत् पठन् ॥
विष्णो हव्यमिदं रक्ष मदीयमिति कीर्त्तयेत् ।
पुनस्तेनैव मन्त्रेण पितृभ्यश्च निवेदयेत् ।
एकैकस्याथ विप्रस्य गृहीत्वाङ्गुष्ठमादरादिति ॥

'भोजनमिति भोज्यं भक्त-भोज्य-लेह्य-चोष्य-पेयादिकं, 'दत्त्वा' परिवेश्य, 'प्रतिपादनं' त्यागः। द्विजाङ्गुष्ठं गृहीत्वेत्यादिना त्यागपूर्वमनुष्ठेया तदितिकर्त्तव्यतोक्ता।

शङ्ख-लिखिताभ्यान्त्वङ्गुष्ठनिवेशने जानुपातनं पितृध्यानञ्चोक्तं। अङ्गुष्ठमुपयम्येदं विष्णुरिति जानु निपद्य भूमौ पितॄन् ध्यायन्मनसेति। एतच्च पित्र्ये दैवे विश्वान् देवान्ध्यायन्निति वेदितव्यं। जानुनस्तु निषदनं दैवे दक्षिणस्य, पित्र्ये वामस्येति विभागेन प्रत्येतव्यं। एतच्च सर्वेषां दैव-पित्र्यधर्माणामुपलक्षणार्थं।

कालिकापुराणेऽन्नमध्येऽङ्गुष्ठस्य भ्रामणमुक्तं।

धृत्वाङ्गुष्ठं द्विजानान्तु आवर्त्त्याज्यमधुप्लुते।
पृथिवी त इतिमन्त्रेण हव्य-कव्ये च रक्षयेत्॥

'पृथिवी त इत्यनेन पृथिवी ते पात्रमित्यादि इदं विष्णुरित्यादि विष्णो हव्यमित्याद्यन्तमुपलक्षितं। एतच्च सर्वं जप्त्वा द्विजानामङ्गुष्ठं परिविष्टे घृत-मधुप्लुतेऽन्ने 'आवर्त्त्य' परिभ्राम्य' तदन्नक्तेनाङ्गुष्ठेन राक्षसादिभ्यो रक्षयेत्।

विष्णुर्ह्यङ्गुष्ठरूपेण तस्य चान्नस्य रक्षिता।

तदाह यमः।

अङ्गुष्ठमात्रो भगवान् विष्णुः पर्य्यटते महीं।
राक्षसानां बधार्थाय कोमेऽद्य प्रहरिष्यति॥
तस्मात् श्राद्धेषु सर्वेषु अङ्गुष्ठग्रहणं स्मृतं।
निरङ्गुष्ठन्तु यत् श्राद्धं बहिर्जानु तु यद्धृतं।
तत्सर्वमसुरैर्भुक्तं सर्वमेवासुरं भवेत्॥

हारीतोऽपि ।

निरङ्गुष्ठन्तु यत् श्राद्धं न तत्प्रीणाति वै पितॄन् ।
तस्मादङ्गुष्ठमाक्रम्य जपेन्मन्त्रं समाहितः ॥

इदं विष्णु र्विचक्रम इति ।

यथान्नं निहितं पात्रे पिहितं तद्दर्वीयसा ।
अक्षतं स्थानमायाति तद्वदङ्गुष्ठसंस्कृतं ॥

अङ्गुष्ठग्रहणे मन्त्रान्तरं तद्भ्रामणे विशेषश्चोक्तः पिप्पलादसूत्रे। अङ्गुष्ठमुपयमन् पात्रे प्रदक्षिणं दैवेऽपसव्यं पित्रे अतोदेवा अवन्तु नोयतोविष्णुरिति जपेज्जानुनी विभज्य भूमाविति ।

'अपसव्यं' अप्रदक्षिणं। अतो देवा अवन्तु नो यतोविष्णुर्विचक्रमे पृथिव्याः सप्तधामभिरित्ययं मन्त्रः अत्र प्रतीकेनोपदिष्टोग्राह्यः । अयमपि पूर्वोक्तवैष्णवयजुःशिरस्क एव प्रयोज्यः । 'जानुनी भूमौ विभज्येत्यत्र दक्षिणं जानु दैवे, सव्यन्तु पित्र्य इति विभागोऽनुसन्धेयः, न तु जानुद्वयमप्येकैकत्रेति ।

कौशिकसूत्रे ।

अङ्गुष्ठमुपयम्य प्रदक्षिणं दैवे अपसव्यं पितृभ्य इदं विष्णुरिति जपेज्जानु निपद्य भूमाविति ।

अङ्गुष्ठग्रहणे विशेषान्तरं धौम्येनोक्तं ।

परिवृत्य द्विजाङ्गुष्ठं द्विजस्थाने निवेशयेत् ।
राक्षसं तद्भवेदेव पितॄणां नोपतिष्ठते ॥

स्वभावस्थितेरन्यथाकरणं 'परिवर्त्तनं'। अतोद्विजहस्तं 'परिवृत्य' उत्तानीकृत्य, अङ्गुष्ठं न निवेशयेत् इत्युक्तं भवति। यजमानेनापि

नमो विश्वेभ्यो देवेभ्य इत्यन्नमादौ प्राङ्मुखयोर्निवेदयेत् पित्रे पितामहाय प्रपितामहाय च नामगोत्राभ्यामुदङ्मुखेषु ।

नमो विश्वेभ्यो देवेभ्य इत्यनेन शब्देन निवेदनवाक्यैकदेश एवायं निवेदनीयनिर्देशरहितत्वात्। 'प्राङ्मुखयोरिति वैश्वदेविकद्विजयोः। अनयोश्चापसव्येनाहवनीयस्थानीयतयोपदेशात् । त्यज्यमानहविरधिकरणभूतत्वेन सप्तम्याः प्रयोगः। 'आदाविति पित्र्यविप्रापेक्षया, अनेन पित्र्यविप्रेषु पश्चादिति लभ्यते। तत्रापि पित्रे पितामहायेत्यादिनाऽर्थात् प्रयोगवाक्यैकदेशोदर्शितः । एतच्चान्ननिवेदनं करगृहीततिलसहितोदकप्रक्षेपेण कार्य्यं । तथा पितृविप्रेषु स्वधाशब्दान्तेन वाक्येन। तथा च विष्णुधर्मोत्तरे ।

नमो विश्वेभ्य इति च सतिलेनोदकेन च।
प्राङ्मुखेषु च यद्दत्तं तदन्नमुपमन्त्रयेत् ॥
उदङ्मुखेषु यद्दत्तं नाम-गोत्रप्रकीर्त्तनैः।
मन्त्रयेत् प्रयतः प्राज्ञः स्वधान्तैः सुसमाहितः ॥

यदन्नं यत्परिविष्टं तन्नमो विश्वेभ्य इत्यादिना त्यागवाक्यात्मकेन 'मन्त्रयेत्' प्रकाशयेत्। पित्र्येषु तु यत्परिविष्टं तत्त्यागवाक्यावयवभूतैः स्वधाशब्दान्तैर्नामगोत्रप्रकीर्त्तनैर्मन्त्रयेत् ।

इह वैश्वदेविकेऽन्ननिवेदनवाक्यस्य स्वाहान्ततां, पित्र्ये च स्वधान्ततां, निवेदनीयनिर्देशकं शब्दञ्च, निवेदनकाले पात्रालम्भनञ्चाहात्रिः ।

हस्तेनामुक्तमन्नाद्यमिदमन्नमुदीरयेत् ।
स्वाहेति च ततः कुर्यात्स्वसत्ताविनिवर्त्तनं ॥

तथा ।

गोत्र-सम्बन्ध-नामानि इदमन्नं ततः स्वधा ।
पितृक्रमादुदीर्य्येति स्वसत्तां विनिवर्त्तयेत् ॥

'स्वसत्तां' स्वत्वस्य सद्भावं, 'विनिवर्त्तयेत्' मनःकरणकस्वत्वत्यागवाचकं नमेति प्रयुञ्जीतेत्यर्थः। 'अमुकमिति स्पृश्यमानं', हस्तेनेत्यत्र सव्येनेति वेदितव्यं। 'दक्षिणस्य त्यागार्थोदकधारणे व्याप्रियमाणत्वात्। 'अन्नाद्यमित्यन्नाद्यधारणार्थं पात्रं न तु साक्षादन्नं। अत एव चतुर्विंशतिमते "पात्रालम्भं द्विजः कुर्य्यादिदं वोऽन्नमितीरयन्निति।

अत्र दैवे पात्रालम्भे त्यागजलप्रक्षेपे च देवतीर्थसम्बन्धस्त्यागवाक्ये च ओँकारयोगः स्वधाशब्दान्ते नमःशब्दोऽप्युक्तो ब्रह्मपुराणे।

ततोमधु-घृताक्तन्तु सोष्णमन्नं तिलान्वितं ।
गृहीत्वा देवतीर्थेन प्रणवेनैव तत्पुनः ।
एतद्वोऽन्नमिति ह्युक्त्वा विश्वान् देवांश्च संजपेत्(१) ॥

परिविष्टमन्नं मधु-घृत-तिलान्वितं कृत्वा पात्रालम्भद्वारेण सव्यकरस्य देवतीर्थेन गृहीत्वा प्रणवपूर्वकं विश्वान् देवाननुकीर्त्त्य एतद्वोऽन्नमित्यन्ननिर्द्देशङ्कृत्वा विश्वान् देवान् संजपेत्। एतद्वोऽन्नमित्येतदिदमन्नमित्यनेन सह तुल्यार्थत्वाद्विकल्प्यते। एतद इति निर्द्देशादामन्त्रणविभक्त्या देवतानिर्द्देशोऽत्र विवक्षितः।

अतएवास्मिन्नेव पुराणे पित्र्यान्नत्यागवाक्ये स्पष्टमेवैतद्विभक्तिप्रयोगः प्रतिपादितः।

पितृभ्यश्च ततोदद्यादन्नमामन्त्रनेन तु ।
अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नम इति ॥

---

(१) संयजेदिति ख० ।

नचान्नदाने चतुर्थी स्यादित्यनेन विरोधोऽस्य शङ्कनीयः, आमन्त्र्य तुभ्यमित्यभिधानात्। अमुकामुकगोत्रेत्यस्यापि पित्रे पितामहायेत्यादिना सह तुल्यार्थत्वाद्विकल्प एव।

शाङ्खायनगृह्ये।

अन्नं चासावेतत्त इत्यनुदिश्य भोजयेत्।

कठसूत्रे।

पृथिवी ते पात्रमिति सङ्कल्पं कृत्वामुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति यथालिङ्गमनुमन्त्र्य भोजयेत्।

इत्यन्नसङ्कल्पः।

अथ पात्रालम्भादिप्रयोगः।

तत्र दैवधर्मयुक्तः कर्त्ता पूर्वं प्रथमोपवेशित-वैश्वदेविक-द्विजपात्र-स्थितमन्नं सप्रणवव्याहृतिपूर्विकया सावित्र्या प्रोक्ष्योत्तानाभ्यां कराभ्यां पात्रमालभमानः पृथिवी ते पात्रमित्यादिकं स्वाहान्तं मन्त्रमुक्त्वा अतो देवा अवन्तु न इत्येतामिदं विष्णुर्विचक्रम इत्येतां वा ऋचमुच्चार्य्यानुत्तानेन दक्षिणकरेणानुत्तानमेव द्विजाङ्गुष्ठं गृहीत्वा विष्णोहव्यं रक्षस्वेत्यनेन वैश्वदेवेन यजुषान्ने निवेशयेत्। ततो यव-कुशान्वितमुदकं गृहीत्वा वामेन करेण पात्रं स्पृशन् पुरूरव-आर्द्रवःसंज्ञका विश्वेदेवा देवता इदमन्नं हव्यं ब्राह्मणस्त्वाहवनीयार्थे गयेयम्भूः शङ्ख-चक्र-गदाधरो भोक्ता सौवर्णपात्रमित्यभिधाय पुरूरव-आर्द्रवःसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः सोपस्करं परिविष्टं परिवेक्ष्यमाणं च ब्राह्मणतृप्तिपर्याप्तमिदमन्नं स्वाहा नमो नम ॐतत्सदिति तदुदकं देवतीर्थेन भूमौ निक्षिपेत्। अनन्तरं क्रमेण द्वितीयादिषु वैश्वदेविकद्विजेषु एव-

मेव पात्रालम्भादिकमन्नत्यागान्तं कुर्यात् । तदनन्तरं पितृधर्मयुक्तः कर्त्ता स्वाहाशब्दस्थाने स्वधाशब्दं हव्यशब्दस्थाने कव्यशब्दं च प्रयुज्य प्रथमोपविष्टपितृद्विजपात्रे पूर्ववदङ्गुष्ठनिवेशनान्तं कृत्वा द्विगुणभग्नकुशत्रयसहितं सतिलं जलं दक्षिणकरे गृहीत्वा सव्यकरेण पात्रमालभमानः अमुकगोत्रास्मत्पितरोऽमुकशर्म्माणः सपत्नीका वसुरूपा देवता इत्यभिधाय गदाधरोभोक्ता इत्यन्तं पूर्ववदनुकीर्त्त्य राजतं पात्रमिति चोक्त्वा गोत्रेभ्योऽमुकशर्म्मभ्यः सपत्नीकेभ्यो वसुरूपेभ्य इत्यभिधाय सोपस्करं परिविष्टं परिवेक्ष्यमाणं च ब्राह्मणतृप्तिपर्याप्तमिदमन्नं स्वधा नमो नम ओँतत्सदित्युच्चार्य्य तदुदकं पितृतीर्थेन भूमौ निक्षिपेत् । एवं क्रमेण पैतृकद्विजेषु त्यागं कृत्वा पितामहनाम्ना रुद्ररूपानुकीर्त्तनेन च पैतामहद्विजेषु प्रपितामहनाम्ना आदित्यरूपानुकीर्त्तनेन च प्रपितामहेषु द्विजेष्वपि कृत्वा स्वीयस्वीयनाम्ना वस्वादिरूपानुकीर्त्तनेन च मातामहद्विजेषु कुर्यादिति ।

इति पात्रालम्भादिप्रयोगः ।

अथ सावित्रीजपादि ।

तत्र पारस्करः ।

सङ्कल्प्य पितृदेवेभ्यः सावित्री-मधुमज्जपः ।
श्राद्धं निवेद्यापोशानं जुषप्रैषोऽथ भोजनं ॥

देवेभ्यः पितृभ्यस्त्वान्नं 'सङ्कल्प्य' यथोक्तविधिना त्यक्त्वा, 'सावित्रीं सवितृदेवत्यां गायत्रीं, मधुमतीश्च जप्त्वा श्राद्धं च निवेद्य दर्शयिष्यमाणेन प्रकारेण श्राद्धस्याच्छिद्रवाचनं कृत्वापोशानजलं च द्विजकरे दत्त्वा जुषध्वमिति प्रैषेण भोजयेत् ।

अन्नस्य मधुसम्पर्ककरणे मधुमतीभिरनुमन्त्रणे च लिङ्गदर्शनं ब्रह्मपुराणे

तिलपूतं पितृध्वनमाज्यपूतं मधूचितं।
मन्त्रितं पृथिवीत्येवं मधुवातेत्यृचं जगौ ॥

जगौ वराहः।

एतत् मधुसेचनादिकमच्छिद्रवाचनप्रकारञ्चाह यमः।

अन्नं मधुमयं कृत्वा मधुवातेति मन्त्रितं।
अन्नहीनं क्रियाहीनं मन्त्रहीनञ्च यद्भवेत्।
सर्वमच्छिद्रमित्युक्ता ततो यत्नेन भोजयेत् ॥

अच्छिद्रमित्यस्यानन्तरं जायतामिति प्रयोक्तव्यं। बौधायनेनाच्छिद्रं जायतामिति प्रयोगस्य दर्शितत्वात्। अत्र जायतां सर्वमच्छिद्रमिति विप्रैर्वक्तव्यं। अभ्यर्थनस्यैतद्वाक्यप्रत्ययर्थत्वात्। एतच्चापोशानदानात् पूर्वमेव कर्त्तव्यं। पश्चात्करणे हि प्रचेतसा दोषस्योक्तत्वात्।

आपोशानकराग्राणामच्छिद्रस्य तु भाषणात्।
निराशाः पितरोयान्ति देवैः सह न संशयः ॥

अथ याज्ञवल्क्यः सावित्रीजपस्य व्याहृतिपूर्वकत्वमाह।

सव्याहृतिकां गायत्रीं मधुवाता इति त्यृचं।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥

यथासुखञ्जुषध्वमिति वाच्यमित्यर्थः।

मानव-मैत्रायणीयसूत्रे तु प्रणवपूर्वकत्वं व्याहृतिस्वरूपं गायत्र्यास्त्रिरभ्यास इत्यादयोविशेषाः प्रदर्शिताः। ॐभूर्भुवः स्वस्तत्सवितुरिति त्रिरुक्ता मधुवाता ऋतायत इति त्यृचं मध्विति त्रिरुक्ता प्रीयन्तां

पितरः पितामहाः प्रपितामहा वाग्यतः सन्निष्ठतमान्यन्नानि दद्यात्।

प्रचेतास्त्वपोशानदानानन्तरं सावित्रीजपमाह।

अपोशानं प्रदायाथ सावित्रीं त्रिर्जपेदथ।
मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा॥

कात्यायनोऽप्यपोशानदानानन्तरमेव त्रिः सकृद्वा गायत्रीजपमाह।

अपोशानं प्रदायाथ जपेद्व्याहृतिपूर्विकां।
गायत्रीं त्रिः सकृद्वेति।

अतश्च गायत्रीजपादिकं स्वगृह्यसूत्राद्यनुसारेणापोशानदानात्पूर्वं पश्चाद्वा कर्त्तव्यं।

ब्रह्मपुराणे त्वपोशानदानात्पूर्वं तिलादिविकिरणमप्युक्तं।

तिलयुक्तञ्च पानीयं सकुशान्तेषु वाग्यतः।
विकिरेत् पितृभ्यस्तेभ्यो जपन्नपहता इति।
तेभ्योदद्यादपोशानं भवन्तः प्राशयन्त्विति॥

अपोशाने च क्रियमाणे भुवि बलिप्रक्षेपो न कार्य्यः।

तथा च भरद्वाजः।

पितृणामन्नमादाय बलिं यस्तु प्रयच्छति।
स्तेयेन ब्राह्मणस्तेन स सर्वस्तेयकृद्भवेत्॥

'पितृणामन्नं' देव-पित्रर्थमुपकल्पितमन्नं। अतस्त्यागात् पूर्वमपि चित्रगुप्तादिभ्यो बलिर्न देयः।

अत एवात्रिः।

दत्ते वाप्यथवादत्ते भूमौ योनिक्षिपेद्बलिं।
भोजनात् किञ्चिदन्नाग्रं धर्मराजाय वै बलिं।

दत्त्वाथ चित्रगुप्ताय विप्रश्चौर्यमवाप्नुयात् ॥

अत्र भोजनप्रैषे विशेषो वाराह-विष्णुपुराणयोः।

तान्नं सृष्टमत्यर्थमभीष्टमतिसंस्कृतं।

दत्त्वा जुषध्वमिच्छातो वाच्यमेतदनिष्ठुरं ॥

मार्कण्डेयपुराणे तु।

भाजनालम्भनं कृत्वा दत्त्वा चान्नं यथाविधि।

यथासुखं जुषध्वं भोरिति वाच्यमनिष्ठुरम् ॥

अत्र च "यज्ञेश्वरोहव्यसमस्तकव्य-भोक्ताव्ययात्माहरिरीश्वरोऽत्र। तत्सन्निधानादपयान्तु सद्योरक्षांस्यशेषाण्यसुराश्च सर्वे" इत्युच्चार्य "पितृस्वरूपी भगवान् यज्ञपुरुषः प्रीयतां" इति चाभिधाय कुश-तिलयुक्तं जलं दक्षिणकरेण ब्राह्मणसमीपे भूमावासिच्य द्विजान्नमःकुर्यादिति शिष्टाचारादवगन्तव्यं।

आह व्यासः।

जुषध्वमिति ते चोक्ताः सम्यग्विधृतभाजनाः।

कृतमौनाः समश्नीयुरपोशानादनन्तरं ॥

अत्रानिषिद्धं नित्यभोजनविधिप्राप्तं प्राणाहुतिग्रहणमपि कर्तव्यमेव। अथ यजमानः "पिता-पितामहस्येत्यादीनां जपप्रकरणे प्रदर्शितानां मन्त्राणां जपं कुर्यात्।

आह कात्यायनः।

अश्नत्सु जपेत् व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत् त्रिर्वा रक्षोघ्नान् पितृमन्त्रान् पुरुषसूक्तमप्रतिरथमन्यानि च पवित्राणीति।

एतच्च जपप्रकरण एव व्याख्यातप्रायं।

वाराह-विष्णुपुराणयोः ।

रक्षोघ्नमन्त्रांश्च जपेत्[१] भूमेरास्तरणं तिलैः ।

कृत्वा ध्येयाः स्वपितरस्तएव द्विजसत्तमाः ॥

मार्कण्डेयपुराणे ।

अक्रुद्धश्च नरोदद्यात् संस्तवेन प्रलोभयन् ।

रक्षोघ्नांश्च जपेन्मन्त्रान् तिलैश्च विकिरेन्महीं ॥

अथ यजमानो ब्राह्मणान् भोजयेत् भक्ष्यभोज्यादीनि नाप्रयच्छन् न प्रेक्षेत। मुहुर्मुहुः प्रयच्छन् याचितं प्रयच्छन्नाप्रयच्छन् विविधान्न-गुणकीर्त्तनेन प्ररोचयन् ददामीत्यवदत् शनैरदीर्घ्यं किञ्चित् किञ्चिद्द-र्शयन् हविर्गुणान् पृच्छन् अन्तरान्तरास्वादु शिशिरस्वच्छं पयः पाय-यन् भुञ्जानानवलोकयन् श्रद्दधानः पितॄन् ध्यायन् काम-क्रोध-लोभ-मोह-दम्भाहङ्कार-मत्सर-परुषभाषण-दैन्याश्रुपातादीन् अकुर्वन् अनन्यमनाः शनैः शनैः भोजयेदित्येवमादयो भोजयितृनियमास्तत्प्रक-रणोक्ता अनुसन्धेयाः। भुञ्जानैश्च ब्राह्मणैर्मौनिभिरितस्ततोऽनवलोकय-द्भिर्भोजनव्यापारव्यतिरिक्तमिन्द्रियचापल्यमकुर्वद्भिः क्रोध-हास-त्रास-विस्मयविधुरैः पादेन पादपादुकासनाद्यनाक्रमद्भिः अकृतजानुनिपातनैः परस्परमस्पृशद्भिः प्रमादात् स्पर्शे भोजनमत्यजद्भिर्हस्तसङ्केतेनापि हवि-र्गुणानकथयद्भिः पानीयपात्रादिव्यतिरेकेण भूतलात् पात्रमनुद्धर-द्भिरविमुक्तभाजनैः अवहिःकक्षैरवहिर्जानु-करैरवहिष्कृताङ्गुष्ठतर्जनी-ग्रासग्राहिभिरकृतफूत्कृतादिशब्दैरपीतावशिष्टपायिभिरखादितार्द्धशिष्ट-खादिभिर्मुखादिगलितदन्तच्छिन्नावशेषञ्च पात्रेऽनमस्थापयद्भिर्मुख-

(१) पठेदिति ख॰ ।

मारुतेनोष्णमकुर्वद्भिरनिष्ठीवद्भिर्वामहस्तेनान्न-शिरस्त्वरण-वस्तीन् पादेन भोजनभाजनञ्चास्पृशद्भिरनतिमात्रभोजिभिर्दधि-मधु-दुग्ध-सक्तु-सर्पि-र्वर्जमसर्वाशिभिर्भोक्तव्यमित्येवमादयोभोक्तृनियमास्तत्प्रकरणोक्ता वेदितव्याः।

इति सावित्रीजपादि।

अथ विकिरादि।

तत्र तावत्क्रम-विधौ।

आह धर्मः।

केषाञ्चिद्विकिरः पूर्वं तृप्तिप्रश्नस्तथापरः।
प्रश्नपूर्वमथान्येषां विकिरस्तदनन्तरं॥
अमृतापिधानात्पूर्वञ्च केषाञ्चिद्विकिरो मतः।
अन्येषान्तु ततः पश्चाद्विदुषामिति सम्मतं।
गायत्र्यादिजपात्पूर्वं केषाञ्चित्तदनन्तरं॥

अमृतापिधानात्तृप्त्यादिप्रश्नात् गायत्र्यादिजपात् पूर्वं विकिर इत्येतं पक्षमाश्रित्याह कात्यायनः।

तृप्तान् ज्ञात्वान्नं प्रकीर्य्य सकृत्सकृदपोदत्त्वा पूर्वं गायत्रीं जप्त्वा मधुमतीर्मधुमध्विति च तृप्ताः स्थेति पृच्छति तृप्ताः स्मेत्यनुज्ञातः शेष-मन्नमनुज्ञाप्येति तृप्तान् ब्राह्मणाननुमानेन विज्ञाय प्रकृतसर्वजातीयम-न्नमेकस्मिन् पात्रे गृहीत्वा वक्ष्यमाणसंस्कारयुक्तायां भुवि प्रकीर्य्य विरलं प्रक्षिप्य पात्रमौनोभयविमोचनार्थं अमृतापिधानमसीत्येतन्मन्त्रेण प्राश्य सकृत्सकृदपः प्रदाय त्रिः सकृद्वा गायत्रीं मधुवातेत्यादिऋक्त्रयञ्च जप्त्वा मधुशब्दञ्च त्रिरुक्त्वा तृप्ताः स्थेतिविप्रान् यजमानः पृच्छेत्।

अत्र तृप्तिसंवेदनस्य दृष्टप्रयोजनानुपलम्भात् सर्वत्र प्रश्नेषु पङ्क्तिमूर्द्धन्य एव प्रष्टव्यः न पुनः सर्व एव प्रष्टव्या इत्येवंविधिनियमः। न चातृप्तत्वेन विज्ञातेभ्यः पुनरन्नन्दीयत इति तृप्तिसंवेदनस्य प्रयोजनं वाच्यं। तृप्तान् ज्ञात्वैव पात्रविमोचनार्थगण्डूषस्य दत्तत्वात्। विकल्पे चैकस्मिन्नपि बहुवचनं पूजार्थं।

अत्रोच्यते।

सत्यप्यदृष्टार्थत्वे बहुवचनोपदेशात्सर्वे प्रष्टव्याः यस्तु विकल्पः सोऽन्यविषयोऽस्तु। तैश्च तृप्ताः स्म इत्युक्ते शेषमन्नं किं क्रियतां इति अन्नशेषविनियोगानुज्ञाभ्यर्थने कृते विप्रैः श्रेष्ठैः सह भुज्यतां अस्मभ्यन्दीयतामिति चोक्ते सति पिण्डान् दद्यादित्युत्तरेण सम्बन्धः। अत्र ब्राह्मणा यद्विधिविनियोगमभ्यनुजानीयुस्तद्विधं कुर्य्यात्।

तथा च यमः।

ततोभुक्तवतां तेषां अन्नशेषं निवेदयेत्।
यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः॥

बृहस्पतिरपि।

पृच्छेद्विप्रांस्ततस्ते तु यत् ब्रूयुस्तत्समाचरेदिति।

नागरखण्डे।

तृप्तान् ज्ञात्वा ततोविप्रानग्रे अन्नं परिक्षिपेत्।

अग्निदग्धाश्च य इत्यादि।

सकृत्सकृदपोदत्त्वा गायत्रीत्रितयं जपेत्।
मधुवातेति सङ्कीर्त्त्य ततः पृच्छेत् द्विजोत्तमान्॥
तृप्ता स्थ इति राजेन्द्र अनुज्ञां प्रार्थयेत्ततः।

बन्धूनां भोजनार्थाय शेषस्यान्नस्य भक्तिमान् ।

गोभिलोऽप्याह ।

तृप्तान् ज्ञात्वा अन्नं प्रकीर्य्य अग्निदग्धा इत्यादि सकृत्सकृदपो दत्त्वा पुनरपि मधुवातेति जपेत् । मधुवातेत्येतत्कात्यायनाद्युक्तस्य गायत्र्यादिजपस्योपलक्षकं ।

कौशिकसूत्रेऽपि ।

तृप्तान् ज्ञात्वान्नं प्रकीर्य्य दत्त्वा चापः सकृत्सकृदिति ।

वाराहपुराणे ।

तृप्तेषु तेषु विप्रेषु किरेदन्नं महीतले ।
दद्यादाचमनार्थाय तेभ्योवारि सकृत्सकृत् ॥

कूर्मपुराणेऽपि ।

ततोन्नमुत्सृजेद्भुक्तेष्वग्रतोविकिरन् भुवि ।

विकिरन्नित्यनेन पिण्डीभूतस्य निक्षेपोनिवर्त्त्यते ।

अत्र गायत्र्यादिजपस्ततस्तृप्तिप्रश्नस्तदनन्तरङ्गण्डूषदानमित्येवं कात्यायनाद्युक्तक्रमविपरीतं क्रममाश्रित्याह याज्ञवल्क्यः ।

आतृप्तेस्तु पवित्राणि जप्त्वा पूर्व्वजपं तथा ।
अन्नमादाय तृप्ताः स्थ शेषञ्चैवानुमन्य च ।
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ।

'पूर्व्वजपं' सव्याहृतीकां गायत्रीमित्यादिना प्रतिपादितं । अत्र गायत्री-मधुमत्यादेरुच्चारणं यथा ब्राह्मणाः शृण्वन्ति तथा कार्य्यं । तथा च शङ्ख-लिखितौ ।

गायत्रीमनुश्राव्य तृप्तान् ज्ञात्वा शेषमन्नमनुज्ञाप्य प्रकृतान्न विकिरं

कुर्य्यात् । तृप्तान् ज्ञात्वा गायत्रीमनुश्राव्येत्यन्वयः । अस्यानन्तरं मधुमतीश्रावणं कर्त्तव्यं ।

तथा च शौनकः ।

तृप्तान् ज्ञात्वा मधुमतीः श्रावयेत् ।

मार्कण्डेयपुराणे ।

पृष्टैस्तृप्तैश्च तृप्ताः स्थ तृप्ताः स्म इति वादिभिः ।
अनुज्ञातो नरस्त्वन्नं विकिरेद्भुवि सर्वतः ।
तद्वत्त्वाचमनार्थाय दद्यादम्भः सकृत् सकृत् ॥

व्यासः ।

तृप्ताः स्थ इति पृष्टास्ते ब्रूयुस्तृप्ताः स्म इत्यथ ।

ब्रह्मपुराणे ।

भुक्तवत्सु च विप्रेषु पृष्ट्वा तृप्ताः स्थ इत्यपः ।
तृप्ताः स्मेति सकृद्देवो ददौ मौनविमोचनं ॥

मौनविमोचनार्थाय गण्डूषार्थमपो ददौ, यज्ञवराह इत्यर्थः ।

मानवमैत्रायणीयसूत्रे ।

तृप्ताः स्थ इति पृच्छति तृप्ताः स्म इत्युक्तः सकृदाचान्तेषु भूमौ विकिरं निनयेत् ।

सौरपुराणे ।

विकिरं प्रक्षिपेत्पश्चात् शेषमन्नमथोवरेत् ।

ब्रह्मपुराणे तु पूर्व्वं गण्डूषोदकदानं ततः प्रश्नोत्तराणि ततो विकिरं इत्येतत्क्रममाश्रित्योक्तं ।

दत्त्वामृतापिधानञ्च विप्रेभ्यश्च सकृत् सकृत् ।

किञ्चित्सम्पन्नमेतन्मे भो विप्रा इति तान् वदेत् ॥
ते च प्राहुः सुसम्पन्नं स च तान् पुनराह च ।
अन्नैर्भवन्तस्तृप्ताः स्थ तृप्ताः स्मेति वदन्ति ते ॥
स तानाह पुनः शेषं क देयञ्चान्नमित्यपि ।
शिष्टेभ्योदीयताञ्चैव तदिदं प्रवदन्ति ते ॥
अथ तृप्तांस्तु तान् ज्ञात्वा भूमावेवान्नमुत्सृजेत् ॥

बौधायनसूत्रे ।

तृप्तानप आचमय्यानुज्ञाप्यान्नशेषं संप्रकिरन्ति ये अग्निदग्धा इति ।

इति क्रमविधिः ।

अथ प्रश्नोत्तरप्रपञ्चः ।

तत्राह प्रचेताः ।

तृप्ताः स्थ तृप्ताः स्मः प्रभूतं प्रभूतमित्युक्तवन्त इति ।

अत्रैकः प्रभूतशब्दः प्रश्नः, द्वितीयस्तूत्तरं ।

विष्ण्वाश्वलायनौ प्रश्नान्तरमाहतुः ।

सम्पन्नं पृष्ट्वान्नं विकीर्य्येति ।

अत्र चार्थादुत्तरमप्येवं विधक्ष्यते ।

विष्णुधर्म्मोत्तरे त्वेतयोः प्रश्नोत्तरयोः पूर्व्वोक्ताभ्यां प्रश्नोत्तराभ्यां सह समुच्चितयोः प्रयोगो जानुपातनञ्च दर्शितं ।

प्रष्टव्या ब्राह्मणा भक्त्या भूनिविष्टेन जानुना ।
तृप्ता भवन्तः सम्पन्नं भवतां कच्चिदेव तु ॥
तृप्ताः स्मेति च तैरुक्ते सम्पन्नमिति चाप्यथ ।
दद्यादाचमनं भक्त्या श्रद्दधानः समाहितः ॥

कूर्मपुराणे ।

पृष्ट्वा तदन्नमस्यैवं तृप्तानाचामयेत्ततः ।
आचान्ताननुजानीयादभितोरम्यतामिति ॥

अत्रार्थादभिरताः स्म इत्युत्तरं गम्यते ।

इह श्राद्धविशेषे प्रश्नोत्तरविशेष उच्यते ।

तत्र मैत्रायणीयसूत्रे ।

विकिरं प्रदाय तृप्तान् स्वदितमिति पृच्छेत् सम्पन्नमित्याभ्युदयिक इति ।

हारीतः ।

तृप्तान् स्वदितमिति पृच्छेत् स्वदितमिति प्रत्याहुः । सृतमिति दैवेष्वायुष्यमिति स्वैरिष्ट्वाचान्तेषु भूमौ विकिरं निनयेत् ।

आह विष्णुः ।

पित्र्ये स्वदितमित्येवं वाच्यं गोष्ठेषु सुश्रुतं ।
सम्पन्नमित्यभ्युदये दैवे रोचत इत्यपि ॥

इति प्रश्नोत्तरप्रपञ्चः ।

अथाचमनदानग्रहणप्रकारः ।

तत्राह विष्णुः ।

उदङ्मुखेष्वाचमनमादौ दद्यात् ततः प्राङ्मुखेष्विति ।

अन्नलिप्तं हस्तमप्रक्षाल्यैव गण्डूषग्रहणं कर्त्तव्यं । अस्यान्यथाकरणे तु दोषमाह मरीचिः ।

हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
आसुरन्तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥

भविष्यत्पुराणे ।

हस्तौ प्रक्षाल्य गण्डूषं यः पिवेदविचक्षणः।
स तु दैवञ्च पित्र्यञ्च आत्मानञ्चोपघातयेत्॥

वराहपुराणे।

हस्तं प्रक्षाल्य यः पश्चात् पिवेद्भुक्त्वा द्विजः सदा।
तदन्नमसुरैर्भुक्तं निराशाः पितरोगताः॥

इत्याचमनदानग्रहणप्रकारः।

अथ विकिरेतिकर्त्तव्यता।

तत्र ब्रह्माण्डपुराणे।

ततोविकिरणं कुर्य्याद्विधिदृष्टेन कर्मणा।

'विधौ' शास्त्रे, 'दृष्टेन' उपलक्ष्येन, 'कर्मणा' इतिकर्त्तव्यतारूपेण।

तत्र विकिरप्रदेश-तत्संस्कार-विकरणीयान्नस्वरूपसंस्काराः।

तत्र पाद्म-मात्स्ययोः।

तृप्तान् ज्ञात्वा ततः कुर्य्याद्विकिरं सार्व्ववर्णिकं।
सोदकं चान्नमुद्धृत्य सतिलं प्रक्षिपेत् भुवि॥

देवलः।

ततः सर्व्वान्नं पात्रे गृहीत्वा विविधं बुधः।
तेषामुच्छेषणस्थाने तेन पात्रेण निक्षिपेत्॥

'तेषां' ब्राह्मणानां, 'उच्छेषणस्थाने' भोजनभाजनसमीपे।

तथा च मनुस्मृति-मार्कण्डेयपुराणयोः।

भुक्तवत्सु ततस्तेषु भाजनोपान्तिके नृप॥
सार्व्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा।
समुत्सृजेद्भुक्तवतामग्रतोविकिरन् भुवि॥

'सार्ववर्णिकं' प्रकृतश्राद्धार्थसम्पादितपायसौदनापूप-सूप-शाका-दिनानाजातीयं। अनेन विकरणीयान्नस्वरूपमुक्तं। 'सन्नीय' पाक-भाजनेभ्यः स्तोकं स्तोकं समुद्धृत्यैकस्मिन् दर्व्यादिरूपे पात्रे संहृत्य, "यद्यन्निवेदितं किञ्चित् पितृभ्यस्त्वाथ तत्र च। तस्मात् तस्माच्च भागन्तु गृहीत्वा चमसे शुभे॥" इति ब्रह्मपुराणाभिधानात्। 'चमस इति प्रशस्तपात्रोपलक्षणं। तिल-दर्भयुक्तेन वारिणा 'आस्राव्य' प्रोक्ष्य। अनेन विकरणीयान्नसंस्कारोदर्शितः। 'भाजनोपान्तिकद्-त्यत्र पित्र्यविप्रभाजनोपान्तिक इति ज्ञेयं।

अत एव विष्णुधर्मोत्तरे।

भुक्तवत्स्वथ विप्रेषु विधिं मे गदतः शृणु।
उदङ्मुखानां विप्राणां पुरतः सोदकन्ततः॥
अन्नन्तु विकिरेद्भूम्या पितृभागस्तु स स्मृतः।
उदङ्मुखानां विप्राणां पुरतः सोदकं ततः॥

उदङ्मुखानां विप्रानां सोदकं पूर्वमाख्यातेनार्थेन प्रक्षेपाधिकर-णभूतभूमौ प्रोक्षणार्थेन जलेन सहितं। एतदुक्तं भवति "तिल-दर्भ-सहितेनोदकेन भूमिं प्रोक्ष्य तथाविधेनैव च तेनान्नं परिस्राव्य तस्यां भूमौ तदन्नं विकिरेत्" इति। पितृणां प्रमीतानां सपिण्डादीनां भागः तृप्तिहेतुः। येषां येषामयं भागस्ते तु देवताप्रकरणे दर्शिताः। दर्श-यिष्यमाणमन्त्रलिङ्गैश्च प्रत्येतव्याः। भूमिप्रोक्षणञ्च स्पष्टमेवोक्तं वायु-पुराण-ब्रह्माण्डपुराणयोः। "प्रोक्ष्य भूमिमथोद्धृत्य पूर्वं पितृपरायणः"। तस्याञ्च भुवि तिल-सहितदर्भास्तरणमुक्तं ब्रह्मपुराणे।

उच्छिष्टे सतिलान्दर्भान् दक्षिणाग्रान्निधापयेत्।

'उच्छिष्ट इत्युच्छिष्टसन्निधौ ।

विष्णुधर्म्मोत्तरे त्वन्नसंस्कारविशेष उक्तः ।

अन्नं सतृणमभ्युक्ष्य मामेचेश्वेति मन्त्रतः ।

'सतृणम्' उपरिनिहितदर्भं, तत् मामेचेश्वेति मन्त्रेणाभ्युक्ष्य ।

मन्त्रस्तु ।

मामेचेश्व बहु मे पूर्त्तमस्तु ब्राह्मणो मे जुषतामचान्नं सहस्रधारममृतोदकं मे पुरतस्त्वेतत्परमे व्योमन्निति ।

कठसूत्रेऽपि ।

मामेचेश्वेति सतृणमन्नमभ्युक्ष्येति ।

विष्णुः ।

भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मामेचेश्वेत्यन्नं सतृणमभ्युक्ष्यान्नविकिरणमुच्छिष्टाग्रतः कुर्य्यात् ।

इति विकिरप्रदेश-तत्संस्कार-विकरणीयान्नस्वरूपसंस्काराः ।

अथ विकिरमन्त्राः ।

तत्रादौ वैश्वदेविकस्य विकिरस्य ।

आह गोभिलः ।

असोमपाश्च ये देवा यज्ञभागविवर्ज्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविके ॥

एतन्मन्त्रप्रदेयस्तु विकिरः लिङ्गाद्वैश्वदेविकसम्बन्धीति गम्यते । अतश्चायं तत्रत्यवैशेषिकधर्मयुक्तस्तदर्थद्विजोच्छिष्टभाजनसमीपे च प्रदेयः । दैवत्वात्पित्र्यविकिरात् पूर्वमनुष्ठेयः । अयञ्च बहुभिः शिष्टैर्नानुष्ठीयतइति केश्चिदेव स्वाचारानुसारात्कार्य्यः ।

अथ पित्र्यस्य विकिरमन्त्राः ।

कठसूत्रे ।

अग्निदग्धाश्च ये जीवा इत्यन्नं विकिरेत् भुवि ।

आह प्रचेताः ।

तृप्तिं बुद्धान्नमादाय सतिलं पूर्ववज्जपेत् ।
तृप्तिं पृच्छेदनुज्ञातोये अग्नीति भुवि क्षिपेत् ॥

पिप्पलादसूत्रे ।

तृप्तान् ज्ञात्वा ये अग्निदग्धा इति विकिरं कुर्य्यात् ।

बृहस्पतिः ।

उपस्पृष्टोदकानाञ्च ब्राह्मणानां तथाग्रतः ।
सोदकं विकिरेदन्नं मन्त्रञ्चेममुदाहरेत् ॥
अनग्निदग्धा ये जीवा येऽग्निदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिं ॥

कात्यायनः ।

येऽग्निदग्धा येऽनग्निदग्धा जीवा जाताः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिं ॥

गोभिलः ।

अग्निदग्धा जीवा येऽप्यनग्निदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिं ॥

पाद्म-मात्स्ययोः ।

समुत्सृजेद्भुक्तवतामग्रतोविकिरन् भुवि ।
अनग्निदग्धास्तु ये जीवा येऽप्यदग्धाः कुले मम ।

भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिं ॥
येषां न माता न पिता न बन्धु-
र्न चान्नसिद्धिर्न तथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्
प्रयान्तु लोकाय सुखाय ते तु ॥

ब्रह्मपुराणे ।

येऽस्मत्कुले तु पितरोलुप्तपिण्डोदकक्रियाः ।
ये चाप्यकृतचूड़ास्तु ये च गर्भाद्विनिःसृताः ॥
येषां दाहोन क्रियते अग्निदग्धाश्च येऽपरे ।
भूमौ दत्तेन तृप्यन्तु तेपि यान्तु पराङ्गतिं ॥
इति पित्र्यविकिरणमन्त्राः ।

विकिरप्रक्षेपानन्तरं करणीयमुक्तं ब्रह्मपुराणे ।

ततः प्रक्षाल्य हस्तौ च त्रिराचम्य हरिं स्मरेत् ।
प्रेतभागं विसृज्याथ प्रायश्चित्तोपशान्तये ॥
सव्याहृतिं सप्रणवां गायत्रीञ्च पठेत्तथा[१] ।
पठेन्मधुमतीः पुण्यास्तथा च मधुमध्विति ॥

अत्र वक्ष्यमाणानेकपदार्थव्यवहितप्रयोगापि विकिरप्रतिपत्ति-र्विकिरसम्बन्धादत्रैव प्रतिपाद्यते ।

तत्र तावत् प्रतिपत्तिकालमाह गौतमः ।

विकिरमुच्छिष्टैः प्रतिपादयेत् ॥

---

(१) जपेत्तथेति खं।

'उच्छिष्टैरिति सहार्थे तृतीया। तेनायमर्थः सम्पद्यते। यदोच्छिष्टानि पात्रदेशात् समादाय कस्मिंश्चित् प्रदेशे निक्षिप्यन्ते तदा विकिरस्यापि यथोपदेशं प्रतिपत्तिं कुर्य्यात्।

अन्यथा तु तत्करणे दोषमाह व्यासः।

उच्छिष्टैरेव विकिरं सदैव प्रतिपादयेत्।
अन्यथा कुरुते यस्तु निराशास्तस्य देवताः॥

प्रतिपत्तिविशेषन्त्वाह भार्गवः।

पिण्डवत् प्रतिपत्तिः स्याद्विकिरस्येति तौल्वलिरिति।

पिण्डवदिति। यादृशी पिण्डानां प्रतिपत्तिः क्रियते तादृशी विकिरस्यापि कर्त्तव्येति तौल्वलिर्नाम मुनिरुक्तवान्। अतश्च "पिण्डांस्तु गोऽज-विप्रेभ्यो दद्यादग्नौ जलेऽपि वा" इत्याद्युक्ता पिण्डप्रतिपत्तिर्विकिरस्यापि कर्त्तव्या।

षट्त्रिंशन्मते।

यदुक्तं पिण्डदानस्य तत्कर्म विकिरस्य च।
क्षिपेत् पिण्डान् जलेऽग्नौ तु विकिरं तत्र निक्षिपेत्॥

अत्र केचिन्मन्यन्ते। वैकल्पिकं विकिरप्रक्षेपाय स्थानद्वयं। तत्रैकमुच्छिष्टसन्निधौ स्थानमपरं पिण्डसन्निधौ। तत्र यदोच्छिष्टसन्निधौ विकिरो दीयते तदोच्छिष्टप्रतिपत्तिकाल एव तत्प्रतिपत्तिसदृशी विकिरस्यापि प्रतिपत्तिः कर्त्तव्या। यदा तु पिण्डसन्निधौ विकिरः क्रियते तदा तत्प्रतिपत्तिकाले तद्वत्कर्त्तव्येति। ते च पिण्डसन्निधानेऽपि विकिरः कर्त्तव्य इत्यत्र कालिकापुराणोक्तं वचनं दर्शयन्ति।

पूर्ववद्दापयेत्पूज्य पिण्डानर्घं पृथक् पृथक्।

अग्निदग्धानग्निदग्धान् वै पश्चाद्दत्तं विकीरयेत् ॥

अत्र पिण्डपूजानन्तरं विकिरविधानाद्देशविशेषानुपादानाच्च देशाकाङ्क्षायां पिण्डसन्निधाविति गम्यते ।

धूम्रः ।

कपित्थस्य प्रमाणेन पिण्डान् दद्यात् समाहितः ।
तत्समं विकिरन्दद्यात् पिण्डान्तेषु षडङ्गुले ॥

इति विकिरप्रतिपत्तिः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपतिपण्डितश्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे विकिरादिविधिर्नाम चतुर्दशोऽध्यायः समाप्तः ॥ ० ॥

# अथ पञ्चदशोऽध्यायः ।



क्षीरोदन्वदकूललहरीवृन्दसन्देहभूमिः

स्वर्लोकस्त्रीकुचपरिसरामुक्तमुक्ताक्ष्यस्या ।

यस्य प्रोच्चैर्विहरति सदा कीर्त्तिवल्ली स एषः

श्रीहेमाद्रिः कथयति पुरः पिण्डदानप्रकारं ॥

## अथ पिण्डदानं ।

### तत्र कालाः ।

इह तावत्केचित् ब्राह्मणभोजनात् पूर्वमेव पिण्डनिर्वपणं कुर्वन्ति केचिदुपरिष्टात् ।

तदाह मनुः ।

पिण्डनिर्वपणं केचित् पुरस्तादेव कुर्वत इति ।

केचिद्ग्रहणात् केचित्पुरस्तात् केचिदुपरिष्टादिति द्वैधं गम्यते।

तथा च सांख्यायनगृह्यं ।

भुक्तवत्सु पिण्डान् दद्यात् पुरस्तादेक इति।

शङ्खोऽपि ।

उच्छिष्टसन्निधौ कार्य्यं पिण्डनिर्वपणं बुधैः ।

आदौ वापि ततः कुर्य्यादग्निकार्य्यं यथाविधीति ॥

केचित्तु ब्राह्मणभोजने वर्त्तमान एव कुर्वन्ति ।

तथाचादत्सु ब्राह्मणेष्वित्यनुवृत्तौ विष्णुः ।

उच्छिष्टसन्निधौ दक्षिणाग्रेषु पृथिवीदर्विरचितेत्येकं पिण्डं पित्रे निदध्यादित्यादि ।

तत्र ये पूर्वं कुर्वन्ति तेऽपि केचित् ब्राह्मणार्चनानन्तरमग्नौकरणात् पूर्वमेव कुर्वन्ति केचित्त्वग्नौकरणानन्तरं ।

तत्रार्चनानन्तरमाह देवलः ।

अथ सङ्गृह्य कलशं सदर्भं पूर्णमम्भसा ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेत् ॥ इत्यादि ।

यथोक्ते शङ्खवचने चैव एव पिण्डदानकालो दृश्यते ।

मनुस्तु भोजनात् पूर्वकालीनस्य पिण्डदानस्याग्नौकरणानन्तरं कर्त्तव्यतामाह ।

अपसव्यमग्नौ कृत्वा सर्वमावृत्यपरिस्रुतं(१) ।
अपसव्येन हस्तेन निर्वपेदुदकं शुचि ।
त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहित इति ॥

तस्माद्धविःशेषादित्यग्नौकरणहविःशेषात् । शेषं पूर्वमेव व्याख्यातं । ये तूपरिष्टात्कुर्वन्ति तेऽपि केचित् ब्राह्मणेष्वनाचान्तेषु कुर्वन्ति, केचिदाचान्तेषु कुर्व्वन्ति ।

तथाचाश्वलायनगृह्यं ।

भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेष्वेक इति ।

कात्यायनोऽपि कृतगण्डूषेषु सम्यगनाचान्तेषु ब्राह्मणेषु पिण्डदानमनुज्ञाह । आचान्तेष्वेक इति । आचान्तेष्वपि कुर्वाणाः केचिद्विकिरं प्रक्षिप्य ब्राह्मणेभ्यो गण्डूषाय सकृत्सकृदपोदत्त्वा गायत्र्यादि-

(१) परिक्रममिति ग० ।

जपं कृत्वा तृप्तप्रश्नोत्तरपूर्वकं शेषान्नानुज्ञां कारयित्वानन्तरं कुर्वन्ति। अत एव कात्यायनेन शेषमन्नमित्यारभ्यानुज्ञाप्येत्यन्तं यथोक्तक्रमेण प्रतिपाद्योक्तं।

सर्वमन्नमेकत उद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवनेज्य दद्यादाचान्तेष्वित्येके।

सर्वमन्नमेकस्मिन् पात्रे उद्धरेत्। सर्वशब्दः प्रकृतान्नजातिसर्वत्वार्थः। अतोमांस-पायसौदनापूप-सूपादिजातीयेभ्यः प्रकृतश्राद्धप्रयोगार्थं साधितेभ्यः सर्वेभ्योऽन्नेभ्यः किञ्चित्किञ्चिदादाय पिण्डपर्याप्तपरिमाण-मन्नसमुदायमेकस्मिन् पात्रे समुद्धृत्येत्येतदुक्तं भवति। 'उच्छिष्टसमीप' इत्युच्छिष्टप्रदेशात् व्यामत्र्यरत्निवाक्कादिव्यवहिते देशे। अत्र पिण्ड-पितृयज्ञवदुपचारः। पित्र्य इति सूचितत्वाद्दर्भग्रहणमुपमूलसकृदाच्छि-न्नोपलक्षणार्थं। परिसंख्यानार्थमिति केचित्। 'अवनेज्य' प्रदास्यमान-स्यैकैकस्य पिण्डस्य स्थाने उद्देश्यस्य पित्रादरेकैकस्य गोत्रसम्बन्धनामानि सम्बुध्य तानि समुच्चार्य्यावनेनिक्ष्वेति पात्रेण सतिलं जलं निनीयेत्यर्थः। 'त्रींस्त्रीनितिवीप्सा मातामहादिपिण्डत्रयमपेक्ष्य, 'पिण्डान् दद्यात्', परस्परसंश्लेषादविभागं परित्यज्य सङ्घाततां प्राप्तमन्नं पिण्डः। एवं संपूर्ण-मनाचान्तेषु पात्रविमोचनार्थं सकृद्गृहीतगण्डूषेषु ब्राह्मणेषु गायत्री-जपादि कृत्वा पिण्डान् दद्यादित्येकेषां मतमभिधायान्येषां मतमाह 'आचान्तेष्वेक इति। 'एक इति एकवचनादस्य पक्षस्य परमतत्वमिति न मन्तव्यं उभयशास्त्रत्वादिकल्प इति कर्कोक्तेः। अस्तु चैक इति वचनात् प्रथमे परत्वात्परेषामेतेष पक्ष इति। केचित्त्वनाचान्तेष्वेव विकिरार्थम-न्नमादाय तृप्तिप्रश्नोत्तरपूर्व्वकं शेषान्नानुज्ञावचनं कारयित्वा विकिरं

प्रक्षिप्य ब्राह्मणेभ्यः सङ्कल्पकृदपोदत्त्वानन्तरं पिण्डदानं कुर्व्वन्ति।

अतएव याज्ञवल्क्येनान्नमादायेत्यारभ्यामुनैव क्रमेण सङ्कल्पकृदित्यन्तमभिधायोक्तं।

सर्व्वमन्नमुपादाय सतिलं दक्षिणामुखः।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात् पितृयज्ञवदिति॥

केचित्तु भुक्तवत्स्वनाचान्तेष्वेव विकिरं दत्त्वा स्वधां च वाचयित्वा पिण्डदानं कुर्व्वन्ति।

तथा च शङ्ख-लिखितौ।

गायत्रीमनुश्राव्य तृप्तान् ज्ञात्वा स्वदितमिति पृष्ट्वा शेषमन्नमनुज्ञाप्य प्रकृतादन्नाद्विकिरं कुर्य्यात्। स्वधां वाचयित्वा विष्टरांस्त्रीन्निदध्यात् त्रीण्येवोदपात्राणि सतिलानि सपवित्राणि मृन्मयाश्ममयौदुम्बराणि वा धूप-गन्ध-माल्यादर्श-प्रदीपाञ्जनादीनि चोपहरेत्सर्वान्नप्रकारमादाय पिण्डान्निदध्यात्।

अस्यार्थः। गायत्रीं 'अनुश्राव्य' यथा ते ब्राह्मणाः शृण्वन्ति तथोच्चार्य्य, 'तृप्तान्' सुहितान्, ज्ञात्वा स्वदितमिति पृष्ट्वा शोभनमदितं 'स्वदितं'। अर्थात्सुस्वदितमिति उत्तरं गम्यते। शेषमन्नं किं क्रियतामिष्टैः सह भुज्यतामिति प्रश्नोत्तराभ्यां अनुज्ञाप्यानुज्ञातादन्नात्कियदन्नमुद्धृत्य तस्य भूमौ विकिरणं कुर्य्यात्। स्वधां वाचयिष्य इत्यादिना प्रकारेण स्वधां वाचयित्वा निधास्यमानस्यैकैकस्य पिण्डस्याधारभूत एकैकोविष्टर इति पिण्डत्रयार्थं त्रीन्विष्टरान् भूमौ निदध्यात्। पूर्व्वाग्रग्रन्थितपञ्चविंशतिदर्भपिञ्जूलात्मको विष्टरः। एकैकस्मिन् पिण्डे एकैकेन पात्रेणावनेजनं कर्त्तुं त्रीण्येव मृच्छिला-ताम्राणामन्यतमेन निर्म्मितानि

पवित्रसहितान्युदपात्राणि । 'धूपः' गुग्गुलुनिर्य्यासादिः । 'गन्धाः' श्राद्धे विहितानि सुरभीण्यनुलेपनानि । 'माल्यानि' श्राद्धोचितानि ग्रथितपुष्पाणि । 'आदर्शः' दर्पणः, आदृश्यतेऽस्मिन् रूपमित्यादर्शः । आदिशब्दात् प्रसाधनद्रव्यं सिन्दूरादीति हरिहरः। 'प्रदीपः' प्रसिद्धः । 'अञ्जनं' सौवीरादि। आदिशब्दोऽभ्यञ्जन-वासःप्रभृत्युपयोगिद्रव्यान्तर-संग्रहार्थः। एतानि च 'उपहरेत्' पिण्डदेशसमीपे निदध्यात्। सर्व्व-मन्नप्रकारमादाय तदेकीकृत्य तन्मयान् पिण्डान्निदध्यादिति।

केचित्त्वनाचान्तेष्वेव पिण्डदानं कुर्व्वन्ति आचान्तेषु विकिरः। अतएव बृहस्पतिना "तत्समीपे प्रकुर्य्याच्च पिण्डनिर्वपणं तत इत्या-दिना पिण्डदानमुक्त्वा "उपस्पृष्टोदकानान्त्वित्यादिना विकिरदानमुक्तं। आचान्तेष्वपि कुर्वाणाः केचिदभिरमणानुज्ञावचनादिपदार्थमकृत्वैव पिण्डदानं कुर्व्वन्ति। केचित्तदुत्तरकालं, केचित् ब्राह्मणविसर्जनानन्तरं। तत्राचान्तेष्वितिवचनादाचमनाव्यव-हितोत्तरकालता गम्यते।

अनुज्ञावचनाद्युत्तराकालतान्त्वाह यमः।

आचान्तांश्चानुजानीयादभिवाद्य कृताञ्जलिः।
भवन्तोरमतामत्र ज्ञात्वानुज्ञातलक्षणं ॥
स्वधेति चेति वक्तव्यं प्रीयन्तां पितरस्तथा ।
अक्षय्यमन्नदानन्तु वाच्यं प्रीतैर्द्विजातिभिः ।
ततो निर्वपणं कुर्य्यात् पिण्डानान्तदनन्तरम् ॥ इति ।

भवन्तोरमतामित्यादिश्लोकार्द्धमनुज्ञावचनं । अनुज्ञातस्य लक्षणं यथासुखं वर्त्तनमित्येवंविधं स्वरूपं ज्ञात्वा भवन्तः 'रमतां' यथासुखं वर्त्ततां। केचित्तु ब्राह्मणविसर्जनानन्तरं पिण्डदानं कुर्व्वन्ति ।

तथा च हारीतः।

तृप्तान् स्वदितमिति पृच्छेदित्यादि वाजे वाज इत्यनुव्रजेत्यन्तं भोजनोत्तरतन्त्रमुक्ता आह शेषस्य पिण्डान् पितृयज्ञवन्निदध्यादिति। एते च पिण्डदानकालाः शाखाभेदेन व्यवस्थिता वेदितव्याः।

तथा च स्मृतिः।

मुनिभिर्भिन्नकालेषु पिण्डदानं तु यत् स्मृतं।
तत् स्वशाखामतं यत्र तत्र कुर्य्याद्विचक्षणः॥

'यत्र' यस्मिन् काले, क्रियमाणं स्वशाखयानुमतं भवति तस्मिन् काले कर्त्तव्यं। उपलक्षणञ्चैतत् स्वगृह्याद्यनुमतः।

भोजनात् पूर्व्वकालोत्तरकालयोर्व्यवस्थान्तरमाह लौगाक्षिः।

अप्रशस्तेषु यागेषु पूर्व्वं पिण्डावनेजनं।
भोजनस्य प्रशस्तन्तु पश्चादेवोपकल्पयेदिति॥

'अप्रशस्तेषु यागेषु' सपिण्डीकरणात् पूर्व्वेषु प्रेतश्राद्धेषु। 'अवनेजनं' मवाचीनपाणिना निर्वपणं, इति स्मृतिचन्द्रिकाकारः। पिण्डनिर्वपणारम्भपदार्थेनावनेजनाख्येन पिण्डदानं लक्ष्यत इत्यपि शक्यं व्याख्यातुं। 'भोजनस्य पूर्वं' भोजनात् पूर्वमित्यर्थः। 'प्रशस्तं' सपिण्डीकरणादिश्राद्धेषु क्रियमाणं भोजनात् पश्चादेव यथाकालं। इयञ्च व्यवस्था केषाञ्चिदेव शाखिनां। यतोमन्वादिस्मृति-मत्स्यादिपुराणेषु च मुख्यपार्व्वणं पिण्डान्वाहार्य्यकर्म्म वाधिकृत्य पिण्डदानस्य भोजनात् पूर्व्वमेव कालचोदना। अतएव पार्वणश्राद्धे भोजनात्पश्चादेवेति स्मृतिचन्द्रिकाकारोक्तिरप्येवमेव व्याख्येया। येषान्तु गृह्यादौ पिण्डदानस्य कालविशेषा नोक्ताः तेषान्तु सौकर्य्यादाचान्तेष्वेक इत्ययमेव

पक्षो ग्रहीतुं न्याय्यः । अत्र प्रसङ्गाद्विकिरदानकालविकल्पा अपि व्याख्याताः ।

इति पिण्डदानकालाः ।

अथ पिण्डदानप्रदेशाः ।

तत्र तावत् पिण्डपितृयज्ञेऽग्निसमीपे पिण्डनिर्वापं विधाय पिण्डपितृयज्ञवदुपचारः । पित्र्य इत्यादिषु च पिण्डपितृयज्ञविध्यन्तातिदेशादग्निसद्भावे तत्समीप एव पिण्डान् दद्यात् । तथा च ब्राह्मणभोजनात् पूर्वकालीनं पिण्डनिर्वापं वर्णयता देवलेन भुवि पिण्डानां सन्निवेशनमञ्जनादिभिस्तदलङ्करणञ्चोक्त्वा अनन्तरमग्नौकरणहोममभिधाय तस्य होमस्य पूर्वनिवेशितपिण्डसन्निधानमुक्तं ।

हुत्वैवमग्निं पिण्डानां सन्निधौ तदनन्तरं ।
पक्वान्नेन बलिं तेभ्यः पिण्डेभ्यो दापयेत् द्विजः ॥

इति पिण्डानां सन्निधावेवमुक्तेन प्रकारेणाग्निं हुत्वानन्तरमेभ्यः पिण्डेभ्यः पक्वान्नेन बलिं नैवेद्यरूपं दद्यात् । अत्राग्नौ होमस्य पिण्डसन्निधानं वदतार्थात् पिण्डानामप्यग्निसन्निधानमुक्तं । अग्न्यभावे तु पूर्वोपन्यस्तेषु शङ्ख-कात्यायन-याज्ञवल्क्य-वचनेषूच्छिष्टसन्निधावित्युपदेशादुच्छिष्टसमीपे दद्यादिति मधुशर्मप्रभृतयः ।

तत्र नैरन्तर्य्येणोच्छिष्टसन्निकृष्टस्य देशस्याशुचित्वेन पिण्डदानानर्हत्वेऽपि वचनादर्हत्वं परिकल्प्य तत्र पिण्डदानं कर्त्तुमध्यवस्यतोदान्हन् वारयितुं उच्छिष्टप्रदेशात् कियद्व्यवधानमाह व्यासः ।

अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वापि प्राप्नुवन्ति न विन्दवः ॥ इति ।

'तत्र' तस्मिन् श्राद्धप्रयोगे, उच्छिष्टप्रदेशादरत्निपरिमितं प्रदेशं परित्यज्य योदेशोऽवतिष्ठति तत्र पिण्डान् प्रदद्यात्। सकनिष्ठिकः करः 'अरत्निः'। एतच्च व्यवधानमतिकुशलेषु सुशीलेषु चाचमनोदकविन्दुभिः पिण्डदानप्रदेशमनुपघ्नत्सु ब्राह्मणेषु विज्ञेयं। आचमनोदविन्दूपघाते तु ततोऽधिकमपि प्रदेशमुत्सृजेत्।

तदाह।

यत्रोपस्पृशतामित्यादिना उपस्पृशतामाचामतां विप्राणामुदकविन्दवो यं देशं न प्राप्नुवन्ति तत्र देशे वा पिण्डदानं।

तथा चारत्निमात्रादधिकपरित्यागमाह पारस्करः।

विप्राणां बाहुमात्रेण पिण्डदानं विधीयते।

श्राद्धभोक्तॄन् विप्रानवधीकृत्य बाहुमात्रात् प्रदेशात्परत इत्यर्थः। विप्राणामित्यत्र पात्राणामिति पाठान्तरं।

तत्राप्युदविन्दुप्राप्तिशङ्कायामुच्छिष्टसन्निधिवाक्यार्थं विदधन् दिङ्नियमञ्चोपदिशन् बाहुमात्रादप्यधिकप्रदेशपरित्यागमाहात्रिः।

पितॄणामासनस्थानादग्रतस्त्रिष्वरत्निषु।

उच्छिष्टसन्निधानन्त्वोच्छिष्टासनसन्निधौ 'पितॄणां' पित्र्यब्राह्मणानां। उपलक्षणञ्चैतद्दैवब्राह्मणानां। तदुच्छिष्टव्यवधानस्यापेक्षितत्वेन तुल्यन्यायत्वात्। 'आसनस्थानात्' अवधियोग्यादासन्नप्रदेशात्। स च तद्देशस्यार्वाक्भाग एव नियतव्यवधानलाभात्। अन्यथा सङ्कटासङ्कटविभागेनानियतव्यवधानं प्रसज्येत। तथा च कदाचिदुच्छिष्टसंस्पृष्ट एव देशे पिण्डदानमापद्येत। नियतलाभे नियतकल्पनानुपपत्तेश्च। अथवा भुञ्जानाः पितरो यावता प्रदेशेन संयुज्यन्ते तावत्पितॄणामासनस्थानं।

अतः पात्राण्यवधित्वेन लभ्यन्ते तावता हि प्रदेशेन पितरः संयुज्यन्ते। 'अग्रतः' पुरस्तात् । न तु पश्चात्पार्श्वयोर्वेति दिङ्नियमः ।

अत्राप्युदविन्दुप्राप्तिशङ्कायामधिकपरित्यागमाह जातूकर्ण्यः ।

व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वापि प्राप्नुवन्ति न विन्दवः ॥

तिर्यक्प्रसारितयोर्भुजयोः सहोरसा यन्मानं सः 'व्यामः' । यदा तु ब्राह्मणसौशील्यादिनाचमनोदविन्दूनां अरत्न्यादिपरिमितदेशप्राप्तिर्नाशङ्क्यते तदोच्छिष्टसन्निधेर्वचनविहितत्वेन मुख्यस्योच्छिष्टसन्निधितारतम्यस्यानुग्रहाय अरत्निवाङ्कादिपरिमित एव देशे पिण्डदानं कार्य्यमित्यभिप्रेत्योक्तं यत्रोपस्पृशतां वापीत्यादि । अतोरत्न्यादिमानवचनानामाचमनोदबिन्दुप्राप्तिवर्जितोच्छिष्टसमीपदेशोपलक्षणत्वमेव न तु नियमार्थत्वं। सङ्कटे तु श्राद्धप्रदेशे प्रयत्नविशेषेणाचमनोदबिन्दुसमुच्छलनं सङ्कोच्यारत्न्यादिव्यवहितप्रदेशानुपघातमापाद्य तत्र पिण्डदानं कुर्य्यादिति व्यवस्था ।

ब्राह्मणभोजनात् पूर्वकालप्रदेयान् पिण्डान् प्रस्तुत्य देशविशेषादिमाह देवलः ।

अभ्यज्य मधुसर्पिर्भ्यां नान्वपेत् कुशसञ्चये ।
छायायां हस्तिनश्चैव वत्सदौहित्रसन्निधौ ॥

हस्तिच्छाया राज्ञस्तदनुगृहीतस्य वा पिण्डदाने। तदन्यस्य तत्सम्पादनशक्तिविरहात्। यत्र पिण्डदानं कर्त्तव्यं तत्र हस्तिच्छायासम्पादनेन तद्देशवैशिष्ट्यमापाद्यं। एतच्च षाड्गुण्यातिशयार्थं(१)। यतोऽस्य

(१) साद्गुण्यातिशयार्थमिति ख० ।

हस्तिच्छायादेर्वचनान्तरतः श्राद्धे प्रशस्ततरत्वमवगम्यते। अतो विनापि हस्तिच्छायादिकं भवत्येव पिण्डदानं। एवं स्थिते द्विजभोजनोत्तर-कालीनमपि पिण्डदानमस्मिन् देशे षाड्गुण्यसम्पत्तये[१] विधेयमिति गम्यते। अथवा श्राद्धमध्यवर्त्तिना तीर्थादिकृत्येन स्वतन्त्रेण च पिण्डदानेन संयोक्ष्यमाणोऽयं देशविशेषः षाड्गुण्यमापादयिष्यतीति किं प्रकरणाग्रहेण। एतच्च गजच्छायाप्रकरणे व्यक्तमस्ति।

इति पिण्डदानदेशाः।

अथ पिण्डदानप्रयोगः ।

तत्रानुज्ञाग्रहणं ।

तत्र पिण्डदानं चिकीर्षतोऽम्भोमृतकुम्भोपादानपूर्वकमाह देवलः।

अथ संगृह्य कलशं सदर्भं पूर्णमम्भसा ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेत् ।
ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य सः ॥

पिण्डनिर्वापार्थं दर्भसहितं सपवित्रञ्च 'अम्भसा' जलेन, परिपूर्णं कलशं 'संगृह्य' सम्यक् कराभ्यां गृहीत्वा, ब्राह्मणानां पुरस्तादुपविश्य पिण्डावापं करिष्य इत्यनुज्ञाभ्यर्थनाभिप्रायवता प्रश्नेन करिष्यमाणं पिण्डावापमेषां निवेदयेत्। ततस्तैर्ब्राह्मणैः कुरुष्वेत्यनुज्ञातो दक्षिणां दिशमागच्छेत्। यद्यपि च ब्राह्मणाभिमुख्येन प्रश्नकरणात् स्वत एव यजमानस्य दक्षिणाभिमुख्यं सिद्धं। द्विजानामग्रे पिण्डदानं कर्त्तव्यं न पृष्ठत इत्यत्रिणाभिहितत्वादुत्तराभिमुखावस्थितब्राह्मण-पङ्क्त्यपेक्षया दक्षिणादिगामनं चायुक्तं। तथापि दक्षिणाभिमुखस्यैव

(१) षाड्गुण्यसम्पत्तये इति ख० ।

स्थितस्य दक्षिणां दिशमेत्येति विधेरर्थवत्त्वाय प्रश्नस्थानात् द्वित्राणि पदान्यागत्येति गम्यते। अथवा पुरस्तादुपविश्येति प्राङ्मुख उपविश्य प्रश्नं कुर्य्यात् । ततो दक्षिणां दिशमेत्येति दक्षिणाभिमुखोभूत्वा पिण्डदानं कुर्य्यादिति । कलशसंग्रहस्तत्र सर्वेषामेव तस्य पिण्डावापोपयोगिमार्जनावनेजनादिसाधनजलोपादानार्थत्वात् । अथवा कलशसंग्रहस्य कलशकार्य्यार्थत्वादेषां ततः पानीयकुम्भेन तर्पयेत् "प्रयतः पितॄनित्यादिना कलशेनैव किञ्चित्कर्म विहितं तेषामेव तत्संग्रहः। अवनेजनादिकन्तु सर्व्वश्राद्धसाधारणपात्रस्थेन जलेन।

केषाञ्चिदेवायं कलशसंग्रह इत्येतमर्थं तत्संग्रहमन्तरेणैवानुज्ञाग्रहणं वदन् व्यक्तीकरोति शालङ्कायनः ।

पिण्डावापमनुज्ञाप्य यतवाक्काय-मानसः ।
सतिलेन ततोऽन्नेन पिण्डान् सर्व्वेण निर्व्वपेत् ॥

इत्यनुज्ञाग्रहणं ।

अथ पिण्डदानस्थानकल्पना ।

आह देवलः ।

उपलिप्ते शुचौ देशे स्थानं कुर्व्वीत सैकतं ।
मण्डलञ्चतुरस्रं वा दक्षिणावनतं महत् ॥

'उपलिप्ते' गोमय-गोमूत्राभ्यामुपलिप्ते महीपृष्ठे, "गोशकृन्मूत्रवारिणेति मत्स्यवचनात् । उपलेपे कृते सत्युपलेपात्पूर्वस्थिताशुचित्वनिवृत्त्या सिद्धेपि शुचित्वे तदुत्तरकालिकोपघातजन्याशुचित्वनिवृत्त्यर्थं शुचावित्युक्तं। उपलिप्ते अतएव शुचाविति वा। 'सैकतं' सिकतामयं स्थानं, 'कुर्व्वीत' पिण्डाधारभूतं स्थलं रचयेत्। तस्याकारमाह, 'मण्डलं

चतुरस्रं वेति। 'मण्डलं' वृत्ताकारं, 'चतुरस्रं' चतुष्कोणं वा। 'दक्षिणावनतं' दक्षिणाप्रवणं। 'महत्' भूप्रदेशाद्व्यक्तावभासं पिण्डावस्थापनपर्य्याप्तवैपुल्ययुक्तञ्च तावता वैपुल्यस्यार्थसिद्धत्वेपि स्पष्टत्वार्थोऽनुवादः। अथवा पिण्डदानावस्थापनपर्य्याप्तवैपुल्यात् किञ्चिदभ्यधिकवैपुल्यार्थोविधिः। एतच्च सैकतस्थानकरणं केषाञ्चिदेव। अतएव उपलिप्ते-महीपृष्ठ इति मत्स्यपुराणे महीपृष्ठस्यैव साक्षात् पिण्डाधारत्वं विहितं।

इति पिण्डदानस्थानकल्पना।

अथ पिण्डदान-स्थान-संस्कारः।

तत्र तावदुपलेपनमुक्तमेव। उल्लेखनादि त्वच्यते।

तत्राह देवलः।

एकदर्भेण तन्मध्यमुल्लिखेत्त्रिश्च तं त्यजेत्।

'तन्मध्यं' पिण्डस्थानमध्यं। 'उल्लिखेत्' रेखायुक्तं कुर्य्यात्। 'त्रिः' त्रिवारं।

ननु पित्र्यर्थमुल्लेखनं सकृदेव कर्त्तव्यं। तथा च शतपथे "पिण्डपितृयज्ञब्राह्मणं अथ दक्षिणेनान्वाहार्यपचनं सकृदुल्लिखति तद्वेदिभाजनं" इति। 'वेदिभाजनं' वेदिस्थानीयं।

ब्रह्माण्डपुराणेऽपि।

खण्डनं पेषणञ्चैव तथैवोल्लेखनक्रिया।

सकृदेव पितॄणां स्याद्देवानान्तु त्रिरुच्यते॥ इति।

'खण्डनं' वर्हिरादेः छेदनं, 'पेषणं' भूमिघर्षणादिकं। 'उल्लेखनक्रिया' लेखाकरणं। 'पितॄणां' पितृकार्य्ये, 'सकृदेव स्यात्'। अतः कथमत्र त्रिरुल्लेखनं। उच्यते। विकल्पात् विशेषशास्त्राद्वा भविष्यतीति। अथ वैकैकपिण्डार्थमेकैकमुल्लेखनमित्येवं सकृदपि क्रियमाणं त्रिः

सम्पद्यते। अथ वैकैकपितृवर्गार्थमेकैकमुल्लेखनमित्येवं त्रिः क्रियते हि कदाचित् पितृ-मातृ-मातामहादिवर्गाणां पिण्डदानं। अनेन च यदा वर्गद्वयस्य पिण्डदानं तदा द्विरुल्लेखनं, यदा त्वेकवर्गस्य तदा सकृदेवेत्यपि दर्शितं भवति। 'एकदर्भेणेत्येकया दर्भशिखया। एतच्च स्फ्यालाभे। 'पिण्डपितृयज्ञे सकृत् स्फ्येनोल्लिख्येत्यापस्तम्बादिवचनात् पिण्डान् दद्याद्वै पितृयज्ञवदिति याज्ञवल्क्यादिवचनाच्चातिदेशतः स्फ्यप्राप्तेः। न च दर्भोपदेशेनास्य बाधः।

यतो बाधशङ्कायामेवोक्तं ब्रह्माण्डपुराणे।

वज्रेण वा कुशैर्वापि उल्लिखेत्तन्महीं द्विज इति।

'वज्रः' स्फ्यः। "वज्रो वै स्फ्य इति श्रुतेः। स्फ्येनोल्लिखेदित्युक्ते अर्थात् करगृहीतेनेति सिद्धेऽपि किमेककरगृहीतेन उत करद्वयगृहीतेनेत्येवमाद्याकाङ्क्षानिवृत्त्यर्थमाह पारस्करः।

कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विज। इति।

कराभ्यामित्युक्ते किं सन्निवेशविशिष्टाभ्यामित्याकाङ्क्षायामुक्तं ब्रह्माण्डपुराणे।

सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः। इति।

'सव्यः' वामः, स ययोः पाण्योर्मध्ये 'उत्तरः' उपरिष्टादवस्थितः, तौ 'सव्योत्तरौ'। एतदुक्तं भवति। "उल्लेखनाय पाणिभ्यां निपीड्यमाने स्फ्ये दक्षिणमुष्टेरुपरिष्टाद्वाममुष्टिः स्थापनीय इति। स्फ्यस्थानपातादर्भस्य तेनाप्युल्लेखने सव्योत्तरावेव करौ कर्त्तव्यौ। उल्लेखनञ्चाभिमुखमभिगच्छता स्फ्येन दर्भेण वा न कार्य्यं किन्तु प्राङ्मुखतया गच्छतैव। तच्चाग्नेऽप्याभिमुख्येनैव कार्य्यं। "दक्षिणाप्राचीं पराचीं

वेदिमुद्धृत्येत्यापस्तम्बेन पिण्डपितृयज्ञेऽभिधानात्। दक्षिण-प्राच्योरन्तरालभूता या कोणात्मिकाग्नेयीति प्रसिद्धा दिग्वर्त्तते तदवच्छिन्नां दक्षिणप्राचीं, 'पराचीं' पराङ्मुखीं। यजमानापेक्षया पराङ्मुखं गच्छता स्फ्येनोल्लिख्येत्यर्थः। आश्वलायनेनापि दक्षिणाप्राचीमेव प्रस्तुत्य परिभाषायामुक्तं "सर्वकर्माणि तान्दिशमिति। तान्दिशमाश्रित्य सर्वाण्यपि पित्र्याणि कर्माणि कार्य्याणीत्यर्थः। अनेन कर्त्तुराग्नेयाभिमुख्यं सिद्ध्यति। नह्यन्याभिमुखोऽञ्जसा तदभिमुखानि शक्नोति कर्माणि कर्त्तुं। अतस्त्वाग्नेय्याभिमुखः सन् कर्त्ताग्नेय्याभिमुखीं रेखां कुर्य्यात्। अयं वक्ष्यमाणस्य दर्भास्तरणस्यावनेजन-पिण्डनिर्वापादेस्त्वाग्नेय्याभिमुख्यमेव। उल्लेखणं हि संस्कारत्वात् पिण्डाधारत्वेनोपयोक्ष्यमाणाया भुवः क्रियते। अतः पिण्डाधारभूतानां दर्भाणामपि तदाभिमुख्येनास्तरणं। दक्षिणाभिमुखास्तरणे त्वनाधारभूतभूम्यास्तृतानां दर्भाणामनाधारत्वैवोपपद्यते। यथाधारञ्च पितृणामुपवेशनं यथोपवेशनमवनेजनादीति सर्वमाग्नेय्यभिमुखं। एतच्च वैकल्पिकं। "दक्षिणा दिक् पितृणामिति श्रुतेर्दक्षिणाभिमुखत्वादेरप्यवगमात् दक्षिणाभिमुखत्व-दक्षिणापवर्गत्वादेरपि दर्शनात्। लेखाकरणे च मन्त्रो ब्रह्मपुराणे।

निहन्मि सर्व्वं यदमेध्यवद्भवेत्
हताश्च सर्वे सुर-दानवा मया।
रक्षांसि यक्षाः सपिशाचसङ्घा
हता मया यातुधानाश्च सर्व्वे॥

अस्य मन्त्रस्य सार्थत्वादर्थोविनियोगस्तत्रैव।

एतेन मन्त्रेण सुसंयतात्मा
दर्भेण वेदिं सकृदुल्लिखेत्तु ।
शिवां हि वृद्धिं ध्रुवमिच्छमानः
क्षिपेद्द्विजातिर्दिशमुत्तराङ्गतः ॥
यस्मिन् देशे पठ्यते ह्येषमन्त्र-
स्तं वै देशं राक्षसा वर्जयन्ति ॥

'क्षिपेत्' उल्लेखनदर्भमिति शेषः। 'उत्तरां दिशं' लेख्यदर्भापेक्षया। अनेन चात्मापेक्षया दक्षिणस्यान्दिशि क्षिपेदिति लभ्यते। अपहता इत्यादिमन्त्रान्तरञ्च लेखाकरणे दृश्यते ।

तथा च पिण्डपितृयज्ञसूत्रे कात्यायनः ।

दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ।

'दक्षिणेनापरेण वेति अग्नेर्दक्षिणतः पश्चिमतो वा । अपहता असुरा रक्षांसि वेदिषद इत्यनेन मन्त्रेणोल्लिखेदित्यर्थः ।

आपस्तम्बस्तु किञ्चिदधिकावयवमेतमेव मन्त्रमाह ।

अपहता असुरा रक्षांसि पिशाचा वेदिषद इत्यन्तरा गार्हपत्यान्वाहार्य्यपचनौ दक्षिणपूर्वेण वान्वाहार्य्यपचनमिति ।

वेदिमुद्धृत्येत्युत्तरेण सम्बन्धः । उल्लिख्य चाभ्युक्षणं कर्त्तव्यं । स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति ताम-भ्युक्ष्येत्याश्वलायनेन पिण्डपितृयज्ञेभिधानात् ।

अभ्युक्षणानन्तरमापस्तम्बेन पिण्डपितृयज्ञे आवाहनप्रकाशकेन मन्त्रेणाभिमन्त्रणमुक्तं ।

अवेच्छ्यायन्तु पितरो मनोजवस इत्यभिमन्त्रेति ।

उल्लेखनानन्तरं पश्चादुल्मुकनिधानमाह कात्यायनः ।

उल्मुकं परस्तात्करोति ये रूपाणीति ।

शतपथेऽप्युल्लेखनानन्तरमुल्मुकनिधानमुक्तं ।

अथ परस्तादुल्मुकं निदधाति स यदनिधायोल्मुकमथैतत् पितृभ्योदद्यादसुर-रक्षसानि हैषामेतद्विमथ्नीरंस्तथोहैतत् पितृणामसुररक्षसानि न विघ्नते तस्मात्परस्तादुल्मुकं निदधाति ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति परापुरोनिपुरोये भरन्त्यग्निष्टान् लोकान् प्रणुदात्यस्मादित्यग्निर्हि रक्षसामपहन्ता तस्मादेष निदधातीति ।

अथ तत्रैकमूलत्वादिविशेषेण विशिष्टानां दर्भाणामास्तरणं कर्त्तव्यं । तथा च देवलः ।

तस्मिन् स्थाने ततो दर्भानेकमूलान् शिवान् बहून् ।
दक्षिणाग्रानुदक्पादान् सर्वांस्तांस्तृणुयात्समं ॥

'तस्मिन्निति यत्र पिण्डाः प्रदातव्याः । 'तत इत्युल्लेखनाद्यनन्तरं । 'दर्भान्' कुशान् । तदभावे पूर्वप्रदर्शितान् काशादीन् । एकमूलसंलग्नबहुशिखान् । 'शिवानिति साग्रानस्फुटिताग्रत्वादिविशेषणविशिष्टान् । बहुवचनन्त्रित्व एव समाप्तिं प्राप्नतीत्याशङ्क्य 'बहूनित्युक्तं । बहुत्वञ्च विशेषानभिधानादेकैकस्मिन् पिण्डे त्रित्वात् प्रभृति यथेच्छं यथासम्भवञ्च, भूम्याच्छादनपर्याप्तसंख्यानियमस्तु नास्ति । आस्तरणस्य दृष्टार्थत्वात् । भूव्यवधायकाधारान्तरत्वावगमान्नियम इति चेत् । न । पिण्डाधारभूतसर्वभूव्यवधानाभावेप्याधारभूतभूव्यवधानस्य कतिपयैरेव दर्भैः सिद्धत्वात् । सर्वव्यवधाना-

वगतिस्तु नास्त्येव । दक्षिणतोऽग्रं येषान्ते 'दक्षिणाग्राः' । 'उदक्पादाः' उदङ्मूलाः । 'स्तृणुयात्' विस्तारयेत् । 'समं' समस्थलतया समान्तरतया समाग्रतया समूलतया वेति । एकमूलत्वविधानादेव तेषां समूलत्वमपि गम्यते ।

तदाह जातूकर्ण्यः ।

उपमूलं समास्तीर्य्य दर्भानुच्छिष्टसन्निधौ ।

'उपमूलं' मूलसमीपे । मूलान्यभिरक्ष्य, अत्र लूनानिति शेषः । तथा च समूलत्वे तैत्तिरीयब्राह्मणं ।

यत्परुषि दितं तद्देवानां यदन्तरा तन्मनुष्याणां यत्समूलं तत् पितॄणां समूलं बर्हिर्भवति व्यावृत्त्यै ।

उपमूले लूनानां सकृदाच्छिन्नत्वमुक्तं शतपथे ।

अथ सकृदाच्छिन्नान्युपमूलन्दितानि भवन्त्यग्रमिव वै देवानां मध्यमिव मनुष्याणां मूलमिव पितॄणां तस्मादुपमूलन्दितानि भवन्ति सकृदाच्छिन्नानि भवन्ति सकृदुह्येव पराञ्चः पितरस्तस्मात्सकृदाच्छिन्नानि भवन्ति ।

'दितानि' खण्डितानि । दोऽवखण्डन इत्यस्य निष्ठान्तं रूपं । तैत्तिरीयश्रुतावपि ।

सकृदाच्छिन्नं बर्हिर्भवति सकृदिव हि पितरः ।

आपस्तम्बः ।

समूलं सकृदाच्छिन्नं बर्हिराहरति सकृदाच्छिन्नानि वा तृणान्युपमूलन्दितानि ।

'बर्हिः' कुशाः । 'तृणानि' काशादीनि ।

आश्वलायनः ।

सकृदाच्छिन्नैरवस्तीर्य्य ।

लेखामिति शेषः ।

तथा च कात्यायनः ।

उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वेति ।

सा च लेखा यदा दक्षिणाग्रा तदा दर्भानपि दक्षिणाग्रानास्तृणुयात् ।

तदुक्तं देवलेन ।

दक्षिणाग्रानुदक्पादानिति ।

तैत्तिरीयब्राह्मणेऽपि ।

दक्षिणास्तृणानि दक्षिणावृद्धि पितॄणामिति ।

'दक्षिणावृत्' दक्षिणाप्रकारकं ।

सकृदाच्छिन्नानि प्रकृत्य शतपथेऽपि ।

तानि दक्षिणोपस्तृणानीति ।

मत्स्यपुराणेऽपि ।

निधाय दर्भान् विधिवद्दक्षिणाग्रान् समाहितः ।

त्रींस्त्रीन् पिण्डानथोदद्यात् सर्वानेव तिलैर्युतान् ॥

यदा त्वाग्नेयीन्दिशमाश्रित्य लेखा क्रियते तदा दर्भाणामपि दक्षिणाग्राणामेवास्तरणं ।

एतच्च विशेषान्तरसहितमुक्तं वायुपुराणे ।

सकृदेवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः ।

प्राग्दक्षिणाग्रान्नियतो दद्यात् पिण्डाननन्तरमिति ॥

'सकृत्' एकवारं । बहूनामप्यास्तरणं शक्यत एव सकृत्कर्त्तुं ।

'प्राग्दक्षिणा' आग्नेयी दिक् ।

अत्रापस्तम्बेन पिण्डपितृयज्ञे दर्भास्तरणे मन्त्रोदर्शितः।

सकृदाच्छिन्नं बर्हिरूर्णा मृदु स्योनं पितृभ्यस्त्वा भराम्यहं अस्मिन् सीदन्तु मे पितरः। सोम्याः पितामहाः प्रपितामहाश्चानुगैः सहेति, सकृदाच्छिन्नेन बर्हिषा वेदिं स्तृणातीति।

अत्र शङ्ख-लिखिताभ्यां पिण्डभूमौ विष्टरत्रयनिधानमुक्तं।

विष्टरांस्त्रीन्निदध्यादिति।

अत्र सङ्ख्यासाम्यादेकैकपिण्डाधारत्वेनैकैकोविष्टरोनिधेय इति गम्यते।

यमस्त्वत्र विशेषमाह।

विष्टरांस्त्रीन् वपेत्तत्र नाम-गोत्रसमन्वितान्।

अद्भिरभ्युक्ष्य विधिवत् तिलैरभ्यवकीर्य्य चेति॥

'नाम-गोत्रसमन्वितान्' अमुकगोत्रस्यास्मत्पितुर्देवदत्तशर्मणोऽयं विष्टर इत्यादिवाक्योच्चारणपूर्व्वकमित्यर्थः।

दर्भास्तरणानन्तरमावाहनपूर्वकं पितृणां स्थानकल्पनामाह देवलः।

अथ साञ्जलिरुत्थाय स्थित्वा चावाहयेत् पितॄन्।

पितरो मे प्रसीदन्तु प्रयान्तु च पितामहाः॥

इति सङ्कीर्त्तयंस्तूष्णीं तिष्ठेत् क्षणमनुच्छ्वसन्।

आवाहयित्वा दर्भैस्तेषां स्थानानि कल्पयेदिति॥

करे दर्भान् गृहीत्वा पित्रे इदं स्थानं, पितामहायेदं स्थानं प्रपितामहायेदं स्थानमित्येव क्रमेण दर्भाग्रैर्निर्दिशेत्। शेषं व्यक्तं।

स्थानकल्पनानन्तरं तत्र मार्जनं तिलविकिरणञ्चाह स एव।

तेष्वासीनेषु पात्रेण प्रयच्छेन्मार्जनोदकं।

प्रक्षाल्य विकिरेत्तत्र नानावर्णांस्तिलानपि॥

अनेन मार्जने पात्रमुक्तं ।

आपस्तम्बेन त्वञ्जलिर्मन्त्रश्चोक्तः ।

मार्जयन्तां मम पितरो मार्जयन्तां मम पितामहा मार्जयन्तां मम प्रपितामहा इत्येकरेखायान्त्रीनुदकाञ्जलीन्निनयति ।

प्रसव्यं चात्रिः । परिषिञ्चति त्रीनुदपात्रान् वाजसनेयिनः समामनन्ति ।

अत्राश्वलायनेन मन्त्रान्तरमुक्तं ।

प्राचीनावीती लेखान्त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहा प्रपितामहा इति ।

'लेखां' सकृदाच्छिन्नोपस्तीर्णां, 'उदकेनोपनयेत्' उदकेन संयोजयेत् ।

सुमन्तुना तु भविष्यत्पुराणे दर्भास्तरणानन्तरं मार्जनस्थाने विशेषान्तरसहितमवनेजनमुक्तं ।

अमाववनेनिक्ष्वेति पुरुषं पुरुषं प्रति ।
त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनं ॥

असावित्यत्र गोत्र-सम्बन्ध-नामानि सम्बुद्ध्यन्तानि क्रमेणोच्चार्यावनेनिक्ष्वेत्यभिधायावनेजनाय पितॄणां करशोधनायोदकं दद्यात् । तच्च पुरुषं पुरुषं प्रति त्रिः । तथा च पितरमुद्दिश्य त्रिवारमित्याद्यनुसन्धेयं । ननु सर्वत्र मन्त्रेष्वसावित्यस्य स्थाने नाममात्रप्रयोगं मन्यमाना दृश्यन्ते । असाविति नाम गृह्णातीति । सूत्रपद्येष्वेवमेव श्रूयते । तत् कथमत्र गोत्र-सम्बन्ध-नाम्नां त्रयाणामपि ग्रहणं व्याख्यायते । मैवं । असावित्यनेन व्यावर्त्तकशब्दोपस्थापनं क्रियते ।

गोत्रादीन्यपि व्यावर्त्तकान्येव । न च नाम्नैव व्यावृत्तिसिद्धेर्गोत्राद्य-ग्रहणं वाच्यं । नाम गोत्रं च सम्बधः प्रापकं हव्य-कव्ययोरित्यादिना तद्ग्रहणस्य विहितत्वात् । "अर्घ्यदानेऽथ सङ्कल्पे पिण्डदाने तथा क्षये गोत्र-सम्बन्ध-नामानि यथावत्प्रतिपादयेत्" इति पारस्करवचनाच्च । नचात्र पिण्डदानशब्देन प्रधानमात्राभिधानादवनेजनासंग्रहः, साङ्गेऽपि प्रयोगदर्शनात् । "पिण्डोदकप्रदानन्तु नित्यनैमित्तिकेष्वपि । आलप्य नाम-गोत्रेण कर्त्तव्यं सर्वदैव हि" ॥ इति व्यासेनावनेजनेऽपि गोत्रग्रहणस्याभिधानाच्च । नामगोत्रेण च 'आलप्य' सम्बोध्य, 'नित्य-नैमित्तिकेष्वपि' पिण्डदानेषु, 'पिण्डोदकप्रदानं' अवनेजनोदकदानं, कर्त्तव्यं । नाम-गोत्रेणेत्यत्र नामगोत्रयोः पौर्वापर्य्यमविवक्षितं । सम्बन्ध-नाम-गोत्रशब्दानां शास्त्रेषु नानाक्रमदर्शनादैच्छिकेन क्रमेण प्रयोगः कर्त्तव्यः । शाखाभेदेन वा क्रमस्य व्यवस्था । एतच्चावनेजनमेकेनैव हस्तेन कर्त्तव्यं नाञ्जलिना न पात्रेण ।

सर्वाण्यपि श्राद्धीयानि सेचनान्येकहस्तेन कर्त्तव्यानीति तत्रैवोक्तं ।

श्राद्धसेचनकाले तु दद्यादेकेन पाणिना ।
तर्पणे तूभयं कुर्य्यादेष एव विधिः स्मृतः ॥

तर्पणे तु 'उभयं' पाणिद्वयं साधनीभूतं कुर्य्यात् । एकेनापि हि हस्तेन क्रियमाणमवनेजनं दक्षिणेनैव हस्तेन कर्त्तव्यं ।

तदाह मनुः ।

अपसव्येन हस्तेन निर्वपेदुदकं शुचीति ।

'अपसव्येन' सव्येतरेण हस्तेन, 'शुचि' अनुपहतं, उदकं पिण्डार्थ-मास्तीर्णदर्भोपरि 'निर्वपेत्' निनयेत् । तच्चोदकं तर्जन्यङ्गुष्ठमध्यमार्गेण

निनयेत्। तस्य पितृतीर्थत्वात्।

तथा च मार्कण्डेयपुराणे।

पितृतीर्थेन तोयञ्च दद्यात्तेभ्यः समाहित इति।

'तेभ्यः' पितृभ्यः।

कात्यायनस्तु पात्रेणावनेजनमाह।

उदपात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यादसाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतींस्त्रीनिति।

उदकान्वितं पात्रमुदपात्रं। 'अपसव्यं' पितृतीर्थेन। 'सव्येन' मनुष्यतीर्थेन। 'उद्धरणसामर्थ्यात्' उद्धरन्ति मनुष्येभ्य इति शतपथश्रुतिसामर्थ्यादित्यर्थः। असाववनेनिक्ष्वेति मन्त्रः। यजमानग्रहणं पिण्डपितृयज्ञस्याध्वर्युकर्तृकत्वात्। अपसव्यादिशब्दानां पितृतीर्थाद्यर्थत्वमुपाध्यायकर्केण व्युत्पादितं।

लेखाकरणोल्मुकनिधानानन्तरं शतपथेऽपि।

अथोदपात्रमादायावनेजयत्यसाववनेनिक्ष्वेति। यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहन्तद्यथा शिष्यतेऽभिषिञ्चेदेवं तत्। तद्यथा शिष्यत इति।

यथा भोक्ष्यमाणस्य पुरुषस्य हस्तादौ जलनिषेचनमेवमिदं पितॄणामवनेजनमित्यर्थः।

राणायनीयसूत्रेऽपि पात्रेणैवावनेजनमाह गोभिलः।

सव्येनैव पाणिनोदपात्रं गृहीत्वावसलविः पूर्वस्याङ्कर्ष्वां दर्भेषु निनयेत्पितुर्नाम गृहीत्वासाववनेनिक्ष्व ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधेत्यप उपस्पृश्यैवमेवेतरयोरिति।

सव्येन पाणिनोदपात्रं गृहीत्वेत्यादिवामहस्तगृहीतेनोदपात्रेण दक्षिणहस्ते निषिच्यमानञ्जलं पितृतीर्थेन निनयेदित्यर्थः । अवसलविशब्दस्यापसव्यपर्यायत्वात् पितृतीर्थवाचित्वं । कर्षूत्रयञ्चात्र वेदिस्थानीयलेखास्थाने । 'अपामुपस्पर्शनं' हस्तेन सलिलस्पर्शनमात्रमित्याचारविदः । 'इतरयोः' शेषयोः कर्ष्वोः । एतच्च जलस्पर्शनं पिण्डदानं प्रत्यवनेजन-गन्ध-पुष्प-धूप-दीप-सूत्रदानेषु प्रत्येकमेव कर्त्तव्यं । गोभिलाचार्येण तत्र तत्र तथैव वक्ष्यमाणत्वात् । एतच्चावनेजनोदकं सतिलं प्रत्येतव्यं ।

तथाचोशनाः ।

तिलोन्मिश्रितेनोदकेनासिच्य दर्भास्तीर्णायां भूमौ पिण्डं निवेदयेदिति ।

अत्राञ्जल्येकहस्तोदपात्राणां विकल्पः शाखाभेदेन व्यवस्था वेति वेदितव्यं । न तु दक्षिणहस्तः पात्रधारणेनावनेजनस्योपकरोति पात्रस्योदकधारणेनेति द्वारकार्य्यभेदात्समुच्चयोऽस्तु न हस्तेनेति पात्रनिरपेक्षस्य हस्तस्यावनेजनसाधनत्वावगमात् । शक्नोति चानपेक्ष्य पात्रं साक्षादुदकाधारत्वेनैव हस्तेऽवनेजनं साधयितुं । अत्र कात्यायनादिमतेनावनेजनप्रयोगवाक्यं । "अमुकगोत्रास्मत्पितर्देवदत्तशर्मन्नवनेनिक्ष्व" इत्यादि । आश्वलायनादिभिस्तु "शुन्धतां पितरः" इत्याद्युक्तं । आपस्तम्बादिभिस्तु "मार्जयन्तां मम पितरः" इत्यादि । अत्रापि पूर्ववद्विकल्प-व्यवस्थे । तथा सुमन्तुप्रभृतिभिस्तुः "शुन्धतां पितरः" इत्याद्युक्तं । कात्यायनेन तु ततः प्रागेवोक्तं । अतोऽवनेजन-बर्हिस्तरणयोः पौर्वापर्य्ये विकल्पः, यथाशाखं व्यवस्था वेति । अत्र यद्यप्यवनेज-

तस्य पिण्डस्थानसंस्कारता न विद्यते । तथाप्युदकनिनयनात्मकत्वेन तत्संस्कारस्वरूपत्वात् लेखावर्हिस्तरणमन्त्रंप्रपतितत्वाच्च तस्य संस्कारेष्वभिधानं । आवाहनस्यापि मन्त्रप्रपातादेवाभिधानं ।

इति पिण्डदानसंस्कारः ।

अथ पिण्डकरणं ।

तत्राह जातूकर्णः ।

कृत्वावनेजनं कुर्यात् त्रीन् पिण्डांस्तु यथाविधीति ।

अत्र त्रीनिति पित्राद्येकवर्गापेक्षया । कात्यायनादिवचनेषु त्रीं स्त्रीनितिवीप्सादर्शनादमावास्याश्राद्धे मातामहादिवर्गस्यापि पिण्डनिर्वापावगमात् ।

तथाच वाराहपुराणे वराहकृतश्राद्धमधिकृत्योक्ते पिण्डार्थान्नविभागप्रतिपादके वाक्ये लिङ्गं दृश्यते ।

पिण्डपात्रं समादाय जायायै प्रददौ ततः ।

सा तदन्नं द्विधा कृत्वा त्रिधैकैकमथाकरोदिति ॥

'यथाविधि' विध्यनतिक्रमेण । विधिश्च पिण्डार्थान्नविषयः पिण्डपरिमाणविषयः पिण्डक्रियेत्थम्भावविषयश्च दर्शयिष्यते । तत्रेत्थम्भावविषयेण विधिना सहान्नविधिस्तावदुच्यते । इह ब्राह्मणभोजनात् पूर्वकालीने अग्नौकरणात्पूर्वं क्रियमाणे पिण्डदानेऽग्नौकरणाद्यर्थेन चरुणा पिण्डाः कर्त्तव्याः ।

तदेतत्सेतिकर्त्तव्यताकमाह देवलः ।

ततश्चरुमुपादाय सपवित्रेण पाणिना ।

चतुर्द्धा विभजेत् पिण्डान् घृताक्तान् भाजनेन वै ।
अभ्यज्य मधु-सर्पिर्भ्यां तान् वपेत् कुशसञ्चये ॥

'चरुमुपादाय' भाजने गृहीत्वा तं पवित्रसहितेन पाणिना चतुर्द्धा विभजेत् । तदनन्तरमेकैकेन चरुभागेन एकैकं पिण्डमित्येवं चतुरः पिण्डान् कुर्यात्। तांश्च घृताक्तान् घृतमध्वक्तान् वा 'भाजनेन' पात्रेण भूतेन, 'वपेत्' निदध्यात् । अत्र चतुर्द्धेति चिकीर्षितपिण्डसंख्याक-विभागोपलक्षणार्थं । अग्नौकरणोत्तरकालन्तु क्रियमाणे पिण्डदान अग्नौकरणशेषेण पिण्डाः कर्त्तव्याः ।

तथाचापसव्यमग्नौकृत्वेत्यारभ्याह मनुः ।

त्रींस्तु तस्माद्धविःशेषात् पिण्डान् कृत्वा समाहितः ।
औदकेनैव विधिना निर्वपेद्दक्षिणामुखः ॥

'तस्माद्धविःशेषादित्यग्नौकरणहविःशेषात् । 'अपसव्येन हस्तेन निर्वपेदुदकमित्ययमौदकोविधिः । भोजनोत्तरकालीने तु पिण्ड-दानेऽन्नमाह कात्यायनः ।

सर्वमन्नमेकत उद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डानवने-निज्य दद्यादिति ।

सर्वशब्दः प्रकृतान्नसर्वजातिसर्वत्वार्थः न परिमाणसर्वत्वार्थः । अतः प्रकृतश्राद्धार्थसाधितब्राह्मणभुक्तावशिष्टौदन-पायसापूप-सूपादिसर्व-जातीयान्नसमुदायेभ्यः किञ्चित् किञ्चिदादायैकस्मिन् पात्रे सम्भृत्य तदन्नमयान् पिण्डान् कृत्वोच्छिष्टप्रदेशादरत्न्यादिव्यवहिते देशे स्फ्यादिभिः कृतलेखे पूर्वप्रदर्शितप्रकारमवनेजनं कृत्वास्तीर्णेषु सकृदा-च्छिन्नेषु त्रींस्त्रीन् पिण्डान् दद्यात् । त्रींस्त्रीनितिवीप्साकरणमनेक-

वर्गपिण्डाभिप्रायेण। एतच्च सर्वप्रकारमन्नमग्नौकरणावशिष्टेन चरुणा मिश्रणीयं।

तथाचाश्वलायनः।

यद्यदन्नमुपभुक्तं ततस्ततः स्थालीपाकेन सह पिण्डार्थमुद्धृत्य पिण्डान्निदध्यादिति।

यदन्नमुपभुक्तं श्राद्धीयब्राह्मणैरितिशेषः। ततस्ततः किञ्चित् किञ्चिदुद्धृत्याग्नौकरणशिष्टेन स्थालीपाकेन सह संयोज्य पिण्डान्निदध्यात्। स्थालीपाकमिश्रणञ्चाग्नौकरणशेषप्रतिपत्तिप्रकरणे विस्तरेणोक्तं। एतच्चान्नं मध्वाज्य-तिलयुक्तं कर्त्तव्यं।

तथाच वायुपुराणे।

मधु-सर्पिस्तिल-युतांस्त्रीन् पिण्डान्निर्वपेद् बुधः।

न चैतन्मध्वादित्रययुक्ततानियमार्थकं किन्तु वैशिष्ट्यातिशयार्थं।

अत एव मधु-तिलद्वयमात्रयुक्ततामाह वृहस्पतिः।

सर्वस्मात् प्रकृतादन्नात् पिण्डान् मधुतिलान्वितान्।
पितृ-मातामहादीनां दद्याद्गृह्यविधानतः॥

नापि मधु-तिलद्वययुक्ततानियमः।

अत एव तिलमात्रयुक्ततामाह याज्ञवल्क्यः।

सर्वमन्नमुपादाय सतिलं दक्षिणामुखः।
उच्छिष्टसन्निधौ पिण्डान् प्रदद्यात्पितृयज्ञवत्॥

मार्कण्डेयपुराणेऽपि तिलमात्रयुक्ततोक्ता।

सतिलेन ततोऽन्नेन पिण्डांस्त्रीनेव पुत्रक।
पितृनुद्दिश्य दर्भेषु दद्यादुच्छिष्टसन्निधौ॥

इति पिण्डार्थान्नविषयोविधिः।

अथ पिण्डपरिमाणविषयोविधिः ।

तत्राह व्यासः ।

द्विहायनस्य वत्सस्य विशत्यास्ये यथासुखं ।
तथा कुर्य्यात् प्रमाणन्तु पिण्डानां व्यासभाषितं ॥

'द्विहायनः' द्विवर्षवयस्कः ।

परिमाणान्तरविधिर्ब्रह्माण्डपुराणे ।

त्रीन् पिण्डानानुपूर्व्वेण साङ्गुष्ठमुष्टिवर्द्धनान् ।

'आनुपूर्व्वेण' वच्यमाणेन पितृ-मातामहादिक्रमेण । साङ्गुष्ठोमुष्टिर्य्यावान् तावदवर्द्धनं पुष्टिर्येषान्ते 'साङ्गुष्ठमुष्टिवर्द्धनाः' साङ्गुष्ठमुष्टिप्रमाणा इति यावत्। अथ वा साङ्गुष्ठं मुष्टिं वर्द्धयन्तीति साङ्गुष्ठमुष्टिवर्द्धनाः । येषु साङ्गुष्ठमुष्टिनिवेशितेषु किञ्चिदभ्यधिकपरिमाणतया अल्पाङ्गुष्ठसमुच्छ्रासात् मुष्टिर्वर्द्धते ।

परिमाणान्तराण्याहाङ्गिराः ।

कपित्थ-विल्व-मात्रान् वा पिण्डान् दद्यात् विधानतः ।
कुक्कुटाण्डप्रमाणान् वा यदिवामलकैः समान् ।
वदरेण समान् वापि दद्याच्छ्रद्धासमन्वित इति ॥

पिण्डदानेनापि पितॄणां तृप्ति-प्रीति-सङ्गतयो भवन्तीत्येवंविधे विधौ श्रद्धां बद्ध्वा वदरमात्रप्रमाणानपि पिण्डान् दद्यात्। न पुनः किं वदरमात्रैः पितॄणां भविष्यति इत्येवमश्रद्धामाविष्कृत्य दद्यादिति। एषाञ्च परिमाणानां शक्तिभेदेन व्यवस्था वेदितव्या ।

अत्र व्यवस्थान्तरयुक्तानि कानिचित्परिमाणान्याह मरीचिः ।

आर्द्रामलकमात्रांस्तु पिण्डान् कुर्व्वीत पार्व्वणे ।

एकोद्दिष्टे विल्वमात्रं पिण्डमेकन्तु निर्वपेत् ॥
नवश्राद्धे स्थूलतरं तस्मात् पिण्डन्तु निर्वपेत् ।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरं ॥

'पार्वणे' एकोद्दिष्टेतरश्राद्धे । पार्वणग्रहणं व्यवस्थार्थं । प्रकरणात् पार्वणान्वये लब्धे पार्वणग्रहणमनुवाद इति तु स्मृतिचन्द्रिकाकारः । स तु श्लोकोत्तरार्द्धं न पर्यालोचितवानिति मन्यामहे । अत्रामलकमात्रानेव पार्वणे कुर्वीतेति न व्याख्येयं । किन्त्वामलकमात्रान् पार्वण एवेति । अतश्च पार्वणेऽप्यामलकाधिकपरिमाणपिण्डनिर्वापाचारदर्शनं न विरुध्यते । विल्वमात्रमित्यनेन विल्वान्यूनमामलकादिपरिमाणमेव निवर्त्यते न त्वधिकमपि । तथा च शिष्टाचारोनुगृहीतो भवति । 'नवश्राद्धं' आशौचमध्ये प्रथमतृतीयादिदिनेष्वेकादशे च दिने विहितं श्राद्धं । तस्यैकोद्दिष्टत्वेपि न तत्र विल्वमात्रं किन्तु तस्मादपि स्थूलतरं निर्वपेत् । श्राद्धमन्तरेणैवाशौचमध्ये 'प्रतिवासरं' प्रतिदिवसं नवश्राद्धपिण्डादपि स्थूलतरं पिण्डं निर्वपेत् ।

पित्राद्येकैकवर्गसम्बन्धिनः पिण्डत्रयस्य यथोत्तरं परिमाणाधिक्यमुक्तं मैत्रायणीयपिण्डपितृयज्ञसूत्रे ।

दर्व्योद्धृत्योद्धृतेषु पिण्डान्निदधाति पितुर्नामासावेतत्ते ये चात्र त्वा नु तस्मै तेभ्यश्च स्वधेति प्रथमं पितामहस्य नाम्ना स्थवीयांसं मध्यमं, प्रपितामहनाम्ना स्थविष्ठं दक्षिणं, द्वयोः परयोर्नामनी गृह्णन् मूलदेशे लेपं निर्मार्ष्टि ।

इति पिण्डपरिमाणविषयोविधिः ।

अथ पिण्डनिर्वापाङ्गभूतं कर्मसंस्थानं ।

तच्च प्राचीनावीत-सव्यजानुनिपातन-दक्षिणामुखत्व-पराचीनपाणित्वादिरूपं, इदञ्च सकलपित्र्यकर्मसाधारणमपि पिण्डनिर्वापैकसम्बद्धैतत्प्रतिपादकनानावचनसञ्चिघृत्तयात्र निरूप्यते । तत्र तावत्प्राचीनावीतं कर्त्तव्यं । "दक्षिणतः प्राचीनावीती" इति तैत्तिरीयश्रुतेः । 'प्राचीनावीती लेखां त्रिरुदकेनोपनयेत्" इत्यवनेजनात्प्रभृति प्राचीनावीतविधायकादाश्वलायनसूत्रात् । अत ऊर्ध्वं "प्राचीनावीती कर्माणि करोति" इति मार्जनात्प्रभृति प्राचीनावीतिविधायकादापस्तम्बसूत्रात् "प्राचीनावीतिना वाग्यतेन कृत्यं" इति लेखाकरणारम्भे गोभिलसूत्राच्च "अथ प्राचीनावीती भुवमुपलिप्योल्लिख्य" इति कटसूत्राच्चेति । तदेतत् प्राचीनावीतमुपलेपनादारभ्य पिण्डप्रतिपत्तिपर्यन्तं वक्ष्यमाणापवादस्थानानि विहाय कर्मकर्त्रा सम्पाद्यं । प्राचीनावीतवदुपलेपनात्प्रभृति भूमौ वामजानुनिपातनमपि कर्त्तव्यं ।

तथा च ब्रह्माण्डपुराण-वायुपुराणयोः ।

मधु-सर्पिस्तिलयुतांस्त्रीन् पिण्डान्निर्वपेद् बुधः ।
जानु कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥

जानु कृत्वेत्यनया पूर्वकालताभिधायिन्याक्त्वा श्रुत्या पाठक्रमबाधेन जानुपातनस्य पिण्डनिर्वापात् पूर्वकालमनुष्ठेयता प्रतिपाद्यते । सव्यमिति वचनादर्थाद्दक्षिणस्य जानुनो भूमावपातनं गम्यते । अतश्च श्राद्धकर्त्तोत्कटकम्बलावस्थितः सव्यं जानु भूमौ निवेश्य दक्षिणञ्चानिवेश्योपविशेदित्युक्तं भवति ।

अथ पूर्वोक्तपरिमाणान्यतमपरिमाणकं पिण्डं कृत्वा दक्षिणपा-

णिनोपाददीत। "औदकेनैव विधिना निर्वपेद्दक्षिणामुखः" इति पूर्वप्रदर्शितान्मनुवचनात्। दक्षिणपाणिगृहीते खड्गादिपात्रे वा पिण्डमुपाददीत "पात्राणां खड्गपात्रेण पिण्डदानं विधीयते। राजतौदुम्बराभ्यां वा हस्तेनैवाथ वा पुनः" इति मरीचिवचनात्।

'खड्गः' खड्गाख्यश्वापदविशेषः, तल्ललाटास्थिसम्भवं पात्रं 'खड्गपात्रं'। 'राजतं' रजतमयं। 'औदुम्बरं' ताम्रमयं। खड्गादेः प्रशस्ततरस्य प्रथमकल्पत्वेनोपादानात्तदभावे येन केनचित्पात्रप्रकरणोक्तेन पात्रेण पिण्डदानं कर्त्तव्यं। अनन्तरं संयोजितसव्यहस्ताङ्गुलेर्दक्षिणहस्तस्योत्तानस्य पिण्डसहितस्य यथासामर्थ्यमङ्गुष्ठेन पिण्डमस्पृशतः पितृतीर्थमवनतं कुर्यात्।

तत्र तावत्सव्यपाणिसंयोजनं शङ्ख-लिखिताभ्यामुक्तं।

पिण्डं निदध्यात्सव्येन पाणिना दक्षिणपाणिपुरःसरेणेति।

सव्यं दक्षिणेन संयोज्य उत्तानहस्तता तु ब्रह्माण्डपुराणेऽभिहिता।

उत्तानेन तु हस्तेन निर्वपेद्दक्षिणामुख इति।

अङ्गुष्ठस्पर्शनन्तु देवलेनोक्तं।

अपसव्यमपाङ्गुष्ठमिति।

दर्शयिष्यते चैतदुत्तरस्मिन् प्रकरणे वचनं। पितृतीर्थावनमनञ्चापस्तम्बेन पिण्डपितृयज्ञेऽभिहितं।

सव्यञ्चान्वाच्यावाचीनपाणिरिति।

उत्तानएवाधरीकृतपितृतीर्थपाणिरवाचीनः स यस्य कर्तुः स तथा।

आवाचीनमेव पराचीनशब्देनाहाश्वलायनः।

तस्यां पिण्डान्निगृह्णीयात्पराचीनपाणिरिति।

'तस्यामिति दर्भास्तीर्णायां कृतोदकनिनयनायाञ्च लेखायां । पितृतीर्थावनमनञ्च तेन तीर्थेन पिण्डनिर्वापार्थं ।

अत एव शतपथश्रुतिः पितृतीर्थेन पिण्डदानमाह।

स वा इति ददातीति च वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणां तस्मादिति ददातीति ।

ददातीति पितृतीर्थेन ददतोहस्तस्यानुकृतिः प्रदर्श्यते । 'इति च वै देवेभ्य इत्यादावर्थवादेऽनुकरणभङ्ग्यैव देव-मनुष्य-पितृतीर्थानां देवादिप्रतिनियतहोमोद्धरणदानसम्बन्धप्रतिपादनात् ।

षड्त्रिंशन्मतेऽप्युक्तं ।

सव्यं जानु निपात्यैव भूमौ पिण्डान् प्रयत्नतः ।
निर्वपेत् पितृतीर्थेन स्वधाकारमुदाहरन्निति ॥

इति कर्तृसंस्थानं ।

अथ देवता-मन्त्रक्रम-संख्याविकल्पसहितं पिण्डदानाख्यं प्रधान-मुच्यते ।

तत्राह कात्यायनः ।

यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति ये च त्वामन्विति चैक इति ।

'यथावनिक्तं' यत्र यत्र येन च क्रमेण यस्य यस्यावनेजनं कृतं, तत्र तत्र तेनैव क्रमेण तस्य तस्य पिण्डं दद्यात्। अवनेजने च पितृप्रभृतित्रीनितिवचनाद्यथावनिक्तमित्यनेनैवोद्देश्यपित्रादिरूपदेवता-सहिता पिण्डसंख्यापि लब्धा । पिण्डपितृयज्ञप्रकरणस्थञ्चैतद्वचनं। तत्र च पित्रादित्रयवर्गस्यैवैकस्योद्देश्यत्वात् पिण्डानां त्रित्वसंख्यानियमः।

अमावास्यादिश्राद्धे तु वर्गान्तरस्याप्युद्देश्यत्वात् त्रित्वनियमो नास्ति ।
अत एवाह वाजसनेयश्राद्धकल्पे कात्यायनः ।
त्रींस्त्रीन् पिण्डानवनेज्य दद्यादिति ।
असावित्यस्य स्थाने गोत्र-सम्बन्ध-नाम्नामभिधानं कर्त्तव्यत्वेन विवक्षितं ।
अत एवाह पारस्करः ।

अर्घ्यदाने च सङ्कल्पे पिण्डदाने तथा क्षये ।
गोत्र-सम्बन्ध-नामानि यथावत् प्रतिपादयेत् ॥ इति ॥

सङ्कल्पशब्देनात्र द्विजभोजनस्य(१) त्यागोऽभिधीयते । अत्रैतानि यथावत्प्रतिपादयेदितिकथनेनन्यत्रैतेष्वेकतमवैकल्येऽपि न वैगुण्यमिति गम्यते । अत्र गोत्र-सम्बन्ध-नाम्नां किंविभक्त्यन्तानामभिधानं कर्त्तव्यमित्यपेक्षायां कश्चित्तावदेवं मन्यते । एतत्ते इत्येतन्मन्त्रस्थं ते इतिपदं न तावत् प्रथमाबहुवचनान्तस्य प्रथमाद्विवचनान्तस्य वा तदोरूपं । तस्य प्रकृतानुपयोगात् । अत एव चतुर्थ्येकवचनान्तस्य षष्ठ्येकवचनान्तस्य वा युष्मदोरूपं वाच्यं । तत्र देवतायाः सम्प्रदानसारूप्यात्तद्वाचिनः शब्दस्य चतुर्थ्यन्ततैव युक्ता । अतस्तेनेन सहान्वयाकाङ्क्षिणां गोत्र-सम्बन्ध-नाम्नां चतुर्थ्येकवचनान्तानामेवाभिधानं कर्त्तव्यं । पित्रादीनां देवतात्वञ्चैवंविध एवाभिधाने कृते प्रकाश्यते नान्यथा । अतो यथोक्तमभिधानं कर्त्तव्यमिति । अपरस्त्वाह । युष्मदः परोक्षव्यावृत्तव्यक्तिविषयत्वाद्बहुषु समक्षस्थितेष्वेकस्याभिमुखीकरणार्थत्वेन सम्बुद्धेरेवोपयुक्ततमत्वात्तदन्तानामेव गोत्र-सम्बन्ध-नाम्नामभिधानं युक्तं । असा-

(१) द्विजभोज्यस्यान्नस्येति ग० ।

विति प्रथमानिर्देशस्याविवक्षायां प्रमाणाभावाच्च। यस्तु लोके प्रयोगः "स कथं वीरायते द्रुह्यति स कुतस्त्वाञ्चैत्रं जेष्यति" इति स तु तदवस्थस्य कारकताभिधायकत्वेन वा प्रकारान्तराभिमुखीकृतयुष्मदर्थाधिष्ठानविषयत्वेन वा हेतुपरत्वेन वा प्रशंसार्थत्वेन वोपयुज्यते । प्रकृते पुनरेतेषां मध्ये नैकस्यापि सम्भवः। प्रमीतस्य हि पूर्वजन्मप्रवृत्तगोत्रसम्बन्ध-नाम्नामिदानीमवर्त्तमानत्वेन चैत्रत्वविशेषोपलक्षकत्वात्कारकादिरूपस्यार्थसमर्पकत्वायोगात् । अतः सम्बुध्यन्तानामेव गोत्रादीनामभिधानं कर्त्तव्यं । सूत्रान्तरे चैवमेवाभिधानं दृश्यते एतत्ते पितरेतत्ते पितामहैतत्ते प्रपितामहेत्यादि । एतदित्ययं निर्वप्यमानस्य पिण्डस्य निर्देशः । ननु कथं पुंलिङ्गस्य नपुंसकलिङ्गेन शब्देन निर्देशः । उच्यते ।

"प्रविश्य पिण्डीकुद्यस्य पिण्डं पतति" इति महाभाष्यादौ पिण्डशब्दस्य स्त्री-नपुंसकयोरपि प्रयोगदर्शनात् नपुंसकेन निर्देशो न विरुध्यते। उपाध्यायकर्कस्त्वन्नमित्यध्याहारः कार्य्य इत्युक्तवान्। तन्तु स्मृतिचन्द्रिकाकारो न मन्यते। स ह्याह। अनन्यगतित्वेऽध्याहारः क्रियेत।

न चात्रानन्यगतित्वं, पिण्डशब्दस्य नपुंसकलिङ्गस्य दर्शितत्वादिति । अत्रेदमुच्यते। नायं नपुंसकप्रयोगोपपादनार्थमध्याहारः। किन्तु मन्त्रवाक्यपरिपूरणार्थः। अनुमतश्च "इषे त्वेत्यादौ च्छिनद्मीत्यादेर्वाक्यपरिपूरणार्थोऽध्याहारः। दृश्यते चेदं क्षेत्रमिदं गृहमिदं धनन्तुभ्यं दीयत इति लोके प्रयोगः। उपलक्षणार्थश्च कर्कभाष्येऽन्नशब्दः। अतश्चैतत्ते इत्यस्यानन्तरं अन्नमिति पिण्डमिति वाध्याहारः कार्य्यः ।

अनयोश्च व्यवस्थामाह लौगाक्षिः ।

महालये गयायाञ्च प्रेतश्राद्धे दशाहिके ।

पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्त्तयेत् ॥

'महालये' तीर्थविशेषे । 'प्रेतश्राद्धे' इति सपिण्डीकरणान्तेषु श्राद्धेषु । 'दशाहिके' श्राद्धव्यतिरेकेणापि दशाहनिर्वर्त्त्ये पिण्डदाने । अन्नशब्दस्य चानन्तरं स्वधाशब्दः प्रयोज्यः । मन्त्रपूर्वं स्वधेति देवल-वचनात् ।

स्वधाशब्दानन्तरं नमःशब्दोऽपि प्रयोज्य इत्याह शाण्ड्यायनिः ।

असावेतत्त इत्युक्ता तदन्ते च स्वधा नमः ।

अत्र चाभियुक्ताः स्वधा-नमःशब्दान्तं मन्त्रमुच्चार्य्य पुनश्चेदं-शब्देनान्नं निर्द्दिश्य तैरेव गोत्रादिभिश्चतुर्थ्यन्तैः पित्रादीनुद्दिश्य नम इत्युच्चारयन्ति। ननु मन्त्रगतेनैव ते इति चतुर्थ्यन्तेन पित्रादीनां देवतात्वस्य प्रकाशितत्वात् किमर्थं पुनर्गोत्रादीनां चतुर्थ्यन्तानां प्रयोगः । अथ गोत्रादिभिरपि देवताप्रकाशकैर्भाव्यमिति पुनः प्रयोग इति मतं । तन्न । देवदत्तैतत्ते वासो दीयत इत्यत्रापि पुनश्चतुर्थ्यन्तप्रयोगप्रसङ्गात्। अत्र ब्रूमः। मन्त्रवाक्येन प्रकाशितोऽपि त्यागः पुनस्तत्रामाचारानुसारात् लौकिकेनापि वाक्येनाभिव्यक्ती-क्रियते । तत्रेदं प्रयोगवाक्यं । अमुकगोत्रास्मत्पितरमुकशर्मन्नेतत्तेऽन्नं स्वधानम इदममुकगोत्रायास्मत्पित्रे अमुकशर्मणे न ममेति। अन्येषां तु प्रयोगवाक्यानि तत्र तत्र दर्शयिष्यन्ते । अत्र चैके सूत्रकारा असावेतत्त इत्यस्यानन्तरं ये च त्वामन्विति मन्त्रशेषमामनन्ति । स तु मन्त्रशेषो वाजसनेयिभिर्न प्रयोज्यः ।

अत एव शतपथे अस्य निन्दार्थवादपूर्वकः प्रयोगो निषिध्यते ।

स ददात्यसावेतत्त इत्येव यजमानस्य पित्रे ये च त्वामन्वित्यूहैक-आहुः तदु तथानुब्रूयात् स्वयं वैतेषां सह येषां सह तस्माद्ब्रूयात् असावेतत्त इति यजमानस्य पित्रे असावेतत्त इति पितामहायासावे-तत्त इति प्रपितामहायेति ।

ये च त्वामित्यस्य पारमार्थिकस्तावदयमर्थः । 'त्वामनु' ये त्वदनु-चरीभूय त्वया सह ये वर्त्तन्ते, तेभ्यश्चैष पिण्ड इति निन्दा त्वेवं, त्वां प्रमीतमनु पश्चाद्भावेन सह ये भवन्ति तेभ्योऽप्ययं पिण्डोऽस्त्विति।तदे-तदमङ्गल्यमभिधानं भवति। यतोऽयं पिण्डदानं कुर्वाणः पुत्रादिभि-र्ये च त्वामन्विति मन्त्रेण येषां प्रमीतानां सहेत्याह तेषां पश्चाद्भूतः स्वयमेव सह भवति । अतश्चासौ स्वस्मा एव पिण्डदानं करो-तीति प्रतिभाति । तथाचैतदमङ्गल्यं। अतस्तथा न ब्रूयादित्यस्याः श्रुतेरर्थः ।　देवलस्त्वेतमेव　मन्त्रशेषं विदधानस्त्रिलाधिकपिण्ड-संख्यामाह ।

पितृपूर्वं च नामानि त्रयाणां कीर्त्तयेच्छनैः ।
अपसव्यमपाङ्गुष्ठं मन्त्रपूर्वं स्वधेति च ॥
एतत्ते तत ये च त्वामन्वित्यावापयेत्पितुः ।
तथा पितामहस्यापि तत्पितुश्च तथा वपेत्।
सामान्यमिति शेषाणाञ्चतुर्थं पिण्डमावपेत् ॥

अस्यार्थः। पित्रादीनां त्रयाणां नामानि पितृपूर्वं पित्रादि-क्रमेण कीर्त्तयेत्। सम्बुद्ध्यन्तान्यभिदधीत नामानीति गोत्रादीना-मुपलक्षणं। अनन्तरं मन्त्रमुच्चार्य्य स्वधेति ब्रूयात्। एतत्ते तत इत्या-दिना मन्त्रोदर्शितः । अत्राप्येतत्त इत्यस्यानन्तरमन्नमिति पिण्डमि-

ति वा प्रयोज्यं। एवं समन्त्रकेण स्वधान्तेन वाक्येनानन्यत्वा पूर्ववचतुर्थ्यन्तगोत्रादिशब्दात्मकं पित्रे न ममेति लौकिकमपि वाक्यमनुकीर्त्त्य प्रथमं पिण्डं निर्वपेत्। पितृशब्दस्थाने पितामहशब्दं प्रयुज्य पितृनामस्थाने पितामहनाम च प्रयुज्य पितामहाय द्वितीयं वपेत्। एवमेव सम्बन्ध-नाम्नोरूहं कृत्वा प्रपितामहाय तृतीयं वपेत्। शेषाणां प्रपितामहात्परेषां त्रयाणां सामान्यमेतदन्नं स्वधा न ममेति चतुर्थं वपेत्। 'अपसव्यमपाङ्गुष्ठं' अपगतसव्यहस्तमङ्गुष्ठवर्जितं च यथा भवति तथा वपेत् असाधनीभूताङ्गुष्ठेन दक्षिणहस्तेन वपेदित्यर्थः। अत्र सव्यहस्तस्य पिण्डस्पर्शो निषिध्यते न तु दक्षिणहस्तान्वारम्भोऽपि। अथवापसव्यमिति पितृतीर्थेन। अपसव्यशब्दस्य पितृतीर्थाभिधायकत्वमपि कर्कादिसम्मतत्वेन गृह्यते। अत्र प्रयोगवाक्यं। अमुकगोत्रास्मत्तातामुकशर्मन्नेतत्तेऽन्नं ये च त्वामनु स्वधा इदं अमुकगोत्रायास्मत्तातायामुकशर्मणे न ममेति। एते च पिण्डा दक्षिणापवर्गा देयाः। चतुर्थस्तु वैकल्पिकः। स च प्रपितामहात्परेषां नाम-गोत्रादिग्रहणं विनैव देयः। तदेतन्मन्त्रान्तरं दर्शयन्नाहापस्तम्बः।

सकृदाच्छिन्ने वर्हिषि दक्षिणापवर्गान् पिण्डान् दद्यात्येतत्ते ततासौ ये च त्वामन्वित्येतैः प्रतिमन्त्रं तूष्णीं चतुर्थं सकृतात्सतः प्रपितामहप्रभृतीन् नानाम गृहीतं गच्छति।

दक्षिणतोऽपवर्गः समाप्तिर्येषान्ते 'दक्षिणापवर्गाः'। एतदुक्तं भवति। वर्हिषि प्रथमं पिण्डं निधाय तस्माद्दक्षिणेन द्वितीयं तस्मादपि दक्षिणेन तृतीयं तस्मादपि चतुर्थमित्येवं दद्यादिति, 'प्रतिमन्त्रं' एकैकेन मन्त्रेणैकैकं पिण्डं दद्यादित्यर्थः। मन्त्रान् दर्शयति 'एतत्त इत्यादिना।

एतत्ते ततासौ ये च त्वमनु एतत्ते प्रपितामह ये च त्वामन्वित्यन्तैः तैत्तिरीयब्राह्मणे क्रमेणाम्नाता मन्त्राः सूत्रकारेण प्रथममन्त्रोच्चारणेन दर्शिताः। 'असाविति व्याख्यातोऽर्थः। चतुर्थन्तु पिण्डं तूष्णीममन्त्रकमेवं निर्वपेत्। 'कृताकृतः' वैकल्पिकः। 'प्रपितामहप्रभृतीनित्यतद्गुणसंविज्ञानोबहुव्रीहिः। प्रपितामहात्परान् चोनुद्दिश्य चायं दातव्य इत्यर्थः। अत्र हेतुमाह 'नानामग्रहीतं गच्छतीति। नामग्रहणमन्तरेण त्यक्तं हविर्देवतां न प्राप्नोतीति। गोत्र-सम्बन्ध-नामानुकीर्त्तितपितृव्यतिरिक्तानां प्रमीतसर्वसम्बन्धानामुद्देशेनायं चतुर्थः पिण्डोदीयत इतिमन्त्रान्तरलिङ्गादवगम्यते।

दर्शितश्चासौ मन्त्रो लौगाक्षिणा।

पितृवंशे मृता ये च मातृवंशे तथैव च।
गुरु-श्वशुर-बन्धूनां ये चान्ये बान्धवा मृताः॥
ये मे कुले लुप्तपिण्डाः पुत्र-दारविवर्जिताः।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम।
तेभ्यः पिण्डं मया दत्तमक्षय्यमुपतिष्ठतां॥

आश्वलायनस्तु पित्रादिपिण्डदाने मन्त्रान्तरमाह।

एतत्ते ततासौ ये च त्वामन्वाञ्चिति।

गोभिलस्तु मन्त्रान्तरमाह।

असावेष ते पिण्डो ये चात्र त्वानु यांश्च त्वमनु तस्मै ते स्वधेति। मैत्रपिण्डपितृयज्ञे।

एतत्ते मम पितरसाविति पितुर्नाम गृहीत्वैतत्ते मम पितामहा-

साविति पितामहस्यैतत्ते मम प्रपितामहासाविति प्रपितामहस्य ये चात्र त्वानु तेभ्यश्च स्वधेत्यनुषजेदेतत्तेऽमुष्य पितरेतत्तेमुष्य पितामहे-तत्तेऽमुष्य प्रपितामहेति प्रवसति यजमानोऽध्वर्युः ।

शङ्ख-लिखितौ ।

सर्वान्नप्रकारमादाय पिण्डान्निदध्यादेकैकन्त्रिरभिमन्त्र्यासावेतत्त इति दर्भेषु ।

अत्रैकैकं पिण्डं पृथिवी रचितेत्यादिनैकैकेन मन्त्रेण त्रिरभिम-न्त्र्यासावेतत्त इति निदध्यादिति महार्णवप्रकाशकाराः ।

एकैकमेकैकस्मिन् पिण्डे विनियुञ्जानस्तान्मन्त्रान् प्रतीकग्रहणेन दर्शयति यमः ।

पूर्वं पिण्डं प्रयच्छेत्तु पित्र्यन्तु पृथिवीति च ।
पितामहाय त्वपरमन्तरिक्षेति दापयेत् ॥
प्रपितामहाय ततस्तृतीयन्तु निवेदयेत् ।
द्यौर्दर्विरिति मन्त्रेण श्रुतिरेषा पुरातनी ॥

विष्णुरप्याह ।

उच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु पृथिवीदर्विरक्षितेत्येकं पिण्डं पित्रे निदध्यात् । अन्तरिक्षं दर्विरक्षितेति द्वितीयं पितामहाय, द्यौर्द-र्विरक्षितेति तृतीयं प्रपितामहायेति ।

अस्यार्थं हरिहरो व्याख्यातवान् । पृथिवीदर्विरक्षिता तृप्तिः स्वधा-नुपस्तातां पृथिवीदर्विमक्षितां तृप्तिं स्वधामनुपस्तामग्निरिव पृथि-वीमुपजीवासौ येचात्र त्वान्वेषान्ते स्वधा इत्यनेन मन्त्रेणैकं पिण्डं पित्रे निदध्यात् । अन्तरिक्षं दर्विरक्षिता तृप्तिः । स्वधानुपदस्तान्तदन्तरिक्षं

दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां वायुरिवान्तरिक्षमुपजीवासौ ये चात्र त्वामन्वेषा ते स्वधेति द्वितीयं पिण्डं पितामहाय निदध्यात् । द्यौर्दर्विरक्षिता तृप्तिः स्वधानुपदस्ता तान्दिवं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां सूर्य्य इव दिवमुपजीवासौ ये चात्र त्वां त्वेषां ते स्वधेति मन्त्रेण तृतीयं पिण्डं प्रपितामहाय निदध्यात् ।

मन्त्रार्थोऽपि तेनैव व्याख्यातः । येयं प्रसिद्धा पृथिवी सैषेयं प्रथमपिण्डरूपेणावस्थिता । अनेन च प्रथमपिण्डे पृथिवीबुद्धिः कर्त्तव्येति गम्यते । इयञ्चान्नसाधनत्वाश्रयत्वाभ्यां दर्विसारूप्याद्दर्वी । सत्कर्मसाधनीभावद्वारेण दूरितदारणाद्वा दर्विः । 'अक्षिता तृप्तिः' । अविनाशिनी तृप्तिः । चराचरैर्भूतैरहरहस्तृप्तिसाधनत्वेनोपजीव्यमानापि न क्षीयत इत्यर्थः । 'स्वधा' अलौकिकपितृप्रीतिहेतुत्वात् । 'अनुपदस्ता' दसुरुपक्षये अनुपक्षीणापचयरहितेत्यर्थः । तां पृथिवीं दर्विमक्षितां तृप्तिं स्वधामनुपदस्तां प्रथमपिण्डरूपां 'उपजीव' भुङ्क्ष्व । 'असावित्यत्र प्रथमपिण्डोद्देश्यस्य पित्रादेः सम्बुद्ध्यन्तं नाम प्रयोज्यं, हे पितः हे मातामहेत्यादि । 'अग्निरिव' यथाग्निः पृथिव्यधिपतिर्भूत्वा प्रसिद्धां पृथिवीमुपजीवति तथा अनेन च प्रथमपिण्डोद्देश्येऽग्नितुल्यताबुद्धिः कर्त्तव्येति गम्यते । 'ये च त्वामनु' येचात्र परलोके त्वामनुस्थिताः तवानुचरभूतास्तेप्युपजीवन्तु । 'एषा ते स्वधा' त्वदर्था एषा स्वधा, भवतीति शेषः । अन्तरीक्षं तमोदारणादन्नसाधनत्वाद्दर्विः । अन्नसाधनं त्वं च वृष्टिहेतुत्वात् । अन्तरीक्षाद्धि वृष्टिर्जायते । 'वायुरिव' यथा वायुरधिपतिर्भूत्वान्तरिक्षमुपजीवति तथा त्वमेतमेवंरूपं पिण्डं । अनेन द्वितीयपिण्डोद्देश्ये पितामहादौ

वायुतुल्यताबुद्धिः कर्त्तव्येति गम्यते । द्यौस्तु दुःखदारणाद्दविः । स्वर्गस्य निरतिशयसुखात्मकत्वात् दुःखदारकत्वं । 'सूर्य्य इव' यथा सूर्य्योऽधिपतिर्भूत्वा दिवमुपजीवति । अनेन तृतीयपिण्डोद्देश्ये प्रपितामहादौ सूर्य्यतुल्यत्वबुद्धिः कर्त्तव्येति गम्यते । 'असावित्यत्र तृतीयपिण्डोद्देश्यस्य प्रपितामहादेः सम्बुध्यन्तं नाम प्रयोज्यं । शेषं गतार्थं । शौनकाथर्वणश्राद्धकल्पे त्वेतैरेव मन्त्रैः पिण्डार्थान्नोद्धरणमुक्त्वा एतत्ते प्रपितामहैतत्ते पितामहैतत्ते पितरिति मन्त्रैः प्रपितामहादारभ्य पितृपर्य्यन्तं विपरीतेन क्रमेण पिण्डदानमुक्तं । "द्यौर्दर्विरचितेति तिसृभिः सर्व्वान्नप्रकारमुद्धृत्याज्येन सन्नीय त्रीन् पिण्डानसंहतान्निदधात्येतत्ते प्रपितामह" इति । पिप्पलादाथर्वणश्राद्धकल्पेऽपि । "पृथिवीदर्विरिति सर्व्वान्नप्रकारानुद्धृत्याज्येन सन्नीय बर्हिषद इति दर्भान् दक्षिणाग्रान् परिस्तीर्य्य एतत्ते तत इति त्रीन् पिण्डानसंहतान् दद्यात्" इति । तदेवमेषु मन्त्रेषु पित्रादीनामग्नि-वायु-सूर्य्योपमत्वाभिधानादर्थात्तेषामग्न्यादिसारूप्येणानुसन्धानं कार्य्यमिति गम्यते ।

व्यासवचने तु वरुणादिरूपत्वेनानुसन्धानं कर्त्तव्यमिति प्रकाश्यते ।

प्रथमोवरुणोदेवः प्रजापतिरथापरः ।

तृतीयोऽग्निः स्मृतः पिण्ड एष पिण्डविधिः स्मृतः ॥ इति ॥

अत्र पिण्डदेवतारूपाः पित्रादयोवरुणादिरूपेण ध्येया इत्येवंपरमिदं वाक्यमिति स्मृतिचन्द्रिकाकारेणोक्तं । "अनिरुद्धः स्वयं देव इत्यादि भविष्यत्पुराणोक्तप्रकारेण वा पिण्डेषु देवताभिध्यानं कर्त्तव्यं । तत्र हि श्राद्धकर्त्ता स्वस्वरूपमनिरुद्धरूपेण ध्येयं । प्रथमोद्देश्यस्तु प्रद्युम्नरूपेण, द्वितीयस्तु संकर्षणरूपेण, तृतीयस्तु वासुदेवरूपेण ध्येय

इत्युक्तं। एतच्च सर्व्वं पूर्व्वमेव विस्तरेण प्रतिपादितं। अत्रैतावत्सम्पन्नं। वरुणादिरूपेण पित्रादीननुसन्दधानस्तानुद्दिश्य पिण्डान् दद्यादिति।

पिण्डदाने मन्त्रान्तरमाह व्यासः।

ब्रूयाच्छ्राद्धेषु सावित्रीं पिण्डे पिण्डे समाहितः।
सोमायेति च वक्तव्यं तथा पितृमतेऽपि च॥

अथ द्विपितृकं कर्त्तारं प्रति पिण्डपितृयज्ञसूत्रे विशेषमुपदिशत्यापस्तम्बः।

यदि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति। यो हि क्षेत्रजादिर्द्विपितृकः स्यात्स तु पिण्डान्निर्वपन्नेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदुद्दिशेत् प्रथमे पिण्डे द्वौ पितरौ, द्वितीये द्वौ पितामहौ, तृतीये द्वौ प्रपितामहाविति।

एतदपि पूर्वमेव विस्तरेणोक्तं। पित्रादीनामज्ञाने तु पिण्डदाने मन्त्रान्तराणि दर्शयति स एव।

यदि बन्धुं न विन्द्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डन्दद्यात्। स्वधा पितृभ्योन्तरीक्षसद्भ्य इति द्वितीयं। स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयमिति।

बन्धुशब्देन नामाभिधीयते।

तथा च गोभिलः।

यदि नामानि न विन्द्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्। स्वधा पितृभ्योन्तरीक्षसद्भ्य इति द्वितीयं। स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयं निधाय जपत्यत्र पितरोमादयध्वमिति।

गोत्राज्ञाने त्वाह व्याघ्रपात् ।

गोत्रनाशे तु काश्यप इति ।

गोत्राज्ञाने काश्यपगोत्रग्रहणं कर्त्तव्यं, काश्यपगोत्रस्य सर्वसाधारणत्वात् ।

तथा च शतपथश्रुतिः ।

तस्मादाहुः सर्वाः प्रजाः काश्यप्य इति ।

यदेतत्पित्रादीनां गोत्र-नाम्नोरज्ञानेऽभिहितं तन्मातामहादीनामपि वेदितव्यम् ।

जीवत्पितृकं कर्त्तारन्तु प्रतिपिण्डदाने निषेधमाहापस्तम्बः ।

यदि जीवत्पिता न दद्याद्धोमान् कृत्वा विरमेदिति ।

एतच्च पिण्डपितृयज्ञमधिकृत्याप्युक्तं तुल्यन्यायत्वादन्यदपि पिण्डदानं निषेद्धुं प्रभवत्येव । वैकल्पिकश्चायं निषेधः । एतच्च पूर्वमेव प्रपञ्चेनोपपादितम् । अथ षड्दैवत्यादौ श्राद्धे पिण्डदाने च स्वतन्त्रे वा मातामहादिदैवत्ये पित्रादिगोत्र-सम्बन्ध-नाम्नां स्थाने मातामहादिगोत्र-सम्बन्ध-नामानि प्रयुज्य प्रयोगोऽनुष्ठेयः ।

तदाहापस्तम्बगृह्यभाष्यार्थसंग्रहकारः ।

योज्यः पित्रादिशब्दानां स्थाने मातामहादिकः ।

अन्नहोमे तथा स्पर्शे जलपिण्डादिदानके ।

यन्मे मातामहीत्यादि तत्रोदाहरणं भवेत् ॥ इति ॥

'अन्नहोमे' यन्मे माता प्रलुलोभ चरत्यनुव्रतेत्यादिभिर्मन्त्रैरग्नौकरणान्नहोमे । 'स्पर्शे' एष ते तत मधुमानूर्मिः सरस्वानित्यादिभिर्मन्त्रैर्ब्राह्मणभोजनार्थान्नस्पर्शे । 'जलपिण्डादिदानके' मार्जयन्तां

मम पितर इत्यादिजलदानमन्त्रे एतत्तेऽसौ ये च त्वामन्वित्यादि-पिण्डदानमन्त्रे च पित्रादिशब्दानां स्थाने मातामहादिकः शब्दो योज्यः । 'यन्मे मातामहीत्यादि तत्रोदाहरणं भवेदित्यस्यायमर्थः । तथाच पित्रादिस्थाने मातामहादिशब्दप्रयोगे यन्मे माता प्रलुलोभ चरत्यनुव्रता तन्मे रेतः पिता वृङ्क्तामिति मन्त्रे मातामहानां होमे कर्त्तव्ये मन्त्रगतमातृपदस्थाने मातामहीपदप्रक्षेपेण यन्मे मातामही प्रलुलोभेत्येवंसम्पन्न ऊहस्तन्मेरेतो मातामहो वृङ्क्तामित्येवमादीनां चिकीर्षितानामूहानामुदाहरणं । अयं चापस्तम्बगृह्यानुसारिभिरूहो ग्रहीतव्यः । अन्यैस्त्वेतदुदाहरणीकृत्य स्वस्वगृह्याभिमतमन्त्रगतानि पित्रादिपदान्यूहितव्यानि । तत्र षड्दैवत्ये पितृवर्गाय पिण्डार्थां लेखाङ्कृत्वा मातामहवर्गाय पिण्डार्थां कुर्यात् । एकैकशः पितृवर्गाय पिण्डत्रयस्थानेऽवनेजनङ्कृत्वा मातामहवर्गाय पिण्डत्रयस्थानेऽवनेजनङ्कुर्यात् । एवमन्यमप्येकैकं पदार्थं पितृवर्गीयपिण्डेषु समाप्य मातामहवर्गीयेषु समापयेदित्येष पदार्थक्रमोनुसन्धेयः । नवदैवत्ये द्वादशदैवत्ये वा श्राद्धे पिण्डदाने च प्रस्तुते सति तन्मध्यवर्त्तिनि स्त्रीदैवत्ये स्वतन्त्रे वा तद्दैवत्ये स्त्रीलिङ्गानि गोत्र-सम्बन्ध-नामानि प्रयुज्य प्रयोगः कार्य्यः । ये च त्वामन्वित्ययं मन्त्रो यास्च त्वामन्विति प्रयोज्यः । तत्र नवदैवत्ये पितृवर्गीयपिण्डार्थां लेखां कृत्वा ततः पश्चिमेन मातृवर्गीयपिण्डार्थां ततोपि पश्चिमेन मातामहवर्गीय-पिण्डार्थां कुर्यात् । अवनेजन-वर्हिरास्तरणाद्यप्यनेनैव क्रमेण कर्त्तव्यं ।

तदेतदापस्तम्बगृह्ये पितृवर्ग-मातृवर्गावाश्रित्योक्तं ।

द्वैधं दक्षिणाग्रान् दर्भान् संस्तीर्य्य तेषूत्तरैरपोदत्त्वोत्तरैरपोदत्त्वोत्त-

रैर्दक्षिणापवर्गान् इत्वेति द्विधाभूतं यथा भवति तथा दक्षिणाग्रान् दर्भानुल्लिखितदेशे संस्तीर्य्य तत्र पूर्वभागे पित्रादिवर्गार्थं संस्तरणं पश्चाद्भागे तु मात्रादिवर्गार्थं। स्त्रीभ्यश्च पिण्डा इह पश्चिमा स्युरिति गृह्यभाष्यार्थसंग्रहकारवाक्यात्। तथाधिकं विशेषमुपदिशतः शाङ्खा-यनगृह्यकारवचनात्। भुक्तवत्सु पिण्डान् दद्यात्पुरस्तादेके पिण्डान् पश्चिमेन तत्पत्नीनां किञ्चिदन्तर्द्धायेति पितृवर्गपिण्डेभ्यः पश्चिमेन तृणा-दिकं किञ्चिदन्तर्द्धाय पितृ-पितामह-प्रपितामहपत्नीभ्यः पिण्डान् दद्यादिति।

मत्स्यपुराणे।

ततः कृतान्तरे दद्यात्तत्पत्नीभ्यः कुशान् बुधः।
तद्वत्पिण्डादिकं कुर्य्यादावाहन-विसर्जनमिति॥

'उत्तरैः' मार्जयन्तामित्यादिभिर्मन्त्रैः, पुनः 'उत्तरैः' एतन्ते तता-सावित्यादिभिः।

शौनकाथर्वणश्राद्धकल्पे तु पितृवर्गाद्दक्षिणतो मातृवर्गाय पिण्ड-दानमुक्तं।

दक्षिणतः पत्नीभ्यः इदं वः पत्न्या इति।

देवलेन च स्त्रीवर्गे चत्वारः पिण्डा उक्ताः।

हविःशेषं ततो मुष्टिमादायैकैकमादितः।
क्रमशः[१] पितृपत्नीनां पिण्डनिर्वपणं चरेत्॥
ततः पिण्डमुपादाय हविषः संस्कृतं महत्।
ज्ञातिवर्गस्य सर्वस्य सामान्यमिति निर्वपेत्॥

(१) क्रमेणेति ख०।

तदेवमेतत्सिद्धं प्रथमं पितृवर्गाय पिण्डदानं, ततो मातृवर्गाय, ततो मातामहवर्गायेति ।

तदाह सत्यव्रतः ।

पितॄणां प्रथमं दानं मातॄणां तदनन्तरं ।
ततो मातामहानाञ्च क्रमश्चैवं प्रकीर्त्त्यते ॥

अयं च क्रमः सर्वकालिके नवदैवत्ये श्राद्धे न त्वष्टकाकालनिर्वर्त्त्य एवैकस्मिन् ।

यत्तु ब्रह्माण्डपुराणवचनं—

पितृभ्यः प्रथमन्दद्यान्मातृभ्यस्तदनन्तरं ।
ततो मातामहेभ्यश्चेत्यन्वष्टक्यः क्रमः स्मृतः ॥ इति ॥

तन्नूपलक्षणार्थं । तदेवं नवदैवत्ये मातृवर्गस्य देशतः कालतश्च मध्ये निवेश उक्तः ।

तस्यान्यथाकरणे दोषमाहोशनाः ।

अन्तर्मातामहान् कृत्वा मातॄणां यः प्रयच्छति ।
श्राद्धं वा पिण्डदानं वा पितॄणां नोपतिष्ठते ॥

आह सत्यव्रतः ।

अन्तर्मातामहान् कृत्वा मातॄणां यः प्रयच्छति ।
श्राद्धं वा पिण्डदानं वा नरकं स तु गच्छति ॥

गार्ग्योऽप्याह ।

अन्ते निवेशयेद्यस्तु मातृः श्राद्धेषु मानवः ।
स मूढोनरकं याति कालसूत्रमवाक्शिराः ॥

यत्तूक्तार्थं विरुद्धवचनं ।

पितृमातामहाद्यादौ मातरस्तदनन्तरं ।

तर्पणेऽन्वष्टकाश्राद्धे तीर्थे चायं क्रमः स्मृतः ॥ इति ॥

तत् येषां पूर्व्वपुरुषपरम्परयानुष्ठितार्थं तेषामेव श्रेयसेऽस्तु। यस्त्वायं मातृवर्गस्य मध्ये निवेशोऽभिहितः स नान्दीमुखव्यतिरिक्त-नवदैवत्ये नान्दीमुखे त्वादावेव निवेशः ।

अतएव षट्त्रिंशन्मते ।

त्र्याहे केवलाः कार्य्या वृद्धावादौ प्रकीर्त्तिताः ।

सर्व्वत्रैव हि मध्यस्था नान्याः कार्य्यास्तु मातरः ॥

'सर्व्वत्रेति महालयान्वष्टका-गयादिश्राद्धपिण्डदानादौ ।

अत्र येषां गृह्यकारैरमावास्यादौ मातृश्राद्धं पृथक्विहितन्तै-र्द्वादशदैवत्यं श्राद्धं कर्त्तव्यं। पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमितिवचनात् मातामहश्राद्धेऽपि कर्त्तव्ये प्राप्ते प्रकृतिवद्विकृति-रितिन्यायात् पृथङ्मातामहीवर्गस्यापि श्राद्धं कर्त्तव्यं सम्मतञ्च शिष्टानां पितृश्राद्धविकृतित्वं मातामहश्राद्धस्य ।

अतएव मातामहश्राद्धे पितृश्राद्धधर्मातिदेश आपस्तम्बगृह्य-भाष्यार्थसंग्रहकारेण दर्शितः।

मातामहानामप्येवं श्राद्धं कुर्य्यात् प्रयत्नत इति।

अत्र मातामहीवर्गस्य मातामहेभ्यः पश्चिमतः सर्व्वान्ते निवेशः। उक्तप्रायस्त्वाच पदार्थानुष्ठानक्रमः। येषान्तु गृह्यकारैरमावास्यायां मातृश्राद्धं पृथक् नोक्तन्तैरमावास्यादौ पित्राद्युद्देशे क्रियमाणे सप-त्नीकाभिधानं कर्त्तव्यं।

इति देवता-मन्त्र-क्रम-सङ्ख्या-विकल्पसहितं पिण्डदानाख्यं प्रधानं।

अथ हस्तोन्मार्जनं ।

तच्च पिण्डनिर्वापानन्तरं मैत्रायणीयपिण्डपितृयज्ञसूत्रे दर्भेषु पिण्डं समन्त्रकमुक्तं ।

वर्हिषि लेपं निमार्ष्टि यात्र पितरः स्वधा तया यूयं यथाभागं मादयध्वमित्यत्र पितरोमादयध्वमिति ।

मानवमैत्रायणीयपिण्डपितृयज्ञसूत्रे तु प्रथममन्त्रस्य दक्षिणां दिशमन्वीक्षमाणोजपतीति दक्षिणाभिमुखेन जपमात्रे विनियोगोदर्शितः। 'वर्हिषीति दर्भेषु ।

अत्र दर्भाणां मूलमध्याग्रेषु मध्येकस्मिन्नवलेपमार्जनं कार्य्यमित्यपेक्षायां मन्त्रान्तरमुपदिशन्नाह विष्णुः।

अत्र पितरोमादयध्वमिति दर्भमूलेषु करावघर्षणमिति ।

अस्य तु मन्त्रस्य पिण्डाभिमुखेन जपमात्रे विनियोगो बहुसम्मतः। स तु पुरस्ताद्दर्शयिष्यते ।

व्याघ्रोऽप्याह।

दर्भमूलेषु निमृजेद्धस्तलेपं समाहित इति ।

इह कस्य पदार्थस्यानन्तरं केषाञ्च दर्भाणां मूले कांश्च पितॄनुद्दिश्य लेपमार्जनमित्यपेक्षायामाह मनुः ।

पुष्पपिण्डान् पितृभ्यस्तु प्रयतोविधिपूर्वकं ।

तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनां ॥

पुष्पदर्भेषु निधाय। 'प्रयतः' प्रयत्नविशेषवान् । अनैकाग्रत्वादिरूपोमनोधर्मः पदार्थविस्मृतिरूपप्रमादपरिहारोपयोगी प्रयत्नो ग्राह्यः। अनुवादश्चायं सर्वप्रयोगार्थत्वेनास्य प्राप्तत्वात्। 'विधिपूर्वक-

मिति शास्त्रान्तरदृष्टविध्युपसंग्रहार्थं मनुशास्त्रोक्तविधिपूर्वकत्वाभिधाने त्वस्यानर्थक्यं स्यात्। 'तेषु दर्भेष्विति येषु पिण्डनिर्वापः कृतः। 'तमिति येन पिण्डदानं कृतं। 'लेपभागिनामिति लेपभागिनः पितृनुद्दिश्य। ते च मत्स्यपुराणे दर्शिताः।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥ इति॥

'चतुर्थाद्याः' वृद्धप्रपितामहप्रभृतयः। तदेवमयं श्राद्धकर्त्ता वृद्धप्रपितामहादींस्त्रीनुद्दिश्य तेषामयं भागोऽस्त्वित्यभिदधानः प्रथमपिण्डाधारभूतदर्भमूलेषु हस्तं निमृज्यात्। निमार्जनञ्च हस्तलग्नस्यान्नस्योदकस्य वापरेचनाय दर्भेषु संश्लेषणं। अतश्च यदि हस्ते लेपोऽस्ति तर्हि तस्य रेचनाख्यप्रतिपत्त्यर्थं मार्जनं कर्त्तव्यं नान्यथेत्येकं मतं। अपरमपि मतं मेधातिथि-हरिहराभ्यां दर्शितं तद्यथा।

यदि न किञ्चिदपि हस्ते संश्लिष्येत्तथापि हस्तं निमृज्यादेव। न ह्येतत्प्रतिपत्तिकर्मैव येनासति रेचनप्रयोजने न क्रियेत। नह्यत्र श्रूयते हस्तलग्नं निमृज्यादिति। किं तर्हि हस्तमेवेति।

ननु च लेपभागिनामिति श्रूयते, तत्रासति लेपे न प्राप्नोति। उच्यते। साक्षाद्रूपमन्नं कदाचिन्न श्लिष्यति। पिण्डेषु तु वर्त्तमानेष्वन्नरसस्तदूष्मा च संक्रमत्येव हस्ते। स एव चान्नलेप इत्युच्यते। षष्ठी चात्र निमार्जनस्य लेपभागिसम्बन्धितामाह। न च लेपभागिनः प्रत्यक्षदृश्याः सन्ति येषां स्वस्वाम्यादिसम्बन्धो लेपस्य क्रियते। तस्मादविद्यमानेऽपि साक्षादन्नलेपेऽन्नरसं तदूष्माणं वा लेपसंज्ञकं हस्ते संक्रान्तं लेपभागिनामयं भागोस्त्विति ब्रुवन् दर्भमूलेषु निमृज्यादेव।

अतएव विष्णुना करमात्रघर्षणमुक्तं ।

दर्भमूलेषु करावघर्षणमिति ।

हस्तलेपमार्जनानन्तरमुदकुम्भेन तर्पणमाह यमः ।

ततोदर्भेषु तं हस्तं निमृज्यात् लेपभागिनां ।

ततः पानीयकुम्भेन तर्पयेत् प्रयतः पितॄन् ॥

एतच्च तर्पणं दक्षिणादानानन्तरं वदता देवलेन तस्य प्रकारोऽपि दर्शितः।

ततो मुष्टिमुपादाय हविषोऽन्तस्ततः स्वयं ।

कलशं जलसम्पूर्णं गृहीत्वोभयमेव च ॥

पितॄणां ब्राह्मणानाञ्च हस्ताग्रात् प्रभृति चरन् ।

अपसव्यं क्रमात् सर्वांस्तांस्तु पिण्डान् बहिर्मुखः ॥

त्रिरेवं पात्रगं तोयं परीत्य स्रावयेच्छनैः ।

परिक्रम्य च तत्पात्रं तत्रैवाप्यवकुब्जयेत् ॥

इति हस्तोन्मार्जनं ।

अथाचमनादयः पिण्डदानोदीच्याङ्गभूताः पदार्थाः ।

तत्राह मनुः ।

आचम्योदक्परावृत्य त्रिरायम्य शनैरसून् ।

षड़्ऋतूंश्च नमस्कुर्य्यात् पितॄनेव च मन्त्रवत् ॥

हस्तमार्जनानन्तरमाचमनं कुर्य्यात्। एतच्चाचमनं हस्तप्रक्षालन-पूर्वकं त्रिश्च कर्त्तव्यं ।

तथा च ब्रह्मपुराणे ।

ततोदर्भेषु विधिवत् संमार्ज्य च करौ ततः ।

प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत् ॥

त्रिरिति निर्वर्त्त्य पितृकर्माणि सकृदाचमनञ्चरेदित्यस्याप-वादार्थं। तच्च यज्ञोपवीतिना कर्त्तव्यं। आचमनानन्तरं पूर्वधृतान् दर्भान् परित्यज्य दर्भान्तराणि धारयेत्। एतच्चाचमनं पितृभ्योग-न्धादिदानानन्तरं केचिदाचरन्ति। अपरे तु तत्र चात्र चेत्युभयमप्या-चरन्ति। आचमनानन्तरं 'उदक्परावृत्य' उदीचीं दिशं प्रति परिवृत्य परिवर्त्तनेनोत्तराभिमुखो भूत्वेत्यर्थः। 'त्रिः' त्रिवारं, 'आयम्य' निरुध्य। 'शनैः' यथा नातिपीड़ा भवति। 'असून्' प्राणान्। "प्रणवसंयुक्तां(१) गायत्रीं शिरसा सहेत्यादिविहितान् त्रीन् प्राणायामान् कृत्वेति मेधातिथिः। विनैव मन्त्रं प्राणानायम्येति तु कर्कादिबहुसम्मतं। ते च कात्यायनादिवचनेषु प्राणनिरोधमात्रश्रवणात्तावन्मात्रस्य विव-क्षितत्वं मन्यन्ते। 'ऋतून्' वसन्तादीन्, नमस्कुर्य्यात्। पितॄन् नम-स्कुर्य्यात्। एतच्च नमस्कारद्वयं 'मन्त्रवत्' मन्त्रसंयुक्तं कर्त्तव्यं।

तत्र तु नमस्कारे मन्त्रो ब्रह्मपुराणे।

वसन्ताय नमस्तुभ्यं ग्रीष्माय च नमोनमः।
वर्षाभ्यश्च शरत्संज्ञऋतवे च नमः सदा॥
हेमन्ताय नमस्तुभ्यं नमस्ते शिशिराय च।
मास-संवत्सरेभ्यश्च दिवसेभ्यो नमोनमः॥ इति।

पितृनमस्कारे तु मन्त्रः।

नमो वः पितरः इषेत्यादि दर्शयिष्यते। अत्र पिण्डानुमन्त्रणपूर्वक-मुदक्परावर्त्तनं। तच्च सव्यमङ्गं पुरस्कृत्यापसव्यं वा। प्राणायामश्चोत्त-राभिमुखस्यैवावस्थितस्य। नमस्कारस्तु पिण्डाभिमुखावर्त्तनादिनोव-

(१) सव्याहृतिं सप्रणवामिति ग०।

मोत्थानकर्मानन्तरं विधेय इत्येते विशेषाः शास्त्रान्तरात् ग्रहीतव्याः।

तत्र तावत्कात्यायनसूत्रे।

अत्र पितर इत्युक्त्वोदङ्ङास्त आतमनादाव्रत्यामीमदन्तेति जपति।

अत्र पितर इति प्रतीकग्रहणेन समग्रोमन्त्रो दर्शितः। स च विनियोगः सव्याख्यानस्वाम्नातः शतपथे। तत्र जपत्यत्र पितरोमादयध्वं यथाभागमावृषायध्वमिति यथाभागमश्रीतेत्येतदाहेति। तत्रेति पिण्डेषु निहितेषु। पिण्डसमुखः स्थित्वा पितर इत्यादिकमावृषायध्वमित्यन्तं मन्त्रञ्जपेत्। यथाभागमित्यादि व्याचष्टे, यथाभागमश्नीतेत्यादिना। 'उदङ्ङास्ते' उदङ्मुखो भूत्वा 'आस्ते' आसीत। उदङ्मुखीभावस्याप्रदक्षिणावर्त्तनेनेत्युपाध्यायकर्कः।

उक्तं चाश्वलायनसूत्रे।

निवृताननुमन्त्रयेतात्र पितरोमादयध्वं यथाभागमावृषायध्वमिति सव्यावृदुदङ्ङावृत्येति।

'निवृतान्' विधिपूर्वकं दर्भेषु निहितान्। 'सव्यावृत्' सव्यप्रकारकं सव्यमङ्गं पुरस्कृत्यापसव्यं पश्चात् कुर्वन् परिवर्त्तेत अपदक्षिणं परिवर्त्तेतेत्यर्थः। उदङ्ङित्यनेनोदगन्तमेवावर्त्तनं कर्त्तव्यमिति गम्यते।

विष्णुनाप्युक्तं।

दत्त्वा च पिण्डान्निवृताननुमन्त्रयेतात्र पितरोमादयध्वं यथाभागमावृषायध्वमिति। ततः सव्यावृदुङ्मुखः परावृत्येति।

एतच्च सव्यावृदावर्त्तनं केषाञ्चिदेव कर्तृणां न सर्वेषां।

अत्र षड्त्रिंशन्मते।

वामेनावर्त्तनं केचिदुदगन्तं प्रचक्षते।

सव्यं गौतम-शाण्डिल्यौ शाण्डिल्यायन एव चेति ॥

'वामेन' वाममङ्गं पुरस्कृत्येत्यर्थः। 'उदगन्तं' यावदुदङ्मुखो भवति तावदेव नाधिकं। 'केचिदिति गौतम-शाण्डिल्य-शाण्डिल्यायनाख्य-मुनिव्यतिरिक्ता मुनयः। गौतमादयस्तु 'सव्यं' सर्वप्रकारं सव्येनापसव्येन परावर्त्तनं प्रचक्षते। 'उदङ्मान्त' इत्यस्य कालावधिमाह, 'आतमनात्' 'तमनं' ग्लानिः, तदवधि। अत्रोदङ्मुखावस्थानमात्रेण तमनासम्भवाच्छ्वासनिरोधनात्मकं शास्त्रान्तरोपदिष्टं तमनकारणमनुष्ठेयतया सूचितं।

तदाहाश्वलायनः।

यथाशक्त्यप्राणन्नासित्वेति।

'यथाशक्ति' शक्तिमनतिक्रम्य। 'अप्राणन्'। प्राणानिरोधनं कृत्वेत्यर्थः।

तदाह विष्णुः।

यथाशक्ति प्राणानिरोधनं कृत्वेति।

तदनन्तरं 'आवृत्य' आवर्त्तनाख्यक्रियया पिण्डाभिमुखमेत्य। आवर्त्तनञ्च तेनैव मार्गेणेति कर्कः।

अतएव कर्मप्रदीपे।

आवृत्य प्राणमायम्य पितॄन् ध्यायन् यथार्हतः[१]।
जपंस्तेनैव चावृत्य ततः प्राणान् प्रमोचयेदिति ॥

'जपन्' अमीमदन्तेतिमन्त्रमितिशेषः। 'तेनैव' वामेनैव मार्गेण।

---

(१) यथार्थत इति ग०।

प्राणान् 'प्रमोचयेत्' उच्छ्वसेदित्यर्थः। अत्र जपतोऽभ्यावृत्तिः प्रतिपादिता । कात्यायनादौ लभ्यावृत्त्युत्तरकालञ्जप इत्येतावान् विशेषः। आवृत्यामीमदन्तेति जपति । अत्र प्रतीकग्रहणेन समग्रोमन्त्रो-दर्शितः ।

तदेतत्सर्वं सार्थवादके सव्याख्यानं समग्रैतन्मन्त्रसहितं शतपथे श्रूयते ।

अथ पराङ् परावर्त्तते तिर इव वै पितरो मनुष्येभ्यस्तिर इव वै तद्भवति स वै आतमितोरासीतेत्याहुरेतावानेव ह्यसुरिति स वै मुहूर्त्तमेवासित्वाथोपपल्यय जपत्यमीमदन्तपितरोयथाभागमावृषायीषतेति यथाभागमाशिषुरित्येवैतदाहेति ।

'अथेत्यत्र पितर इत्यादिमन्त्रजपानन्तरं। 'पराङ्' पिण्डापेक्षया पराचीनो यथा भवति, उदङ्मुख इत्यर्थः । 'परावर्त्तते' उपविष्ट एवाप्रदक्षिणं भ्रमन्निव गच्छति । पराङ् पर्यावर्त्तते न हेतुवन्निगद-तुल्योऽर्थवादः। 'तिर इव वै पितरोमनुष्येभ्यः', 'तिरः' तिरोहिताः। इवशब्दः किलार्थे हि शब्दार्थे वा, भुञ्जानाः किल लज्जया पितरो मनुष्येभ्यस्तिरोभवितुमिच्छन्ति।

तथा च तैत्तिरीयब्राह्मणे पराङावर्त्तते ह्रीका हि पितर इति।

'ह्रीकाः' ह्रीमन्त इत्यर्थः। पराङ्पर्यावर्त्तनञ्च 'तिरः'। दक्षिणतः पिण्डरूपमन्नं भुञ्जानान् पितॄनुदङ्मुखस्य कर्तुस्तिरोहितान् करोतीति कृत्वा तदेतदनुरूपमपेक्षितञ्च कृत्वा पितॄणां कृतं स्यात्। 'आतमितोः' आतमनात्। श्वासनिरोधजपीड़ावधि । 'एतावानेव ह्यसुः' । एताव-देव जीवितं यावत्तमनमिति　अविवक्षितोऽयमवधिरित्याह । 'स

वैमुहूर्त्तमेवेति । मुहूर्त्तशब्देनात्र श्वासनिरोधजनितग्लानेः प्राचीनः कियानपि कालोलक्ष्यते। 'उपपर्य्यव्य' पुनः पिण्डाभिमुखमावृत्य। 'आम्निषुरिति भुक्तवन्त इत्यर्थः ।

आश्वलायनोऽप्याह ।

अभिपर्य्यावृत्यामीमदन्त पितरोयथाभागमावृषायीषतेति ।

अनेन मन्त्रेण पिण्डाननुमन्त्रयतेत्यर्थः ।

तदाह विष्णुः ।

पर्य्यावृत्यामीमदन्तेत्यामन्त्रेशति।

शाणायणीयसूत्रकृता गोभिलेन त्वमीमदन्तेत्यस्य मन्त्रस्य जपः पर्य्यावर्त्तमानेन कर्त्तव्य इत्युक्तं ।

पिण्डान्निधाय जपत्यत्र पितरो मादयध्वं यथाभागमावृषायध्व-मित्यपर्य्यावृत्य पुरोच्छ्रासादभिपर्य्यावर्त्तमानोजपेदमीमदन्त पितरो-यथाभागमावृषायीषतेति ।

अत्र पिण्डनिधानानन्तरमापस्तम्बेन मन्त्रान्तरप्रदर्शनपूर्व्वकं का-त्यायनाद्युक्तयोर्मन्त्रयोः पाठान्तरेण सह विनियोगोदर्शितः ।

यन्मे माता प्रममाद यच्चचारानुव्रतं तन्मे रेतः पिताङ्क्तामायु-रन्योपपद्यतां पितृभ्यः स्वधायिभ्यः स्वधा नमः, पितामहेभ्यः स्वधा-यिभ्यः स्वधा नमः, प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः, इत्यु-पस्थायात्र पितरोयथाभागं मादध्वमित्युक्त्वापराङावर्त्तते आेष्मणो-व्यावृत्तेः उपास्तेऽमीमदन्तःपितरः सोम्याः इति व्यावृत्तउष्माण्यभिपर्य्या-वर्त्ततेऽव्यावृत्तो वेति ।

आउष्मणोव्यावृत्तेः पिण्डोष्मापगमं मर्य्यादीकृत्येत्यर्थः। तदनन्तर-

ममीमदन्तेत्यनेन मन्त्रेण पिण्डाभिमुखमावर्त्तेत । अत्रामीमदन्तेत्य-स्यानन्तरं केश्चित्पिण्डावशिष्टान्नावघ्राणमुक्ता प्रत्यवनेजनमुक्तं ।
तथाचाश्वलायनसूत्रे ।

घरोः प्राणभक्ष्यं भक्षयेन्नित्यं निनयनमिति ।

नासिकया वहता प्राणेन भक्षणमवघ्राणन्तद्यथा निष्पद्यते तथा चरोः पिण्डावशिष्टस्य भक्षयेत् । पिण्डावशिष्टमन्नमवजिघ्रेदित्यर्थः । अनन्तरं 'नित्यं' नियमेन, 'निनयनं' उदकनिनयनं प्रत्यवनेजनमित्यर्थः । विष्णुनाप्युक्तं ।

अमीमदन्तेत्यनुमन्त्र्य शेषावघ्राणं कृत्वा शुन्धन्तां पितर इति पूर्ववदुदकनिनयनमिति ।

आपस्तम्बसूत्रे तु पिण्डावशेषस्यावघ्राणमुक्ता तस्य यजमानकर्त्तृकं भक्षणं वोक्ता प्रत्यवनेजनमुक्तं ।

यः स्थाल्यां शेषस्तमवजिघ्रति ये समानाः समनसः पितरो यमराज्ये तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पतां, वीरं मे दत्त पितर इत्यामयाविना प्राश्यान्नाद्यकामेन प्राश्योयोऽलमन्नाद्याय तेन वा प्राश्यः पूर्ववदेकस्फायां चीनुदकाञ्जलीन् उपनिनीयेति ।

'आमयावी' रोगी । अयौचित्याद्रोगनिवृत्तिकामता अचिकित्स्य-रोगाभितप्तस्य विशिष्टलोककामिता वेति गम्यते । अन्नाद्यमनन्त-त्कामोऽपि भक्षयेत् । योवान्नाद्याय अलं समर्थः सन् नाद्यात् । अन्नसम्पन्नो भूत्वापि तीक्ष्णतरजठरवैश्वानरविरहेण हविःप्राचुर्या-भावादन्नं भुङ्क्ते सोपि रुचिकामतया प्राश्नीयादित्यर्थः । एतच्च द्वयं मैत्रायणीयपरिशिष्टे नमस्कारानन्तरमुक्तं । शेषमन्नमिव जिघ्रेदाम-

याद्यन्नाद्यकामोवा प्राश्नीयादिति ।

अत्र शेषावघ्राणस्यार्थवादत्वमुक्तं तैत्तिरीयब्राह्मणे ।

ब्रह्मवादिनो वदन्ति प्राश्यां न प्राश्यामितियत् प्राश्नीयाज्जघन्यमन्नमद्यात्प्रमायुकः स्याद्यन्न प्राश्नीयात् अहविः स्यात् पितृभ्य आवृश्च्येत अवघ्रेयमेव तन्नेव प्राशितमप्राशितमिति ।

'ब्रह्मवादिनः' वेदवादिनः। 'वदन्ति' संशय्य निर्णयन्ति। 'जघन्यं' अमङ्गल्यं। 'प्रमायुकः' अपमृत्युमान्। शेषभक्षणरूपप्रतिपत्त्यभावादाहविष्ठं। अतएव तदन्नं पितृभ्यः 'आवृश्च्येत' उच्छिद्येतेत्यर्थः। उक्तं शेषावघ्राणं पिण्डावघ्राणन्तु पुरस्ताद्दर्शयिष्यते ।

अत्रामीमदन्तेति मन्त्रजपानन्तरम्प्रत्यवनेजनात्प्रभृत्युल्मुकनिधानान्तानि पिण्डदानान्याह कात्यायनः ।

अमीमदन्तेतिजपत्यवनेज्य पूर्व्ववत् नीवीं विस्रंस्य नमोव इत्यञ्जलिङ्करोत्येतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णां दशा वा वयस्युत्तरे यजमानल्लोमानि वोर्जमित्यपोनिषिञ्चत्यधायात्रजिघ्रति यजमान उल्मुकसकृदाच्छिन्नान्यग्नाविति ।

अत्र पूर्व्ववदवनेज्येति सम्बन्धः । पूर्व्ववदित्यनेन पूर्वावनेजनेतिकर्त्तव्यतातिदिश्यते। सा चोदपात्रादिरूपा दर्शितैव पूर्वं ।

शतपथस्तु प्रत्यवनेजनेऽपि तामुपदेशेनैव दर्शयन् सार्थवादकं प्रत्यवनेजनमाह ।

अथोदपात्रमादायावनेनिक्ष्वेत्येव यजमानस्य पितरमसाववनेनिक्ष्वेति पितामहमसाववनेनिक्ष्वेति प्रपितामहं तद्यथा जक्षुषेऽभिषिञ्चेदेवं तदिति ।

'जग्धुषे' भुक्तवते, 'नीविं विस्रंस्येति वामकक्षायामन्तरीयवस्त्र-दशासंगोपनं 'नीविः' तां, 'विस्रंस्य' उन्मुच्य। विस्रंसनविधानादितः पूर्व्वन्तस्याः साधारणं कर्त्तव्यमिति गम्यते। 'नमोव इत्यञ्जलिं करोति' नमोवः पितरोरसायेत्यादिभिर्मन्त्रैः प्रतिनमस्कारमञ्जलिं करोति। 'अञ्जलिः' करसंपुटः, अञ्जलिमाबध्य पिण्डाभिमुखः पितृभ्यो नमस्कारान् कुर्य्यादित्यर्थः। ते च मन्त्राः वाजसनेयिभिरेवं पठ्यन्ते।

नमोवः पितरोरसाय नमोवः पितरः शोषाय नमोवः पितरो जीवाय नमोवः पितरः स्वधायै नमोवः पितरो घोराय नमोवः पितरोमन्यवे नमोवः पितरो नमोव इति।

आश्वलायनसूत्रे।

अथैतानुपतिष्ठेत नमोवः पितर इषे नमोवः पितर ऊर्जे नमोवः पितरः शुष्माय नमोवः पितरोघोराय नमोवः पितरोजीवाय नमोवः पितरोरसाय स्वधा वः पितरोनमोवः पितरोनमः एता युष्माकं पितर इमास्माकं वोजीवन्त इह सन्तः स्याम मनोन्वाऊवामहे इति चतसृभिः। मनोन्वाऊवामहे नाराशंसेन सोमेन। पितृणाञ्च मन्मभिः। आत एतु मनः पुनः क्रत्वे दक्षाय जीवसे ज्योक्च सूर्य्यं दृशे पुनर्नः पितरोमनोददातु दैव्योजनः। जीवं व्रातं सचेमहीति।

आपस्तम्बसूत्रे। वीतोष्मसु पिण्डेषु नमोवः पितरोरसायेति नमस्कारान् जपति।

तैत्तिरीयब्राह्मणे।

नमस्करोति नमस्कारे हि पितृणां नमोवः पितरोरसाय नमोवः पितरः शुष्माय नमोवः पितरोजीवाय नमोवः पितरः

स्वधायै नमोवः पितरोमन्यवे नमोवः पितरोघोराय पितरो-
नमोवोय एतस्मिन् लोके स्थ युष्मांस्तेऽनु येऽस्मिन् लोकेमान्तेऽनु य
एतस्मिन् लोके स्थ यूयन्तेषां वसिष्ठा भूयास्थ येऽस्मिल्लोकेऽहन्ते
वसिष्ठोभूयासं मनोन्वाहुवामहे नाराशंसेन सोमेन। पितॄणां च
मन्मभिः। आत एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक् च सूर्य्यं
दृशे। पुनर्नः पितरोमनोददातु दैव्योजनः। जीवं व्रातं सचेमहीति।
मैत्रायणीयसूत्रे।

निह्नुतेऽञ्जलिं कृत्वा नमोवः पितरोमन्यवे नमोवः पितरो
इषे नमोवः पितर ऊर्जे नमोवः पितरः शुष्माय नमोवः पितरो-
रसाय नमोवः पितरोबलाय नमोवः पितरोयज्जीवं तस्मै नमोवः
पितरोघोरन्तस्मै स्वधावः पितरोनमोनमोवः पितरः। येऽच पितरः
प्रेता युष्मांस्तेऽनु य इह पितरोजीवा अस्मांस्तेऽनु येऽच पितरः
प्रेता यूयन्तेषां वशिष्ठा भूया स्थ य इह पितरोजीवाः अहं तेषां
वसिष्ठा भूयासमिति।

निह्नवनं चोपरि पाण्योः करणं। अथ ते प्रस्तरे निह्नवता
इत्यादिषु तथा प्रसिद्धेः।

राणायणीयसूत्रच्छन्दोभिलः।

अथ निह्नुवते पूर्व्वस्यां कर्ष्वां दक्षिणोत्तानौ पाणी कृत्वा नमोवः
पितरोजीवाय नमोवः पितरः शोषायेति मध्यमायां सव्योत्तानौ
नमोवः पितरोघोराय नमोवः पितरोरसायेति। उत्तमायां दक्षि
णोत्तानौनमोवः पितरः स्वधायै नमोवः पितरोमन्यव इति। अथा-
ञ्जलिं कृत्वा जपति। नमोवः पितरः पितरोनमोव इति।

'दक्षिणोत्तानाविति दक्षिणपाणिमुत्तानं कृत्वा तदुत्तरपार्श्वे स्वयं सव्यं पाणिं अधोमुखं कृत्वेत्यर्थः। तद्वैपरीत्येन सव्योत्तानत्वमनुसन्धेयं।

आपस्तम्बेन तु स्वसूत्रे पुंदैवत्य-स्त्रीदैवत्यपिण्डदानविभागेनोपस्थानमन्त्रा दर्शिताः।

तत्र ये च वोऽत्र ये चास्मांस्त्वामनु ते च वहन्तां तृप्यन्तु भवन्तस्तृप्यत तृप्यत तृप्यतेत्येतैर्मन्त्रैः पितृवर्गार्थं पिण्डोपस्थानं। यास्तु वोऽत्र याश्चास्मास्त्वामनु ताश्च वहन्तां तृप्यत तृप्यत तृप्यतेत्येतैर्मन्त्रैः स्त्रीवर्गार्थं पिण्डोपस्थाने कार्य्यमिति मन्त्रलिङ्गादवगन्तव्यं।

शाखान्तरे पुनरमी मन्त्राः। तृप्यन्तु भवन्तः पितरोये च भवन्तोऽनु ये चास्मांस्त्वामनु ते तृप्यन्तु चास्मांस्त्वामनु ते तृप्यन्तु पितामहा ये च भवन्तोऽनु ये भवन्तः प्रपितामहा ये च भवन्तोऽनु ये चास्मांस्त्वामनु ते तृप्यन्तु भवन्त्योमातरोयाश्च भवतीरनु याश्चास्मांस्त्वामनु ते तृप्यत तृप्यन्तु भवन्त्यः पितामह्योयाश्च भवतीरनु याश्चास्मांस्त्वामनु ते तृप्यत तृप्यन्तु भवन्त्यः प्रपितामह्योयाश्च भवतीरनु याश्चास्मांस्त्वामनु ते तृप्यत तृप्यन्त्विति।

व्याख्यातास्त्वेते हरिहरेण। हे पितरः भवन्तस्तृप्यन्तु ये च 'भवतोऽनु' येऽपि युष्मदनुचराः, तेऽपि तृप्यन्तु। बहुवचनं पितृव्याद्यपेक्षं। भ्रातॄणामेकजातानामित्यादिवचनात्। एवं पितामहादिष्वपि यथायथं योजनीयं। ये चास्मांस्त्वामनु ते हविराशंसां कुर्व्वन्ति अदग्धादयस्तेऽपि तृप्यन्त्वेतेन कर्मणा। अन्ते तृप्तिपदाभ्यासोऽतिशयार्थः। स्पष्टार्थमन्यत्।

कठसूत्रे।

अत्र निकृते नमोवः पितरोजीवन्तो भूयास्मेति।

ब्रह्माण्डपुराणे।

सव्योत्तराभ्यां हस्ताभ्यां वदेन्मन्त्रमिमं सदा।

नमोवः पितर इष इति सम्यगतन्द्रितः॥

सव्योत्तराभ्यां दक्षिणपाणिमुत्तानं कृत्वा तदुपरि सव्यपाणिना अधोमुखेनाञ्जलिं बद्धेत्यर्थः। नमस्कारसंख्यामाह 'षट्कृत्व इति। एतच्च सार्थवादकं शतपथे श्रूयते।

अथ नीविमुद्धृत्य नमस्करोति। पितृदेवत्या वै नीविस्तस्मान्नीविमुद्धृत्य नमस्करोति। यज्ञो वै नमो यज्ञियानेवैतानेतत्करोति षट्कृत्वो नमस्करोति षड्वा ऋतवः ऋतवः पितरस्तस्मात् षट्कृत्वो नमस्करोतीति।

अत्र शतपथे प्रत्यवनेजननीविमोचानन्तरं नमस्कार उक्तः।

मनुस्मृतौ तु नमस्कारानन्तरं प्रत्यवनेजनमुक्तं। तस्य च स्थानविशेषः पूर्वावनेजनोदकदेशसाध्यता चोक्ता।

षट्पितृंश्च नमस्कुर्य्यात् पितृनेव च मन्त्रवित्।

उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनरिति॥

यस्योदकस्यैकदेशः पूर्व्वपिण्डस्थाने निनीतः तस्यैवोदकस्य शेषमेकदेशान्तरं पिण्डान्तिके पुनः पिण्डसमीपे निनयेत् अवनेजनरूपेण चारयेत्। प्रतिपत्तिश्चेयन्तस्योदकस्य। तथा च शेषशब्दउपपन्नो भवति। अतः कथञ्चित् तस्याभावे नास्ति निनयनमित्युक्ताह मेधातिथिः। "गृह्ये तु नित्यं निनयनमित्युक्तं" इति। युक्तञ्चैतत्। अतएवाश्वलायनपिण्डपितृयज्ञेऽप्युक्तं। "नित्यं निनयनं" इति। अत्रावनेजननमस्कारोक्तः क्रमः साक्षात्कात्यायन-शतपथाभ्यां विरुद्धत्वा-

तदनुसारिभिर्न ग्रहीतव्यः। बहुसम्मतश्च शतपथोक्तः क्रमः। यत्तत्रावनेजनस्य स्थानविशेषोजलविशेषश्चोक्तः स तु प्रत्यक्षशास्त्रविरोधादर्शनात् ग्रहीतव्यः।

स्मृत्यन्तरे तु पिण्डपात्र-क्षालन-जलेन प्रत्यवनेजनमुक्तं।

तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेदिति ।

व्याघ्रोऽप्याह ।

अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिण्डन्तु पूर्ववत् ।
छलावनेजनं कुर्यात् पिण्डपात्रमधोमुखं ॥

अत्र पिण्डपात्रस्यापि अधोमुखकरणं शतपथानुसारिभिरपि गृह्यतां। पात्रक्षालनजलन्तु प्रत्यवनेजनाय तैर्न देयमेव। यतः "तदु तथा न कुर्य्याद्यथा यस्मा अशनमाहरेत्तत्पात्रनिर्णेजनं पाययेदेवं तत्तस्मादु पराश्चेदेवैतान्" इति स्रुक्सम्मार्जनानामग्नौ प्रहरणं निन्दता शतपथेन भोजयितुमभीष्टाय भोज्यमानाय भोजिताय वा लौकिकस्य पात्रनिर्णेजनदानस्य निन्दितत्वेन प्रसिद्धस्य दृष्टान्तत्वेनोपादानं कृतन्तेनैतेनान्यार्थदर्शनेनान्यत्रापि पात्रनिर्णेजनस्यादेयत्वमवगम्यते। "एतद्वः पितरोवासः" इत्यनेन यजुषा प्रतिपिण्डं सूत्राणि निदध्यात्। बहुवचनात् त्रिणि त्रिणीति गम्यते। 'ऊर्णा वा' 'ऊर्णाः' मेषरोमाणि। 'दशा वा' 'दशाः' वस्त्राञ्चलसूत्राणि। तेषामपि सूत्र-शब्देनैव संग्रहसम्भवेऽपि सूत्रान्तराद्दशानां जघन्यत्वं स्थापयितुं पृथगुपन्यासः। अतएव दशानां क्वचिन्निषेध एव स्मर्य्यते। "दशां विवर्जयेत् प्राज्ञो यद्यप्याहतवस्त्रजां" इति। 'वयस्युत्तरे यजमानलोमानि वा', शतवर्षस्यायुषः समं भागद्वयं परिकल्प्य द्वे वयसी कल्पेते,

उत्तरे उपरितने वयसि वर्त्तमानस्य यजमानस्य लोमानि, तानि च प्रशस्ताङ्गत्वादुपरस्थितान्येव ग्राह्याणि, "उत्तरे वयस्युरोलोमानि" इति सूत्रान्तरदर्शनात्। वाशब्दादस्मिन्नपि वयसि सूत्रादीनां विकल्पेनावकाशो दर्शितः। एतच्च सूत्रादि वस्त्राभावे वस्त्रस्थाने दातव्यं। सति तु वस्त्रे वस्त्रमेव। अतएवाश्वलायनेन वासो दद्यादित्युक्तं।

दशामूर्णास्तुकां वा पञ्चाशद्दर्षताया ऊर्ध्वं स्वलोमैतद्वः पितरो वासोमानोऽतोऽन्यत् पितरो युङ्ध्वमिति ।

'ऊर्णास्तुका' ऊर्णाखण्डं ।

वायुपुराणे चोक्तं।

वस्त्रार्थे सूत्रमेव वेति।

न चैवं मन्तव्यं वस्त्रार्थे सूत्रमेव देयं न कदाचिदपि वस्त्रमिति।

यत आह विष्णुः।

अथ वस्त्रमभावे दशामूर्णाया एतद्वः पितरोवासोमानोऽतोऽन्यत् पितरो युङ्ध्वमिति।

ब्रह्मपुराणेऽपि।

दद्यात् क्रमेण वासांसि दशां वा श्वेतवस्त्रजामिति।

यदपि व्याघ्रेणोक्तं।

एतद्वः पितरोवासो दशां दद्यात् पृथक् पृथगिति।

तदपि वस्त्राभाव इति व्याख्येयं। अत्र कात्यायनाभिमतामन्त्रान्तरं विष्ण्वाश्वलायनाभ्यामुक्तवाक्ये दर्शितं।

आपस्तम्बेनापि मन्त्रान्तरं दर्शितं।

एतानि वः पितरो वासांस्यतोनान्यत्पितरो मायोष्टेति वाससो

दशां छित्वा निदध्यादूर्णास्तुकां वा पूर्व्वे वयस्युत्तर आयुषि स्वं लोमेति।

राणायणीयसूत्रच्छन्दोभिन्नत्वप्रदक्षिणत्वादितिकर्त्तव्यताविशेषेण सह मन्त्रान्तरमाह।

सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वापसव्यवि: पूर्व्वेषां कर्षां पिण्डं निदध्यात् । पितुर्नाम गृहीत्वासावेतत्ते वासोये चात्र त्वानु यांश्च त्वमनु तस्मै ते स्वधेत्यप उपस्पृश्यैवमेवेतरयोरिति।

अत्र नामग्रहणमुपलक्षणं गोत्रादिग्रहणस्य ।

अत एव ब्रह्मपुराणे ।

एतद्व: पितरोवासस्त्विति जल्पन् पृथक् पृथक् ।
अमुकामुकगोत्रैतत्तुभ्यं वास: पठेत्तत: ॥

मैत्रायणीयपिण्डपितृयज्ञे तु कश्चिद्विशेषो दर्शित:।

एषा युष्माकं पितर इत्यूर्णां दशां वाभ्यस्यति मा अस्माकमित्यवशिष्टावेक्षते लोमोत्तरवयसि न्यसेदतोऽन्य: पितरोऽन्या मायोष्टेति।

मानवमैत्रायणीयपिण्डपितृयज्ञसूत्रे तु पिण्डेषु दास्यमानस्य दशादे: पूर्वं प्रोक्षणमुक्तं ।

वास: ऊर्णां दशां वाभ्युक्ष्य पिण्डदेशे निदधाति रोमोत्तरवयसि छित्वा वासयोदशां वातोऽन्यत्पितरोन्या मायोष्टेति निदध्यादिति ।

मन्त्रान्तरमाह विष्णु:।

येऽत्र पितर: प्रेता य इति वासोदेयमिति ।

कठानां श्राद्धकल्पेऽपि ।

येऽत्रपितर: प्रेता इति वासांसि निदध्यादिति ।

अत्र प्रतीकग्रहणेन विनियुक्तो मन्त्र: समग्र: प्रदर्श्यते।

येऽत्र पितरः प्रेता युष्मांस्तेऽनु य इह पितरोजीवा अस्मांस्तेऽनु येऽत्र पितरः प्रेता यूयन्तेषां वसिष्ठा भूयास्त इह पितरोजीवा वयन्तेषां वसिष्ठा भूयास्म एतानि वः पितरो वासांस्यतोनोऽन्यत्पितरोमायुषन् वीरान्नः पितरोधत्तेति ।

अत्र कात्यायनसूत्रव्यतिरिक्तेषु बहुतरशाखा-कल्पसूत्र-स्मृति-पुराणादिषु सूत्रदानात् पूर्वं गृहोदीक्षण-पिण्डावेक्षणाञ्जनाभ्यञ्जन-दानान्युक्तानि ।

तत्र तावदाह गोभिलः ।

गृहानवेक्षते गृहान्नः पितरोदत्तेति, पिण्डानवेक्षते सदोवः पितरोदेष्मेति ।

गृहान्नः पितरोदत्तेत्यनेन मन्त्रेण गृहानवेक्षते पत्नीं वा, गृहाः पत्नीति तेनैवोक्तत्वात् । 'सदोव इत्यादिना पिण्डानवेक्षत' । वाजसनेयिनस्तु सदोव इत्यस्य स्थाने सतोव इति पठन्ति ।

शतपथे लाक्षीरूपार्थाभिधानादस्य मन्त्रस्योपस्थाने साधनत्वं गम्यते।

गृहान्नः पितरोदत्तेति गृहाणां हि पितर ईषत एषो एतस्याशी:कर्मण इति गृहानवेक्षमाणेनाप्युपस्थानं कर्तुं शक्यत एवेत्यविरोधात् शतपथानुसारिभिरपि गृहानवेक्षमाणैरेव पिण्डोपस्थानं विधेयम् ।

अस्य मन्त्रद्वयस्योपस्थाने विनियोगमाहापस्तम्बः ।

गृहान्नः पितरोदत्त सदोवः पितरोदेष्मेति पितृनुपतिष्ठत इति।

अत्राप्यविरोधाद्गृह-पिण्डावेक्षणाभ्यां उपस्थानस्य समुच्चयोऽनुसन्धेयः।

अञ्जनाभ्यञ्जने तु वायुपुराणे ।

अञ्जनाभ्यञ्जनं दद्यात् सूत्रप्रणयनं तथा ।

काशैः पुनर्भवैः कार्य्यमश्वमेधफलं लभेदिति ॥

काशैरित्युपलक्षणं कुशादीनां। अतो विहितानां दर्भाणां पवित्रतृणानां वा मध्ये यथाप्राशस्त्यं यथालाभं वा केनचिदेकेनाञ्जनाभ्यञ्जने कर्त्तव्ये। अत्राञ्जनशब्देनाक्ष्णोः प्रसाधनाय क्षमं किमपि कृष्णवर्णं द्रव्यं लोकप्रसिद्धमेव। अभ्यञ्जनञ्च स्नेहद्रव्यम्। तदुभयद्रव्यसाध्ये क्रिये अञ्जनाभ्यञ्जनशब्दाभ्यामुच्येते।

अत्रापेक्षिताः केचन विशेषा ब्रह्मवैवर्त्ते दर्शिताः।

गृहीतैर्दर्भपिञ्जूलैस्त्रिभिश्चैव यथाविधि।
अपसव्यं पितृभ्यस्तु दद्यादञ्जनमुत्तमम्॥
नामान्युच्चार्य्य पूर्वेषां वस्त्रार्थे सूत्रमेव च।
एकं पवित्रं हस्ते तु पितृणाञ्च सकृत् सकृत्।
तैलं मन्त्रेण दातव्यं पिण्डेभ्योऽभ्यञ्जनं हितं॥

अत्रैकैकस्मिन् पिण्डे त्रिभिर्दर्भपिञ्जूलैरञ्जनमित्येकोविशेषः। अपसव्यमित्यपरः। 'उत्तमं' श्रेष्ठं, त्रैककुदन्ददातीत्यर्थः। 'नामान्युच्चार्य्ये-त्यत्र गोत्र-सम्बन्ध-नामामुच्चारणं विवक्षितं। 'एकं पवित्रं' एकशिखं पवित्रं, तत्करे गृहीत्वा पितृणां पिण्डेभ्यस्तेन पवित्रेण तैलरूपमभ्यञ्जनमेकैकस्मिन् पिण्डे कल्पसूत्रादिप्रसिद्धेन मन्त्रेण सकृत्प्रदीयमानं 'हितं' श्रेयस्करं सम्पद्यते। अञ्जनमपि मन्त्रेणैव कार्य्यं। 'सकृत् सकृदिति दर्शयिष्यमाणेन त्रिस्त्रिरित्यनेन सह विकल्प्यते। अवतिष्ठते वा यथाशाखं।

अत्राञ्जने कण्ठोक्त्यैव त्रैककुदलरूपोविशेषोऽभ्यञ्जने तैललावान्तरोऽपि विशेषो ब्रह्मपुराणे दर्शितः।

श्लेष्ममाङ्गस्त्रिककुदमञ्जनं नित्यमेव च।

तैलं कृष्णतिलेभ्यस्तु यत्नात् सुपरिरक्षितमिति ॥

'त्रिककुदं' त्रिककुत्पर्वतोद्भवं नीलाञ्जनशब्देन लोके प्रसिद्धतरम्। तत्पिण्डोपचारे श्लेष्ममाङ्गर्मुनयः। 'श्लेष्ममाङ्ग'रित्यभिधानात्तदभावे कज्जलाभ्यनुज्ञा गम्यते।

अत्राञ्जनाभ्यञ्जनयोः क्रमविशेषं मन्त्रञ्चाहाश्वलायनः।

असावभ्यंक्ष्वासावंक्ष्वेति पिण्डेष्वभ्यञ्जनाञ्जने वासो दद्यादिति।

विष्णुरप्याह।

ततोऽसावभ्यंक्ष्वेत्यभ्यञ्जनं दद्यादसावंक्ष्वेत्यञ्जनमिति।

'तत' इत्यवनेजनानन्तरम्। 'असावभ्यंक्ष्वे'त्यभ्यञ्जनं पिण्डोपरि प्रतिपिण्डं दद्यात्। 'असा'वित्यनेन सम्बोधनरूपेण पित्रादिगोत्रसम्बन्ध-नाम्नां ग्रहणं विवक्षितम्। 'असावंक्ष्वे'ति मन्त्रेण पिण्डोपरि प्रतिपिण्डमञ्जनं दद्यादिति।

राणायनीयसूत्रकृद्गोभिलस्तु वायुपुराणोक्तमेव क्रममनुसरन्मन्त्रान्तरमाह।

सव्येनैव पाणिना दर्भपिञ्जूलीं गृहीत्वापसलविः पूर्वस्यां कर्ष्वां पिण्डे निदध्यात् पितुर्नाम गृहीत्वासावेतत्त आञ्जनं येचात्र त्वानु यांश्च त्वमनु तस्मै स्वधेत्यप उपस्पृश्यैवमेवेतरयोस्तथा तैलं तथा सुरभीति।

'दर्भपिञ्जूली' अञ्जनाभ्यक्ता। 'सुरभि'गन्ध-माल्यादिकं।

मैत्रायणीयपिण्डपितृयज्ञेऽप्येतत्क्रमसहितं मन्त्रान्तरं दर्शितम्। अञ्जनाक्ताः शलाकाः प्रतिपिण्डं निदधात्यंक्ष्वासावित्यञ्जनेनाभ्यंक्ष्वासावित्यभ्यञ्जनेनेति।

'शलाकाः' दर्भशिखाः ।

मानवमैत्रायणीयसूत्रेऽपि ।

अंक्ष्वासावित्यञ्जनस्य प्रतिपिण्डं लेपं निर्मार्ष्ट्यभ्यंक्ष्वासावित्यञ्जनस्येति ।

आहापस्तम्बः ।

अञ्जनाभ्यञ्जने वासस्य त्रिरनुपिण्डं दद्यात्यंक्ष्व ततोऽसावांक्ष्व पितामहासावांक्ष्व प्रपितामहासावित्याञ्जनमेवमभ्यञ्जनमभ्यंक्ष्वेति मन्त्रं सन्नमति, यदि नामानि न विन्द्यादाञ्जतां मम पितर आञ्जतां मम पितामहा आञ्जतां मम प्रपितामहा इत्यञ्जनमेवमभ्यञ्जनमभ्यञ्जतामिति मन्त्रं सन्नमतीति । त्रिरनुपिण्डं दद्यादिति ।

'अनुपिण्डं' एकैकस्मिन् पिण्डे, 'त्रिरिति त्रिवारं । अञ्जनादीनि दद्यात् । 'असाविति सम्बुद्ध्यन्तानि पित्रादिनामान्युच्चार्य्य । यदि श्राद्धकर्त्ता पित्रादिनामानि न जानीयात् तदा आञ्जतां मम पितर इत्यादिप्रयोगः आञ्जनं दद्यात् । एवमेवाभ्यञ्जनं, एवमित्यूह्यमानपदेनाञ्जनमन्त्रेणैवोहमाह 'अभ्यञ्जनमिति, 'मन्त्रं सन्नमतीति । 'सन्नमनं' विपरिणामः । ऊर्ज्जमित्यपोनिषिञ्चतीति । ऊर्ज्जमिति प्रतीकग्रहणेन मन्त्रोविनियुक्तः । स च "ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन्" इति । अनेन मन्त्रेन पिण्डमूलेषु तिलोदकनिषेचनं कार्य्यं । अस्य च व्याख्यानं हरिहरेण कृतं । अत्र सामर्थ्यादापइत्यध्याहारः, हे आपः! 'स्वधा स्थ पितॄणां हविर्भवथ । ततस्त्र मम पितॄन् तर्पयत । किं कुर्व्वन्त्यः । ऊर्ज्जादि वहन्त्यः । 'ऊर्ज्जं' बलं प्राणान् शक्तिं वा । 'अमृतं' अमृतत्वकारणं सोमरसं पीयूषं वा 'घृतं' आज्यं । 'पयः' क्षीरं, 'कीलालं' अन्नरसं । 'परिस्रुतं'

सुरां। एवमनेकविधस्तृष्णीयतमरसं वहन्त्योभूत्वा पितॄणां अत्यर्थां तृप्तिं कुरुतेत्यर्थः।

कठानां श्राद्धकल्पेत्वेतत्मन्त्रसाध्यस्योदकनिषेचनस्य परिषेचनरूपतोक्ता। ऊर्ज्जं वहन्तीरित्यपः परिषिच्येति।

परिसमन्तात् त्यक्त्वा 'परिषिच्य', परिषेचनञ्चाप्रदक्षिणं कर्त्तव्यं पित्र्यत्वात्।

आपस्तम्बगृह्ये तु त्रिः पिण्डपरिषेचनं। तत्र च मन्त्रान्तरमुक्तं। उत्तरयोदपात्रेण त्रिः प्रसव्यं परिषिच्येति।

अस्यार्थः। पुत्त्रान् पौत्त्रानभितर्पयन्तीरपोमधुमतीरिमाः। स्वधा पितृभ्यः अमृतं दुहाना आपोदेवीरुभयांस्तर्पयन्त्वित्येतया ऋचा उदकपूर्णपात्रेण सर्वान् पिण्डान् प्रसव्यं त्रिः परिषिञ्चेदिति।

विष्णुना तूर्ज्जमित्यनेन मन्त्रेण सोदकस्यान्नस्य पिण्डानां समन्तादप्रदक्षिणं विकिरणमुक्तम्।

ऊर्ज्जं वहन्तीरित्यनेन सोदकेनाप्रदक्षिणं पिण्डानां विकिरणं कृत्वेति।

शौनकाथर्वणसूत्रे तु मन्त्रान्तरसहितमन्नेन परिविकिरणमुक्तं। इदमाशंसूनामिदमाशंसमानानामित्यन्नेन प्रसव्यं परिविकिरणमिति।

पिप्पलादश्राद्धकल्पे तु पिण्डशेषान्नमिश्रतण्डुलप्रविकिरणमुक्तम्। इदमाशंसूनामिति शेषेण त्रिः प्रसव्यं तण्डुलान् प्रकिरेदिति।

अन्नविकिरणानन्तरमाह विष्णुः।

अर्घ-पुष्प-धूपानुलेपनान्नाद्यभक्ष्य-भोज्यानि निवेदयेदुदपात्रं मधुतिलाभ्यां संयुतञ्चेति।

शालङ्कायनः पिण्डानां विकिरणं जलार्घ-पुष्प-धूपानुलेपनान्ना-भक्ष्य-भोज्यं निवेदयेदुदपात्रं मधु-घृत-तिलैः संयुक्तञ्च ।

आह पैठीनसिः ।

धूप-गन्ध-माल्यादर्श-प्रदीपाञ्जनादीनि चोपहरेत् ।

'उपहरेत्' उपहारीकुर्य्यात् । अत्राञ्जनादीनां पिण्डेभ्यः प्रदानं व्याख्यातं ।

इतरेषां गन्धादिक्रमेण वस्त्रदानात् पूर्वं पिण्डेभ्योदानमाह व्यासः ।

गन्ध-पुष्पाणि धूपञ्च दीपञ्च विनिवेदयेत् ।
एतद्वः पितरोवासो दशां दद्यात् पृथक् पृथगिति ॥

अयं हि शिष्टसमाचारानुगृहीतः पाठक्रमः शक्नोत्येव दर्शयिष्यमाणानि पाठक्रमान्तराण्यविवचितानि कर्तुं ।

बृहस्पतिस्तु प्रत्यवनेजनात् पूर्वं गन्धादिदानमाह ।

दीप-धूपैर्माल्य-गन्धैस्तथा वस्त्राञ्जनादिना ।
समभ्यर्च्चोदपात्रं तु तेषामुपरि निक्षिपेदिति ॥

'उदपात्रमित्युदपात्रस्थमुदकं । आदिशब्देन भक्ष्य-भोज्य-फल-ताम्बूलादि गृह्यते ।

अतएव देवलः ।

एवं निवेश्य पिण्डांस्तानलंकुर्य्याच्च पूर्ववत् ।
पक्वान्नेन बलिं तेभ्यः पिण्डेभ्योदापयेद् बुधः ॥
ततोदत्तबलिभ्यस्तु पिण्डेभ्यो मन्त्रपूर्वकं ।
पिण्डपात्रेण तेनैव दद्यादाचमनोदकं ॥

'पूर्ववत्' पूर्वोक्तेनापसव्यादिविधिना। 'बलिं' उपहारः। 'आचमानोदकं' प्रत्यवनेजनं।

तथा।

दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत्।
भक्ष्यानपूपानिक्षूंश्च व्यञ्जनान्यशनानि च॥

'दक्षिणा'शब्देनात्र रजत-हिरण्यादि।

अत्र पिण्डप्रदानदिने सिद्धानां भोज्य-भोज्यादीनां मध्ये कस्यचिदेकस्यापि पिण्डेभ्यो निवेदनमन्तरेण भक्षणे यजमानस्य दोषः शङ्खस्मृति-ब्रह्माण्डपुराणयोरुक्तः।

यत्किञ्चित्पच्यते गेहे भक्ष्यं भोज्यं विगर्हितं।
अनिवेद्य न भोक्तव्यं पिण्डमूले कथञ्चन॥

गन्धादिदाने सव्यजानुनिपातनादिरूपः कोपीतिकर्त्तव्यताविशेषो मत्स्यपुराणे दर्शितः।

गन्ध-धूपादिकं दद्यात् कुर्यात् प्रत्यवनेजनं।
आज्याच्य सव्यं सव्येन पाणिना त्वप्रदक्षिणं॥
पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना।
दीपं प्रज्वालनं तद्वत् कुर्य्यात्पुष्पार्च्चनं बुधः॥

'आनिधनात्' आ श्राद्धसमाप्तेरपवादवर्ज्जं।

ब्रह्मवैवर्त्ते तु गन्धादिदाने मन्त्रो दर्शितः।

पिण्डान् परिक्षिपेत् सम्यगपसव्यमतन्द्रितः।
एतद्वः पितरो देवा देवाश्च पितरः पुनः।
पुष्प-गन्धादि-धूपानामेष मन्त्र उदाहृत इति॥

पिण्डेभ्यो गन्ध-पुष्पादि दत्त्वा ब्राह्मणेष्वाचान्तेषु यजमानेनाप्याचमनं कार्यं ।

तथा च मत्स्यपुराणे ।

गन्ध-धूपादिकं दद्यात् कृत्वा प्रत्यवनेजनं ।
दीपप्रज्वालनं तद्वत् कुर्यात् पुष्पार्चनं बुधः ।
अथाचान्तेषु वाचम्य वारि दद्यात् सकृत् सकृत् ॥

वारिदानञ्च ब्राह्मणहस्तेषु "शिवा आपः सन्त्वित्यादिभिर्मन्त्रैः कर्त्तव्यं। "अवधायावजिघ्रति यजमान इति। 'अवधायेति प्रत्यवधाय। भूमौ निहितानुद्धृत्य स्थाल्यां निधायेत्यर्थः। 'अवजिघ्रति' पिण्डानां गन्धमुपलभेत। स चायं यजमानसंस्कारः। "अथावजिघ्रति प्रत्यवधाय पिण्डान् स यजमानभाग इति शतपथवचनात्। ततश्च नाध्वर्युरवजिघ्रति। "अथावजिघ्रति प्रत्यवधाय पिण्डानिति प्रयोगसामर्थ्यादध्वर्युरेव प्रत्यवधत्ते। क्वाप्रयोगान्नेति चेत्, स्यात् कालार्थत्वात्। यथा निरूप्याज्यं प्रातर्दोहनमिति ।

मनुना तु प्रत्यवनेजनानन्तरं भूमिष्ठानामेव पिण्डानां क्रमेणावघ्राणमुक्तं।

उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ।
अवजिघ्रेच्च तान् पिण्डान् यथा न्युप्तान् समाहितः ॥

'यथा न्युप्तानित्यनेन निर्वापक्रमेण पिण्डानामवघ्राणं दर्शितं। "उल्मुकसकृदाच्छिन्नान्यग्नाविति। अत्र आदधातीति वाक्यशेषः। तत्र पूर्वं सकृदाच्छिन्नानि तत उल्मुकं। "सकृदाच्छिन्नान्यग्नावभ्यादधाति पुनरुल्मुकमपि सृजतीति शतपथश्रुतेः। सूत्रे लजादि-

त्वादल्पाचरत्वाच्चोल्मुकस्य पूर्वनिपातः। 'अपि सृजतीति यस्मादग्नेरुल्मुकमाहृतं तेन पुनः संयोजयतीत्यर्थः।

आपस्तम्बेन तूल्मुकापिसर्जने मन्त्रोदर्शितः।

"अभून्नोदूतो हविषो जातवेदा आवाड्क्यातिसुरभीणि कृत्वा। प्रादात् पितृभ्यः स्वधया ते अक्षन्प्रजानन्नग्नेः पुनरप्येतु देवानित्येकोल्मुकं प्रत्यपिसृज्येति।

गोभिलेन त्वेतेनैव मन्त्रेणोल्मुकाभ्युक्षणमुक्तं।

अभूनोदूतो हविषो जातवेदा इत्युल्मुकमद्भिरभ्युक्ष्य द्वन्द्वं पात्राणि प्रक्षाल्य प्रत्यभिहारयेदिति।

आश्वलायन-पिण्डपितृयज्ञसूत्रे तु मनस्वतीजपानन्तरं पिण्डप्रवाहणमुक्तं।

अथैतान् प्रवाहयेत् "परेतनः पितरः सोम्यासोगम्भीरेभिः पथिभिः पूर्विणेभिः दत्तास्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छतेति।

'प्रवाहयेत्' हस्तेन युगपत्सर्वान् प्रवाहयेत्।

आपस्तम्बेन तु प्रवाहणात् पूर्वमुपस्थानमुक्तं।

"उत्तिष्ठत पितरः प्रेतशूरा यमस्य पन्थामनुवेता पुराणन्धत्तादस्मासु द्रविणं यच्च भद्रं प्राणोब्रूताद्भागधो देवतास्वितिपितृनुत्थापयति "परेतपितरः सोम्या इति प्रवाहाण्या पितृन् प्रवाहयतीति।

'उत्थापयति' हस्तेन युगपत् सर्वान् पिण्डान् भूमेः किञ्चिदुत्क्षिपेदित्यर्थः।

मैत्रायणीयसूत्रेऽपि।

प्रजापते न त्वदित्युत्तिष्ठत परेत पितर इति यजमानः प्रत्राह्मणौं जपति उभौ मनस्वतीर्मनोऽन्वाह्वामह इति तिस्रः वयं सोमव्रते तव मनस्तनुषु बिभ्रतः प्रजावन्तः सचेमहीति चाचन्नमीमदन्तेति चेति ॥

इत्याचमनादयः पदार्थाः ।

अथान्वाहार्यकाख्यश्राद्धाङ्गभूतं(१) द्विजभोजनात् पूर्वकालीनमग्निमत्कर्तृकं पिण्डप्रदानं ।

तत्रोपकरणसम्भरणं मात्स्य-पाद्मयोरुक्तं ।

पिण्डभूमौ प्रयत्नेन तिस्रः कर्षूश्च कारयेत् ।
ता वितस्त्यायतीः कार्याः चतुरङ्गुलविस्तृताः ॥
दर्वीत्रयन्तु कुर्वीत खादिरं रजतान्वितं ।
अरत्निमात्रं परिश्लक्ष्णं हस्ताकाराग्रमुत्तमं ॥

'कर्षूः' अवटः । सा च कैश्चित् सलिलेन पूर्यते, कैश्चित् तत्र पिण्डनिर्वापः क्रियते । त्रित्वाभिधानं पित्रादिवर्गपिण्डापेक्षया । 'दर्व्यः' स्रुग्विशेषाः । तास्र हविरुद्धरण-पिण्डप्रक्षेपणार्थाः क्रियन्ते । अग्नौकरणानन्तरञ्च तत्रैवोक्तं ।

प्राचीनावीतिना कार्य्यमतः सर्वं विजानता ।
षट् च तस्माद्धविःशेषात् पिण्डान् कृत्वा तथोदकं ॥
दद्यादुदकपात्रैस्तु सलिलं सव्यपाणिना ।
जलं त्रिः सव्यं यत्नेन दर्भयुक्तो विमत्सरः ॥

उदकपात्रेणोदकदानं कार्य्यं । अप्रादक्षिण्येन त्रिर्जलदानं परिषेचनाख्यं ।

---

(१) श्राद्धान्तर्भूतमिति ख० ।

विधाय लेखां यत्नेन निवापायावनेजनं।
दक्षिणाभिमुखः कुर्यात्ततोर्द्दर्वीं निधाय वै ॥
विधाय पिण्डमेकैकं दर्व्यामाधाय च क्रमात् ।
निनयेदथ दर्भेषु नाम-गोत्रानुकीर्त्तनैः ॥
तेषु दर्भेषु तं हस्तं निमज्ज्याल्लेपभागिनां ।
तथैव च बुधः कुर्यात् पुनः प्रत्यवनेजनं ॥
षडप्यृतून्नमस्कृत्य गन्ध-धूपार्पणादिभिः ।
एवमाहृत्य तत्सर्वं वेदमन्त्रैर्यथोदितैः ॥
ततः कृत्वान्तरे दद्यात्तत्पत्नीभ्यः कुशान् बुधः ।
तद्वत् पिण्डादिकं कुर्यादावाहन-विसर्ज्जने ॥
ततो गृहीत्वा पिण्डेभ्यो मात्राः सर्वाः क्रमेण तु ।
तानेव विप्रान् प्रथममाशयेत् यत्नतो नरः ॥

'मात्रा' लेशः ।

यस्माद्दत्ता हृता मात्रा भक्षयन्ति द्विजातयः ।
अन्वाहार्य्यकमित्युक्तं तस्मात्तच्चन्द्रसङ्क्षये ॥
पूर्वं दत्त्वा तु तद्धस्ते सपवित्रं तिलोदकं ।
तत्पिण्डाग्रं प्रयच्छेत्तु स्वधैषामस्त्विति ब्रुवन् ॥

आह मनुः ।

पिण्डेभ्यस्त्वल्पिकां मात्रां समादायानुपूर्वशः।
ता एव विप्रानासीनान् विधिवत् पूर्वमाशयेत् ॥
तेषान्दत्त्वा तु हस्तेषु सपवित्रं तिलोदकं ।
तत्पिण्डाग्रं प्रयच्छेत्तु स्वधैषामस्त्विति ब्रुवन् ॥

शेषा त्वितिकर्त्तव्यता पूर्व्वोक्तपिण्डदानेन समाना वेदितव्या।
आश्वलायन-पिण्डपितृयज्ञसूत्रे पिण्डप्रवाहणमुक्तं।

अग्निं प्रत्येयादग्ने तमद्याश्वं न स्तोमैरिति गार्हपत्यं यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाजिहिंसिमग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु करोतु मामनेनसमिति।

प्रवाहणानन्तरमेवाह आपस्तम्बः।

प्रजापते न त्वदेतानिति यज्ञोपवीतिगार्हपत्यदेशं गच्छति यदन्तरिक्षमिति पङ्क्त्या गार्हपत्यमुपतिष्ठत इति।

मैत्रायणीयसूत्रे।

परेत न पितर इति यजमानः प्रवाहणीं जपति। उभौ मनस्वतीर्मनोऽन्वाह्वामह इति तिस्रो वयं सोमव्रते तव मनस्तनुषु बिभ्रतः। प्रजावन्तः सचेमहीति चाचन्नमीमदन्तेति च प्राप्यतेग्न इधीमहीति गार्हपत्यमुपतिष्ठत इति।

मानवमैत्रायनीयसूत्रे।

परेत नः पितरः सोम्यास इति प्रवाह्य इति प्रजापते न त्वदित्येतयोपतिष्ठत्यचन्नमीमदन्तेति पुनरिति मनस्वतीर्जपन्नग्ने तमद्येत्येतया गार्हपत्यमुपतिष्ठत इति।

कठानां सूत्रे।

आते अग्न इति दक्षिणाग्निङ्गत्वा तस्मिन् समिध आधायाहृत्य जपति मनोऽन्वाहुवामह इति तिस्रोयदन्तरिक्षमिति गार्हपत्यमिति।

शौनकाथर्वणपिण्डपितृयज्ञसूत्रे।

पिण्डनिर्वापानन्तरं। आपोऽग्निरित्यद्भिरग्निमवसिच्य पुत्रं पौत्र-

मभितर्पयन्तीरित्याचामत मम प्रततामहास्ततामहास्तताः सपत्नीकास्तृप्यन्त्वाचमन्तु । प्रसव्यं परिषिच्य वीरान्मे प्रततामहादत्त वीरान्मे ततामहादत्त वीरान्मे पितरो दत्त पितॄन् वीरान् याचते नमोवः पितर इत्युपतिष्ठते अचन्नित्युत्तरस्रुवमवधूय परापातेति परापाय यथातः पित्र्योपवीति-यज्ञोपवीती यत्र इदं पितृभ्यः सह मनोभूरिति मन उपाह्वयामि मन उपाह्वयन्ति मनोऽन्वाह्वामहे नाराशंसेन स्तोमेन पितॄणां च मन्मभिः । आत एतु मनः पुनः क्रत्वे दक्षाय जीवसेज्यो क्च सूर्यं दृशे पुनर्नः पितरो मनो ददातु दैव्योजनः जीवं व्रातं सचेमहि वयं सोमव्रते तव मनस्तनुषु बिभ्रतः प्रजावन्तः सचेमहि । ये समानाः सुमनसो जीवाजीवेषु मामकाः । तेषां श्रीर्मयि कल्प्यतामस्मिन् गोष्ठे शतं समा इति । यच्चरुस्थाल्यामोवावशिष्टं भवति । तस्योष्म भच्यं भक्षयित्वा ब्राह्मणाय दद्यात् । यदि ब्राह्मणो न लभ्येत स्वयमभ्यवहरेत् निजाय दापयेत्येके पर्युक्षणिं समिधश्चादाय मा प्रगामेत्यावर्ज्योर्जं बिभ्रदिति गृहानुपतिष्ठते । रमध्वमाबिभीत नास्मिन् गोष्ठे करिषिणः ऊर्जं दुहानाः शुचयः शुचिव्रताः गृहाजीवन्त उपवः सदेमः । ऊर्जं मे देवा अददुः ऊर्जं मनुष्या ऊर्जं पितृभ्यः माहार्षमूर्जस्वन्तो गृहा मम । पयो देवा अददुः पयो मनुष्या उत पयः पितृभ्यः माहार्षं पयस्वन्तो गृहा मम । वीर्यं मे देवा अददुः वीर्यं मनुष्या उत वीर्यं पितृभ्यः माहार्षं पयस्वन्तो गृहा ममेत्यन्तरूपातीत्यतोऽन्तोऽग्निरभ्युद्धोयन्तो वसुवित्तमः । अस्योपसव्यं मारिषामा यं रक्षतु नः प्रजां । अस्मिन् सहस्रं पुष्या समेधमानः स्वे गृहे । इमे समन्दिषीमह्या-

युष्मन्तः सुमेधसः त्वमग्ने ईडितः । आत्वाग्न इधीमहीत्यभ्रूदूत इत्यग्निं परिणयति । यदि सर्वः प्रणीतः स्याद्दक्षिणाग्नौ तदाहिताग्नेर्गृह्योऽप्यनाहिताहिताग्नेः । इदं चिन्वे कृतमस्तीदं विचयाभि-पीतरश्मिन्वावेदन्निति योह यजते तं देवा विदुः, यो ददाति तं मनुष्याः, यः श्राद्धानि कुरुते तं पितरस्तं पितरः, इत्यन्वाहार्यान्त-र्भूतपिण्डदानं ॥

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे पिण्डदानप्रकरणं नाम पञ्च-दशोऽध्यायः समाप्तः ॥०॥

---

# अथ षोड़शोऽध्यायः ।

---

## अथ सुप्रोक्षितादयः पदार्थाः ।

अत्राह विष्णुः ।

ततः सुप्रोक्षितमिति श्राद्धदेशं प्रोक्ष्य दर्भपाणिः सर्वं कुर्य्यात् ।
'तत इति पैतृकद्विजपुरःसरं हस्तप्रक्षालनपूर्वकमाचमनोदकं दत्त्वा ।
'सर्वमिति वक्ष्यमाणमक्षय्यवाचनादि ब्राह्मणविसर्जनान्तं ।

मानव-मैत्रायणीयसूत्रे ।

सुप्रोक्षितमस्त्वक्षय्यमस्त्वक्षताः सन्त्विति ।

एतच्च यज्ञोपवीतिना कर्त्तव्यमित्युक्तं नागरखण्डे ।

नमस्कृत्य पितॄन् पश्चात् सुप्रोक्षितमतःपरं ।
कृत्वा सव्येन राजेन्द्र याचयित्वा वराशिषः॥

'आशिषः' वक्ष्यमाणस्वरूपाः ।

अत्र पूर्वधृतपवित्राणामुच्छिष्टोदकत्वेन द्विजैः परित्यक्तत्वात् सपवित्रकरत्वार्थं सुप्रोक्षितानन्तरं द्विजपाणिषु दर्भाः प्रदेयाः ।

आह कात्यायनः ।

आचान्तेषु उदक-पुष्पाक्षतानक्षय्योदकञ्च दद्यादिति ।

पाद्म-मात्स्ययोरपि ।

तथाचान्तेषु चाचम्य वारि दद्यात् सकृत् सकृत् ।
तथा पुष्पाक्षतान् पश्चादक्षय्योदकमेव च ॥

अक्षतशब्देन यवा उच्यन्ते ।

ब्रह्मपुराणे ।

आचान्तेषूदकं दद्यात् पुष्पाणि[१] सयवानि च ।
यवोऽसीति पठेन्मन्त्रं श्रद्धा-भक्तिसमन्वितः ॥

यवदानञ्च वैश्वदेविकद्विजहस्तेष्वेव । पित्र्यहस्तेषु तु तिल-दानमेव कार्य्यं ।

तथाच ब्रह्मपुराणे ।

ततस्त्वभ्युक्ष्य तां भूमिं दत्त्वापः सुमनोऽक्षतैः ।
सतिलाम्बु पितृभ्यादौ दत्त्वा देवेषु साक्षतं ॥

'तत इत्याचमनदानानन्तरं ।

अत्रोदकादिदाने मन्त्रानाह शातातपः ।

अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितं ।
ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवन्तु नः ॥
लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे ।
लक्ष्मीर्वसेत् सदा सोमे सौमनस्यं सदास्तु मे ॥
अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे ।
यद्यत् श्रेयस्करं लोके तत्तदस्तु सदा मम ॥

अत्रोदकदानादौ यथालिङ्गं मन्त्राणां विभज्य विनियोगोऽनुसन्धेयः ।

अत्रोपाध्यायकर्क आह ।

इदमम्बु पुष्पाक्षतदानं देवेषु तु सव्येन । पित्र्ये त्वपसव्येन कार्य्यं । केचित् पुनः पित्र्ये सव्येनेच्छन्ति । तन्न । पिण्डपितृयज्ञवदुपचारः । पित्र्य इत्यतिदेशात् ।

---

(१) पुष्पाणीति ख० ।

शङ्खधरस्त्वाह ।

न छत्राम्बुप्रभृतीनां पित्राद्युद्देशेन दानं क्रियते किन्तु हस्ते प्रक्षेपमात्रं अतोऽस्य पित्रर्थलाभावात् सव्येनैव कर्त्तव्यतोचितेति ।

तथा च वृद्धशातातपः ।

ततः पुष्पाणि सव्येन सोदकानि पृथक् पृथक् ।
दर्भपाणिः प्रदद्यात्तु यतवाक्काय-मानस इति ॥

हस्तदत्तानां चाम्बु-पुष्पाक्षतानां चिरधारणप्रयोजकभाविकार्य्याभावान्न दैवकृतकार्य्याणां कस्मिंश्चिच्छुचौ देशे विप्राः प्रक्षेपं कुर्य्युः । ततः पुनरपि तेषां दानं कर्त्तव्यं ।

तथा च मत्स्यपुराणे ।

आचान्तेषु पुनर्दद्यात् जल-पुष्पाक्षतोदकम् ।
दत्वाशीः प्रतिग्रह्णीयाद्द्विजेभ्यः प्राङ्मुखोबुधः ॥

पुनःशब्देन पूर्वमप्यस्य दानं सूचितं । आशीरित्याशिषः ।

मत्स्यपुराणवचने पाठान्तरम् ।

ततः स्वधावाचनिकं विश्वेदेवेषु चोदकं ।
दत्वाशीः प्रतिग्रह्णीयाद्द्विजेभ्यः प्राङ्मुखो बुधः ॥

आशिषां याचने तत्प्रदाने च वाक्यं तत्रैव दर्शितम् ।

अघोराः पितरः सन्तु सन्त्वित्युक्ते पुनर्द्विजैः ।
गोत्रं तथा वर्द्धतां नस्तथेत्युक्तः स तैः पुनः ॥
दातारोनोऽभिवर्द्धन्तामन्नं चैवेत्युदीरयेत् ।
एताः सत्याशिषः सन्तु सन्त्वित्युक्तश्च तैः पुनः ।
स्वस्तिवाचनिकं कुर्य्यात् पिण्डानुद्धृत्य भक्तितः ॥

मनु-विष्णू ।

विसृज्य ब्राह्मणांस्तांस्तु नियतो वाग्यतः शुचिः ।
दक्षिणान्दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन् ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहुदेयञ्च नोऽस्त्विति ॥

'विसृज्य' यथासुखं विहाराय पीठेभ्यः समुत्थायानुव्रजंश्चरणक्षालनमण्डलसमीपमानीय, दक्षिणान्दिशमवलोकयन् दातारो नोऽभिवर्द्धन्तामित्यादिकान् वरानभिलषितानि पितृभ्यः 'याचेत' प्रार्थयेत। दातार इत्यादि बहु देयञ्च नोऽस्त्वित्यन्तमुक्त्वाह बौधायनः ।

अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि ।
याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥

वरयाचने क्रियमाणे ब्राह्मणैः प्रतिवचनं वरप्रदानवाक्यमुच्चारणीयं । तद्यथा सन्त्वघोराः पितरः। वर्द्धतां वो गोत्रं। अभिवर्द्धन्तां वो दातारः । अभिवर्द्धन्तां वो वेदाः । अभिवर्द्धतां वः सन्ततिः । मा विगमद्वः श्रद्धा । अस्तु वो बहु देयं । भवतु वो बह्वन्नं । लभध्वमतिथीन् । सन्तु वो याचितारः । मा याचध्वं कञ्चन । सन्त्वेताः सत्या आशिष इति । अत्र पूर्वप्रदर्शितमत्स्यपुराणे विसर्जनात् प्रागेव प्राङ्मुखेन ब्राह्मणेभ्यो वरयाचनं कर्त्तव्यमित्युक्तम् ।

मनु-विष्णुभ्यान्तु विसर्जनानन्तरं दक्षिणामुखेन पितृभ्यश्च कार्य्यमित्युक्तम् । तदेवं विरोधे विकल्पः शाखाभेदेन व्यवस्था वा वेदितव्या। द्विवारं वरयाचनं कर्त्तव्यम् ।

अत्राह संग्रहकारः ।

दातार इति याचोक्ता वरार्थं प्रार्थना स्मृतौ ।
तां सुरप्रीतिसम्प्रश्नात् प्राक्प्रचेतास्तु मन्यते ॥
याज्ञवल्क्यस्तथा वक्ति प्रश्ने निर्वर्त्तिते सति ।
पारस्करः स्वस्ति वाच्यं कृत्वाशीर्वचनं(१) जगौ ॥
विसर्जितेषु विप्रेषु वशिष्ठेषु मनुर्जगौ ।
यान्यच कालभेदेन कर्माणि मुनयोजगुः ॥
स्वगृह्योक्तानुसारेण विकल्पस्तेषु युज्यते ।
न गृह्यादिस्मृतिर्येषां श्राद्धादावुपलभ्यते ।
कर्त्तुमर्हन्ति ते कृत्स्नं यस्य कस्य मुनेर्मतं ॥

अत्र यद्विसर्जनात्पूर्वं वरयाचनं तन्मत्स्यपुराणोक्तप्रकारकं । यत् पुनस्तदनन्तरं तन्मनु-विष्णूक्तप्रकारं कार्य्यमिति विवेकः। अथवैतयोः प्रकारयोः साग्निकानग्निककर्त्तृकश्राद्धभेदेन व्यवस्था। अत एव साग्निकश्राद्धमधिकृत्य मत्स्यपुराणे एवोक्तं ।

विसर्ज्य ब्राह्मणांस्तांस्तु तेषां कृत्वा प्रदक्षिणं।
दक्षिणां दिशमाकाङ्क्षन् पितॄन् याचेत साग्निकः॥

अत्र यदा प्राङ्मुखोवरयाचनग्रहणं कुर्य्यात्तदायज्ञोपवीत्येव, यदा तु दक्षिणामुखस्तदा प्राचीनावीतीति विवेच्यं। यदा तु पितॄन् प्रार्थयते तदा पितॄणां सम्मुखत्वेऽपि परोक्षवन्निर्देशप्रसङ्गाद्घोरत्वसङ्गावदुरभिप्रायानौचित्यापाताच्चाघोराः पितरः सन्त्वित्येतावतो लोप इति कश्चित् ।

आह शातातपः।

---

(१) कृत्वाशीर्ग्रहणमिति ।ग०।

अभिप्रेतार्थसिद्ध्यर्थमिष्टान् कामांस्तु वाचयेत्।
दीर्घाः सूर्य्यहया नद्यो विष्णोस्त्रीणि पदानि च।
एवमेषां प्रमाणेन दीर्घमायुरवाप्नुयां॥
दक्षिणायास्तु सर्वत्र बहुदेयं तथास्तु नः।
एवमस्त्विति तैर्वाच्यं मूर्द्ध्ना ग्राह्यञ्च तेन तत्॥

आशीःप्रतिग्रहानन्तरं यजमान-तत्पुत्र-पौत्रादयः पिण्डदेवता-नमस्करणं कुर्य्युरिति कश्चित्। इह ब्राह्मणविसर्जनात्पूर्वकालमन्ववायस्याशीःप्रतिग्रहस्यानन्तरं पिण्डोद्धरणं कृत्वा स्वस्तिवाचनं कार्य्यमिति यद्यपि पूर्व्वोक्तमत्स्यपुराणवाक्ये दर्शितं तथापि स्वस्तिवाचनात् पूर्वं पात्रचालनं कर्त्तव्यं।

अत एव प्रचेताः।

ततस्तु स्थापयेत् पिण्डान् विप्रपात्राणि चैव हि। इति।

अकृत्वा तु पात्रचालन-स्वस्तिवाचने दोषमाह नारायणः।

अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः।
निराशाः पितरस्तेषां शप्त्वा यान्ति यथागति॥

वृहस्पतिरपि।

भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः।
तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः॥

भविष्योत्तरेऽपि।

भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वन्ति ये द्विजाः।
तेषां निराशाः पितरो भवेयूराक्षसार्दिताः॥

पात्रचालने कांश्चित् कर्त्तृत्वेनोपदिश्य कांश्चिन्निषेधति श्राद्धकल्पः।

पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योऽथवा सुतः ।
न स्त्रीभिर्न च बालेन नासजात्या कथञ्चन ॥

नागरखण्डेऽपि ।

न स्त्रीभिर्न च बालेन नान्येनैव च केनचित् ।
श्राद्धे पिण्डच पात्रञ्च स्वयमेव प्रचालयेत् ॥

पात्राण्युत्थापयेदित्यनुवृत्तावाह प्रचेताः ।

स्वयं पुत्रोऽथवा यस्य वाञ्छेदभ्युदयम्परं ॥
न स्त्रियो न च बालश्च नान्यजातिर्न चाव्रतः ।
श्राद्धे भोजनपात्राणि स्वयमेव प्रचालयेत् ॥

'स्वयमिति पुनर्वचनमादरार्थं । 'अन्यजातिः' यजमानजातिमपेक्ष्य हीनजातिमान् । 'अव्रतः' अनुपनीतः, अनुपनीतग्रहणेनैव बालस्यापि निवृत्तौ सिद्धायां बालग्रहणमुपनीतादेरप्यज्ञस्य निवृत्त्यर्थं । अन्येऽपि बालशब्दप्रयोगदर्शनात् ।

भविष्योत्तरे ।

चालयेद्विप्रपात्राणि स्वयं शिष्योऽथवा सुतः ।
न स्त्री प्रचालयेत्तानि हीनजातिर्नचाग्रजः ॥

'अग्रजः' ज्येष्ठभ्राता, यजमानमपेक्ष्याधिकवयस्को वा, ब्राह्मणो वा, स च स्वापेक्षया हीनजातीयेन चत्रियादिना श्राद्धे क्रियमाणे पात्राणि न चालयेत् । एतच्च प्रायेणोत्तमजातीयोपलक्षकं भवितुमर्हति । अत्र स्वस्तिवाचनादिविसर्जनान्तेषु पदार्थेषु नानाक्रमसंग्रहार्थमविच्छिन्नान्येव वचनानि लिख्यन्ते ।

पात्रचालनानन्तरमाह याज्ञवल्क्यः ।

स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ।
दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यतां ।
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततोजलं ।
विश्वेदेवाः प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥

दातारो नोऽभिवर्द्धन्तामित्यादि ।

इत्युक्तोक्ता प्रिया वाचः प्रणिपत्य विसर्जयेत् ।
वाजे वाज इति प्रीतः पितृपूर्वं विसर्जनं ॥
यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान् विसर्जयेत् ॥

'स्वस्तिवाच्यं' स्वस्तिवाचनं । तच ॐस्वस्ति भवन्तो ब्रुवन्त्वित्येवं-विधप्रैषरूपमेके मन्यन्ते । स्वस्तीति ब्रूते त्वेवंरूपमपरे । पारस्करेण स्वस्ति भवान् ब्रूहीत्युक्तं। ब्राह्मणैश्च ॐ स्वस्तीति वक्तव्यं। ततः पुरू-रवोमाद्र्वःसंज्ञकानां विश्वेषां देवानां दत्तं श्राद्धमक्षय्यमस्त्वित्यभि-धाय वैश्वदेविकस्यैकैकस्य द्विजस्य हस्ते कुश-यवसहितं जलं प्रक्षिपेत्। विप्रैश्चास्त्वक्षय्यमिति वक्तव्यं। ततः षष्ठ्यन्तपित्रादिगोत्र-सम्बन्ध-नामा-भिधानपूर्वकं दत्तं श्राद्धमक्षय्यमस्त्वित्युच्चार्य्य क्रमेण पृथक् पित्र्यविप्र-करेषु जलं निषिञ्चेत् विप्रैश्चास्त्वक्षय्यमिति वक्तव्यं ।

अत्राह वृद्धशातातपः ।

पितॄणां नाम-गोत्रेण करे देयन्तिलोदकं ।
प्रत्येकं पितृतीर्थेन अक्षय्यमिदमस्त्विति ॥

ततो रजतवज्जं सुवर्णादिद्रव्यरूपां साम्यगुणतारतम्यं पुरस्कृत्य

वैषम्येण वा यथाशक्ति वैश्वदेविकद्विजेभ्यो दक्षिणाप्रकरणोक्तप्रकारेण दक्षिणां दत्त्वा पितृभ्यो रजतमयीं सुवर्णादिद्रव्यमयीं वा यथा-विभवन्तथैव तां दद्यात्। ततः स्वधां वाचयिष्य इति विप्रान् अनु-ज्ञाप्य तैश्च वाच्यतामित्यनुज्ञातोऽमुकगोत्रेभ्योऽमुकपितृभ्योऽमुकशर्मभ्यः सपत्नीकेभ्यो वसुरूपेभ्यः स्वधोच्यतामित्यभिदधीत।

अयञ्च स्वधावाचनप्रश्नोत्तरप्रकारोऽत्रिणा दर्शितः।

वाचयिष्ये स्वधां प्रश्नमित्यङ्कुर्याद्विजातिषु।
वाच्यतामित्यनुज्ञान्तु प्रीता दद्युः समाहिताः॥
वदेच्च तांस्ततोविप्रान् पित्रादिभ्यः स्वधोच्यतां।
अस्तु स्वधेति तैः प्रोक्ते निषिच्योदीर्य्य नित्यशः॥

दर्शयिष्यते चायं प्रकारः कात्यायन-गोभिलवचनाभ्यां।

विप्रैश्च अस्तु स्वधेत्युक्ते सत्यूर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थस्तर्पयत मे पितॄन् इत्येतं मन्त्रं उच्चार्य भूमौ जलधारां पातयेत्। एतच्च सविशेषमुक्तं कालिकापुराणे।

भूमौ किरेच्छनैर्वत्स धाराञ्चैव तिलोदकीं।
शुचिर्भूत्वा ततोयाचेत् विसर्ज्य च द्विजानिदं॥

अत्र केषाञ्चित् श्राद्धकल्पे ऋचे त्वा ऋचे त्वा सम्यक् स्रवन्ति सरितोन धेना अन्तर्हृदा मनसा पूयमानाः घृतस्य धारा अभिचा-कशीमि हिरण्मयोवेतसोमध्ये आसां तस्मिन् सुपर्णो मधुमत्कुलायी भजन्नास्ते मधुदेवताभ्यः। तस्य सते हरये सप्ततीरखधान्दुहानां अमा-त्तरथं धारामित्यनेन मन्त्रेण स्वधाधाराप्रपातनमुक्तं। अन्येके धारानि-क्षेपानन्तरं स्वधा सम्पद्यतामिति भवन्तो ब्रुवन्त्विति यजमानेनो-

क्ते सम्पद्यतां स्वधेति ब्राह्मणैर्वक्तव्यमित्याहुः । केचित्त्वार्घ्यपात्रस्थित-पवित्रसहितान् भूमौ दर्भानास्तीर्य तत्र स्वधोदकनिषेचनं कुर्वन्ति । कात्यायनवचने चैतद्दर्शयिष्यते । केचित्तु पिण्डानामुपरि स्वधोदकं निषिञ्चन्ति ।

उक्तं च मत्स्यपुराणे ।

स्वधावाचनिकं सर्वं पिण्डोपरि समाचरेदिति ।

केचित्त्वार्घ्यसंस्रवजलेन स्वधावाचनमाचरन्ति ।

उक्तं च ब्रह्माण्डपुराणे ।

ततः संस्रवपात्रेभ्यो जलमादाय चार्चितं ।
ऊर्जं वहन्तीस्त्व जपन् पिण्डांस्ताप्यवसिञ्चति ॥

अत्रात्रि-विष्णु-मनुभिः स्वधावाचनप्रशंसा दर्शिता ।

स्वधास्त्विति च तं ब्रूयुः ब्राह्मणास्तदनन्तरं स्वधाकारः पराह्याशीः सर्वेषु पितृकर्मसु ।

विश्वेदेवाः प्रीयन्तामिति यजमानेन वैश्वदेविकान् विप्रान् प्रत्युक्ते विप्रैश्च प्रीयन्तां विश्वेदेवा इति वक्तव्यं ।

प्रीतिवाचने प्रकारविशेषो ब्रह्मवैवर्त्ते दर्शितः ।

सव्यवद्दैवतीर्थेन यवोदकमथो ददेत् ।
विश्वेदेवाश्च यज्ञेस्मिन् प्रीयन्तामित्युदाहरेत् ।

ददेत वैश्वदेविकद्विजहस्ते श्राद्धकर्त्ता । तदनन्तरं प्रीयन्तामिति पित्र्यविप्रान् प्रति यजमानेनोक्ते सति विप्रैश्च प्रीयन्तां पितर इति वक्तव्यं । तदनन्तरं "दातार इत्यादिकमाशीःश्लोकं पठेत्[१] । इत्युक्त्वा

(१) जपेदिति ग० ।

दातार इत्यादिकं श्लोकमुक्का धन्योऽहमनुगृहीतोऽहं भवद्भिर्मदनुग्रहार्थमेतावतं क्लेशमङ्गीकृतवन्तो भवन्तः यथाकथञ्चित् सम्पादितेनाशनेन यूयमेवंविधाः श्रमं प्रापिताः स्थ तदस्माकं सर्वं भवद्भिः क्षन्तव्यं। भवत्प्रसादादद्य मे पितरः स्वर्गलोकं प्राप्ता इत्यादिरूपा द्विजान् प्रति प्रिया वाचश्च वदेत् ।

बृहस्पतिप्रोक्तः प्रियवाग्रूपोमन्त्रश्च जप्तव्यः ।

स च ।

अद्य मे सफलं जन्म भवत्पादाभिवन्दनात् ।
अद्य मे वंशजाः सर्वे यातावोऽनुग्रहाद्दिवं ॥
पत्र-शाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशजातं चित्तन्तु विस्मृत्य क्षन्तुमर्हथेति ॥

तदनन्तरं सर्वं सम्पूर्णमस्त्विति विप्राः प्रार्थयितव्याः ।

तथा च विष्णुः ।

मन्त्रहीनं क्रियाहीनं सम्पद्धीनं द्विजोत्तमाः ।
श्राद्धं सम्पूर्णतां यातु प्रसादाद्भवतां ममेति ॥

विप्रैश्च सर्वं सम्पूर्णमित्युक्ता अन्नगुणप्रशंसा कर्त्तव्या ।

तथा च वसिष्ठः ।

श्राद्धावसाने कर्त्तव्या द्विजैरन्नगुणस्तुतिरिति ।

अत्र गुणस्तुतिः मधुरादिगुणानां पृथक् पृथक् न कर्त्तव्या किन्तु शोभनं हविरित्येवमेव ।

तथा च स्मृतिः ।

हविर्गुणा न वक्तव्या वक्तव्यं शोभनं हविरिति ।

तदनन्तरं भूमौ जानुनी निधाय तान् विप्रान् प्रणम्य विसर्जयेत्।
तथा च विष्णुधर्मोत्तरे ।

जानुभ्यामवनिङ्गत्वा प्रणिपत्य विसर्जयेदिति ।

विसर्जनं नाम ब्राह्मणानामासनेभ्य उत्थापनं ।
अत एव मार्कण्डेयः ।

वाजे वाजेति तूत्थाप्य कृत्वा चैषां प्रदक्षिणं ।

एतच्च न्युब्जीकृतपितृपात्रोत्तानं कृत्वा कर्त्तव्यं। तच्च "वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः ।
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः"। इत्येतं मन्त्रमुच्चारयता कर्त्तव्यं ।
शौनकेन तु ।

उपवीयों स्वधेति विसृजेदस्तु स्वधेति चेत्युक्तं।

मैत्रायणीयसूत्रे तु ।
प्रणवमुक्त्वा स्वधास्त्विति विसर्जयेदिति ।
दर्भाग्रेण विसर्जनं कर्त्तव्यं।
तथा च मत्स्यपुराणे ।

वाजे वाज इति जपन् कुशाग्रेण विसर्जयेत् ।
अपसव्येन कर्त्तव्यं सर्व्वं श्राद्धं यथाविधि ।
सूक्त-स्तोत्रजपं कृत्वा विप्राणाञ्च विसर्जनं ॥

कुशाग्रेणैकैकं ब्राह्मणं दक्षिणकरेण स्पृशन्नुत्थापयेदित्यर्थः। अत्रै-कैकस्मिन् ब्राह्मणे मन्त्रं परिसमाप्यैकैकस्य ब्राह्मणस्योत्थापने क्रियमाणे बहूनां युगपदेकप्रेषान्वयेनैव पपद्यमानं यातेतिमन्त्रगतं बहुवचनम-

विवचितं स्यात्। अतः क्रमेण सर्वान् दर्भाग्रेण स्पृशन् सकृन्मन्त्रमुच्चारयन् युगपत्पित्र्यान् पूर्वमुत्थाप्यानन्तरं वैश्वदेविकानुत्थापयेत् । तदनन्तरमेवं मातामहेऽप्युत्थापयेत् ।

अत एव विष्णुधर्मोत्तरे ।

पश्चाद्विसर्जयेद्देवान् पूर्वं पैतामहान् द्विजान् ।
मातामहानामप्येवं सह देवैः क्रमः स्मृतः ॥

प्रचेता अपि ।

स्वस्तिवाच्यं ततः कृत्वा पितृपूर्वं विसर्जनं ।

अत्र विप्राणामुत्थापनेनैव तत्रावाहितदेव-पितृणामप्युद्वासनं सिद्धमिति । यद्यपि तत् स्मृतिषु पृथक् नोक्तं तथापि तदनुसन्धानार्थमुत्तिष्ठत पितरो देवैः सहेति वक्तव्यं ।

अक्षय्योदकमुक्त्वाह कात्यायनः ।

अघोराः पितरः सन्तु सन्त्वित्युक्ते, गोत्रं वर्द्धतां वर्द्धतामित्युक्ते, दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्विति आशिषः प्रतिगृह्य स्वधावाचनीयान् सपवित्रान् कुशानास्तीर्य्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधावाचनीयेष्वपो निषिञ्चत्युत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणान्दद्याद्विश्वेदेवाः प्रीयन्तामिति दैवे जपित्वा वाजे वाज इति विसृज्यामा वाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्योपविशेत् ।

अत्र साम्प्रदायिका व्याचक्षते । स्वधावाचनार्थमुपकल्पिताः कुशाः

'स्वधावाचनीयाः' पवित्राण्यर्घ्यपात्रस्थितानि आस्तीर्य्य पिण्डानामुत्तरतो दक्षिणाग्रान् तेषु पिण्डावनेजनपात्रस्थितमुदकं दक्षिणकरे गृहीत्वा ऊर्ज्जं वहन्तीरित्यादिकं मन्त्रमुच्चार्य्य तृप्यतेति विरक्ता पितृतीर्थेन निषेचनीयं। विसर्जने कृते गृहान्निर्गच्छतो ब्राह्मणानामावाजस्येत्येतत्प्रतीकवता मन्त्रेणानुव्रज्य द्वारमागतान् पादप्रक्षालनमण्डलप्रदेशे चोर्द्ध्वीभूताननेनैव मन्त्रेण प्रदक्षिणीकृत्य "आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः" ॥ इत्यादिका ब्रह्मपुराणोक्ता आशिषः प्रतिगृह्य तानुपवेश्योपविशेत् । ब्रह्मवैवर्त्ते ।

दद्याद्याक्षयजलं तिलाज्य-मधुसंयुतं ।
दरिद्रोऽपि यथाशक्त्या दद्याद् विप्रेषु दक्षिणां ॥
क्षमाप्य विप्रान् ब्रूयात्तु प्राञ्जलिः स च शाश्वतान् ।
अघोराः पितरः सन्तु मां प्रतीतिसमाहितः ॥
ते च तं प्रणतं ब्रूयुर्भवन्तु च सनातनाः ।
पितृभिस्तुष्टैस्तृप्तैश्च मामकं सुसमाहितैः ।
गोत्रं प्रवर्द्धतां पुत्र जननारोग्य-पुष्टिदैः ॥
ततस्ते ऊचुः सर्वेऽपि वर्द्धतामिति सादरं ।
प्राञ्जलिश्च ततः प्राह स च तत्सत्यवादिनः ॥
दातारोनोऽभिवर्द्धन्तामन्नञ्च न इतीव हि ।
एवमस्त्विति ते तञ्च कथयन्ति समाहिताः ॥
अथ चैवङ्कृते विप्रो ब्रूयाच्च जलपूर्व्वकं ।
विश्वेदेवाश्च प्रीयन्तामिति मन्त्रं समाहितः ।

एवमस्त्विति ते तच्च कथयन्ति प्रहृष्टवत् ॥
विसर्जयेच्च पितरो वाजे वाज इति स्मरन् ।
अनुव्रजेत्यिद्बन् सर्वान् सुपुण्यं विमुखे स्थितान् ॥
आमावाजेति मन्त्रन्तु पठित्वा च प्रदक्षिणं ।
द्वारोपान्ते ततः कृत्वा संयतः प्रविशेद्गृहे ॥

आमावाजस्येत्यादिकन्तु समग्रं मन्त्रमाह गोभिलः ।

अघोराः पितरः सन्तु सन्त्वित्युक्ते, गोत्रं नो वर्द्धतां वर्द्धतामित्युक्ते स्वधानिनयनीयान् सपवित्रान् कुशानास्तीर्य्य स्वधां वाचयिष्य इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो-मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यतामित्यस्तु स्वधेत्युच्यमाने स्वधानिनयनीयेषु धारान्दद्यादूर्जं वहन्तीरिति, विश्वे-देवाः प्रीयन्तामिति दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा यथा-शक्ति दक्षिणां दद्यात्। दातारो न इत्याद्या आशिषः प्रतिगृह्य वाजे वाज इति विसृज्य "आमावाजस्य प्रसवोजगम्या द्यावा पृथिवी विश्व-रूपे। आमागन्तां पितरा मातरा चामासोमोऽमृतत्वेन गम्यात्" ॥ इत्येतयानुव्रज्याभिवाद्य प्रदक्षिणीकृत्य वामदेव्यङ्गीत्वोपविशति । वामदेव्यं नाम साम तद्गीत्वा। छन्दोगविषयमेतत् । ब्राह्मणानुपवेश्यो-पविशेद्यजमानः ततस्तांस्ताम्बूलदानादिना परितोषयेत्। तदनन्तरं च तेषां स्वस्थानगमनार्थं पुनर्विसर्जनं कार्य्यं ।

तथा च शातातपः ।

ब्राह्मणान् भोजयित्वा तु शक्त्या दद्याच्च दक्षिणां ।
प्रतिगृह्याशिषन्तेषां कृत्वा विप्रान् प्रदक्षिणं ॥

ततः प्रदक्षिणीकृत्य पुनस्तेषां कृताञ्जलिः।
उक्त्वा चैव प्रियां वाचं प्रणिपत्य विसर्जयेत्॥

अस्य च विसर्जनस्य द्विजचरणावमर्दनपूर्वकत्वं कियदध्वानुव्रजन-वैशिष्ट्यञ्चोक्तं नागरखण्डे।

पादावमर्दनं कृत्वा आसीमान्तमनुव्रजेत्।

'आसीमान्तं' स्वगृहसीमापर्य्यन्तं।

मत्स्यपुराणे त्वनुव्रजने मर्यादान्तरं विशेषान्तरसहितमुक्तं।

वहिः प्रदक्षिणं कुर्य्यात् पदान्यष्टावनुव्रजेत्।
बन्धुवर्गेण सहितः पुत्रभार्यासमन्वितः॥
अनुव्रज्य निवर्त्तेत।

अत्र विसर्जने क्रमविशेषो निवर्त्तने ब्राह्मणानुज्ञाग्रहणञ्चोक्तं वाराह-विष्णुपुराणयोः।

विसर्जनञ्च प्रथमं पित्र्ये मातामहेषु च।
विसर्जयेत् प्रीतिमनाः सम्मान्याभ्यर्च्च्य तांस्ततः।
निवर्त्तेताभ्यनुज्ञात आधारात्ताननुव्रजेत्॥

मार्कण्डेयपुराणेऽपि।

विसर्जयेत् प्रियाण्युक्त्वा प्रणिपत्य च भक्तितः।
आधारमनुगच्छेत्तु आगच्छेच्चानुमोदितः॥

'अनुगच्छेत्' ब्राह्मणाननुव्रजेत्। 'आधारं' निवेशनद्वारपर्य्यन्तं। 'अनुमोदितः' ब्राह्मणैरनुज्ञातः।

अत्र नागरखण्डे।

अक्षय्यादयः पदार्थाः स्वधावाचनप्रकारान्तरसहिता दर्शिताः।

अक्षय्यं सलिलं देयं षष्ठ्या चैव ततः परं ।
पवित्राणि समादाय ॐ स्वधेति च कीर्त्तयेत् ॥
अस्तु स्वधेति तैरुक्ते पिण्डोपरि विनिक्षिपेत् ।
ततो मधु समादाय पायसञ्च तिलोदकं ॥
ऊर्जं वेति च मन्त्रेण पितॄणामुपरि क्षिपेत् ।
उत्तानमथ पात्रन्तु कृत्वा दद्याच्च दक्षिणां ॥
हिरण्यं देवतानाञ्च पितॄणां रजतं तथा ।
ततः स्वस्त्युदकं दद्यात् पितृपूर्वञ्च सव्यतः ।
ततः कृताञ्जलिर्भूत्वा प्रार्थयेत् पार्थिवोत्तम ।

दातारो नोऽभिवर्द्धन्तामित्यादि ।

वाजेवाजे वतेत्येवं विसृजेत्तान् द्विजोत्तमान् ।
आमावाजस्येत्येतेन प्रदक्षिणमथ क्रमेत् ।
विसर्जनञ्च कुर्वीत विनयेन समन्वितः ॥

'तत इति ब्राह्मणकरेषु पुष्पाक्षतं दत्त्वार्घ्यपात्रस्थितानि पवित्राण्यादाय पिण्डानामुपरि स्थापयित्वा मधु-पायस-तिलमिश्रमुदकं पात्रे गृहीत्वा ऊर्जं वेतिमन्त्रमुच्चार्य्य पितॄणां पिण्डानामुपरि पितेषु पवित्रेषु धारया तदुदकं निनयेत्। ततोऽर्घ्यपात्रोत्तानतादि कुर्यादित्यर्थः ।

पिण्डपूजानन्तरं वाराह-विष्णुपुराणयोरुक्तं ।

पूजयित्वा द्विजाग्र्याणां दद्यादाचमनं बुधः ।
पैत्रेभ्यः प्रथमं भक्त्या तन्मनस्को द्विजेश्वरः ।
सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणां ॥

दत्त्वा च दक्षिणान्तेभ्यो वाचयेद्वैश्वदेविकान् ।
प्रीयन्तामिति ये विश्वेदेवास्ते च इतीरयेत् ॥
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाशिषः ।
विसर्जनन्तु कुर्वीत ततोभक्तिसमन्वितः ॥

मानवमैत्रायणीयसूत्रे ।

उच्छिष्टेभ्यः उत्थाय वाजे वाज इत्यभिव्रज्य आमावाजस्येति प्रदक्षिणं कृत्वा रजतं दद्यात् ।

सौरपुराणे ।

हस्तप्रक्षालनं दत्त्वा कुर्याद्वै स्वस्तिवाचनं ।
दद्याद्वै दक्षिणां भक्त्या स्वधाकारमुदीरयेत् ॥
दातारोनोऽभिवर्द्धन्तां वाजेवाजेति वै ऋचं ।
जप्त्वा तु ब्राह्मणांस्तुत्वा नमस्कृत्य विसर्जयेत् ॥

वायुपुराण-ब्रह्मपुराणयोः ।

स्वधां वाच्य ततोविप्रान् विधिवत् भूरिदक्षिणान् ।
अन्नशेषमनुज्ञाप्य सत्कृत्य द्विजसत्तमान् ।
प्राञ्जलिः प्रयतश्चैव अनुगम्य विसर्जयेत् ॥

वृहस्पतिः ।

वाजेवाज इति प्रोच्य ब्राह्मणांस्तान् विसर्जयेत् ।
विप्रान् प्रदक्षिणीकृत्य पितृभ्यः प्रार्थयेद्वरान् ॥

शङ्खः ।

भोजयित्वा द्विजान् भक्त्या स्वधान्तान् दत्तदक्षिणान् ।

स्वस्तिवाच्य द्विजान् भक्त्या(१) अनुव्रज्य विसर्जयेत् ॥

हारीतः ।

प्रत्याचान्तेषु समूलदर्भतिलं ब्राह्मणपाणिषु निनयेत् ॐ स्वधेत्या-ऊरस्तु स्वधेति प्रत्याहुः। ततोऽनुज्ञावचनमभिरम्यतामित्येकेऽभिरताः स्मेति प्रत्याहुर्वाजे वाज इत्यभिव्रज्य पिण्डान् पितृयज्ञवन्निदध्यात्।

उशनाः। स्वधां वाचयेत् पिण्डानवधाय तोयेन प्रतिषिच्योदकभाजनान्युत्सृजेत्। स्वधावाचनानन्तरमाहात्रिः ।

आयुः-पुत्र-धनारोग्य-शान्त्यर्थञ्चैव वाचयेत् ।

द्विजानिति शेषः ।

साग्निकन्तु प्रत्याह व्यासः ।

अक्षय्यमन्नदानञ्च(२) वाच्यं प्रीतैर्द्विजातिभिः ।

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांस्तु विसर्जयेत् ॥

निगमः ।

स्वस्तिवाच्य ॐस्वधोच्यतामित्युक्ताभिरम्यतां यथासुखमिति च सम्पूज्यानुव्रजेत् ।

देवलः ।

अथवा वैश्वदेवत्यान् ब्राह्मणान् स्वस्तिवाचयेत् ।

अक्षय्यं वाचयेत्पित्र्यांस्त्वरमं सतिलोदकं ॥

अथ विप्रान् गृहीतार्थान् मंत्रप्रानभिवादयेत् ।

यथावद्वैश्वदेवत्यान् पितृपूर्व्वं पुनः पितॄन् ॥

पूर्व्वमुत्थापयेत् पित्र्यान् उत्तिष्ठतामिति च ब्रुवन् ।

---

(१) प्रसन्नात्मेति ग० । (२) अक्षय्यासनदानञ्चेति ख० ।

उत्थिताननुगच्छेच्च तेभ्यः शेषञ्च संहरेत् ॥

ब्रह्मपुराणे ।

अक्षय्यमस्त्विति पितॄन् प्रीयन्तामिति देवताः ।
प्रीणयित्वा परावृत्य त्रिर्जपेदघमर्षणं ॥
ततो विवृत्य च जपेञ्जन्मनाम इति त्यृचं ।
वीरान्नः पितरोदत्त वीरांश्च प्रददौ ततः ॥
अर्घ्यपात्रन्तु पिण्डानां अन्तरे सपवित्रकं ।
निचिप्योर्ज्जं वहन्तीति कोकातोयमयोजयत्[१] ॥
हिमं चीरं मधु तिलान् पितॄणां तर्पणं ददौ ।
स्वस्तीत्युक्ते पैतृकैस्तु विश्वान् देवा व्यतर्पयत् ॥
रजतं दक्षिणां दत्त्वा पित्र्यान्देवो गदाधरः ।
संविभागं मनुष्येभ्यो ददौ स्वदिति च ब्रुवन् ॥
कच्चित्सम्पन्नमित्युक्ता प्रत्युक्तस्तैर्द्विजोत्तमैः ।
अभिरम्यतामुवाच प्रोचुस्तेऽभिरताः स्म वै ॥
शिष्टमन्नञ्च पप्रच्छ तैरिष्टैः सह चोदितः ।
पाणावादाय तान् विप्रान् कुर्वंश्चानुगतिं तथा ॥
वाजेवाज इति पठन् वहिर्वेद्या विनिर्गतः ।
कोटितीर्थजलेनासावपसव्यं समुत्चिपन् ॥
स्वलग्नान् विपुलान् बालान् प्रार्थयामास चाशिषं ।
दातारोनोऽभिवर्द्धन्तां तैस्तथेति समीरितः ॥
प्रदक्षिणमुपावृत्य कृत्वा पादाभिवन्दनं ।

---

(१) 'कोका' तीर्थजलं ।

आसनानि ददौ चैषां आवयामास सूकरः ।
विश्राम्यतां प्रविश्याथ पिण्डं जग्राह मध्यमं ॥

मार्कण्डेयपुराणे ।

गन्ध-माल्यादिसंयुक्तान् दद्यादाचमनन्ततः ।
दत्त्वा च दक्षिणां शक्त्याथ स्वधास्त्विति तान् वदेत् ॥
तैश्च तुष्टैस्तथेत्युक्ते वाचयेद्वैश्वदेविकान् ।
प्रीयन्तामितिभद्रं वो विश्वेदेवा इतीरयन् ॥

बौधायनसूत्रे ।

यथोपपादं सम्पूज्याक्षय्यं वाचयित्वोपसंगृह्य स्वधां वाचयित्वोपस्थाप्य प्रसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य यथा ब्रूयुस्तथा कुर्यात् अनुज्ञातोदक्षिणाग्निं दर्भान् संस्तीर्य्य पिण्डान् दद्यात् ।

विष्णुः ।

ततः प्राङ्मुखेषू दङ्मुखाग्रतो यन्मे राम इति प्रदक्षिणं कृत्वा प्रत्येत्य च यथाशक्ति दक्षिणां दत्त्वाभिरमन्तु भवन्त इत्युक्त्वा तैरुक्तेऽभिरताः स्मेति देवाश्च पितरश्चेत्यभिजपेत् । अक्षय्योदकञ्च नामगोत्राभ्यां जप्त्वा विश्वेदेवाः प्रीयन्तामिति च प्राङ्मुखेभ्यः ततः प्राञ्जलिरिदन्तन्मनाः सुमना याचेत दातारोनोऽभिवर्द्धन्तामित्यादि वाजे वाज इति । ततो ब्राह्मणांस्तान् विसर्जयेत् । "पूजयित्वा यथान्यायमनुव्रज्याभिवाद्य च" ।

यन्मे राम इति प्रतीकविनियुक्तोऽयं मन्त्रः । यन्मे रामः शकुनिः श्वापदश्च यन्मे शुचिर्मन्त्रकृतश्च प्राशत वैश्वानरः सविता तत्पुनातु तस्मिन् पूते देवतामादयन्तां । तेन पूतेन पितरोमदन्तां । देवाश्च पितरश्चेत्य-

यमपि मन्त्रोलिख्यते। देवाश्च पितरश्चेत्येतत्पूर्त्तमत्रोपजीवतामस्मिन् लोके मान्धत्त जीवेम शरदः शतं पश्येम शरदः शतमूर्जं धत्त ज्योतिर्दृत्ताजरन्न आयुः। यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वाजिहिंसिम। अग्निर्नस्तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चक्रमयानि दुरिता।

विष्णुधर्मोत्तरे ।

दद्यादाचमनं भक्त्या श्रद्दधानः समाहितः ।
यन्मे रामः शकुनिरिति कृत्वा चैव प्रदक्षिणं ॥
प्रत्येत्य तर्पयेद्विद्वान् दक्षिणाभिः स्वशक्तितः ।
भवन्तोऽभिरमन्त्विति वाच्या विप्रास्त्वनन्तरं ॥
तैरुक्तेऽभिरताः स्मेति द्विजानां पुरतः स्थितः ।
देवाश्च पितरश्चेति जपेन्मन्त्रमतन्द्रितः ॥
पितृणां नाम-गोत्रेण जलं देयमनन्तरं ।
ब्राह्मणानां द्विजैर्वाच्यमक्षय्यं मनुजेश्वर ।
ततस्तु प्रार्थना कार्य्या मन्त्रेणानेन भूमिप ॥

दातारोन इत्यादि ।

वाजे वाज इति प्रोक्ता कृत्वा चैतान् प्रदक्षिणं ।
प्रणम्य च ततस्तांस्तु भक्त्या विप्रान् विसर्जयेत् ॥

कठसूत्रे ।

तृप्तानाचामयित्वा यन्मे राम इति प्रदक्षिणं कृत्वा प्रत्येत्याभिरमन्तु भवन्त इत्युक्ता देवाश्च पितरश्चेत्यनुवाकशेषेणोपतिष्ठेत ।

पिप्पलादसूत्रे ।

आचमनीयं दत्त्वा दक्षिणां दद्यात्। पुत्रान् पौत्रानित्येकमुदपा-

चमापोऽग्निमिति द्वितीयं द्वाभ्यां तृतीयमुदपात्रशेषं ब्राह्मणहस्तेषु निनयेत् पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधावदस्त्वक्षय्यमस्त्विति ब्राह्मणवचनं दातारो न इत्यादिवरान् याचित्वा नमो वः पितर इति नमस्करोति परायत इति द्वाभ्यां पराणीय वाजे वाज इति जपेत् । सूर्य्यस्यावृत्तमिति प्रदक्षिणमावृत्य मनोऽन्वाहुवामह इत्युक्तं पिण्डपितृयज्ञेनोपवीतिविशेषस्य ।

कौशिकसूत्रे ।

आचमनीयं दत्त्वा पुण्याहं वाचयेद्दक्षिणाञ्च दत्त्वा यथाशक्त्युदपात्रशेषं सपवित्रेषु ब्राह्मणहस्तेषु निनयेत्पुत्रं पौत्रमित्येकमापोऽग्निमिति द्वितीयं युक्ताभ्यां तृतीयं पुत्रं पौत्रमित्येकयैवोदपात्रमिति कौशिकः । प्रपितामहेभ्यः पितामहेभ्यः पितृभ्यो मातुलमातामहेभ्यो निर्दिष्टेभ्यः सर्वेभ्यः सपत्नीकेभ्यः स्वधावदक्षय्यमस्तु अक्षय्यमस्त्विति ब्राह्मणवचनाद्दातारो नोऽभिवर्द्धन्तामित्यादि वरान् याचित्वा नमो वः पितर इत्येवमादि मनोऽन्वाहुवामह इत्येवमन्तं ये समानाः सपिण्डाः पितृयज्ञे मध्यमपिण्डप्रदाने चेति वाजे वाजे वत वाजिन इत्यादिना ब्राह्मणान् हस्तेषु गृहीत्वोत्थाप्य प्रदक्षिणं कुर्य्यात् । एष श्राद्धविधिः ।

अत्र पात्रोत्तानताकरणे नानामुनिप्रोक्तान् । क्रमानुपसंगृह्य संग्रहकारः कथितवान् ।

याज्ञवल्क्यो विसर्गात् प्राक्पात्रमुत्तानमिच्छति ।
यमोविसर्जनं कृत्वा गृह्यकृच्चापि शौनकः ।
प्रीतिप्रश्नात्तु देवानां पूर्वं कात्यायनादयः ॥

एषाञ्च पक्षाणामाशीर्ग्रहणपक्षवद्व्यवस्था वक्तव्या ।

अथ स्वधावचनानन्तरं पवित्रविमोचनमुक्त्वा पात्रोत्तानतामाह शाट्यायनिः ।

मातामहानामप्येवं ततोदर्भ-पवित्रके ।
पिण्डपार्श्वे ततो[१]मुक्त्वा न्युब्जं पात्रं विवर्त्तयेत् ॥

प्रीतिवाचनात्पूर्वं पुण्याहवाचनाख्यं पदार्थं स्वस्तिवाचनानन्तरं पात्रोत्तानताञ्चाह प्रचेताः ।

ॐपुण्याहं विश्वेदेवाः प्रीयन्तामिति वाचयेत् ।
वाढमित्येवमुक्त्वासौ दक्षिणां श्रावयेत्ततः ॥
स्वस्तिवाच्यं ततः कृत्वा न्युब्जं पात्रं विवर्त्तयेत् ।
विसर्जयेत्ततस्तांस्तु वहिश्चैव प्रदक्षिणं ॥
कृत्वा विश्राम्य तत्रैतान् सम्मान्य च पुनस्तथा ।
विसृजेद्भक्तिसंयुक्तः सीमान्तञ्चाप्यनुव्रजेत् ।
निवर्त्तेताभ्यनुज्ञातस्तैर्विप्रैः स्वगृहं प्रति ॥

आह देवलः ।

निर्वर्त्य पितृमेधन्तु दीपं प्रच्छाद्य पाणिना ।
आचम्य पाणी प्रक्षाल्य ज्ञातीन् शेषेण भोजयेत् ॥

प्रच्छाद्येति निर्वाप्य ।

इति सुप्रोक्षितादयः पदार्थाः ।

अथ पिण्डप्रतिपत्तयः ।

ताश्च पिण्डप्राशनवर्जं पत्न्यसन्निधानादिनिमित्तविहितप्रतिपत्ति-वर्जं दर्शयिष्यमाणात् संयोगपृथक्त्वान्नित्य-काम्यरूपत्वेन द्व्यात्मिकाः ।

(१) द्विज इति ग० ।

तच्च कालविशेषविशिष्टं प्रतिपत्तिद्वयमाहतुः शङ्ख-लिखितौ। एवं वरान् याचित्वा नमस्कृत्य पिण्डानग्नौ वाप्सु वा क्षिपेदिति नमस्कृत्य ब्राह्मणान्। अयञ्च कर्मसमाप्त्यात्मकः क्षमापनरूपो नमस्कारो ज्ञेयः।
विष्णुधर्मोत्तरे तु प्रतिपत्तिचतुष्टयमुक्तं।

पिण्डांश्च गोऽज-विप्रेभ्यो दद्यादग्नावथ क्षिपेदिति।

देवलस्तु प्रतिपत्तिपञ्चकमाह।

ततः कर्मणि निर्वृत्ते तान् पिण्डांस्तदनन्तरं।
ब्राह्मणोऽग्निरजोगौर्वा भक्षयेदप्सु वा क्षिपेत्॥

याज्ञवल्क्योऽप्याह।

पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा।
प्रक्षिपेद्दक्षिणामिच्छन् दिशं पितृपरायणः॥

मनुस्त्वेतामेव पञ्चविधां प्रतिपत्तिमभिधाय षष्ठीमप्येकीयमतेन दर्शितवान्।

एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरं।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत्।
वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेषु वा॥

'अनलेषु वेतिपूर्वोक्तस्यैवानुवाद इति मेधातिथिः।
पाद्म-मात्स्ययोस्तु सप्तविधा प्रतिपत्तिरुक्ता।

पिण्डांस्तु गोऽज-विप्रेभ्यो दद्यादग्नौ जलेऽपि वा।
विप्रान्ते वाथ विकिरेद्वयोभिरथवाशयेत्॥

अत्र पिण्डान्वाहार्यकश्राद्धसम्बन्धिनः पिण्डान् प्रकृत्य कालिकापुराणे।

अवजिघ्रेत्ततो गत्वा पिण्डांस्तांश्च समाहितः ।
तेभ्योऽभ्युयोऽल्पिकां मात्रामादाय प्राशयेदिमान् ॥
पितावतिष्ठते वत्स तच्चैवाप्येवमाशयेत् ।
तच्छेषमग्नौ विप्रे वा अप्सु गोजामुखे हुवेत् ॥
पिण्डानेव ततो यत्नात् पितॄन् ध्यायन् विचक्षणः ।
पृष्ठतश्च ततो कृत्वा नैवेक्षेद्व्यर्थं चाननं ॥

यदि जीवत्पितृकः श्राद्धकर्त्ता तर्हि पिण्डमात्रान्तं पितरमाशयेत् । अग्न्यादौ कृतेषु पिण्डेषु ततस्तान् पृष्ठतः कृत्वा मुखं परावृत्य नावेक्षेत । पिण्डमात्राशनविधिस्तु पिण्डप्रदानप्रकरण एव दर्शितः ।
यमेन त्वेकैकस्य पिण्डस्य पृथक् पृथक् प्रतिपत्तिरुक्ता ।

अप्स्वेकं प्लावयेत् पिण्डमेकं पत्न्यै निवेदयेत् ।
एकञ्च जुहुयादग्नौ त्रयः पिण्डाः प्रकीर्त्तिताः ॥

वाराहपुराणेऽपि ।

जुहुते प्रथमन्त्वग्नौ पत्न्यै देयन्तु मध्यमं ।
तृतीयमुदके दद्याच्छेषं वा लेहयेत्स्वयं ।
चामयेच्च नमस्कृत्य भूमिन्देवीं तदन्तरे ॥

आभिश्च प्रतिपत्तिभिः प्रीणनीयानाह यमः ।

यत्पिण्डं प्लावयत्यप्सु चन्द्रम्प्रीणाति तेन सः ।
अग्नौ प्रीणयते देवान् ।पतृंश्चैव महायशाः ॥
यत्तथा मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता ।
पुत्त्रकामां सपुत्त्रान्तां कुर्वन्ति प्रपितामहाः ॥
यदेव प्रथमं पिण्डं जुहोत्यग्नौ द्विजोत्तमः ।

शाश्वतान् प्राप्यते लोकांस्तुष्टैः स प्रपितामहैः ॥

हारीतस्त्वाह ।

यदग्नावप्सु विप्रे वा पिण्डानादधते पुनः ।

तद्गुणास्ते क्रता दद्यात् यथाकामं विशन्ति हि ॥

अग्न्याद्याश्रयत्वादग्न्यादिगुणा ये क्रतादादिसंज्ञकाः पितरस्तांस्ते-ऽग्न्यादौ प्रतिपादिताः पिण्डाः 'यथाकामं' अयत्नेनैव 'विशन्ति' प्रविशन्ति तर्पयन्तीत्यर्थः। अत्र मध्यमपिण्डभक्षणस्य कामसम्बन्धो विष्णुधर्मोत्तरे प्रतिपादितः ।

मध्यमं पुत्त्रकामा वा पत्नी पिण्डं हि भक्षयेत् ।

आह देवलः ।

तेषां वा मध्यमं पिण्डं पुत्त्रकामा हि भक्षयेत् ।

पितृप्रसादात् पुत्त्रं वा लभते हि महागुणं ॥

तदेवं या सर्वथा पुत्त्रं न लभते या वा गुणवन्तं न लभते सा तथाविधपुत्त्रलाभाय मध्यमं पिण्डमश्नीयात्। आवश्यकश्चायं कामः। "एष वा अनृणोयः पुत्त्रीति श्रुतेः। "महागुणं सुतं सूते" इत्युक्तं।

तत्र पुत्त्रगुणान् प्रतिपद्पाठेन भक्षणयोग्यतापादकान् पत्नीगुणां-श्चाहतुर्मनु-वृहस्पती ।

पतिव्रता धर्मपत्नी पितृपूजनतत्परा ।

मध्यमन्तु ततः पिण्डमद्यात्पत्नी सुतार्थिनी ॥

आयुष्मन्तं सुतं सूते यशोमेधासमन्वितं ।

धनवन्तं प्रजावन्तं धार्मिकं सात्त्विकं तथा ॥

भक्षणयोग्यतापादकं पत्नीसम्बन्धिविशेषान्तरमाहतुः शङ्ख-लिखितौ।

पत्नी वा मध्यमं पिण्डमश्नीयादार्त्तवान्विता ।

'आर्त्तवं' रजः, तन्निमित्तं चतुर्थेऽहनि स्नानं कृतवती ।

अस्मिंश्च पिण्डभक्षणे विशेषमाह हारीतः ।

या पत्नी पुत्त्रकामा स्यान्मध्यमं पिण्डमश्नुयात् ।
प्राजापत्येन विधिना स तस्याः पुत्त्रदः स्मृतः ॥

प्रजापतिदृष्टोविधिः 'प्राजापत्यः' । स च मन्त्रविशेषेण भक्षण-मित्येवंरूपः ।

मन्त्रश्च पाश्यमात्मयोः प्रतीकेन विनियुक्तः ।

पत्नीं तु मध्यमं पिण्डमाशयेद्विनयान्वितां ।
आधत्त पितरोगर्भं मन्त्रः सन्तानवर्द्धनः ॥

ब्रह्मपुराणेऽपि ।

विश्राम्य तान् प्रविश्याथ पिण्डञ्जग्राह मध्यमं ।
छायामयी महापत्नी तस्यै पिण्डमदात्प्रभुः ॥
आधत्त पितरो गर्भमित्युक्ता सा सुरूपिणी ।
पिण्डं गृहीत्वा विप्राणां चक्रे पादाभिवन्दनं ॥

अमुञ्च मन्त्रं सम्पूर्णमाहाश्वलायनः ।

पिण्डानां मध्यमं पत्नीं प्राशयेत् आधत्त पितरोगर्भं कुमारं पुष्कर-स्रजं । यथायमरपा असदिति । छन्दोगानां तस्मिन् मन्त्रे पाठान्तरं । "आधत्त पितरोगर्भं कुमारं पुष्करस्रजं । यथेह पुरुषः स्यादिति ।

आपस्तम्बस्तु भक्षणाय पत्नीकरे पिण्डार्पणे मन्त्रं प्राशनमन्त्रे च पाठान्तरमाह । अपांत्वोषधीनां रसम्प्राशयामि भूतकृतं गर्भं दधत्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छत्याधत्त पितरो गर्भं

कुमारं पुष्करस्रजं यथेह पुरुषोऽसदिति तं पत्नी प्राश्नातीति।

बृहस्पतिस्तु पिण्डभक्षणायोग्यायां पत्न्यां मध्यमपिण्डस्य प्रतिपत्त्यन्तरमाह।

अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति॥

वायुपुराणे।

अन्यदेशगता पत्नी नष्टा वा यदि वा मृता।
तत्र मध्यमपिण्डस्य का गतिः किं प्रयोजनं॥
वत्सो वा यदिवानड्वान् भक्षयेत्तत्र मध्यमं।
तस्मिन्नेवाथवा देशे निक्षिपेदप्सु वा ततः॥

ब्रह्माण्डपुराणेऽपि।

पत्नी यस्य विदेशस्था आर्त्तवञ्च विमुञ्चति।
श्राद्धकाले समुत्पन्ने तस्य पिण्डस्य का गतिः॥
गतवीर्यस्तु योऽश्वो योऽनड्वांश्चैव तथाविधः।
तयोः पिण्डः प्रदातव्यो ययोर्वीजं न रोहति॥

आपस्तम्बः।

यदि पत्नी विदेशस्था उत्सृष्टा यदि वा मृता।
दुरात्मानानुकूला वा तस्य पिण्डस्य का गतिः॥
आकाशं गमयेत्पिण्डं जलस्थो दक्षिणामुखः।
पितॄणां स्थानमाकाशं दक्षिणा चैव दिग्भवेत्॥

अथान्या अपि कामसम्बन्धयुक्ताः प्रतिपत्तयः। तत्र मध्यमं पिण्डं पत्नीं प्राशयेदित्युक्ताहाश्वलायनः।

अपस्थितरावति प्रणीते वा यस्य वा गन्तुरनुकाम्याभावः स प्राश्नीयात् महारोगेण वाभितप्तः प्राश्नीयादन्यतरां गतिं गच्छति । रोगविमुक्ते विशिष्टलोकप्राप्तिरूपयोर्गत्योर्मध्येऽन्यतरां प्राप्नोति ।
आपस्तम्बेन तु यजमानकर्तृके पिण्डभक्षणे मन्त्रोऽभिहितः ।

ये समानाः समनसो जीवा जीवेषु मामकाः । तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समा इत्यवशिष्टानामेकं यजमानः प्राश्नातीति। अत्र रोगाभितप्तेन प्रथमोऽन्नाद्यकामेन तु चरमः पिण्डो-भक्षणीय इति विवेकः ।

तथा च हारीतवचनेऽन्यार्थदर्शनं ।

आयुर्दः प्रथमः पिण्डो द्वितीयः पुत्त्रदः स्मृतः ।
वृद्धिदस्तु तृतीयो वै तस्मान्मध्यममाशयेत् ॥

पुत्त्रकामा यजमानपत्नीति शेषः ।

वायुपुराण-ब्रह्माण्डपुराणयोः ।

पिण्डमग्नौ सदा दद्याद्भोगार्थी सततं नरः ।
पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकं ॥
उत्तमाद्गतिमन्विच्छन् गोभ्योनित्यं प्रयच्छति ।
आज्ञां प्रजां यशः कीर्त्तिमप्सु पिण्डं निधापयेत् ॥
प्रार्थयन् दीर्घमायुश्च वायसेभ्यः प्रयच्छति ।
सौकुमार्यमथान्विच्छन् कुक्कुटेभ्यः प्रयच्छति ॥
आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणादिक् तथैव चेति ॥

इति पिण्डप्रतिपत्तयः ।

अथोच्छिष्टोद्वासनं।

तत्र भोजनदेशसंशोधनार्थं तदुद्वासनं गृहजन-बाल-बान्धवादि-भोजनार्थमुच्छिष्टस्थलादिप्रक्षालनञ्चार्थप्राप्तं न शास्त्रे प्रतिपाद्यते। तत्सम्बन्धी तु कालविशेष उच्यते। स च सूर्यास्तमयात्परतोमुख्यः पूर्वतस्तु जघन्यः। तत्र जघन्यनिषेधभङ्ग्या मुख्य उक्तः।

कूर्मपुराणे।

नोद्वासयेत्तदुच्छिष्टं यावन्नास्तमितो रविः।

एतावत्कालपर्यन्तं अनुद्वासनं प्रयोजनसहितमाह वशिष्ठः।

श्राद्धे नोद्वासनीयानि उच्छिष्टान्यादिनक्षयात्।
श्चोतन्ते वै सुधाधारास्ताः पिबन्त्यकृतोदकाः॥

यावदुच्छिष्टानि नोद्वास्यन्ते तावत्तेभ्यः 'सुधाधाराः' अमृतस्य धाराः, 'श्चोतन्ते' निःसरन्ति। ताः येषां प्रमीतानां उदकदानं निषिद्धमनिषिद्धमपि वा येषां कैश्चिन्न कृतन्ते प्रेतादियोनौ वर्त्तमानाः सन्तः पिबन्ति।

कालिकापुराणे।

उच्छिष्टमार्जनं यावन्न कृतं द्विजसत्तम।
तावदश्नन्ति पितरः सुधारसविमिश्रितं॥

वाराहपुराणे।

विप्रोच्छिष्टानि यावन्ति यावत्तिष्ठन्ति भूतले।
आप्यायमानाः पितरस्तावत्तिष्ठन्ति ते गृहे॥

पितर इत्यत्रोच्छिष्टभागिन इति शेषः। ते च पूर्वोक्ता अकृतोदकाः।

ये च ब्रह्माण्डपुराणे दर्शिताः ।

उच्छिष्टं न प्रमृज्यात्तु यावन्नास्तमितो रविः ।
क्षीरधारास्ततोयान्त्यक्षय्याः सञ्चरभागिनः ॥

'सञ्चरः' मार्गः । एतच्चाशुचिप्रदेशोपलक्षणं । ततश्चाशुचिप्रदेशं ये भजन्ते भूत-प्रेत-पिशाचादियोनिगताः श्राद्धकर्तृसपिण्ड-समानोदकादय इत्यर्थः ।

मनुरपि श्राद्धोच्छिष्टभागिनः प्रतिपादयति ।

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।
दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते ॥
दासवर्गोऽत्र मुख्यपितृसम्बन्धी प्रमीतो वेदितव्यः ।

आह वशिष्ठः ।

प्राक्संस्कारात् प्रमीतानां सम्प्रेष्याणामिति स्थितिः ।
भागधेयं मनुः प्राह उच्छिष्टोच्छेषणे उभे ॥

'भागधेयं' भजनीयोंऽशः । उच्छिष्टन्नाम भुञ्जानेषु यत्पात्रकर-मुखेषु संश्लिष्यते भूमौ च पपात, तत्तु सुदृप्तत्वेन कारणान्तरेण वा भुज्यमानादन्नराशेर्बुद्धिपूर्वकमवशिष्यते तदुच्छेषणं, तदेतदुभयं 'सम्प्रेष्याणां' दासानां, 'भागधेयमिति श्रुतिरित्येतन्मनुः प्राह ।

उच्छेषणमपि न पात्रस्थितं तेषां भागधेयं किन्तु भूमौ निहितं अतस्तद्ब्राह्मणैर्बुद्धिपूर्वकं भूमौ निधेयमिति गम्यते । तच्च प्रेतादि-योनिगतं दासादिवर्गमुद्दिश्य यजमानेन त्याज्यं ।

तदेतदाह वशिष्ठः ।

उच्छेषणं भूमिगतं विकिरं लेपमोदकं ।

अनुप्रेतेषु विसृजेदप्रजानामनायुषां ॥

अनुमुख्यपित्र्यनुगमनबुद्ध्या प्रमीतेभ्योदासवर्गेभ्यः प्रजारहितेभ्यो बाल्य एव मृतेभ्यश्च विसृजेत्। अमुकस्मा अमुकस्मै प्रेतायेदमुच्छिष्ट-मुच्छेषणं वोपतिष्ठतामित्यभिधाय पितृतीर्थावपादितेन सतिलेन जलेन त्यजेत् ।

मनु-विष्णू ।

असंस्कृतप्रमीतानां त्यागिनां कुलयोषितां ।

उच्छिष्टं भागधेयं स्यात् दर्भेषु विकिरश्च यः ॥

'असंस्कृताः' अकृतोपनयनाः, अकृतविवाहाश्च स्त्रियः। 'त्यागिनो नाम जलानल-विष-शस्त्रोद्बन्धन-भृगुपातादिभिरात्मघातिनः। कुल-योषितामकृतोदकानामेवं। अथवा कारणमन्तरेण कुलयोषितां ये त्यागं कृतवन्तः तेषामिति व्याख्येयं। अस्तङ्गतेरवावुच्छिष्टोद्वासनं उक्तं तच्च स्थलप्रक्षालनस्याप्युपलक्षणं ।

यमः ।

अस्तङ्गते ततः सूर्य्ये विप्रपात्राणि चाम्भसि ।

निक्षिपेत् प्रयतो भूत्वा सर्वाण्यधोमुखान्यपि ॥

द्वितीयेऽहनि सर्वेषां भाण्डानां क्षालनं तथा ।

अनन्ता जायते तृप्तिः पितॄणामपि सर्वदेति ॥

ब्रह्मपुराणे यदस्तमयानन्तरं जलमध्येऽन्युब्जभोजनपात्रस्थापनमुक्त्वा द्वितीयदिने प्रक्षालनमुक्तं तत्पात्रान्तरमद्भावे सति वेदितव्यं। यच्च सायङ्कालपर्यन्तं उच्छिष्टस्थापनमुक्तं तदपि पुत्र-मित्रादिभोजनार्थं गृहान्तरसद्भावे सति वेदितव्यं ।

अत एवाह प्रचेताः ।

भृत्यवर्गवृतोभुङ्क्ते कव्यशेषं सगोत्रकैः ।
आ सायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत् ॥

अत्र श्राद्धशालायामुच्छिष्टमिति विशेषणं, तदेतस्यां भोजनशालायां भुक्तं इति गम्यते ।

गृहान्तर-भोजनपात्रान्तराभावे तु जघन्यं कालान्तरं मनुमत्स्यपुराणयोर्दर्शितं ।

उच्छेषणन्तु तत्तिष्ठेद्यावद्विप्रा विसर्जिताः ।
ततो गृहबलिं कुर्य्यादिति धर्मोव्यवस्थितः ॥

अमुमेव कालं कालान्तरनिषेधभङ्ग्याह याज्ञवल्क्यः ।

सत्सु विप्रेषु द्विजोच्छिष्टं न मार्जयेदिति ।

'सत्सु' स्वस्थानगमनार्थमविसर्जितेषु ।

अत्र यदि श्राद्धभोक्ता ब्राह्मणेन भोजनयोग्यं कियदन्नमुच्छेषितमस्ति तर्हि तत्तदीयाय शिष्याय सुतायोच्छिष्टभोजनयोग्याय दीयमानं न दुष्यति शूद्रादिभ्यस्तु दीयमानन्दुष्यत्येव ।

अत एव शातातपेनोक्तं ।

श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

अनेन वृषलनिषेधेन भोक्तृद्विजोच्छिष्टभोजनयोग्याय सुत-शिष्य-भार्य्यादेस्त्रैवर्णिकाय तदुच्छिष्टदापनमनुमतं भवति ।

त्रैवर्णिकायाप्यनुपनीताय न दातव्यं ।

तथा च ब्रह्माण्डपुराणे ।

शूद्राय चानुपेताय श्राद्धोच्छिष्टं न दापयेत् ।
योदद्याद्रागतोमोहान्न तद्गच्छति वै पितॄन् ॥
तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्मणि ।
अन्यत्र दधि-सर्पिर्भ्यां शूद्रादिभ्यः कदाचन(१) ।
कामं दद्याच्च सर्वन्तु शिष्याय च सुताय च ॥

अन्यत्र दधि-सर्पिर्भ्यां इत्यनेनोच्छिष्टयोर्दधि-सर्पिषोरनुपनीताय शूद्राय च दानमनुमतं कृतं ।

आह जातूकर्ण्यः ।

द्विजभुक्तावशिष्टन्तु सर्वमेकत्र संहरेत् ।
शुचिभूमौ प्रयत्नेन निखत्याच्छादयेद् बुधः ॥

अत्र तावत्सुत-शिष्यादिदत्तावशिष्टं निखनेत् । यदि तु तद्-ग्रहीतारः सुतादयो न सन्ति तदा सर्वमेव निखनेत् । अत्र यदि द्विजविसर्जनानन्तरमेवोच्छिष्टोद्वासनं क्रियते तदा तदनन्तरं श्राद्ध-शेषेण पञ्चमहायज्ञनिर्वपणं कार्य्यं । यदि तत्समयपर्य्यन्तं उच्छिष्टानि स्थाप्यन्ते तदा विसर्जनानन्तरमेव । तच्च पूर्वमेवोक्तं ।

इत्युच्छिष्टोद्वासनं ।

## अथ शेषभोजनं ।

तत्र ब्रह्मपुराणे ।

एवं सम्यक् गृहस्थेन देवताः पितरस्तथा ।
सम्पूज्या हव्य-कव्याभ्यां अन्नेनातिथि-बान्धवाः ॥
भूतानि भृत्या विकलाः पशु-पक्षि-पिपीलिकाः ।

---

(१) कथञ्चनेति ख० ।

भिक्षवो याचमानाश्च ये चान्ये याचका गृहे ॥

'विकलाः' अन्ध-बधिर-मूकादयः ।

मनुः ।

प्रक्षाल्य हस्तावाचम्य ज्ञातिप्रायं प्रकल्पयेत् ।
ज्ञातिभ्यः सत्कृतं दत्त्वा बान्धवानपि पूजयेत् ॥

'ज्ञातयः' पितृपक्षीयाः सपिण्डाः, श्राद्धावशिष्टमन्नं यथा तान् प्राप्नोति तथा कुर्यात् तेनान्नेन तान् भोजयेदित्यर्थः । तेभ्यः सत्कारपूर्वकं तदन्नं दत्त्वा 'बान्धवान्' मातृ-श्वशुरपक्षीयान्, पूजयेदित्यर्थः । अत्र यदि शेषमन्नं किं क्रियतामिति वेदितमन्नं ब्राह्मणैरभ्यन्दीयतामित्येवमुक्त्वा स्वयं स्वीकृतं तदा पाकान्तरेण ज्ञातिबान्धवादयो भोजनीयाः । यदि लिष्टैः सह भुज्यतामित्येवमनुज्ञातं तदा तच्छेषेण । अथ वा शेषमन्नमित्युक्ते इष्टेभ्योदीयतामिति ते ब्रूयुरिति नित्यवदाम्नानान्न गृहीतव्य एव द्विजैरन्नशेष इति तेनैव ज्ञात्यादयो भोजनीयाः ।

देवलस्मृति-कूर्मपुराणयोः ।

प्रक्षाल्य हस्तावाचम्य ज्ञातीन् शेषेण भोजयेत् ।
ज्ञातिष्वपि च तृप्तेषु स्वान् भृत्यान् भोजयेत्ततः ।

आदित्यपुराण-ब्रह्मपुराणयोः ।

भगिन्यो बान्धवाः पूज्याः श्राद्धेषु च सदैव हि ।
दारिद्र्योपहता दीनश्छिन्नाङ्गश्चाधिकाङ्गुलिः ॥
वृथाजाता विरक्ताश्च व्याधिना च प्रपीडिताः ।
एते भोजनमर्हन्ति भोक्तुः सर्वत्र सर्वदा ॥

वन्दि-मागध-सूताश्च तौर्यत्रिकविदस्तथा ।
अलब्धलाभाः श्राद्धेषु नाशयन्ति महद्यशः ।
तस्मात्तेऽपि विभक्तव्याः सकलं संविभज्य च ॥

'वृथाजाताः' षण्ढान्ध-पङ्ग्वादयः । वन्द्यादयः पूर्वमेव व्याख्याताः । 'तौर्यत्रिकं' नृत्य-गीत-वाद्यानि । 'अलब्धलाभाः' अप्राप्तान्नाः, 'विभक्तव्याः' अत्र भागिनः कर्त्तव्या इति । एवं ज्ञात्यादीन् भोजयित्वा स्वयमपि भुञ्जीत ।

तथा च निगमः ।

अनुज्ञातो गृहान् बाल-वृद्धांश्च परितोष्य भुञ्जीतेति ।

'अनुज्ञातः' इष्टैः सह भुज्यतामित्येवं श्राद्धभोक्तृभिरनुज्ञातः । अनेन श्राद्धशेषमन्नं भुञ्जीत नान्यदित्यपि सूचितं ।

अतएवाह शातातपः ।

शेषमन्नमनुज्ञातं भुञ्जीत तदनन्तरं ।
इष्टैः सार्द्धन्तु विधिवद्बुद्धिमान् सुसमाहितः ॥

'इष्टैः सार्द्धमित्यनेन स्वपङ्क्तिभोजिभिः सहैकपङ्क्तावित्युच्यते । 'विधिवदित्यनेनापोशानादीतिकर्त्तव्यताविशिष्टता पात्रधारण-मौनादिनित्यभोजनधर्मयुक्तता च प्रतिपादिता । 'बुद्धिमान्' भोजनविधिज्ञः । 'समाहितः' पाण्यादिचापलरहितः ।

तत्र मौनयुक्तता भविष्योत्तरे दर्शिता ।

मित्र-बन्धुजनैः सार्द्धं शेषमुञ्जीत वाग्यतः ।

'सार्द्ध मित्यनेनैकपङ्क्तावित्यपि लभ्यते । एवमुत्तरत्रापि व्याख्येयं । अत्र ज्ञाति-भृत्यभोजनानन्तरमुक्तं ।

कूर्मपुराणे ।

पश्चात् स्वयञ्च पत्नीभिः शेषमन्नं समाचरेत् ।

अत्र पक्षान्तरमपि कात्यायनेन दर्शितं ।

पूर्वोवा गृहपतिरिति ।

अतोऽगृहपतिं भोजयित्वा पत्न्योभुञ्जीरन् पश्चाद् वा ।

आह वृहस्पतिः ।

एवं देवान् पितृंश्चैव तर्पयित्वा द्विजोत्तमः ।
पुत्र-मित्रादिसहितो गृहस्थोभोक्तुमर्हति ॥

ब्रह्मपुराण-मार्कण्डेयपुराणयोः ।

ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्नरः ।

वाराहपुराणे ।

भुञ्जीयाच्च समं पूज्य भृत्य-बन्धुभिरात्मनः ।
तथान्यान् प्रयतः सम्यक् सखि-सम्बन्धि-बान्धवान् ॥

उशनाः ।

तैरनुज्ञातोऽशेषमिष्टेभ्योदद्यात् स्वयञ्च भुञ्जीत ।

याज्ञवल्क्यः ।

प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितं ।

पद्मपुराणे ।

हृष्टैः सह ततः शान्तो भुञ्जीत पितृसेवितं ।

'पितृसेवितं' पितृब्राह्मणैर्यद्यदन्नं भुक्तं तस्य तस्य शेषं भुञ्जीत । अतश्च यत्प्रमादेन श्राद्धभोक्तृभ्यो न दत्तं तन्न भोक्तव्यमेवेति गम्यते । पितृनिषेवितञ्च सर्वमपि स्तोकं स्तोकं भोक्तव्यं ।

तथा च मत्स्यपुराणे ।

ततस्तु वैश्वदेवान्ते सभृत्य-सुत-बान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितं ॥

अत्र माष-मांसादिकं पितृनिषेवितमप्यन्वाधानकृता श्राद्धे न भक्षयितव्यं। "अमाषममांसं व्रतं व्रतयेत्" इति श्रुत्या प्रतिषेधात्। अकृतान्वाधानेनानग्निना च पञ्चदश्यामपि पितृनिषेवितं मांसादिकं भक्षयितव्यं "पितृनिषेवितं सर्वं भुञ्जीत" इतिवचनात्। यस्तु "हन्यादासप्तमं कुलं मांसाशने पञ्चदशी" इति निषेधः स रागप्राप्तभक्षणविषयत्वान्न वैधं भक्षणं बाधितुं क्षमते। येनाप्यमुककालपर्यन्तं सर्वदा वा मधु-मांसादिकं मया न भक्ष्यमिति नियमोऽभ्युपगतः तेनापि तच्छ्राद्धादौ भक्षणीयं।

तथा च बृहस्पतिः ।

क्रतौ श्राद्धे तदङ्गत्वाद्विप्राज्ञाभङ्गतोऽवृतः ।
भक्ष्यत्वादनुयोगेऽपि खादन्मांसान्यपि व्रती ॥

'क्रतौ' पशुबन्धे, श्राद्धे च भवतास्मिन् भोजने मांसभक्षणीयमित्येवंविधाया विप्राज्ञायाः 'अभङ्गतः' अभङ्गहेतोः, यजमानः तेन च यः 'वृतः' ऋत्विक्, सः 'अनुयोगेपि' अभक्षणव्रतेपि, मांसान्यपि खादन् व्रत्येव भवति। न तु भग्नव्रतः मांसान्यपीत्यनेन किमुतान्यत् खादन्निति सूचितं।

तथा ।

रोगेण युक्तो विधिवद्धुतं विप्रवृतस्तथा ।
मांसमद्याच्चतुर्थ्येषा परिसंख्या प्रकीर्त्तिता ॥

'रोगेण' मांसभक्षणैकचिकित्स्येन। 'विधिवत्' मधुपर्कश्राद्धादि-विधिनिवेदितं। 'हुतं' पशुबन्धे यजमानः, तेन च विप्रेण वृतः ऋत्विक् व्रतवानपि मांसमद्यात्। एषा चैतेषु चतुर्षु स्थानेषु 'परिसंख्या' मांस-भक्षणनियमस्य व्यावृत्तिः। अन्ये लभक्षणव्रते श्राद्धे तदवघ्राणमाहुः। तथा च जातूकर्ण्यः।

मधु-मांसनिवृत्तस्तु श्राद्धे कर्माणि चाचरेत्।
पात्रस्थं गन्धमाघ्राय पितॄणामनृणो भवेदिति॥

'पात्रस्थं' भोजनपात्रस्थितमांसाद्याश्रितं, 'पितॄणामनृण' इत्यनेन पितृनिषेवितान्नभोजनादवघ्राणाच्च पितॄणां तृप्तिर्भवतीति सूचितं। तथा च ब्रह्मवैवर्त्ते।

पितृद्विजेभ्यः सर्वेभ्योयद्यदत्र निवेदितं।
अश्नन्नेव हि तत्सर्वं पितॄन् प्रीणाति मानवः॥

एतच्च भोजनं सति सामर्थ्ये तृप्तिपर्यन्तं कर्त्तव्यं। तदभावे तु पितृनिषेवितेभ्योऽन्नेभ्यः किञ्चित् किञ्चिदादायैकग्रासपरिमाणमपि समुदायं सम्पाद्य भोजनं कर्त्तव्यं।

तदाहापस्तम्बः।

सर्वतः समवदायोत्तरेण यजुषाग्रेषस्य ग्रासावरार्द्धं प्राश्नीयादिति। प्राणे निविष्टोऽमृतं जुहोमि ब्रह्मणि मे आत्मामृतत्वायेति। उत्तरं यजुः अनेन च भोजनस्यावश्यकत्वमुक्तं। अत एव श्राद्धदिने उपवासनिषेधमाह व्यासः।

आदित्येऽहनि सङ्क्रान्तावसितैकादशीग्रहे।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही॥

देवलस्तूपवासे दोषमप्याह ।

श्राद्धे दत्त्वा तु योविप्रो न भुङ्क्तेऽथ कदाचन ।
देवा हविर्न गृह्णन्ति कव्यानि पितरस्तथा ॥

उपवासदिने श्राद्धकर्त्ता पितृनिषेवितं सर्वमवघ्रातव्यमेवेत्ययमपि पक्षो ब्रह्मवैवर्त्ते विचारपूर्वकं प्रतिपादितः ।

उपवासदिनं प्राप्य यदा भवति नारद ।
पितृश्राद्धं तथान्यच्च तदा कार्यञ्च तच्छृणु ॥
व्रतभङ्गो महत्पापं भुक्तशेषस्य सेवया ।
तत्र वै यत्प्रकर्त्तव्यं तच्छृणुष्व मयेरितं ॥
सर्वमन्नं समुद्धृत्य दक्षिणेन करेण तु ।
अवघ्राणन्ततः कुर्यात् व्रतभङ्गोऽन्यथा भवेत् ॥
अकृते तु मुनिश्रेष्ठ ह्यवघ्राणे च नारद ।
श्राद्धलोपः कृतस्तेन मातृहा पितृहा भवेत् ।
एवं ज्ञात्वा तु विद्वद्भिरुपायश्चिन्तितो द्विजैरिति ॥

व्यासोऽप्याह ।

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासन्तदा कुर्य्यादाघ्राय पितृसेवितं ॥

'नैमित्तिकमित्यनेन नित्यश्राद्धे उपवासदिनेऽवघ्राणं न कार्य्यमिति सूचितं ।

शिवरात्रिव्रतोपवासं पुरस्कृत्योक्तं प्रभासखण्डे ।

पुरोडाशोऽपि देवेशि सम्प्राप्ते शिववासरे ।
अभक्ष्येण समः प्रोक्तः किं पुनस्त्वान्यसत्क्रिया ॥

चतुर्दश्यां यदा चैव श्राद्धं नैमित्तिकं तथा ।
उपवासस्तदा कुर्यादाघ्राय पितृसेवितं ॥

एवं यस्मिन् शिवरात्र्येकादश्यामुपवासे क्रियमाणे महत्पुण्यन्त्यज्यमाने वा बहु पापन्तस्मिन्नवघ्राणमेव कर्त्तव्यं। यस्मिंस्तु द्वयमेतदल्पं तस्मिन्नवघ्राणमयाचितमेकभक्तं वा कर्त्तव्यं ।

अत एवोपवासायाचितैकभक्तानां प्रत्येकं फलविशेषः प्रभासखण्डे एवोक्तः।

उपवासदिने श्राद्धं कथञ्चिद्यदि जायते ।
उपवासेऽश्वमेधाख्यं राजसूयमयाचिते ।
वाजपेयं लभेद्भोक्ता एकभक्तेऽग्निष्टोमजं ॥

'अग्निष्टोमजं' पुण्यमितिशेषः। अतश्चोपवासदिने श्राद्धे कृते शेषान्नावघ्राणं भोजनं वा कर्त्तव्यमिति स्थितं।

तत्र भोजनकालमाह जातूकर्ण्यः ।

अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः।
अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते ॥

नागरखण्डे ।

बलिञ्च निक्षिपेत्तस्माद्भोजनञ्च समाचरेत् ।
मौनेन दृश्यते सूर्यो यावत्तावन्नराधिप ॥
यस्त्वेवास्तमिते सूर्ये भुङ्क्ते च श्राद्धकृन्नरः ।
व्यर्थतां याति तच्छ्राद्धं तस्माद्रात्रौ न भोजयेत् ॥

इति शेषभोजनं ।

इति मुख्यकल्पिकः पार्वणश्राद्धप्रयोगः ।

अथानुकल्पिकाः पार्वणश्राद्धप्रयोगाः ।

तत्र मुख्यकल्पाशक्तस्यानुकल्पेनानुष्ठानमाह कात्यायनः।

चरितार्था श्रुतिः कार्य्या यस्मादप्यनुकल्पतः।
अतोदेयं यथाशक्ति श्राद्धकाले समागते॥

मुख्याशक्तौ चानुकल्पानुष्ठाने मुख्यफलावाप्तिमाह शातातपः।

यथाकथञ्चिन्नित्यानि कुर्य्यादिन्दुक्षयादिषु।
पात्र-द्रव्याद्यसम्पत्तौ सोऽपि मुख्यफलं लभेत्॥

'यथाकथञ्चित्' कियदङ्गहान्या, 'नित्यानि' यावज्जीवमनुष्ठेयतया विहितानि दर्श-पूर्णमासपिण्डपितृयज्ञश्राद्धादीनि। 'इन्दुक्षयादिषु' अमावास्यादिकालेषु। 'पात्राणि' पूर्वोक्तलक्षणा ब्राह्मणाः। 'द्रव्यं' मधुमांस-पायसोदन-सूप-शाकादि।

भविष्योत्तरे।

श्राद्धानुकल्पं यः कुर्य्याज्जात्यवस्थाद्यपेक्षया।
श्रद्धावान् सोऽप्यवाप्नोति मुख्यश्राद्धफलं नरः॥

'जात्यपेक्षया यथा शूद्रः स्वकीयां शूद्रतामपेक्ष्य मन्त्ररूपाङ्गहीनं पकाङ्गहीनञ्चानुकल्परूपं श्राद्धं करोति, यथा वा स्त्री मन्त्रहीनं। यद्यपि स्त्री-शूद्रयोस्तथाविधमेव श्राद्धं मुख्यं तथापि द्विजकर्तृकं मुख्यं श्राद्धमपेक्ष्यान्याङ्गत्वाद्द्विजैरनुष्ठीयमानमिवात्रानुकल्पशब्देन व्यवह्रियते। 'अवस्थापेक्षया यथानुपनीतो मन्त्रहीनमपत्नीकः प्रवासी चामहेमश्राद्धयोरन्यतरत्। आदिशब्देन पात्र-द्रव्याद्यसम्पत्त्यपेक्षापि संगृह्यते।

मुख्यानुष्ठानशक्तिमांस्त्वनुकल्पमनुतिष्ठन् कर्मफलं न प्राप्नोतीत्याह व्यासः।

शक्तः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते।

स नाप्नोति फलं तस्य परत्रेति सुनिश्चितं ॥

अत्रानेकब्राह्मणसम्पत्त्यभावे अनेकब्राह्मणभोजनपर्याप्तान्नासम्भवे चैकेनैव ब्राह्मणेन षड्दैवत्यं षट्पिण्डश्राद्धं कुर्य्यात्।

तथा च प्रभासखण्डे ।

द्रव्याभावे द्विजालाभे विधिं वक्ष्यामि तत्त्वतः ।
एकेनापि हि विप्रेण षट्पिण्डं श्राद्धमाचरेत् ॥
षड्दर्भान् दापयेत्तस्मै षड्भ्योदद्यात्तथासनं ।
षड्घ्यावाहयेत्तत्र षड्भ्योदद्यात्तथा हविः ॥

'द्विजालाभ' इत्यनेकद्विजालाभे । यदा च षड्दैवत्यमेकेनैव विप्रेण कुर्य्यात्तदा सर्वगुणसम्पन्नं विप्रं निमन्त्रयेत् ।

उक्तं हि कूर्मपुराणे ।

अपि वा भोजयेदेकं ब्राह्मणं वेदपारगं ।
श्रुत-शीलादिसम्पन्नमलक्षणविवर्जितं ॥

एकेनापि हि विप्रेण षड्दैवत्यं श्राद्धं क्रियमाणं वैश्वदेविकयुक्तमेव कर्त्तव्यं। तत्र द्विजाभावेऽपि वैश्वदेविकानुष्ठानप्रकारमाह वशिष्ठः

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ।
देवतायतने कृत्वा ततः श्राद्धं प्रवर्त्तयेत् ॥

प्रकृतश्राद्धार्थं सम्पादितस्य तत्तज्जातीयस्यान्नस्य प्रत्येकमेकदेशं समुद्धृत्य देवतायतने वैश्वदेविकद्विजोपवेशनोचिते स्थाने पात्रमासाद्य तत्र परिवेष्य तत्रत्यासने च विश्वान् देवानावाह्य तान् पुरोवर्त्तिन इवानुध्याय पृथिवी ते पात्रमित्यादिकं जपित्वा पुरूरवार्द्रवः-

संज्ञकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नं स्वाहा ॐ तत् सदित्युक्त्वा 'श्राद्धं' पित्र्य कर्म प्रवर्त्तयेदित्यर्थः ।

कूर्मपुराणे ।

उद्धृत्य पात्रे चान्नं तत्सर्वस्मात् प्रकृताद्धुतात् ।
देवतायतने चैभ्यो निवेद्यान्यत् प्रवर्त्तयेत् ॥

मनुरोऽप्याह ।

भोजयेदथवाप्येकं ब्राह्मणं पङ्क्तिपावनं ।
दैवे कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥

'तस्य' पित्र्यस्य द्विजस्य स्थाने ।

आह शातातपः ।

देवेभ्यस्तु नमस्कृत्य पूर्वं भागं प्रदापयेत् ।

'पूर्वमिति पितृभ्यः पूर्वं । 'भागमिति तत्प्रदेयमन्नं ।

ब्रह्माण्डपुराणे तु वैश्वदेविकस्थानेऽग्निस्थापनमुक्तं ।

एक एव यदा विप्रो द्वितीयोनोपपद्यते ।
पितॄणां ब्राह्मणे योज्यो दैवे त्वग्निं नियोजयेत् ॥

अत्र पित्र्येऽन्नसङ्कल्पप्रकारमाह बृहस्पतिः ।

यद्येकं भोजयेच्छ्राद्धे स्वल्पत्वात् प्रकृतस्य तु ।
स्तोकं स्तोकं समुद्धृत्य तेभ्योऽन्नं विनिवेदयेत् ॥

एकब्राह्मणतृप्तिसमर्थनानाजातीयान्नसमुदायात्तज्जातीयान्नैकदेशमुद्धृत्योद्धृत्य षट्समुदायान् सम्पाद्यैकस्मिन्नन्ने एकस्मिन् वा पात्रे परिवेष्यैकैकं समुदायं पित्रादिक्रमेणैकैकस्मै श्राद्धदेवतारूपाय निवेदयेत् । एकस्मादेव वान्नसमुदायात् स्तोकं स्तोकं समुद्धृत्य बुद्ध्यैव

पृथक् परिकल्प्य निवेदयेत् । दैवे पित्र्ये क्रमादन्नं सङ्कल्प्य गायत्री-जपादिकं कृत्वा पित्र्यविप्रभोजनकाले वैश्वदेविकस्यान्नस्य प्रतिपत्ति-विशेषः कार्यः ।

तमाह वसिष्ठः ।

प्राश्येदग्नौ तदन्नन्तु दद्याद्वा ब्रह्मचारिणे ।

कूर्मपुराणे ।

प्राश्येदन्नं ततोऽग्नौ तु दद्याद्वा ब्रह्मचारिणे ।

'तत इति भोजनानुज्ञापर्यन्तं पित्र्यं कृत्वा ।

अत्रैकस्मिन् ब्राह्मणे अनेकेषां पितॄणां तृप्तिप्रकारमाह शातातपः ।

एकस्तु ब्राह्मणः श्राद्धे स्वल्पश्च प्रकृतं भवेत् ।
त्रयश्च पितरः प्रोक्ताः कथं तृप्यन्तु ते त्रयः ॥
उरस्थश्रन्ति पितरो वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतस्त्वनुयायिनः ॥

'अनुयायिनः' पितृपत्नीप्रभृतयः । 'अनुयायिन इत्यत्र 'पिण्ड-तर्कका इति पाठान्तरं, तत्र पिण्डलेपभागिनो वृद्धप्रपितामहादय इति व्याख्येयं ।

प्रभासखण्ड-देवलस्मृत्योस्तु ।

पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तु तालुस्थः कण्ठे मातामहः स्मृतः ।
प्रमातामहस्तु हृदये वृद्धो नाभौ तु संस्थित इति ॥

'वृद्धः' वृद्धप्रमातामहः ।

अत्रैकस्यापि ब्राह्मणस्यालाभेऽनुकल्पान्तरमुक्तं प्रभासखण्डे ।

अलाभे ब्राह्मणस्यैव कौशः कार्य्योवटुः प्रिये ।
एवमप्याचरेच्छ्राद्धं षड्दैवत्यं समाहितः ।
विभक्तिं कारयेद्यस्तु पितृहा स प्रजायते ।

'कौशः' कुशमयः, 'वटुः' लघुमनुष्यप्रतिकृतिः, तं वटुं ब्राह्मणत्वेन परिकल्प्य सर्वं श्राद्धमाचरेत् । 'विभक्तिः' कर्मणः छेदो लोप इति यावत् । तं न कुर्यात् ।

वटुषु श्राद्धप्रकारमाह देवलः ।

निधाय वा दर्भवटूनासनेषु समाहितः ।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ॥

'आसनेषु' ब्राह्मणोपवेशनोचितेषु । स्वागतं भवतां, श्राद्धं करिष्ये, श्राद्धे क्षणः क्रियतां, देवान् पितृनावाहयिष्ये, अग्नौकरणं करिष्ये इत्यादयः प्रश्नाः 'प्रैषाः' एषामुत्तराणि 'अनुप्रैषाः', तदुभयसंयुक्तं 'विधानं' श्राद्धेतिकर्त्तव्यताकाण्डं, स्वयमेव कुर्यात् । तत्र सङ्कल्पितस्यान्नस्य यत्कर्त्तव्यं तदपि स एवाह ।

पात्राभावे परङ्कृत्वा पितृयज्ञविधिं नरः ।
निर्द्दिश्याप्यन्नमुद्धृत्य यत्र पात्रं ततोगतिः ॥
पात्राभावे क्षिपेदग्नौ गवे दद्यात्तथाप्सु वा ।
न तु प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषत इति ॥

मुख्यद्रव्यासम्भवे चान्येऽप्यनुकल्पाः ।

तत्रामश्राद्धाख्याः ।

इह पराशरस्मृति-विष्णुपुराण-वाराहपुराणेषूक्तं ।

असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः ।

प्रदद्यात्तु द्विजातिभ्यः स्वल्पामपि च दक्षिणां ॥

अस्यार्थः । पक्वान्नाभावे श्राद्धयोग्यान्नप्रकृतीभूतं यव-गोधूम-तण्डुलादिधान्यमेव विश्वान् देवान् पितॄंश्चोद्दिश्य पक्वान्नवत्त्यक्त्वा निमन्त्रितद्विजेभ्यः समर्पयेत् । तत्र धान्यस्य साक्षादनदनीयत्वाद्भोजनाभावे तत्सम्बन्धिनो धर्मजातस्य लोपः, अश्नत इत्याशः ध्यान्यविशेषणेन चाशब्देनैतत् सूच्यते यत्तत्स्थानं गत्वा तैर्ब्राह्मणैस्तद्धान्यमशनयोग्यं कृत्वा भोक्तव्यं न तु कार्यान्तरे विनियोक्तव्यमिति । अन्यथाशमित्यनर्थं स्यात् ।

अस्य कर्तृविशेषवादमाह व्यासः ।

हिरण्यमात्रं श्राद्धीयं लब्धं यत् क्षत्रियादितः ।
यथेष्टं विनियोज्यं स्याद्भुञ्जीयाद्ब्राह्मणः स्वयं ॥

'क्षत्रियादितः' क्षत्रिय-वैश्य-मूर्द्धावसिक्तादिभ्यः । अत्र यद्यपि 'यथेष्टं विनियोज्यमिति सामान्येनोक्तं तथापि श्राद्धादौ न विनियोज्यं देवतोद्देशेन त्यक्तस्य पुनर्देवतान्तरोद्देशेन त्यागस्यायुक्तत्वात् । अतो लौकिके भोजने क्रियादौ चालौकिकेऽपि श्रुति-स्मृतिविहिते दक्षिणादौ नित्य-नैमित्तिके विनियोज्यमित्यवगन्तव्यं । ब्राह्मणात्तु लब्धं स्वयमेवेति नियम्यते । अत्र यावत्प्रतिगृहीतं तावत्स्वयमेव भोज्यमिति नियमो न मन्तव्यः किन्तु तृप्तिपर्यन्तं स्वयम्भुक्त्वान्यस्य श्राद्धशेषोचिता प्रतिपत्तिः कर्त्तव्येति निश्चेतव्यं । शूद्रात्तु प्रतिगृहीतं कस्मिंश्चिदपि नित्यनैमित्तिके न विनियोज्यं किन्तु स्वकीये परकीये वा भोजन एवोपयोज्यमित्युक्तं षड्त्रिंशन्मते ।

आमं शूद्रस्य यत् किञ्चिच्छ्राद्धिकं प्रतिगृह्यते ।

तत्सर्वं भोजनायालं नित्य-नैमित्तिके न च ॥

अत्र प्रदेयधान्यपरिमाणमितिकर्त्तव्यताञ्चाह व्यासः ।

आमन्दद्यात्तु कौन्तेय दद्यादन्नं चतुर्गुणं ।
सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥
आवाहनादि सर्वं स्यात्पिण्डदानञ्च भारत ।
दद्याच्च द्विजातिभ्यः शृतं वाशृतमेव वा ।
तेनाग्नौकरणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥

षडशीतिमन्मते पिण्डदाने पक्षान्तरमप्युक्तं ।

आमश्राद्धं तदा कुर्याद्विधिज्ञः श्राद्धदस्तदा ।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥

चतुर्गुणमित्येकैकब्राह्मणतृप्तिपर्याप्तान्नसिद्धिसमर्थाद्धान्याच्चतुर्गुणं तावत्त्वेकैकस्मै ब्राह्मणाय दद्यादित्यर्थः । चतुर्गुणदानाशक्तौ पक्षान्तरमपि तेनैवोक्तं ।

आमन्ददद्धि कौन्तेय तद्दानं द्विगुणं भवेत् ।
त्रिगुणं चतुर्गुणं वापि नत्वेकगुणमर्पयेत् इति ॥

आवाहनादीत्यादिशब्देन अर्घ्यादिकं गृह्यते ।

तथा च भविष्यत्पुराणे ।

आवाहनं भवेत्कार्य्यमर्घ्यदानं तथैव च ।
एष एव विधिर्यत्र यत्र श्राद्धं प्रवर्त्तते ॥

कूर्मपुराण-यमपुराणयोः ।

आमेन वर्त्तयेन्नित्यं ब्राह्मणो व्यसनान्वितः ।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत् ॥

षट्त्रिंशन्मते पिण्डदाने पक्षान्तरमप्युक्तं ।

आमश्राद्धं यदा कुर्य्यात् पिण्डदानं कथं भवेत् ।
गृहपाकात् समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डान् दद्यात् यथालाभं तिलैः सह विमत्सरः ॥

विकिरादिकमप्यामद्रव्येणैव कर्त्तव्यं ।

तथा च प्रचेताः ।

आमश्राद्धप्रदः पिण्डांस्तथाग्नौकरणञ्च यत् ।
तद्दद्यात्तच्च तेनैव यत्किञ्चिच्छ्राद्धिकं भवेत् ॥

'यत्किञ्चित्' यदन्यदपि विकिरादि तदपि, 'तेनैव' आमेनैव, कर्त्तव्यमित्यर्थः ।

आवाहने स्वधाकारे मन्त्रा ज्ञेया विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धे विधिः स्मृतः ॥

आवाहनमन्त्रे अत्त व इत्यत्र स्वीकर्त व इत्यूहः। स्वधाकारे नमो वः पितर इत्यादिमन्त्रे इष इतिपदस्थाने आमद्रव्यस्येत्यूहः। विसर्जने वाजे वाज इति मन्त्रे तृप्ता इत्यस्य स्थाने तर्पस्वेत्यूहः कार्य्य इत्यर्थः। शूद्रेण तु पक्वान्नसम्भवेऽपि आमश्राद्धं कर्त्तव्यमिति पूर्वमेवोक्तं। तदनुष्ठानप्रकारस्तु भविष्योत्तरे दर्शितः।

धर्मप्लवस्य धर्मज्ञा यदि शूद्राः प्रकुर्वते ।
अग्नौकरणमन्त्रस्य नमस्कारो विधीयते ॥
आवाहनादि कर्त्तव्यं यथा शूद्रेण तच्छृणु ।
देवानां देवतानान्तु पितॄणां नाम-गोत्रतः ।
पिण्डादीन्निर्वपेद् वीर नामतोगोत्रतस्तथा ॥

'नमस्कार:' नम इतिशब्दः। अग्नये कव्यवाहनाय नमः। सोमाय पितृमते नमः। अग्नौकरण इत्युपलक्षणं, अन्यत्राप्ययमेवास्य मन्त्रः।

तथा च शूद्रं प्रकृत्य मत्स्यपुराणादिषूक्तं ।

नमस्कारेण मन्त्रेण पञ्चयज्ञान् हापयेत्। इति।

अयञ्च मन्त्रः शूद्रस्यान्यमन्त्रनिवृत्त्या विधीयते। एवं तस्य मन्त्रान्तरनिवृत्तिर्मत्स्यपुराणेऽभिहिता ।

सर्वं श्राद्धञ्च कर्त्तव्यं शूद्रेणाप्येवमेव तु।
मन्त्रवर्जं हि शूद्रस्य सर्वमेव विधीयते ॥

'एवमेव' पार्वणश्राद्धविधिनैव। अत्र शूद्राणां गोत्रस्याविद्यमानत्वाद्द्विजोत्पन्नशूद्रविषयं गोत्र इत्येतद्भवितुमर्हति। अथ वा "तस्मादाहुः सर्वाः प्रजाः काश्यप्यः" इति श्रुतेः सर्वेषामेव शूद्राणां काश्यपं गोत्रं भवितुमर्हति। अत एव व्याघ्रपादा प्रतिपादितं "गोत्रनाम्ने तु कश्यपः" इति।

आमान्नस्याप्यसम्भवे हेमश्राद्धं कर्त्तव्यं।

तथा च मरीचिः।

आमान्नस्याप्यभावे तु श्राद्धं कुर्वीत बुद्धिमान्।
धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा ॥

आमश्राद्धे यावदेकैकस्मै ब्राह्मणाय धान्यं दीयते तावतश्चतुर्गुणं यावता हिरण्येन लभ्यते तावदेकैकस्मै ब्राह्मणाय हेमश्राद्धे हिरण्यं देयमित्यर्थः। इह ये शक्तितारतम्यालोचनया आमश्राद्धे धान्यद्वैगुण्यादिपक्षाः प्रतिपादिताः तदनुसारेणैव हेम्नोऽपि प्रमाणभेदोऽनुक्त एवार्थाद्गम्यते।

धर्मस्त्वाह ।

आमन्तु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणं ।
अन्नाभावे द्विजातीनां ब्राह्मणस्य विशेषतः ॥

एकैक-ब्राह्मण-तृप्ति-पर्याप्तान्नसमर्थं धान्यं यावता लभ्यते तावत्तच्चतुर्गुणं हेम एकैकस्मै ब्राह्मणाय इत्यर्थः । अनेन द्विगुणधान्याद्विगुणं हेम प्रदेयमित्युक्तं भवति ।

भविष्योत्तरे ।

अन्नाभावे द्विजाभावे प्रवासे पुत्त्रजन्मनि ।
हेमश्राद्धं संग्रहे च तथा स्त्री-शूद्रयोरपि ॥

व्यासः ।

द्रव्याभावे द्विजाभावे प्रवासे पुत्त्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्य्या रजस्वला ॥

हेमश्राद्धस्य क्वचिदपवादः षट्त्रिंशन्मते ।

अन्नाभावे द्विजाभावे प्रवासे पुत्त्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत वर्जयित्वा त्रयेऽहनि ॥

इह स्मृत्यन्तर-पुराणान्तरेषु यत्र यत्रामश्राद्धं विहितं तत्र तत्र हेमश्राद्धं विधीयमानमामद्रव्यासम्भव एवेति व्याख्येयं। एवं ह्यामद्रव्य-हेम्नोरदृष्टदोषोविकल्पो न भविष्यति । अन्नप्रकृतिभूतत्वेन श्राद्धविध्यन्तरङ्गस्य धान्यस्य सति सम्भवे वहिरङ्गाद्धेम्नः पूर्वमुपादानन्न्यायानुगृहीतं भवति। पुत्त्रजन्मनिमित्ते पक्वामयोरन्नयोः सद्भावेऽपि हेमश्राद्धमेव ।

अत एव सम्वर्त्तः ।

पुत्त्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।

न पक्केन न चामेन कल्याणान्यभिकामयन् ॥

पिण्डदानप्रकारोऽप्यत्र भविष्योत्तर एव दर्शितः ।

गृहपाकात् समुद्धृत्य सक्तुभिः पायसेन वा ।
पिण्डप्रदानं कुर्वीत हेमश्राद्धे कृते सदा ॥
शूद्रस्तु गृहपाकेन तत्पिण्डान्निर्वपेत्तथा ।
सक्तु मूलं फलं तस्य पायसं वा भवेत् स्मृतं ॥

पिण्डनिर्वपणार्थमिति शेषः ।

षट्त्रिंशन्मते ।

नामन्त्रणाग्नौकरणं विकरो नैव दीयते ।
तृप्तप्रश्नोऽपि नैवात्र कर्त्तव्यः केनचिद्भवेत् ॥

शूद्रश्राद्धे प्रतिगृहीतं धान्यं नित्य-नैमित्तिके न विनियोज्यमित्यभिधायोक्तं षट्त्रिंशन्मते ।

हिरण्यं तत्पुनः श्राद्धे गृहीतं नैव दुष्यति ।
तेन नित्यक्रियाः कार्य्या हिरण्यं नान्नमुच्यत इति ॥

यस्तु पिण्डप्रदानादिवह्नविधानयुक्तमावाहनादिविततानेकाङ्गयुक्तस्य श्राद्धमनुष्ठातुमशक्तः स साङ्कल्पं श्राद्धं कुर्य्यात् ।

तथा च सम्वर्त्तः ।

समग्रं यस्तु शक्नोति कर्त्तुं नैवेह पार्वणं ।
अपि सङ्कल्पविधिना काले तस्य विधीयते ॥
पात्रभोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते ।
तत्प्रयुक्तो विधिर्यस्तु स तेन व्यपदिश्यते ।
तावन्मात्रेण सम्बद्धं श्राद्धं साङ्कल्पमुच्यते ॥

अत्र यद्यत्प्रधानमङ्गं वा न कर्त्तव्यं तदाह व्यासः ।

साङ्कल्पन्तु यदा कुर्यान्न कुर्यात्पात्रपूरणं ।
नावाहनं नाग्नौकरणं पिण्डांश्चैव न दापयेत् ॥

पात्रस्यार्घ्यस्य जलादिना परिपूरणं न कर्त्तव्यं। अर्घो न दातव्य इत्यर्थः। आवाहनञ्च समन्त्रकं निषिध्यते न त्वावाहनमात्रं, तेन विना देवतासन्निधानाभावाच्छ्राद्धनिष्पत्त्यसम्भवात्। केचित्तु श्राद्धे विकिरदानमपि न कर्त्तव्यमित्युक्त्वा संवादाय कस्यचिद्वचनं पठन्ति ।

साङ्कल्पन्तु यदा श्राद्धं न कुर्यात्पात्रपूरणं ।
विकिरन्तु न दातव्यं पिण्डान्नैव विनिक्षिपेदिति ॥

आवाहनाग्नौकरणादिसम्पादनसमर्थेनापि कदाचित् सङ्कल्पविधिनैव श्राद्धं कर्त्तव्यमिति छागलेयः ।

पिण्डं यत्र निवर्त्तेत मघादिषु कदाचन ।
सङ्कल्पन्तु तदा कार्य्यं नियमाच्छ्रद्धया द्विजः ॥

कर्त्तृविशेषं प्रति च नियमेन सङ्कल्पश्राद्धमाह व्यासः ।

त्यक्ताग्नेः पार्वणं नैव नैकोद्दिष्टं सपिण्डनं ।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात् सङ्कल्प्य भोजयेत् ॥

यस्मादत्यक्ताग्नेरेव सपिण्डश्राद्धोक्तिस्तस्मात्त्यक्ताग्निना सङ्कल्पश्राद्धमेव कार्य्यमित्यर्थः ।

षट्त्रिंशन्मते ।

अनग्निको यदा विप्र उत्सन्नाग्निस्तथैव च ।
तदा वृद्धिषु सर्वासु सङ्कल्प्य श्राद्धमाचरेत् ॥

साग्निकस्तु सङ्कल्पविधिना बदरादिमिश्रपिण्डप्रदानयुक्तं वा

वृद्धिश्राद्धं कुर्य्यादित्यर्थादिह गम्यते। यदा तु सर्वाङ्गोपसंहारासमर्थ्या श्राद्धं कुर्य्यात्तदा ब्राह्मणात् प्रार्थनाविशेषमाह व्यासः।

अङ्गानि पितृयज्ञस्य यदा कर्त्तुं न शक्नुयात्।
स तदा वाचयेद्विप्रान् सकला सिद्धिरस्त्विति॥

वाचनप्रकारस्तु अस्य श्राद्धस्य सकला सिद्धिरस्त्विति भवन्तो ब्रुवन्त्विति यजमानेनोक्ते सकला सिद्धिरस्त्विति ब्राह्मणा ब्रूयुरिति।

ब्राह्मणभोजनपर्याप्तान्नपरिमाणपकामरूपोभयविधान्नासम्भवे सर्वश्राद्धयोग्यद्विजालाभे चानुकल्पमाह देवलः।

पिण्डमात्रं प्रदातव्यमलाभे द्रव्य-विप्रयोः।
श्राद्धेऽहनि तु सम्प्राप्ते भवेन्निरशनोऽपि वा॥

भविष्योत्तरे तूदककुम्भादिदानमप्युक्तं।

किञ्चिद्दद्यादशक्तश्चेदुदकुम्भादिकं द्विजे।
विप्रासमेन वा दद्यात् पिण्डं वाथाभिनिर्वपेत्॥
तिलोदकैस्तर्पयेद्वा पितॄन् स्नात्वा समाहितः।
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते॥
तस्मिन् वोपवसेदह्नि जपेद्वा श्राद्धसंहितां।
यथाशक्त्या तु दातव्यं श्राद्धकालसमागमे॥

'कक्षं' पर्व्वतदरी, 'श्राद्धसंहितां' सर्व्वमन्त्रसहितं श्राद्धकल्पं।

वृद्धवसिष्ठः।

किञ्चिद्दद्यादशक्तस्तु उदकुम्भादिकं द्विजे।
तृणानि वा गवे दद्यात् पिण्डान् वाप्यथ निर्वपेत्।
तिलदर्भैः पितॄन् वापि तर्पयेत् स्नानपूर्वकं॥

कूर्मपुराणे ।

अपि मूलैः कुशैर्वापि प्रकुर्य्यान्निर्धनो द्विजः ।
तिलोदकैस्तर्पयेद्वा पितॄन् स्नात्वा समाहितः ॥

हारीतः ।

अपि मूलैः फलैर्वापि तथाप्युदकतर्पणैः ।
अविद्यमाने कुर्वीत न तु प्राप्तं विलङ्घयेत् ॥

देवलः ।

यदेव तर्पयत्यद्भिराहिताग्निर्दिने दिने ।
पित्र्यन्तेनैव प्राप्नोति वार्षिकादिक्रियाफलं ॥

सत्यव्रतः ।

शाक-मूल-फलान्नैस्तु वासोगो-भूमि-काञ्चनैः ।
अद्भिर्वा विप्रसंवादात् पितॄणां प्रीतिमावहेत्(१) ॥

'विप्रसंवादात्' यस्य कस्यचिद्ब्राह्मणस्यानुज्ञया ।

कालिकापुराणे ।

अन्नाभावे फलैर्वापि यदश्नाति नरः स्वयं ।
तेन श्राद्धं प्रकुर्वीत पितॄणां तृप्तिकामतः ॥

वाराहपुराणे ।

तत्राप्यसामर्थ्ययुतः कराग्रावस्थितांस्तिलान् ।
प्रणम्य द्विजमुख्येभ्यो दद्यादुद्दिश्य वै पितॄन् ॥
तिलैः सप्ताष्टभिर्वापि समवेतं जलाञ्जलिं ।
भक्तिनम्रः समुद्दिश्य पितॄन् दद्यात्समाहितः ॥

---

(१) तृप्तिमावहेदिति क० ।

यतः कुतश्चित्संप्राप्य गोभ्योवापि गवाह्निकं ।
पितॄनुद्दिश्य विप्रेभ्यो दद्याच्छ्रद्धासमन्वितः ।
सर्वाभावे वनङ्गत्वा स्कन्द-मूलप्रदर्शकः ॥

कक्षामूलप्रदर्शक इति पाठान्तरं ।

पूर्वादिलोकपालानामिदमुच्चैः पठेद्बुधः ।
न मेऽस्ति वित्तं न धनं न चान्यत्
श्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरोमयैतौ
कृतौ भुजौ वर्त्मनि मारुतस्य ॥
इत्येतत् कथितं सर्वं पितृभक्तिपरायणः ।
यः करोति कृतन्तेन श्राद्धं भवति वै द्विज ॥

पुराणात्।

पराधीनः प्रवासी च निर्धनो वापि मानवः ।
मनसा भावयुक्तेन श्राद्धं कुर्य्यात्तिलोदकं ॥

तथा स्मृत्यन्तरे दृष्टान्तद्वारेणोक्तं ।

यद्वाचा कर्मणा कर्त्तुं कथञ्चित्तु न शक्नुयात् ।
तत्सर्वं साधयेद्विद्वान्मनसा पितृयज्ञवत् ॥

इत्यनुकल्पिकाः पार्वणश्राद्धप्रयोगाः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्ध-कल्पे मुख्यकल्पानुकल्पिकपार्वणप्रयोगो नाम षोड़शोऽध्यायः ॥ ० ॥

## अथ सप्तदशोऽध्यायः ।



विद्यादिवृद्धान्विविधोपचारै-
रानन्दयन् योमुदमाददाति ।
हेमाद्रिसूरिः करणेश्वरोऽसौ
वृद्धीरितश्राद्धविधिं ब्रवीति ॥

अथ वृद्धिश्राद्धप्रयोगः ।

तत्र तावदेतच्छ्राद्धं मण्डपदेवता-कुलदेवतास्थापनपूर्वकं मातृकापूजां विधाय वसोर्धारास्च कृत्वा कार्य्यं ।

तथा च चतुर्विंशतिमते ।

आभ्युदयिके सम्प्राप्ते देवतास्थापनं स्मृतं ।
जाति-धर्मकुलाम्नातं लोकानां वृद्धिकारकं ॥

आभ्युदयिकश्राद्धे कर्त्तव्यतया प्रस्तुते सति ब्राह्मण-क्षत्रियादिजातिविभागेन श्रुत्यादिषु समाम्नातं कुलवृद्धैश्चोपदिश्यमानं देवतानां प्रतिष्ठापनं कर्त्तव्यतया स्मृतं। तद्धि लोकानां वृद्धेर्मङ्गलपरम्परायाः कारणं। अस्यानन्तरं मातृपूजनं कर्त्तव्यं।

तथा च कूर्मपुराणे ।

पूर्वन्तु मातरः पूज्या भक्त्या वै सगणेश्वराः ।

एतच्च मातॄणां पूजनं नामानि चोक्तानि चतुर्विंशतिमते ।

तिस्रः पूज्याः पितुः पक्षे तिस्रः पूज्यास्तु मातृके ।
इत्येता मातरः प्रोक्ताः पितृ-मातृस्वसाष्टमी ॥

ब्रह्माण्याद्याः स्मृताः सप्त दुर्गा-क्षेत्र-गणाधिपाः ।
आदौ वृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान् पितॄन् ॥
गौरी पद्मा शची दक्षा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ।
एतास्त्वभ्युदये पूज्या आत्मदेवतया सह ॥

'पितुः पक्षे' पितृवर्गे, 'तिस्रः' मातृ-पितामही-प्रपितामह्यः पूज्याः । तथा 'मातृके' मातामहवर्गे, 'तिस्रः' मातामही-मातुः-पितामही-मातुःप्रपितामह्यः पूज्याः । 'पितृ-मातृष्वसाष्टमी' पितृ-ष्वसा सप्तमी मातृष्वसाष्टमी च पूज्या । इत्यष्टौ मनुष्यमातरः प्रोक्ताः एताश्च प्रत्यक्षाः प्रत्यक्षमेव कुङ्कुम-कुसुम-वस्त्राभरण-भोजनैः पूज-नीयाः । परोक्षास्तु वक्ष्यमाणदेवमातृवदक्षतादिपुञ्जेष्वावाह्य पूज-नीयाः। 'ब्रह्माण्याद्याः स्मृताः सप्त' ब्राह्मी वैष्णवी माहेश्वरी ऐन्द्री वाराही कौमारी चामुण्डेत्येताः सप्तदेवमातॄः, तथा 'दुर्गा-क्षेत्र-गणा-धिपाः' दुर्गां क्षेत्राधिपं गणाधिपञ्च 'वृद्धादौ वृद्धिश्राद्धात् प्राक्,षोडश-भिरुपचारैः पूजयित्वा पश्चान्नान्दीमुखान् पितॄन् श्राद्धेन पूजयेदिति। 'आत्मदेवता' स्वकीयकुलदेवता, तया सहैताः पूज्याः। शास्त्रान्तरे ब्रह्माण्याद्यास्त्वष्टौ दर्शिताः । ब्रह्माणी माहेशी कौमारी वैष्णवी च वाराही इन्द्राणी चामुण्डा महालक्ष्मीश्च मातरः प्रोक्ताः ।

आह शातातपः ।

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मदेवतया सह ।

आभ्योऽर्घ्यं-गन्ध-पुष्पञ्च धूपन्दीपं निवेदयेत् ॥

एतच्च मातृपूजनं कर्माङ्गश्राद्धेऽपि कार्य्यमिति षट्त्रिंशन्मत एवोक्तं ।

कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

आसाञ्च पूजाधिष्ठानं वसोर्धारानिर्माणादि च तत्रैवोक्तं ।

प्रतिमासु च शुभ्रासु लिखिता वा पटादिषु ।
अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
कुड्यलग्ना वसोर्धाराः पञ्च धाराघृतेन तु ।
कारयेत्सप्तधारा वा नातिनीचा नचोच्छ्रिताः ।
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ॥

'आयुष्याणि' "आनोभद्रीयादित्याशीःप्रधानानि सूक्तानि तथा तथाविधमन्त्राधाराणि सामानि च । 'तत्रेति यत्र मातृपूजा वसोर्धारा च कृता ।

एतन्मातृपूजनस्याकरणे भविष्यत्पुराणे दोषो दर्शितः ।

अकृत्वा मातृयज्ञं तु यः श्राद्धं परिवेषयेत् ।
तास्तस्य क्रोधसम्पन्ना हिंसां कुर्वन्ति दारुणं ॥

मातृणां प्रतिमास्वरूपं मार्कण्डेयपुराणे ।

हंसयुक्तविमानस्था साक्षसूत्रकमण्डलुः ।
आयाता ब्रह्मणः शक्तिर्ब्रह्माणी साभिधीयते ॥
माहेश्वरी वृषारूढा त्रिशूलवरधारिणी ।
महाहिवलया प्राप्ता चन्द्ररेखाविभूषणा ॥

कौमारी शक्तिहस्ता च मयूरवरवाहना ।
योद्धुमभ्याययौ दैत्यानम्बिका गुहरूपिणी ॥
तथैव वैष्णवी शक्तिर्गरुड़ोपरि संस्थिता ।
शङ्ख-चक्र-गदा-शार्ङ्ग-खड्गहस्ताभ्युपाययौ ॥
यज्ञवाराहमतुलं रूपं या बिभ्रतो हरेः ।
शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुं ॥
वज्रहस्ता तथैवैन्द्री गजराजोपरि स्थिता ।
प्राप्ता सहस्रनयना यथा शक्रस्तथैव सा ॥

आद्ये ब्रह्मपुराणे ।

महालक्ष्मीश्च कर्त्तव्या नृत्यमाना कपालिनी ।
कार्त्तिकी तुङ्गखट्टाङ्गचिमालाम्बुजधारिणी ।
कूष्माण्डया तु प्रेतस्था दन्तुरा वर्व्वरं शिरः ॥

सिद्धार्थपृच्छायां ।

चन्द्रार्द्धनवचतुर्भ्याम्भास्करेण क्रमेण च ।
विद्योतन्ते करा यस्याः पद्मा सा च प्रकीर्त्तिता ॥
कीरकव्यजिनी चैव व्यजनं समिधन्तथा ।
या बिभर्त्ति कराग्रैः सा शची नाम्ना प्रकीर्त्तिता ॥
धत्ते या समिधं हस्तैः रजनी-कीरकावपि ।
क्रमतस्तालवृन्तञ्च सा च मेधाभिधीयते ॥
अक्षसूत्रं स्रुवञ्चैव शक्तिकाञ्च कमण्डलुम् ।
कलयन्ति करा यस्याः सावित्री सा प्रकीर्त्तिता ॥
कार्मुकसार्व्यपात्रञ्च योगमुद्रां कृपाणिकां ।

पाणिभिर्या क्रमाद्धत्ते सा दुर्गा परिगीयते ॥
योगमुद्राञ्च चापञ्च क्रमेणैवार्द्धभाजनं ।
कृपाणीं चैव या धत्ते सा चामुण्डा प्रकीर्त्तिता ॥
या कपालञ्च कोशञ्च पीयूषं पाशमेव च ।
या बिभर्त्ति कराम्भोजैर्विजया सा प्रकीर्त्तिता ॥
क्रमात्कोश-कपाले च पीयूषञ्च सपाशकं ।
आश्रित्य यत्कराग्राणि विजयन्ते जया च सा ॥

यच्च सागरसंहितायां ।

दर्पणं पङ्कजं पद्मं पुष्टिकां दधतीं स्मरेत् ।
पुष्टिं लक्ष्मीं सितां सौम्यां पङ्कजासनसंस्थितां ॥
वज्रं पद्मं तथादर्शं पीयूषं दधतीं स्मरेत् ।
सा वै तुष्टिर्महालक्ष्मीः स्थिता वीरासनोपरि ॥

मत्स्यपुराणे विनायकप्रतिमास्वरूपं ।

स्वदन्तं दक्षिणकरे उत्पलञ्च तथापरे ।
लड्डुकं परशुञ्चैव वामतः सम्प्रकल्पयेत् ।
संयुक्तस्बुद्धि-ऋद्धिभ्यां अधस्तान्मूषिकान्वितं ॥

तदेवं विशेषतः कामाञ्चिन्मातॄणां स्वरूपं दर्शितं सामान्याकारेण तु सर्वासां महापञ्चरात्रे उक्तं । पूज्याश्चित्रेऽथवार्चायां वरदाभयपाणयः । तदेवमिदन्देवताप्रतिष्ठापनात्प्रभृति वसोर्धारापर्य्यन्तं कृत्वा नान्दीश्राद्धमारभेत ।

तथाच चतुर्विंशतिमते ।

षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।

वसिष्ठोक्तोविधिः कृत्स्नोद्दृष्टव्योऽत्र निरामिषः ॥

'तदनु' मातृपूजाद्युत्तरकालं । पितृवर्गीयेभ्यस्त्रिभ्यः मातामहवर्गीयेभ्य इत्येवं षड्भ्यः । 'वशिष्ठोक्तोविधिः' वशिष्ठादिमुनिप्रोक्तोविधिः । आमिषं मांसं तद्वर्जितः । एतच्च श्राद्धद्वयं मातृश्राद्धपूर्वकं कर्त्तव्यं ।

तथाच क्रमेण श्राद्धत्रयमाह शातातपः ।

मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां तदनन्तरं ।
ततोमातामहानाञ्च वृद्धौ श्राद्धत्रयं स्मृतं ॥

मत्स्यपुराणेऽपि ।

मातरः प्रथमं पूज्याः पितरस्तदनन्तरं ।
ततोमातामहाः पूज्याः विश्वेदेवास्तथैव च ॥

आह वसिष्ठः ।

मातृभ्यः कल्पयेत्पूर्वं पितृभ्यस्तदनन्तरं ।
ततोमातामहानाञ्च कुर्याच्छ्राद्धं क्रमेण वै ॥

अत्र केचिन्मातामहादिचिर्दैवत्यं चतुर्थमपि श्राद्धमाचक्षते ।

तथाच चतुर्विंशतिमते मातृपूजां प्रतिपाद्योक्तं ।

पूजयेच्च ततः पश्चात्तत्र नान्दीमुखान् पितॄन् ।
मातृपूर्वान् पितॄन् पूज्य ततोमातामहानपि ।
मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः ॥

भविष्यत्पुराणे ।

सव्येन पाणिना वीर विधिवत् खगसत्तम ।
मात्रे प्रमात्रे तन्मात्रे निर्वपेत् पूर्वतोमुखं ॥

पितृमात्रे तु तन्मात्रे निर्वपेद्विधिवत् खग ।
वृद्धार्थे प्रपितामह्यै तथान्ते निर्वपेत् खग ।
एवमुद्दिश्य वै मातृः श्राद्धपिण्डांश्च निर्वपेत् ॥

ब्रह्मपुराणे ।

प्रपितामहीपर्यन्ता नान्दीमुख्यश्च मातरः ।
मातामह्यः पितामह्यः प्रमातामह्य एव हि ॥

अत्र मातामह्यादिश्राद्धविधेरर्थवादो व्याघ्रेण दर्शितः ।

यथा मनुष्यास्तुष्यन्ति दृष्ट्वा पत्नीः सुपूजिताः ।
पूजितास्विह पत्नीषु तुष्यन्ति पितरस्तथा ॥

मातृश्राद्धे ब्राह्मणसंख्यामाह शातातपः ।

पित्रादित्रयपत्नीनां भोज्या मातृः प्रति द्विजाः ॥
स्त्रीणामेव तु तद्यस्मान्मातृश्राद्धमिहोच्यते ।

मातृः प्रतीत्येकस्मिंस्त्रीवर्गे चतुरादियुग्मसङ्ख्यका ब्राह्मणा भोजनीयाः । तथाच मातृवर्गे च चत्वारः मातामहीवर्गे चत्वार इत्येवमष्टौ सम्पद्यन्ते ।

अत एवोक्तं भविष्यत्पुराणे ।

भोजयेच्च द्विजानष्टौ मातृश्राद्धे खगेश्वर ।
नवमं सर्वदैवत्यं भोजयेद्द्विजमागतं ॥

सति सम्भवे चैतदेदितव्यं । असम्भवे त्वेकैकस्मिन् वर्गे द्वौ द्वावपि भोजनीयौ ।

ब्राह्मणालाभे तु वृद्धवसिष्ठेनोक्तं ।

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।

पति-पुत्रान्विता भव्या योषितोऽष्टौ मुदान्विताः ॥

पित्रादिवर्गेऽपि चतुरादिसङ्ख्यका एव ब्राह्मणा भोजनीयाः ।

तथाच पद्मपुराणे ।

युग्मा द्विजातयः पूज्या वस्त्र-कार्त्तस्वरादिभिः ।

'कार्त्तस्वरं' सुवर्णं।

मार्कण्डेयपुराणे ।

युग्मास्त्वात्र द्विजाः कार्य्यास्ते पूज्याश्च प्रदक्षिणं ।

विष्णुपुराणे ।

युग्मांस्तु प्राङ्मुखान् विप्रान् भोजयेन्मनुजेश्वर ।

ब्रह्मपुराणे ।

युग्मांस्तु भोजयेद्वृद्धौ ब्राह्मणान्नियतः शुचिः ।

मातृ-पितृ-मातामह-श्राद्धे युग्मान् ब्राह्मणानाह वृद्धशातातपः

त्रिष्वप्येतेषु युग्मांस्तु ब्राह्मणान्नियतः शुचिः ।

युग्मसङ्ख्यासु तत्संख्याविशेषादरार्थमाह छागलेयः ।

एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत्।

वैश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे ॥

एवञ्चात्राष्टौ ब्राह्मणाः सम्पद्यन्ते ।

भविष्यत्पुराणे तु नवमोऽप्युक्तः ।

पूर्वाह्णे भोजयेद्विप्रानष्टौ सर्वं प्रदक्षिणं ।

तथा च नवमं विप्रं चतुरस्रे खगोत्तम ॥

चतुरस्रे मण्डले चरणक्षालने क्रियमाणे यः कश्चिदतिथिरागच्छेत् स नवमोऽपि तत्र भोजनीय इत्यर्थः । पक्षान्तरमप्युक्तं तत्रैव ।

नान्दीमुखान् समुद्दिश्य पितॄन् पञ्च द्विजोत्तमान् ।
भोजयेद्विधिवत्प्राज्ञो वृद्धिश्राद्धे प्रदक्षिणं ॥

अस्य च नान्दीश्राद्धत्रयस्य वैश्वदेविकपूर्वकत्वमाह वृद्धशातातपः ।

प्रदक्षिणन्तु सव्येन भोजयेद्देवपूर्वकम् ।

विश्वान् देवानुद्दिश्य क्रियमाणं श्राद्धं वैश्वदेविकं । वृद्धिश्राद्धे च सत्य-वसुसंज्ञकाः कर्माङ्गे च क्रतु-दक्षसंज्ञका विश्वेदेवा इति पूर्वमेव देवताप्रकरणे प्रतिपादितं। पितरस्त्वत्र नान्दीमुखसंज्ञकाः पूज्या इति तत्रैव दर्शितं। इहापि तत्र दर्शयिष्यते। अथास्मिन् वृद्धिश्राद्धेऽन्येऽपि धर्मविशेषाः प्रतिपाद्यन्ते ।

तत्राह शातातपः ।

कर्त्तव्यं चाभ्युदयिकं श्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥
पितॄणां रूपमास्थाय देवा अन्नं समश्नुते(१) ।
तस्मात् सव्येन दातव्यं वृद्धिश्राद्धे तु नित्यशः ।
यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि ॥

श्लोककात्यायनोऽपि ।

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।

अनेन वैश्वदेविके ये धर्मास्ते सर्वेऽप्यत्र कर्त्तव्या न पित्र्यश्राद्धधर्मा इत्युक्तं भवति ।

अतएव तिलकार्य्ये यवप्रयोग उक्तः पद्मपुराणे ।

तिलार्थस्तु यवैः कार्य्यः सव्येनैवानुपूर्वशः ।

(१) समश्नुते इत्येकवचनान्तप्रयोग आर्षः ।

मङ्गलानि च सर्वाणि वाचयेद्द्विजपुङ्गवान् ॥

विष्णुधर्म्मोत्तरेऽपि ।

वृद्धिश्राद्धेषु कर्त्तव्यास्तिलस्थाने यवास्तथा ।

पित्र्यधर्मान्तरस्थाने धर्मान्तरप्रयोगस्तूक्तो ब्रह्माण्डपुराणे ।

स्वाहाशब्दं प्रयुञ्जीत स्वधास्थाने च बुद्धिमान् ॥

वृद्धिश्राद्धे सदा सव्यं यज्ञसूत्रञ्च कारयेत् ।

कुशस्थाने च दूर्वाः सुमङ्गलस्याभिवृद्धये ॥

मार्कण्डेयपुराणे ।

उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ।

वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचन ॥

अत्रोदङ्मुखत्व-प्राङ्मुखत्वयोर्व्यवस्थोक्ताश्वलायनगृह्यपरिशिष्टे ।

आभ्युदयिके युग्मा ब्राह्मणा अमूलाः दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्र इति ।

आह प्रचेताः ।

प्राङ्मुखो देवतीर्थेन वृद्धौ परिचरेत्पितॄन् ।

सव्येनैवोपवीतेन चिप्रं देशविमार्जनं ॥

उच्छिष्टस्य मार्जनं चिप्रमेव कार्य्यं न तु पार्वणवत् कदाचिदाशायं प्रतीचेदित्यर्थः ।

भविष्यत्पुराणे ।

सर्वं प्रदचिणं कार्य्यं पूर्वाह्ण उपवीतिना ।

तस्य पुष्टिरथैश्वर्य्यमायुः सन्ततिरेव च ॥

यदि विभ्राजते लक्ष्मीं मोक्षञ्च लभते क्रमात् ।

ऋजवः कुतपा देया न भङ्क्त्वा विधिवत् खग ॥
कुर्य्याद्यवैस्तिलार्थन्तु दद्यादर्घ्यं तथैव च ।
गन्ध-धूपादिकं सर्वं कुर्य्याद्वीर प्रदक्षिणं ।
पूर्वाग्रांस्तु कुशान् दद्यात् सव्येनैव हि बुद्धिमान्

'कुतपाः' दर्भाः। 'सव्यं' सव्यस्कन्धस्थितं यज्ञोपवीतं ।

भविष्योत्तरे ।

वृद्धिश्राद्धं दैविकञ्च कार्य्यं यज्ञोपवीतिना ।
प्रदक्षिणं प्राङ्मुखेषु युग्मेषु च यवैस्तथा ॥

कूर्म्मपुराणे ।

दैववत् सर्वमेव स्यान्न वै कार्य्याः तिलैः क्रियाः ।
दर्भाश्च ऋजवः कार्य्या युग्मान् वै भोजयेद्द्विजान् ।
दैवपूर्वं प्रदद्याद्वै न कुर्य्यादप्रदक्षिणं ॥

पित्र्यधर्म्मनिषेधास्तत्र भवन्ति ।

तत्र श्लोककात्यायनः ।

निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ॥
मधुमध्विति यस्तत्र त्रिर्जपः श्रेय इच्छता ।
गायत्र्यनन्तरः सोऽत्र मधुमन्त्रविसर्जितः ॥
यस्तस्य विकिरोऽन्नस्य तिलवान् यववांस्तथा ।
उच्छिष्टसन्निधौ सोऽत्र तृप्तेषु विपरीतकः ॥

वैश्वदेविकः 'यववान्', पित्र्यः 'तिलवान्' । 'विपरीतकः' सर्वोऽपि यववानित्यर्थः ।

आह प्रचेताः ।

न जपेत्पैतृकं जप्यं न मांसं तत्र दापयेत् ।

अत्र 'जप्यशब्दात् यो भुञ्जानेषु द्विजेषु पितृलिङ्गकानां मन्त्राणां जपः स एव निषिध्यते, न तु पदार्थानुष्ठानकरणीभूतानामपि ।

अतएव जातूकर्ण्यः ।

पितृलिङ्गेन मन्त्रेण यत्कर्म्म मुनिभिः स्मृतं ।

तेनैव तद्विधातव्यममन्त्रमकृतं यतः ॥

भविष्यत्पुराणे ।

रक्तपुष्पं तिलांश्चैव अपसव्यञ्च वर्जयेत् ।

जलोद्भवमप्यत्र रक्तपुष्पं न दातव्यम् । इत्येतदर्थोऽयं निषेधः ।

आह शातातपः ।

अपसव्यं न कुर्वीत न कुर्य्यादप्रदक्षिणं ।

अपसव्येन यो दद्याद्वह्नौ किञ्चिदतिक्रमात् ।

न तस्य देवास्तृप्यन्ति पितरश्च यथाविधि ॥

एतच्च पित्र्यधर्मविवर्जितं देवधर्मयुक्तञ्च नान्दीमुखदेवत्यश्राद्धमेवं कर्त्तव्यम् ।

अत्राह जातूकर्ण्यः ।

पूर्वेद्युस्तद्दिने वाथ दैवपूर्वं निमन्त्रणं ।

कृत्वा विप्रान् समाहूय पूर्वाह्णे नियतः शुचिः ॥

कृत्वा मण्डलकं तेषां चालयेच्चरणांस्ततः ।

आचान्तान् कृतसत्कारानासनेषूपवेशयेत् ॥

भविष्यत्पुराणे ।

कृत्वा मण्डलकं वीर चतुरस्रं प्रदक्षिणं ।
पूर्वाग्रांस्तु कुशान् कृत्वा पुष्पाणां प्रकरं तथा ।
भोजयेद्भो द्विजान् वीर गन्ध-पुष्पविभूषितान् ॥

अत्र श्लोककात्यायनः ।

अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् ।
प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपवेश्य कुशान् दद्यादृजूनेव हि पातितान् ॥

अस्यार्थः । पूर्वेद्युस्तदहर्वाभिमन्त्रितान् विप्रान् 'प्रातरेव पूर्वाह्न एव, आहूय चन्दनाक्षत-कुसुमार्चिते चतुरस्रमण्डले सत्य-वसुसंज्ञकान् विश्वेदेवान्नान्दीमुखसंज्ञकांश्च पित्रादीननुकीर्त्त्य तच्चरणक्षालनं कृत्वा आसनेषूपवेश्य ऋजुभूतैरेव दर्भैरासनं दद्यात् । 'उभयत इति चतुरः पूर्वमुखानेकत उपवेश्यान्यतश्चतुर उदङ्मुखानुपवेशयेत् ।

तथा च भविष्यत्पुराणे ।

प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् ।
निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरात् ॥

अथवा सर्वेऽपि प्राङ्मुखा उपवेश्याः ।

तथा च छागलेयः ।

सर्वानेव तु तान् विप्रान् प्राङ्मुखानुपवेशयेत् ।

आद्ये ब्रह्मपुराणे ।

विप्रान् प्रदक्षिणावर्त्तं प्राङ्मुखानुपवेशयेत् ।
शक्राग्नि-यम-भान्वम्भोऽनिल-चन्द्र-शिवांशकान् ॥
समान् प्रशस्तान् सुभगान् पुष्पमाल्यविभूषितान् ।

दद्याद्दर्भासनं देवान् पितॄनुद्दिश्य तेषु च ॥

श्लोककात्यायनः।

पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान्।

गोत्रनामभिरामन्त्र्य पितॄनर्घ्यं प्रदापयेत् ॥

छान्दोग्यग्रन्थेऽर्घ्यपात्रसंख्योक्ता।

चत्वार्य्येवार्घ्यपात्राण्याभ्युदयिक इति।

एतानि मात्रादिश्राद्धत्रये त्रीणि, वैश्वदेविके चैकमित्येवं विभजनीयानि।

पात्रपूरणादिविधिश्च कात्यायनेनोक्तः।

पात्राणां पूरणादीनि दैवेनैव हि कारयेत्।

ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान्।

कृत्वार्घ्यं संप्रदातव्यं नैकैकस्य प्रदीयते ॥

दैवेन दर्भार्जव एव सव्यदेवतीर्थादिना वैश्वदेविकधर्मेण ज्येष्ठस्य युग्माद्यस्य विप्रस्य करोयुग्मद्वितीयविप्रकरस्योत्तरो येषु ते तथा। कराग्रेग्रं पवित्राणां येषु ते 'कराग्राग्रपवित्रकाः'। एवंविधान् कृत्वा अर्घ्यं प्रदद्यात्। पूर्वोक्तेन संस्थानेन द्वयोर्द्वयोर्हस्तौ मेलयित्वा तत्र तत्र च पूर्वाग्रौ द्वौ कुशौ स्थापयित्वैकैकस्मिन् मातृ-पित्रादिवर्गे वैश्वदेविके च सकृदेवार्घ्यः प्रदेयो नैकैकस्य विप्रस्य कर इत्यर्थः।

पद्मपुराणे।

सम्पन्नमित्यभ्युदये दद्यादर्घ्यं द्वयोर्द्वयोः।

तृप्तिप्रश्नस्थाने सम्पन्नमिति पृच्छेत्। अर्घ्यञ्च द्वयोर्द्वयो विंप्रयोर्हस्तौ मेलयित्वा दद्यादित्यर्थः। अत्रार्घ्यपात्रे तिलस्थाने यवेषु

प्रक्षेपणीयेषु तिलोऽसीत्ययं मन्त्रो यवोऽसीत्याद्यूहवान् प्रयोज्यः । अत एवाश्वलायनगृह्यपरिशिष्टे ऊहितस्यैव मन्त्रस्य प्रयोगो दर्शितः । सोपयामानि पवित्राणि चत्वारि शन्नो देवीरित्यनुमन्त्रितासु यवानावपति यवोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान् लोकान् प्रीणयाहि नः स्वाहेति । तथा । विश्वेदेवा इदं वोऽर्घ्यं नान्दीमुखाः पितर इति यथालिङ्गमर्घ्यदानं पितरः प्रीयन्तामित्यपां प्रतिग्रहणं विसर्जनं चैवमुत्तरयोरपि पितामह-प्रपितामहयोः अर्घ्यदानञ्चावाहनपूर्वकं कर्त्तव्यम् ।

तथाच चतुर्विंशतिमते ।

नान्दीमुखान् पितॄन् पूज्य पितृकार्य्ये विधानवत् ।
आसनञ्च ततो दद्यात् कुर्य्यादावाहनादिकम् ॥

आवाहनार्घ्यादिकं पार्वणोक्तं पदार्थजातं तदुक्तेनैव क्रमेण कुर्य्यादित्यर्थः ।

आवाहनप्रकारस्त्वाद्ये ब्रह्मपुराणे दर्शितः ।

नान्दीमुखान् पितॄन् भक्त्या साञ्जलिश्च समाह्वयेत् ।
पठेत्पवित्रं मन्त्रन्तु विश्वेदेवास आगत ॥

अर्घ्यदानानन्तरं गन्ध-पुष्पादिकं देयम् ।

तथाच भविष्यत्पुराणे ।

कृत्वा यवैस्तिलार्थन्तु दद्यादर्घ्यं विधानतः ।
गन्ध-धूपादिकं(१) सर्वं कुर्य्याद्वीर प्रदक्षिणम् ॥

---

(१) गन्ध-पुष्पादिकमिति ग० ।

एतच्च गन्धादिकमेकैकस्य हस्ते द्विर्द्विः प्रदेयम्।
तथाचाश्वलायनगृह्यपरिशिष्टे ।

"प्रदक्षिणमुपचारो यवैस्तिलार्थः सर्वं द्विर्द्विः" इति । गन्धादिदानानन्तरं चाग्नौकरणं कर्त्तव्यं। एतदपि तत्रैवोक्तं "नित्यञ्चाग्नौकरणं स्वाहाकारेण होमश्च" इति । अत्र पाठान्तरं । "पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा" इति। तथा "पृषदाज्यमिश्र ओदनोहविः सर्वत्र तस्यार्द्धेन द्वे द्वे आहुती जुहुयात्"इति ।

सर्वत्रेत्यग्नौकरण-द्विजभोजन-विकिरण-पिण्डदानेषु, दधिमिश्रमाज्यं 'पृषदाज्यं', तन्मिश्रस्य ओदनस्य पूर्वापरार्द्धं विभागं कल्पयित्वा द्विरवदाय होमः कार्य्यं इत्यर्थः ।

आद्ये ब्रह्मपुराणे ।

रक्षोघ्नीर्जुहुयादग्नौ समिदर्थे महौषधीः ।

'रक्षोघ्नीः' पलाशशङ्खिनीविष्णुक्रान्ताद्याः ।

कृते चाग्नौकरणे द्विजपात्रेषु परिवेषणं कर्त्तव्यं। तत्र परिवेषणीयमन्नमुक्तम् भविष्यत्पुराणे ।

पृषदाज्येन संयुक्तं दद्यादोदनमादितः ।
पायसञ्च तथा भक्ष्यं मोदकादिरसोत्तरं ।
मधुरं भोजनन्दद्यान्न चाम्लं परिवेषयेत् ॥

ब्रह्माण्डपुराणे ।

मङ्गल्यं भक्ष्य-भोज्यादि दद्यादन्नं पृथग्विधम् ।
गुड़मिश्रं खगश्रेष्ठ साज्यञ्चैवोदनं परम् ।
रसालान्मोदकांश्चैव नचाम्ल-कटुकादिकम् ॥

आदिशब्देनात्रोदेजकतिक्तादिरसमङ्गहः क्रियते ।

आद्ये ब्रह्मपुराणे ।

अन्नं दद्याच्च दैवेन तीर्थेन च जपन् स्वधाम् ।

परिवेष्य चान्नं पात्राभिमन्त्रणादि कर्त्तव्यम् ।

तथाश्वलायनगृह्यपरिशिष्टे ।

अतो देवा अवन्तु न इत्यङ्गुष्ठग्रहणं इदं विष्णुर्विचक्रम इत्यन्यत्र अतो देवा अवन्तु न इत्येतयर्चा नान्दीश्राद्धेऽङ्गुष्ठग्रहणम् ।

'अन्यत्र' श्राद्धान्तरेऽन्यर्चैत्यर्थः । अक्षन्नमीमदन्तेति च षष्ठीति-पाठान्तरं ।

भुञ्जानेषु जपोऽपि तत्रैवोक्तः ।

पावमानीः शम्वतीरैन्द्रञ्चाप्रतिरथञ्च आवर्यीत ।

आद्ये ब्रह्मपुराणे ।

पठेत्तु शक्रसूक्तन्तु स्वस्तियुक्तं शुभं तथा ।
युक्तामश्रुमुखानां तु न पठेत् पितृसंहितां ॥

'शक्रसूक्तं' आशुः शिशान इत्यादिकं सूक्तं । 'स्वस्तियुक्तं' स्वस्ति-शब्दयुक्तं यत्किञ्चित् सूक्तम् । शुभं अन्यदपि पठेत् । शुभतराशीः-प्रधानं किञ्चिदृग्यजुःप्रभृतिकं तदपि पठेत् ।

मधुमतीजपनिषेधं कृत्वा कात्यायनः ।

अन्यत्र च जपः कार्य्यः सोमसामादिकः शुभः ।

चतुर्विंशतिमते ।

विकिरञ्च तथा पिण्डान् दद्याच्च नियमं विना ।
ब्रूयात्तृप्तेषु सम्पन्नं वृद्धिश्राद्धे समाहित ॥

आह कात्यायनः ।

सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥

ब्रह्मपुराणे ।

कच्चित् सम्पन्नमेतन्मे तान् पृच्छेच्च प्रहर्षितान् ।
सुसम्पन्नं च ते ब्रूयुः सर्वं सिद्धं ततः क्षिपेत् ॥

सर्वजातीयसिद्धमन्नमेकपात्रे समुद्धृत्य विकिरं कुर्य्यादित्यर्थः ।

वृद्धवशिष्ठः ।

तृप्तप्रश्ने तु सम्पन्नं दैवे रोचत इत्यपि ।

सम्पन्नं पित्र्ये, दैवे तु रोचत इति ।

भविष्यत्पुराणे ।

एवं भुक्तेषु विप्रेषु दद्यात्पिण्डान् समाहितः ।
दध्यक्षतैर्विमिश्रांस्तु वदरैश्च खगाधिप ॥

विष्णुधर्म्मोत्तरे ।

कर्कन्धु-दधिसंमिश्रान् तथा पिण्डांश्च निर्वपेत् ।

ब्रह्मपुराणे ।

शाल्यन्नं दधि-मध्वक्तं वदराणि यवांस्तथा ।
मिश्रीकृत्य तु चत्वारि पिण्डान् श्रीफलसन्निभान् ।
दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम् ॥

मार्कण्डेयपुराणे ।

पिण्डांश्च दधिसंमिश्रान् दद्याद्यवसुमिश्रितान् ।

वृद्धवसिष्ठः ।

दधि-कर्कन्धुसंमिश्राः पिण्डाः कार्य्या यथाक्रमं ।

'कर्कन्धुः' वदरीफलम् ।

चतुर्व्विंशतिमते ।

संभोज्यैव द्विजान् धीरस्ततः पिण्डांस्तु निर्वपेत् ।

पद्मपुराणे ।

प्रदक्षिणोपचारेण दध्यक्षत-फलोदकैः ।
प्राङ्मुखोदङ्मुखोवापि प्रदद्याद्बदरैर्युतान् ॥

भविष्यत्पुराणे ।

दधि-वदराक्षताद्यांश्च पिण्डान् सव्येन भारत ।
निर्वपेन्मण्डले वीर चतुरस्रे विचक्षणः ॥
पवित्रपाणिराचान्त उपविष्टः समाहितः ।
प्रदद्यात् प्राङ्मुखः पिण्डान् वृद्धौ सव्येन वाग्यतः ॥

पिण्डप्रदानञ्चात्र वैकल्पिकम् ।

तथा च विष्णुपुराणे ।

दध्यक्षतैः सवदरैः प्राङ्मुखोदङ्मुखोऽपि वा ।
देवतीर्थेन वै पिण्डान् दद्यात्कामेन वै नृप ॥

'कामेन' इच्छया । इच्छाभावे तु न दद्यात् ।

पिण्डदानकरणाकरणयोर्व्यवस्थोक्ता भविष्यपुराणे ।

पिण्डनिर्वपणं कुर्य्यान्नैव कुर्य्यान्नराधिप ।
वृद्धिश्राद्धे महावाहो कुलधर्ममवेक्ष्य वै ॥

अनेन येषां कुले वृद्धपरम्परया वृद्धिश्राद्धे पिण्डदानमनुष्ठीयते तैः कर्त्तव्यं । येषां तु कुले नानुष्ठीयते तैर्न कर्त्तव्यमिति व्यवस्था दर्शिता । इयञ्च व्यवस्था निरग्निकानामेव च । साग्निकैस्तु सर्वदा कर्त्तव्यमेवेत्युक्तमाद्ये ब्रह्मपुराणे ।

योऽग्नौ तु विद्यमानेपि वृद्धौ पिण्डान्न निर्वपेत् ।
पतन्ति पितरस्तस्य नरके स तु पच्यते ॥

अत्र पिण्डदानाय प्रदेशविशेषमाह वृद्धशातातपः ।

प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना स वाह्यतः ।

'सः' श्राद्धकर्त्ता, 'वाह्यतः' भोजनशालाया वहिः, न तूच्छिष्ट-समीप इत्यर्थः ।

आह प्रचेताः ।

प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।
पितृपिण्डांस्तु कुर्वीत पिण्डपात्रमधोमुखम् ॥

'प्राक्कूलाः' प्रागग्राः ।

आश्वलायनगृह्यपरिशिष्टे पिण्डभूमेर्गोमयेनोपलेपनमुक्तं ।

आशयेषु पिण्डदानं गोमयोपलिप्तेषु प्रागग्रान् कुशानास्तीर्य्येति ।

चतुर्व्विंशतिमते ।

द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै विनिक्षिपेत् ।
एकं नाम्नापरं तूष्णीं दद्यात् पिण्डान् पृथक् पृथक् ॥

आद्ये ब्रह्मपुराणे ।

प्राङ्मुखांस्तत्र दर्भांस्तु दद्यात्क्षीरावनेजनं ।
नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियां ।
प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजायते ॥

आह कात्यायनः ।

प्रागग्रेषु च दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥

द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः ।

'आमन्त्र्य' गोत्र-सम्बन्ध-नामभिः सम्बोध्य, तथा 'द्वितीयं' पितामहञ्च, 'तृतीयं' प्रपितामहं ।

मातामहप्रभृतींस्तु एतेषामेव वाग्यतः ।
सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च ॥
संयोज्य यव-कर्कन्धु-दधिभिः प्राङ्मुखस्ततः ।
अवनेजनवत्पिण्डान् दद्याद्बिल्वप्रमाणकान् ॥
तत्पात्रक्षालनेनाथ पुनरप्यवने जपेत् ।
उत्तरोत्तरदानेन पिण्डानामुत्तरोत्तरः ॥
भवेदधश्च करणादधरः श्राद्धकर्मसु ।
तस्माच्छ्राद्धेषु सर्वेषु वृद्धिमत्स्वितरेषु च ॥
मूल-मध्याग्रदेशेषु ईषत्सक्तांश्च निर्वपेत् ।
गन्धादीन्निक्षिपेत्तूष्णीं ततस्त्वाचामयेद्द्विजान् ॥
अन्यत्राप्येष एव स्याद्यवादिरहितोविधिः ।

अत्र पिण्डदानं चाधिकृत्योक्तमाद्ये ब्रह्मपुराणे ।

अर्घ्यं पुष्पञ्च धूपञ्च प्रशस्तमनुलेपनम् ।
वासः साध्वहतं शुक्लं देयं च सदृशं समं ॥
द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत् ।
तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥
अथाक्षय्योदकस्थाने दत्त्वा क्षीर-यवादिकम् ।
नान्दीमुखेभ्यस्त्वाक्षय्यमिदमस्त्विति संजपेत् ॥

कात्यायनस्त्वाह ।

अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते।
षष्ठ्यैव नित्यं तत्कुर्य्यान्न चतुर्थ्या कदाचन॥
प्रपितामहसंज्ञाश्च नान्दीमुख्यश्च मातरः।
मातामह्यः पितामह्यः प्रपितामह्य एव हि॥
मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च।
प्रमातामहसंज्ञेभ्यो भवद्भिश्च स्वधोच्यतां।
अस्तु स्वधेति ते तत्र जल्पन्ति प्रहसन्ति च॥

बौधायनसूत्रे।

तेषु भुक्तवत्सु स्वधायै स्थाने मधु-मनिष्ये मधु जनिष्य इत्ये-तद्यजुर्जपित्वा नान्दीमुखाः पितरः प्रीयन्तामित्यपोनिनयति स्वधैवे-षोक्तिर्भवति।

आह शातातपः।

नान्दीमुखास्तु पितरस्तृप्यन्तामिति वाचयेत्।

आद्ये ब्रह्मपुराणे।

विश्वेदेवाश्च प्रीयन्तामिति दाताब्रवीदिमान्।
प्रीता भवन्तु ते तत्र वदन्ति मधुराक्षरं॥

ब्रह्मपुराणे।

नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत्।

चतुर्व्विंशतिमते।

प्रीयन्तामिति च ब्रूयात् पिण्डान् स्वाहेति निक्षिपेत्।

आश्वलायनगृह्यपरिशिष्टे।

नान्दीमुखाः पितरः प्रीयन्तामिति विसृजेदिति।

आद्ये ब्रह्मपुराणे ।

चमूषु वाजिनमिति पठंस्तांश्च विसर्जयेत् ।
अथ नान्दीमुखीभ्यश्च मातृभ्यः श्राद्धमुत्तमम् ।
अनेन विधिना कार्य्यं सीमन्तोन्नयनादिषु ॥

आह कात्यायनः ।

अथाग्रभूमिमासिञ्चेत् सुसुप्रोक्षितमस्त्विति ।
शिवा आपः सन्त्विति च युग्मान् यवोदकेन च ॥
सौमनस्यमस्त्विति च पुष्पदानमतःपरम्[१] ।
अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान् प्रतिपादयेत् ।
अक्षय्यञ्च ततः कुर्य्याद्दैवपूर्व्वं विधानतः ॥

अत्र दातार इत्यादिप्रार्थनाश्लोकान् पूर्व्वं प्रयोज्य श्लोकान्तरमुक्तं भविष्यत्पुराणे ।

माता पितामही चैव तथैव प्रपितामही ।
एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ॥

अनन्तरं कर्त्तव्यमाह कात्यायनः ।

प्रार्थनासु प्रतिप्रोक्ते सर्व्वास्वेव द्विजोत्तमैः ।
पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत् ॥
युग्मानेव स्वस्तिवाच्यमङ्गुष्ठग्रहणं सदा ।
कृत्वा धुर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः ॥

'धुर्य्यः' पङ्क्तिमूर्धन्यः ।

चतुर्व्विंशतिमते ।

(१) पुष्पदानमनन्तरमिति । ग० ।

शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः ।
श्राद्धाह्नि श्राद्धशेषेण वैश्वदेवं समाचरेत् ॥

वैश्वदेवग्रहणमन्नसाध्यानां देव-पित्र्य-मानुष-भौतिककर्मणामुपलक्षणार्थं । अत्र प्रागुक्तविशेषातिरिक्तं धर्मजातं पार्वणवत् कर्त्तव्यम् । तथाच विष्णुधर्मोत्तरे।

वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन् ।
सम्यादितो विशेषस्तु शेषं पार्वणवद्भवेत् ॥

'विशेषः' पितॄणां नान्दीमुखसंज्ञकत्वमित्येषः । उपलक्षणं चैतत् प्रागुक्तानां वैशेषिकाणां सर्वेषां धर्माणां ।

पद्मपुराणे ।

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धन्तु सर्वदा ।
नमस्कारेण मन्त्रेण कुर्य्याद्दानादि वै बुधः ॥

अत्र कात्यायनोक्ता प्रयोगपद्धतिः ।

आभ्युदयिके प्रदक्षिणमुपचारः, पित्र्यमन्त्रवर्ज्जं जपः, ऋजवोदर्भाः, यवैस्तिलार्थाः, सम्पन्नमिति तृप्तिप्रश्नः, सुसम्पन्नमितीतरे ब्रूयुः, दधिबदराक्षतमिश्राः पिण्डाः, नान्दीमुखान् पितॄन् वाचयिष्य इति पृच्छति, नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाश्च प्रीयन्तामिति न स्वधां प्रयुञ्जीत, युग्मानाशयेदिति ।

अस्यार्थः। 'आभ्युदयिके' पुत्रजन्म-विवाहादिरूपाभ्युदयनिमित्तके श्राद्धे । प्रदक्षिणग्रहणेन यज्ञोपवीतित्व-प्रागुदङ्मुखत्व-प्रागुदक्संस्थत्वं चोपलक्षितं। 'उपचारः' अनुष्ठानं । 'पित्र्यमन्त्रवर्ज्जं जपः' स चायमस्तु पित्र्यमन्त्रजपः प्रतिषिध्यते, "आयन्तु न इत्यादि पितृशब्दवन्मन्त्रवर्ज्जं ।

'ऋजवो दर्भाः' न तु द्विगुणभुग्नाः । 'तिलार्थः' तिलकार्यं यवैरेव कर्त्तव्यम् । अत्र तिलोऽसीत्यादिमन्त्रो यवोऽसीत्येवं प्रयोज्य इति कर्कः ।

तृप्ताः स्थेत्यस्य स्थाने सम्पन्नमिति प्रश्नः कार्य्यः । ब्राह्मणैश्च सुसम्पन्नमित्युत्तरं प्रदेयं । पितॄनावाहयिष्य इत्यस्य स्थाने नान्दीमुखान् पितॄनावाहयिष्य इति प्रयोगः । एवं यत्र यत्र पितृपदप्रयोगः तत्र तत्र नान्दीमुखपदं पूर्वम्प्रयोज्यमिति ज्ञेयं । स्वधावाचनस्थाने च नान्दीमुखान् पितॄन् स्वाहां वाचयिष्य इति पृच्छति । वाच्यतामिति ब्राह्मणैरनुज्ञातो नान्दीमुखेभ्यः स्वाहोच्यतामिति प्रेष्यति अस्तु स्वाहेति ब्राह्मणैरनुज्ञातः "ऊर्जमित्यादि मन्त्रे स्वाहा स्थेत्यूहं विधाय भूमावास्तृतासु दूर्वासु जलं निषिञ्चेत् । अत्र युग्मान् ब्राह्मणान् भोजयेदिति ।

गोभिलोक्ता प्रयोगपद्धतिः ।

आभ्युदयिके श्राद्धे युग्मा ब्राह्मणाः प्रदक्षिणमुपचारः ऋजवोदर्भा यवैस्तिलार्थो दधि-बदराक्षतमिश्राः पिण्डा नान्दीमुखाः प्रीयन्तामिति दैवे वाचयित्वा नान्दीमुखेभ्यः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यः स्वाहोच्यतामिति स्वधावाचनस्थानेन स्वाहां प्रयुञ्जीत ।

बौधायनोक्ता प्रयोगपद्धतिः ।

अथातो नान्दीमुखमादित एव द्वौ विप्रौ निमन्त्र्यापरांश्च पित्र्यानथ श्मश्रुकर्माभ्यञ्जनस्नानैर्यथोपपादं सम्पूज्याग्निमुपसमाधाय सम्परिस्तीर्य्याज्यं विलाप्योत्पूय दध्ना संविपूय स्रुवं संमृज्य दैवे द्वौ विप्रावुपवेश्यालङ्कृत्यानुद्दिश्य द्विपवित्रमेव यवोदकं निधाय पुष्पफलाक्ष-

तमिश्रं भोजनस्थानेष्वासनेषु यवान् सिकताः सम्प्रकीर्य्य पित्रर्थानुपवेश्य तेषु सपवित्रेषु नान्दीमुखाः पितरः प्रीयन्तामित्यनेन मन्त्रेण पात्रान्तरेणोपयुज्य यवोदकं द्विरयालङ्कृत्यैवमेव दत्त्वाग्नौकरणमनुज्ञाप्यालंकृत्य पृषदाज्यान् स्रुवेणोपहत्य नान्दीमुखेभ्यः पितृभ्यः स्वाहेत्येतावदग्नौ कृत्वान्नमुपस्तीर्णाभिघारितपात्रेषूद्धृत्य पृषदाज्येन संसृज्य दक्षिणेनाग्निं दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य नान्दीमुखानां इति मन्त्रमूहयित्वा विप्रेभ्यो द्विरुपस्तीर्य्याभीष्टस्यान्नस्य द्विर्द्विरवदाय द्विर्द्विरभिघार्य्य यथावद्भोजयेत्। पितृसामान्यवाचीनि स्वधायुक्तानि ब्राह्मणान्यभिश्राव्य भुक्तवत्स्वाचान्तेषु दध्योदनं सम्प्रकीर्य्य संक्षालनेन द्विर्द्विः परिषिच्य पूर्ववद्यवोदकं दत्त्वा दक्षिणाः प्रदाय नान्दीमुखाः पितरः प्रीयन्तामिति वाचयित्वाभिवाद्य स्वधास्थाने दक्षिणं जानु निधाय सव्यमुद्धृत्य दूधादेव भूरिति जपित्वान्तेऽनुवाकस्य नान्दीमुखाः पितरः प्रीयन्तामित्यपोनिनीय समुत्थाप्य प्रसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य दैवतञ्च विसृज्य प्रदक्षिणेनाग्निं प्रागग्रेषु दर्भेषु नान्दीमुखेभ्यः पितृभ्योदद्यान्नान्दीमुखेभ्यः स्वाहेति संक्षालनेन प्रदक्षिणं परिषिञ्चत्यूर्जं वहन्तीरिति इहापि जायाद्यर्थेन कालहोमान् पृषदाज्येन पूर्ववद्धोमं सकृदित्थं त्यक्तमेतत्।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेषखण्डे श्राद्धकल्पे वृद्धिश्राद्धप्रयोगः नाम सप्तदशोऽध्यायः।

---

# अथ अष्टादशोऽध्यायः ।

## अथ नित्यश्राद्धप्रयोगः ।

तत्र याज्ञवल्क्यः ।

कुर्य्यादहरहः कार्य्यमन्नाद्येनोदकेन वा ।
तृप्त्यर्थन्तु वै पितॄणां आत्मनः श्रेय इच्छता ॥

एतच्च पञ्चयज्ञान्तर्गत-पितृयज्ञात्मकं श्राद्धं। अतएव पञ्चयज्ञान् प्रकृत्योक्तं नारायणेन ।

पितृभ्योऽनन्तरं दानं सत्पात्रेषु विशेषतः ।
कृतापसव्यं तन्वीत ध्यायन् पितृपितामहान् ॥

'तन्वीत' कुर्व्वीतेत्यर्थः ।

कात्यायनः ।

एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ।

विष्णुपुराणे ।

पित्र्यर्थं चापरं विप्रमेकमप्याशयेन्नृप ।
तद्देश्यं विदिताचारसंभूतं पाञ्चयज्ञिके ॥

एकमित्यनेन सति सम्भवे विषमसंख्यकाननेकान भोजयेदिति सूचितं ।

कूर्म्मपुराणे ।

एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तम ।
नित्यश्राद्धं तदुद्दिश्य पितृयज्ञोगतिप्रदः ॥

आह मनुः।

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पयोमूलफलैर्वापि पितृभ्यस्तृप्तिमाहरन्॥
कुर्य्यादहरहः श्राद्धमन्नाद्येनोदकेन वा।
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा॥

एकस्यापि विप्रस्य सन्निहितस्यालाभे भोजनपर्याप्तान्नासम्भवविषये च कात्यायनेनोक्तम्।

अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा।
अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि।
पितृभ्य इदमित्युक्ता स्वधाकारमुदाहरेत्॥

एतच्चान्नं ब्राह्मणस्थानं गत्वा तस्मै दद्यात्। यत्र पात्रं ततोगतिरिति वचनात्।

कूर्मपुराणेऽपि।

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः।
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत्॥

सर्वथा द्विजालाभे तु तस्यान्नस्य पार्वणानुकल्प-प्रकरण-प्रतिपादिताः प्रतिपत्तिविशेषाः कर्त्तव्याः। एतच्च षड्दैवत्यं श्राद्धङ्कर्त्तव्यं। तथाच भविष्योत्तरे।

नित्यश्राद्धेऽर्घ्य-गन्धाद्यैर्द्विजानभ्यर्च्य शक्तितः।
सर्वान् पितृगणान् सम्यक् सहैवोद्दिश्य भोजयेत्॥

अत्र यावन्तः पार्वणे पितरः समुद्दिश्यन्ते तावतां सर्वशब्देन ग्रहणात् सपत्नीका पित्रादयो मातामहादयस्तेत्येते षड़िति लभ्यन्ते।

अत्र यदेषां अर्घ्यदानमुक्तं तद्ब्राह्मणसत्काररूपमेव न तु श्राद्धदेवतोपचाररूपमिति दर्शयिष्यमाण-निषेध-वचनानुरोधादवगन्तव्यं ।
नित्यश्राद्धं प्रकृत्याह व्यासः ।

एकमप्याशयेद्विप्रं षणामप्यन्वहं गृही ।

षणां पित्रादीनां स्थाने ।

यत्तु "एकमप्याशयेद्विप्रं त्रीनुद्दिश्य पितॄंस्तथा" इति मत्स्यपुराणवचनं तत्रापि त्रिग्रहणं षणामुपलक्षणार्थं। "पितरोयत्र पूज्यन्त" इत्यादि धौम्यवचनात्।

एतच्च पार्वणवदेव कर्त्तव्यं। अत एव पार्वणमभिधायाह । देवलः ।

अनेन विधिना श्राद्धं कुर्य्यात् संवत्सरं सकृत्[१] ।
द्विस्त्रिर्वा यथाश्राद्धं मासे मासे दिने दिने ॥

अनेन पार्वणविधिना दिने दिने तावत् श्राद्धङ्कर्त्तव्यं प्रतिदिनमनुष्ठानाशक्तौ तु मासे मासे, तत्राप्यशक्तौ संवत्सरमध्ये मासत्रये मासषट्के वा संवत्सरे वा कर्त्तव्यमित्यर्थः।
अत्र केषाञ्चित्पार्वणधर्माणामपवाद उच्यते ।
तत्राह मनुः ।

एकमप्याशयेद्विप्रं पित्रर्थं पाञ्चयज्ञिके ।
नचैवात्राशयेत्किञ्चिद्वैश्वदेवं प्रतिद्विजम् ॥

ब्रह्माण्डपुराणे ।

नित्यश्राद्धं तु यन्नाम दैवहीनं तदुच्यते ।

---

(१) पृथगिति ग० ।

तत्तु षाड्वार्षिकं ज्ञेयं दक्षिणापिण्डवर्जितम् ॥

मत्स्यपुराणे।

नित्यन्तावत् प्रवक्ष्यामि अर्घ्यावाहनवर्जितम्।
अदैवं तद्विजानीयात् पार्व्वणं पर्व्वसु स्मृतम् ॥

आह हारीतः।

नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डादिवर्जितम्।

प्रचेताः।

नामन्त्रणं न होमञ्च नाह्वानं न विसर्जनं।
न पिण्डदानं न सुरान्नित्ये कुर्य्याद्विजोत्तमः ॥

भविष्योत्तरे।

आवाहन-स्वधाकार-पिण्डाग्नौकरणादिकम्।
ब्रह्मचर्य्यादिनियमो विश्वेदेवास्तथैव च।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ॥

भोज्यमन्नं नाम यत् स्वयं यजमानो भुङ्क्ते।

अत एव ब्रह्माण्डपुराणे।

यदन्नः पुरुषस्तु स्यात्तदन्नास्तस्य देवताः।
नित्यश्राद्धे ततोदद्यात् भुङ्क्ते यत् स्वयमेव हि ॥

अनेन च तैलादेरप्यनुज्ञा कृता, भवति उत्तमान्नसद्भावे तु हीनं न दद्यात्।

तदाह देवलः।

अघृतं भोजयन् विप्रं स्वे गृहे सति सर्पिषि।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥

मृष्टमन्नं स्वयं भुङ्क्त्वा पश्चात्कदशनं लघु ।
ब्राह्मणं भोजयन् विप्रो निरये चिरमावसेत् ॥

प्रचेताः ।

नावाहनाग्नौकरणं न पिण्डा न विसर्जनम् ।
अनुब्रह्म दक्षिणाश्च त्रिभ्यश्चातिथिकल्पनम् ॥

"न विसर्जनमित्यत्र "वाजे वाजे इत्यादि विशिष्टस्य विसर्जनस्य निषेधः क्रियते न तु विसर्जनमात्रस्य दर्शयिष्यमाणवचनानुरोधात् । 'अनुब्रह्म' प्रतिब्राह्मणं, दक्षिणाश्च दद्यादिति शेषः । त्रिभ्यः श्राद्धीयेभ्यो-द्विजेभ्योधिकस्य तत्कालसमागतस्य द्विजस्यातिथित्वं कल्पनीयमि-त्यर्थः । एतच्च निषिद्धेतराणां पार्वणधर्माणामनुष्ठेयत्वसूचनार्थं विज्ञेयं ।

अत एव धर्मान्तराणि स एवाह ।

उपवेश्यासनं दत्त्वा सम्पूज्य कुसुमादिभिः ।
निर्द्दिश्य भोजयित्वा तु किञ्चिद्दत्त्वा विसर्जयेत् ॥

भविष्योत्तरे विसर्जने विशेषो दर्शितः ।

प्रदद्याद्दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ।

अत्र पूर्वप्रदर्शित-दक्षिणा-दाननिषेधक-ब्रह्माण्डपुराणवचनसाम-र्थ्याद्दक्षिणा कृताकृतेति गम्यते ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-
पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-
खण्डे श्राद्धकल्पे मुख्यकल्पानुकल्पिकनित्यश्राद्ध-
प्रयोगो नाम अष्टादशोऽध्यायः ॥०॥

---

# अथ ऊनविंशोऽध्यायः ।

## अथ तीर्थश्राद्धप्रयोगः ।

अत्र तावद्ब्राह्मणानुज्ञानमुक्तं प्रभासखण्डे ।

तीर्थे विप्रवचोग्राह्यं स्नान-श्राद्धार्चनादिषु ।

मत्स्यपुराणे ।

स्नात्वा नदीषु सर्वासु पितॄन् देवांश्च तर्पयेत् ।
तत्र तत्र यथावित्तं कुर्याच्छ्राद्धादिकं तथा ॥
अकालेऽप्यथवा काले तीर्थश्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्य्यं कर्त्तव्यं पितृतर्पणम् ॥

'नदीष्विति तीर्थमात्रोपलक्षणं । 'श्राद्धादिकं' श्राद्ध-दान-जपादिकं विशिष्टं कर्म । 'यथावित्तमित्यनेन सत्यां शक्तौ विशिष्टयानादिसम्पदा तदभावे यथासम्पन्नयेति प्रतिपाद्यते । 'काले' अमावास्याष्टकासङ्क्रान्त्यादिरूपविशिष्टे काले । 'अकाले' अविशिष्टे निषिद्धेतरस्मिन् शुक्लप्रतिपदादिरूपे वा, न पुनर्निषिद्धेऽपि रात्र्यादौ ।

प्रभासखण्डे ।

श्राद्धं सपिण्डकं कुर्यात् स्वतन्त्रोक्तविधानतः ।
आमन्त्र्य ब्राह्मणांस्तत्र शास्त्रज्ञान् दोषवर्जितान् ॥

'अत्र सपिण्डकमित्यनेन कालनिषेधनिमित्तविशेषनिबन्धनपिण्डविशेषनादरणीयत्वमुक्तं । स्वतन्त्राणि' स्वकीयानि गृह्यादीनि ।

'आमन्त्य' सत्यवकाशे पूर्वेद्युर्निमन्त्र्य, असति तु तस्मिन् तदानी-मेवाह्वयेति वेदितव्यं । 'शास्त्रज्ञानित्येतद्यथोक्तसर्वगुणोपलक्षणं । दोषाश्च कुनखि-कुष्ठित्वादयः पूर्वमेव प्रपञ्चिताः ।

प्रभासखण्डे ।

आमन्त्र्य पूर्वदिवसे निरीहा अपि ये द्विजाः ।
अलोलुपा व्याधिहीना न तु ये ग्रामयाजिनः ॥

एवम्बिधानां ब्राह्मणानां तत्तीर्थनिवासिनामेव लाभे सतीदं वेदितव्यं । अलाभे त्वन्ये एवम्बिधा अपि प्रथमं तत्तीर्थनिवासिन एव ग्राह्यास्ततोऽन्ये ।

तथाच प्रभासखण्डे ।

यात्रागतैर्नरैर्देवि तत्र क्षेत्रनिवासिनः ।
ब्राह्मणाः प्रथमं पूज्याः दैवे पित्र्ये च कर्मणि ॥
येषु तीर्थेषु ये विप्रा ये देवा याश्च मातृकाः ।
तेषु तान्नावमन्येत यदीच्छेज्जीवितञ्चिरम् ॥

पद्मपुराणे ।

तीर्थेषु ब्राह्मणं नैव परीक्षेत कथञ्चन ।
अन्नार्थिनमनुप्राप्तं भोजयेन्मनुशासनात् ॥

प्रभासखण्डे ।

वानप्रस्थो ब्रह्मचारी पथिकस्तीर्थसेवकः ।
अतिथिर्वैश्वदेवान्ते सम्पूज्याः श्राद्धकर्मणि ॥

तीर्थमधिकृत्य पद्मपुराणे ।

श्राद्धं तत्र तु कर्त्तव्यमर्घ्यावाहनवर्जितम् ।

श्व-ध्वाङ्क्ष-गृध्र-काकाद्या घ्नन्ति दृष्ट्वा न तत्क्रियाः ॥

'क्रियाः' श्राद्धपिण्डदानादिरूपाः, 'श्वादयः' सर्वेऽप्रशस्ताः, 'न घ्नन्ति' न दूषयन्ति ।

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ।
विकिरं तृप्तिप्रश्नञ्च तीर्थश्राद्धेऽपि वर्जयेत् ॥

अत्र च श्राद्धे क्रियमाणे ब्राह्मणानां पुरतः पिण्डदानकर्त्तव्यतोक्ता प्रभासखण्डे।

तेषां पुरः प्रकर्त्तव्यं पिण्डदानं विधानतः ।

तथा च ब्रह्मवैवर्त्ते ।

स्नात्वा तीर्थं महात्मानः पितॄणां पिण्डपातनम् ।
ये कुर्वन्ति पितॄन् सर्वान् निरयादुद्धरन्ति ते ॥

चमत्कारखण्डे ।

पिण्डदानं तथा शस्तं पितॄणामतिवल्लभम् ।
पितरोहि निरीक्षन्ते गोत्रजं समुपागतम् ॥
आशया परया युक्तास्तामाशां तेषु पूरयेत् ।
विलम्बोनैव कर्त्तव्यो नैव क्षिप्रं समाचरेत् ॥

पद्मपुराणे ।

पिण्डप्रकृतिद्रव्याण्युक्तानि ।

सक्तुभिः पिण्डदानं स्यात् सयवैः पायसेन वा ।
कर्त्तव्यमृषिभिर्दिष्टं पिण्याकेनैङ्गुदेन वा ।
पिण्याकेन तिलानां वा भक्तिमद्भिर्नरैः सदा ॥

'ऐङ्गुदेन' इङ्गुदीफलनिष्पन्नेन पिण्याकेन ।

गोप्रचाराख्यं तीर्थविशेषं प्रकृत्य प्रभासखण्डे ।

पिण्डं दद्यात्स्वपित्रादेरात्मनोऽपि स्वयं नरः ।
पिण्याकेनेङ्गुदेनापि तेनाशोच्या वरानने ॥
एवं कृत्वा ततस्तत्र इमं मन्त्रमुदीरयेत् ।
कव्यवाड़नलः सोमो यमश्चैवार्य्यमा तथा ॥
अग्निष्वात्ता वर्हिषदः सोमपाः पितृदेवताः ।
आगच्छन्तु महाभागा युष्माभीरचितास्त्विह ॥
मदीयाः पितरो ये च कुले जाताः सनाभयः ।
तेषां पिण्डप्रदाताहमागतोऽस्मि पितामहाः ॥
एवमुक्त्वा महादेवि अथ मन्त्रमुदीरयेत् ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥
माता मातामही चैव तथैव प्रपितामही ।
मातामहः प्रमाता च तथा वृद्धप्रमातृकः ॥
तेषां पिण्डोमया दत्तो ह्यचय्यमुपतिष्ठतां ।
ॐनमोभानवे भर्त्रे सोम-भौमस्वरूपिणे ॥
जीव-भार्गव-सौम्यार-राहु-केतुस्वरूपिणे ।
एवं नत्वार्चयित्वा तु इमां स्तुतिमथोजपेत् ॥
तत्र गोष्पदसामीप्ये चरुणा घृतस्रुतेन च ।
पितॄनावाह्य तेभ्यश्च मन्त्रैः पिण्डांश्च निर्वपेत् ॥
अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ।
आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः ॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।

तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
मातामहकुले ये च गतिर्येषां न विद्यते ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
बन्धुवर्गास्तु ये केचिन्नाम-गोत्रविवर्जिताः ।
स्वगोत्रे परगोत्रे वा तेषां पिण्डः प्रकल्पितः ॥
उद्बन्धनमृता ये च विष-शस्त्रहतास्तु ये ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
अग्निदग्धास्तु ये केचिन्नाग्निदग्धास्तथापरे ।
विद्युच्चौरहता ये च तस्य पिण्डं ददाम्यहम् ॥
रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
असिपत्रवने घोरे कुम्भीपाके च ये गता ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
पशुयोनिगता ये च पक्षि-कीट-सरीसृपाः ।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥
असङ्ख्ययातनासंस्था ये नीता यमशासकैः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥
जात्यन्तरसहस्राणि भ्रमन्ते स्वेन कर्मणा ।
मानुष्यं दुर्लभं येषां तेषां पिण्डं ददाम्यहम् ॥
ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा ॥
ये केचित् प्रेतरूपेण वर्त्तन्ते पितरो मम ।

ते सर्वे तृप्तिमायान्तु पिण्डेनानेन सर्वदा ॥
दिव्यान्तरिक्ष-भूमिष्ठाः पितरो बान्धवादयः ।
मृता असंस्कृता ये च तेषां पिण्डस्तु मुक्तये ॥
पितृवंशे मृता ये च मातृवंशे तथैव च ।
गुरु-श्वसुर-बन्धूनां ये चान्ये बान्धवा मृताः ॥
ये मे कुले लुप्तपिण्डाः पुत्र-दारविवर्जिताः ।
क्रियालोपगता ये च जात्यन्धा पङ्गवस्तथा ॥
विरूपा आमगर्भाश्च ज्ञाताज्ञाता कुले मम ।
तेषां पिण्डोमया दत्तो ह्यक्षय्यमुपतिष्ठतां ॥
प्रेतत्वात् पितरो मुक्ता भवन्तु मम शाश्वतं ।
यत्किञ्चिन्मधुसंमिश्रं गोक्षीर-घृत-पायसं ॥
दत्तमक्षयमित्याहुस्तस्मिन् तीर्थे तु गोष्पदे ।
एवं न्यंकुमतीमध्ये गोष्पदे तीर्थ उत्तमे ॥
दत्त्वा पिण्डांश्च विधिवत्पुनर्मन्त्रमिमं पठेत् ।
साक्षिणः सन्तु मे देवा ब्रह्माद्या ऋषिपुङ्गवाः ॥
मयेदं तीर्थमासाद्य पितॄणां निष्कृतिः कृता ।
आगतोऽस्मि इदं तीर्थं पितृकार्य्ये सुरोत्तमाः ॥
भवन्तः साक्षिणः सर्वे मुक्तश्चाहं ऋणत्रयात् ।
एवं प्रदक्षिणं कृत्य गोष्पदं तीर्थमुत्तमम् ॥
विप्रेभ्यो दक्षिणां दत्त्वा नद्यां पिण्डान् विसर्जयेत् ।
गोदानं तत्र देयन्तु तद्वत्कृष्णाजिनं प्रियम् ॥
श्राद्धभोक्तृभ्य इति शेषः ।

पद्मपुराणे पुष्करतीर्थे रामकृते श्राद्धे ।

भुक्तवत्सु च विप्रेषु दत्त्वा पिण्डान् यथाक्रमं ।
प्रेषिताश्च यथाशक्त्या दत्त्वा तेषु च दक्षिणां ॥

सर्वतीर्थसाधारण्येनोक्तं विष्णुधर्मोत्तरे ।

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे विचक्षणः ।
दक्षिणाभिमुखोभूत्वा पित्र्या दिक् या प्रकीर्त्तिता ॥

ब्रह्माण्डपुराणे ।

उदक्पूर्वं बलिं कुर्य्यादुदकान्तेऽथ वा पुनः ।
बलिं सुविदितं कुर्य्यादुच्चादुच्चतरं क्षिपेत् ।
परं शृङ्गाद्गवामूर्द्धं बलिं पूर्वं समुत्क्षिपेत् ॥

तीर्थश्राद्धप्रशंसा प्रभासखण्डे ।

श्राद्धपिण्डप्रदो लोके विष्णुं नेष्यति वै पितॄन् ।
एकं यो भोजयेत्तत्र ब्राह्मणं शंसितव्रतम् ॥
गोप्रचारे महातीर्थे कोटिर्भवति भोजिता ।
इति संक्षेपतः प्रोक्तस्तत्र श्राद्धविधिस्तव ॥

श्राद्धाङ्गप्रशंसापि तत्रैव ।

गन्धदानेन गन्धाढ्यः सौभाग्यं पुष्पदानतः ।
धूपदानेन राज्याप्तिः दीप्यते दीपदानतः ॥
ध्वजदानात्पापहानिर्यात्राकृत् ब्रह्मलोकभाक् ।
दर्भास्तिला हविष्यान्नं प्रयोगे श्रद्धया कृतं ॥
अगस्त्यं भृङ्गराजश्च पुष्पं शतदलं शुभं ।
कर्पूरागुरु-श्रीखण्डं कुङ्कुमं तुलसीदलम् ॥

बिल्वप्रमाणपिण्डेषु दीपद्योतितभूमिषु ।
ताम्बूल-फल-नैवेद्यैः तिल-दर्भोदकेन च ।
तीर्थे सङ्कल्पितं भूत्यै तदानन्त्याय जायते ॥

अथ गयाश्राद्धप्रयोगः ।

तत्र महाभारते ।

केश-श्मश्रु-नखादीनां वपनञ्च न शस्यते ।
अतोन कार्य्यं वपनं गयाश्राद्धार्थिना सदा ॥
ये भारतेस्मिन् पितृकर्मतत्पराः
सन्त्यार्य्य केशानतिभक्तिभाविताः ।
ऋणत्रयार्थे पितृतीर्थमागता-
स्तेषामृणं संक्षयमेष्यति ध्रुवम् ॥
वित्तशाठ्यं न कुर्वीत गयां प्राप्य सदा नरः ।
वित्तशाठ्यं हि कुर्वाणो न तीर्थफलभाग्भवेत् ॥

अथ गयाश्राद्धीयब्राह्मणाः ।

वाराहपुराणे ।

यदि पुत्रोगयां गच्छेत् कदाचित्कालपर्य्ययात् ।
तानेव भोजयेद्विप्रान् ब्रह्मणा ये प्रकल्पिताः ॥
येषां ब्रह्मसमं स्थानं सोमपानं तथैव च ।
ब्रह्मकागतसंस्थाना विप्रा ब्रह्मसमाः स्मृताः ॥
अमानुषा गयाविप्रा ब्रह्मणा ये प्रकल्पिताः ।
तेषु तुष्टेषु सन्तुष्टाः पितृभिः सह देवताः ॥
पितृरूपान् गया विप्रान् पूजयित्वा समाहितः ।

सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥
तेषाञ्च हस्ते दत्तं वै गयायां च विशेषतः ।
तदक्षयं भवेत्तस्य पितॄणां नात्र संशयः ॥
न विचार्य्यं कुलं शीलं विद्याञ्च तप एव च ।
पूजितैस्तैस्तु सन्तुष्टा देवाः सपितृगुह्यकाः ॥

ब्रह्मवैवर्त्ते ।

गयाशीर्षे वसेन्नित्यं स्नानं फल्ग्वां समाचरेत् ।
गयाशीर्षे सदा पिण्डमेतत् स्वर्गेपि दुर्लभं ॥
फल्गुतीर्थे नरः स्नात्वा देवं दृष्ट्वा गदाधरं ।
गयाशिरः परिक्रम्य मुच्यते ब्रह्महत्यया ॥

महाभारते ।

ततोनिवर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् स्वर्गद्वारन्तु तत्स्मृतम् ॥
सवर्णा ज्ञातयो मित्रा बान्धवाः सुहृदश्च ये ।
तेभ्यो भूप गयाभूमौ पिण्डा देया विधानतः ॥
पुत्रेभ्यो दौहित्रेभ्योऽपि कनिष्ठेभ्योऽपि सर्वशः ।
ये मृतास्त्वान्यजन्मानः पिण्डान् तेभ्योऽपि निर्वपेत् ॥
तेऽपि यान्ति दिवं सर्वे पिण्डे दत्ते इति श्रुतिः ।
अज्ञातनाम गोत्राणां मन्त्र एष प्रकीर्त्तितः ॥
पितृवंशसमुत्पन्ना मातृवंशे तथैव च ।
गुरु-श्वशुर-बन्धूनां ये चान्ये बान्धवा द्विजाः ॥
ये मे कुले लुप्तपिण्डाः पुत्र-दारविवर्जिताः ।

विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ॥
क्रियालोपगता ये च ये चान्ये गर्भसंस्थिताः ।
तेभ्योदत्तो मया पिण्डो ह्यक्षयमुपतिष्ठताम् ॥

इति पिण्डदानमन्त्रः ।

अपि तत्र क्षिपेत्पिण्डं निधानीभूतमात्मनः ।
आत्मनस्तु महाबुद्धे गयां यान्तु तिलैर्विना ॥
पिण्डनिर्वपणं कार्य्यं मृतानान्तु तिलैः सह ।
पिण्डनिर्वपणं कुर्य्यात् तथा चान्येपि गोत्रजाः ॥
सवर्णा ज्ञातयोमित्रा बान्धवाः सुहृदस्तथा ।
तेपि भूप गयाकूपे पिण्डं दद्युर्विधानतः ॥
पुत्रेभ्यो दुहितृभ्योऽपि कनिष्ठेभ्योऽपि सर्वशः ।
दद्यात् पिण्डं प्रयत्नेन बुद्धिमान् सुसमाहितः ॥
ते दिवं यान्ति सर्व्वेऽपि पिण्डे दत्त इति श्रुतिः ।
अतस्तेभ्योपि नियतः पिण्डं दद्यात् समाहितः ॥
ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी ।
सर्व्वे ते निष्कृतिं यान्ति गयायां पिण्डपातनात् ॥
ब्रह्मघ्नश्च सुरापश्च बाल-वृद्ध-गुरुद्रुही ।
नाशमायाति वै पापं गयायामनुयाति यः ॥
आत्मजो वाप्यवान्योऽपि गयाकूपे यदा तदा ।
यन्नाम्ना पातयेत् पिण्डं तं नयेत् ब्रह्मशाश्वतम् ॥
मकरे वर्त्तमाने तु ग्रहणे चन्द्र-सूर्य्ययोः ।
दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥

अत्र पिण्डपातनश्राद्धादिषु यानि प्रशस्तानि स्थानानि उक्तानि तेषु गयाशिरस्थविष्णुपादपूर्वकेषु पिण्डदानादिकं कर्त्तव्यं ।

भविष्यत्पुराणे ।

अनेनैव विधानेन गत्वा चोत्तरमानसम् ।
आचम्य कुशहस्तस्तु शिरः सिक्त्वास्य वारिणा ॥
अध्रुवस्थानमध्ये तु गच्छेत्कनकसंज्ञितम्[१] ।
तत्राचम्य शिरः सिक्त्वा ब्रूयादादित्यमीक्ष्य तु ॥
गयायां शिरसोनत्वा[२] स्नात्वा पैतामहं पदम् ।
दृष्ट्वा स्नानं प्रविश्याथ श्राद्धं कुर्य्याद्यथाविधि ॥
गयाशिरस्येतत्कुर्य्याच्छ्राद्ध-पिण्डौ चतुर्थके ।
पञ्चमे दिवसे गच्छेद्वटमक्षयसंज्ञकम् ॥
गयावटेपि च स्नायात् कृत्वा तर्पणमेव च ।
वटवृक्षतले श्राद्धं ततः कुर्याद्विधानतः ॥
तत्राक्षयवटोनाम त्रिषु लोकेषु विश्रुतः ।
पितॄणां तत्र यद्दत्तमक्षयं तद्भवेद्ध्रुवम् ॥
वटमूलं समाश्रित्य शाकेनाप्युदकेन वा ।
एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥
देहत्यागो निवासश्च गयायान्तु विधीयते ।
श्राद्धं पिण्डोदके चैव पूर्वं पूर्वं प्रशस्यते ॥
उदीच्यां मुण्डपृष्ठस्य नदी कनकसंज्ञिता ।

---

(१) कारकसंज्ञितमिति ख० ।
(२) मध्ये इति ग० ।

तत्र स्नात्वा प्रकुर्वीत श्राद्धं पिण्डसमन्वितम् ॥
तावच्च कृतकृत्यः स्यान्मुच्यते स ऋणैस्त्रिभिः ।
सुषुम्नायां पुष्करिण्यां श्राद्धमक्षय्यमुच्यते ॥
मानसे सरसि स्नात्वा श्राद्धं कृत्वा ततोव्रजेत् ।
तीरे देवगृहन्तच्च पितृमात्रादिकं जपेत् ॥
उत्तरे मानसे श्राद्धं ततः कुर्य्याद्यथाविधि ।
कामान् स लभते दिव्यान् मोक्षोपायञ्च विन्दति ॥
यत् फलं सन्निहत्यायां राहुग्रस्ते दिवाकरे ।
फलं तदखिलं प्रोक्तं गयायान्तु दिने दिने ॥
अबन्धुभ्योऽथ बन्धुभ्यः कन्या-बालेभ्य एव च ।
यन्नाम्ना पातयेत् पिण्डं गयायां ब्रह्म तन्नयेत् ॥
गयाश्राद्धं मृतानान्तु पूर्णे लब्धे प्रशस्यते ।
जीवतामपि वै दद्यात् पिण्डानात्मन एव च ॥
नाम-गोत्रेषु तान् पिण्डान् दद्याच्छ्राद्धे तिलैर्विना ।
जीवतां मृतकानां वा तिलाः श्राद्धे न गर्हिताः ॥
यमुद्दिश्य गयायाञ्च वृषं नीलं समुत्सृजेत् ।
स मोक्षमश्नुते प्रीत उत्सृष्टोपि तथैव च ॥
लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुर-विषाणाभ्यां स नीलो वृष उच्यते ॥
बलिष्ठं रूपसम्पन्नं दृढं सर्वाङ्गसुन्दरम् ।
दर्शनीयं वृषं सम्यक् नीलं वाथ समुत्सृजेत् ॥
यादृशं तादृशं वापि गयायां वृषमुत्सृजेत् ।

अक्षयं लभते लोकं सुखञ्चाप्नोत्यनुत्तमम् ॥
शूलेन निर्दहेत्पार्श्वे वामे चक्रेण निर्दहेत् ।
अङ्कितं स्नापयेत्पश्चात् स्नातं विधिवदुत्सृजेत् ॥
इत्युक्तं यो गयाश्राद्धं कुर्य्याच्छक्त्यनुसारतः ।
अतिक्रम्य स दुर्गाणि परं ब्रह्माधिगच्छति ॥

द्वारवतीमधिकृत्य स्कन्दपुराणे ।

स्नानं कृत्वा ततोदेवान् पितॄन् सन्तर्पयेन्नर ।
श्राद्धं कुर्य्यात् विधानेन श्रद्धया परया युतः ।
पञ्चरत्नं ततोदेयं सप्तधान्यं द्विजातये ॥

तथा ।

तर्पयेत् पितृदेवांश्च मनुष्यांश्च यथाक्रमं ।
ततः श्राद्धं प्रकुर्वीत पितॄणां श्रद्धयान्वितः ॥
दद्याच्च दक्षिणान्तत्र वित्तशाठ्यं विवर्जयेत् ।
विशेषतः प्रदेयानि फलानि रसवन्ति च ॥
देयौ श्यामाक-नीवारौ विद्रुमं अजिनानि च ।
सप्तधान्यं शालयश्च सक्तवश्च गुडैर्युताः ॥
गन्ध-माल्यानि ताम्बूलं वस्त्राणि च तथा पयः ।
सफलं जन्म मर्त्त्यस्य जीवितञ्च सुजीवितम् ॥

विरजमधिकृत्य वाराहपुराणे ।

तत्र स्नानञ्च दानञ्च सर्वं कोटिगुणं भवेत् ।
अमासे अदिने तत्र पितॄणां पिण्डपातनात् ।
निरयादुद्धरन्त्येव कुलकोटिं न संशयः ॥

आदित्यपुराणे ।

प्रत्यागतश्चाथ गृहं पुनस्तु
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ।
एवं कुर्वंस्तस्य तीर्थाद्यदुक्तं
फलन्तत् स्यान्नात्र सन्देहकोऽस्ति ॥

इति तीर्थश्राद्धप्रयोगः ।

अथेष्टापौर्त्तिककर्मशुद्ध्यर्थ-गोष्ठ्यदैविकयात्रार्थ-पौष्टिककाम्य-श्राद्धानां प्रयोगः ।

तत्र भविष्योत्तरे ।

इष्टापूर्त्तादिके श्राद्धं वृद्धिश्राद्धवदाचरेत् ।

पारस्करः ।

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥

आह प्रचेताः ।

क्रियते शुद्धये तत्तु ब्राह्मणानान्तु भोजनं ।
शुद्ध्यर्थमिति तत् प्रोक्तं श्राद्धं पार्वणवत्कृतम् ॥

भविष्यत्पुराणे ।

गोष्ठ्यां यत् क्रियते श्राद्धं तत् गोष्ठ्यं श्राद्धमुच्यते ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥

भविष्योत्तरे ।

उत्पातादिनिमित्तेषु नित्यश्राद्धं सदैव तु ।
देवांस्तद्दिश्य विश्वादीन् प्रदद्याद्द्विजभोजने ।

तन्नित्यश्राद्धवत्कार्य्यं दैवश्राद्धं तदुच्यते ॥

कूर्मपुराणे ।

कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमं ।
आर्षेण तु विधानेन यथादृष्टं यथाश्रुतं ॥
पूर्वेद्युः कृतसङ्कल्पः पूजयित्वा पितॄन् सुरान् ।
कृतशेषभुगव्यग्रो ब्रह्मचारी च भूशयः ॥
अपरेद्युः शुचिः स्नातः कृताशीः कृतमङ्गलः ।
अभिवन्द्य गुरून् वृद्धान् ग्रामं कृत्वा प्रदक्षिणम् ।
प्रतिष्ठेत् सुमना भूत्वा इष्टान् देवाननुस्मरन् ॥

स्कान्दे प्रभासखण्डे ।

स्थानं प्रदक्षिणीकृत्य वाग्यतः सुसमाहितः ।
नियतो नियताहारी गच्छेच्चैव ततः पथि ॥

महाभारते ।

गृहे श्राद्धं प्रकुर्वीत सम्यक् सङ्कल्प्य बुद्धिमान् ।
पितृतीर्थं समुद्दिश्य सङ्कल्प्य पितृसन्निधौ ॥
प्रतिग्रहं परान्नञ्च कलिञ्चैव द्विजोत्तम ।
वर्जयेत् कुत्सितानन्यानसाधूनपि सत्तम ॥

आह धर्मः ।

यात्राश्राद्धं नरः कुर्वन् विधिना पार्वणेन तु ।
असाध्वनियमं मुक्त्वा कुर्य्यात्सर्वं समाहितः ॥

गयामधिकृत्य ब्रह्मवैवर्त्ते ।

उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः ।

विधाय कर्पटीवेषं ग्रामस्यापि प्रदक्षिणम्॥
ततो ग्रामान्तरङ्गत्वा श्राद्धशेषस्य भोजनम्।
कृत्वा प्रतिदिनङ्गच्छेत् प्रतिग्रहविवर्जितः॥

अत्र श्राद्धदिन एव ग्रामान्तरङ्गत्वा श्राद्धशेषस्य भोजनमित्येतस्यार्थस्य गयाधिकारेणाभिहितस्य पूर्वप्रदर्शितकूर्मपुराणवचनप्रतिपादितस्य श्राद्धोत्तरदिनप्रस्थानस्य गयायात्राव्यतिरिक्तविषयत्वमवसेयं, अध्वनियमं मुक्त्वेत्येतत् धर्मवचनं सामान्याभिधायिवचनत्वात् गयातीर्थविषय एवोपसंह्रियत इति विवेकः।

पारस्करः।

शरीरोपचये श्राद्धमर्थोपचय एव च।
पुष्ट्यर्थमिति तत् प्रोक्तं श्राद्धं पार्वणवत् कृतम्॥

'शरीरोपचये' शरीरोपचयार्थे भेषजप्रयोगात् पूर्वं, 'अर्थोपचये' अर्थोपचयोपायभूतकृत्याद्यारम्भात्पूर्वं।

वृद्धशातातपः।

कामादभिहितङ्काम्यमभिप्रेतार्थसिद्धये।
पार्वणेन विधानेन तदप्युक्तं यथाक्रमं॥

अत्र विश्वेदेवाख्यो विशेषो देवताप्रकरणे दर्शितो वेदितव्यः।

इतीष्टापौर्त्तिककर्माङ्गभूतश्राद्धार्थगोष्ठ्यदैविकयात्रार्थपौष्टिकश्राद्धप्रयोगः।

दीनदैन्यौघदलनं येन हेमाद्रिणा कृतम्।
प्रेततृप्तिकरङ्कर्म सर्वन्तेनाधुनोच्यते॥

अथ प्रेततृप्तिकराणां तिलोदकपिण्डश्राद्धादीनां प्रयोगः।

तत्र तावत्तिलोदकस्य, आह याज्ञवल्क्यः।

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः ।

अपनः शोशुचदघमनेन पितृदिङ्मुखाः ॥

'ज्ञातयः' सपिण्डाः समानोदकाश्च, सप्त वा दश वा दिनानि यावत् 'पितृदिङ्मुखाः' दक्षिणाभिमुखाः, स्नातुञ्जलञ्च प्रेताय दातुमपोऽभ्युपेयुः गत्वा चापनः शोशुचदघमिति कुत्सदृष्टयाग्निदेवत्यया गायत्र्या स्नानोदकं दद्युः ।

अज्ञातिष्वतिदेशमाह याज्ञवल्क्यः ।

एवं मातामहाचार्य-प्रेतानां चोदकक्रिया ।

कामोदकं सखि-प्रत्ता-स्वस्रीय-श्वसुरर्त्विजाम् ॥

मातामहादीनां प्रेतानां दौहित्रादिभिः पूर्वोक्तेन प्रकारेणोदकक्रिया कार्य्या, सखिप्रभृतीनां कामोदकं कुर्य्यात्, यद्युदकं दातुं कामयते तदा दद्यादित्यर्थः। 'प्रत्ता' अकृतविवाहदुहित्रादिः ।

पारस्करः ।

कामोदकमृत्विक्श्वशुर-सखि-मातुल-भागिनेयानां उदकदानधर्मविधिमाह याज्ञवल्क्यः ।

सकृत्प्रसिञ्चन्त्युदकं नाम-गोत्रेण वाग्यतः ।

उक्तसंख्यकेषु दिनेषु प्रत्यहं सकृदेकवारं ज्ञात्यादय उदकं नामगोत्राभ्यां वाचंयमाः प्रसिञ्चेयुः ।

कात्यायनः ।

अथानापचमेत्यापः[१] सर्व एव शवस्पृशः ।

(१) 'अथानापच्चमेत्यापः' इत्ययं पाठः सर्व्वेषु आदर्शपुस्तकेषु एकरूप एव वर्त्तते, परन्त्वयं न समीचीनः ।

स्नात्वा सचेलमाचम्य दद्युरस्योदकं स्थले ।
गोत्र-नामपदान्ते च तर्पयामीत्यहं वदेत् ।
दक्षिणाग्रान् कुशान् कृत्वा सतिलं तु पृथक् पृथक् ॥

विष्णुपुराणे ।

सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया ।
सपिण्डीकरणादूर्द्धं द्विगुणैर्विधिवद्भवेत् ॥

निर्हृत्य बान्धवाः प्रेतं संस्कृत्याप्रदक्षिणेन चितामभिगम्याप्सु सवाससो निमज्जनङ्कुर्य्युः प्रेतस्योदकस्य निर्वपणं कृत्वैकञ्च पिण्डङ्कुशेषु दद्युः ।

वसिष्ठः ।

सव्योत्तराभ्यां पाणिभ्यां उदकक्रियां कुर्वीरन् अयुग्मान् दक्षिणा-मुखाः ।

वैजवापायनः ।

उदकान्तङ्गत्वा सकृदुन्मज्याप्सु सव्यपाणेः कनिष्ठिकया विलिखन्ति कनिष्ठयापमिति तस्मिंस्त्वेकमुदकाञ्जलिं प्रेताय दद्युरमुष्मै स्वधेति ।

हारीतः ।

निष्क्रम्य संस्कृत्यापो गत्वाप्लाव्यासौ तृप्यतामित्युदकाञ्जलिं निनयन्ति ।

पैठीनसिः ।

मनसा ध्यायन् दक्षिणाभिमुखस्त्रीनुदकाञ्जलीन् निनयेत् । शावप्रभृत्येकादशाहे विरमेत् ।

प्रचेताः।

दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेतकारणात्।

तावद्वृद्धिस्तु कर्त्तव्या यावत्पिण्डः समाप्यते॥

गौतमः।

प्रथम-तृतीय-पञ्चम-सप्तम-नवमेषूदकक्रियाः।

प्रचेताः।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्यं यज्ञोपवीतवाससो दक्षिणाभिमुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखा राजन्य-वैश्ययोः।

विष्णुः।

यावदाशौचं तावत् प्रेतस्योदकं पिण्डञ्च दद्युः।

शङ्खः।

प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य्य नोद्धर्षयेरंस्ते प्रसिञ्चेरन् सकृत् प्राग्दक्षिणाभिमुखा राजन्य-वैश्यावप्येवमेवापसव्यं वासो-यज्ञोपवीते कृत्वाञ्जलिना वसते तत उदकमित्युक्का तस्मादुत्तीर्य्य प्रेतसंस्पृष्टानि वासांसि परित्यज्य परिदध्युरन्यानि, अञ्जलीनां सङ्ख्याविधानाधिकसङ्ख्याविधानं प्रेतोपकारातिशयार्थमिति मन्तव्यं।

रामायणे जलदानवाक्यं राम आह।

इदं पुरुषशार्दूल विमलं दिव्यमक्षयम्।

पितृलोकेषु पानीयं मद्दत्तमुपतिष्ठतां॥

ब्रह्मपुराणे।

कर्त्तव्यं तु सचेलन्तु स्नानं सर्वमलापहम्।

ततः पाषाणपृष्ठे तु सर्वैर्देयं तिलोदकम् ॥

प्रेतस्य सपिण्डै र्दक्षिणामुखैर्जलाशये कृतापसव्यैः सकृदेव स्नात्वा पाषाणस्योपरि प्रेतोद्देशेनाञ्जलिना पितृतीर्थेन तिलोदकं देयं ।

एकैकेन तु देयास्तु विप्रायाञ्जलयोदश ।
द्वादश क्षत्रिये देया वैश्याय दशपञ्च च ।
त्रिंशत् शूद्राय देयास्तु प्रेतभूमिं गताय च ॥
अपसव्यं क्वचित् कृत्वा वस्त्र-यज्ञोपवीतकैः ।
दक्षिणाभिमुखैर्विप्रैर्देयन्तस्याञ्जलित्रयम् ॥
वामाङ्गुष्ठप्रवाहेण भूमावेवाथवा क्वचित् ।
असावमुकगोत्रस्तु प्रेतस्तृप्यत्विदं पठन् ॥

अयन्तु महापातकरहिताय तिलोदकदानप्रकारः । पतिताय त्वन्य-एवोच्यते ।

पतितस्य तु कारुण्यात्तृप्तिं कर्तुमिच्छति ।
स तु दासीं समाहूय सवर्णां दत्तवेतनां ॥
अशुद्धघटहस्तान्तु यथावृत्तं ब्रवीत्यपि ।
हे दासि गच्छ मूल्येन तिलानानय सत्वरं ॥
तोयपूर्णं घटञ्चेमं सतिलं दक्षिणामुखी ।
उपविष्टा तु वामेन चरणेन ततः क्षिप ॥
कीर्त्तयेर्मृतसंज्ञानं पिवेति च वदेर्मुहुः ।
निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत् ।
एवं कृते भवेत् तृप्तिः पतितानां नचान्यथा ॥

इति पतिताय तिलोदकविधिः ।

तिलोदकप्रशंसा चादित्यपुराणे।

यथा योधसहस्रेण वतोराजानुगच्छति।

तद्वत्तिलसमायुक्तं जलं प्रेतेषु गच्छति॥

अथ प्रेतपिण्डप्रयोगः।

तत्र दत्ततिलोदकेषु गृहमागतेषु ज्ञातिष्वाह शङ्खः।

दूर्वां प्रवालमग्निं वृषभञ्चालभ्य गृहद्वारे प्रेताय पिण्डं दत्त्वा पश्चात् प्रविशेयुः।

प्रेतपिण्डं प्रकृत्याह, शुनःशेफः।

द्वारदेशे प्रदातव्यो देवतायतनेषु वा।

वृद्धप्रचेतास्त्वाह।

द्वारदेशे प्रदातव्यो न देवायतने क्वचित्।

आदित्यपुराणे चोक्तं।

द्वारदेशेषु दातव्यो न देवायतने क्वचित्।

एवञ्च देवतायतनस्य विहितप्रतिषिद्धत्वाद्विकल्पः पिण्डोदातव्य इत्यनुवृत्तावस्मिन्नेव पुराणे।

शुचौ तु देशे नद्यां वा जीर्णतोये प्रवाहयेत्।

पद्मपुराणे।

प्रेताय पिण्डदानन्तु द्वादशाहं समाचरेत्।

पाथेयन्तस्य तत्प्रोक्तं यतः प्रीतिकरं महत्॥

वाराहपुराणे।

स्थण्डिलप्रेतभागन्तु दद्यात् पूर्वाह्न एव तु।

कृत्वा तु पिण्डसङ्कल्पं नाम-गोत्रेण सुन्दरि॥

पश्चादश्नन्ति गोत्राणि सकुल्याश्चैकभोजनाः ।
न दद्यादन्यगोत्राय भुञ्जते यत एकतः ॥
चतुर्णामपि वर्णानां प्रेतकार्येषु माधवि ।
एवं दत्तेन प्रीयन्ते प्रेतलोकगता नराः ॥

कूर्मपुराणे ।

दशाहं बान्धवाः स्नात्वा सर्वे चैव सुसंयताः ।
पिण्डं प्रतिदिनन्दद्युः सायं प्रातर्यथाविधि ॥

ब्रह्माण्डपुराणे ।

प्रेतीभूतस्य सततं भुवि पिण्डजलं तथा ।
सतिलं सकुशं दद्याद्बहिर्जलसमीपतः ।

ब्रह्मपुराणे ।

ग्रामाद्बहिस्तु कर्त्तव्यं जलाशयसमीपतः ।
पिण्डदानं दशाहानि प्रेतायारण्यमाश्रितैः ॥
अरण्ये पिण्डदानन्तु मोहान्न क्रियते यदि ।
तदा रौरवमायाति प्रमीतः प्रथमेऽहनि ॥
पुन्नामसंज्ञं त्वपरे महारावं तृतीयके ।
तामिस्राख्यं चतुर्थे तु प्रयात्यपि सुदारुणं ॥
पञ्चमे चान्धतामिस्रं षष्ठे घोरञ्च सुप्रभं ।
अमेध्यपूयसम्पूर्णं सप्तमेऽहनि पातकं ॥
असिपत्रवनं घोरमष्टमेऽहनि सर्वथा ।
महारौरवसंज्ञन्तु नवमे याति मानवः ॥
अवीचिरिति विख्यातं दशमेऽहनि भीषणं ।

तण्डुलैः सक्तुभिः शाकैः फलैर्वा श्रद्धया ततः ।
देश-कालानुसारेण कुर्य्यात् प्रेतस्य तर्पणं ॥

आह विष्णुः ।

यावदाशौचं प्रेतस्योदकं पिण्डमेकञ्च दद्युः ।

ब्रह्मपुराणे ।

प्रेताय दिवसे पिण्डो देय एकक्रमेण हि ।

आह शातातपः ।

त्र्यहाशौचस्य ह्रासेऽपि पिण्डान् दद्याद्दशैव तु ।
पिण्डमेकमथ श्राद्धे सम्प्रदद्याद्यथाविधि ॥

तत्र त्र्यहाशौचे दशपिण्डदानप्रकारमाह पारस्करः ।

प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः ।
द्वितीये चतुरोदद्यादस्थिसञ्चयनं तथा ।
त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादिक्षालनं तथा ॥

ब्रह्मपुराणे तु सद्यःशौचविषये युगपद्दशपिण्डदानं ।

त्र्यहाशौचे प्रदातव्यः प्रथमे त्वेक एव हि ।
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ॥
जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि ।
देशधर्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्त्यपि ॥
देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ।
शूद्रस्य दशमः पिण्डो मासि पूर्णेऽह्नि दीयते ॥

पारस्करः ।

ब्राह्मणे दशपिण्डास्तु क्षत्रिये द्वादश स्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः ॥

उक्तसङ्ख्यायामसमर्थान् प्रति सङ्ख्यान्तरमाह,

स एव ।

प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान् दद्याद्दशैव तु ।
श्राद्धकर्मणि सम्प्राप्ते पिण्ड एको विधीयते ॥

आह प्रचेताः ।

असंस्कृतानां भूमौ पिण्डं दद्यात् संस्कृतानां कुशेषु ।

शुनःपुच्छः ।

फल-मूलैश्च पयसा शाकेन च गुडेन च ।
तिलमिश्रन्तु दर्भेषु पिण्डन्दक्षिणतो हरेत् ॥
तूष्णीं प्रत्येकं पुष्पञ्च धूपं दीपं तथैव च ।
शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ।
प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकं ॥

भविष्योत्तरे ।

ओदनामिष-सक्तूनां शाक-मूल-फलादिषु ।
प्रथमेऽहनि यद्दद्यात्तद्दद्यादुत्तरेऽहनि ॥

गृह्यपरिशिष्टे ।

असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ।
प्रथमेऽहनि योदद्यात् स दशाहं समापयेत् ।

ब्रह्मपुराणे ।

प्रथमेऽहनि योदद्यात् प्रेतायान्नं समाहितः ।

अन्नं नवसु चान्येषु स एव प्रदद्दात्यपि ॥

भविष्योत्तरे ।

गृहद्वारे श्मशाने च तीर्थे देवगृहे तथा ।

यत्राद्योदीयते पिण्डस्तत्र सर्वं समापयेत् ॥

आह प्रचेताः ।

नवान्यादाय भाण्डानि आलुकं चरुकं तथा ।

तोयार्थन्तु ततोगच्छेद् गृहीत्वा पुरुषं पुरः ।

गृहीतलकुटं मार्गात् सर्वदुष्टनिवारणम् ॥

ततोगृहं सम्प्रविशेत् प्रेतस्याहृत्य तण्डुलान् ।

तेषां प्रसृतिमादाय कर्त्तव्यं पिण्डकर्म तु ॥

त्रिः प्रक्षाल्य तु तान् सम्यक् चरुं सम्पादयेत्ततः ।

तं सम्पाद्य समादाय दर्भेषु विनिवेशयेत् ॥

दक्षिणाग्रांश्च दर्भांश्च स च वै दक्षिणामुखः ।

पिण्डङ्कृत्वा समुद्धृत्य नाम्ना गोत्रेण चार्पयेत् ॥

आदित्यपुराणे ।

तिलमिश्रेषु दर्भेषु कर्त्ता वै दक्षिणामुखः ।

नाम-गोत्रप्रमाणेन दद्यात्पिण्डं त्वमन्त्रकम् ॥

आह मरीचिः ।

प्रेतपिण्डं वहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।

प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः ॥

आदित्यपुराणे ।

पितृशब्दं स्वधाञ्चैव न प्रयुञ्जीत कर्हिचित् ।

अनुशब्दं तथाचेह प्रयत्नेन विवर्जयेत्[१] ।
उपतिष्ठतामयं पिण्डः प्रेतायेति समुच्चरेत् ॥
तूष्णीं धूपं प्रसेकञ्च दीपं पुष्पं तथैव च ।
अशुद्धत्रिषु वर्णेषु दद्यान्नद्यान्न संशयः ॥

शातातपः ।

वाग्यतः प्रयतश्चैव तिष्ठेत् पिण्डस्य सन्निधौ ।
ततो वाश्ये निवृत्तेऽस्य नद्यान्तु प्रक्षिपेत्ततः ॥

ब्रह्मपुराणे ।

मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः ।
सकुटं सर्वदुष्टघ्नं गृहीत्वा तोयमानयेत् ॥
ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्द्विजः ।
तण्डुलं प्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत् स्वयम् ॥
सपवित्रैस्तिलैर्मिश्रं कृमि-केशविवर्जितम् ।
द्वारोपान्ते ततः क्षिप्त्वा सुशुद्धां गौरमृत्तिकाम् ॥
तत्पृष्ठे प्रस्तरेद्दर्भान् याम्याग्रान् देशसम्भवान् ।
ततोऽवनेजनं दद्यात् संस्मरन् गोत्र-नामनी ॥
तिल-सर्पिर्मधु-क्षीरैः संसिक्तं तप्तमेव हि ।
दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः ॥
फल-मूल-गुड़-क्षीर-तिलैर्मिश्रन्तु कुत्रचित् ।
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः ॥
ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।

(१) विसर्जयेदिति ग० ।

प्रयाति यावदाकाशं पिण्डाद् वाष्पमयी शिखा ।
तावत्तत्सम्मुखं तिष्ठेत् पिण्डं तोये क्षिपेत्ततः ॥
एकस्तोयाञ्जलिश्चैव पात्रमेकञ्च दीयते ।
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ॥
पञ्चमे पञ्च षष्ठे च सप्तमे सप्त एव च ।
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ॥
येन स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् ।
तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः ॥
एकादशेन्द्रियवधाः सन्ति बुद्धिवधैः सह ।
सर्वेषामेव भूतानां परलोकसमक्रमे ॥
प्रेतभागवतानान्तु रौरवादिषु वर्त्तताम् ।
पञ्चभिः पञ्चभिस्तेभिः पात्रैरञ्जलिभिस्तथा ।
एकादशैवेन्द्रियाणि पूयन्ते शास्त्रदर्शनात् ॥

वृद्धशातातपोऽपि ।

दिने दिनेऽञ्जलीन् पूर्णान् प्रक्षिपेत् प्रेतकारणात् ।
तावद्वृद्धिश्च कर्त्तव्या यावत् पिण्डः समाप्यते ॥

पिण्डस्योदकदानस्य च फलमुक्तमादित्यपुराणे ।

स्वगोत्रा वान्यगोत्रा वा स्त्रियश्च पुरुषास्तथा ।
प्रेतास्तु पिण्डसम्बन्धा मुच्यन्ते तेन कर्मणा ।
वायुभूतास्तु तिष्ठन्ते कालक्षेपेण सर्वदा[१] ॥

ब्रह्मपुराणे ।

(१) नित्यदेति ख० ।

प्रेताय पिण्डदानन्तु कर्त्तुं गच्छन्ति ये नराः ।
निष्क्रमन्ति गृहात्ते तु ज्येष्ठं कृत्वा पुरःसरम् ॥
ह्रस्वान् पुरःसरान् कृत्वा प्रविशन्ति गृहन्तु ते ।
उल्लङ्घ्य अश्म-पाषाणौ प्रविशन्ति गृहं क्रमात् ॥
एकाहं द्वारदेशे तु जलपात्रं निधाय च ।
क्षीरं पात्रञ्च काष्ठस्थात् प्रेतायेति विनिश्चयः ॥
प्रेतास्मिन् शीतले तोये स्नाहि दुग्धं ततः पिव ।
इति जप्त्वा त्रिरात्रन्तु भक्तमुष्टिं क्षिपेत्तथा ॥

आह शातातपः ।

जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृन्मये ।

'आकाशे' भूमेरन्यत्र शिक्यादौ, प्रेतमुद्दिश्य जलं क्षीरञ्च पृथक् पृथक् मृन्मये पात्रे प्रथममहोरात्रं स्थापयेदित्यर्थः ।

अत्र दिनसङ्ख्याधिक्यमुक्तं पद्मपुराणे ।

यस्मात् प्रेतपुरीं प्रेतो द्वादशाहेन नीयते ।
गृह-पुत्त्र-कलत्रञ्च द्वादशाहं प्रपश्यति ॥
तस्मान्नियतमाकाशे दशरात्रं पयस्तथा ।
सर्वतापोपशान्त्यर्थमध्वश्रमविनाशनम् ॥

स्थापयेदिति शेषः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-
पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-
खण्डे श्राद्धकल्पे तीर्थश्राद्धादिप्रयोगप्रकरणम्
नाम ऊनविंशोऽध्यायः ॥ ० ॥

---

# अथ विंशोऽध्यायः ।



अथ प्रेततृप्तिकरश्राद्धादीनां प्रयोगप्रकरणम् ।

तत्र दशपिण्डनिष्पाद्यावयवा ब्रह्मपुराणे ।

शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा ।
द्वितीये तनुकर्णाक्षिनासिकास्तु समासतः ॥
गलांस्य-भुज-वक्षांसि तृतीयेन यथाक्रमम् ।
चतुर्थेन तु पिण्डेन नाभि-लिङ्ग-गुदानि च ॥
ऊरू जङ्घे तथा पादौ पञ्चमेन च सर्वदा ।
सर्वमर्माणि षष्ठेन सप्तमेन च नाड्यः ॥
दन्त-लोमान्यष्टमेन पूर्णत्वं तुद्विपर्ययः ।
जायते नवमेनाथ दशमेन तथा क्रमात् ॥

आदित्यपुराणे ।

प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ।
चक्षुषी श्रोत्र-नासञ्च द्वितीयेऽहनि जायते ॥
भुजौवक्षस्तथा ग्रीवा तृतीयेऽहनि जायते ।
हृदयं कुक्षिरुदरं प्राणस्थानञ्चतुर्गुणम् ॥
कटिस्थानं गुदं लिङ्गं पञ्चमेऽहनि जायते ।
ऊरू षष्ठे तु विज्ञेयौ सप्तमेऽङ्गुलयस्तथा ॥
पादौ तु नवमे ज्ञेयौ दशमे वीर्य्य-चक्षुषी ।

आदौ विग्रहमुत्पन्नं तथा चैव शुभाशुभम् ॥
दशाहे प्रेतपिण्डेन ज्ञानं प्रेतेषु जायते ।
दशाहा क्रियते यस्मात् नामादिग्रहणक्रिया ॥
सम्भवं नाममात्रेण नामतो जीवसंज्ञकम् ।
नाममात्रप्रतिष्ठा तु अविनष्टे विदुर्बुधाः ॥

अथ प्रेतश्राद्धानां प्रयोगः ।

तत्र तावन्नवसंज्ञकानां एषां च सञ्ज्ञाधिकारकालाः पूर्वमेव प्रतिपादिताः। प्रयोजनन्त्वाह व्याघ्रपात्।

देयानि वेश्मशुद्ध्यर्थं नवश्राद्धानि यत्नतः ।
ततः प्रेतविशुद्ध्यर्थं मृताहनि तु वत्सरम् ॥

'तत' इति नवश्राद्धोत्तरकालं। मासि मासि मृताहे यावत् संवत्सरं प्रेतत्वविमुक्त्यर्थं श्राद्धानि देयानीत्यर्थः।

वृद्धवसिष्ठस्त्वाह ।

अलब्ध्वा तु नवश्राद्धं प्रेतत्वात्तु न मुच्यते ।
अर्वाक् द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ॥

अनेन नवश्राद्धानामपि प्रेतत्वविमुक्तिः प्रयोजनमित्युक्तं भवति। 'दुष्कृतं' प्रेतत्वहेतुभूतं, द्वादशाहस्यार्वाक् मृताहमारभ्यैकादशाहान्तं श्राद्धानि लब्ध्वा तरति। अनेन द्वादशाहात्पूर्वं क्रियमाणानां श्राद्धानां नवश्राद्धसंज्ञकत्वमपि गम्यते ।

प्रेतश्राद्धेष्वदत्तेषु प्रेतत्वमुक्तिर्न भवतीत्याह यमः ।

यस्यैतानि न दत्तानि एकोद्दिष्टानि षोड़श ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

'पिशाचत्वं' प्रेतशब्दवाच्यप्राणिरूपत्वं ।

भविष्यत्पुराणे त्वधोगतिनिवृत्तिप्रयोजनमुक्तम् ।

नवश्राद्धं त्रिपक्षं च षण्मासं मासिकानि च ।

न करोति सुतो यस्तु तस्याधः पितरो गताः ॥

तथोत्तरश्राद्धाधिकारोऽप्येषां प्रयोजनमित्यपि तत्रैवोक्तं ।

नवश्राद्धादिश्राद्धानि न कृतानि तु यस्य वै ।

नाधिकारी भवेत्तत्र मास-षाण्मासिकाब्दिके ॥

ब्रह्माण्डपुराणे ।

नवश्राद्धानि कुर्व्वीत प्रेतोद्देशेन यत्नतः ।

एकोद्दिष्टविधानेन नान्यथा तु कदाचन ॥

आह छागलेयः ।

शावे तु सूतकं चेत् स्यान्निशाशौचे तथैव च ।

नवश्राद्धानि देयानि यथाकालं यथाक्रमं ॥

अत्र क्रम-कालौ पूर्वमेव कालप्रकरणे दर्शितौ। नवश्राद्धेषु केषाञ्चित्पदार्थानामननुष्ठानमुक्तं गृह्यपरिशिष्टे ।

अनुदकमधूपञ्च गन्धमाल्यविवर्जितम् ।

नवश्राद्धममन्त्रञ्च पिण्डोदकविवर्जितम् ॥

'अनुदकं' अनर्घ्य-पिण्डोदकमवनेजन-परिषेचनरूपं ।

तथा ।

एकोद्दिष्टेषु सर्वेषु न स्वधा नाभिरम्यताम् ।

नाग्नौकरणमन्त्रश्च एकश्चाथ तिलोदकम् ।

अनूद्दिश्य तु प्रेताय सर्वत्रैव प्रदयते ॥

अनपत्येषु सर्व्वेषु न स्वधा नाभिरम्यताम् ।
स्वस्त्यस्तु विसृजेदेवं सकृत्प्रणववर्जितम् ॥
एकोद्दिष्टस्य पिण्डे तु अनुशब्दो न विद्यते ।
पितृशब्दं न कुर्व्वीत पितृहा चोपजायते ॥

सपिण्डीकरणात् प्राक्तनैकोद्दिष्टविषयमेतदिति बहुभिर्व्याख्यातम्। प्रेतायेत्यनेन प्रेतशब्दोऽत्र प्रयोक्तव्यो न तु पितृशब्द इत्युक्तं भवति।

आहापस्तम्बः ।

नैमित्तिकं श्राद्धं वहिर्ग्रामात् शुचयः शुचौ देशे संस्कुर्व्वन्ति । तत्र नवानि द्रव्याणि यैरन्नं संस्क्रियते येषु च भुज्यते तानि भुक्तवद्भ्यो दद्यात् समुदितांश्च भोजयेन्न तावद्गुणायोच्छिष्टं प्रयच्छेदेवं संवत्सरं तेषां उत्तमलोष्टेनाजेन कार्य्यं मानञ्च कारयेत् प्रतिच्छन्ने तस्योत्तरार्द्धे ब्राह्मणान् भोजयेदुभयान् पश्यति ब्राह्मणांश्च भुञ्जानानात्मनैव पितृ-नित्युपदिशन्ति । कृताकृतामत ऊर्द्ध्वं श्राद्धेन तृप्तिं हि वेदयन्ति पितरः।

नैमित्तिकशब्देन प्रेतश्राद्धान्युच्यन्ते ।

अतएवाह गालवः ।

दाहादारभ्य दातव्यं श्राद्धं नैमित्तिकं बुधैः ।
नियमाद्वत्सरं यावदिति गालवभाषितम् ॥

नवश्राद्धशेषमन्नं यजमानेनान्येन वा न भोक्तव्यमिति ।

आहाङ्गिराः ।

नवश्राद्धेषु यच्छिष्टं गृहे पर्य्युषितञ्च यत् ।
दम्पत्योर्भुक्तशिष्टञ्च तन्न भुञ्जीत कर्हिचित् ॥

का तर्हि नवश्राद्धे शेषस्य प्रतिपत्तिः कर्त्तव्या इत्यपेक्षायामाह देवलः ।

एकोद्दिष्टेषु शेषन्तु ब्राह्मणेभ्यः समुत्सृजेत्[१]।
ततः कामन्तु भुञ्जीत स्वयं मङ्गलभोजने ॥

नवश्राद्धसंज्ञकेष्वेकोद्दिष्टेषु शेषं श्राद्धभोक्तृभ्यो ब्राह्मणेभ्यः समर्पयेत्। तदनुज्ञया जलादौ वा प्रक्षिपेत् न तु स्वयं भुञ्जीत नचान्यं कमपि भोजयेत्। 'ततः' तदनन्तरं क्रियमाणे, 'मङ्गलभोजने' सांवत्सरिकादौ, श्राद्धशेषं ज्ञात्यादीन् भोजयेत्। स्वयञ्च यजमानो भुञ्जीत। श्राद्धशेषादन्येनान्नेन तु ज्ञाति-दीनानाथादयो भोजनीयाः। तथा च नवश्राद्धान्यभिधायोक्तम्।

ब्रह्मपुराणे।

कर्त्तव्यन्तु नरैः श्राद्धं देश-कालानुरोधतः।
सपिण्डास्तु सजातीयास्तथान्येऽपि बुभुक्षिताः।
दीनानाथाश्च क्षपणास्तथान्नमुपभुञ्जते ॥

अज्ञातिना तु भुक्तेऽस्मिन्नन्ने प्रायश्चित्तमप्यत्रैवोक्तं।

द्वाभ्यान्तु तप्तकृच्छ्राभ्यां शुद्धिः स्यात्तु विवेकिनाम्।
तृतीये पञ्चमे स्नानं कर्त्तव्यं नवमे तथा।

इति नवसंज्ञकानां श्राद्धानां प्रयोगः।

अथैकादशाहिकानां श्राद्धानां प्रयोगः।

तत्र कूर्म्मपुराणे।

एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः।
द्वादशे वाह्नि कर्त्तव्यं अनिन्द्येप्यथ वाहनि ॥
एकं पवित्रमेकोऽर्घ्यः पिण्डपात्रन्तथैव च।

---

(१) समर्पयेदिति ग०।

एवं मृताह्नि कर्त्तव्यं प्रतिमासन्तु वत्सरम् ॥

पद्मपुराणे ।

ततस्त्वेकादशाहे तु द्विजानेकादशैव तु ।

गोत्रादिसूतकान्ते च भोजयेदयुजो द्विजान् ॥

द्वितीयेऽह्नि पुनस्तद्वदेकोद्दिष्टं समाचरेत् ।

आवाहनाग्नौकरण-दैवहीनं विधानतः ॥

एकं पवित्रमेकोऽर्घ्यः एकः पिण्डो विधीयते ।

उपतिष्ठतां न इति देयं पश्चात्तिलोदकं ॥

स्वदितं द्विकरे ब्रूयाद्विसर्गे चाभिरम्यताम् ।

शेषं पूर्ववदत्रापि कार्य्यं वेदविदो विदुः ।

अनेन विधिना सर्वमनुमासं समाचरेत् ॥

ब्रह्मपुराणे ।

द्वितीयेऽहनि कर्त्तव्यं प्रेतदाहावनौ द्विजः ।

सूतकान्ते गृहे श्राद्धमेकोद्दिष्टं प्रचक्षते ॥

द्वादशेऽहनि मासे च त्रिपक्षे च ततः परम् ।

मासि मासि तु कर्त्तव्यं यावद्यावत्सरं द्विज ॥

मार्कण्डेयपुराणे ।

मृताहनि तु कर्त्तव्यमेकोद्दिष्टं शृणुष्व तत् ।

दैवहीनन्तथैकार्घ्यं तथैवैकपवित्रकम् ॥

आवाहनं न कर्त्तव्यमग्नौकरणवर्जितम् ।

प्रेतस्य पिण्डमेकञ्च दद्यादुच्छिष्टसन्निधौ ॥

तिलोदकञ्चापसव्यं तन्नामस्मरणान्वितम् ।

201

अक्षय्यममुकस्येति स्थाने चैवोपतिष्ठताम् ॥
इति ब्रूयात् प्रयत्नेन कर्त्ता विप्रविसर्जने।
अभिरम्यतामिति ब्रूयात् ब्रूयुस्तेऽभिरताः स्म ह।
प्रतिमासं भवेदेतत्कार्य्यमावत्सरान्नरैः ॥

बौधायनसूत्रे।

अथैकोद्दिष्टेषु नाग्नौकरणं नातिश्रयणं न पूर्वं न दैवं न धूपं न दीपं न स्वधा-नमस्कारौ आचापूपं सर्व्वं सिद्धं समानीयायुग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादानप आचमय्य दर्भोपक्लृप्तेष्वासनेषु उपवेश्य सर्वस्मात् सकृत् सकृत् समवदायाभिघार्य्य दक्षिणतो भस्मनि-श्रानङ्गारान्निरूह्य तेषु जुहुयात्। प्रेतायामुष्मै यमाय स्वाहेति तद्धुतमक्षतस्य इवत्यमुष्मै तृप्तिरस्त्वित्यपां प्रतिग्रहणं विसर्जनञ्चामुष्मा-उपतिष्ठत्वनुद्दिश्य येष्वेव पिण्डदानं तृप्यस्वेति संचालनं तृप्तिर-स्त्विति विसृजेत्। नमोऽस्तु तृप्तिरितीतरेषां प्रतिवचनं प्रेतस्य द्वितीयाप्रभृतिब्राह्मणैरेकोत्तरवृद्धिरादशाहादच नवं विच्छिद्यतेका-दश्यां श्राद्धं तृतीये पक्षे द्वितीयं सन्ततमेकैकेनैकादशमासान्नयन्ति तद्द्वादशमासमभ्यारोहति

बौधायनः।

एकोद्दिष्टं स एव स्याद्द्वादशेऽहनि वा पुनः।
अथवोर्द्धमयुग्मे तु कुर्वीताह स्वशक्तितः ॥
अर्द्धमासेऽथ मासे वा ऋतौ संवत्सरेऽपिवा।
निमन्त्रणन्तु पूर्वेद्युर्दैवमग्नौकृतिस्तथा ॥
न स्वधाश्रावणापूप-धूप-दीपौ नमस्कृतिः।

अग्निं समृध्य पर्य्युक्ष्य परिस्तीर्य्य च साद्येत् ॥
दर्वीमौदुम्बरीमाज्यस्थालीञ्च स्रुवमेव च ।
पात्रीञ्च प्रोक्षणीञ्चैव तिलोदकवरन्तथा ॥
प्रोक्ष्यैतत् सद्विशेषान्नमानीयाज्यं निरूप्य च ।
अधिश्रित्य च पर्य्यग्निं कृत्वा तदुभयं ततः ॥
स्रुवन्दर्वीं च संमृज्य तन्नमुद्वास्य कारितम् ।
कृत्वा तिलोदकं पुंसां स्त्रीणाञ्चोदितमन्त्रवत् ॥
पितृशब्दे क्षिपेत्प्रेतं स्वधावर्जन्तु सर्वतः ।
प्रेतमावाह्य विप्रांस्त्रीणुपवेश्य निमन्त्य च ॥
अमुष्मै तृप्तिरस्त्वेवं तिलोदकमिहार्पयेत् ।
तृप्तिरस्त्विति चान्योऽपि ब्रूयाद्दत्वाप्यलङ्कृते ॥
करिष्यामीत्यनुज्ञाप्य कुरुष्वेति च चोदितः ।
उपस्तीर्य्याथ दर्भान्तु सर्वान्नेभ्यः सकृत् सकृत् ॥
अभिघार्याथ जुहुयादङ्गारान् भस्ममिश्रितान् ।
पृथग्दक्षिणतः कृत्वा प्रेतायेत्यादिना ततः ॥
अपि मृष्टान्नमुद्दिश्य निक्षिप्यानुदिशेत्ततः ।
अमुष्मा उपतिष्ठन्त्वित्यथ मन्त्रैः समीक्ष्य तान् ॥
भुक्तावान्तेषु कृत्वा च स्वदितञ्च तिलोदकम् ।
विकीर्य्यात्सिच्य दत्वा च दक्षिणामुदिते क्षये ॥
अभिवाद्य तु तान् ब्रूयात् तृप्तिरस्त्विति तेऽपि च ।
अस्तु तृप्तिरिति ब्रूयुरनुज्ञानान्तमाचरेत् ॥
अनुज्ञातोऽन्नशेषेण पिण्डं दत्वा प्रसिच्य च ।

हण्यस्वेत्येतमादाय पिण्डमुच्छिष्टमेव च ॥
अपामन्ते तदुत्सृज्य स्नात्वा गच्छेद्गृहान् प्रति ।
पुण्याहसुक्तदीपञ्च पूर्णकुम्भादिमङ्गलम् ॥
गृहद्वारे स दृष्ट्वान्नं शेषं भुञ्जीत कामतः ।
क्षत्रियस्नातमात्रस्तु स्पृशेद्वाहनमाहितम् ॥
वैश्यः प्रतोदं रश्मिं वा यष्टिं शूद्रः कृतक्रियः ।
ऐकोद्दिष्टान्त एवायं संस्कर्त्ता मुच्यते लघात् ॥
तृतीये पक्ष आयाते कुर्य्यादेव द्वितीयकम् ।
मासि मासि च कामन्तु नष्टे पूर्णे कथञ्चन ।
वत्सरे वत्सरे केचित् कुर्व्वतेऽस्य मृताहनि ॥

वृहत्प्रचेताः ।

न पैतृकोजपः कार्य्यः स्वदितञ्च नोदाहरेत् ।

वह्वृचगृह्यपरिशिष्टे ।

एकोद्दिष्टपिण्डे अनुशब्दो न विद्यते पितृशब्दं न कुर्वीतेति ।

भृगुः ।

एकोद्दिष्टे कुशाः समूला इति सकृदाच्छिन्ननिषेधः । अवनेजनं प्रत्यवनेजनं कुर्य्यात् । धूप-चन्दन-माल्यादि च न कुर्य्यात् । "अनूदकमधूपञ्च गन्धमाल्यविवर्जितम् । नवश्राद्धममन्त्रञ्च पिण्डोदकविवर्जितम्" इति वचनात् । शेषमन्नमिति वचनात् शेषमन्नमिति च न वक्तव्यम् । शेषमपि तस्मै दद्यादप्सु वा प्रास्येत् नान्येन भोक्तव्यम् । एकादशाहे साग्निकेनापि वैश्वदेवः पश्चात्कर्त्तव्यः ।

तथाच परिशिष्टम् ।

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

तथाच शय्यादिदाने विशेषः ।

यथाह सत्यव्रतः ।

सद्यःशौचेऽपि दातव्यं प्रेतस्यैकादशेऽहनि ।
स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥

तच्छ्राद्धं न केवलं ब्राह्मणस्यैकादशेऽह्नि अपि तु क्षत्रियादेरप्य-स्याद्यश्राद्धस्यायमेव कालः ।

तथाच पैठीनसिः ।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
चतुर्णामपि वर्णानां सूतकन्तु पृथक् पृथगिति ॥

न च क्षत्रियादेरशुचित्वेन तत्र श्राद्धानधिकार इत्याशङ्कनीयं, अशुद्धस्याप्ययं वाचनिकोऽधिकार इति ।

तथाच शङ्खः ।

आद्यं श्राद्धमशुद्धोपि कुर्य्यादेकादशेऽहनि ।
कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥ इति ॥

'आद्यमिति सर्वैकोद्दिष्टप्रकृतिभूतमेकादशाहाख्यमित्यर्थः । एतच्छ्राद्धानन्तरं स्नात्वा भुञ्जीतेति ।

तथान्ये विशेषाः ।

आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम् ।
पितृशब्दश्च सम्बन्धः शर्मशब्दस्तथैव च ॥
आवाहः पात्रलम्भश्च उल्मुकोल्लेखनादिकम् ।

तृप्तप्रश्नश्च विकरः शेषप्रश्नस्तथैव च ॥
प्रदक्षिणविसर्गश्च सीमान्तं गमनन्तथा ।
अष्टादशपदार्थांस्तु प्रेतश्राद्धे विवर्जयेत् ॥

मनुः ।

असपिण्डक्रियाकर्म द्विजातेः संस्थितस्य तु ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकन्तु कारयेत् ॥

याज्ञवल्क्यः ।

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।
आवाहनाग्नौकरणवर्जितं ह्यपसव्यवत् ॥
उपतिष्ठतामक्षय्यस्थाने विप्रविसर्जने ।
अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह ॥

कात्यायनः ।

अथैकोद्दिष्टमेकोऽर्घ्य एकं पवित्रमेकः पिण्डोनावाहनं नाग्नौकरणं नात्र विश्वेदेवाः स्वदितमिति तृप्तप्रश्नः उपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्यतामिति विसर्गोऽभिरताः स्म इतीतरे ।

शाङ्खायनः ।

अथात एकोद्दिष्टमेकपवित्रमेकार्घ्यमेकं पिण्डं नावाहनं नाग्नौकरणं नात्र विश्वेदेवा स्वदितमिति तृप्तिप्रश्नः उपतिष्ठतामक्षय्यस्थाने अभिरम्यतामिति विसर्गः सम्वत्सरमेवं प्रेते ।

'एकं पवित्रं' एकशिखं पवित्रं ।

नागरखण्डे तु द्विशिखमणुकम् ।

एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् ।

आवाहनं परित्यक्तं कार्य्यं पार्थिवसत्तम ॥
तृप्तिप्रश्नस्तथा कार्य्यः स्वदितेति सदन्ततः ।
अभिरम्येति मन्त्रेण ब्राह्मणस्य विसर्जनम् ॥
अच्छिन्नाग्रमभिन्नाग्रं कुर्याद्दर्भतृणद्वयम् ।
पवित्रं तद्विजानीयादेकोद्दिष्टे विधीयते ॥

भविष्योत्तरे ।

एकादशाहे यच्छ्राद्धं तत्सामान्यमुदाहृतम् ।
एकादशेभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि ॥
भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने ।
वस्त्रालङ्कार-शय्याद्यं पितुर्यद्वाहनादिकम् ।
गो-गृहासन-दासीस्तु दद्यात् सम्पूज्य भक्तितः ॥

वाराहपुराणे ।

एकादशाहे कर्त्तव्यं श्राद्धं प्रेताय यत्नतः ।
श्वः करिष्य इति ज्ञात्वा ब्राह्मणामन्त्रणक्रिया ॥
स्नात्वा चैव शुचिर्भूत्वा प्रेतं विप्रेषु योजयेत् ।
गतोऽसि दिव्यलोकन्त्वं कृतान्तविहितात्पथः ॥
मनसा वायुभूतेन विप्रे त्वाहं नियोजये ।
पूजयिष्यामि भोगेन एवं विप्रं निमन्त्रयेत् ॥
अस्तङ्गते तथादित्ये गत्वा विप्रनिवेशनम् ।
दत्त्वा तु पाद्यं विधिवत् नमस्कृत्य द्विजोत्तमान् ॥
पादौ संमृज्य तैलेन प्रेतस्य हितकाम्यया ।
प्रभातायान्तु शर्व्वर्य्यामुदिते च दिवाकरे ॥

श्मश्रुकर्म तु कर्त्तव्यं नखच्छेदस्तथैव च।
स्नपनाभ्यञ्जनन्दद्यादिप्राय विधिपूर्वकम् ॥
गृहीत्वा भूमिभागञ्च स्थण्डिलं तदनन्तरम्।
निपानदेशं सङ्गृह्य कर्त्तव्यं स्थण्डिलं महत्।
नदीकुले निवासे वा प्रेतभूमिं विनिर्दिशेत् ॥
अकृत्वा पृथिवीभागं निवापं ये तु कुर्वते।
तदधीनं जगद्भद्रे तदुच्छिष्टं कृतम्भवेत् ॥
न देवाः पितरस्तस्य गृह्णन्तीह कदाचन।
पतन्ति निरये घोरे तेनोच्छिष्टेन सुन्दरि ॥
सचेलं स्नपनं कृत्वा गत्वा चैव महानदीं।
तीर्थानि मनसा ध्यात्वा तैः स्वमभ्युक्षयेद्बुधः ॥
एवं शुद्धिं ततः कृत्वा ब्राह्मणं शीघ्रमानयेत्।
आगतञ्च द्विजं दृष्ट्वा कर्त्तव्या स्वागतक्रिया ॥
अर्घ्यं पाद्यं ततः कृत्वा हृष्टतुष्टेन माधवि।
आसनं चोपकल्पेत मन्त्रेण विधिपूर्वकम् ॥

तथा।

उपवेश्यासने भद्रे छत्रन्तच प्रकल्पयेत्।
आवरणार्थं तच्छत्रं ब्राह्मणाय प्रदीयते ॥
पश्चादुपानहौ दद्यात्पादस्पर्शकरे शुभे।
सन्तप्तवालुकां भूमिमहि-कण्टकितान्तथा ॥
सन्तारयति दुर्गाणि प्रेतन्ददुपानहौ।
तिलोपचारं कृत्वा तु विप्राय नियतात्मवान् ॥

नाम-गोत्रमुदाहृत्य प्रेताय तदनन्तरम् ।
शीघ्रमाक्रानयेद्भूमिं दर्भहस्तोऽथ भूतले ॥

मन्त्रः ।

इहलोकं परित्यज्य गतोऽसि परमाङ्गतिं ।
एवमाक्रानिते गन्ध-पुष्प-धूपैः समर्चयेत् ॥
ततो वस्त्राणि विप्राय सर्वाण्याभरणानि च ।
ततः पक्वान्नकञ्चैव कल्पयेच्चैव सुन्दरि ॥
एवमादीनि द्रव्याणि प्रेतभागानि सर्वशः ।
पादशौचादितः कृत्वा चातुर्वर्ण्यस्य माधवि ॥

वृहस्पतिः ।

एकोद्दिष्टविधानेन यदेकस्य प्रदीयते ।
आवाहनाग्नौकरणवर्जितं दैववर्जितम् ॥
वस्त्रालङ्कार-शय्याद्यं पितुर्यद्वाहनायुधम् ।
गन्ध-माल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥
भोजनञ्चानेकविधं कारयेत् व्यञ्जनानि च ।
यथाशक्ति प्रदद्याच्च गो-भू-हेमादिकं तथा ॥
श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश ।
ज्ञातयो बान्धवा वापि तथा वातिथयोऽपरे ॥
प्रदद्याद्दक्षिणां तेषां सर्वेषामनुरूपतः ।
हतमश्रोत्रियं श्राद्धं हतोयज्ञस्त्वदक्षिणः ॥
तस्मात्पणं काकिणीं वा फलं पुष्पमथापि वा ।
प्रदद्याद्दक्षिणां यज्ञे तया शतगुणो भवेत् ॥

सत्यव्रतः ।

प्रातरुत्थाय प्रेतब्राह्मणानेकादशामन्त्र्य पराह्णे नानाभक्ष्यान्नरसविन्यासैः एकैकमुद्दिश्य विधिवत्पिण्डदानं वासो हिरण्य-दास्युपानच्छत्रोदकुम्भदक्षिणा गुणवति पात्रे शय्याप्रदानं ततः स्वस्त्ययनादिधर्माः प्रवर्त्तन्ते । दशम्यामतीतायामेकैकमुद्दिश्य भोजयेत्तेषामेवैकस्मै गुणवते शय्या देया ।

विष्णुः ।

अथाशौचव्यपगमेषु स्नातः सुप्रक्षालितपाणि-पादः स्वाचान्तस्त्वेवं विधानेव ब्राह्मणान् यथाशक्त्युदङ्मुखान् गन्ध-माल्य-वस्त्रालङ्कारादिभिः पूजितान् भोजयेदेकवन्मन्त्रानूहेतैकोद्दिष्ट उच्छिष्टसन्निधावेकमेव तन्नाम-गोत्राभ्यां पिण्डं निर्वपेत् । भुक्तवत्सु ब्राह्मणेषु दक्षिणयाभिपूजितेषु प्रेतनाम-गोत्राभ्यां दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात् । कर्षूणां समीपे चाग्नित्रयमुपसमाधाय परिस्तीर्य्य तत्रैकस्मिन्नाहुतित्रयं जुहुयात् । सोमाय पितृमते स्वधा नमः अग्नये कव्यवाहनाय स्वधा नमः यमायाङ्गिरस्वते स्वधा नमः । स्थानत्रये प्राग्वत्पिण्डनिर्वपणं कुर्य्यात् । ततो दधि-मधु-घृत-मांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत् । एवं मृताहे प्रतिमासं कुर्य्यात् ।

लघुहारीतः ।

एकोद्दिष्टं प्रकुर्वीत पाकेनैव सदा स्वयं ।
अभावे पाकमात्राणां तदहः समुपोषणं ॥

इत्येकादशाहिकादीनां श्राद्धानां प्रयोगः ।

अथ मृतशय्यादानविधिः ।

स च जीवच्छय्यादानेतिकर्त्तव्यतातिदेशपरिपूरणीय इति तत्-पूर्वकोऽभिधीयते ।

तत्र भविष्योत्तरे ।

शय्यादानं प्रवक्ष्यामि तुभ्यं यदुकुलोद्वह[१] ।
यां दत्त्वा शिवभागी स्यादिह लोके परत्र च ॥
शय्यादानं प्रशंसन्ति सर्वे देव-द्विजोत्तमाः ।
अनित्यं जीवितं यस्मात् पश्चात्कोऽन्यः प्रदास्यति ॥
तस्मात्सबन्धुः सपिता यावज्जीवति भारत ।
मृतोमृत इति ज्ञात्वा क्षणात्स्नेहो निवर्त्तते ॥
तस्मात्स्वयं प्रदातव्यं शय्या-भोज्य-जलादिकं ।
आत्मैव ह्यात्मनो बन्धुरिति सञ्चिन्त्य चेतसि ॥
आत्मैव यदि चात्मानं दानैर्भोगैर्न पूजयेत् ।
कोऽन्योहि इतरस्तस्माद्यः पश्चात् पूजयिष्यति ॥
तस्माच्छय्यां समासाद्य सारदारुमयीं दृढ़ां ।
दन्तपत्रान्वितां रम्यां हेमपट्टैरलङ्कृतां ॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानकां ।
प्रच्छादनपटीयुक्तां गन्धधूपाधिवासितां ॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितं ।
उच्छीर्षके घृतभृतं कलशं परिकल्पयेत् ॥
विज्ञेयः पाण्डवश्रेष्ठ सनिद्राकलशो बुधैः ।

---

(१) पाण्डुकुलोद्वह इति ग० ।

ताम्बूल-कुङ्कुमक्षोद-कर्पूरागुरुचन्दनं ॥
दीपिकोपानहच्छत्रं चामरासन-भाजनं ।
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि ॥
शयनस्थस्य भवति यदन्यदुपकारकं ।
भृङ्गारकरकाद्यन्तु पञ्चवर्णं विनायकं ॥
शय्यामेवंविधां कृत्वा ब्राह्मणाय प्रदापयेत्[१] ।
सपत्नीकाय संपूज्य पुण्येऽह्नि विधिपूर्वकम् ॥
यथा न कृष्णशयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
यस्मादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्यशून्यास्तु तथा जन्मनि जन्मनि ॥
दत्त्वैवं तस्य सकलं प्रणिपत्य विसर्जयेत् ।
एवं शय्याप्रदाने तु विधिरेषः प्रकीर्त्तितः ॥
एकादशाहेऽपि तथा विधिरेषः प्रकीर्त्तितः ।
ददाति यदि धर्मार्थं बान्धवोबान्धवे मृते ॥
विशेषश्चात्र राजेन्द्र कथ्यमानं निशामय ।
तेनोपभुक्तं यत्किञ्चित् किञ्चित्पूर्वं गृहे स्थितम् ॥
तद्वात्रलग्नञ्च तथा वस्त्र-वाहन-भाजनम् ।
यद्यदिष्टञ्च तस्य स्यात्तत्सर्वं परिकल्पयेत् ॥
तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा ।
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ॥

(१) ब्राह्मणायोपपादयेदिति ख० ।

पद्मपुराणे ।

मृतकान्ते द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणां ।
काञ्चनं पुरुषं तद्वत्फल-वस्त्रसमन्वितम् ॥
संपूज्य द्विजदम्पत्यं नानाभरणभूषितम् ।
उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् ॥
रजतस्य तु पात्रेण दधि-दुग्धसमन्वितम् ।
अस्थि लालाटं संगृह्य सूक्ष्मं कृत्वा सवज्रकम् ॥
पायसैर्द्विजदम्पत्यं नानाभरणभूषितम् ।
भोजयेत्प्रयतः प्राज्ञो विधिरेषः सनातनः ।
एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ॥

शय्यायां ब्राह्मणोपवेशनविधिर्ब्राह्मणकर्त्तव्यञ्च वाराहपुराणे ।

संगृह्य पाणिना पाणौ मन्त्रेणोत्थापयेद्द्विजं ।
दद्याच्छय्यासनं चैव तथैवाञ्जनकङ्कती ॥
अञ्जनकङ्कतीं गृह्य शय्यामाक्रम्य स द्विजः ।
मुहूर्त्तं तत्र विश्रम्य निवापस्थानमागतं ।
गवां लाङ्गूलमाश्रित्य ब्राह्मं हस्तं समाददेत् ॥

शय्यादानफलं तु भविष्योत्तरे ।

स्वर्गे पुरन्दरगृहे सूर्य्यपुत्रालये तथा ।
सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ॥
सूर्य्यपुत्रालये चैव तथा वैवस्वते पुरे ।
पीड़यन्ति न तं याम्याः पुरुषा भीषणाननाः ॥
न घर्मेण न शीतेन बाध्यते स नरः क्वचित् ।

अपि पापसमायुक्तः स्वर्गलोकं स गच्छति ॥
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ।
आभूतसंप्लवं यावत् तिष्ठत्यातङ्कवर्जितः ॥
शय्याप्रदानममलं तव पाण्डुपुत्र
संकीर्त्तितं सकलसौख्यनिधानभूतं ।
यो वै ददाति विधिना स हि विष्णुलोके
कल्पं विकल्परहितः स विभाति मर्त्त्यः ॥

अत्र प्रसङ्गान्मृतशय्याप्रतिग्रहनिषेधोऽभिधीयते ।

पद्मपुराणे ।

अतिदुष्टा प्रेतशय्या न ग्राह्या द्विजसत्तमैः ।
गृहीतायान्तु तस्यां तु पुनः संस्कारमर्हति ॥
वेदे चैव पुराणे च शय्या सर्वत्र गर्हिता ।
ग्रहीतारस्तु जायन्ते सर्वे निरयगामिनः ॥

इति शय्यादानविधिः ।

एकादशाहादारभ्य संवत्सरपर्य्यन्तं प्रतिदिनं प्रेतायोदकुम्भो-दातव्यः ।

तथा च पद्मपुराणे ।

उदकुम्भश्च दातव्यो भक्ष्य-भोज्यसमन्वितः ।
यावद्वर्षं नरश्रेष्ठ सतिलोदकपूर्वकम् ॥

आह हारीतः ।

मृते पितरि वै पुत्रः पिण्डं मेध्यं समाचरेत् ।
अन्नकुम्भञ्च विप्राय प्रेतनिर्द्देशधर्मतः ॥

स्मृतिसमुच्चये ।

एकादशाहात् प्रभृतिघटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्स्यात्वत्सरः सुतैः ॥

पारस्करः ।

अहरहरन्नमस्मै ब्राह्मणायोदकुम्भञ्च दद्यात् पिण्डमप्येके निपृणन्ति।

याज्ञवल्क्यः ।

अर्व्वाक् सपिण्डीकरणं यस्य संवत्सरात्कृतं ।
तस्याप्यन्नं सोदकुम्भं दद्याद्वर्षं द्विजन्मने ॥

आश्वलायनः ।

यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतं ।
अब्दमम्बुघटं दद्यात् प्रत्यहं त्वन्नसंयुतं ॥

लौगाक्षिः ।

यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ।
मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरं ॥

इत्युदकुम्भः ।

अथ वृषोत्सर्गः ।

तत्र तावदस्य विधि-काल-देशाः इह चैकादशेऽहनि प्रमीतमनुष्योद्देशेन वृषोत्सर्गः कार्य्य इत्युक्तं ।

षड्त्रिंशन्मते ।

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

भविष्योत्तरे तु द्वादशेऽहनि वृषोत्सर्गोऽभिहितः ।

कार्त्तिक्यामथवामावास्यामयने वा युधिष्ठिर ।
चैत्र्यां वापि तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ॥

विष्णुधर्म्मोत्तरे तु यस्मिन् कस्मिंश्चिन्मृताहेऽपि वृषोत्सर्गोऽभिहितः ।

अश्वयुक् शुक्लपक्षस्य पञ्चदश्यां नराधिप ।
कार्त्तिकेऽप्यथवा मासि वृषोत्सर्गन्तु कारयेत् ॥
ग्रहणे द्वे महामुख्ये तथा चैवायनद्वये ।
विषुवद्वितये चैव मृताहे बान्धवस्य च ।
उत्सृजेन्नीलकण्ठं वै कौमुद्याः समुपागमे ॥

'नीलकण्ठः' नीलवृषः । 'कौमुदी' आश्विनकार्त्तिकयोः पौर्णमासी ।

पित्राद्युद्देशेन वृषोत्सर्गमकुर्व्वाणस्य निन्दा मत्स्यपुराणे ।

न करोति वृषोत्सर्गं सुतीर्थे वा जलाञ्जलिं ।
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥

'उच्चारः' पुरीषोत्सर्गः । अत्र नीलसंज्ञकः सर्व्वोत्तमो वृषः ।

वृषोत्सर्गप्रदेशा देवीपुराणे ।

स त्वरण्ये भवेत्तीर्थे उत्सर्गो गोकुलेऽपिवा ।

ब्रह्मपुराणे ।

प्रागुदक्प्रवणे देशे मनोज्ञे निर्जने वने ।

वृषोत्सर्गः कार्य इति शेषः ।

कालिकापुराणे ।

अरण्ये चत्वरे वापि गोष्ठे वा मोचयेद्वृषम् ।
न गृहे मोचयेद्विद्वान् कामयन् पुष्कलं फलम् ॥

इति वृषोत्सर्गविधि-काल-देशाः ।

अथोत्सर्जनीयवृषलक्षणम् ।

मत्स्यपुराणे मनुरुवाच ।

भगवन् श्रोतुमिच्छामि वृषभस्य तु लक्षणम् ।
वृषोत्सर्गविधिञ्चैव तथा पुण्यफलं महत् ॥

मत्स्य उवाच ।

धेनुमादौ परीक्षेत सुशीलां लक्षणान्विताम् ।
अव्यङ्गामपरिक्लिष्टां जीववत्सामरोगिणीम् ॥
स्निग्धवर्णां स्निग्धखुरां स्निग्धशृङ्गां तथैव च ।
मनोहरातिसौम्याञ्च सुप्रमाणामनुद्धताम् ॥
आवर्त्तैर्दक्षिणावर्त्तैर्युक्ता दक्षिणतश्च या ।
वामावर्त्तैर्वामतश्च विस्तीर्णजघन-स्तना ॥
मृदुसंहतताम्रोष्ठी रक्तजिह्वा सुपूजिता ।
अश्यावदीर्घास्फुटितरक्तजिह्वा तथा च या ॥
ताम्रानाविलनेत्रा च शफरैर्विरलैर्दृढैः ।
वैदुर्य्यमधुवर्णैश्च जलबुद्बुदसन्निभैः ॥
रक्तस्निग्धैश्च नयनैस्तथा रक्तकनीलकैः ।
सप्त चतुर्दशदन्ता भवेदश्यावतालुका ॥
षडुन्नता सुपार्श्वोरुः पृथुपश्चसमायता ।
अष्टायता शिरोग्रीवायुता या शुभलक्षणा ॥
षडुन्नता भवेत्केषु केषु पञ्चसु चायता ।
आयताश्च तथैवाष्टौ धेनूनाञ्च शुभावहाः ॥

मत्स्य उवाच ।

उरः पृष्ठं शिरः कुक्षी श्रोणी च वसुधाधिप ।
षडुन्नतानि धेनूनां पूजयन्ति विचक्षणाः ॥
कर्णौ नेत्रे ललाटञ्च पञ्चैव रतिनन्दन ।
समायतानि शस्यन्ते पुच्छं साला च सक्थिनी ॥
चत्वारश्च स्तना राजन्नेवमष्टौ मनीषिभिः ।
शिरोग्रीवायुता चैव भूमिपालायता स्मृता ॥
तस्याः सुतं परीक्षेत वृषभं लक्षणान्वितं ।
उन्नतस्कन्धककुदमृजुलाङ्गूलकम्बलं ॥
महाकटितटस्कन्धं वैदूर्य्यमणिलोचनं ।
प्रवालवर्णशृङ्गाग्रं सुदीर्घमृदुबालधिं ॥
नवाष्टदशसङ्ख्यैर्वा तीक्ष्णाग्रैर्दशनैः शुभैः ।
मल्लिकाक्षश्च मोक्तव्यो गृहेऽपि धन-धान्यदः ॥
वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते ।
श्वेतारक्तश्च कृष्णश्च गौरः पाटल एव च ॥
इन्द्रनीलाभपृष्ठश्च शबलः पञ्चकालकः ।
पृथुकर्णो महास्कन्धः श्लक्ष्णरोमा च यो भवेत् ॥
रक्ताक्षः कपिलोयश्च रक्तशृङ्गश्च यो भवेत् ।
श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य च शस्यते ॥
स्निग्धो रक्तेन वर्णेन क्षत्रियस्य प्रशस्यते ।
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः ॥
यस्य प्रागायते शृङ्गे स्वमुखाभिमुखे सदा ।
सर्वेषामेव वर्णानां स च सर्वार्थसाधकः ॥

मार्जारपादः कपिलो धन्यः कपिलपिङ्गलः।
श्वेतो मार्जारपादस्तु धन्यो मणिनिभेक्षणः॥
करटः पिङ्गलश्चैव श्वेतपादस्तथैव च।
स्वच्छपादशिराश्चैव द्विपादः श्वेत एव च॥
कपिञ्जलनिभोधन्यस्तथा तित्तिरसन्निभः।
आकर्णमूलाच्छ्वेतन्तु मुखं यस्य प्रकाशते॥
नान्दीमुखः स विज्ञेयो रक्तवर्णो विशेषतः।
श्वेतञ्च जठरं यस्य भवेत् पृष्ठञ्च गोपते॥
वृषभः स समुद्राख्यः सततं कुलवर्द्धनः।
मल्लिकापुष्पचित्रश्च धन्यो भवति पुङ्गवः॥
कमलैर्मण्डलैश्चापि चित्रो भवति गोपते।
अतसीपुष्पवर्णश्च तथा धन्यतरः स्मृतः।
एते धन्यास्तथाऽधन्यान् कीर्त्तयिष्यामि ते नृप॥
कृष्णताल्वोष्ठदशना रूक्षशृङ्ग-शफाश्च ये।
अव्यक्तवर्णा ह्रस्वाश्च व्याघ्रभस्मनिभाश्च ये॥
ध्वाङ्क्ष-स्कन्धसवर्णाश्च तथा मूषकसन्निभाः।
कुण्ठाः काणास्तथा खञ्जाः केकराक्षास्तथैव च॥
विषमश्वेतपादाश्च उद्भ्रान्तनयनास्तथा।
न ते वृषाः प्रमोक्तव्या न ते धार्य्यास्तथा गृहे।
मोक्तव्यानाञ्च धार्य्याणां भूयो वक्ष्यामि लक्षणं॥
स्वस्तिकाकारशृङ्गाश्च मेघौघसदृशस्वनाः।
महाप्रमाणाश्चैव तथा मत्तमातङ्गगामिनः॥

महोरस्का महोच्छ्राया महाबलपराक्रमाः ।
शिरः कर्णौ ललाटञ्च बालधिश्चरणास्तथा ॥
नेत्रे पार्श्वे च कृष्णानि शस्यन्ते चन्द्रसत्त्विषः ।
श्वेतान्येतानि शस्यन्ते कृष्णस्य तु विशेषतः ॥
भूमौ कर्षति लाङ्गूलं सुस्थूला चैव बालधिः ।
पुरस्तादुन्नतोनीलो वृषभस्तु प्रशस्यते ॥
शक्ति-ध्वज-पताकाभा येषां राजी विराजते ।
अनड्वाहस्तु ते धन्या वित्तसिद्धिजयावहाः ॥
प्रदक्षिणानि वर्त्तन्ते स्वयं ये विनिवर्त्तिताः ।
समुन्नतशिरोग्रीवा धन्यास्ते यूथवर्द्धनाः ॥
रक्तशृङ्गाग्रनयनः श्वेतवर्णो भवेद्यदि ।
शफैः प्रवालसदृशैर्नास्ति धन्यतरस्ततः ॥
एते धार्य्याः प्रयत्नेन मोक्तव्या यदि वा वृषाः ।
धारितास्तु तथा मुक्ता धन-धान्यविवर्द्धिताः ॥

ब्रह्मपुराणे ।

वृषभः कृष्णसारस्तु प्रत्यग्रस्तु चिराायनः ।
मनोज्ञोदर्शनीयस्तु सर्वलक्षणसंयुतः ॥

आह विष्णुः ।

तत्राहवे च वृषभं परीक्षेत जीववत्सायाः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा पुच्छ-पादेषु सर्वशुक्लं यूथस्याच्छादकं ।

अथ सर्वोत्तमस्य नीलसंज्ञकस्य वृषस्य लक्षणं ।

रेवाखण्डे ।

यस्तु वै पाण्डुरो वक्षे ललाटे चरणे तथा।
लाङ्गूले यस्तु वै शुभ्रः स वै नाकस्य दर्शनः॥

कालिकापुराणे।

नीलोत्पलदलप्रख्यः श्वेताङ्घ्रिचन्द्रमस्तकः।
शुभ्रुर्युवा लोहिताक्षो वृषभोनील उच्यते॥

ब्रह्माण्डपुराणे।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः।
श्वेतः खुरविषाणाभ्यां स नीलोवृष उच्यते॥

मत्स्यपुराणे।

चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपते।
लाक्षारससवर्णस्य तन्नीलमिति निर्दिशेत्॥
वृष एव स मोक्तव्यो न स धार्यो गृहे भवेत्।
तदर्थमेषा चरति लोके गाथा पुरातनी॥
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
गौरीं वाप्युद्वहेद्भार्यां नीलं वा वृषमुत्सृजेत्॥

अथोत्सर्गविधिः।

भविष्योत्तरे कृष्णवाक्यं।

षाण्डं नीलं शङ्खपादं सपौण्ड्रं श्वेतपुच्छकं।
गोभिश्चतुर्भिः सहितमुत्सृजेत्तं विधिं शृणु॥
अथोवाच पुरा गर्गो गोकुलेऽनघ पाण्डव।
तं ते सम्पादयिष्यामि विधिं ब्रह्मप्रचोदितं॥
मातरः स्थापयित्वा च पूजयेत्कुसुमाक्षतैः।

मातृश्राद्धं ततः कुर्य्यात् सदाभ्युदयकारकं ॥
अर्कमूले तु कलशमश्वत्थदलशोभितं ।
तत्र रुद्रान् जपित्वा तु स्थापयेद्रुद्रदैवतं ॥
सुसमिद्धं ततः कुर्य्याद्वह्निं मन्त्रपुरःसरं ।
आज्येन जुहुयात् षड्भिः पृथगाहुतिसंस्कृतैः ॥
पौष्णमन्त्रैस्ततः पश्चाद्धुत्वा वह्निं यथाविधि ।
एकवर्णं द्विवर्णं वा रोहितं श्वेतमेव वा ॥
जीववत्सपयस्विन्याः पुत्रं सर्वाङ्गसुन्दरं ।
चतस्रो वत्सतर्य्यश्च ताभिः सार्द्धमलङ्कृतं ॥
तासाङ्कर्णे जपेद्विप्रः पतिं वो बलिनं शुभं ।
ददामि तेन सहिताः क्रीडध्वं हृष्टमानसाः ॥
ततो वामे त्रिशूलञ्च दक्षिणे चक्रमालिखेत् ।
अङ्कितं शूल-चक्राभ्यां चर्च्चितं कुसुमादिना ॥
पुष्पमालावृतग्रीवं सितवस्त्रैश्च छादितं ।
विमुञ्चेद्वत्सकाभिश्च तिसृभिर्बलिनं वृषं ॥
देवालये गोकुले वा नदीनां सङ्गमे तथा ।
इत्युक्तं गर्गमुनिना विधानं वृषमोक्षणे ॥

अत्र मातृपूजापूर्वकं अभ्युदयकारकं श्राद्धं कुर्य्यात् इत्युक्तं तेन चाभ्युदयिकं श्राद्धं कर्त्तव्यमेवेति गम्यते। तत्र श्राद्धं कृत्वा श्राद्ध-भोक्तृव्यतिरिक्तानामपि द्विजानां भोजनादिना प्रीणनं कृत्वा तिलो-दकदानपूर्वकं पिण्डदानं कर्त्तव्यमित्युक्तं वाराहपुराणे।

श्राद्धं कृत्वा तु सुश्रोणि तर्पणीया द्विजातयः।

दत्त्वा तिलोदकं पिण्डं पितृ-पैतामहेषु च ॥

कलशे रुद्रजपानन्तरं पुरुषसूक्तादिजपोऽप्युक्तो विष्णुधर्मोत्तरे ।

तत्र रुद्रं जपित्वा तु स्थापयेद्रुद्रदेवताम् ।
तथैव पौरुषं सूक्तं कूष्माण्डानि तथैव च ।

'रुद्रः' "नमस्ते रुद्रमन्यव इत्यादिरध्यायो यजुर्वेदे प्रसिद्धः । पुरुषसूक्तं "सहस्रशीर्षेत्यादिषोड़शर्चः । "यद्देवा देवहेड़नमित्याद्या ऋचः कुष्माण्डसंज्ञाः ।

अत्र कश्चिद्विशेषः सौरपुराणे ।

रुद्रमावाह्य कलशे गन्ध-माल्याक्षतादिभिः ।
सम्पूज्य संस्पृशन् कुम्भं रुद्राध्यायं जपेत्ततः ।
तथैव पौरुषं सूक्तं गायेद्रौद्रीश्च संहिताम् ॥

"आवोराजेत्येकं, "तद इति चत्वारि, "आज्यदोहानि त्रीणि, देवव्रतानि त्रीणीत्येकादशसामानि रुद्रसंहिता । तदुक्तं सामविधानाख्ये ब्राह्मणे, "आवोराजा तद्वोवर्गं आज्यदोहानि देवव्रतानि चैषा रुद्रा नाम संहितैतां प्रयुञ्जन् रुद्रं प्रीणाति" इति जपानन्तरं होमः कार्य्यः ।

विष्णुधर्मोत्तरे ।

सुसमिद्धं गवां मध्ये सुविस्तीर्य्य हुताशनं ।
पयसा श्रपयेद्विद्वान् चरुं पौष्णं समाहितः ॥

अत्रायं क्रमेण होमोऽभिधीयते । गवां मध्ये रुद्रकलशस्य पश्चाद्भागे परिसमूहनादिपञ्चभूसंस्कारान् विधायाग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्य उत्तरकर्मोपयुक्तं सर्वमासाद्य आज्यमधिश्रित्य

पयसा सह तण्डुलान् प्रक्षिप्य पायसं श्रपयित्वा सोदकन्तण्डुलं स्थाल्यां प्रक्षिप्य पौष्णचरुं श्रपयित्वा आज्यादीन्युद्वास्य आज्यं संस्कृत्य समित्प्रक्षेपानन्तरं प्रदक्षिणमग्निं पर्य्युक्ष्य दक्षिणं जान्वाच्य प्रथममन्वारब्धे इह रतिरिति षड़ाज्याहुतयो होतव्याः । तद्यथा इह रतिः स्वाहा । इदमग्नये । ॐ इह रमध्वं स्वाहा । इदमग्नये । ॐ इह धृतिः स्वाहा । इदमग्नये । ॐ इह स्वधृतिः स्वाहा । इदमग्नये । ॐ उपसृजं धरुणं मात्रे धरुणो मातरं धयन्त्स्वाहा । इदमग्नये । ॐ उपमोषमस्मासु दीधरत् स्वाहा । इदमग्नये । ततो ब्रह्मणान्वारब्धे प्रजापतये स्वाहेति मनसा ध्यात्वा अग्नावुत्तरतो हुत्वा इदं प्रजापतये इति त्यागः । एष पूर्व आघारः । तत इन्द्राय स्वाहेत्यग्नौ दक्षिणतो हुत्वा इदमिन्द्रायेति त्यागः । एष उत्तर आघारः । अग्नये स्वाहेत्युत्तरपूर्वार्द्धे हुत्वा इदमग्नय इति त्यागः । एष आग्नेय आज्यभागः । सोमाय स्वाहेति दक्षिणपूर्वार्द्धे हुत्वा इदं सोमायेति त्यागः । एष सौम्य आज्यभागः । तदनन्तरमन्वारब्धे पायसेन गोयज्ञोक्तदेवताभ्यो होमः तद्यथा ॐ अग्नये स्वाहा । इदमग्नये । ॐ रुद्राय स्वाहा । इदं रुद्राय । ॐ सर्वाय स्वाहा । इदं सर्व्वाय । ॐ पशुपतये स्वाहा । इदं पशुपतये । ॐ उग्राय स्वाहा । इदमुग्राय । ॐ अशनये स्वाहा । इदमशनये । ॐ भवाय स्वाहा । इदं भवाय । ॐ महादेवाय स्वाहा । इदं महादेवाय । ॐ ईशानाय स्वाहा । इदं ईशानाय । अथ पौष्णचरोरेकाहुतिः । पूषा गा अन्वेतु नः पूषा च रक्षत्वर्वतः पूषा वाजान् सनोतु नः । इदं पूष्णे । अथ ब्रह्मणान्वारब्धे स्विष्टकृन्महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यञ्चरुं जुहुयात् । ततः अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते ।

इति पौष्णपायसाभ्यां स्विष्टकृद्धोमः । महाव्याहृत्यादिहोमस्त्वाज्येन । ॐ भूः स्वाहा । इदमग्नये । ॐ भुवः स्वाहा । इदं वायवे । ॐ स्वः स्वाहा । इदं सूर्य्याय । इति तिस्रो महाव्याहृतयः । अथ त्वन्नो अग्न इत्यादिभिः स्वाहान्तैः पञ्चभिर्मन्त्रैः सर्वप्रायश्चित्तं । ॐ सत्वन्नो अग्ने प्रमुमुग्ध्यास्मत् स्वाहा इदमग्नीवरुणाभ्यां । ॐ स त्वं नो अग्ने सुहवो न एधि स्वाहा । इदमग्नीवरुणाभ्यां । ॐअयाश्चाग्ने स्यनभि भेषजं स्वाहा । इदमग्नये । ॐ ये ते शतं स्वर्क्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्योमरुद्भ्यः स्वर्केभ्यः । ॐ उदुत्तमं अदितये स्याम स्वाहा । इदं वरुणाय । अथ प्राजापत्यं । ॐ प्रजापतये स्वाहा । इदं प्रजापतये । ततः संश्रवप्राशनं, मार्जनं, पवित्रप्रतिपत्तिः, दक्षिणादानमिति । एवं होमं परिसमाप्य वृषस्याङ्कनादिकं कुर्य्यात् ।

तत्राह विष्णुः ।

गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य्य पौष्णं चरुं श्रपयित्वा पूषाभिगन्धे नुम इह रतिरिति च हुत्वा वृषभमानीयायस्कारमाबाहयेत् ।

'अयस्कारः' लोहकारः ।

सौरपुराणे ।

ततो वृषभमानीय अग्नेरुत्तरतः स्थितं ।
सव्यस्फिचि लिखेच्चक्रं शूलं वाहौ तु दक्षिणे ॥

'सव्यस्फिचि' वामकटिभागे ।

कुङ्कुमेनाङ्कयित्वादौ ब्राह्मणः सुसमाहितः ।
तप्तेन धातुना पश्चादयस्कारोऽङ्कयेद् वृषं ॥

देवीपुराणे ।

तप्तेन वामतश्चक्रं पार्श्वे शूलं समालिखेत् ।
धातुना हेम-तारेण आयसेनाथ वाङ्कयेत् ॥

'हेम' सुवर्णं 'तारं' रूप्यं, 'आयसं' लोहं ।

विष्णुः ।

एकस्मिन् पार्श्वे चक्रेणापरस्मिन् शूलेनाङ्कितञ्च "हिरण्यवर्णेति चतसृभिः "शन्नोदेवीरिति च स्नापयेत् ।

विष्णुधर्मोत्तरे ।

अङ्कितं स्नापयेत्पश्चात् स्नाने तस्य तथा पठेत् ।
हिरण्यवर्णेति ऋचश्चतस्रो मनुजेश्वर ।
आपोहिष्ठेति तिसृस्तु शन्नोदेवीति चाप्यथ ॥

"हिरण्यवर्णाः शुचयः पावका इत्याद्यास्तत्रोभिषेचनीया ऋचोऽथर्ववेदे प्रसिद्धाः ।

पारस्करः ।

अकालमूलान् कलशानष्टौ स्रग्दामभूषितान् ।
सवस्त्रांश्च सरत्नांश्च चूतपल्लवशोभितान् ॥
स्थापयित्वा चतुर्भिस्तु संस्नाप्यो वृषभः पुरः ।
चतुर्भिर्वत्सिकाः स्नाप्यास्ततः सर्वान् विभूषयेत् ।
ऋचः समुद्रज्येष्ठास्तु कीर्त्तयेदभिषेचने ॥

"समुद्रज्येष्ठाः सलिलस्य मध्यादित्याद्या ऋचोवह्वृचानां प्रसिद्धाः ।
एतच्च वृषस्य वत्सिकानाञ्च स्नापनादिकन्तस्य ताभिः सह विवाहं कर्तुं ।

एतच्च वत्सिकासङ्ख्यादिविधिपूर्वकम् देवीपुराणे स्पष्टीकृतम् ।

चतस्रो वत्सिका भद्रा द्वे चाप्यथवतोऽपिवा ।
वत्सः सर्वाङ्गसम्पूर्णः कन्यका वत्सिका भवेत् ॥
अलङ्कृत्य यथाशोभमुत्सर्गं कारयेन्मुने ।
विवाहस्त्वेकवत्सर्य्या नीलेन भवते सदा ॥

'कन्यका' अननुभूतमैथुना । 'एकवत्सरी' एकवर्षवयस्का ।

तथा ।

अष्टाभिर्धेनुभिर्युक्तश्चतुर्भिरथवा क्रमात् ।
त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभितः ॥

'त्रिहायन्यः' त्रिवर्षवयस्काः ।

सर्वोपकारेणोपेतः स सर्वस्य वरो महान् ।
उत्स्रष्टव्यो विधानेन अपि स्मृतिनिदर्शनात् ॥

आदित्यपुराणे ।

विसर्ज्यस्याथ गुर्विण्यो देया गावो वृषस्य च ।
अष्टौ वाथ चतस्रो वा यथालाभमथापिवा ॥

विष्णुधर्मोत्तरे ।

वत्सतर्यश्चतस्रश्च तं वृषञ्च नराधिप ।
अलङ्कुर्यात्ततः पश्चाद्गन्ध-माल्यैश्च शक्तितः ।
किङ्किणीभिश्च रम्याभिस्तथा चीनांशुकैः शुभैः ॥

'किङ्किण्यः' घर्घरीकाः ।

आदित्यपुराणे ।

घण्टां लोहकृतां दद्यात् शृङ्गे च पटलं शुभं ।

'पटलं' सुवर्णादिनिर्मितः कोशः ।

देवीपुराणे ।

अद्भिस्त्वोत्सृज्यते पूर्वं गावोऽलङ्कृत्य सर्वतः ।

शिवधर्मोत्तरे ।

रक्त-पीतैश्च कुसुमैः कुङ्कुमाद्यैश्च वर्णकैः ।
यथाशोभं समालभ्य विभवैः पूजयेद्वृषान् ॥
किङ्किणीरवकोपेतां घटिकाञ्चरकान्वितां ।
स्वस्तिकैरर्द्धचन्द्रैश्च नानारत्नोपशोभितां ॥

'स्वस्तिकः' चिह्नन्द्रप्रभेदः ।

अष्टाङ्गुलप्रविस्तीर्णां हेमपद्मविनिर्मितां ।
राजतीं चर्मणोवापि मालामुरसि विन्यसेत् ॥
तद्विधां पृष्ठमालाञ्च पुटान्तककुदञ्चितां ।
नानाभरणसंयुक्तां उदरार्द्धप्रलम्बिनीं ।
हेम-राजत-कौषीं वा नानारत्नोपशोभिताम् ॥

'कौषी' ताम्रमयी ।

पट्टवस्त्रैर्विचित्रैश्च यथाशोभमलङ्कृतां ।
कार्य्यं शृङ्गद्वयन्तस्य सद्रत्नचामरान्वितम् ।
पद्मं शिरसि सौवर्णं चन्द्रं चन्द्रकभूषितम् ॥

'चन्द्रकः' मयूरपिच्छं ।

भ्रमराश्वत्थपत्रैश्च बध्नीयाद्रत्नसंयुतम् ।
ग्रैवेयकेन दिव्येन नानावस्त्रोपशोभिना ॥

'ग्रैवेयकं' कण्ठभूषा ।

घण्टाङ्कांस्यमयीं शुद्धां गले बध्नीत सुस्वनां ।

खुरैः सौवर्णं रौप्यैश्च केयूराङ्गदभूषिताम्।
पट्टवस्त्रैर्विचित्रैश्च यथाशोभमलङ्कृताम्॥

पारस्करः।

अथालङ्कृत्य तान् सर्व्वान् रुद्राध्यायं समाहितः।
श्रावयेत्पौरुषं सूक्तं तथा प्रतिरथानि च॥

"आशुः शिशानो वृषभो न भीम इत्याद्या द्वादशर्चः प्रतिरथसंज्ञाः।

विष्णुः।

स्नातालङ्कृतं स्नाताभिः चतसृभिर्वत्सतरीभिः सार्द्धमानीय रुद्रान् पुरुषसूक्तं कुष्माण्डीश्च जपेत्। पिता वत्सेति च मन्त्रं वृषभस्य दक्षिणे कर्णे जपेत्।

विष्णुधर्मोत्तरे।

मन्त्रं पितावत्सेति प्रतीतं जपेदपसव्ये वृषभस्य कर्णे।

'अपसव्ये' दक्षिणे। पितावत्सेति मन्त्रोऽथर्ववेदे प्रसिद्धः। "पिता वत्सानां प्रतिरघ्यानां अथो पिता महतां गर्गाणां वत्सोजरायुः प्रतिधुक्पीयूष आयुष्या घृतं तदस्य रेतः" इति।

आदित्यपुराणे।

सावित्रीञ्च जपेत्तत्र तथाचैवाघमर्षणं।
कर्णजपञ्च दद्यात्तु वृषभस्य न संशयः॥

'अघमर्षणं' "ऋतञ्च सत्यञ्चाभीद्धात्तपस इत्यादिप्रसिद्धं।

विष्णुधर्मोत्तरे।

ततोऽङ्किते जपेन्मन्त्रमिमं प्रयतमानसः।

वृषोऽसि भगवान् धर्मश्चतुष्पादः प्रकीर्त्तितः ।
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ॥

पारस्करस्त्वेतमेव मन्त्रमभिधाय ।

इति प्रार्थ्य वृषेन्द्रन्तं गृहीतकुसुमाञ्जलिः ।
त्रिः प्रदक्षिणमावृत्य नमस्कुर्य्याद्यथाविधि ॥
प्रत्यङ्मुखानान्तु गवामेतावान् विधिरिष्यते ।
अथैषान्याभिमुखतः कुर्य्याद्गावो वृषन्तथा ॥
गावोवृषस्योभयतो वृषमध्ये निवेश्य च ।
सर्वेषां कण्ठसूत्राणि श्लेषयेत्तु परस्परं ॥
अयं हि वो मया दत्तः सर्वासाम्पतिरुत्तमः ।
तुभ्यञ्चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ॥
संयोज्येति वृषं ताभिः पितृभ्यस्तं निवेदयेत् ।
सव्येन पाणिना पुच्छं समालम्ब्य वृषस्य तु ॥
दक्षिणेनाप आदाय सतिलाः सकुशास्ततः ।
ततो गोत्रं समुच्चार्य्य अमुकस्मा इति ब्रुवन् ॥
वृष एव मया दत्तः तन्तारयतु सर्वदा ।
सहेम सतिलं भूमावित्युच्चार्य्य विनिक्षिपेत् ॥

इदन्तु पारस्करेणैकप्रमीतोद्देशेन वृषोत्सर्गवाक्यमुक्तं । अनेकप्रमीतोद्देशेन तु नीलोत्सर्गे मन्त्र उक्तः ।

वाराहपुराणे ।

नरा ये चात्र तिष्ठन्ति पतिताः पितृबान्धवाः ।
तेषामक्षयं त्राता नीलोमुक्तो यथाविधि ॥

गृहीत्वोदुम्बरं पात्रं कृत्वा कृष्णतिलोदकं ।
करेण पुच्छमादाय पितृणामुत्सृजेत् वृषं ॥

'उदुम्बरं' ताम्रं ।

ब्रह्मपुराणे ।

स्वधा पितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये ।
मातृपक्षाश्च ये केचिद्ये चान्ये पितृपक्षजाः ॥
गुरु-श्वशुर-बन्धूनां ये कुलेषु समुद्भवाः ।
ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः ॥
वृषोत्सर्गेण ते सर्वे लभन्तां तृप्तिमुत्तमां ।
दद्यादनेन मन्त्रेण तिलाक्षतयुतञ्जलं ।
पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणां ॥

अनेन मन्त्रेण बहुपित्रुद्देशेन वृषमुत्सृजेत् ।

विष्णुः ।

एतं युवानं पतिं वोददामि तेन क्रीड़न्तीश्चरथ प्रियेण । माहास्महि प्रजयां मातनूभिर्मारं धाम द्विषते सोमराजन्(१) ।

वृषं वत्सतरीयुक्तमैशान्यां कालयेद्दिशि ।

'कालयेत्' प्रणोदयेत् । अनेन मन्त्रेणेति शेषः ।

विष्णुधर्मोत्तरे ।

एतं युवानं वृषभं ददामि
गवां पतिं यूथपतिं सदर्पं ।

---

(१) एतं युवानं पतिं वो ददामि तेन क्रीड़न्तीश्चरथ । मास्महि प्रजामातनूभिर्मारिषाम द्विषते सोमराजनं इति क० ।

अनेन सार्द्धं चरत प्रकामं
कामं तथा प्राक्तनवत्सतर्य्यः ।
प्रकालयेत्तं वृषभं ततस्तु
पूर्वां दिशं वत्सतरीश्च सर्वाः ॥

कात्यायनः ।

जीववत्सायाः पयस्विन्याः पुत्रे यूथे च(१) रूपस्वित्तमः स्यात्तमलङ्कृत्य यूथे मुख्याश्चतस्रोवत्सतर्य्यस्ताश्चालङ्कृत्यैतं युवानं पतिं वोद्दामि तेन क्रीडन्तीश्चरथ प्रियेण मानः साप्तजनुषा संविदाना रायस्पोषेण समिषा मदेमेत्येतयैवोत्सृजेरन्नभ्यस्थमभिमन्त्रयते मयोभूरित्यनुवाकशेषेण ।

ब्रह्मपुराणे ।

अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः ।
ब्राह्मणानाक्षयत् किञ्चिद्येनोत्सृष्टन्तु निर्जने ।
तत्कश्चिदन्योन नयेद्विभाज्यं न यथाक्रमं ॥

अत्र निर्जने येन केनापि यत्किञ्चिदुत्सृष्टन्तदन्येन केनचिन्न नेयं न च विभाज्यमिति ब्राह्मणान् प्रति दातुरुक्तिः ।

अथ मोक्षव्यस्थानमाह पारस्करः ।

बहुतोयतृणेऽरण्ये चेपणीयः स गोपतिः ।
वत्सतर्य्यश्च ताः सर्वास्तेनैव सह कालयेत् ।
अथवा गोकुले चेप्या बहुगोधनसङ्कुले ॥

---

(२) यूथे रूप्ये चेति क० ।

शिवधर्म्मोत्तरे ।

एवंविधञ्च वृषभं गोपतिं गोधनत्तमं ।

वत्सिकाजननप्रायं बह्वचीरावहङ्गवां ॥

नानाभरणसंयुक्तं पूर्व्वशोभासमन्वितं ।

गोमातरञ्च संपूज्य विसृजेच्छिवगोकुले ॥

एवं विसृज्य स्वस्तिवाचनादिकं कुर्य्यात् ।

पारस्करः ।

निष्क्रान्ते गोपतौ तत्र ब्राह्मणान् स्वस्ति वाचयेत् ।

दद्याच्च दक्षिणान्तेषां ब्राह्मणान् भोजयेत्ततः ॥

सहिरण्यं रुद्रकुम्भं तथा स्नानघटानपि ।

होत्रे प्रदद्यात्तत् सर्व्वं धेनुं चैव पयस्विनीं ॥

वाराहपुराणे ।

विप्राणां वचनं कृत्वा यथा शक्त्या च दक्षिणां ।

'विप्राणां वचनं' विप्रैः स्वस्तिवाचनं ।

विष्णुधर्म्मोत्तरे ।

वासोयुगं होतुरथ प्रदेयं

सुवर्णयुक्तं सघृतं च कांस्यं ।

शिल्पिप्रधानस्य तथैव मूल्यं

देयं तथा तुष्टिमुपैति राजन् ।

विप्रास्तथान्नं दधि-सर्पिषा युतं

सम्भोजनीयाः पयसा च मिश्रं ॥

तत्र ब्राह्मणभोजनं रुद्रस्याग्रे कर्त्तव्यं तथाचोक्तं

रुद्रस्याग्रे भोजयेच्च ब्राह्मणान् वै यथाविधि ।

एवं विधिना मुक्तस्य वृषभस्य धारणादिनिषेधमाह पारस्करः ।

विधारयेन्न तं कश्चिन्न च कश्चिन्न वाहयेत् ।
न दोहयेच्च तां धेनुं न च कश्चन बन्धयेत् ॥

ब्रह्मपुराणे ।

नासौ वाह्यो न तत्क्षीरं पातव्यं केनचित् क्वचित् ।

शिवधर्मोत्तरे ।

ये वृषाः साधुभिर्मुक्ताः त्रिशूलाङ्काः शिवप्रियाः ।
तान् वाहयन्ति ये मूढाः पापाचारा नराधमाः ॥
ते महाप्रलयं यावदशेषनरकादिषु ।
पच्यन्ते विविधैर्घोरैः पत्नी-पुत्रादिसंयुताः ॥
राज्ञश्च विषये यस्य जना यत्र नराधमाः ।
वाहयन्ति वृषं पापाः पापन्तस्यापि तत्समं ।
तस्मान्निवारयेद्राजा वाह्यमानांश्च तैर्वृषान् ॥

देवीपुराणे ।

एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितं ।
यमुद्दिश्योत्सृजेदत्सं स लभेताविचारणात् ॥

एवं वृषोत्सर्गविधिं नरोयः
करोति भक्त्या निजपूर्वजानां ।
उद्धृत्य तान् दुर्गतिपङ्कमग्नान्
स्वयं सलोकं समुपैति शम्भोः ॥

भविष्योत्तरे ।

स्वेच्छाविहारिणं दृप्तं गर्जन्तं सुखदं गवां ।
ककुद्मिनं यूथपतिं धन्या मुञ्चन्ति गोवृषं ।
वृषोत्सृष्टः पुनात्येव दशातीतान् दशापरान् ॥
यत्किञ्चित् स्पृशते तोयं समुत्तीर्य्य जलान्महीं ।
वृषोत्सृष्टं पितॄणान्तदक्षय्यं समुदाहृतं ॥
येन येन स्पृशेत्तोयं लाङ्गूलादिभिरन्ततः ।
सर्वन्तदक्षयन्तस्य भवेन्नैवात्र संशयः ॥
शृङ्गैः खुरैर्वा यद्भूमिमुल्लिखत्यनिशं वृषः ।
मधुकुल्याः पितुस्तस्य अक्षय्यास्ता भवन्ति वै ॥
सहस्रनल्वमात्रेण तड़ागेन यथा श्रुतिः ।
पितॄणां या भवेत् तृप्तिस्तां वृषस्त्वतिरिच्यते ॥
योददादि तिलैर्मिश्रांस्तिलान् वा श्राद्धकर्मणि ।
मधु वा नीलखण्डं वा अक्षय्यं सर्वमेव तत् ॥

'नीलखण्डः' नीलवृषः।

यद्भूमिमालिखति शृङ्ग-खुरैः स दृप्तो-
यद्भां करोति प्रतिमल्लवृषान्निरीक्ष्य ।
कालं समस्तमपि तत्सविवाहकर्तुः
सन्तोषमावहति शक्रसभागतस्य ॥

इति वृषोत्सर्गः।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-
पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-
खण्डे श्राद्धकल्पे प्रेततृप्तिकराणां तिलोदकश्राद्धा-
दीनां प्रयोगोनाम विंशोऽध्यायः ॥ ० ॥

# अथैकविंशोऽध्यायः ।



येनादाववनी वनीयकथाशून्यावदानादिमत्-
श्रीमद्दक्षिणपाणिपल्लवभृता सम्यक्कृता सम्पदा ।
होमस्तोमपरम्पराभिरनु सा द्यौरप्यनान्तीकृता
सोऽयं वक्ति सपिण्डनाविधिमथो हेमाद्रिसूरिः कृती ॥

अथ सपिण्डीकरणप्रयोगः ।

तत्र संवत्सरपर्य्यन्तं प्रेतार्थानि कर्माण्यभिधायोक्तं मार्कण्डेय-पुराणे ।

अथ संवत्सरे पूर्णे यथावत्क्रियते नरैः ।
सपिण्डीकरणं श्राद्धं तत्रापि विधिरुच्यते ॥

अत्र 'संवत्सरे पूर्णे' इत्ययमौत्सर्गिकः कालः, कारणान्तरप्रयुक्ता-स्त्वसम्पूर्णेऽपि संवत्सरे यस्यापवादिकाः कालास्ते सर्वेऽपि पूर्वमेव कालप्रकरणे प्रतिपादिताः। सपिण्डीकरणलक्षणन्तु श्राद्धभेदप्रकरणे प्रतिपादितम् । तस्य चैतावत् संक्षेपतो रूपं । अचिरप्रमीतप्रेतीभूत-मनुष्योद्देशेनैकोद्दिष्टविधिना पितृत्वप्राप्ततत्पूर्वमनुष्योद्देशेन पार्वणवि-धिना युगपदेकप्रयोगात्मकत्वेन ब्राह्मणभोजनेऽनुष्ठीयमाने प्रेतार्घ्यो-दकं पित्रर्घ्यपात्रेषु प्रेतपिण्डश्च पितृपिण्डेषु विभज्य प्रक्षिप्यत इति सपिण्डीकरणस्य विधिरुच्यत इति प्रतिज्ञायास्मिन्नेव पुराणेऽभि-हितम् ।

प्रेतोद्देशेन कर्त्तव्यं श्राद्धं तत्र समाहितैः ।
तत्रापि दैवरहितमेकार्घ्यैकपवित्रकम् ॥
नैवाग्नौकरणं तत्र तत्रावाहनवर्जितम् ।
अपसव्यञ्च तत्रापि भोजयेदयुजोद्विजान् ॥
पितृत्रयार्थमपि च भोजयेच्च तथापरान् ।
विशेषस्तत्र चान्योऽस्ति प्रतिमासक्रियाधिकः ॥
तं कथ्यमानमेकाग्र्याद्भवतोमे निशामय ।
तिल-गन्धोदकैर्युक्तं तत्र पात्रचतुष्टयम् ॥
कुर्य्यात् पितृणां त्रितयमेकं प्रेतस्य पुत्रक ।
पात्रत्रये प्रेतपात्रमथार्घ्यञ्च प्रसेचयेत् ॥
ये समाना इति जपन् पूर्व्ववच्छेषमाचरेत् ।
स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम् ॥
सपिण्डीकरणं तासां पुत्राभावे न विद्यते ।
एकोद्दिष्टं तु वै तासां कर्त्तव्यं बन्धुभिः सदा ॥

भविष्यत्पुराणे ।

पात्राणि कृत्वा चत्वारि पूरयित्वा तिलाम्बुभिः ।
त्रिष्वेकं पितृपात्रेषु प्रसिञ्चेन्नाम-गोत्रतः ॥

याज्ञवल्क्यः ।

गन्धोदक-तिलैर्युक्तं कुर्य्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
ये समाना इति द्वाभ्यां शेषं पूर्व्ववदाचरेत् ।
एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥

गन्धैश्चन्दनादिभिरुदकेन तिलैश्च युक्तं पात्रचतुष्टयं, प्रेतादिभ्योऽर्घ्यपात्रं कुर्य्यात्। तत्र प्रेतायार्घ्यं दत्त्वा शेषं तत्पात्रस्थं जलं पितामहादिपात्रेषु ये समानाइति द्वाभ्यां मन्त्राभ्यां यथाक्रमं पितृदैवत्याभ्यां प्रसिञ्चेत्। शेषन्तु कर्म ब्राह्मणनिमन्त्रणादिपार्वणवदाचरेत्। एतदुक्तप्रकारं पितामहदैवत्यं पार्वणं प्रेतदैवत्यं चैकोद्दिष्टश्राद्धं सपिण्डीकरणसंज्ञकं वेदितव्यं। स्त्रिया अपि चैतत्कार्य्यं न पुनः पुरुषस्यैव।

चतुर्विंशतिमते।

सपिण्डीकरणश्राब्दे सम्पूर्णेऽभ्युदयेऽपि वा।
द्वादशाहे तु केषाञ्चिन्मतं वैकादशे तथा॥
पूर्वं कृत्वा नवं प्रेतमुत्तरान् प्रपितामहान्।
चतुर्भिः पितृभिर्युक्तं पार्वणन्तु विधीयते॥
चत्वारि चार्घ्यपात्राणि अर्च्चयेत्पूर्ववच्छुचिः।
प्रेतपात्रं पितृणान्तु पात्रेषु निनयेद्बुधः॥
मधुवातात्यृचं जप्त्वा संगच्छध्वमिति त्यृचं।
ये समाना इति द्वाभ्यां केचिदिच्छन्ति सूरयः।
एवं पिण्डेषु कर्त्तव्यं परमन्तु विसर्जयेत्॥

आश्वलायनगृह्यपरिशिष्टे।

अथ सपिण्डीकरणं चत्वार्य्युदपात्राण्येकं प्रेतस्य त्रीणीतरेषां। प्रथमं पात्रं त्रिषु पात्रेषु नियोजयेत्। समानीव आकूतानीत्येवं प्रथमं पिण्डेषु नियोजयेत्। मधुमतीभिः सङ्गच्छध्वमिति द्वाभ्यामेवं चतुर्थोऽनुज्ञापितो भवतीति। नचात्र दैवं भोजयेत्, प्रागेव दैवेऽर्घ्यमन्नाद्यञ्च

दत्त्वा गन्ध-माल्यैः पात्रमर्चयित्वा कृतशेषं पितृभ्यः पाणिषु दद्यात् ।

कात्यायनः ।

ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य पात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेतेन पिण्डोव्याख्यातः ।

कूर्मपुराणे ।

सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः ।
कुर्य्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥
प्रेतार्घ्यं पितृपात्रेषु पात्रमासेचयेत्ततः ।
ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ॥
सपिण्डीकरणश्राद्धं देवपूर्वं विधीयते ।
पितॄनावाहयेत्तत्र पुनः प्रेतञ्च निर्दिशेत् ॥

वैजवापः ।

अथ सपिण्डीकरणं संवत्सरमेकं पिण्डमनुद्दिश्य समाप्ते संवत्सरे चत्वार्य्युदपात्राणि प्रयुनक्ति तत्रैकं प्रेताय त्रीणि पितृभ्यस्तत् प्रेतपात्रं पितृपात्रेष्वासिञ्चति ये समाना इति द्वाभ्यामेवं पिण्डोथाभिमृशत्येव वोऽनुगतः प्रेतः पितरस्तं दधामि वः । शिवमस्त्विति शेषाणां जायतां चिरजीविता । समानीव आकूतानि समानाहृदयानि वः । समानमस्तु वोमनो यथा वः सुसहासति ।

सङ्गच्छध्वं संवदध्वं संवोमनांसि जानतो देवा भागं यथा पूर्वे सञ्जानाना उपासते इत्यभिशस्त-पतित-भ्रूणहननस्त्री वातिचारिणी नातिदिशेत् ।

'अतिदेशः' पितृभिः सह संसर्जनम्।

आह हारीतः।

समाप्तेऽब्दे पशुश्राद्धं विधिवत्प्रतिपादयेत्।
चतुरोनिर्वपेत् पिण्डान् प्रथमं तेषु सम्भयेत्॥
वपां पशुवपाञ्चैव ह्यवदानानि यानि च।
कृत्वा तानि विधानेन शेषं पिण्डात् समावपेत्॥
ततः प्रभृति वै प्रेतः पितृसामान्यमाप्नुयात्।
विदते पितृलोकञ्च ततः श्राद्धं प्रवर्त्तते॥
विधिना च नियुक्तस्य यावल्लोमानि वै पशोः।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते॥

आह विष्णुः।

संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहाय तत्प्रपितामहाय च ब्राह्मणान् दैवपूर्वान् भोजयेद्वाग्नौकरणमावाहनं पाद्यं च कुर्य्यात्। संसृजन्तु त्वा पृथिवी समानीव इति प्रेतपात्रं पात्रत्रये योजयेत्, उच्छिष्टसन्निधौ पिण्डचतुष्टयं कुर्य्यात्, प्रेतपिण्डं पात्र-पाद्योदकवत् पिण्डत्रये निदध्यात् कर्षूत्रयसन्निकर्षेऽप्येवं। काठकगृह्ये चतुर्थं पिण्ड-मुत्सृज्य त्रेधकृत्वा पिण्डेषु निदध्यात्संसृजन्तु त्वा पृथिवी वायुरग्निः प्रजापतिः संसृजध्वं पूर्वेभिः पितृभिः सह समानाः संवो मनांसीत्ये-वमुदकमिति।

ब्रह्मपुराणे।

चतुर्भ्यश्चार्घ्यपात्रेभ्य एकं वामेन पाणिना।
गृहीत्वा दक्षिणेनैव पाणिना च तिलोदकं॥

संसृजतु त्वा पृथिवी ये समाना इति स्मरन् ।
प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत् ॥
ततः पितामहादिभ्यस्तन्मन्त्रैश्च पृथक् पृथक् ।
ये समाना इति द्वाभ्यां तज्जलन्तु समर्पयेत् ॥
अर्घ्यान्तेनैव विधिना प्रेतपात्राच्च पूर्ववत् ।
तेभ्यश्चार्घ्यं निवेद्यैव पश्चाच्च स्वयमाचमेत् ॥
अथ तेनैव विधिना दर्भमूलेऽवनेजनं ।
पितुर्दत्त्वा तु पिण्डन्तु दद्यात्तत्या तु पूर्ववत् ॥
दत्त्वा पिण्डमथाष्टाङ्गं ध्यात्वा तन्त्रम्यमीश्वरं(१) ।
सुवर्णरूप्यदर्भैस्तु तस्मिन् पिण्डं ततस्त्रिधा ॥
कृत्वा पितामहादिभ्यः पितृभ्यः प्रेतमर्पयेत् ।
संसृज त्वानुपृथिवी वायुरग्निः प्रजापतिः ॥
एतन्मन्त्रं जपेद्भक्त्या समानीवन्तमेव च(२) ।
ये समाना इति द्वाभ्यां पितृभ्यः प्रेतमर्पयेत् ॥
सुवर्णुलांस्ततस्तांस्त्रीन् पिण्डान् कृत्वा प्रपूजयेत् ।
अर्घ्य-पुष्पैस्तथा धूपैर्दीप-माल्यानुलेपनैः ।
मुख्यन्तु पितरङ्कृत्वा मुनयश्च यथाक्रमं ॥

अत्र कश्चिन्मनुभाष्यकार आह ।

यद्यपि प्रेताय ब्राह्मणान् भोजयेत्तत्पित्रे तत्पितामहाय च

(१) तच्च सुभास्वरमिति ख० ।

(२) पाठोऽयमादर्शपुस्तकानुसारेण मुद्रितः, परन्त्वयं न समीचीनो विभाति ।

तत्प्रपितामहाय चेति स्मर्य्यते, तथापि पृथक्शब्दाभावात्तद्दलानुग्रहाच्च प्रेतोऽपि पितामहाद्यर्थेष्वेव त्रिषु ब्राह्मणेषु निवेश्यते। यथामावास्या-दिश्राद्धेषु कदाचिदेकस्मिन् ब्राह्मणे पित्रादयस्त्रयोऽपि भोज्यन्ते एव मत्रापि पितामहाद्यर्थेषु त्रिष्वपि ब्राह्मणेषु प्रेतोऽपि निवेश्यत इति।

अस्ति च स्मृतौ पुनःशब्दः ।

सपिण्डीकरणं श्राद्धं देवपूर्वं निवेदयेत्।

पितॄनावाहयेत्तत्र पुनः प्रेतं विनिर्दिशेत् ॥

स एव पुनःशब्दस्तदोपपद्यते यदा तेष्वेव त्रिषु ब्राह्मणेषु प्रेतोऽपि निवेश्यते नापि पृथगिति । एवं च सति सर्वतस्तस्य संसर्गः कृतो भवति । संसर्जनार्थं हीदं कर्म क्रियते । प्रेतस्यापि तेष्वेवाहूत-त्वात् प्रेतार्थमपि तद्भोजनं भवति, पित्र्ये अयुग्मान् भोजयेदिति च यत् स्मर्य्यते तदप्येवमनुगृहीतं भवति प्रेताय पृथग्ब्राह्मणकल्पनायां चतुरादिसङ्ख्येकेषु ब्राह्मणेषु तद्विरुध्येत ।

किञ्च ।

प्रेतपात्रं पितृपात्रेष्वासिञ्चत्यर्घ्यार्थमित्यपि न सङ्गच्छेत तथा हि यदि प्रेतार्घ्यदानात् पूर्वमेवासेचनं क्रियते तदा तत्पात्रस्य रिक्तीभा-वात् कुतः पात्रात् प्रेतस्यार्घ्यदानं भवेत्। न चासेचितात् पितृपा-त्रादिति वाच्यं । न ह्यन्यार्थमुपकल्पितेनान्यस्यार्घ्यदानं युज्यते । पितामहाद्यर्थं हि तत्कल्पितं न पितुः ।

अथ प्रेतार्घ्यदानानन्तरमासेचनं क्रियते तदा कृतेऽर्घ्यदाने न तदर्घ्यदानार्थादासेचनं स्यात्, उक्तेन तु प्रकारेण न कश्चिद्विरोधः । तदेतदयुक्तं । यतः प्रेताय ब्राह्मणान् भोजयेदित्यादिना स्मृतावेकैकं

पितरमुद्दिश्यैकैकं ब्राह्मणं भोजयेदित्युक्तं । तत्र प्रतिपुरुषनिर्देशात् पृथक्शब्दापेक्षैव कर्त्तुं न युज्यते ।

अथास्ति पृथक्शब्देन भवतामतीव प्रयोजनन्तर्हि शृणवन्तु स्मृतिपुराणज्ञानां वचनं । तत्राहतुरुशनः-सुमन्तू ।

सपिण्डीकरणे विप्रान् भोजयेत्पार्वणे यथा ।
पृथक्प्रकल्प्यं प्रेतार्थमेकोद्दिष्टं विधानतः ॥
सपिण्डीकरणे वीर कुर्याच्छ्राद्धद्वयं नृप ।
एकोद्दिष्टं पार्वणञ्च इत्याह भगवान् शिवः ॥

ननु नैवं सति पुनःशब्द उपपन्नो भवति । नैवं । पुनःशब्दादयमर्थोऽवगम्यते पितॄणामावाहनङ्कृत्वा पश्चात् प्रेतस्य कुर्यादिति । न चैवंविधं क्वचिदपि वाक्यमस्ति तेष्वेव ब्राह्मणेषु प्रेतस्यावाहयितव्य इति । नन्वेवं सति महत्वानुग्रहोन स्यात् हन्त तर्हि महत्वमनुगृह्णतां सर्व्वदैक एव सर्वार्थमपि भोजयितव्यो भवेत् । न चैतदुपपद्यते, नत्वेवैकं सर्वेषां पिण्डैर्व्याख्यातमिति शौनकवचनात् । यदप्येकैकमपि विद्वांसन्दैवे पित्र्ये च भोजयेदिति मनुवचनन्तस्यापि सपिण्डीकरणविषयत्वं वक्तुमशक्यं यतोयत्नैकस्मा एव दीयते तदेकोद्दिष्टमभिधीयते, त्रिभ्यश्च यत्र दीयते तच्च पार्वणमिति । यदा तु युगपदेकस्मिन्नेव काले पार्वणैकोद्दिष्टे स्यातान्तदा सपिण्डीकरणमिति तदेतदेकब्राह्मणपक्षेऽवश्यं विनश्येत् पृथगेकोद्दिष्टाभावात् । अतो यथा ब्राह्मणभेदे पार्वणसाहित्यमेवमत्रापि वाच्यं ।

यच्चोक्तं पितामहादिविप्रेष्वेव प्रेतेऽप्याहूयमाने पित्र्ये अयुग्मानित्यस्यानुग्रहः स्यादिति । तत्रैतयोः पार्वणैकोद्दिष्टयोर्व्विभिन्नत्वात्

मिलितयोस्तयोश्चतुर्भिरपि द्विजैः सम्पन्नैरेकैकस्मिन्नयुग्मत्वानपा-
याल् पचान्तरेऽप्यनुग्रहोऽस्त्येव । यदपि यदि प्रेतार्घ्यदानात्पूर्वमा-
सेचनमित्यादिना विकल्पोक्तं तदपि न किञ्चित् अर्घ्यदानायैव हि न
निःशेषीकृत्य प्रसिच्यते । ततश्चार्घ्यदानमासेचनं चेत्युभयमपि स्यादेव
न कृत्स्नेनार्घ्योदकेन सेचनं कर्त्तव्यमित्येवंविधं स्मरणमस्ति अतः पित्र्ये-
ष्वेव विप्रेषु प्रेतस्यावाहनं कर्त्तव्यमित्यनुपपन्नं । अपरिग्रहीतश्चायं
पक्षः शिष्टैः। अतः प्रेतार्थं पृथक् पितामहाद्यर्थं च पृथक् ब्राह्मणान्
परिकल्प्य सपिण्डीकरणं कार्य्यमिति स्थितं । इह केचिद्याज्ञवल्क्य-
व्याख्यातारः पितृपात्रेषु प्रेतपात्रं प्रसिञ्चयेदित्यत्र प्रेतशब्दमेवं व्याच-
क्षते, प्रकर्षेण इतोगतः पिण्डदानादेः सकाशात् प्रच्युत इति
चिरप्रमीतो वृद्धप्रपितामहः प्रेतशब्देनोच्यत इति । अतस्तदीय-
मर्घ्यपात्रं पित्रर्घ्यपात्रेषु प्रसेचनीयं तदीयश्च पिण्डः पिण्डेषु संसर्जनीय
इति। यदि त्वचिरमृतः प्रेतशब्देनाभिधीयते तदा तदर्घ्यपात्रोदके
पितृपात्रेषु प्रसिक्ते सति तत्पात्ररिक्तीभावात् प्रेतस्यार्घ्यदानं न स्यात्।
यदि तु चिरमृतः प्रेतशब्देनाभिधीयते तदा न कश्चिद्दोषः, तस्य
नीरस्यार्घ्यदानाभावात्। प्रयुक्तस्य प्रेतेभ्यो ददातीत्यादिषु प्रमीतमात्रे
प्रेतशब्दः । अतोमृतमात्रवाचिनि प्रेतशब्दे यत्रायमुपपन्नो भवति स
एवात्र ग्रहीतुं युज्यते ।

काठकगृह्यकृता च स्फुटोक्त्यैव वृद्धप्रपितामहपिण्डान्तरेषु संसर्ज-
नमुक्तं ।

तद्यथा ।

चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु निदध्यादिति ।

अत एव वृद्धशातातपः ।

निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः ।

ये समाना इति द्वाभ्यामाद्यन्तु विभजेत् त्रिधा ॥

आद्यशब्दस्याचापि पुरुषपिण्डाभिप्रायेण । कथमिति चेत्, काठकगृह्यवाक्यानुसारात् । न च प्रमीतपिण्डस्याचान्तिमत्वात्तदभिप्रायेण त्वाद्यशब्दानुपपत्तिरेव । यदि वा चिरमृतः प्रेतशब्देनोच्येत तदा "यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे नियोजयेत् । स तु पापं समाप्नोति पितृहा चोपजायते" ॥ इत्येतन्नोपपद्येत, सपिण्डीकरणानन्तरं तस्य प्रत्यब्दमेकोद्दिष्टस्य विहितत्वात्, चिरमृते तु वृद्धप्रपितामहे प्रेतशब्दाभिधेये सपिण्डीकरणानन्तरं तस्य पृथक्प्रदानाभावादेव निषेधोऽवकल्प्यते। तस्माद्वृद्धप्रपितामहार्घ्यस्यार्घ्येषु पिण्डस्य पिण्डेषु संसर्जनं कार्य्यमिति तदेतदयुक्तं एवं हि सति वृद्धप्रपितामहार्घ्यपिण्डयोरन्यैर्वृद्धभिरर्घ्य-पिण्डैः सह सम्पर्कस्यापाद्यमानत्वात्तस्यैव सपिण्डीकरणं स्यात् । न त्वचिरोपरतस्य प्रेतस्य । अतोनूतनप्रमीतस्यैवार्घ्य-पिण्डयोरन्येषु संसर्जनं कार्य्यमित्येव युक्तं। यत्तूक्तं एवं क्रियमाणे नूतनप्रमीतस्यार्घ्यदानं न स्यादिति । तन्न । पितृपात्रप्रसिक्तावशिष्टेनोदकेन तदर्घ्यदानसिद्धेः । न हि निःशेषं प्रसेचनीयमिति किञ्चिद्वचनमस्ति । यदपि प्रकर्षेणेतः प्रेत इत्यनया व्युत्पत्त्या वृद्धप्रपितामहः प्रेतशब्देनोच्यत इत्युक्तं तदप्यनालोच्यैव, यतो याज्ञवल्क्येन "पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयमित्याशौचप्रकरणे प्रतिपाद्य सम्प्रति पुनरभिहितं" प्रेतपात्रं प्रसेचयेदिति । अतोनूतनप्रमीत एव प्रकृतत्वात् बुद्धौ विपरिवर्त्तमानः प्रेतशब्देना-

भिधातुं युज्यते नाप्रकृतत्वात् स्थविरतरः। यदि चात्र वृद्धप्रपितामहः प्रेतशब्देनाभिधीयते तदा "प्रेतत्वात् प्रतिमुच्येत सपिण्डीकरणे कृते। पितृत्वं लभते मर्त्त्यः प्रतिसंवत्सरं ततः। मृताहे तस्य कर्त्तव्यं श्राद्धं सम्यक्समाहितैः"॥ इत्यादिना प्रेतत्वविमुक्तिरुच्यमाना तावन्न सङ्गच्छेत। न हि तदा वृद्धप्रपितामहस्य प्रेतत्वमपैति, प्रकर्षेण न वा प्रमीतत्वं निवर्त्तते, नापि प्रेतशब्दवाच्यावस्थाविशेषनिवृत्त्या पितृसंज्ञा स्यादवस्थाविशेषस्तस्य तदोत्पद्यते, पूर्वमेव तस्य पितृत्वसम्पत्तेः। न च प्रतिसंवत्सरं विधीयमानं श्राद्धमपि तस्य युज्यते। न चतुर्थं पिण्डोगच्छति "त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमोनोपपद्येत"॥ इत्यादिभिस्तन्निषेधात्। गार्ग्येण च व्यक्ततरमेवाभिनवप्रमीतः प्रेतशब्देणाभिहितः "समान्ते पितृभिः प्रेतं योजयेत् पितरं सुतः। तदादि पार्वणं श्राद्धं मृताहन्यपि नान्यथा"॥ यदा तु "तदादि पार्वणं श्राद्धमित्यनेनोक्तं तदाभिनवप्रमीत एवात्र प्रेतशब्देनावगन्तुं योग्यो न वृद्धप्रपितामहः। न हि तदादि पार्वणं श्राद्धं कर्तुं युज्यते, "न परेभ्यो नाधिकारादिति निषेधात् आचारविरोधाच्च। किञ्च वृद्धप्रपितामहवचने प्रेतशब्दस्य प्रेताय ब्राह्मणान् भोजयेत्तत्पित्रे तत्पितामहाय तत्प्रपितामहाय चेति विष्णुवचनात् वृद्धप्रपितामहपित्राद्युद्देशेन ब्राह्मणभोजनं स्यात्। न च तदुपपन्नमित्युक्तं। यदप्युक्तं प्रेतेभ्योददातीति प्रमीतमात्रे प्रेतशब्दोदृश्यत इति वृद्धप्रपितामहोऽपि प्रेतशब्देनाभिधातुं शक्यत इति तदपि न। तत्रापि प्रदानयोग्यस्यैव तेन शब्देनाभिधानं। न च तदयोग्यस्य वृद्धप्रपितामहस्यापि। यत्तु चतुर्थपिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु

निदध्यादित्युक्तं तदप्यसत्पक्ष एव घटते, न युग्मत्पक्षे। चतुःसङ्ख्यापूरको हि चतुर्थं इत्युच्यते। तथाविधस्य न चातीतस्यैव पिण्डो भवति। यतः "श्राद्धद्वयमुपक्रम्य कुर्वीत सहपिण्डतां। तयोस्त्रिपुरुषं पूर्वमेकोद्दिष्टं ततःपरमिति॥ पुराणे नवप्रमीतार्थस्यैकोद्दिष्टस्य पार्वणोत्तरकालमनुष्ठाने विहिते तत्पिण्डस्य विहितत्वेन चतुःसङ्ख्यापूरकत्वात्।

कठपरिशिष्टे चोक्तं।

दत्त्वा पिण्डान् पितृभ्योऽथ पश्चात्प्रेताय धर्मतः।
तन्तु पिण्डं त्रिधा कृत्वा आनुपूर्व्या तु मन्त्रतः।
निदध्यात् त्रिषु पिण्डेषु एष संसर्जने विधिरिति॥

यदि च "आद्यन्तु विभजेत् त्रिधेत्यत्रादिपुरुषाभिप्रायेणाद्यशब्द इत्यभिधीयते। ततश्च "आद्यः पिता तत्पिता यस्तस्यापि यः पितेत्येवमादावाद्यशब्दस्य प्रथमाभिधानादव्यवस्थादोषोभवेत्।

किञ्च। चतुर्थं पिण्डमुत्सृज्य त्रेधं कृत्वा पिण्डेषु निदध्यादिति एतस्माद्वचनाच्चतुर्थस्योत्सर्जनादनन्तरमेव विभजनं पिण्डेषु संसर्जनं च प्रतीयते। तच्च वृद्धप्रपितामहपिण्डविषयत्वे न घटते। तथाहि पूर्वमनुष्ठीयमानपितामहादिदेवत्यपार्वणपदार्थीभूत-वृद्धप्रपितामहपिण्डदानस्य तदनन्तरमनुष्ठीयमाननवप्रमीतार्थैकोद्दिष्टपदार्थीभूतपिण्डप्रदानेन व्यवधाने विभाग-संसर्गयोरपि व्यवधानात्। नवप्रमीतपिण्डविषयत्वे तु पिण्डान्तरप्रदानव्यवधानाभावात् समनन्तरमेव प्रतिपाद्यमानौ विभाग-संसर्गौ उपपन्नतरौ भवतः। नचाद्यन्तु विभजेत् त्रिधेत्यस्य नवप्रमीतविषयत्वानुपपत्तिः, आद्यशब्देन मुख्यत्वाभिधानात्। मुख्यश्चात्र नवप्रमीतस्य पिण्डः। सपिण्डीकरणस्य नवप्रमीत-

संस्कारार्थत्वात् । अस्ति च "मुच्यन्तु पितरं क्षत्वेत्यादिकः पुराणोक्तः, "संवत्सरान्ते प्रेताय तत्पित्रे तत्पितामहायेत्यादिकः स्मृत्युक्तो नवप्रमीतपिण्डस्य पितामहादिपिण्डेयः पूर्वकालताविधिरपि तदभिप्रायेण चायशब्दस्य प्रयुक्तत्वादुक्तदोषानवकाशात् । यच्चोक्तं सपिण्डीकरणानन्तरं नवप्रमीतोद्देशेन प्रतिसंवत्सरमेकोद्दिष्टस्य विहितत्वाद् "यः सपिण्डीकृतं प्रेतमित्यादिको निषेधस्तत्र नोपपद्यत इति तदपि न, तत्रापि वैकल्पिकपार्वणविध्यर्थत्वेन औरसादिपुत्रकर्तृकसांवत्सरिकविषये व्यवस्थितत्वेन वा चतुर्दशीव्यतिरिक्तकालिकाशस्त्रहतश्राद्धविषयत्वेन वा तस्योपपत्तेः, वरं वृद्धप्रपितामहविषयत्व एवायं निषेधः नोपपद्यते । "त्रयाणामुदकङ्कार्य्यमित्यादिना सर्वात्मनैव तस्य मृताहादौ पिण्डनिषेधादपृथक्पिण्डदानस्य प्रसक्त्यभावात् पृथक्पिण्डदाननिषेधस्तत्र किमर्थो भवेत्। अस्ति च कश्चिद्यक्षभूतपिशाचादिवत्प्रेताख्यः प्राणियोनिविशेषः । अस्ति च स्मृति-पुराणप्रमाणकं सपिण्डीकरणान्तौर्द्धदेहिकक्रियानिवर्त्तनीयं नवप्रमीतस्य तद्रूपत्वं ।

तथा च ब्रह्मपुराणे ।

सपिण्डीकरणात् पूर्वं प्रेतोभवति वै मृतः ।
कृते सपिण्डीकरणे पितृत्वं प्रतिपद्यत इति ॥

अतो नवप्रमीतस्यावस्थाविशेषे रूढ्या प्रेतशब्दोवर्त्तते । वृद्धप्रपितामहे तु योगेण, योगाच्च रूढिर्बलीयसी । किञ्च यस्यैव षोडश श्राद्धानि तस्यैव सपिण्डीकरणम् ।

अत एव शातातपः ।

संवत्सरे तु विज्ञेयं सपिण्डीकरणन्त्विह ।

सपिण्डीकरणान्ता वै ज्ञेया प्रेतक्रिया बुधैरिति ॥

अनेन च यो मासिकादौ प्रेतशब्दाभिधेयः स एव सपिण्डीकरणेऽपीति गम्यते, अतो नवप्रमीतस्य पित्रादेरर्घ्यपात्रं पितामहाद्यर्घ्यपात्रेषु, पिण्डेषु पिण्डः संयोजनीय इति स्थितम् । पितामहे म्रियमाणे यदि पिता प्रमीतः स्यात् पितामहं परित्यज्य प्रपितामहात् प्रभृति पुरुषत्रयेण सह सपिण्डीकरणं कार्य्यम् ।

तथाच ब्रह्मपुराणे ।

मृते पितरि यस्याथ विद्यते तु पितामहः ।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥
तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ।
न देयो जीवते पिण्डः स च यस्मान्मृतो भवेत् ॥
पिण्डस्तु जीवतो दत्ते शिरश्छेदसमो भवेत् ॥

अयञ्च जीवत्पितामहकस्य पितृसपिण्डीकरणप्रकारो जीवत्पितृकाद्यधिकारिकपिण्डं पितृयज्ञप्रकाराणामुपलक्षणार्थं इत्यनुसन्धेयम् ।

अत्र पितामहादिभिः सह सपिण्डीकरणे कृतेऽपि पितामहोपरमे सति तदौर्द्ध्वदेहिके सपिण्डीकरणान्ते पुनः पितामहेनापि सह पितुः सपिण्डीकरणं कर्त्तव्यं । अन्यथामावास्यादि-कालानुष्ठेयं श्राद्धं न निष्पद्येतेति केचित् । म्रियमाणायां पितामह्यां मातुः सपिण्डीकरणे यथोक्तः पितृसपिण्डीकरणन्याय एवानुसन्धेयः ।

तथा चास्मिन्नेव पुराणेऽभिहितम् ।

मातर्य्यथ मृतायान्तु विद्यते च पितामही ।
प्रपितामहीतः सर्वः कार्य्यस्तत्राप्ययं विधिरिति ॥

अथ स्त्रीसपिण्डीकरणेऽन्योपि विशेष उच्यते।

तत्र तावद्भविष्यत्पुराणे शतानीकः प्रश्नभङ्ग्या सन्देहमुपन्यस्यति।

मातुः सपिण्डीकरणं कथं कार्य्यम्भवेत् सुतैः।

मातामहेन संयोज्या किं वा पतिकुलन्नयेत्॥

किं मातामहादिभिः संयोज्या सपिण्डनीया किम्वा पतिकुलेन सहेत्यस्यार्थः।

अत्र निर्णयं वर्णयिष्यन्नाह सुमन्तुः।

अहोवत महत्कष्टं दुर्विज्ञेयं त्वयेरितम्।

द्विभावोह्यत्र लोकानां तथापि श्रूयतां नृप॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।

ध्रुवास्चेमे नगाः सर्वे ध्रुवाः पतिकुले स्त्रियः॥

अनेन मातामहादिभिः सह सपिण्डनीयेत्यमुं पूर्वपक्षं विधाय पतिकुलेन सह संयोजनीयेति सिद्धान्तमित्यवगम्यते।

किञ्च।

मृताया अपि नार्य्याः(१) पिण्डोदकादिषु भर्तृगोत्रयोगो दृश्यते न तद्वियोगः।

तथाच हारीतः।

स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे।

स्वामिगोत्रेण कर्त्तव्यास्तस्याः पिण्डोदकक्रियाः॥

उशना आह।

एकत्वं सा गता भर्त्तुः पिण्डे गोत्रे च सूतके।

---

(१) भार्य्याया इति ग०।

तस्मादुदक-पिण्डौ तु भर्त्तृगोत्रेण निर्वपेत् ॥

वृहस्पतिः ।

चतुर्थीहोममन्त्रैस्तु मांस-मज्जास्थिभिः सह ।
एकत्वमागता भर्त्तुस्तस्मात्तद्गोत्रभागिनी ॥
पाणिग्रहणिका मन्त्राः पितृगोत्रापहारकाः ।
भर्त्तुर्गोत्रेण नारीणां देयम्पिण्डोदकन्ततः ॥

तथा ।

भर्तृगोत्रेण नाम्ना च मातुः कुर्य्यात् सपिण्डनम् ।
तूष्णीं दम्पतिपिण्डाभ्यां कुशैरन्तरयन् पितॄन् इति ॥

'अन्तरयन्' तिरोदधानः ।

आह व्यासः ।

श्वशुरस्याग्रतो यस्मात् शिरःप्रच्छादनक्रिया ।
पुत्त्रैर्दर्भेण सा कार्य्या मातुरभ्युदयार्थिभिः ॥

तदेवं पितृकुलेन सह भार्य्यायाः सपिण्डनं कर्त्तव्यमिति स्थितम् । तत्रापि केन सहेति संशयपूर्वकत्वमाह शातातपः ।

मातुः सपिण्डीकरणं कथङ्कार्य्यम्भवेत् सुतैः ।
पितामह्याः सहैवास्याः सपिण्डीकरणक्रिया ॥

पितामही-प्रपितामही-वृद्धप्रपितामहीभिः सहेत्यर्थः ।

अत्र पक्षान्तरमाह गार्ग्यः ।

पत्यैवेकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियः ।
सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः ॥

'मन्त्राः' यदेतद्धृदयं तव तदस्तु हृदयं ममेत्यादयः, 'आहुतयः'

विवाहहोमाद्यन्तर्गताः, 'व्रतानि' ब्रह्मचर्य्याचारलवणादीनि, तैरित्यर्थः।

स्मृत्यन्तरेऽपि।

मातुः सपिण्डीकरणं पत्या सार्द्धं विधीयते।

यस्मात्पतिव्रतानां वै स एव गतिरिष्यते॥

उक्तञ्च भविष्यत्पुराणे।

पुरुषस्यार्द्धदेहन्तु भार्य्या वेदेषु गीयते।

अर्द्धा हि वात्मनो ह्येष यज्जायेति ह वै नृप॥

तस्मात् पत्या सहैवास्याः सपिण्डीकरणं स्मृतं।

विवाहे चैव निर्वृत्ते चतुर्थेऽहनि रात्रिषु।

सन्धिता सा यतोमन्त्रैरस्थि-मांस-त्वगादिभिः॥

मन्त्रास्तु "प्राणैस्ते प्राणान् सन्दधाम्यस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति। तदेवं केषुचिद्वचनेषु मातुः पितामह्यादिभिः सह सपिण्डीकरणं कर्त्तव्यमित्युक्तं केषुचिच्च पत्या सहेति। तत्रैव विषयव्यवस्था भविष्यत्पुराणे।

जीवत्पिता पितामह्या मातुः कुर्य्यात्सपिण्डनं।

प्रमीतपितृकः पित्रा तत्पित्रा पुत्त्रिकासुतः॥

'तत्पित्रा' मातुः पित्रेत्यर्थः।

ब्रह्माण्डपुराणे।

मातुः सपिण्डीकरणं कार्य्यं संवत्सरे सुतैः।

पितामह्या सहैवास्याः पतिर्यदि तु जीवति॥

आह लोगाक्षिः।

पितामह्यादिभिः स्त्रीभिर्मातरन्तु सपिण्डयेत्।

पितरि म्रियमाणे तु तेनैवोपरते सति ॥

आह शातातपः ।

मृता यानुगता नाथं सा तेन सहपिण्डतां ।
अर्हति स्वर्गवासञ्च यावदाभूतसंप्लवम् ॥ इति ।

एवञ्च सति पितरि जीवति पितामह्यादिभिरेव सह सपिण्डीकरणं कार्य्यं । प्रमीते तु पितर्य्यन्वारूढायां मातरि पित्रैव सह सपिण्डीकरणं । अनन्वारूढायामपि पितामह्यादिभिर्वा सहेति व्यवस्था प्रतिपादिता भवति। यदि त्वनन्वारूढायामपि मातरि पित्रैव सह सपिण्डनं स्यात् तदान्वारूढाविषयं वचनमनर्थकं भवेत् । तस्यान्वारूढा भर्त्त्रैव सह सपिण्डनीयेति नियामकत्वेन सार्थकत्वे "प्रमीतपितृकः पित्रेतिवचनं न नियमपरं शक्यं वक्तुमित्यनियमसिद्धिः ।

यत्पुनरपरार्के जीवन्त्यां पितामह्यां पित्रैव सह मातुः सपिण्डीकरणमित्युक्तं। तन्न। एवंविधे विषये प्रपितामह्यादिभिः सह सपिण्डीकरणस्य ब्रह्मपुराणोक्तस्य दर्शितत्वात् ।

अथवास्तु पितृ-पितामह्योरुभयोर्जीवने ब्रह्मपुराणोक्तं प्रपितामह्यादिभिः सह सपिण्डीकरणं, जीवन्त्यां पितामह्यां मृते च पितरि पित्रैव सह सपिण्डनमिति व्यवस्था ।

यत्त्वाह शातातपः ।

मृते पितरि मातुस्तु न कार्य्या सहपिण्डता ।
पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् ॥ इति ।

तदत्यन्ताशक्तपुत्त्रविषयं । केषाञ्चिद् वा मतमित्यनुसन्धेयं ।

यदा तु पतिः पत्न्याः सपिण्डीकरणं कुर्य्यात्, तदा स्वकीय-मात्रादिभिरेव सहेत्याह पैठीनसिः ।

अपुत्रायां मृतायां तु पतिः कुर्य्यात्सपिण्डनं ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत् ॥

एवञ्च सति पत्युरपि स्त्रीसपिण्डीकरणाधिकारे प्रतिपादिते सति सपिण्डीकरणं स्त्रीणां पुरुषाभावे न विद्यत इति । अयं निषेधः पत्याभावसहिते पुत्राभावे वेदितव्यः ।

व्यासः ।

अपुत्रायां मृतायां तु पतिः कुर्य्यात्सपिण्डनं ।
श्वश्रुभिस्तिसृभिः सार्द्धं एवं धर्मेण युज्यते ॥

तदेवमेतावता प्रपञ्चेन पितामह्यादिभिः पित्रा वा सह भर्तृकुल एव मातुः सपिण्डीकरणं कार्य्यमित्युक्तम् । अस्ति च मातामहकुलेऽपि सपिण्डीकरणं कार्य्यमित्ययमपि पक्षः ।

आह्लापस्तम्बः ।

कोकिलस्य यथा पुत्रा अन्यसम्बन्धजीविनः ।
पुष्टास्ते स्वकुलं यान्ति एवं नारी मृता सती ॥

भविष्यत्पुराणे ।

आकाशस्थं यथा तोयं पतितं धरणीतले ।
योनिं स्वकीयां गच्छेत्तु तथा नारी मृता सती ॥
पितुर्गोत्रं समुत्सृज्य न कुर्य्याद्भर्तृगोत्रतः ।
जन्मन्येव विपत्तौ च नारीणां पैतृकं कुलं ॥
गवां शतसहस्रेषु वत्सो विन्दति मातरं ।

एवं स्त्री पैतृकं याति त्यक्त्वा पतिकुलं नृप ॥
त्यक्त्वा स्थलं यथा ह्यापो निम्नं यान्ति नराधिप ।
तथा पतिकुलं हित्वा मृता नारी स्वकं व्रजेत् ॥
पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवान् शिवः ॥

'योज्यः' सपिण्डनीयः ।

तथा च ब्रह्माण्डपुराणे ।

पितुः पितामहे यद्वत् पूर्णे संवत्सरे सुतैः ।
मातुर्मातामहे तद्वदुक्तनोक्ता सपिण्डता ॥

तदेवं पितृकुलेन सह सपिण्डनीयेति कैश्चित्प्रतिपादितं । मातामहकुलेन वेत्यपरैरिति विरोधे विषयव्यवस्थोच्यते ब्राह्म-दैवार्ष-प्राजापत्याख्यानां विवाहानामन्यतमेन परिणीतायाः पतिकुलेन सह संयोजनं तद्गोत्रेण पिण्डादिदानञ्च कर्त्तव्यं । सा ह्यनौपाधिकेन दानेन पित्रा परिणेतृस्वामिका कृतेति मृतापि न तत्कुल-गोत्रे परित्याजयितुं योग्या । गान्धर्वासुर-राक्षस-पैशाचानामन्यतमेन तु परिणीताया मातामहकुलेन सह संयोजनं तद्गोत्रेण पिण्डादिदानञ्च कर्त्तव्यं। न हि सा स्वरूच्या पित्रा निष्प्रतिद्वन्द्वं वराय दत्तेति न मातामहकुलात् तद्गोत्राच्च प्रच्यावयितुं योग्या ।

अत आह वृद्धशातातपः ।

ब्राह्मादिषु विवाहेषु या ऊढ़ा कन्यका भवेत् ।
भर्तृगोत्रेण कर्त्तव्याः तस्याः पिण्डोदकक्रियाः ।
आसुरादिषु चान्येषु पितृगोत्रेण धर्मवित् ॥

अत्र प्रकारान्तरेण व्यवस्था।

अत्राह व्यासः।

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियां।
प्रकुर्य्यात्पुत्त्रिकापुत्त्र एष धर्मः सनातनः॥
पत्या सहैकता तावत् यावत्पुत्त्रो न जायते।
पुत्त्रिकायाः सुतोत्पत्तौ पत्यैकत्वं निवर्त्तते॥

यच्चान्यद्वचनं "तत्पित्रात् पुत्त्रिकासुतः" इति तत्पूर्व्वमेव दर्शितं। अत्रापि व्यवस्थोच्यते।

येनास्य पितरो याता येन याता पितामहाः।
तेन याताः सतां मार्गाः तेन गच्छन्न दुष्यति॥

इति वचनात् यैस्तु कुलपरम्परया पितृकुलेन सह सपिण्डनं क्रियते तैस्तथा कार्य्यमन्यैस्त्वऽन्यथेति। अस्मिन्नेव विषये परस्पर-विरुद्धानि वचनानि उपन्यस्य भविष्यत्पुराणे सुमन्तुनाभिहितं।

एवं शास्त्रगतिर्भिन्ना सर्व्वकर्मसु भारत।
उदितेऽनुदिते चैव होमभेदे यथा भवेत्।
तस्मात् कुलक्रमायातमाचारञ्च चरेद्बुध इति॥

इति स्त्रीसपिण्डने विशेषः।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे सपिण्डीकरणप्रयोगो-नाम एकविंशोऽध्यायः॥ ०॥

# अथ द्वाविंशोऽध्यायः।

## अथ सांवत्सरिकश्राद्धप्रयोगः।



अथैताः सपिण्डीकरणान्ताः प्रेतक्रियाः केषाञ्चित् संवत्सरात् प्राक् नारायणबलिं अकृत्वा च न कार्य्याः।

तत्राह गौतमः।

पापकर्म्मणो न संसृजेरन् स्त्रियश्चाभिचारिणीः।

वृद्धयाज्ञवल्क्यः।

सर्पविप्रहतानाञ्च शृङ्गि-दंष्ट्रि-सरीसृपैः।
श्राद्धमेषां न कर्त्तव्यं ब्रह्मदण्डहताश्च ये॥

संवर्त्तः।

महापातकिनां चैव तथा चैवात्मघातिनां।
उदकं पिण्डदानञ्च श्राद्धं चैव तु यत्कृतं।
नोपतिष्ठति तत्सर्व्वं राक्षसैर्विप्रलुप्यते॥

स्मृत्यन्तरात्।

विद्युन्नो-नृप-विप्राम्बु-शृङ्गि-दंष्ट्राग्निघातिताः।
वृथोत्पन्न-महाक्लीव-व्रतिनो नोदभाजनाः॥

'उदभाजनाः' अर्घ्योदकसंसर्गभाजना इत्यर्थः।

तथा च।

ब्राह्मणादिहते तान्ते पतिते सङ्गवर्ज्जिते।

व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

'सङ्गवर्जितः' भिक्षुः ।

भविष्योत्तरात् ।

स्वेच्छया मरणं विप्रात् शृङ्गि-दंष्ट्रि-सरीसृपैः ।
अन्यान्त्यज-विषोद्बन्धैरात्मना चैव ताड़नैः ॥
सम्पूर्णसर्वगात्राणां विषादाकर्षतोऽथवा ।
जलाग्नि-गर्भपातैश्च निराहारादिभिस्तथा ॥
येषामेवं भवेत्ते वै कथिताः पापकर्मिणः ।
पाषण्डमाश्रितास्चैव महापातकिनस्तथा ॥
स्त्रियश्च व्यभिचारिण्य आरूढ़पतितास्तथा ।
न तेषां स्नान-संस्कारो न श्राद्धं न सपिण्डनं ।
श्राद्धानि षोड़शोक्तानि नान्यान्यपि भवन्ति हि ॥
वैतानं प्रक्षिपेत्तोये गृह्याग्निञ्च चतुष्पथे ।
पात्राणि निर्दहेदग्नौ साग्निके पापकर्मणि ॥

षड्त्रिंशन्मते ।

व्यापादयेद् य आत्मानं स्वयमग्न्युदकादिभिः ।
विहितं तस्य नाशौचं नापि कार्य्योदकक्रिया ॥
सर्प-विप्रहतानाञ्च शृङ्गि-दंष्ट्रि-सरीसृपैः ।
आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत् ॥
चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतस्तथा ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणां ॥
उदकं पिण्डदानञ्च श्राद्धञ्चैव तु यत्कृतं ।

नोपतिष्ठति तत्सर्वमन्तरिक्षे च तिष्ठति ॥
नारायणबलिः कार्य्यो लोकगर्हाभयान्नरैः ।
तस्मात्तेभ्योऽपि दातव्यमन्नमेव सदक्षिणं ॥

नारायणबलिस्तु पुरस्ताद्वक्ष्यते। 'तस्मात्' नारायणबलेरनन्तरं। तथा ।

कृत्वा चान्द्रायणं पूर्वं क्रियाः कार्य्या यथाविधि ।
नारायणबलिः कार्य्यो लोकगर्हाभयान्नरैः ॥
अन्नमिष्टं प्रियञ्चैव विप्रे दद्यात् सदक्षिणं ।
पिण्डोदकक्रियाः पश्चाद्वृषोत्सर्गादिकञ्च यत् ।
एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा ॥

योऽयमम्बुदकादिमृतानां नारायणबलिरुक्तः स तु क्रोधमदशोकादियोगेन यैरात्मघातिनस्तेषामेव न तु प्रमादतो विदितो वा ।

तथा च भविष्योत्तरे ।

अथ कश्चित्प्रमादेन म्रियतेऽम्बुदकादिभिः ।
संस्कारप्रमुखं तस्य सर्वं कुर्य्याद्यथाविधि ॥

क्वचिदेतस्यापवादमाह ।

प्रमादादिच्छया वापि न गच्छेत्सर्पतोमृतः ।

'न गच्छेत्' संस्कारादिकर्म प्रति न गच्छेत् वक्ष्यमाणप्रकारनागपूजां विना तन्नार्हतीत्यर्थः ।

षड्त्रिंशन्मते ।

अथ कश्चित्प्रमादेन म्रियतेऽम्बुदकादिभिः ।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ॥

बौधायनः।

बुद्धिपूर्व्वाकृतहन्तृणां क्रियालोपो विधीयते।
तेषामेव च संस्कर्तुर्दोषश्रुतिरुदाहृता॥
दाहयित्वा शवं तेषां शूद्रैरेव विधर्मकं।
अन्येषां पापमरणं प्राप्तानां पापकर्मणां॥
पूर्व्ववत् देहदाहोऽथ शरीरस्य प्रकल्पनं।
पालाशवृन्तैः संस्कुर्य्यात्पितृमेधविधानतः॥

आहिताग्नीनां पापमृतानां प्रतिकृतिवर्जनं मुख्यमेव शरीरं आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेत्येते न संस्कुर्वन्ति।

आह ब्रह्मगर्भः।

योऽनुष्ठातुं न शक्नोति महाव्याध्युपपीड़ितः।
सोऽग्न्युदकमहायात्राः कुर्व्वन्नामुत्र दुष्यति॥

विवस्वान्।

सर्व्वेन्द्रियविरक्तस्य वृद्धस्य कृतकर्मणः।
व्याधितस्य स्वतन्त्रीर्थे मरणं तपसोऽधिकम्॥

तथा गार्ग्योऽपि गृहस्थमेवाधिकृत्याह।

महाप्रस्थानगमनं ज्वलनाम्बुप्रवेशनम्।
भृगुप्रपतनं चैव वृथा नेच्छेत्तु जीवितुम्॥

'भृगुः' पर्वतकटकः। 'वृथा' धर्मानुष्ठानशून्यं।

मनुर्वानप्रस्थमधिकृत्याह।

अपराजितां वास्थाय व्रजेद्दिशमजिह्मगः।
आनिपाताच्छरीरस्य ब्रह्मलोके महीयते॥

'अपराजिता' पूर्व्वोत्तरा, तामा शरीरपातादकुटिलं जलमनिलं वा भक्षयन् समाहितो व्रजेत् ।

स्थित्वा महर्षिचर्य्यायां त्यक्त्वा पापमयीं तनुं ।
वीतशोकभयोविप्रो ब्रह्मभूयाय कल्पते ॥

गो-ब्राह्मणहतानान्तु विशेषः षड्त्रिंशन्मते ।

गो-ब्राह्मणहतानाञ्च पतितानां तथैव च ।
ऊर्द्ध्वं संवत्सरात् कुर्य्यात् सर्व्वमेवौर्द्ध्वदेहिकम् ॥

अथ नारायणबलिप्रयोगः ।

तत्र तावत् संस्कारादिविधिः बौधायनसूत्रे ।

अथातो नारायणबलिं व्याख्यास्यामोऽभिशस्त-पतित-सुरापात्म-त्यागिनां ब्राह्मणहतानाञ्च द्वादशवर्षाणि त्रीणि वा यत्र यत्र मरणं जातं यस्य स्यात्तत्र तत्र कुर्वीत । सहितानां पालाशानां यामे वाह्नय । पर्णसरूपाणां कृष्णाजिने पुरुषाकृतिं करोति, होतृकल्पनेन वा पितृमेधिकेन वा संस्कारं कुर्य्यात् । अङ्गप्रयोगमन्त्रानुद्धृत्य पुरुष-सूक्तस्य प्रत्यृचं मन्त्राणां स्थाने पृथक्प्रयोगो भवति इत्यपि वा तूष्णीं सर्वं क्रियेत याम्यसूक्तो न पोषणं पौरुषेणोपस्थानं समानमन्यत्तीर्थे स्नात्वा प्रेतायोदकक्रियां कृत्वा नाम गोत्रं मनसा ध्यात्वा नारायणार्थे-तत्ते उदकमिति चाभिव्याहरेदेवमेव सायं प्रातर्दशरात्रं करोति त्रिरात्रेण वा पिण्डप्रदानेऽप्यवेतत्ते पिण्ड इति विशेषः। एका-दश्यामेकोद्दिष्टं कुर्वन्ति ।

संस्कारविधिं प्रकृत्योक्तं तत्रैव ।

सर्पमृतानां नमोऽस्तु सर्पेभ्यस्तिस्र आहुतीर्हुत्वा उदके मृतानां

समुद्राय वायुनापेत्याहुतीर्हुत्वा तस्य कृत्स्नं सत्यं न विद्मः देह-संस्कारपक्षो ज्ञानमृतदेहिनामित्याहुः, सर्वेषामिति चापरे।

नारायणबलिप्रयोगस्तु षट्त्रिंशन्मते दर्शितः।

तेषां पुत्त्राश्च पौत्त्रा वा दायादाः समभिप्लुताः।
यथा श्राद्धं प्रतन्वन्ति विष्णुनामप्रतिश्रुतम ॥
तथा वः संप्रवक्ष्यामि नमस्कृत्य स्वयम्भुवे।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिं ॥

नारायणबलिः कार्य्य इति शेषः। अत्र विशेषो भविष्योत्तरे दर्शितः।

पूर्णे संवत्सरे तेषामथ कार्य्यं दयालुभिः।
एकादशीं समासाद्य शुक्लपक्षस्य वै तिथिं ॥
विष्णुं यमञ्च संपूज्य गन्धपुष्पादिभिस्तथा।
दशपिण्डान् घृताभ्यक्तान् दर्भेषु मधुसंयुतान् ॥
यज्ञोपवीती सतिलान् ध्यायन् विष्णुं यमन्तथा।
दक्षिणाभिमुखस्तूष्णीमेकैकं निर्वपेत्तु तान्।
उद्धृत्य नियतान् पिण्डांस्तोयाद्यम्भसि निक्षिपेत् ॥

एतच्च विष्णुध्यानपूर्व्वकं कर्त्तव्यमित्युक्तम् षट्त्रिंशन्मते।

विष्णुं बुद्धौ समासाद्य नद्यम्भसि ततः क्षिपेत् ॥

भविष्योत्तरे।

क्षिपंस्तान् कीर्त्तयेन्नाम विष्णोर्वै प्रेतकस्य च(१)।

---

(१) गोत्रञ्च मृतकस्य त्विति ग०।

पुनरभ्यर्चयेद्विष्णुं यमं कुसुम-चन्दनैः ॥
धूप-दीपैः सनैवेद्यैः भक्ष्य-भोज्यसमन्वितैः ।
तस्मिंश्चोपवसेदह्नि विप्रांश्चैव निमन्त्रयेत् ॥
कुल-विद्या-तपोयुक्तान् रूप-शीलसमन्वितान् ।
नव सप्ताथ वा पञ्च स्वसामर्थ्यानुसारतः ॥

बौधायनसूत्रे ।

अथातो नारायणबलिं व्याख्यास्यामः । दक्षिणायने वोत्तरायणे वा अपरपक्षस्य द्वादश्यां क्रियेत पूर्वेद्युः षट् द्वादश वा ब्राह्मणान्निमन्त्रयेत योनि-गोत्र-श्रुत-वृत्तसम्पन्नान् ।

भविष्योत्तरे ।

अपरेऽहनि सम्प्राप्ते मध्याह्ने सुसमाहितः ।
विष्णुं यमञ्च संपूज्य विप्रांस्तानुपाश्यते ॥
उदङ्मुखान् यथाज्येष्ठं पितृरूपमनुस्मरन् ।
आवाहनार्घ्यदानादीन् विष्णु-सौरिसमन्वितान् ॥
प्रेतस्थाने स्मरन् प्रेतं विष्णोर्वै नाम कीर्त्तयेत् ।
यज्ञोपवीती कुर्वीत प्रेतनाम प्रकीर्त्तयेत् ।
प्रेतं यमञ्च विष्णुञ्च स्मरन् श्राद्धं समापयेत् ॥

बौधायनसूत्रे ।

तथापरेद्युर्देवगृहे नदीतीरे अग्निमुपसमाधाय संपरिस्तीर्य्य प्रणीताभ्यः कृत्वोत्पायाग्रेणाग्निं देवतामावाहयति पुरुषसूक्तेन द्वे ऋचौ जपित्वा व्याहृतिभिर्देवतामावाहयति । अथैनं स्नापयति पुरुषसूक्तेनाथैनं गन्ध-पुष्प-धूप-दीपैरष्टाक्षरेणार्चयित्वाज्जिस्तर्पयति केशवं

तर्पयामीति द्वादशनामधेयैः परिधानप्रभृत्याग्निमुखात् कृत्वा पक्वान्नाज्जुहोति विष्णोरनुक्रमिति पुरोनुवाक्यामनूच्य परोमात्रयेति याज्यया जुहोति आवाप्याहुतीरुपजुहोति केशवाय स्वाहेत्येतैरेव नामधेयैर्गुड़-पायस-घृतमिश्रमन्नं निवेदयति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पुष्णोहस्ताभ्यां विष्णवे निवेदयामीति सप्त-व्याहृतिभिः स्वाहाकारेण जपति। व्याहृतिभिराचमनीयमथ ब्राह्मणानाहूय सदर्भोपकृतस्थानेषूपवेश्याथैतान् वस्त्र-गन्ध-पुष्प-धूप-दीप-माल्यैरभ्यर्च्यानुज्ञाप्य घृतमिश्रं हविः समिधायुच्य हस्तेन जुहोति पितृभ्यः स्वधा नमो नारायणाय स्वाहेति पितामहेभ्यः स्वधा नमो नारायणाय स्वाहा, अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमो नारायणाय स्वाहेति ब्राह्मणानन्नेन परितोषयित्वेति। वक्ष्यमाणं कुर्य्यादिति शेषः।

भविष्योत्तरे।

तृप्तान् ज्ञात्वा ततोविप्रान् तृप्तिं पृष्ट्वा यथाविधि।
अन्नेभ्यस्त्वथ सर्वेभ्यः पिण्डदानार्थमुद्धरेत्॥
पृथक्दर्भेषु पिण्डांस्तु पञ्च दद्यात्क्रमेण तु।
प्रथमं विष्णवे दद्यात् ब्रह्मणे च शिवाय च॥
सभृत्याय यमायाथ प्रेतायापि च पञ्चमं।
नाम-गोत्रं स्मरेत्तस्य विष्णुशब्दञ्च कीर्त्तयेत्॥
नमस्कारशिरस्कन्तु पञ्चमं पिण्डमुद्धरेत्।
दद्यादाचमनं पश्चात्ताम्बूलं दक्षिणान्तथा॥
एकं विप्रं श्रेष्ठतमं हिरण्येन प्रपूजयेत्।

गो-भूमि-वस्त्र-पानाद्यैः शक्त्या प्रेतं स्मरंश्च तं ।
ततस्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ।
नाम गोत्रं स्मरन् दद्याद्विष्णुः प्रीतोऽस्त्विति ब्रुवन् ॥
अनुव्रज्य द्विजान् पश्चात्तिलाम्भो दक्षिणामुखः ।
कीर्त्तयेन्नाम-गोत्रे तु भुवि प्रीतोऽस्त्विति क्षिपेत् ।
मित्र-बन्धुजनैः सार्द्धं शेषं भुञ्जीत वाग्यतः ॥

बौधायनसूत्रे ।

आचमय्य तेषां यथाशक्ति दक्षिणां ददाति। प्रदक्षिणीकृत्य शेष-मनुज्ञाप्य दक्षिणेनाग्निं प्रागग्रान् दर्भान् संस्तीर्य्य तेषु बलिं ददाति। विश्वेभ्यो देवेभ्यो नमः साध्येभ्यो देवेभ्यो नमः सर्वेभ्यो देवेभ्यो नमः सर्व्वाभ्यो देवताभ्यो नमः विष्णवे नारायणाय नमः यज्ञात्मने नमो यज्ञपुरुषाय नमः सर्वेश्वराय नमः इति स्विष्टकृत्प्रभृतिसिद्धमा धेनु-वरप्रदानात् सर्वान् पितॄन् समधिगच्छति ब्रह्मलोके महीयते ब्रह्म-लोके महीयते इत्याह भगवान् बौधायनः ।

नारायणबलिं प्रकृत्य भविष्योत्तरे ।

एवं कृते गमिष्यन्ति स्वर्लोकं पापकर्मिणः ।
सपिण्डीकरणादौ तु कृते नैवाप्नुवन्ति ते ॥

तथा ।

एवं विष्णुमते स्थित्वा यो दद्यादात्मघातिने ।
समुद्धरति तं क्षिप्रं नात्र कार्य्या विचारणा ॥

इति नारायणबलिप्रयोगः ।

अथ नागपूजाविधिः ।

भविष्योत्तरे।

प्रमादादिच्छया वापि नागाद्वा सर्पतोमृतः।
पञ्चयोरुभयोर्नागान् पञ्चमीषु प्रपूजयेत्॥
कुर्यात् पिष्टमयीं तेषां नागप्रतिकृतिं भुवि।
अर्चयेत्तां सितैः पुष्पैः सगन्धैश्चन्दनेन तु॥
प्रदद्याद्धूप-दीपन्तु तण्डुलांश्च सितान् क्षिपेत्।
आमपिष्टं तथैवान्नं क्षीरञ्च विनिवेदयत्॥
उपस्थाय वदेदेवं मुञ्च मुञ्चामुकन्त्विति।
मधुरन्नाहिने दद्यादेवमब्दं समाचरेत्॥
सौवर्णं प्रकृतीनागं ततोदद्याद्द्विजोत्तमः।
गां सवत्सान्ततोदद्यात् प्रीयतां नागराडिति॥
यथा विभागङ्कुर्वीत कर्माणि प्राकृतान्यपि।
नागाद्विमोचणार्थन्तु प्रोक्तमप्यधिकन्त्विदम्।
द्विजान् विमोचयित्वा तु सम्प्रीताः सन्तु पन्नगाः॥

इति नागपूजाविधिः।

अथ प्रोषितमृतदाहादिप्रयोगः।

तत्र षट्त्रिंशन्मते।

देशान्तरगताः केचिदद्दृष्टा ये मृताः श्रुताः।
कथन्तेषां क्रियाः कार्य्या दहनाद्याः सविस्तराः॥

अत्र कालविशेषमाह वृद्धमनुः।

प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः।
प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्॥

भविष्योत्तरे ।

पितरि प्रोषिते तस्य न वार्त्ता नैव चागमः ।
ऊर्द्धं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् ॥
कुर्यात्तस्य तु संस्कारं संस्कारविधिना ततः ।
तदादीन्येव सर्वाणि शेषकर्माणि कारयेत् ॥

अत्र प्रतिरूपकरणमस्थ्नामलाभ एव वेदितव्यम् । तत्सद्भावे तु शास्त्रान्तरोक्तो विशेषः ।

तद्यथा ।

अत्र प्रोषितमृतस्य विशेषः कथ्यते । प्राग्दाहादग्निहोत्रं होतव्यं प्राचीनावीतिना संपरिस्तरणं तस्यैवाप्रदक्षिणं पर्य्युक्षणं न कुर्याद्दक्षिणत उष्णभस्मनिरूहणं तत्राधिश्रयणं नावद्योतनासेकः दक्षिणत उद्वासनं सकृन्निधानं प्रेषरहितं सकृदुन्नयनं स्रुचः समिद्धारणं सव्यजानुनिपातनं समिदाधानं सकृत् सर्वप्रक्षेपः ततः कृष्णाजिनेऽस्थ्नां पुरुषाकृतिकरणं घृताभ्यञ्जनं ऊर्णाभिः प्रच्छादनं पूर्ववत् पात्रयोजनं सन्तापजाग्निभिर्दाहः । चतुर्थेऽह्नि सञ्चयनादि पूर्ववदिति ।

षट्त्रिंशन्मते ।

दाहस्तस्यास्थिनाशे तु सद्भिर्दर्भैः कृतस्य तु ।
उक्तं कात्यायनेनेदं प्रेताभावे मनीषिणा ॥
कुर्याद्दर्भमयम्प्रेतं कुशैस्त्रिशतषष्टिभिः ।
पलाशैर्वा समिद्भिस्तु सङ्ख्या चैवं प्रकीर्त्तिता ॥
प्रेताकारन्ततः कुर्याद्धस्तपादादिचिह्नितम् ।

अपेत इतिजप्त्वा वै दहेत विधिपूर्वकम्॥

अत्र शिरोग्रीवादिप्रेतशरीरावयवभेदेन कुशादेः सङ्ख्याविभाग-माह यज्ञपार्श्वः।

चत्वारिंशच्छिरःस्थाने ग्रीवायां च दशैव तु।
उरःस्थाने शतन्दद्यात् षष्टिञ्च जठरोदरे॥
बाह्वोः स्थाने शतन्दद्याद्विंशतिर्जानु-जङ्घयोः।
दद्याच्चत्वारि शिश्ने तु षड्दद्याद्वृषणद्वयोः।
पादाङ्गुलीषु च दश कल्पयेदस्थिसञ्चयं॥

ऊर्णाभिः प्रच्छाद्य घृतेनाभ्यज्य पूर्ववत्पात्रयोजनं कृत्वा सन्ताप-जाग्निभिरेव दहेदिति।

भविष्योत्तरे।

शिरस्यशीत्यर्द्धन्दद्याद् ग्रीवायां तु दशैव तु।
बाह्वोश्चैव शतन्दद्याद्विंशतिञ्च तथोरसि॥
उदरे विंशन्तिन्दद्यात् त्रिंशच्च कटिदेशयोः।
ऊर्वोश्चैव शतन्दद्यात् त्रिंशच्च जानु-जङ्घयोः।
पादाङ्गुलीषु च दश एषा च प्रेतकल्पना॥

अत्र कृष्णाजिने कुशैः पुरुषाकृतिं कृत्वा पलाशवृन्तनिधानं तत्रैव सङ्ख्याविभाग इति मधुशर्ममिश्राः।

भविष्योत्तरे।

गृहस्थे प्रोषिते यस्तु कश्चिच्चेत् म्रियते गृहे।
आशौचेऽपगते तत्र प्रारब्धे श्राद्धकर्म्मणि॥
प्रत्यागतश्चेत् जानाति पूर्ववृत्तं गृहे तदा।

अशौचं मृतदिनात्तत्र तद्द्रव्यादेस्तदा भवेत् ॥
अपुत्रादिना यत्प्रारब्धं श्राद्धन्तत्तेन चाखिलम्।
समापनीयन्तचापि गृही तिष्ठेत् सुदूरतः ॥

अनन्तरं यत्कर्तव्यं तदाह वृद्धमनुः।

अमृतं मृतमाकर्ण्य कृतं यस्यौर्द्ध्वदेहिकम्।
प्रायश्चित्तमसौ स्मार्त्तं कृत्वाग्नीनादधीत चेति ॥

प्रायश्चित्तमत्र जातकर्मादिविवाहान्तं पुनःसंस्करणं वेदितव्यम्।

अत एवोक्तन्तेनैव।

जीवन् यदि स आगच्छेद् घृतकुण्डे निमज्ज्य तम्।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥

तथा।

द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु।
स्नात्वोद्वहेत् ततोभार्यामन्यां वा तदभावतः ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्।
तथैन्द्राग्नेन पशुना गिरिङ्कृत्वा तु तत्र तु ॥
इष्टिमायुष्मतीङ्कुर्यादीप्सितांश्च क्रतूंस्ततः।

'आयुष्मतीमिष्टिं' आयुःकामेष्टिमित्यर्थः।

इति प्रोषितमृतदाहादिकर्मप्रयोगः।

अथ सांवत्सरं श्राद्धं ब्रूते हेमाद्रिपण्डितः।
खण्डिताशेषदोषोर्मिनिर्मलीकृतमानसः ॥

अथ सांवत्सरिकश्राद्धप्रयोगः।

तत्र कालाधिकारिदेवताः पूर्वमेव प्रतिपादिताः।

आह लोगाक्षिः।

श्राद्धं कुर्यादवश्यन्तु प्रमीतपितृकः स्वयं।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च॥

स्वयङ्ग्रहणमादरार्थं न पुनः पुत्र-शिष्यवर्गादिनिवृत्त्यर्थं। अथा-वेतन्त इति मन्त्रेण यजमानस्य पित्रे ऋत्विगादिः पिण्डान् दद्यादिति स्मृत्यन्तरेऽभिधानात्। एतच्च यजमानस्यासामर्थ्ये गुरु-तरकार्यान्तरव्यग्रत्वेन कालातिपत्तिविषये वा द्रष्टव्यम्।

जावालिः।

उपरागसहस्राणि अमावास्यायुतानि च।
अक्षयन्तु भवेच्छ्राद्धं यस्तु दद्यान्मृतेऽहनि॥

अकरणे दोषमाह कार्ष्णाजिनिः।

ऊषरे तु यथा क्षिप्तं वीजं न प्रतिरोहति।
तथा च तद्भवेत्तेषां यन्न दत्तं मृताहनि॥

तेन मृताहे अवश्यं दातव्यमित्यभिप्रायः।

ब्रह्माण्डपुराणे।

संवत्सरे केचिदेकस्मै दानन्त्रिभ्यः परे जगुः।
अतः स्मृत्यविरोधेन निर्णयं श्रोतुमर्हथ॥

'एकस्मै दानमित्यनेनं एकोद्दिष्टवत् सांवत्सरिकश्राद्धप्रयोग उक्तः। 'त्रिभ्य इत्यनेन पार्वणवदिति। एकोद्दिष्टविधायकानि तावद्वाक्यानि लिख्यन्ते। तत्राह यमः।

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतः।
एकोद्दिष्टं प्रकुर्वीत पित्रोरन्यत्र पार्वणं॥

व्यासः ।

सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते ।
तत्र तत्र त्रयं कार्य्यं वर्जयित्वा मृताहनि ॥
प्रतिसंवत्सरं यत्र मातापित्रोः प्रदीयते ।
अदैवं भोजयेच्छ्राद्धं पिण्डमेकञ्च निर्वपेत् ॥

गार्ग्यः ।

कृतेऽपि सहपिण्डत्वे गणसामान्यताङ्गते ।
प्रतिसंवत्सरं श्राद्धमेवास्यैव विधीयते ॥

लौगाक्षिरप्याह ।

सपिण्डीकरणात् पूर्वमेकोद्दिष्टं सुतः पितुः ।
ऊर्द्ध्वञ्च पार्वणं कुर्य्यात् प्रत्यब्दमितरेण तु ॥

'इतरेण'त्येकोद्दिष्टविधानेनेत्यर्थः ।

शातातप आह ।

संक्रान्त्यावुपरागे च पर्वोत्सव-महालये ।
निर्वपेत्त्रीन् सुतः पिण्डानेकमेव क्षयेऽहनि ॥

आपस्तम्बः ।

एकस्य प्रथमं श्राद्धं अर्वागब्दाच्च मासिकं ।
प्रतिसंवत्सरञ्चैव शेषन्त्रिपुरुषं विदुः ॥

यमेन त्वेकोद्दिष्टं सांवत्सरिकं विधाय तस्याकरणे दोष उक्तः ।

एकोद्दिष्टं परित्यज्य पार्वणं कुरुते यदि ।
अकृतं तद्विजानीयात् स मातृ-पितृघातकः ॥

अधुना पार्वणविधायकानि वचनानि लिख्यन्ते ।

तत्र शातातपः ।

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परं ।
तत्र पार्व्वणवच्छ्राद्धं ज्ञेयमभ्युदयार्थिना ॥
ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक्क्रिया ।
न पृथक् पिण्डदानं तु तस्मादूर्ध्वं विधीयते ।
प्रेतत्वाच्चेह निस्तीर्णाः प्राप्ताः पितृगणांस्तु ते ॥

यतश्चैवमत एव पुनराह ।

यः सपिण्डीकृतं प्रेतं पृथक् पिण्डे नियोजयेत् ।
विधिघ्नस्तेन भवति पितृहा चोपजायते ॥

पुलस्त्यः ।

एकोद्दिष्टन्तु कर्त्तव्यं यावत्पित्रोः सपिण्डनं ।
ततः सपिण्डनादूर्ध्वमेकोद्दिष्टं निवर्त्तते ॥

प्रजापतिरप्याह ।

असपिण्डीकृतान् प्रेतानेकोद्दिष्टेन वर्त्तयेत् ।
सपिण्डीकरणादूर्ध्वं त्रिभिः सामान्यमुच्यते ॥

यतश्चैवमत एव धर्मः ।

पार्व्वणं पर्व्वकाले तु तथा कामार्थसम्पदा ।
वृद्धौ वृद्धिविधानेन एकस्य सह योजनात् ॥

इति प्रतिपाद्योर्द्धञ्च सपिण्डीकरणादेकोद्दिष्टं न सम्भवतीत्याह स एव ।

सन्नीतानां सदैकस्तु वर्त्तेत न कथञ्चन ।
सह संस्कारहेतुत्वात् पृथक्त्वं नोपपद्यते ॥

एवं सपिण्डीकृतस्यैकोद्दिष्टं निराकृत्य मासिकाद्येकोद्दिष्टानु-

ष्ठानानुवादेन प्रत्यब्दं मृताहनि पार्वणमाह स एव ।

एकस्य प्रथमं श्राद्धमर्वागब्दाच्च मासिकम् ।
परं संनयनात्पित्रो मृताहन्यपि पार्वणं ॥

तथा ।

संनीतौ पितरौ येन पुत्त्रेण विधिसम्पदा ।
वृद्धावभ्युदितन्तस्य पार्वणं तदतोऽन्यथा ॥

अतो वृद्धिश्राद्धमुत्सृज्यान्यत्र सर्वदा सर्वत्र मृताहादिषु कृत-सपिण्डीकरणस्य पितुः पार्वणमेव कर्त्तव्यमिति ।

तथा ।

देवत्वपदवीं नीतः पिता वै मन्त्रसम्पदा ।
प्रेतत्वं न पुनर्याति नीयमानोऽपि पुत्त्रकैः ॥
स्वतन्त्रा देवताः सर्वाः स्वतन्त्रा च सपिण्डता ।
भूयः पृथक्तत्करणशून्यं प्रेतनिवेशनम् ॥
उत्तमां गतिमास्थाय पितृ-देवर्षयो यथा ।
नेच्छन्ति कुगतिं यद्वत्प्रेता अप्येकशः कृताः ॥

पारस्करः ।

प्रेतम्पितृषु संनीय पिण्डदानार्घ्यदानयोः ।
उद्धृत्य नरकात्प्रेतं भूयस्तत्र न पातयेत् ॥

आह शम्भुः ।

सहपिण्डक्रियायान्तु विधिना सर्वकालिकम् ।
तत्सहत्वबलीयस्त्वात् सर्वत्रैव त्रिपौरुषम् ॥

अत एव जातूकर्ण्यः ।

अत ऊर्ध्वं न कर्त्तव्यमेकोद्दिष्टं कदाचन ।
सपिण्डीकरणात्तच्च तत्प्रोक्तमिति मुद्गलैः ॥

तथा ।

ततः संवत्सरे पूर्णे सपिण्डीकरणे कृते ।
निराशाः पितरो यान्ति एकस्यावाहने कृते ॥

आवाहनश्चात्रामन्त्रकं विवक्षितम् ।

भविष्यत्पुराणे ।

राजन् संवत्सरे पूर्णे सपिण्डीकरणे कृते ।
निराशाः पितरोयान्ति एकस्यावाहने कृते ॥
एकोद्दिष्टन्तु कर्त्तव्यं यावत्पित्रोः सपिण्डनम् ।
राजन् सपिण्डनादूर्द्ध्वमेकोद्दिष्टं निवर्त्तते ॥
न पृथक् पिण्डदानन्तु तस्मादूर्ध्वं विधीयते ।
प्रेतानामिह सर्वेषां यो मन्त्रेषु नियोजितः ॥
प्रेतत्वं चैव निस्तीर्णः प्राप्तः पितृगणन्तु सः ।
च्यवते पितृलोकात्तु पृथक्पिण्डनियोजनात् ॥
परिणीता यथा योषिन्न गच्छेत्पैतृकङ्कुलम् ।
प्रेतोऽप्येवं महाराज संयुक्तः पितृभिः सदा(१) ॥
संवत्सरं भवेद्यावदेकोद्दिष्टञ्च तद्भवेत् ।
संवत्सरे व्यतीते तु त्रिभिः सामान्यमुच्यते ॥
कृतार्थास्त्विह संवृत्ताः सपिण्डीकरणे कृते ।
ते गणा पितृलोकन्तु यथाह भगवान् शिवः ॥

(१) सहेति ग०।

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरे विद्वानित्येवं विष्णुरब्रवीत् ॥

श्रुतिरपि । देवा वा असुरान् हत्वा पितृत्वं समविन्दत सर्वानवसृष्टाः[१] सहैवेति ब्रुवन् ये नः समानास्ते वः परस्तानुस्वभागं प्रतिगृह्णन्त्येवमेवाभूदिति ।

'ये नः समाना इति ये पितरोनोऽस्माकं समानाः सदृशास्तुल्याः सपिण्डीकृताः इत्यर्थः । ते देवास्ते पितरः वोयुष्माकं पश्चात् स्वभागं प्रतिगृह्णन्तीत्येवमेवाभूदिति । तेन सपिण्डीकरणादूर्द्धं यदा पितृभ्यो दातव्यं तदा पूर्वं देवेभ्योदत्त्वा पश्चात्पितृभ्य इत्यवगमात् प्रत्यब्दं मृताहनि पार्वणं श्राद्धं कर्त्तव्यमित्यध्यवसीयते, विशेषतोऽपि तत्र पार्वणविधिर्दृश्यते ।

आह जातूकर्ण्यः ।

पितुः पितृगणस्थस्य कुर्य्यात्पार्वणवत्सुतः ।
प्रत्यब्दं प्रतिमासञ्च विधिर्ज्ञेयः सनातनः ॥

'पितृगणस्थः' कृतसपिण्डीकरणः । 'सनातनः' आवश्यकः ।

शातातपः ।

सपिण्डीकरणङ्कृत्वा कुर्य्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरं विद्वान् छागलेयोदितो विधिः ॥

जमदग्निः ।

देवतारहितं श्राद्धमुद्दिष्टमफलं यतः ।
अतः श्राद्धेषु सर्वत्र मृताहन्यपि पार्वणम् ॥

भविष्यत्पुराणे ।

---

(१) सन्तोऽवसृष्ट्वा इति ख० ।

एकोद्दिष्टं प्रशंसन्ति केचिद्राजन् मृताहनि ।
केचित्तु पार्वणं राजन् प्रशंसन्ति मृताहनि ॥
कृत्वा तु पार्वणं श्राद्धमेकोद्दिष्टं न कारयेत् ।
कुर्वन्नरकमायाति विशेषाच्च मृताहनि ॥
प्रेतः प्रयोजितो वीर नियुक्तः पितृभिः सह ॥
न वर्त्तते क्षणमपि यथा मात्रा विना सुतः ॥
बालवत्स यथा मात्रा वियोज्य नरकं व्रजेत् ।
तथा प्रेतं नियोज्याशु एकोद्दिष्टेन मानवः ॥
अब्दमेकं प्रकुर्वीत एकोद्दिष्टं मृताहनि ।
ततः परन्तु संनीते पार्वणं स्यान्मृताहनि ॥
अत ऊर्द्धं न कुर्वीत एकोद्दिष्टं कदाचन ।
सपिण्डीकरणादूर्ध्वं वर्षे वर्षे मृताहनि ॥
कर्त्तव्यं पार्वणं राजन् नैकोद्दिष्टं कदाचन ।
उदकुम्भश्च दातव्यो मृताहनि सदा तथा ॥

गार्ग्य आह ।

समान्ते पितृभिः प्रेतं योजयेत् पितरं सुतः ।
तदादि पार्वणं श्राद्धं मृताहन्यपि नान्यथा ॥

श्रुतिरपि ।

मासि मास्यृतावृतौ प्रतिहेमन्त-ग्रीष्म-वर्षासु प्रतिसंवत्सरे च देवाश्च पितरश्च सहासतामिति । विश्वेदेवाः पितृपितामहादयश्च श्राद्धभोक्तुं सह तिष्ठन्तीत्यर्थः ।

सुमन्तुः ।

कर्त्तव्यं पार्वणं राजन् नैकोद्दिष्टं कदाचन ।
बहूनि अत्र वाक्यानि मुनिगीतानि वक्ष्यते ॥
अल्पेतराणि राजेन्द्र एकोद्दिष्टं प्रचक्ष्यते ।
तस्माद्वचनसामर्थ्यात् पार्वणं स्यान्मृताहनीति ॥

'वचनसामर्थ्यात्' बहुतराणां वचनानां सामर्थ्यादित्यर्थः ।

अयमेवार्थो जैमिनिनाप्युक्तः ।

विप्रतिषिद्धधर्मसमवाये भूयसां स्यात् सधर्मत्वं तदेवं वचनद्वैधे सति विषयव्यवस्था कर्त्तव्या ।

आह जाबालः ।

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ ।
स्मृतिद्वैधे तु विषयः कल्पनीयः पृथक् पृथक् ॥

तत्र तावत्पार्वणविधायकानि वाक्यान्यौरसपुत्त्रविषयाणि वेदितव्यानि ।

अत एव जमदग्निः ।

आपाद्य सहसपिण्डत्वमौरसो विधिवत्सुतः ।
कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि ॥
पुत्त्राणामौरसः पुत्रः पुत्त्रमात्रास्तथापरे ।
पितुः पितृगणस्यस्य नित्यङ्कुर्यात् स पार्वणम् ॥

औरसग्रहणं क्षेत्रजस्याप्युपलक्षणम् ।

अत एव जाबालिः ।

औरस-क्षेत्रजौ पुत्त्रौ विधिना पार्वणेन तु ।
प्रत्यब्दमितरे कुर्युः एकोद्दिष्टं सुता दश ॥

यत्तु गार्ग्यवचनम् ।

प्रमीतपितृकः श्राद्धं पर्वकाले यथाविधि ।
मृताहनि यथारुच्या वृद्धावभ्युदिता क्रिया ॥

यथारुच्या पार्वणैकोद्दिष्टयोर्मध्ये विकल्पेनैकस्यानुष्ठानमिति, तन्निरग्निकौरस-क्षेत्रज-पुत्त्रिकापुत्त्रविषयम् ।

यत आह धर्मः ।

विधिवित्तयमाम्नातं साग्नेर्नास्त्यग्निवर्जिते ।
एकोद्दिष्टविधानेन क्रिया तस्योच्यते न च ॥

असावेतत्त इति यजमानस्य पित्रे, असावेतत्त इति पितामहाय, असावेतत्त इति प्रपितामहायेत्येतद्विधिवित्तयं । एतच्च साग्नेरेव, निरग्नेस्तु एकोद्दिष्टं पार्वणं वेति विकल्पः । तथापि येषां परम्परया पार्वणमेव क्रियते तैस्तदेव कर्त्तव्यं येषामेकोद्दिष्टमेव क्रियते तैरेकोद्दिष्टमेवेति ।

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गन्तं न गच्छन्न दुष्यति ॥

इति मनुवचनात् ।

तेन निरग्निकौरस-क्षेत्रज-पुत्त्रिकापुत्त्रैर्मृताहनि पार्वणं विकल्पेन कर्त्तव्यम् । साग्निकैस्तु पार्वणमेव अन्यैस्तु दत्तकादिभिर्दशभिः पुत्त्रैरेकोद्दिष्टमेवेति स्थितं ।

उक्तञ्च भविष्यत्पुराणे ।

निरग्नेरौरसस्योक्तमेकोद्दिष्टं मृताहनि ।
प्रत्यब्दं पार्वणं साग्नेरन्येषान्तु न पार्वणम् ॥

अन्येषां दत्तकादीनां दशविधानां ।

पुलस्त्यः ।

प्रत्यब्दमेतदेकस्य कुर्य्युः श्राद्धं सुता दश ।
अनग्निमानौरसश्च कुर्य्यात् साग्निस्तु पार्वणम् ॥

ननु च ।

पर्वकालो मृताहश्च यद्येकत्र द्वयम्भवेत् ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन ॥
अमायां वाक्षयो यस्य प्रेतपक्षेऽथवा भवेत् ।
पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन ॥

इति वचनात् ।

प्रेतपक्षे प्रमीतस्य पितुः कुर्वीत पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ॥

इति वचनाच्च प्रेतपक्षामावास्याक्षयाह एव साग्नीनामौरसपुत्राणां पार्वणविधिरस्तु न सर्वत्रेति उच्यते । निरग्निकानामौरसादीनां त्रयाणां प्रेतपक्षामावास्याक्षयाहे पार्वणमेभिर्वाक्यैर्नियम्यते ।

तथाहि ।

"नैकोद्दिष्टं कदाचनेत्यादिवाक्यशेषेणैकोद्दिष्टं निषिध्य पार्वण-नियम एभिर्वाक्यैः क्रियते । एकोद्दिष्टप्राप्तिश्च निरग्निकानामेव न साग्निकानाम् । "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन इति वाक्येन तेषां पार्वणस्य नियतत्वात् । अतो निरग्निकानां पक्ष-प्राप्तं पार्वणं प्रेतपक्षामावास्याक्षयाहे नियम्यते । अत्रेदमेव कर्त्तव्यं नैकोद्दिष्टमिति ।

किञ्च ।

साग्नीनामौरसादीनां त्रयाणाममावास्याप्रेतपक्षक्षयाह एव पार्वणं नान्यत्रेति नियम्यमाने तेषां प्रेतपक्षामावास्याक्षयाहादन्यत्र क्षयाहे श्राद्धाभावप्रसङ्गः। तत्र पार्वणनियमादन्यत्रैकोद्दिष्टप्राप्तिरिति चेत्। न। "एकोद्दिष्टं सुता दशेति वाक्येन दत्तकादीनां दशविधानामेव तस्य नियमितत्वादिति। एतच्च सांवत्सरिकश्राद्धं पार्वणेतिकर्त्तव्यताकमपि पितृक्षयाहे पितृ-पितामह-प्रपितामहानां त्रयाणामेव कर्त्तव्यं न मातामहानामपि।

आह सङ्ग्रहकारः।

याज्ञवल्क्येन कालस्तु अमावास्यादिनोदितः।
अविशेषेण पित्रस्य तथा मातामहस्य च॥
युगपच्च स विज्ञेयो वचनाद्वक्ष्यमाणकात्।
कालाभेदेन तन्त्रं स्याद्देशाभेदेन चैव हि॥
तस्मात्तत्त्वविधानात्तु यौगपद्यं प्रतीयते।
अमावास्यादिकालेषु मातामहसहक्रिया[१]।
मृताहनि तु तद्भावान्न युज्येत पृथक्क्रिया[२]॥

अस्यार्थः।

"अमावास्याष्टकावृद्धिरित्यादिना याज्ञवल्क्यवचनेन पितृश्राद्धस्य मातामहश्राद्धस्य च सामान्येनामावास्यादिकाल उक्तः। स च

(१) कालैकत्वात्सहक्रियेति ग०।
(२) सहक्रियेति ख०।

युगपदनुष्ठीयमानयोः पितृश्राद्ध-मातामहश्राद्धयोरङ्गत्वेनावगन्तव्यः । "मातामहानामप्येवं तन्त्रं वा वैश्वदेविकमिति तस्मिन्नेव प्रकरणे वैश्वदेविकतन्त्रत्वाभिधानस्य युगपदनुष्ठीयमान एवोपपद्यमानत्वात् । अत एककाल एवानुष्ठीयमानत्वेनावगतयोः पैतृक-मातामहश्राद्धयोः समानतन्त्रता युज्यते । मृताहे तु प्रतिपुरुषमायुःप्रमाणभेदात् पितृ-मातामहत्रयाहभेदेन मातामहश्राद्धस्यापि पितृत्रयाहे न काल इतरन्निबन्धना समानतन्त्रता न युज्यते । नन्वनेनैव न्यायेन पितृ-पितामहत्रयाहभेदात् पितृत्रयाहे पितामहादीनां श्राद्धं न कर्त्तव्यं स्यात् । मैवं । "कुर्वीत दर्शवच्छ्राद्धमित्यतिदेशवचनात् पितामह-प्रपितामहयोरपि पितृत्रयाहे दैवतात्वं । न च वाच्यं "दर्श-वदित्यतिदेशवचनादेव "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुव-मिति वचनाच्च मातामहादीनामपि दैवतात्वमिति ।

आह व्यासः ।

दर्शवत्स्यात्त्रयोद्देशः सपिण्डीकरणे कृते ।

पारस्करः ।

पितुर्गतस्य दैवत्वं औरसस्य त्रिपौरुषम् ।
सर्व्वानेकगोत्राणामेकस्यैव मृताहनि ॥

'देवत्वं गतस्य' सपिण्डीकरणेन पितृत्वं प्राप्तस्य, 'पितुः' क्षया-हनि 'औरसस्य' पुत्त्रस्य, 'त्रिपौरुषं' त्रिदैवत्यं, श्राद्धं कर्त्तव्यम् । 'अने-कगोत्राणां' भिन्नगोत्राणां दौहित्रादीनां अनपत्यमातामहादिश्राद्ध-मेकोद्दिष्टमेवेत्यर्थः । तेन दर्शवदित्यतिदेशात्प्राप्त पाट्दैवत्य त्रिपौ-रुषमिति पुनरभिधानात् पितृत्रयाहे मातामहादीनां परिसङ्ख्या

भवति। ननु यत् त्रिपुरुषं तदौरसस्येति त्रिपौरुषोद्देशेनौरसस्य नियन्त्रितस्य चोद्देश्यविशेषणत्वेनाविवक्षितत्वान्मातामहादिपरिसङ्ख्या। नैवं। क्षयाहनि त्रिदैवत्यश्राद्धप्राप्त्यभावात्। "दर्शवत्त्वाचयोद्देश इति वचनात् सपिण्डीकरणोत्तरकालं मृताहेऽपि सामान्येन त्रिदैवत्यप्राप्तिरिति चेत्। एवं तर्ह्यनेनैव मातामहादीनां परिसङ्ख्या भविष्यति। किञ्च। "औरसस्य त्रिपौरुषमित्यत्र त्रिग्रहणस्याविवक्षिते त्वद्वाक्यमेवानर्थकं स्यात्। न हि मृताहे पौरुषमपौरुषञ्च श्राद्धमस्ति येन पौरुषमौरसस्य अपौरुषमन्येषामित्येवं व्यवस्थापनार्थं वाक्यं भवेत्। अनेनैव च न्यायेन न सपत्नीकानामुद्देशः कार्य्यः। न च "स्वेन भर्त्रा समं श्राद्धं माता भुङ्क्ते इत्यादिवचनात् पार्वणवत् सपत्नीकानामुद्देश इति वाच्यं।

यत आह व्यासः।

अन्वष्टकासु वृद्धौ च प्रतिसंवत्सरे तथा।
अत्र मातुः पृथक्श्राद्धमन्यत्र पतिना सह॥

यदापि पितृसांवत्सरिकश्राद्धकालो मातृसांवत्सरिकश्राद्धकालश्च दैवादेक आपन्नस्तदापि पितृसांवत्सरिकश्राद्धे पित्रादीनां सपत्नीकानां उद्देशो न कर्त्तव्यः, इदन्तु मरणपौर्वापर्य्यानुसारेण तयोः सांवत्सरिकश्राद्धद्वयं तन्त्रेण अपणं कृत्वा निमन्त्रणादि द्विजविसर्जनान्तं पृथगेव कार्य्यं। यदा तु मरणपौर्वापर्य्यमज्ञातं तदा पूर्वं पितुः सांवत्सरिकं पश्चान्मातुरित्येवं श्राद्धद्वयं कार्य्यं पितुर्मुख्यत्वात्। एवमेव भ्रात्रादिसांवत्सरिकश्राद्धदिनैक्येऽपि ज्येष्ठादिक्रमेणानेकश्राद्धं कर्त्तव्यं। एतच्च सर्वश्राद्धसन्निपातप्रकरणे विस्तरेण प्रतिपादितं।

अन्वारोहणविषये तु दम्पतीश्राद्धप्रकारमाह लौगाक्षिः ।

मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धञ्च दम्पत्योरन्वारोहण एव तु ॥

'समासेन' सङ्क्षेपेण, पिण्डनिर्वपणम् ।

यथा द्विपितृकश्राद्धे द्वयोः पित्रोरमुकनाम्ने अमुकनाम्ने चेत्युद्दिश्य एक एव पिण्डो दीयते तथेहाप्येकस्मिन् पिण्डे द्वयोर्मातापित्रोरमुकायामुकायै चेत्युद्देशं कृत्वा एक एव पिण्डो देयः । एतच्च श्राद्धमनेकोद्देश्यशालित्वरूपालिङ्गात् पार्वणधर्मकं । तेनात्र वैश्वदेविकं तन्त्रेण कार्य्यं । 'पृथक् नवश्राद्धञ्च दम्पत्योः' इति । नवश्राद्धं प्राग्दशाहात् नवश्राद्धदिनेषु क्रियमाणं श्राद्धं पृथक् पितुर्मातुः कार्यम् ।

यत्तु गार्ग्येणोक्तम् ।

एकचित्यां समारूढौ दम्पती निधनङ्गतौ ।
पृथक् श्राद्धं तयोः कुर्यादोदनञ्च पृथक् पृथक् ॥

'ओदनं' ओदनपिण्डः । तत्तु नवश्राद्धविषयं न तु सांवत्सरिकविषयमपीति न पूर्ववचनविरोधः ।

यत्तु भृगुणोक्तं ।

या समारोहणं कुर्य्याद्भर्त्तुश्चित्यां पतिव्रता ।
तां मृताहनि संप्राप्ते पृथक्पिण्डे नियोजयेत् ।
प्रत्यब्दञ्च नवश्राद्धं युगपत्तु समापयेत् ॥

तदेषां दत्तकादीनामेकोद्दिष्टविधानेन मातापित्रोः सांवत्सरिकश्राद्धं विहितं तद्विषयं नवश्राद्धं युगपत्तु समापयेदित्यस्या-

यमर्थः । मातापित्रोर्मृताहैक्ये मात्रा चैकचित्यामन्वारोहणे कृते पितुर्नवश्राद्धं मातुर्नवश्राद्धं चैककालमेकपाकेन प्राधान्यात् पूर्वाङ्गकलापं कृत्वा प्रथमं पित्रे पश्चान्मात्रे च श्राद्धं कृत्वा पाश्चात्याङ्गकलापञ्च तन्त्रेण कुर्यादिति । अनेकमातृभिरेकचित्यामन्वारोहणे कृते पितुरनन्तरं साक्षान्मातुस्तदनन्तरमुपमातुरित्येवं ज्येष्ठादिक्रमेण नवश्राद्धं कुर्यादिति मातुः सांवत्सरिकश्राद्धमिति ।

सांवत्सरिकश्राद्धप्रकारो विष्णुधर्मोत्तरे ।

प्रतिसंवत्सरं कार्य्यमेकोद्दिष्टं नरैः स्त्रियः ।
मृताहनि यथान्यायं नृणां यद्वदिहोदितम् ॥

यद्वत्पुरुषाणां समन्त्रकं श्राद्धं तद्वद्द्विजातिस्त्रीणां कृतविवाहानां समन्त्रकमेव श्राद्धमिति ।

आह मरीचिः ।

स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासु तस्य च ।
प्राग्द्विजातेर्व्रतादेशात्ते च कुर्य्युस्तथैव तत् ॥

अमन्त्रकमिति वैदिकमन्त्रोच्चारणरहितं । अमन्त्रकमित्यनेन नाम-गोत्रोच्चारणमेव कर्त्तव्यमित्यर्थः । तत्रापि "स्वगोत्राद्भ्रश्यते नारीत्यादिना भर्तृगोत्रेण दातव्यमिति प्रतीयते । "पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रत इत्यादिना पितृगोत्रेणैवेति । तदेवं विप्रतिपत्तावासुरादिविवाहपरिणीतायाः पुत्रिकाकरणेन प्रत्तायास्त्र पितृगोत्रेणैव, ब्राह्मादिविवाहपरिणीतायास्तु भर्तृगोत्रेणेति व्यवस्था । तच्च कृतविवाहस्त्रीश्राद्धविषयं । अपरिणीतानां संस्कारहीनतया वैदिकमन्त्रानुच्चारणयोग्यत्वात् । "ते च कुर्य्युस्तथैव तदिति ते

पारशवकरणादयः । प्रागव्रताश्च द्विजातयः असंस्कृतत्वात् संस्कृतानामपि पितृ-पितृव्यादीनाममन्त्रकं श्राद्धमर्हन्तीति ।

अथैकोद्दिष्ट-पार्वणव्यवस्थामाह कात्यायनः ।

प्रत्यब्दं यो यथा कुर्यात् पुत्त्रः पित्रे सदा द्विजः ।
तथैव मातुः कर्त्तव्यं पार्वणं वान्यदेव वा ॥

'अन्यत्' एकोद्दिष्टं । यत्तु तेनैवोक्तं । "पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव त्विति, तत्पितृव्यादिसमभिव्याहारान्मातृसपत्नीपरं वेदितव्यं ।

अपुत्त्राणां सांवत्सरिकश्राद्धमाहापस्तम्बः ।

अपुत्त्रा ये मृता केचित् स्त्रियोवा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ॥
मित्र-बन्धु-सपिण्डेभ्यः स्त्री-कुमारीभ्य एव च ।
दद्याद्वै मासिकं श्राद्धं सांवत्सरमतोऽन्यथा ॥

प्रचेताः ।

सपिण्डीकरणादूर्द्धं एकोद्दिष्टं विधीयते ।
अपुत्त्राणाञ्च सर्वेषामपत्नीनां तथैव च ॥

'अपत्नीनां' अकृतविवाहानां ।

अत्रिः ।

भ्रात्रे भगिन्यै पुत्त्राय स्वामिने मातुलाय च ।
पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥

जातूकर्ण्यः ।

पितृव्यभ्रातृमातॄणामपुत्त्राणां तथैव च ।
मातामहस्यापुत्त्रस्य श्राद्धादि पितृवद्भवेदिति ॥

अवश्यकर्त्तव्यताद्योतनार्थं सन्न्यासिनां तु क्षयाहे सर्व्वैरपि सुतैः पार्वणमेव कर्त्तव्यमित्याह प्रचेताः ।

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात् पार्वणं तस्य सर्वदा ॥

शातातपः ।

एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियां ।
न कुर्यात् पार्वणादन्यद्ब्रह्मीभूताय भिक्षवे ॥

अतः सर्वदा यतेः क्षयाहे सर्वपुत्रैः पार्वणमेव कर्त्तव्यम् नैकोद्दिष्टमिति ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-
पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-
खण्डे श्राद्धकल्पे सांवत्सरिकश्राद्धप्रयोगो
नाम द्वाविंशोऽध्यायः ॥ ० ॥

# अथ त्रयोविंशोऽध्यायः ।

श्राद्धं त्वापरपक्षिके विधिममुं विश्वोपकारव्रती
सर्वश्रीकरणेश्वरः सुकृतिनामग्रेसरो भाषते ।
हेमाद्रिः परिपाकनिर्मलरसप्रस्यन्दिवाग्वैभवैः
कर्णाभ्यर्णसुरद्रुमारघरसासारैर्गिराङ्गुम्फनैः ॥

अथ भाद्रपदापरपक्षश्राद्धप्रयोगः ।

तत्र यदि तावत्पाकब्राह्मणशरीरसामर्थ्यादिसर्वोपपत्तिर्भवति तदा साग्न्यनग्नि-विधवा-ब्रह्मचारिप्रभृतयः सर्वे प्रतिपत्प्रभृति प्रतिदिनं चतुर्दशीवर्जममावास्यापर्यन्तं सर्वेषां कुर्युः। चतुर्दश्यान्तु शस्त्रहतस्यैव । यदा पुनः पाकाद्यनुपपत्तिस्तदा एकस्मिन्नपि दिने सर्वेषामवश्यं कुर्युः "शाकेनाप्यपरपक्षं नातिक्रामेदितिवचनात्। भाद्रपदापरपक्षाख्यमुख्यकालासम्भवे दीपोत्सवपञ्चदश्यां कर्त्तव्यमित्येतद्भाद्रपदापरपक्षकालप्रकरणे प्रतिपादितं। एतच्च श्राद्धं नवदैवत्यं कर्त्तव्यम् ।

आह धर्मः ।

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवत्यमत्र स्याच्छेषं षाट्पौरुषं विदुः ॥

'शेषं' षोडशश्राद्धादिव्यतिरिक्तं श्राद्धं ।

आह कात्यायनः ।

कर्षूसमन्वितं मुक्ता तथाद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकञ्च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

कर्षूशब्देन सपिण्डीकरणमुच्यते । नवदैवत्यता चात्रैवं एकः पितृवर्गः । द्वितीयो मातृवर्गः । तृतीयोमातामहवर्गः इति । मातामहवर्गे च स्त्रीणां सहैवोद्देशो न पृथक् ।

तथाच कर्मप्रदीपः ।

न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते ।
स्वभर्तृपिण्डमात्राभ्यस्तृप्तिस्तासां प्रकीर्त्तिता ।

छागलेयः ।

चयाहे केवलाः कार्या वृद्धावादौ प्रकीर्त्तिताः ।
सर्वत्रैव हि मध्यस्था नान्याः कार्य्यास्तु मातरः ॥

सर्वत्र महालयेऽन्वष्टका-गयाश्राद्धे च मध्य एव निवेशः ।

सत्यव्रतः ।

पितॄणां प्रथमं दानं मातॄणां तदनन्तरं ।
ततो मातामहानाञ्च पितृव्यस्यास्तु तस्य च ॥

उशनाः ।

अन्तर्मातामहान् कृत्वा मातॄणां यः प्रयच्छति ।
श्राद्धं वा पिण्डदानं वा नरकं स तु गच्छति ॥

जाबालः ।

अन्ते निवेशयेद्यस्तु मातॄः श्राद्धेषु मानवः ।
स मूढो नरकं याति कालसूत्रमवाक्शिराः ॥

ब्रह्माण्डपुराणे ।

पितृभ्यः प्रथमं दद्यान्मातृभ्यस्तदनन्तरं ।
ततोमातामहेभ्यश्चेत्यन्वष्टक्ये क्रमः स्मृतः ॥

चतुर्विंशतिमते ।

चयाहं वर्जयित्वा तु स्त्रीणां नास्ति पृथग्विधिः ।
केचिदिच्छन्ति नारीणां पृथक्श्राद्धं द्विजोत्तमाः ॥
आचार्य्य-गुरु-शिष्येभ्यः सखि-ज्ञातिभ्य एव च ।
सर्वेभ्यश्च पितृभ्यश्च तत्पत्नीभ्यस्तथैव च ।
पिण्डानेभ्यः सदा दद्यात् पृथग्भाद्रपदे द्विजः ॥

अत्र पार्व्वणैकोद्दिष्टव्यवस्थामाह जातूकर्ण्यः ।

सपिण्डीकरणादूर्द्धं पित्रोरेव हि पार्व्वणम् ।
पितृव्य-भ्रातृ-मातृणामेकोद्दिष्टं सदैव हि ॥

अत्र पार्व्वणैकोद्दिष्टयोः पौर्वापर्य्यनियममाह मरीचिः ।

यद्येकत्र भवेयातामेकोद्दिष्टञ्च पार्व्वणम् ।
पार्व्वणञ्चाभिनिर्व्वर्त्त्य एकोद्दिष्टं समापयेत् ॥

अत्र तन्त्रेणैव पाकः कर्त्तव्यः ।

तथाचात्रिः ।

बहुना वाथवा द्वाभ्यां श्राद्धं चेत् स्यात्समेऽहनि ।
तन्त्रेण श्रपणङ्कृत्वा पृथक्श्राद्धानि कारयेत् ॥

पुलस्त्यः ।

महालये गयाश्राद्धे गतासूनां चयेऽहनि ।
तन्त्रेण श्रपणङ्कृत्वा श्राद्धङ्कुर्य्यात् पृथक् पृथक् ॥

एतच्च भाद्रपदकृष्णपक्षप्रतिपत्प्रभृतिषु चतुर्दशीवर्जममावास्या-

पर्यन्तासु तिथिषु प्रत्यहमशक्तौ तन्मध्य एव यथासम्भवं नवदैवत्यं पार्वणविधानेन पितृव्यादीनामपुत्त्राणामन्येषां चैकोद्दिष्टविधानेन तन्त्रेण पाकङ्कृत्वा पृथक्पृथगपरपक्षश्राद्धं कर्त्तव्यमिति स्थितं ।

इदानीं कृष्णपक्ष एव कासुचित्तिथिषु श्राद्धप्रयोगविशेष उच्यते । तत्र तावत्पञ्चमीश्राद्धं बौधायनसूत्रे ।

पुत्त्रार्थं पञ्चमीश्राद्धं करिष्ये तदर्थे पुण्याहं वाचयिष्ये इति सङ्कल्प्य पुण्याहं वाचयित्वा पुण्याहदेवताग्निः प्रीयतामित्युक्त्वा पुण्याहं वाचयेत् । एतच्च मार्गशीर्षमासमारभ्य कुर्य्यात् । विच्छिन्नाग्निसन्धानं कृत्वा अग्निमुखमारभ्य प्रणीतान्तं कृत्वा दक्षिणेनाग्निं स्वधापात्रं स्थापयेत् । आमागन्तु पितरो देवयानात् तिलोऽसि सोमदैवत्यो गोसवो देवनिर्म्मितः । प्रत्नवद्भिः प्रत्तः स्वध एहि पितॄनिमाल्लोकान् प्रीणयाहि नः स्वधा नमः । मधुवाता ऋतायते इति तिसृभिः सोमस्य त्विषिरसि निरसं न मुच्यः शिरः । शन्नोदेवीरभिष्टय इत्येतैः स्वधां मिश्रीकृत्य गन्ध-पुष्पाक्षतैः पितृभ्यो नमः । पितामहेभ्यो नमः । प्रपितामहेभ्यो नम इत्यर्चयित्वा दर्भैः प्रच्छादयेत् । भोजनस्थाने अपहता असुरा रक्षांसि पिशाचा पितृषदः ये क्षयन्ति पृथिवीमनु अन्यत्रेतो गच्छन्तु यत्रैषां गतं मन इत्यङ्गिरेवोचति उदीरतामवर उत्पराम उन्मध्यमाः पितरः सोम्यासः असुं य ईयुरवृका ऋतज्ञास्तेनोऽवतु पितरोहवेषु पितॄनावाहयति आयात पितरः सोम्यः गम्भीरैः पथिभिः पूर्व्यैः प्रजामस्मभ्यं ददते रयिञ्च दीर्घायुत्वञ्च शतं शारदश्चेति द्वौ देवौ कृत्वा विश्वेभ्यो देवेभ्यः क्षणः कर्त्तव्य इति कृत्वा वस्त्रालङ्कार-भोजनन्दत्वा गन्ध पुष्प-धूप-दीपांश्च पित्रर्थे त्रयाणां

ब्राह्मणानां पदप्रक्षालनं कृत्वा पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा नमः इति स्वधान्दत्त्वा वस्त्र-भोजन-गन्ध-पुष्प-धूपादिभिः अर्च्चयित्वा पितॄननुज्ञाप्याग्नौ करिष्यामीति सङ्कल्प्य आज्यसंस्कारं कृत्वा स्रुक्संमार्जनं विधाय परिधीन् स्थापयित्वा इध्मानभ्यज्येध्मं निधाय परिषेचनं कृत्वाघारावाघारयति, युक्तोऽवहवतस्त आशाः आनोभद्राः विरूपाक्षमाविरूपाक्षमहं या तिरश्ची संराधन्यै प्रसाधन्यै व्याहृतयश्चेति हुत्वा प्राचीनावीतीयाः प्राचीरन्तर्दधे ऋतुभिर्यन्मे माता यद्वः क्रव्यादिति पञ्च हुत्वाहुतीर्हुत्वा चरुन्त्रिधा कृत्वा सोमाय पितृमते शुष्मिणे जुहोहविर्वाजिनीर्दजुषस्व नः स्वाहा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति एकेन भागेन जुहोति, द्वितीये भागेऽवदाय अङ्गिरस्वन्तमूतये यमं पितृमन्तमाहुः वैवस्वतेदमहिनः स्वाहा हव्यं देवेभ्यः स्वधा नमः स्वाहेति तृतीये भागेऽवदाय अग्नये कव्यवाहनपितृन्यचि ऋतावृधः प्रदेवेभ्यो वह हव्यं पितृभ्यश्च स्वाहा हव्यं देवेभ्यः पितृभ्यः स्वधा नमः स्वाहेति त्रयं हुत्वा एतैरेव मन्त्रैस्त्रिभिरुपाहुतित्रयं कुर्य्यात् । पितृभोजनार्थं पक्केऽन्ने तिलान् मिश्रयित्वा तर्पणमन्त्रैर्विंशत्याहुतीः कृत्वा अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यग्नौ दक्षिणपूर्वभागे होमङ्कृत्वा शेषमन्नञ्चरुशेषञ्च पितृत्वेन क्लृप्तान् ब्राह्मणान् भोजयेत् । भोजनारम्भे अन्नं स्पृष्ट्वा जपेत् पृथिवीसमन्तस्य तेऽग्निरुपद्रष्टा ऋचस्ते महिमा गुप्तस्याप्रमादाय पृथिवी ते पात्रं पितामहानामन्तरिक्षं समन्तस्य ते पुरुष श्रोता यजूंषि महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं पितामहपात्रं स्पृष्ट्वा द्यौः सम-

न्तस्य ते आदित्योऽनुख्याता सामानि ते महिमा दत्तस्याप्रमादाय पृथिवी ते पात्रं ॐभूर्भुवः स्व इति अन्नमङ्गुष्ठेन स्पर्शयित्वा पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधा नम इति दद्यादमृतोपस्तरणमसि प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहोदानाय स्वाहा समानाय स्वाहेति पञ्चाहुतीर्यजमानो जपति ब्रह्मणि चात्मामृतत्वाय सर्वैः कामैस्तर्पयतेत्युक्त्वा अमृतापिधानमसि भोजनान्ते उदकमन्नञ्च गृहीत्वा भूमौ विकिरेत्। ये अग्निदग्धा ये जीवा ये त्वदग्धाः कुले मम। भूमौ दत्तेन तृप्यन्तां तृप्ता यान्तु पराङ्गतिं इति तिलोदकं गृहीत्वा तृप्यध्वमिति तृप्तेभ्यः स्वधां दत्त्वा भुक्तिदक्षिणामपि ब्राह्मणान् प्रदक्षिणीकृत्य विसर्जयेत्। दक्षिणेनाग्निं चतुर्विंशतिपिण्डान् पितृभ्यः स्वधा नम इत्यारभ्य सर्वाभ्यः स्वधा नम इति दद्यात्। चरुशेषेण तिस्र आहुतीः कुर्याद्यन्मे माता यन्मे पितामही यन्मे प्रपितामहीतिजपादि प्रतिपद्यते, परिषेचनान्तं कृत्वा संवत्सरादर्वाक् पुत्रं लभते सत्यमित्याह भगवान् बौधायनः।

अथाष्टकाहोमः।

बौधायनसूत्रे।

अथाष्टकाहोमस्तैषे मासपरस्याष्टम्यां क्रियेत एवं माघ-फाल्गुने यदि वा विहृतो यदि वा समस्त उपरिष्टान्मासे पौर्णमास्यामपरपक्षसप्तम्यामष्टम्यां नवम्यां इति क्रियते यदि वाष्टम्यामेव श्वः करिष्यामीति ब्राह्मणान्निमन्त्रयेत् योनि-गोत्र-श्रुत-वृत्तसम्पन्नानसम्बद्धानित्येके कामं सम्बद्धानपि श्रुत-वृत्तसम्पन्नान् श्रुतवृत्तयोनिभिः स्वधा

निधीयत इत्युपदिशन्ति तान् श्मश्रुकर्माभ्यञ्जन-स्नानादिभिर्यथोपपादं सम्पूज्य स्वयमाप्लुत्य शुचौ समे देशे देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा बर्हिरादाय मासमुपाकरोति पितृभ्यः स्वाहा पितामहेभ्यः स्वाहा प्रपितामहेभ्यो जुष्टामुपाकरोमीति तूष्णीमित्येकेऽथैनामद्भिः प्रोक्षति पितृभ्यः स्वाहा पितामहेभ्यः प्रपितामहेभ्यः जुष्टां प्रोक्षामीति तूष्णीमित्येके मासमत्रैव प्रतीचीनशिरसं दक्षिणपदं संज्ञपयन्ति तस्यैव संज्ञप्ताद्भिरभिषेकं प्राणानाप्याययति तूष्णीं वपामुत्खिद्य हृदयमुद्धृत्येति प्रज्ञानानि चावदानानि तान्येतेष्वेव शूले पूपन्निविष्यैतस्मिन्नेवाग्नौ श्रपयति प्रथमं मासं चोदनश्चापूपान् श्रपयति अन्यांश्च विशेषान् सर्वं सिद्धं समानीय युग्मान् ब्राह्मणान् सुप्रक्षालितपादान् अप आचमय्य सदर्भोपक्लृप्तेष्वासनेषु प्राङ्मुखानुपवेशयन्त्युदङ्मुखान् वा यदि प्राङ्मुखान् दक्षिणापवर्गान् यद्युदङ्मुखाः प्रागपवर्गाः प्राप्नोतु भवानिति प्राप्तवानिति इतरे प्रत्याहुः अथैतान्यवमिश्रा आपः प्रतिग्राहयत्यमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति त्रिभिस्तिलोदकमेके समामनन्ति पुरोऽन्नं द्विस्तिलोदकं दद्यात् भुक्तवत्सु च तृतीयमथैतान्वस्त्र-गन्ध-धूप-दीप-माल्यैर्यथोपपादं सम्पूज्य पृच्छत्युद्ध्रियतामग्नौ च क्रियतामिति काममुद्ध्रियतां काममग्नौ क्रियतामितीतरे प्रत्याहुः । अपि चाग्नौ करिष्यामीति कुरुष्वेति प्रत्याहुः। अथाभ्यनुज्ञातः परिधानप्रभृत्यग्निमुखान् कृत्वा श्रुतायां वपायां पञ्च स्रुवाहुतीर्जुहोतीति वा पुरस्ताद्व्याख्यातं त्रेधा वपां विच्छिद्यौदुम्बर्या दर्व्या जुहोतीति तत्पुरस्ताद्व्याख्यातमथाष्टकाहोमान् जुहोतीयमेव सा या प्रथमा विधौच्छदित्यष्टौ पञ्चदशीये पुष्टये पूर्वतरामपश्यन्नित्येकां संवत्सरस्य

प्रतिमामित्येकान्ताः सप्तदशापूपमष्टधा विच्छिद्य चौण्यवदानानि वपायाः कल्पेन कृत्वाथेतराणि ब्राह्मणेभ्योऽत्र तान्यवदानानीडासु प्रच्छि-द्यौदनं मांसं पूपमित्याज्येन समदायुत्यौदुम्बर्य्या दर्व्यापिधानं जुहोति पितृभ्यः स्वधा नमः स्वाहा पितामहेभ्यः स्वधा नमः स्वाहा प्रपिता-महेभ्यः स्वधा नमः स्वाहा मातृभ्यः स्वधा नम स्वाहा पिता-महीभ्यः स्वधा नमः स्वाहा प्रपितामहीभ्यः स्वधा नमः स्वाहा माता-महेभ्यः स्वधा नमः स्वाहा मातुः पितामहेभ्यः स्वधा नमः स्वाहा मातुः प्रपितामहेभ्यः स्वधा नमः स्वाहा मातामहीभ्यः स्वधा नमः स्वाहा मातुः पितामहीभ्यः स्वधा नमः स्वाहा मातुः प्रपितामहीभ्यः स्वधा नमः स्वाहा आचार्य्येभ्यः स्वधा नमः स्वाहा आचार्यपत्नीभ्यः स्वधा नमः स्वाहा गुरुभ्यः स्वधा नमः स्वाहा गुरुपत्नीभ्यः स्वधा नमः स्वाहा सखिभ्यः स्वधा नमः स्वाहा सखिपत्नीभ्यः स्वधा नमः स्वाहा ज्ञातिभ्यः स्वधा नमः स्वाहा ज्ञातिपत्नीभ्यः स्वधा नमः स्वाहेति अमात्येभ्यः स्वधा नमः स्वाहा अमात्यपत्नीभ्यः स्वधा नमः स्वाहा सर्वेभ्यः स्वधा नमः स्वाहा सर्वाभ्यः स्वधा नमः स्वाहा अग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेति दक्षिणार्द्धे पूर्व्वार्द्धे मांसोदनं पात्रेषु उद्धृत्य विशेषानुपचिप्याङ्ग-तशेषेण संसृज्य दर्भेषु सादयित्वा दर्भैः प्रच्छाद्याभिमृशति पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे जुहोमि ब्राह्मणानाञ्चाभिधावतां प्राणापानयोर्जुहोम्यक्षितमसि पितॄणां पितामहानां प्रपितामहानां जुष्टा अमुत्रामुष्मिन् लोक इत्यथैतानि ब्राह्मणेभ्यः उपनिक्षिप्य ब्राह्म-णस्याङ्गुष्ठेनानखेन उद्दिशत्यमुष्मै स्वधा नमोऽमुष्मै स्वधा नम इति भुञ्जानान् समीक्ष्यते प्राणे निविष्टोऽमृतं जुहोमीति पञ्चब्राह्मणीर्जपित्वा

आत्मामृतत्वायेत्यात्मानञ्च वात ऊर्द्ध्वं निरीक्ष्यते ह्रीका हि पितर इति विज्ञायते सर्वैः कामैस्तर्पयन् स्वधायुक्तानि ब्राह्मणानि श्रावयेत्। रक्षोघ्नानि नैर्ऋतानि च तृप्तानप आचम्याग्नयेष्वन्नशेषान् सम्प्रकिरति, येऽग्निदग्धा जाता जीवा ये च दग्धाः कुले मम भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिमिति सङ्क्षालनान्यपकीर्य्य दक्षिणाभिधास्यति सुवर्ण-हिरण्य-मणि-वस्त्र-लोह-भूमि-भाण्डैर्गवाश्वाजाविहस्तिभिश्च यथोपपादमक्षयं वाचयित्वा उपसङ्गृह्य स्वधां वाचयित्वाच्छाद्य प्रसाद्य प्रदक्षिणीकृत्य शेषमनुज्ञाप्य तेनैव पथेन गत्वान्नशेषं निवेदयेत् यथा ब्रूयुस्तथा कुर्य्यात्तैस्त्वभ्यनुज्ञातो दक्षिणेनाग्निं दक्षिणाग्रान् दर्भान् संस्तीर्य्य तेष्वन्नशेषैः पिण्डान् ददाति पितृभ्यः स्वधा नमः पितामहेभ्यः स्वधा नमः सर्वाभ्यः स्वधा नम इत्यथैतान् सङ्क्षालनेन त्रिः परिषिञ्चति, ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् तृप्यत तृप्यत तृप्यतेतिजपप्रभृतिसिद्धमाधेनुवरप्रदानादाचमनेऽग्निमुखे चाभिश्रावणे चोपसङ्ग्रहणे पश्चाद्धोमे च यज्ञोपवीतमेव श्वोभूते मांसशेषेणैवमेव यदि त्र्यहमथ यदि गां न लभते मेषमजं वा लभते आरण्येन च मांसेन यथोपपन्नखड्ग-मृग-महिष-वराह-वृष-शश-रोहित-शार्ङ्ग-तित्तिरि-कपोतकपिञ्जल-वार्ध्रीणसादिना तिल-मधुसंसृष्टं मत्स्यव्रातपललैः क्षीरोदनेन वा सूपोदनेन वा यद्भवत्यामैर्मूल-फलैः प्रदानमात्रं हिरण्येन वा दानमपि गोग्रासमाहरेदपि वानूचानेभ्य उदकुम्भानाहरेदपि वा श्राद्धमन्त्रानधीतापि वारण्येऽग्निना कक्षमुपोषेदेषाष्टकेति न त्वेवानष्टकः स्यात् । एवमेव मासि मासि श्राद्धमपरपक्षश्राद्धस्यान्यतमेऽहनि क्रियते ।

अथान्वष्टकाश्राद्धं विष्णुधर्मोत्तरे।

अन्वष्टकासु च स्त्रीणां श्राद्धं कार्य्यं तथैव च।
अष्टकाविधिना कृत्वा क्रमेणैतासु पञ्चकं॥
माघे राजन् पितामह्यै विश्वेदेवपुरःसरं।
पिण्डनिर्वपणं कार्य्यं तस्यान्तु पितृवन्नृप।
भुक्तवत्सु च विप्रेषु तत्र कर्म निबोध मे॥
प्रादेशमात्रा राजेन्द्र चतुरङ्गुलमायता।
तावदेव समुत्सेधा षट्कर्षूस्तत्र कारयेत्॥

छन्दोगानां कर्षूत्रयं कर्त्तव्यं।

आह गोभिलः।

तिस्रः कर्षूस्त्वानयेत् प्रादेशमात्राश्चतुरङ्गुलखाता इति अन्येषान्तु यथास्मदुक्ता व्यवस्था।

विष्णुधर्मोत्तरे।

प्रत्येकं कर्षूमूलेषु परिस्तीर्य्य हुताशनं।
अग्नीषोम-यमानाञ्च यागं कृत्वा यथा पुरा॥
कर्षूत्रयस्य मूले तु पुरुषाणान्तु कारयेत्।
पिण्डनिर्वपणं प्राग्वदेकैकस्मिन् यथाविधि॥
कर्षूभिस्त्रितयन्तच्च चीरात्ताभ्यः प्रपूरयेत्॥
कर्षूत्रितयमूले च स्त्रीणां निर्वपणं भवेत्।
दध्ना मांसेन पयसा कर्षूणाञ्चैव पूरणं॥
अन्नोदकविमिश्रेण कार्य्यं मनुजपुङ्गव।
भवतीभ्यो भवत्वेतदक्षय्यं परिकीर्त्तितं॥

विष्णुः ।

अष्टकासु दैवपूर्वं शाक-मांसापूपैः श्राद्धं कृत्वान्वष्टकासु च वह्नौ हुत्वा देवपूर्वमेवापि च मात्रे पितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिस्ताभ्यर्च्यानुव्रज्य विसर्ज्जयेत् ततः षट्कर्षूः कुर्य्यात् । तन्मूले च प्रागभ्युपसन्धानं कृत्वा हुत्वा च पिण्डत्रयनिर्वपणं प्रकृत्यैकस्मिन् कर्षूमूले कुर्य्यात् । कर्षूत्रयेषु कर्षूणां मूलत्रये स्त्रीणां पुरुषकर्षूत्रयं सान्नेनोदकेनापूरयेत् । स्त्रीकर्षूत्रयं सान्नेन पयसा दध्ना मांसेन पयसा प्रत्येकं कर्षूत्रयं पूरयित्वा जपेदेतद्भवतीभ्योऽस्त्वक्षय्यं ।

विष्णुधर्मोत्तरे ।

आमश्राद्धेषु काम्येषु हुत्वा प्रथमपञ्चकं ।
मध्यमं पञ्चकं हुत्वा भुक्तश्राद्धेषु संयतः ॥
अमावास्यासु सर्वासु हुत्वा चोत्तमपञ्चकं ।
हुत्वा च पञ्चकान्येतान्यष्टकात्रितयं क्रमात् ।
अन्वष्टकासु च तथा भोजयेत् प्रयतो द्विजान् ॥

त्रयोदशीश्राद्धे तु पित्रादित्रयस्य मातामहादित्रयस्य चेत्येवं षस्णां पार्व्वणविधानेन कर्त्तव्यमिति तत्सर्व्वमपरपक्षश्राद्धकालप्रकरणप्रतिपादितं ।

## अथ चतुर्दशीश्राद्धप्रयोगः ।

प्रचेताः ।

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै ।
एकोद्दिष्टं सुतैः कार्य्यं चतुर्दश्यां महालये इति ॥

अयमभिसन्धिः, 'ममत्वमागतस्य' सपिण्डीकृतस्य, 'महालये' भाद्रपदापरपक्षचतुर्दश्यां, शस्त्रहतस्यैव नान्यस्येति नियम्यते। न पुनः शस्त्रहतस्य चतुर्दश्यामेवेति अतश्च क्षयाहादौ शस्त्रहतस्यापि यथा-प्राप्तमेव श्राद्धं कर्त्तव्यं। यदा चतुर्दश्यां शस्त्रहतः पिता जननी वा तदा क्षयाहनिमित्तं पार्वणं विनिवर्त्त्यापरपक्षनिमित्तं शस्त्रहतस्यैको-द्दिष्टमपि कर्त्तव्यमेवेति ।

अत्रापरपक्षश्राद्धानुकल्प उक्तो ब्रह्मपुराणे ।

पयोमूल-फलैः शाकैः कृष्णपक्षे च सर्वदा ।
सर्वाधीनः प्रवासी वा निर्द्धनो वापि मानवः ।
मनसा भावशुद्धेन श्राद्धं दद्यात्तिलोदकं ॥

इति भाद्रपदापरपक्षश्राद्धप्रयोगः ।

अथ दौहित्रप्रतिपच्छ्राद्धप्रयोगः ।

तच्चापरपक्षामावास्योत्तरप्रतिपद्येव कर्त्तव्यं। ननु "दर्शश्राद्धं गयाश्राद्धं श्राद्धञ्चापरपक्षिकं। न जीवपितृकः कुर्य्यात्तिलैस्तर्पणमेव च" इति जीवत्पितृकस्यापरपक्षश्राद्धनिषेधात् कथमिति चेत्, शिष्टसमाचारादिति चेत् इति ब्रूमः। यद्यपरपक्षनिमित्तं दौहित्रस्य श्राद्धं निषिद्धं तर्हि प्रतिपद्यपि क्रियमाणं तन्निषिद्धमिति। उच्यते ।

कन्यागते सवितरि पितरोयान्ति वै सुतान्।
शून्या प्रेतपुरी सर्वा यावद्वृश्चिकदर्शनमिति ॥

अत्र कन्यागतस्यापि श्राद्धनिमित्तत्वात् दौहित्रैस्तन्निमित्तमेव

श्राद्धं कर्त्तव्यं नापरपक्षनिमित्तमिति। एतच्च शिष्टाचारानुसारात् पार्वणविधानेन कर्त्तव्यमिति मधुशर्ममिश्राः ।

इति दौहित्रप्रतिपच्छ्राद्धप्रयोगः ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे अपरपक्षश्राद्धप्रयोगः ।

---

# अथ चतुर्विंशोऽध्यायः ।

## अथ सन्न्यासाङ्गश्राद्धप्रयोगः ।

तत्र सन्न्यासमधिकृत्य बौधायनसूत्रे ।

आदावग्निमान् पार्वणविधिनाष्टौ श्राद्धानि कुर्य्यात् । अनग्निमानेकोद्दिष्टविधिना दैवमार्षक-दिव्यपित्र्य-मातृक-मानुषभौतिकान्यष्टौ श्राद्धान्यात्मनश्चान्ते कुर्य्यात् ।

तथा ।

अथ सन्न्यासविधिं व्याख्यास्यामः । तत्र सन्न्याससङ्कल्पपूर्वमष्टम्या आरभ्य श्राद्धादिकं कुर्य्यात् । पौर्णमास्याममावास्यायां वा देवश्राद्धं ऋषिश्राद्धन्दिव्यश्राद्धं मानुषश्राद्धं भूतश्राद्धं पितृश्राद्धं मातृश्राद्धं आत्मनः श्राद्धञ्चेति । देवश्राद्धे देवतात्रयं ब्रह्म-विष्णु-महेश्वराः । ऋषिश्राद्धे देवतात्रयं देवर्षि-ब्रह्मर्षि-क्षत्रर्षयः । दिव्यश्राद्धे देवतात्रयं वसु-रुद्रादित्याः । मनुष्यश्राद्धे देवतात्रयं सनक-सनन्दन-सनातनाः । भूतश्राद्धे देवतात्रयं पृथिव्यादीनि भूतानि चक्षुरादीनि करणानि चतुर्विधो भूतग्रामः । पितृश्राद्धे देवतात्रयं पितृ-पितामह-प्रपितामहाः मातामह-मातुः पितामह-मातुः प्रपितामहाश्च । मातृश्राद्धे देवतात्रयं मातृ-पितामही-प्रपितामह्यः । आत्मनः श्राद्धे देवतात्रयं आत्म-पितृ-पितामहः ।

अथातः शौनकप्रोक्तं सन्न्यासविधिं व्याख्यास्यामः । पूर्वेद्युर्नान्दीमुखं श्राद्धं कुर्य्यात् । देवर्षि-दिव्य-मनुष्य-भूत-पितृ-मात्रात्मनश्च पृथक् पिण्डदानैर्युग्मैर्ब्राह्मणैः पिण्डोदकं कुर्य्यात् । देवश्राद्धे देवतात्रयं

ब्रह्मविष्णुमाहेशानाः पिण्डत्रयं दद्यात्। ऋषिश्राद्धे देवतात्रयं देवर्षि-ब्रह्मर्षि-मनुष्यर्षयः पिण्डत्रयं दद्यात् । दिव्यश्राद्धे देवतात्रयं वसु-रुद्रा-दित्याः पिण्डत्रयं दद्यात्। मनुष्यश्राद्धे देवतात्रयं सनक-सनन्दन-सनातनाः पिण्डत्रयं दद्यात् । भूतश्राद्धे पृथिव्यादीनि भूतानि पिण्डत्रयन्दद्यात् । मातृश्राद्धे देवतात्रयं मातृ-पितामही-प्रपितामह्यः पिण्डत्रयं दद्यात् । आत्मश्राद्धे देवतात्रयं आत्म-पितृ-पितामहाः पिण्डत्रयं दद्यात्। नाम-गोत्रसम्बन्धात् पिण्डोदकं दद्यात्। अनन्तरं पुण्याहं वाचयेत् ।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे सन्न्यासाङ्गश्राद्धप्रयोगप्रकरणम् समाप्तम् ।

---

# पञ्चविंशोऽध्यायः ।



अथ जीवच्छ्राद्धप्रयोगः ।

आदित्यपुराणे ।

देश-काल-धन-श्रद्धाव्यवसायसमुच्छ्रये ।
जीवते वाथ जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥

वाशब्दाच्छ्राद्धकर्त्तन्तराभावे स्वयमेव स्वस्य श्राद्धं कर्त्तव्यमिति ।

तथा ।

कृतोपवासः सुस्नातस्त्रयोदश्यां समाहितः ।
कर्त्तारमथ भोक्तारं विष्णुं सर्वेश्वरं यजेत् ॥
जले स्थलेऽम्बरे मूर्त्तौ कलशे पुष्करे रवौ ।
चन्द्रार्क-गुरु-गो-विप्र-माता-पितृषु सर्वगम् ॥
सदक्षिणास्तु सतिलास्तिस्रस्तु जलधेनवः ।
निवेदयेत् पितृभ्यश्च तदग्रेषु समाहितः ॥

एवं सम्पूज्य पितुरुद्देशेन तिस्रोजलधेनूर्दद्यात् ।

तत्र मन्त्रानाह ।

सोमाय त्वा पितृमते स्वधानम इति स्मरन् ।
अग्नये कव्यवाहनाय स्वधा नम इति स्मरन् ॥
दक्षिणे तु निदध्याच्च तृतीयां दक्षिणामुखां ।
यमायाङ्गिरसे चाथ स्वधा नम इति स्मरन् ॥
तयोर्मध्ये तु निक्षिप्य विप्रान् पश्चोपवेशयेत् ।

प्रथमामुत्तरतः द्वितीयां दक्षिणतः तृतीयां मध्ये निक्षिपे-दित्यर्थः ।

आवाहनादिना पूर्वं विश्वान् देवान् प्रपूज्य च ।
अहं वसुभ्यस्त्वा विप्र रुद्रेभ्यस्त्वामहन्ततः ।
सूर्येभ्यस्त्वामहं विप्र भोजयामीति तान् वदेत् ॥
आवाहनादिकं सर्वं कुर्याच्च पितृकर्मवत् ।
सौम्यधेनुस्ततोदेया वासवाय द्विजाय तु ॥
आग्नेयी चाथ रौद्राय याम्या सूर्यद्विजाय तु ।
विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत् ॥

'वासवाय' वसूद्देशेनोपवेशिताय ।

एवमुत्तरत्रापि ।

स्वस्त्युदकमक्षय्यं जलन्दत्त्वा च तान् द्विजान् ।
विसर्जयेत् स्मरन् विष्णुं देवमष्टाक्षरं विभुम् ।
ततः कामकुलेशानं निशि नारायणं स्मरेत् ॥

एवं कृष्णत्रयोदश्यामेतत्सर्वं विधाय द्वितीयेऽहनि यत्कर्त्तव्यं तदाह ।

चतुर्दश्यां ततो गच्छेद्यथाप्राप्तां सरिद्वराम् ।
पूर्वेण विप्रः सौम्येन राजा वैश्योऽपरेण च ।
दक्षिणेन तथा शूद्रो मार्गेण विकिरन् यवान् ॥

'सौम्येन' उत्तरेण, यवान् 'विकिरन्' प्रक्षिपन्, गच्छेदित्यर्थः ।

वस्त्राणि लोहखण्डांश्च जीवन्न इति संस्मरेत् ।

तत्र गत्वा यत्कर्त्तव्यं तदाह ।

दक्षिणाभिमुखो वह्निं ज्वालयेत्तत्र च स्वयम् ।
पश्चाद्गता कुशैर्ब्राह्मीं कृत्वा प्रतिकृतिन्दहेत् ॥

स्वयमित्यन्यनिवृत्त्यर्थं । 'प्रतिकृतिः' हस्त-पादाद्यवयवा आकृतिः ।

कृत्वा श्मशानिकं होमं पूर्णाहुत्या तमेव चि ।

अयमर्थः ।

ब्रह्मन्नाग्निश्चेत् पृष्ठोदिवीतिपक्षेणाग्निमाधाय स्वगृह्योक्तविधिना पूर्णाहुतिं विधायाग्निप्रदानमन्त्रेणाज्यं हुत्वा प्रतिकृतिन्दहेत् ।

अकृताग्निपरिग्रहश्चेदेतत्कुर्यादित्याह ।

निरग्निरथवा भूमिं यमं रुद्रञ्च संस्मरन् ।
हुत्वा प्राधानिके स्थाने पश्चाद्दाहयेच्च ताम् ॥

पृष्ठोदिविपक्षमाह कात्यायनः ।

अन्वग्निरितिमन्त्रेण ग्रामाग्निन्तु समाहरेत् ।
पृष्ठोदिवीति चादध्यात् सावित्र्या ज्वालयेदथ ॥
तत्सवितुर्वरेण्यन्तु विश्वानीति स्मृतोऽपरः ।

'ग्रामाग्निः' लौकिकाग्निः । स च श्रोत्रियागारादानेयः । 'आदध्यात्' अर्पयेत् ।

अपयेच्चापरे वह्नौ मुद्गमिश्रञ्चरुन्ततः ।
तिल-तण्डुलमिश्रन्तु द्वितीयं सपवित्रकम् ॥

अपरग्रहणं यत्र प्रतिकृतिदाहः कृतस्ततोऽन्यस्मिन्नित्यर्थः । तस्माच्चरुश्रपणार्थं पूर्वेण प्रकारेणाग्निमुत्पादयेत् । 'सपवित्रकमिति सपवित्रकरस्तण्डुलावपनं घृताभिघारणञ्च ।

अपणानन्तरं कर्त्तव्यमाह ।

मधु-क्षीर-घृताम्भोभिः पूरयेत् कर्णुकात्रयम् ।
तदुपान्ते तु स-मुद्गपात्राणि त्रीणि पूरयेत् ॥
ॐ पृथिव्यै नमस्तुभ्यमिति चैकं निवेदयेत् ।
ॐ यमाय नमस्त्वेति द्वितीयं तदनन्तरं ॥
ॐ नमस्ताथ रुद्राय श्मशानपतये तथा ।
ततो दीप्तं समिद्धाग्निं भूमौ प्रकृतिदारुकं ॥
क्रव्यादमग्निं तस्यै भूम्यै नम इति स्मरन् ।
क्षीराक्तं जलकुम्भन्तु विकिरेत्तच्छान्तये ॥
नाभिमात्रं ततस्तोयं प्रविश्य यमदिङ्मुखः ।
सप्तभ्यो यमसंज्ञेभ्यो दद्यात्सप्त जलाञ्जलीन् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वप्राणहराय च ॥
स्वधाकार-नमस्कार-प्रणवैः सह सप्तधा ।
ॐनमस्ताय रुद्राय श्मशानपतये स्मरन् ॥
लाजोदकाभ्यां पूर्णन्तु कुम्भञ्च विकिरेद्भुवि ।
याम्योन्मुखेषु दर्भेषु प्रदद्याच्चावनेजनम् ॥
स्वधायै च स्वधारूपिरुद्रोनम इति स्मरन् ।
अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकम् ॥
सूक्ष्मदेहैष ते पिण्डस्त्वर्घ्य-पुष्प-सुगन्धिमान् ।
धूपोद्दीपो बलिर्वाथ स्वर्य्येषा तुभ्यमक्षया ॥
दशपिण्डांस्ततोदत्वा विष्णोः सौम्यमुखान् स्मरेत् ।
निःसृतस्तु तत्तोयं नाभिमात्रं प्रविश्य च ॥

प्रक्षिपेत् पूर्णकुम्भन्तु जलमध्ये पृथक् पृथक्।
प्रदद्यात्पञ्चपञ्चाशत् कुम्भांश्चाथ जलाञ्जलीन् ॥
द्वारोपान्ते गृहे वाथ क्षीरन्तोयञ्च निक्षिपेत्।
जीवाच्च स्नाहि दुग्धञ्च पिबेदञ्चाप्यनुस्मरन् ॥
याम्योन्मुखेषु दर्भेषु स्वपेत्पश्चादुदङ्मुखः।
अमावास्यायां कुर्याच्च जीवच्छ्राद्धमतःपरम् ॥
घृतान्न-मांस-दधिभिः(१) पूरयेत् कर्षुकात्रयम्।
कुर्याच्च मासिकं मासि सपिण्डीकरणं ततः ॥
अशौचान्ते ततः सर्वमात्मनो वा परस्य वा।
कुर्यादस्थिरतां ज्ञात्वा भक्त्यारोग्यधनायुषाम् ॥

अथ बोधायनोक्तजीवच्छ्राद्धप्रयोगः।

जीवच्छ्राद्धविधिं व्याख्यास्यामोयस्त्वात्मनः श्रेयः समिच्छति अपरपक्षे त्रयोदशीमुपेत्य तस्मिन्नहनि सम्भारानुपकल्पयेत्। और्द्धदेहिके मृतानां वस्त्रषट्कं सौवर्णसूचितं अङ्कुशं नवपालाशं स्कन्धरजं पलाशवृन्दं कृष्णाजिनमौदुम्बरीमिध्मासन्दीङ्कलशादीत्यपि तस्मिन्नेवाहनि श्वोभूते स्नात्वा मध्याह्ने जले स्थित्वा उपर्य्येवोत्थाय पुण्याहं स्वस्त्ययनमिति वाचयित्वा वस्त्राङ्गुलीयक-दक्षिणां दद्यात्तैरेव पायसं दक्षिणामुखोऽश्नीयादथ स्वगृह्योक्तविधिनाग्निमुपसमाधाय स परिस्तीर्य्याघारावाज्यभागाविष्ट्वा स्रुचा तिस्र आज्याहुतीरग्निमुखान् कृत्वा पक्वान्नेन जुहोति, चत्वारि शृङ्गेति, पुरोऽनुवाक्यामनूच्य तत्सवितुर्वरेण्यमिति याज्यया जुहोति ये च पुरोऽनुवाक्यामनूच्य

(१) घृतान्न-मांस-दधिभिरिति ख०।

वसूनीति पुरोऽनुवाक्यामनूच्य या तिरश्चां निपद्यतेयमिति याज्यया जुहोति। अथाज्याहुतीरुपजुहोति पौरुषेण सूक्तेनाष्टादशर्चेन घृतं हुत्वा गायत्र्याष्टसहस्रमष्टाविंशतिं वा जुहुयात्। स्विष्टकृत्प्रभृतिसिद्ध-माधेनुवरप्रदानाद्दार्थ्ये एकशिरसमास्ते न चतुष्पथं दत्वा सूचिसङ्कुलां स्कन्धां रज्जुमिति कृष्णतनवः भूः स्वाहेति दत्वा प्रीयन्तां यमकिङ्क-राद्य इति वाचयित्वा व्रीहिषु कलशं सादयेत्तन्तुना परिवेष्ट्य जलपूर्णां पुरुषाकृतिं कृत्वा त्रीणि शीर्षे मुखे त्रीणि ग्रीवाया-मेकविंशतिः शरीरे चतुष्टयं वाह्वोर्द्वे द्वे लिङ्गस्यैकं पादयोः पञ्च पञ्चेति प्रीतोऽस्तु भगवान् यमकिङ्कर इति आसन्दीं कृत्वा पञ्चगव्येन प्रक्षाल्य पलाशवृन्तैः कृष्णाजिने पुरुषाकृतिं कृत्वा कलशपुरुषे प्राणा-नभिनिवेश्य वस्त्रशरीरे देहमभिनिवेश्य मध्ये स्वपेत्। उदिते सूर्ये कलशैर्देहं स्वयं सेचयेत्। पौरुषेण सूक्तेन पञ्चगव्येन शुद्धोदकेन सायाह्ने सतिलमन्नं सर्पिषाश्नीयात्। ब्राह्मणानपि यमकिङ्करत्वप्रये भोजयेत्। चतुर्थ्यां यन्त्रदाह उदक-पिण्डं त्वामुकगोत्राय मरुता-मत्सपिण्डममुष्मिन् स्वधेति नमस्कारान्तं कृत्वा समापयेत्। नचाशौचं दशाहं स्यात्तस्य मन्त्राहुतेर्न विद्यते। एकादश्यामेकोद्दिष्टमिति प्रतिपद्यतामप्युदाहरन्त्यापत्तौ स्त्री च शूद्रस्य यन्त्रैर्दग्धां स्वकां तनुं दहेन्मध्याह्ने जले स्थित्वा न च क्रियाः सर्वाः कुर्यादित्येवहि श्रुतिः। स्त्रीणां तूष्णीं समन्त्रकं वा मासि मास्येवं संवत्सरादूर्द्ध्वं प्रतिसंवत्सरमा-द्वादशाब्दात्ततो निवृत्तिः, यदा स्वयं न शक्नुयात्तदा पुत्त्रादयः कुर्युः अमुकगोत्रायामुष्मा इति शेषं समापयेत्।

अथाप्युदाहरन्ति।

जीवन्नेवात्मनः श्राद्धं कुर्य्यादन्येषु सत्स्वपि।
यथाविधि प्रवृत्त्याशु सपिण्डीकरणादृते॥

इति तच्छोककारणेन विलम्बयेत्। यतोऽनित्यं जीवितमिति शेषं समापयेदित्याह भगवान् बौधायनः।

लिङ्गपुराणे।

जीवच्छ्राद्धविधिं वक्ष्ये समासाच्छ्रुतिसम्मतम्।
मुनये देवदेवेन कथितं ब्रह्मणा पुरा॥
विशिष्टाय वशिष्ठाय भार्गवाय च साम्प्रतम्।
शृण्वन्तु सर्वभावेन सर्वसिद्धिकरम्परम्॥
श्राद्धमार्गक्रमं साक्षात् श्राद्धार्हाणामपि क्रमम्।
विशेषमपि वक्ष्यामि जीवच्छ्राद्धेषु यः स्मृतः॥
पर्वते वा नदीतीरे वने देवालयेऽपिवा।
जीवच्छ्राद्धं प्रकर्त्तव्यं मृत्युकाले प्रयत्नतः॥
जीवच्छ्राद्धे कृते जीवो जीवन्नेव विमुच्यते।
कर्म कुर्वन्नकुर्वन् वा अज्ञानो ज्ञानवानपि॥
श्रोत्रियोऽश्रोत्रियोवापि ब्राह्मणः क्षत्रियोऽपिवा।
वैश्योवा नात्र सन्देहो योगमार्गरतोयथा॥
परीक्ष्य भूमिं विधिना गन्ध-वर्ण-रसादिभिः।
स्वल्पमुद्धृत्य यत्नेन स्थण्डिलं सैकतं भुवि॥
मध्यतो हस्तमात्रेण कुण्डञ्चैवायतः शुभम्।
स्थण्डिलं वा प्रकर्त्तव्यं इषुमात्रं पुनः पुनः।
उपलिप्य विधानेन चोल्लिख्याग्निं निधाय च।

अन्वाधानं यथाशाखं परिसमूह्य सर्वतः ॥
परिस्तीर्य्य स्वशाखोक्तं पारम्पर्य्यक्रमागतम् ।
समाप्याग्निमुखं सर्वं मन्त्रैरेतैर्यथाक्रमम् ॥
सम्पूज्य स्थण्डिले वह्निं होमयेत्समिदादिभिः ।
आदौ कृत्वा समिद्धोमं चरुणा च पृथक् पृथक् ॥
घृतेन च पृथक्पात्रे प्रोक्षितेन पृथक् पृथक् ।
जुहुयादात्मनोद्धृत्य तच्च भूतानि सर्वतः ॥

ॐभूः ब्रह्मणे नमः । ॐभूः ब्रह्मणे स्वाहा । ॐभुवः विष्णवे नमः । ॐभुवः विष्णवे स्वाहा । ॐस्वः रुद्राय नमः । ॐस्वः रुद्राय स्वाहा । ॐमहः ईश्वराय नमः । ॐमहः ईश्वराय स्वाहा । ॐजनः प्रकृतये नमः । ॐजनः प्रकृतये स्वाहा । ॐतपः पुद्गलाय नमः । ॐतपः पुद्गलाय स्वाहा । ॐऋतं पुरुषाय नमः । ॐऋतं पुरुषाय स्वाहा । ॐसत्यं शिवाय नमः । ॐसत्यं शिवाय स्वाहा । ॐसर्वधरां मे गोपाय घ्राणे गन्धं सर्वाय देवाय भूर्नमः । ॐसर्वधरां मे गोपाय घ्राणे गन्धं सर्वाय देवाय भूः स्वाहा । ॐसर्वधरां मे गोपाय घ्राणे गन्धं सर्वस्य देवस्य पत्न्यै भूर्नमः । ॐसर्वधरां मे गोपाय घ्राणे गन्धं सर्वस्य देवस्य पत्न्यै भूः स्वाहा । ॐभवजलं मे गोपाय जिह्वायां रससमवाय देवाय भुवो नमः । ॐभवजलं मे गोपाय जिह्वायां रसम्भवाय देवाय भुवः स्वाहा । भवजलं मे गोपाय जिह्वायां रसम्भवस्य देवस्य पत्न्यै भुवो नमः । भवजलं मे गोपाय जिह्वायां रसम्भवस्य पत्न्यै भुवः स्वाहा । रुद्राग्निं मे गोपाय नेत्ररूपं रुद्राय देवाय स्वर्नमः । रुद्राग्निं मे गोपाय नेत्ररूपं-

रुद्राय देवाय स्वः स्वाहा। रुद्राग्निं मे गोपाय नेत्ररूपं रुद्रस्य देवस्य पत्न्यै स्वर्नमः। रुद्राग्निं मे गोपाय नेत्ररूपं रुद्रस्य देवस्य पत्न्यै स्वः स्वाहा। उग्रवायुं मे गोपाय त्वचि स्पर्शं उग्राय देवाय महोनमः। उग्रवायुं मे गोपाय त्वचि स्पर्शं उग्राय देवाय महः स्वाहा। उग्रवायुं मे गोपाय त्वचि स्पर्शं उग्रस्य देवस्य पत्न्यै महो नमः। उग्रवायुं मे गोपाय त्वचि स्पर्शं उग्रस्य देवस्य पत्न्यै महः स्वाहा। भीमसुषिरं मे गोपाय श्रोत्रे शब्दभीमाय देवाय जनो नमः। भीमसुषिरं मे गोपाय श्रोत्रे शब्दभीमाय देवाय जनः स्वाहा। भीमसुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य देवस्य पत्न्यै तपो नमः। भीमसुषिरं मे गोपाय श्रोत्रे शब्दं भीमस्य देवस्य पत्न्यै तपः स्वाहा। ईश्वरजोमे गोपाय द्रव्ये तृष्णां ईशाय देवाय तपो नमः। ईश्वरजोमे गोपाय द्रव्ये तृष्णां ईशाय देवाय तपः स्वाहा। ईश्वरजोमे गोपाय द्रव्ये तृष्णां ईशस्य देवस्य पत्न्यै तपो नमः। ईश्वरजोमे गोपाय द्रव्ये तृष्णां ईशस्य देवस्य पत्न्यै तपः स्वाहा। महादेव सत्यं मे गोपाय श्रद्धान्धर्मं महादेवाय ऋतं नमः। महादेव सत्यं मे गोपाय श्रद्धान्धर्मं महादेवाय ऋतं स्वाहा। महादेव सत्यं मे गोपाय श्रद्धान्धर्मं महादेवस्य पत्न्यै ऋतं नमः। महादेव सत्यं मे गोपाय श्रद्धान्धर्मं महादेवस्य पत्न्यै ऋतं स्वाहा। ॐपशुपते पाशं मे गोपाय भोक्तृत्वं भोग्ये पशुपतये देवाय सत्यं नमः। ॐपशुपते पाशं मे गोपाय भोक्तृत्वं भोग्ये पशुपतये देवाय सत्यं स्वाहा। ॐपशुपते पाशं मे गोपाय भोक्तृत्वं भोग्ये पशुपतेर्देवस्य पत्न्यै सत्यं नमः। ॐपशुपते पाशं मे गोपाय भोक्तृत्वं भोग्ये पशुपते र्देवस्य

पत्न्यै सत्यं स्वाहा। ॐ शिवाय सत्यं नमः। ॐ शिवाय सत्यं स्वाहा।

एवं शिवादि होतव्यं विरिञ्चान्तञ्च पूर्ववत्।
विरिञ्चान्तं पुरा प्रोक्तं सृष्टिमार्गेण सुव्रताः॥
पुनः पशुपतेः पत्नीं तथा पशुपतिं क्रमात्।
संपूज्य पूर्ववन्मन्त्रैर्होतव्यं वै क्रमेण च।
सर्वान्तमाज्यं पूर्वञ्च समिदन्तं समाहितः॥

ॐ सर्वं धरां मे छिन्धि प्राणोगन्धं छिन्धि मेऽघं जहि भूः स्वाहा। भूर्भुवः स्वाहा।

एवं पृथक् पृथक् कृत्वा केवलेन घृतेन च।
सहस्रं वा तदर्द्धं वा शतमष्टोत्तरन्तु वा॥
विधायैवं घृतेनैव शतमष्टोत्तरं पृथक्।
प्राणादिभ्यश्च जुहुयात् घृतेनैव तु केवलम्॥

ॐ प्राणे निविष्टोऽमृतं जुहोमि शिवो माविशाप्रदाहाय प्राणाय स्वाहा। प्राणाधिपतये रुद्राय वृषातकाय स्वाहा। भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। भूर्भुवः स्वः स्वाहा।

एवं क्रमेण जुहुयात् यथोक्तञ्च यथाक्रमम्।
सप्तमेऽहनि विप्रेन्द्रान् श्राद्धार्हान् विप्र भोजयेत्॥
सर्वेषाञ्चैव विप्राणां वस्त्राभरणसंयुतम्।
वाहनं शयनञ्चांस्यमासनादि च भाजनम्॥
हैमं वा राजतं धेनु-तिलक्षेत्रञ्च वै गृहम्।
दासी-दासगणश्चैव दातव्यो दक्षिणा अपि॥
पिण्डञ्च पूर्ववद्देयं पृथगुक्तप्रकारतः।

ब्राह्मणानां सहस्रञ्च भोजयेच्च सदक्षिणम् ॥
एकं वा योगनिरतं ब्रह्मनिष्ठं जितेन्द्रियम् ।
त्र्यहञ्चैव तु रुद्रस्य महाचरुनिवेदनम् ॥
विशेषमेतत्कथितमशेषं श्राद्धचोदितम् ।
मृते कुर्य्यान्न कुर्य्याद्वा जीवन्मुक्तो यतः स्वयम् ।
नित्य-नैमित्तिकादीनि कुर्य्याद्वा सन्त्यजेत वा ॥
बान्धवेऽपि मृते तस्य नैवाशौचं न विद्यते ।
सूतकञ्च न सन्देहः स्नानमात्रेण शुध्यति ॥
पश्चाज्जाते कुमारे च स्वक्षेत्रे वात्मनो यदि ।
तस्य सर्वं प्रकर्त्तव्यं पुत्त्रोऽपि ब्रह्मविद्भवेत् ॥
कन्यका यदि सञ्जाता पश्चात्तस्य महात्मनः ।
एकवर्णाथ वाप्यन्या सवर्णा सा च सुव्रता ॥
भवत्येव न सन्देहः तस्य स्वान्वयजा अपि ।
मुच्यन्ते नात्र सन्देहः पितरो नरकादपि ।
मुच्यन्ते सर्वकर्माणः[१] मातृतः पितरस्तथा ॥
कालकृते द्विजे भूमौ खनेद्वापि दहेत वा ।
पुत्त्रकृत्यमशेषं वा कृत्वा दोषो न विद्यते ॥
कर्मणा चोत्तरेणैव गतिरस्य महात्मनः ।
ब्रह्मणा कथितं सर्वं मुनीनां भावितात्मनाम् ॥
पुरा सनत्कुमाराद्यास्तुतञ्चैव नियोगतः ।

---

(१) कर्म्मणा तेनेति म० ।

एतद्वः कथितं सर्वं घृणया तेन धीमता ॥
कृष्णद्वैपायनायैव कथितं ब्रह्मसूनुना ।
प्रसादात्तस्य देवस्य वेदव्यासस्य धीमतः ॥
ज्ञातं मया कृतञ्चैव नियोगादेव तस्य तु ।
एतद्वः कथितं सर्वं रहस्यं सर्वसिद्धिदम् ।
नैव दुष्टाय दातव्यं न चाभक्ताय सुव्रत ॥

अस्य लिङ्गपुराणस्य व्याख्या वक्ष्यत इति सूतः ओहन् प्रत्याह, 'श्राद्धमार्गे' जीवच्छ्राद्धाद्यधिकारे, 'क्रमं' प्रकारं विशेषदेशकालादिरूपं, 'मृत्युकाले' मरणकाले समासन्ने, 'जीवन्नेवेति' सत्त्वशुद्धिद्वारेण तत्त्वज्ञानलाभान्मुच्यत एवेत्यर्थः, 'अग्रत इति मध्ये स्थण्डिलादिभ्योऽर्चनार्थात् प्राग्दिशि[1], कुण्डं स्थण्डिलान्तरं वा होमार्थं कार्य्यं, 'एतैर्वक्ष्यमाणैर्ब्रह्मादिमन्त्रैः स्थण्डिले ब्रह्मादीन् संपूज्य तैरेवाग्नौ समिदादीन् जुहुयात्, 'आत्मनोद्धृत्येति आत्मस्थानि तत्त्वानि भूतानि च तत्तन्मन्त्रप्रकाशितान्येकशः समुद्धृत्य पृथक्कृतानीव भावयित्वा ततोदेवतामुद्दिश्य जुहुयात्, ततस्तत्तत्त्वं शुद्धं भावयेत् । अत्र नमोऽन्तः पूजायां स्वाहान्तो होमे मन्त्रः । तत्र ब्रह्मादित्रिप्रथमाष्टके तत्तद्देवानां पूजा-होमौ तथा सर्वादिपशुपत्यन्तानां सपत्नीकानां धरादितत्त्वयुक्तानाञ्च पूजा-होमौ । एवं सृष्टिक्रमेण द्वि-चतुर्विंशतिमन्त्रानुक्त्वा संहारे तद्वैपरीत्यप्रदर्शनार्थं प्रथमाष्टकप्रान्त मन्त्रमाद्यत्वेनोदाहरति, 'ॐ शिवाय सत्यमित्यादि । 'एवमिति सृष्टि-

---

(१) मध्यस्थण्डिलाद्देवार्चनात् प्रागदिशीति ख० ।

क्रमेण प्रागुक्तविरिञ्च्यादि-शिवान्तदेवताष्टकमन्त्रेषु पुनः संहारक्रमेणाग्निं शिवाय सत्यं स्वाहेत्यादि ब्रह्मणे स्वाहेत्यन्तं, तथा पशुपतिपत्न्यादिसर्वान्तं उक्तक्रमेण संपूज्य घृत-चरु-समित्क्रमात् प्रत्येकं होतव्यं। ॐसर्वेत्यादि केवलाज्यहोममन्त्रस्तत्र सर्वं धरामिति वाक्यत्रयान्ते भुवः स्वाहेति तृतीयः, भूर्भुवः स्वः स्वाहेति चतुर्थोमन्त्रः। 'एवं पृथक् पृथगिति, तथा शिवस्य पत्नीत्येते चत्वारोमन्त्रा ऊह्याः। एवं भव जलं मे छिन्धि जिह्वायां रसं भव मेऽघं जहि भूःस्वाहेत्यादिभिरुदितैश्चतुर्भिर्मन्त्रैर्होमः। तथा विरजमन्त्रैश्च तथा प्राणे निविष्ट[१] इत्यादिषण्मन्त्रैश्च श्राद्धोक्तः स्वगृह्योक्तः पितृ-पितामह-प्रपितामहाद्युद्देशे होमश्च। एवं सप्ताहं प्रत्यहं कृत्वा सप्तमे दिने भुवादितत्तद्देवतोद्देशात् विप्रानभ्यर्च्य सर्वादिभ्योऽष्टौ पिण्डा देयाः। एवं कृते जीवच्छ्राद्धे स्वबान्धवे मृते नाशौचं न सूतकं। एवं तस्मादुत्पन्नः पुत्रोऽपि पित्रादिजातकर्मादिना संस्कार्य्यः स च ज्ञानी भवेत्। एवं दुहिता च। तथाचैतत्सन्ततौ योगिनो जायन्ते इति।

इति श्रीमहाराजाधिराज-श्रीमहादेवीय-सकलकरणाधिपति-पण्डित-श्रीहेमाद्रिविरचिते चतुर्वर्गचिन्तामणौ परिशेष-खण्डे श्राद्धकल्पे जीवच्छ्राद्धप्रयोगप्रकरणम्

समाप्तम्।

---

(१) उभयत्रैव 'प्राणे निविष्ट इत्यत्र 'प्राणैर्निविष्ट इति ख० पुस्तक-पाठः।

श्राद्धकल्पप्रशंसा ।

मत्स्यपुराणे ।

एतावदुक्तं तव भूमिपाल
श्राद्धस्य कल्पं मुनिसम्प्रदिष्टं ।
पापापहं पुण्यविवर्द्धनञ्च
लोके तु मुख्यत्वकरन्तथैव ॥

सत्पुण्याङ्कुरितेषु यस्य गहनारम्भोऽङ्घ्रिपेषु क्वचि-
न्नासीत्कोऽप्यत्रकेशिता स्पृशति यं लेशेन केनापि न ।
तेन श्रीकरणेश्वरेण रचितो हेमाद्रिणायं महा-
ग्रन्थः श्राद्धनिबन्धशब्दविषयो मुष्णातु मोहं सतां ॥

इति श्राद्धकल्पः समाप्तः ।

---

# चतुर्वर्गचिन्तामण्युपक्रमणिका ।

# सूचीपत्रम्।

अ

पृष्ठायां।

## आ



## इ



## उ

क

पृष्ठायां।

## ग



## च



## छ



## ज

ध



न



प

## भ



## म

य



र



व

---

